शुचित्वं वैदिककर्माधिकारनिमित्तम्, कलावपि अन्याय-द्रोहक्रौर्यादीनामतिशयितानां निषेधः, ग्रहणनिमित्तक-श्राद्धविधिः, चाक्रिकायनग्रहणाभ्यां पूर्वो भोजने वर्ज्यः कालः सापवादः; १८०१ ग्रस्तास्तमनोत्तरभोजन-कालनिर्णयः, ग्रहणश्राद्धपदार्थः, सूतकमृतकयोरपि ग्रहणश्राद्धकर्तव्यता, ग्रहणे कर्तव्याकर्तव्यानि, यत्यादि-दुराचारदर्शनजन्यदोषपरिहारकम्. **व्याघ्रः –** १८०१ ग्रहणे उष्णवारिस्नाननिषेधस्यापवादः, ग्रहणे सूत-किनोऽपि श्राद्धादावधिकारः. **ऋष्यशृङ्गः –** १८०१ ग्रहणे श्राद्धादीनां विधिः रात्रावपि कार्यता च. **गर्गः –** १८०२ क्षौरे तिथ्यादिविषयका विधिनिषेधाः निषिद्धकालकरणे दोषशान्तिश्च. **गार्ग्यः –** १८०२ ग्रस्तास्तमये भोजने निषिद्धः कालः, क्षौरे निषिद्धं वारादि. **वृद्धगार्ग्यः –** १८०२ जीवत्पितृकस्य मुण्डननिषेधः क्षौरे वर्ज्याः सौरराशयश्च. **आश्वलायनः –** १८०२ चातुर्वर्ण्यस्यसंध्यामहायज्ञयजनयाजनादीनि नित्यानि कर्माणि; १८०३ स्नानादीनि मौननिमित्तानि, आत्मरक्षणप्रशंसा, वैश्यधर्मानुक्रमणम्, द्विजशुश्रूषापाक-यज्ञदानादीनां बहूनां शूद्रधर्माणामनुक्रमणम्, विप्रादिम्ले-च्छान्तानां सर्वमानवानां साधारणा धर्माः; १८०४ वपननिमित्तानि तदपवादश्च, ग्रहणे रात्र्यपराह्णयोः समुद्रस्नानानुमतिः, स्वाध्यायाग्निहोत्रादयः सदा सेव्या धर्माः, चक्राद्यङ्कनं गीतनृत्यादिकं च द्विजभिन्नानां धर्मः. **लघ्वाश्वलायनः –** १८०४ क्षौरनिमित्तानि, ब्राह्मणक्षत्रियशूद्रधर्मा यजनपालनद्विजसेवादयः, परधर्मा-चरणनिषेधः, कर्मत्यागेन पराधीनत्वेन च द्विजस्य शूद्रसाम्यम्. **बुधः –** १८०४ स्वधर्मानुष्ठानविधिः, विधिनिषेधोल्लङ्घने नरकप्राप्तिः. **जातूकर्ण्यः –** १८०४ इष्टापूर्ते द्विजसामान्यधर्मौ, पूर्तं शूद्रधर्मः. **क्रतुः –** १८०५ स्वधर्मत्यागपरधर्माचरणनिन्दा. **पुलस्त्यः –** १८०५ चातुर्वर्ण्यधर्मा यजनादयो भूतरक्षणादयश्च, अहिंसादयो वर्णिनां लिङ्गिनां च सामान्यधर्माः, एकादश समानार्घाणि मद्यानि, सुरा तेभ्योऽधमा. **मार्कण्डेयः –** १८०५ ग्रहणे गङ्गादितीर्थस्नानस्य प्रशंसा, ग्रहणात् पूर्वः उत्तरश्च भोजने वर्ज्यः कालः; १८०६ क्षौरे वर्ज्यास्तिथयः. **गालवः –** १८०६ आततायिभ्रूणवधे न दोषः. **गोभिलः –** १८०६ ग्रहणे स्नानादौ रात्रिः शुभा. **चतुर्विंशतिमतम् –** १८०६ शूद्रसंपर्कस्य शूद्रात् ज्ञानग्रहणस्य च निषेधः, ज्ञानावलिप्तशूद्रस्य नरकप्राप्तिर्ब्राह्मणावमानेन, अप्रणत-शूद्रे स्वस्तिकरणनिषेधः, शूद्राज्ञाधारकविप्राणां दुर्गतिः, वर्जनीया दुष्टव्यक्तयः; १८०७ सत्यप्रशंसा, तत्स्व-रूपम्, क्रियाप्रशंसा, क्रियाहीननिन्दा, ब्राह्मणस्य कर्माणि, तद्रहितस्य निन्दा, मनुष्याणां पावनानि कर्माणि, सत्यादिरूपः सनातनधर्मः, तत्पराणां सुगतिः, तद्विहीनानां दुर्गतिः, धर्मकर्मानुसारिब्राह्मणानां प्रशंसा, विपरीतानां निन्दा, उद्यानादावकालावस्थाननिषेधः, ग्रहणमुक्तिस्नानस्य कर्तव्यता. **षट्त्रिंशन्मतम् –** १८०७ ग्रहणे अशुचित्वं शुद्धिस्नानेन कर्माधिकारश्च, ग्रहण-पूर्वशृतान्नत्यागः; १८०८ ग्रहणस्नाने तिलामलक-निषेधः, रात्रौ सूर्यग्रहणं दिवा चन्द्रग्रहणं च न स्नानदानादिनिमित्तम्, मुण्डनोत्तरं शिरःप्रक्षालनम्. **वायुपुराणं ब्रह्माण्डपुराणं च –** १८०८ यजनाध्ययन-दानानि द्विजसामान्यधर्माः, वर्णानां क्रमेण जपादयः प्रधानधर्माः, अवरेणोत्तमवर्णानुवृत्तिः, धर्ममूलमद्रोहादि-दशकम्, ग्रहणश्राद्धस्य रात्रावपि कर्तव्यता प्रशंसा च; १८०९ क्षुधितविप्रायान्नदानस्य प्रशंसा, शूद्रस्य वेदानधिकारः पुराणाधिकारश्च, गजच्छायासंज्ञकसूर्य-ग्रहणे श्राद्धविधिः, ग्रहणस्नाने आमलकनिषेधः, एकस्यार्थे स्वपरहिंसा पातकम्, बहूनामर्थे सा न पातकम्, जलवायुदीक्षितयोगिनिन्दाया निषेधः, द्वेषस्य ब्रह्मचर्यनाशकत्वं ब्रह्मचर्यप्रशंसा च. **ब्रह्माण्डपुराणम् –** १८०९ ग्रहणश्राद्धस्य रात्रावपि कर्तव्यता अकरणे प्रत्यवायश्च; १८१० ग्रहणनिमित्तकमाशौचम्, स्नानेन-कर्माधिकारः, पक्वान्नवर्जनम्. **मार्कण्डेयपुराणम् –** १८१० आनृशंस्यं क्षत्रियस्य प्रधानधर्मः, सत्यस्य प्रशंसा, दानाध्ययनयजनानि द्विजसामान्यधर्माः, शूद्रधर्मः द्विजशुश्रूषा, स्वधर्मत्यागपरधर्मस्वीकारयोर्निन्दा, सत्य-शौचादयोऽष्टौ नित्यसामान्यधर्माः, ग्रहणनिमित्तकश्राद्ध-विधिः, ग्रहणे रात्रावपि स्नानम्, परोपतापककर्मजन्तु-पीडनयोर्निषेधः, मैत्रीसहवासयोर्निषेधस्य विषया उद्धतादयः विधेर्विषयाः साधुप्रभृतयश्च; १८११ क्षत्रियं

प्रति याच्ञाया अधर्मत्वम्, शक्तं प्रति सर्वविषयकसङ्गकामयोर्निषेधः अशक्तं प्रति सद्भिः सह सङ्गस्य मुमुक्षाविषयककामस्य चानुमतिश्च, पादन्यासजलपानवाक्प्रयोगचिन्तनानि क्रमेण चक्षुर्वस्त्रसत्यबुद्धिभिर्विशोध्य कर्तव्यानि, क्षौरे दिङ्नियमः. **मत्स्यपुराणम् –** १८११ ग्रहणश्राद्धविधिः, दानं शूद्रस्य प्रधानधर्मः, कचवञ्चितस्य शुक्रस्य अद्यप्रभृति ब्राह्मणानां सुरापानात् महान् प्रत्यवाय इति शापोक्तिः, जपादयश्चत्वारो वर्णानां क्रमेण प्रधानधर्माः, अवरवर्णैरुत्तमवर्णानामनुवर्तनम्, सर्वधर्ममूलाद्रोहादिदशकम्, ग्रहणे अमरकण्टकादिक्षेत्रमाहात्म्यम्; १८१२ ग्रहणनिमित्तकदानविधिः, मातृपितृगुरूणामग्नेश्च शुश्रूषाया विधिः प्रशंसा च, ग्रहणनिमित्तकदानविधिः, अपराह्णादिभवग्रहणेषु भोजने वर्ज्याः पूर्वकालाः. **विष्णुपुराणम् –** १८१२ वर्णाश्रमविरुद्धकर्माचरणनिषेधः, चातुर्वर्ण्यधर्माणामनुक्रमणम्; १८१३ अर्थार्जनस्वभार्यर्तुगमनदयातितिक्षादयश्चतुर्दश सामान्यधर्माः; १८१४ असाधुभिः साधुभिश्च सह व्यवहारस्य क्रमेण निषेधो विधिश्च, उत्तमैरधमैश्च सह विवादविवाहयोर्निषेधः, योषित्संबन्धिनामवमानविश्वासेर्ष्याधिकाराणां निषेधाः, सत्यवचनं तदपवादश्च, ग्रहणश्राद्धविधिः, स्वधर्मत्यागे हीनकर्मपरिग्रहे च नग्नतादोषः; १८१५ मिश्रवर्णस्थितिके देशे निवासस्य निषेधः, अकृतवैश्वदेवेन भोक्त्रा सह व्यवहारस्य निषेधः, पाषण्डिविकर्मस्थबैडालव्रतिकशठहैतुकबकवृत्तिभिः सह संभाषणादिव्यवहाराणां निषेधः; १८१६ अतितृष्णा त्याज्या, स्वाधीतविद्याया एव पूज्यत्वम्, दुष्करब्राह्मणधर्मापेक्षया द्विजशुश्रूषादिशूद्रधर्मस्य सुकरत्वात् शूद्रस्य धन्यत्वम्, प्रजापालनं शत्रुनाशश्च क्षत्रियधर्मः, याच्ञा न क्षत्रियधर्मः; १८१७ परनिन्दादिनिषिद्धाचारवर्जनं सर्वत्रसमबुद्धित्वं देवद्विजगुरुशुश्रूषा रागादिराहित्यं च हरिसंतोषकारणम्, क्षमाशौचादयश्चतुर्दश सामान्यधर्माः. **विष्णुधर्मोत्तरपुराणम् –** १८१७ ग्रहणकालस्य स्नानादौ पुण्यत्वम्, अहिंसासत्यादिविहितधर्माचरणं मधुमांसादिनिषिद्धवर्जनं च केशवसन्तोषकारणम्, ग्रहणश्राद्धसंबन्धीनि विधानानि, ब्राह्मणस्वहरणस्य दुराचारब्राह्मणस्यापि द्वेषनिन्दावधानां च निषेधः, १८१८ मातृपितृगुरुज्येष्ठभ्रातॄणां शुश्रूषणमेव परमो धर्मः तेषामनुज्ञया धर्मान्तराचारश्च, राजकर्तव्यत्वेन विस्तरेणेतिकर्तव्यतासहितं गोप्रशंसायुतं सफलं गोपालनविधानम्; १८२० अहिंसासत्यवचनादयः पञ्चदशसामान्यधर्माः, यजनयाजनादिधर्माणां वर्णेषु व्यवस्था, क्षौरानधिकारप्रयोजकानि उपोषणादीनि, क्षौरे शुभाशुभनक्षत्रादीनि; १८२१ ग्रहणदिने पूर्वं ग्रस्तास्ते पुनरुदयपर्यन्तं च भोजननिषेधः, वर्णाश्रमधर्मत्यागे परपीडायां च नरकः, पापाचरणनिषेधः विष्णुभक्तिविधिश्च, यजनादयः षट् विप्रधर्माः, दानाध्ययनादयः पञ्च साधारणधर्माः, परनिन्दाया अप्रियवचनस्य क्रोधस्य पतितसंसर्गस्य च निषेधः, इन्द्रियसंयमविधिः, कामक्रोधलोभानां निषेधः, अहिंसा मधुरवाणी वाङ्मनःशुद्धिश्च, वेदाध्ययनं वेदोक्तकर्माचरणं शास्त्रनिगमाध्ययनं च, पाषाण्डिविकर्मस्थादिभिः षड्भिः सह व्यवहारस्य निषेधः, नृत्तगीतिभ्यो हासकेभ्यश्च दाननिषेधः; १८२२ शूद्राय मत्यादिदानस्य धर्मव्रतोपदेशस्य च निषेधः, धनार्जनसत्यप्रियवचनभद्रोक्तीनां विधिः शुष्कवैरविवादयोर्निषेधश्च, पाणिपादादिचापल्यपरद्रोहयोर्निषेधः, पूर्वजाचारोऽनुसर्तव्यः, ऋत्विक्पुरोहितादिभिरेकविंशत्या सह विवादस्य निषेधः, धर्मध्वजित्वनिषेधः, यमानामाचरणस्य नित्यत्वम्, यमनियमयोर्दशविधत्वम्, धर्मसंचयविधिः, परपीडानिषेधः, उत्तमाधमैः संबन्धस्य क्रमेण विधिनिषेधौ, यज्ञार्थं शूद्राद्भिक्षाया निषेधः, वर्णानामापत्तरणसाधनविभागः, विषमशैलारोहणादिनिषेधरूपाणां सायंप्रातर्विद्वद्वाणीश्रवणादिविधिरूपाणां च भूयसामाचाराणामनुक्रमणम् आचारप्रशंसा च; १८२४ द्विजानां सुरापाननिषेधः, ब्राह्मणानां मद्यपानमांसभक्षणनिषेधः, पापनाशधर्मवृद्ध्यर्थं तपसोऽनुष्ठानम्, आत्महत्यानिषेधः तदपवादश्च, सर्वदोषमूलस्याज्ञानस्य निन्दा तच्छमनोपायाश्च, पापापचयपुण्यचययोर्विधानम्, धर्मार्थयुक्तस्यैव कामस्य सेव्यत्वम्; १८२५ संपत्तिविपत्त्योर्हर्षविषादवर्जनविधिः, सर्वदोषमूलमानवर्जनविधिः, बहुदोषहेतोर्मदस्य वर्जनीयत्वात् तद्धेहेतोर्मद्यपानस्य

वर्जनीयत्वम्, बहुदोषमूलस्य लोभस्य वर्जनीयत्वम्; १८२६ सर्वानर्थमूलस्य क्रोधस्य त्याज्यत्वम्, सर्वपापमूर्धन्यस्य नास्तिक्यस्य तद्धेतोरसच्छास्त्राध्ययनस्य च वर्जनीयत्वम्, अतिविनाशकस्याहंकारस्य वर्जनीयत्वम्, अशौचस्य वर्जनीयत्वम्, तत्प्रतियोगिनः शौचस्य स्त्रीशौचमर्थशौचं वाक्शौचमिति त्रैविध्यमुत्तरोत्तरप्रशस्ततरत्वं च; १८२७ सर्वनाशकस्यानृतभाषणस्य वर्जनीयत्वं तस्य पशुगवाश्वादिविषयभेदेन नाशकत्वतारतम्यं च, सर्वपापेभ्यो हिंसा गरीयसी, आततायिहिंसा यज्ञादौ हिंसा युद्धे हिंसा च न पापम्, जितश्च हिंसायां दोषगौरवम्, स्त्रीहिंसा धनहिंसा प्राणिहिंसेति हिंसात्रैविध्यम्, सामान्यतो मांसभक्षणे दोषः, विशेषतो ब्राह्मणस्य मधुपर्कादिनिमित्ताभावे मांसभक्षणे दोषः; १८२८ परपीडावर्जनम्, ज्ञानार्जनविधिः ज्ञानप्रशंसा च; १८२९ गुरुशुश्रूषाप्रशंसा, स्वाध्यायविधिः, वेदादिस्वाध्यायैः पितॄणां सर्पिरादिभिस्तर्पणम्, ब्रह्मचर्यप्रशंसा, कीर्तिप्रशंसा अकीर्तिनिन्दा च; १८३० यशःप्रशंसा, यज्ञस्य विधिः प्रशंसा च, शीलस्य विधिः प्रशंसा च, दमस्य विधिः प्रशंसा च; १८३१ सत्यस्य विधिः प्रशंसा च, तपसो विधिः प्रशंसा च; १८३२ सर्ववर्णानामात्मरक्षणदेशविप्लवादिनिमित्तेषु युद्धाधिकारः, अहिंसा परमो धर्मः, मांसभक्षणनिन्दाद्वारा अहिंसाप्रशंसा, क्षमायाः प्रशंसा, कृतज्ञताया विधिः प्रशंसा च; १८३३ तीर्थयात्राविधिः, उपवासस्य विधिः जातिभेदप्रयुक्ताः कालमर्यादाः प्रशंसा च, मनःशौचप्रशंसा, श्रद्धाप्रशंसा, जपस्य विधिः प्रशंसा च, अग्निसेवाप्रशंसा, देवार्चनस्य विधिः प्रशंसा च, श्राद्धस्य विधिः प्रशंसा च; १८३४ वर्णानां स्त्रीब्रह्मचारिगृहस्थानां च पूज्यभेदाः तत्पूजाविधिश्च, नानाविधगोसेवाविधिः गोप्रशंसा गोभक्षितोत्सृष्टगोमयस्थितयवैर्जीवनमित्येतद्रूपं व्रतं च; १८३५ दयाया विधिः लक्षणभूतानि कर्माणि प्रशंसा च, दाक्षिण्यप्रशंसा, प्रियवादित्वस्य विधिः प्रशंसा च; १८३६ दाक्ष्यस्य विधिः प्रशंसा च, जलाशयनिर्माणविधिः, वृक्षारोपणप्रशंसा; शास्त्रजलाशय-वृक्षारोपण-देवमन्दिरनिर्माणस्य विधिः प्रशंसा च; १८३७ पान्थपूजाया विधिः प्रशंसा च, अभयदक्षिणादानग्रहणयोरशुचेरप्यधिकारः, अन्यत्र शुचेरेव, अन्नवस्त्रादिदानविधिः, शूद्रं प्रति तपोविधिः, ग्रस्तास्तचन्द्रसूर्यग्रहणयोर्भोजने वर्ज्यौ पूर्वोत्तरकालौ, वेदमन्त्रादिरहितेषु यज्ञादिषु शूद्रस्याप्यधिकारः; १८३८ चाण्डालपतितादिभिर्भाषणस्य निषेधः तदतिक्रमे प्रायश्चित्तं च, गवां प्राणत्राणस्य मुमूर्षुभ्यस्ताभ्यो जलदानस्य च फलविधिः. **श्रीमद्भागवतपुराणम् –** १८३८ स्त्रीशूद्रद्विजबन्धूनां वेदश्रवणानधिकारः, मनुष्यसामान्यधर्मस्य सत्यदयातपआदीनि त्रिंशत् लक्षणानि, द्विजलक्षणम्, द्विजसामान्यधर्माः, चतुर्णां वर्णांना गुणसमुच्चयरूपाणि लक्षणानि, उक्तलक्षणप्रयुक्त एव ब्राह्मणादिशब्दव्यवहारो मुख्यः; १८३९ स्नानजपादीनां पुण्याः पर्वकालाः, अहिंसा परमो धर्मः, धर्मार्थमपि यात्रार्थमपि च धनेहानिषेधः संतोषप्रशंसा च; १८४० षोडशानां कामक्रोधादीनामसंकल्पादयः असाधारणाः गुरुभक्तिरूपाः च साधारणाः जयोपायाः, गार्हस्थ्याद्याश्रमापसदत्वनिमित्तानि क्रियात्यागादीनि, तादृशाश्रमिणामुपेक्ष्यत्वम्, रागद्वेषादयो विंशतिर्निर्दिष्टा अन्ये चाऽऽदिशब्दग्राह्याः शत्रवः, एतच्छत्रुनिरासो मोक्षप्रदः, स्वरूपत उपायतोऽपादानतश्चानिषिद्धेन द्रव्येण कर्मणां कर्तव्यत्वम्, ब्राह्मणस्य जन्म आमुष्मिकफलकतपःक्लेशार्थम्. **लिङ्गपुराणम् –** १८४१ अहिंसा परमो धर्मः, तदर्थं शुद्धेन जलेन कर्मकरणविधिः, शुद्धजलस्वरूपम्, अहिंसाप्रशंसा, अहिंसापवादः तदपवादश्च; १८४२ चक्षुःपूतमार्गक्रमणादीनां ज्येष्ठवन्दनादीनां च बहूनामाचाराणामनुक्रमणम्, ग्रहणे स्नानविधिः कर्माङ्गशुद्धिश्च; १८४३ ग्रहणे त्रिरात्रमेकरात्रं वोपवासः तत्फलं च. **स्कन्दपुराणम् –** १८४३ परपीडावर्जनम्, शत्रुप्रभृतिषु विश्वासस्य निषेधः, साधूपहासनिषेधः, सामान्यतो युद्धमरणस्य विशेषतो ब्राह्मणादिरक्षार्थयुद्धमरणस्य च प्रशंसा, अतिदुर्लभस्य मनुष्यजन्मनो धर्माचरणेन साफल्यम्; १८४४ चतुर्णां वर्णानां तपआदयः प्रधानधर्माः, द्विजशुश्रूषा शूद्रधर्मः, शूद्रं प्रति अध्यापनस्य निषेधः, ग्रहणे तीर्थक्षेत्रविशेषेषु दानम-

धिकफलम्, पुत्रभार्याभूपतीनां त्यागस्य निमित्तानि तत्संसर्गनिषेधश्च, ग्रहणनिमित्तकमाशौचम्;. १८४५ ग्रहणे धनुष्कोटिरामसेत्वोः स्नानं महाफलम्, उत्तमजनसंबन्धाधमजनत्यागयोर्विधिः, अध्ययनसदाचारादिहीनस्य द्विजस्य मृत्युभयम्, शूद्रं प्रति धर्मोपदेशस्य वेदमन्त्रश्रावणस्य च निषेधः द्विजशुश्रूषा शूद्रधर्मः, दारिद्र्ये आत्मानवमाननम्, सत्यप्रियोक्तिः, भद्रोक्तिः इत्यादीनां बहूनामाचाराणामनुक्रमणम्; १८४६ ग्रहणे कुरुक्षेत्रमहिमा, विप्रसेवा शूद्रधर्मः, ब्रह्मस्वहरणस्य निषेधः निन्दा च, देशकुलगोत्राचारपालनविधिः; १८४७ सन्मार्गसेवनम्, वृथाहिंसावर्जनम्, आहारादिष्वतिशयस्त्याज्यः, विद्यादिष्वतिशयः साध्यः, गुर्वादिषु विश्वासः, भृत्येष्वविश्वासः, शरणागतस्यावधः, कीर्तनम्, ब्राह्मणसेवा, अतिथिसेवा, प्राधान्येन शिवोपासना इत्यादीनां बहूनां क्षत्रियधर्माणामनुक्रमणम्; १८४८ गोः तत्सेवायाश्च प्रशंसा, ग्रहणे गङ्गास्नानस्य प्रशंसा, चूडामणिग्रहणलक्षणं तत्प्रशंसा च, व्रात्यसंबन्धनिषेधः, मात्रादिभिरपि सहैकान्तवासनिषेधः, मातृपितृगुरुसंतोषणम्; १८४९ काशीमरणस्य प्रशंसा तद्धेतुः सदाचारश्च, सत्यशौचादीनि नव धर्मसाधनानि, गोरक्षणादीनि षट् विप्रस्य शूद्रसाम्यापादकानि, पादुकाविसर्जननिमित्तानि, ग्रहणे शिप्रास्नानशिवदर्शनयोः प्रशंसा, ग्रहणे गोप्रतिमादानस्य प्रशंसा, ग्रहणे चन्द्रहासतीर्थस्नानादेः प्रशंसा, चतुर्णां वर्णानामाश्रमक्रमेण स्वस्वधर्मपालनेन सद्गतिः; १८५० ग्रहणे रवितीर्थस्नानादेः प्रशंसा, ग्रहणे योगिभोजनविधिः, ग्रहणे रवितीर्थे दानस्य प्रशंसा, अहिंसायाः प्रशंसा, सोमवारे सोमग्रहणे सोमदर्शनस्य प्रशंसा, ग्रहणे श्राद्धविधिः, रविवारे रविग्रहणे कुरुक्षेत्रस्नानप्रशंसा, सच्छूद्राणामपि श्रुतिस्मृतिपठनश्रवणानधिकारः पुराणश्रवणमात्राधिकारश्च, सच्छूद्रलक्षणम्, सच्छूद्राणां धर्माः, प्रकृतीनामष्टादशमिता नीचाः, तेषां श्रौतस्मार्तकर्मानधिकारः ब्राह्मणशुश्रूषादयो धर्माश्च, प्रातर्मध्याह्नापराह्णेषु क्रमेण देवद्विजपितृकर्मकरणात्सुखावाप्तिः; १८५१ चतुर्णां वर्णानां धर्मा वृत्तयश्च, अष्टादशमपदार्थः, प्रकृतिनामुत्तममध्यमसमरूपेण त्रैविध्यम्, तत्र शिल्पिप्रभृतयः सप्त उत्तमाः, प्रकृतीनां धर्माः, सोमवारे सोमग्रहे सोमनाथदर्शनस्य प्रशंसा, ग्रहणे श्राद्धस्य विधिः, वेदविक्रयस्य निन्दा षड्विधत्वं च, वैश्वदेवहीनत्वादीनि ब्राह्मणस्य शूद्रसाम्ये निमित्तानि; १८५२ मनुष्यत्वस्य दुर्लभत्वात् तत्रापि ब्राह्मणत्वस्य दुर्लभतरत्वाच्च संकरस्य वर्जनीयत्वम्, संकरस्य नव विधाः, वृत्तस्य वित्ततः श्रेष्ठत्वम्, ग्रहणे पौत्रवत उपवासनिषेधः, सूर्यग्रहे कुरुक्षेत्रे दानस्य प्रशंसा, चन्द्रग्रहणे स्नानदानादिभिश्चन्द्रपिडाहरणं महाफलम्, श्रद्धापूर्वकं ज्ञानार्जनम्, शूद्राधिकारनिषेधाः कर्मविशेषेषु, यतेः पुत्रत्वेन कीर्तनस्य निषेधः, यतेर्विष्णुरूपत्वम्, यतिदर्शनादिप्रशंसा, चन्द्रग्रहणे समुद्रस्नानं महाफलम्; १८५३ निशीथपूर्वोत्तरकालयोश्चन्द्रग्रहणे भोजने वर्ज्यः पूर्वकालः, द्विजानां धर्मोपदेष्टृत्वं तस्य पापनिवर्तकत्वं च, आचारसंपन्नशूद्रस्य शिवपूजनाधिकारः. **सह्याद्रिखण्डः –** १८५३ अक्रोधादयः सामान्यधर्माः, देवभक्तशूद्रस्य मन्त्रप्रणवरहितशिवनमस्कारानुज्ञा, द्विजधर्माः, ब्राह्मणाः षट्कर्माणः, क्षत्रियादयस्त्रिकर्माणः, अन्त्यजानां धर्मकर्माभावः, धार्मिकाणां मानवत्वनियता दोषा न वक्तव्याः, सर्वधर्ममूलं सामान्यधर्मः, ब्राह्मणनिन्दानिषेधः, द्विजशुश्रूषा शूद्रधर्मः. **सूतसंहिता –** १८५४ प्रतिदिनं शिवपूजनं तत्र द्विजशूद्रादिभेदेन विशेषाश्च; १८५५ ग्रहणे ब्रह्मतीर्थे स्नानदानादेर्महिमा, सत्यप्रियवचनम्, संन्यासिपूजनम्, सिद्धान्तश्रवणे सर्वेषामधिकारः, ग्रहणे वेदतीर्थे स्नानदानादेर्महिमा, वर्णाश्रमहीनैः सह लाञ्छितैश्च सह सर्वव्यवहाराणां निषेधः, अप्रियभाषणस्य परदेहे क्षतकरणलोहितकरणाङ्कनकरणानां च निषेधाः; १८५६ वेदोक्तानामागमोक्तानां च धर्माणां वैदिकतान्त्रिकरूपाधिकारिभेदेने व्यवस्था. **शिवरहस्यम् –** १८५६ ग्रहणे जपादेर्विधिः स्वापादेर्निषेधश्च. **गरुडपुराणम् –** १८५६ वर्णानां यजनादिधर्मविभागः क्षमादमादयः सामान्यधर्माश्च, ग्रहणे जपादेर्विधिः; १८५७ वर्णानां यजनादिधर्मविभागः अहिंसादयः सामान्यधर्माश्च, कर्तव्यानां सत्सङ्गादीनां वर्जनीयानां क्षुद्रसंवादादीनां चानुक्रमणम्, यज्ञाध्ययनदानानि द्विजसामान्यधर्माः, अहिंसादयः

सामान्यधर्माः, ग्रहणे रात्रिस्नानानुमतिः, शोकनिन्दा दानविधिश्च, कूपतडागादिनिर्माणप्रशंसा, साधुदर्शनप्रशंसा, सत्यदमादय एकादश सनातनधर्माः, सर्वार्थसाधनदेहधनरक्षणविधिः. **पद्मपुराणम्** – १८५७ ग्रहणे अमरकण्टकाद्यनेकक्षेत्रतीर्थेषु शिवदर्शनस्नानादीनां प्रशंसा; १८५८ अहिंसाप्रशंसा, परस्त्रीगमननिषेधः, संक्षेपेण अद्रोहादिधर्मकथनम्, तपोदानकीर्तननिषेधः, ब्राह्मणलक्षणभूता क्षमादयादिगुणाः, धर्मसाधनशरीररक्षणविधिः, परद्रोहः वेददेवतानिन्दा हिंसा अनृतम् अहिताप्रियवचनमित्येतेषां निषेधः, धर्मध्वजित्वनिषेधः, देवगुरुद्रोहनिषेधः; १८५९ शूद्राय अदेया मत्यादिपदार्थाः व्रतधर्मोपदेशनिषेधश्च, ग्रहणे दानस्य प्रशंसा, याचितयुद्धदानं वीरधर्मः, स महाफलः अन्यथा नरकश्च, पुण्यकालेष्वसद्ब्राह्मणोऽपि पूज्यः, ग्रहणस्नानादौ सर्वेषां जलानां ब्राह्मणानां वायसतीर्थस्य च प्रशंसा, दानस्य तपसोऽपि श्रेष्ठत्वम्, ब्राह्मणस्य यजनाध्यापनादिर्धर्मः गार्हस्थ्यविकल्पश्च, ग्रहणनिमित्तकश्राद्धविधिः, शूद्रस्य दानं प्रधानम्, यज्ञोद्देशेनैवान्नं पाच्यं पशवश्च वध्याः, स्वापभोजनायोग्याः कालाः, शमविधिः अर्थतृष्णानिषेधः संतोषविधिश्च; १८६० प्रतिग्रहनिन्दा, विद्वदाचरितो धर्मोऽनुष्ठेयः, दमो ब्राह्मणस्य विशेषधर्मः, अपमानेऽपि परदूषणं त्याज्यम्, अपमाने संतुष्टिः संमाने जुगुप्सा च कार्या, स्वप्रतिकूलं परस्मिन्नाऽऽचरणीयम्, श्रोत्रियलक्षणं तदनुषङ्गेण ब्राह्मण-द्विज-विप्रलक्षणानि च, पूज्यतमत्वप्रयोजकास्तीर्थस्नानादयो ब्राह्मणाचाराः; १८६१ अधमत्वप्रयोजकाः स्नानरहितत्वादयो ब्राह्मणाचाराः, आग्नेयादीनि पञ्चस्नानानि सलक्षणानि, अधमब्राह्मणस्यापि वधस्य निषेधः, क्षुधाशान्त्यकरणादिब्राह्मणपीडानां विपाकाः, आततायिब्राह्मणहत्यानुमतिः, ब्राह्मणस्य पूज्यत्वम्; १८६२ पुंगवानां स्त्रीगवीनां च नानाविधसेवाविधयः गोप्रशंसा च; १८६३ ग्रहणनिमित्तकश्राद्धप्रशंसा, असत्समागमस्य दीपच्छायाकलिद्रुमयोरवस्थानस्य अस्पृश्यादिभिः सहाऽऽलापस्य च निषेधाः, ग्रहणनिमित्तकश्राद्धप्रशंसा, ग्रहणनिमित्तकदानस्नानयोः सर्वदेयवस्तुद्विजतोयानि प्रशस्तानि, विशेषतो गङ्गातोयस्य प्रशंसा, चूडामणिग्रहणस्य लक्षणं प्रशंसा च; १८६४ वापीकूपतडागनिर्माणस्य वृक्षारोपणस्य च विधिः, सत्यवदनविधिः सत्यप्रशंसा च, ब्रह्मस्वदेवस्वोपभोगनिषेधः, गोरक्षणप्रशंसा, आशात्यागविधि, परदारपरद्रव्यवर्जनस्य अक्रोधस्य च प्रशंसा, श्रौतस्मार्ताचारविधिः, शमदमादीनि षट् धर्मसाधनानि, विप्रस्य यक्षराक्षसभूतार्चननिषेधः; १८६५ द्विजानामेव श्रौते शूद्राणां स्मार्ते एव चाधिकारः, शूद्रस्य शिखोपवीतसंस्कृतोच्चारणनिषेधः, समन्त्रकगोप्रणामस्य प्रशंसा. **ब्रह्मपुराणम्** – १८६५ सामान्यतो याच्ञानिषेधः, विशेषतः क्षत्रियस्य, ग्रहणे श्राद्धविधिः, असत्प्रलापादीनि षट् वर्ज्यानि, ग्रहणे रात्रिस्नानानुमतिः, क्षौरे दिक्कालनियमः सचैलस्नानं च, देववेदादीनां दशानां परिहासपरिवादौ वर्ज्यौ, मङ्गलवेषविधिः, उद्धतादिभिः चतुर्दशभिः सह मैत्र्या निषेधः, उद्यानादौ अकालावस्थाननिषेधः, जनविद्विष्टादिभिः सहाऽऽलापे तत्स्पर्शने च प्रत्यवायः, नित्यकर्मकर्तव्यता आत्माप्रकोपेण यज्ञकर्तव्यता च; १८६६ वर्णानां वैशेषिकाः सामान्याश्च धर्माः, संतोषसत्पथालम्बनब्राह्ममार्गाक्रमणानि ब्राह्मणधर्माः, शीलकर्मसमाचारगुणरूपाणां स्वर्गफलानां धर्माणामनुक्रमणम्, वाचिकानां स्वर्गफलानां धर्माणामनुक्रमणम्; १८६७ मानसिकानां स्वर्गफलानां धर्माणामनुक्रमणम्, मनुष्यजन्मभोग्यदीर्घायुष्ट्वाल्पायुष्ट्वकुलीनत्वादिविषमविपाककारणीभूतानां पूर्वजन्मकृतकर्मणां विस्तरेणानुक्रमणम्; १८७० सत्यभाषणप्रशंसा, ग्रहणपुण्यकालभागभेदप्रयुक्तं कर्मफलतारतम्यम्, ग्रहणकालभोजननिषेधः, ग्रहणकालिककर्मप्रशंसा, नानाविधा गोपरिचर्या गोप्रशंसा च. **ब्रह्मवैवर्तपुराणम्** – १८७२ दिवास्त्रीगमनरजस्वलागमनरात्रिदधिभक्षणसंध्याकालशयनानां निषेधाः, क्षौरे वर्ज्यः कालः, क्षौराशुद्धस्य कर्मानधिकारः, ग्रहणकृतकर्मणां फलाधिक्यम्, ब्राह्मणस्य दिवास्वापशूद्रश्राद्धान्नभोजनशूद्रशवदाहाः शूद्रसाम्यकराः, विप्रस्य विष्णूपासनं नित्यम्, ग्रहणाशुचिस्पृष्टानि पाकभाण्डादीनि त्याज्यानि; १८७३ क्षत्रियवैश्यशूद्रधर्माः, ग्रहणे भृष्टद्रव्यत्यागः, पीतशेषजलपानस्य माघे मूलकभक्षणस्य शयने जपादेश्च निषेधः, अहिंस्रे

दयाविधिः हिंस्रहिंसानुमतिश्च, **वैश्यशूद्रतत्स्त्रीणां** पातकानि, ग्रहणनिमित्तककर्मणां पुण्यकालभागभेदेन कर्तव्यता, मुक्तिस्नानाभावे प्रत्यवायः, विद्यादयो दश सामान्यधर्माः. **वराहपुराणम्** – १८७३ ग्रहणे तिलोदकेन पितृतर्पणमात्रमपि महाफलम्, गोपालनम्, गोः विशेषतः कपिलायाश्च प्रशंसा; १८७४ प्रतिवर्णं भिन्नाः सर्ववर्णसाधारणाश्च धर्माः; १८७५ स्वधर्मपालनं परधर्मनिन्दावर्जनं च पुण्यलोकसाधनम्, पुण्यलोकप्रापका जितेन्द्रियत्वादयः सामान्यधर्माः, गोमहिमा; १८७६ वैश्यशूद्रधर्माः. **वामनपुराणम्** – १८७६ क्षौरे वर्ज्यः कालः ग्रहणे रात्रिस्नानानुमतिश्च, देशकुलगोत्रधर्मपालनम्, निरर्थककर्मकरणादिदुराचार-निषेधाः; क्षौरे निषिद्धकालाः. **कूर्मपुराणम्** – १८७६ चतुर्णां वर्णानां विशेषधर्माः सामान्यधर्माश्च, प्रथमतृतीयचतुर्थाश्रमिणां ब्रह्मचर्यं सामान्यधर्मः; १८७७ द्विजस्य संध्यावन्दनं नियतम्, कुलक्रमागत-धर्माचरणविधिः, क्षमादिगुणाष्टकं ब्राह्मणलक्षणम्, वेददेवतानिन्दाया निन्दकसंवादस्य च निषेधः, अहिंसा सत्यमस्तेयं विशेषतो देवब्रह्मस्वानपहरणं चेति धर्माः, पाखण्डिविकर्मस्थवामाचारपाञ्चरात्रपाशुपतवेददेवद्विजनिन्दकाः असंव्यवहार्याः; असंव्यवहार्याः पतितादयः, एकादश-विधः सांकर्यदोषो वर्जनीयः, पापिसमीपावस्थानात् पापसंक्रमः, शूद्रायादेयाः पदार्थाः; १८७८ ग्रहण-पूर्वोत्तरकालविशेषयोर्ग्रहणकाले च भोजननिषेधः, ग्रहणे नैमित्तिककर्मणां नित्यत्वं काम्यश्राद्धानां प्राशस्त्यं दानस्य फलातिशयश्च, ग्रहणे महानदीस्नानस्य प्राशस्त्यम्, प्रतिपर्व पुराणाध्ययनं ब्राह्मणैः कर्तव्यं शूद्रसंनिधौ तन्निषेधश्च, उपास्यमन्त्राणां ग्रहणे जपाभावे मालिन्यम्. **भविष्यपुराणम्** – १८७९ चातुर्वर्ण्यकर्म-विभागः, सूर्यवारे सूर्यग्रहणे कर्तव्यः कर्मविशेषः सर्वनैमित्तिककर्मणां फलातिशयश्च, शूद्रान्नभक्षणादीनि चत्वारि कर्माणि पातित्यनिमित्तानि, गुणपरीक्षां विनैव विप्रस्य पूज्यत्वम्, ग्रहणस्य पुण्यकालत्वं तत्र सूर्यपूजा-वस्त्रादिदानविधिश्च; १८८० विस्तरेण गोप्रशंसा, गोब्राह्मणप्रशंसा; १८८१ परस्वहरणादीनां नवानां दुराचाराणां निषेधाः, परस्त्रीसेवननिन्दा, स्त्रीविषय-केर्ष्यानिषेधः, मूर्खोन्मत्ताद्याक्षेपनिषेधः, **कृशस्त्रीब्राह्मण**-क्षत्रियावज्ञानिषेधः, अरुंतुदत्वपरोक्षवादित्वप्रमादित्वना-स्तिक्यवेददेवतानिन्दानां द्वेषदम्भातिमानक्लैब्यानां च निषेधः, क्षौरान्ते सचैलस्नानम्, गुरुपतिव्रतायज्ञतपस्विनां परिवादपरिहासयोर्निषेधः, शूद्रस्य पुराणधर्मशास्त्राद्य-ध्ययनानधिकारः, श्रवणमपि देवताप्रतिमादिपुरस्कारेण प्रोच्यमानानामेव पुराणादीनाम्; १८८२ गोसेवा. **नारदपुराणम्** – १८८२ इष्टापूर्तविधिः, यतिनिन्दा स्वर्णस्तेयसमा, चतुर्णां वर्णानां विशेषाः सामान्याश्च धर्माः, ग्रहणनिमित्तकश्राद्धविधिः; ग्रहणनिमित्तकर्मसु ग्राह्यस्तिथिभागः, ग्रस्तास्तमने भोजनकालः, सूर्यग्रहणा-त्प्राक् भोजने वर्ज्यः कालः, दुर्लभमनुष्यजन्मनः परलोकार्थकर्मभिः सार्थकता, संतोषप्रशंसा; १८८३ चतुर्णां वर्णानां लक्षणभूता गुणाः तेषां जातितः प्राधान्यं च, लोभक्रोधादयो दोषास्त्याज्याः, क्षौरे शुभाशुभ-कालाः, क्षौरे वर्ज्यकालापवादः, ग्रहणे गङ्गास्नानस्य कुरुक्षेत्रे दानस्य च प्रशंसा. **अग्निपुराणम्** – १८८३ आद्यक्षौरे मासा वाराश्च, वर्णानां सामान्या विशेषाश्च धर्माः; १८८४ हस्तिच्छायासंज्ञकसूर्यग्रहणकृतश्राद्धादेः प्रशंसा, मौननिमित्तानि, ग्रहणकृतदानप्रशंसा, राज्ञा कामक्रोधादयस्त्याज्याः, ब्रह्मचारिसंन्यासिनोः सामान्य-धर्माः, गोब्राह्मणप्रशंसा, सत्यप्रियभाषणविधिः; धर्मार्थशरीररक्षा. **देवीभागवतम्** – १८८४ मूर्खसंगति-निन्दा विज्ञसंगतिप्रशंसा च, प्रभुसेवा सेवकधर्मः, चोरशत्रुपरिज्ञानकर्तव्यता, उद्यमप्रशंसा; १८८५ प्राण-रक्षणं यशोरक्षणं च कर्तव्यम्, मूर्खब्राह्मणनिन्दा, अवेद-विद्वेदविद्भ्यां क्रमेणाऽऽहाराधिकान्नदानेऽन्नदाने च निन्दाप्रशंसे, न्यायार्जितद्रव्यकृतकर्मण एव साफल्यम्, धर्मसत्ययोः प्रशंसा, साहसबहुविरोधयोर्निषेधः, मनुष्य-जन्मैव धर्मसाधनं भारते तद्दुर्लभं च; १८८६ सत्यशौचदयादानवत एव धर्माचरणं सफलम्, शान्तत्वं तपसो मूलम्, सर्वधर्मकारणं सत्यम्, उद्यमप्रशंसा, सात्त्विकादिभेदेन ब्राह्मणत्रैविध्यं सलक्षणम्, शरणागत-रक्षणाभावे प्रत्यवायः, अहिंसादियमानां स्वधर्मपालनस्य क्षमायाश्च प्रशंसा, शीलादिगुणषट्कं विद्याफलम्, मनुष्यजन्मनो दुर्लभत्वमात्मज्ञानेन साफल्यं च,

दयाप्रशंसा; १८८७ सत्यप्रशंसा, धर्माचरणविधिः, सवेतनसेवालोपे प्रत्यवायः, स्त्रीवधनिषेधः, सवेतन-सेवालोपे प्रत्यवायः, स्वभक्तत्यागनिषेधः, आत्माज्ञान-नाशनेन जीवनसाफल्यम्, चित्तशुद्धिपर्यन्तं कर्माचरणम्; १८८८ विषहीनसर्पतुल्यतापादका विप्रस्य विष्णुमन्त्र-हीनत्वादयो दोषाः, दिनविशेषेषु क्षारद्रव्यैर्वस्त्र-प्रक्षालनस्य निषेधः, क्षौरे वर्ज्यः कालः, गोवंशसेवा, सदाचारप्रशंसा, प्रतिदिनं कृताकृतधर्माधर्मविचारः; १८८९ द्विजस्य गायत्र्युपासनाया नित्यत्वम्. **शिवपुराणम्** – १८९० ब्राह्मण-विप्र-क्षत्रियब्राह्मण-वैश्यब्राह्मण-शूद्रब्राह्मण-चण्डालब्राह्मणशब्दानां राज-क्षत्रियशब्दयोः वैश्यवणिक्शब्दयोः शूद्रवृषलदस्यु-शब्दानां च प्रवृत्तिनिमित्तभूतानि सदाचारादिगुण-वैशिष्ट्यानि; १८९१ धर्ममोक्षपुरुषार्थयोः प्रशंसा, धर्मद्वैविध्यम्, पृष्टवस्तुदानाभावे दोषः, परदोष-कीर्तननिषेधः, श्रद्धास्तिक्ययोर्वैलक्षण्यम्, दरिद्रस्य वाचिककायिकयजनयोरधिकारः, देवतार्पणबुद्ध्या कृतानां कर्मणां अभ्युदयः फलम्, ईश्वरार्पणबुद्ध्या कृतानां निःश्रेयसं फलम्, सर्वमानवान् प्रति लिङ्गपूजाविधिः, शिवसंतोषोद्देशेन कर्मविधिः, तत्त्व-ज्ञानपर्यन्तं कर्माधिकारः, मात्रादिविषयककामदृष्टि-निषेधः, अनाह्वाने परगृहगमनस्य निन्दा, तपस्विनं प्रति स्त्रीसंगतिनिषेधः, सुखोदर्कसूनृतवचनयोः प्रशंसा; १८९२ स्त्रिया अजितस्य पुरुषस्य प्रशंसा जितस्य निन्दा च, क्षत्रियस्य रणमरणं प्रशस्तम्, कृतोप-कारपीडननिन्दा, कृतापकारेऽप्युपकारस्य प्रशंसा, विद्यामदस्य निन्दा, वृषभेषु क्रौर्यकारिणां वन्ध्यां गां वाहयतां च निन्दा, सत्यस्य प्रशंसा; १८९३ कर्मभूमौ भारतवर्षे कर्मयोनिर्मनुष्यत्वमतिदुर्लभम्, धर्माचरणेनैव तत्साफल्यम्, युद्धं सर्वेषां धर्मः, क्षत्रियस्य युद्धं विशेषधर्मः, युद्धे वध्यावध्यविवेकः, युद्धप्रीतेः प्रशंसा, श्रौतस्मार्तधर्मे त्रैवर्णिकानामेवाधिकारः, शुश्रूषा शूद्र-धर्मः, निष्कामकर्मभिर्मोक्षप्राप्तिः; १८९४ पूज्यापूजने अपूज्यपूजने च महान् दोषः, परमेश्वरभक्त्या सर्वपुरुषार्थसिद्धिः, ब्राह्मणधर्माः, क्षत्रियवैश्यशूद्रधर्माः, सदाचारप्रशंसा, सदाचारमूलमास्तिक्यम्. **नरसिंह-पुराणम्** – १८९५ प्रधानपुरुषाचारः, पापवर्जने दृढचित्तत्वमनन्तफलम्, ज्ञानार्जनप्रशंसा, शरणागतस्य रक्षणं महाफलमुपेक्षणं महादोषं च, स्त्रीवधे महापापम्, कृतघ्नता महादोषा, षट्कर्माणि सत्यवदनादीनि च ब्राह्मणस्य धर्माः, अध्ययनादिकर्मत्रयं प्रजापालनाद्याश्च क्षत्रियस्य धर्माः; १८९६ गोरक्षादयः अध्ययनादि-कर्मत्रयं च वैश्यधर्माः, वर्णत्रयशुश्रूषापाकयज्ञादयः शूद्रधर्माः, स्वस्वधर्माचरणविधिः, ब्रह्मध्यानविधिः, दयाप्रशंसा. **कालिकापुराणम्** – १८९६ धर्माचरण-प्रशंसा; १८९७ जात्यादिहीनावमाननिषेधः, नित्य-नैमित्तिककाम्यकर्मणां शिवापूजायाश्चानाचरणे निमि-त्तानि, ग्रहणे गङ्गास्नानमाहात्म्यम्, कर्ममन्त्रौ शूद्रेण विप्रवचनाद्ग्राह्यौ. **साम्बपुराणम्** – १८९७ स्नानादि-विषये ग्रहणप्रशंसा, भावशुद्ध्या कर्मसाफल्यम्, सदा-चारप्रशंसा, ग्रहणे गायत्रीमन्त्रजपविधिः. **सौरपुराणम्** – १८९८ गोग्रासफलम्, ग्रहणदानप्रशंसा, अभय-दानप्रशंसा, अप्रियादिवचन-हिंसा-वेदनिन्दा-शम्भुनिन्दा-निषेधाः, विशेषतः स्त्रीहिंसानिषेधः, अहिंसासत्या-स्तेयभूतानुग्रहविधिः, सूर्यग्रहणे जपविधिः स्वापभोजन-निषेधश्च, ग्रस्तास्तोत्तरभोजनकालः, ग्रहणे समुद्रस्नानं महाफलम्. **पराशरपुराणम्** – १८९८ श्रौतस्मार्ताचार-विधिः तान्त्रिकाचारनिषेधश्च, महादेवप्रसादात् वर्णानां स्वस्वधर्मे प्रवृत्तिः; १८९९ चक्राद्यङ्कितस्य ब्राह्मणस्य कर्मानधिकारः, ब्राह्मणलिङ्गानि, नित्यनैमित्तिककर्म-प्रशंसा. **आदिपुराणम्** – १८९९ दानोपासनद्विविधाध्य-यनैर्नरजन्मसाफल्यम्, पातिव्रत्यधनविनयत्यागविद्यासाधु-वचनानां सत्कथाश्रवणस्य च प्रशंसा, स्वधर्मत्यागे परधर्मपरिग्रहे च दोषः, कुलाचारकर्तव्यता. **मुद्गल-पुराणम्** – १८९९ कर्ममूलनरदेहपोषणकर्तव्यता, क्षमाप्रशंसा, अध्ययनादित्रयं क्षत्रियवैश्ययोर्धर्मः होमादि ब्राह्मणद्वारा च; १९०० शूद्रस्य द्विजसेवादयो धर्माः, कर्मसु नाममन्त्राणां स्वयंपाठः पौराणमन्त्राणां ब्राह्मणेन पाठः, शूद्रस्य देवर्षिप्रतिष्ठापितमूर्तिस्पर्शानधिकारः, शूद्रहीनजातीनां नामस्मरणादयो धर्माः, दैवपित्र्यकर्म-कर्तव्यता, ग्रहणादिकृतकाम्यश्राद्धप्रशंसा, देवार्चनं नित्यम्, ब्रह्मार्पितकर्मभिर्योगसिद्धिः; १९०१ वेदोक्ता-

न्येव कर्माणि कार्याणि, वेदाज्ञापालनं कार्यम्, योगिनिन्दानिषेधः योगिसेवाविधिश्च, चातुर्वर्ण्यस्य शूद्रहीनानां च धर्माः. **गणेशपुराणम्** – १९०२ पुराणश्रवणादयस्त्रैवर्णिकसामान्यधर्माः, याजनादित्रयं ब्राह्मणस्याधिकम्, आतिथ्यं चातुर्वर्ण्यधर्मः; १९०३ ऐहिकपारलौकिकसुखकारकाणि कर्माणि कर्तव्यानि, पुण्यातिशयः क्षुद्रवाक्यानुसरणं च साधुशब्दप्रवृत्तिनिमित्तम्, शुभकर्मकर्तव्यता, शरणागतरक्षणादिभिः पुरुषार्थित्वसिद्धिः, आप्तमरणोत्तररोदननिन्दा, चतुर्णां वर्णानां कर्माणि. **देवीपुराणम्** – १९०३ ग्रहणकाले मासभेदेन गङ्गादिनदीनां प्रशस्तत्वम्, कासांचित् सर्वमासेषु प्रशस्तत्वम्, प्रशस्तानि क्षेत्राणि च. **कल्किपुराणम्** – १९०४ क्षत्रियाणां धर्मो युद्धम्. **संग्रहकार (स्मृतिसंग्रहः)** – १९०४ तीर्थादावसंभवे गृहे ग्रहणस्नानम्, ग्रहणे निद्रामूत्रोत्सर्गादीनां दुष्फलानि, ग्रहणे पत्रादिच्छेदननिषेधः, निषिद्धकालेऽपि नैमित्तिकं क्षौरम्; १९०५ सकञ्चुकयतिविधवयोः निष्कञ्चुकसधवायाश्च दर्शनस्य निषेधः, गृहस्थवनस्थयतिभ्यो यथाक्रमं सिद्धान्नगोरसकाञ्चनदाननिषेधः. **स्मृत्यर्थसारः**– १९०५ ग्रहणे वर्ज्यानि, ग्रहणे रात्रिस्नानानुमतिः, ग्रहणसंबन्धेन भोजनविषयकविधिनिषेधाः, त्रैवर्णिकं प्रति पैष्टीसुरापानस्य ब्राह्मणं प्रति मद्यपानस्य च निषेधः, ग्रहणे नद्यादिरजोदोषाभावः. **रेणुकारिकाः** – १९०५ यथाशास्त्रमापद्धर्मस्वीकारः अनापदि तत्त्यागश्च. **अनिर्दिष्टकर्तृकवचनानि** – १९०६ ब्राह्मणहत्यानिषेधः, ब्राह्मणस्य निष्कारणं वेदाध्ययनविधिः, सुरापानमद्यव्यवहारनिषेधः संतोषक्षमादिगुणविधिश्च, सर्वाश्रमिणां तीर्थयात्राविधिः, श्रौतस्मार्तागमोक्तधर्माः सर्वद्विजसाधारणाः, विप्रस्य तु श्रौतः प्रशस्यतरः, सुजनसंगतिदुर्जनत्यागविधिः, सुजनदुर्जनलक्षणानि, स्त्रीशूद्रयोः शिवकेशवस्पर्शनिषेधः, अब्राह्मणायोच्छिष्टदानस्य निषेधः, शूद्रस्य द्विजशुश्रूषातिरिक्ततपस्यनधिकारः मन्त्रानधिकारश्च; १९०७ द्विजशुश्रूषादानपाकयज्ञादयः शूद्रधर्माः, मृतगुरुकस्य शिष्यस्य गुरुपर्वणि कृत्यम्, सर्ववर्णगुरुत्वं ब्राह्मणस्यैव; १९०८ शूद्रस्य द्विजशुश्रूषा धर्मः तपस्यनधिकारश्च, ब्राह्मणस्य शूद्रान्नमन्त्रग्रहणे शूद्रप्रशंसायां च दोषः, शूद्रस्य नादरहितमन्त्रैर्नित्यपूजायामधिकारः, वर्णभेदेन वैदिकतान्त्रिककर्माधिकारभेदः बलभेदश्च, निन्दानिकृत्याजीवानां फलानि, अगम्या देशाः, धनादीनां रक्षणीयत्वम्, व्याध्यादीनामनुपेक्षणीयत्वम्, बिभीतकादिच्छायानामनाश्रयणीयत्वम्, गोपुच्छादिजलविप्रुषां त्याज्यत्वम्, अन्तरागमननिषेधः, विशिष्टोऽनृतवादः, पूर्तदानाहिंसासु सर्ववर्णाधिकारः; १९०९ म्लेच्छशब्दासाधुशब्दोच्चारणनिषेधः, विषयविशेषेष्वनृतवचनानुज्ञा, स्तेयनिषेधः, देवर्षिपितृनामोच्चारणनिषेधः, रोगयुक्तादिषु नित्यकर्महानौ पापाभावः; शमप्रशंसा, अनिर्णिक्तपादस्याप्रवेश्यानि, उपकारव्यापृतस्याकस्मादपकारनिष्पत्तौ न दोषः, मद्यपानेन पातित्यम्, आपद्धर्मोऽपि प्रत्यवायकारणम्, ग्रहणादिनिमित्तकदानानां पूर्तत्वम्, शूद्रधर्मः शुश्रूषा, चण्डालस्य दूरतः परिहार्यत्वम्, ब्राह्मणस्य मद्यपाननिषेधः; १९१० सुरापाननिषेधस्य जातिप्रयुक्तत्वम्, नित्यादिकर्मसु ग्रहणवेधदोषाभावः, ग्रहणादिषु सूतकाभावः, नक्षत्रविशेषेषु ग्रहणस्य दर्शननिषेधः, ग्रस्तचन्द्रास्तमने मोक्षस्नानादिकालविधिः, उपोषणग्रहणदर्शनपूर्वकस्नानश्राद्धफलविधिः; ग्रहणनिमित्तककर्मसु सूतकादिदोषाभावः, अमन्त्रकस्नाननिमित्तानि, सूर्यग्रहणे तीर्थभेदेन स्नानफलभेदः; १९११ ग्रहणस्पर्शमध्यमोक्षकालकृतकर्मभिर्देवपितृराक्षसानां तृप्तिर्यथाक्रमम्, ग्रहणभागभेदेन स्नानहोमादिविधानम्, ग्रस्तास्तमनोत्तरं भोजनकालः, ग्रहणे अभ्यङ्गस्ननिषेधः तदपवादश्च, मलमासेऽपि ग्रहणस्नानश्राद्धादीनां कर्तव्यता, ग्रहणे रात्रिस्नानानुमतिः, ग्रस्तास्तमनोत्तरभोजनकालः, ग्रहणदोषाभाववन्तः पदार्थाः; १९१२ ग्रहणशिष्टान्नत्यागः, ग्रहणदिवसे भोजनकालनियमः, वपने मुखदिङ्नियमः वपनप्रकारश्च; १९१३ क्षौरे नक्षत्रादिविधानम्, राज्ञां श्मश्रुकर्मणोऽवान्तरकालः, अशुभर्क्षकृतक्षौरस्य शुभर्क्षे पुनःकरणम्, आहिताग्नेः प्रशस्तः क्षौरकालः, पञ्चाशत्तमवर्षपर्यन्तं रागप्राप्तक्षौरस्य निषेधः तदूर्ध्वमैच्छिकत्वं च, क्षौरे वर्ज्याः कालाः; १९१४ क्षौरनिषेधस्यापवादः, क्षौरदोषनाशकः श्लोकः, मन्त्रादिषु भावनानुसारिणी सिद्धिः.

## अनुपनीतधर्माः

(पृ. १९१५ – १९३०)

**वैतानश्रौतसूत्रम्** – १९१५ अनुपनीतस्य कामचारः. **गौतमः** – १९१५ अनुपनीतस्य कामचारकामवादकामभक्षाः; १९१७ अनुपनीतस्य कामभक्षापवादः, ब्रह्मचर्यनियमः, मूत्रपुरीषयोरनियमः; १९१८ अनुपनीतस्य कल्परहितमाचमनम्, अतिबाले शुद्धिक्रियासंकोचः; १९२० पाकयज्ञानधिकारः अनुपनीतस्य, वेदोच्चारणानधिकारः सापवादः अनुपनीतस्य; १९२१ मद्यनिषेधः अनुपनीतस्य. **लघुहारीतः** – १९२१ अनुपनीतस्य कामचारत्वात् प्रायश्चित्ताभावः. **बौधायनः** – १९२१ कर्मनियमाभावः अनुपनीतस्य. **आपस्तम्बः हिरण्यकेशिधर्मसूत्रं च** – १९२२ होमानधिकारः अनुपनीतस्य, अनुपनीतस्य प्रायत्याभावे मतभेदेन मर्यादाभेदाः. **वसिष्ठः** – १९२३ अनुपनीतस्य शूद्रसमत्वं श्रौतस्मार्तकर्मानधिकारश्च. **विष्णुः** – १९२४ उपनयनपर्यन्तं शूद्रसमत्वमनुपनीतस्य. **शङ्खः** – १९२४ उपनयनपर्यन्तं शूद्रसमत्वमनुपनीतस्य. **मनुः** – १९२४ उपनयनपर्यन्तं श्रौतस्मार्तकर्मानधिकारः; १९२५ शूद्रसमत्वात् वेदोच्चारणाभावः सापवादः अनुपनीतस्य. **वृद्धमनुः** – १९२५ अनुपनीतस्य पितृश्राद्धाधिकारः. **कात्यायनः** – १९२६ अनुपनीतस्य समन्त्रकपितृदाहाधिकारः. **यमः** – १९२६ शिशोर्वैश्वदेवादिशेषभक्षणनिषेधः. **दक्षः** – १९२६ अष्टमवर्षान्तपर्यन्तं कामचारकामवादकामभक्षाः; १९२७ अनुपनीतस्य गन्धलेपक्षयमात्रकरी शौचक्रिया. **शातातपः** – १९२७ बालशौचं पालककर्तव्यम्. **वृद्धशातातपः** – १९२७ शिशुबालकुमारलक्षणानि तेषामस्पृश्यस्पर्शे शुद्धिकारणानि च. **पराशरः** – १९२७ शिशुबालकुमारलक्षणानि. **सुमन्तुः** – १९२८ कृतचूडस्य त्रिवत्सरस्य वा समन्त्रकपितृमेधाधिकारः. **व्याघ्रः** – १९२८ कृतचूडस्यामन्त्रकपितृमेधाधिकारः. **आश्वलायनः** – १९२८ अनुपनीतस्य पितृमेधे वेदमन्त्रोच्चारणे च नाधिकारः. **जातूकर्ण्यः** – १९२८ अनुपनीतमद्यपानप्रायश्चित्तं पित्रादिभिः कार्यम्. **षट्त्रिंशन्मतम्** – १९२८ अनुपनीतस्य कामचारादयो महापातकादन्यत्र. **मार्कण्डेयपुराणम्** – १९२९ अनुपनीतस्य कामचारकामवादकामभक्षाः. **स्कन्दपुराणम्** – १९२९ अनुपनीतस्य कामभक्षः पित्रोरौर्ध्वदेहिकाधिकारश्च. **ब्रह्मपुराणम्** – १९२९ अनुपनीतस्य पित्रोरुच्छिष्टस्य भक्षणे दोषाभाव. **संग्रहकारः (स्मृतिसंग्रहः)** – १९२९ कृतचूडानुपनीतस्य वेदमन्त्ररहिते पितृश्राद्धेऽधिकारः. **स्मृत्यर्थसारः** – १९२९ अनुपनीतस्योच्छिष्टभक्षणे दोषाभावः, कामचारकामवादकामभक्षाः महापातकादन्यत्र, अस्पृश्यस्पर्शे शुद्धिकारणानि, पितृश्राद्धादन्यत्र वेदमन्त्रानधिकारः. **अनिर्दिष्टकर्तृकवचनानि** – १९३० अकृतचूडस्य पितृमेधानधिकारः, अगृहीताक्षरस्यापि पितृसंस्काराधिकारः, पापिनोऽनुपनीतस्य चतुर्थांशः प्रायश्चित्तम्.

## आश्रमविचारः

(पृ. १९३१ – २०९५)

**शास्त्रार्थः** – पराशरमाधवस्थः १९३१-१९३२ मदनपारिजातस्थः १९३३-१९३५, मदनरत्नस्थः १९३५-१९३६, गदाधरपद्धतिस्थः १९३६-१९३७, यतिधर्मप्रकाशस्थः १९३७-१९३८, **वेदाः** – १९३८ ब्रह्मचर्यकालावधिः; १९३९ गार्हस्थ्यसंन्यासयोर्विकल्पः, विस्तरेण संन्यासप्रशंसा; १९४१ यत्यवान्तरभेदरूपस्यावधूतस्य लक्षणं संन्यासस्य प्रशंसा च, आश्रमक्रमः, संन्यासग्रहणोत्तरं नाग्निः सेव्यः, एषणाशून्यः संन्यासाधिकारी; १९४५ आश्रमसमुच्चयविकल्पौ, विरक्तस्य संन्यासेऽधिकारः, संन्यासफलम्; १९४७ परमहंसप्रशंसा; १९४८ कुटीचकादिचतुर्विधसंन्यासिनां लक्षणानि; १९४९ तुरीयातीतावधूतलक्षणं तत्प्रशंसा च; १९५० परमहंसप्रशंसा, यतिभेदाः, संन्यासाश्रमप्रशंसा, आश्रमचतुष्टयप्रशंसा; १९५१ ब्रह्मचारिगृहस्थाश्रमयोः फलम्, वैराग्यं संन्यासाधिकारहेतुः, तदभावे तद्ग्रहणे पातित्यम्, संन्यासाश्रमाधिकारी; १९५२ संन्यासग्रहणं संकल्प्य तदकरणे प्रायश्चित्तपूर्वकं तद्ग्रहणम्, संन्यासाधिकाक्षेपविघ्नौ पतितसंन्यासनं च निषिद्धानि, संन्यासानधिकारिणः, संन्यासप्रशंसा, ज्ञानवैराग्यान्यतरतदुभयसत्त्वक्रमैः चतु-

र्विधाः संन्यासिनः तल्लक्षणानि च, कुटीचकादयः षड्विधाः संन्यासिनः तल्लक्षणानि तत्प्राप्यफलानि च; १९५३ आश्रमत्रयानुष्ठानं संन्यासाधिकारसंपादकम्, संन्यासग्रहणोत्तरं नाग्निः सेव्यः; १९५४ संन्यासप्रशंसा; १९५५ आश्रमाणामुत्तरोत्तरं श्रैष्ठ्यम्, संक्षेपविस्ताराभ्यामाश्रमक्रमवर्णनम्; १९५७ संन्यासानधिकारिणः, आसन्नमरणस्यैव आतुरसंन्यासेऽधिकारः, संन्यासाधिकारसंपादकं वैराग्यादि; १९५८ संन्यासग्रहणे मन्दवैराग्यस्य आश्रमक्रमापेक्षा, तीव्रवैराग्यस्य तदनपेक्षा, ज्ञानवैराग्यान्यतरतदुभयसत्त्वक्रमैः चतुर्विधाः संन्यासिनः तल्लक्षणानि च; १९५९ कर्मसंन्यासद्वैविध्यम्, कुटीचकादयः षड्विधाः संन्यासिनः तल्लक्षणानि च; १९६० जीवत आतुरसंन्यासिनः कर्तव्यम्, आतुरादिसप्तविधसंन्यासानां फलानि, संसारदोषदर्शनं परंपरया संन्यासाधिकारसंपादकम्, आश्रमसमुच्चयविकल्पौ, संन्यासाधिकारी; १९६१ क्रमेण चातुराश्रम्यम्, त्यागरूपसंन्यासोत्तरमप्यग्नेरपरिग्रहः; १९६३ चत्वार आश्रमाः तदवान्तरभेदाः तल्लक्षणानि च, गृहस्थस्य गृहकामनासत्त्वासत्त्वाभ्यां वानप्रस्थ्यास्वीकारास्वीकारौ, ब्राह्मणस्य संन्यासाधिकारः; १९६४ ब्रह्मचर्याश्रमप्रशंसा, संन्यासफलम्. **आश्वलायनगृह्यसूत्रम्** – १९६४ ब्रह्मचर्याश्रमकालावधिः. **हिरण्यकेशिगृह्यसूत्रम्** – १९६५ ब्रह्मचर्याश्रमकालावधिः. **हिरण्यकेशिगृह्यशेषसूत्रम्** – १९६५ संन्यासाधिकारिणः. **मानवगृह्यसूत्रम्** – १९६५ ब्रह्मचर्याश्रमस्य कालावधिः फलं च. **भारद्वाजगृह्यसूत्रम्** – १९६६ ब्रह्मचर्याश्रमकालावधिः. **काठकगृह्यसूत्रम्** – १९६६ ब्रह्मचर्याश्रमस्य कालावधिः फलं च. **वाराहगृह्यसूत्रम्** – १९६६ ब्रह्मचर्याश्रमस्य कालावधिः फलं च. **आग्निवेश्यगृह्यसूत्रम्** – १९६७ ब्रह्मचर्यकालावधिः, वानप्रस्थ्यसंन्यासयोरधिकारिणः. **पारस्करगृह्यसूत्रम्** – १९६७ ब्रह्मचर्यकालावधिः. **गोभिलगृह्यसूत्रम्** – १९६८ गार्हस्थ्याधिकारी. **खादिरगृह्यसूत्रम्** - १९६९ गार्हस्थ्याधिकारी. **जैमिनिगृह्यसूत्रम्** – १९७० ब्रह्मचर्यकालावधिः, गार्हस्थ्यविधिः. **छन्दोगसूत्रम्** – १९७० त्रैवर्णिकानां संन्यासाधिकारः. **प्रसवोत्थानपरिशिष्टम्** – १९७० आश्रमसमुच्चयविकल्पौ. **यज्ञपार्श्वपरिशिष्टम्** – १९७१ अनाश्रमित्वनिषेधः. **ब्रह्मसूत्राणि** – १९७१ ऊर्ध्वरेतसां नैष्ठिकत्ववानप्रस्थ्यसंन्यासाश्रमाणां श्रुतिसिद्धत्वात्सर्वैरनुष्ठेयत्वम्; १९७३ उत्तराश्रमिणः पूर्वाश्रमप्रत्यवरोहणनिषेधः; १९७४ चतुर्णामप्याश्रमाणां श्रौतत्वादनुष्ठेयत्वम्. **गौतमः** – १९७४ ब्रह्मचर्यकालः, आश्रमसमुच्चयविकल्पौ मतभेदेन; १९७६ चत्वार आश्रमाः, गृहस्थोत्पादितस्यैवाऽऽश्रमाधिकारः; १९७७ ब्रह्मचर्यगार्हस्थ्ये इत्येतौ द्वावेवाऽऽश्रमौ, चतुर्षु गार्हस्थस्य प्राधान्यं व्याख्यातृमतभेदेन. **वृद्धगौतमः** – १९७७ गार्हस्थ्यस्य संन्यासस्य च प्रशंसा. **हारीतः** – १९७८ प्रजापतेः सकाशादाश्रमोत्पत्तिः, ब्रह्मचारिणो द्वैविध्यम्, तत्र नैष्ठिकलक्षणम्, ब्रह्मचर्यप्रशंसा, गृहस्थभेदाः तल्लक्षणानि च, यायावरत्वफलम्; १९८० वानप्रस्थभेदाः, संन्यासिभेदाः संन्यासप्रशंसा च, अनाश्रमिमरणं निरर्थकाश्रमः मिथ्याश्रमश्च नरकहेतवः, आश्रमफलानि. **वृद्धहारीतः** – १९८१ संन्यासिप्रशंसा; अनाश्रमित्वनिषेधः. **बौधायनः** – १९८१ ब्रह्मचर्याश्रमावधिः; १९८२ स्नातकावस्थायां दीप्तिरपि ब्रह्मचर्यफलम्, चातुराश्रम्यखण्डपूर्वकमैकाश्रम्यस्थापनम्; १९८५ संन्यासस्याधिकारः इतिकर्तव्यता च; १९८७ वेदसंन्यासिकलक्षणम्, शालीनयायावरचक्रचरलक्षणानि; १९८८ वानप्रस्थभेदाः सलक्षणाः; १९८९ नैष्ठिकवानप्रस्थसंन्यासिलक्षणानि; क्षत्रियवैश्ययोः संन्यासनिषेधः काषायादिलिङ्गधारणमात्रनिषेधो वा व्याख्यातृमतभेदेन; १९९० स्त्रीणामपि संन्यासाधिकार इति मतम्. **आपस्तम्बः हिरण्यकेशिधर्मसूत्रं च** – १९९० ब्रह्मचर्यकालावधिः; १९९१ नैष्ठिकब्रह्मचर्यम्, चत्वार आश्रमाः, तत्र ब्रह्मचर्याश्रमो नित्यः, अन्ये वैकल्पिकाः; १९९२ नैष्ठिकब्रह्मचर्यम्, ब्रह्मचर्यात्संन्यासः वानप्रस्थ्यं वा, गार्हस्थ्याद्वानप्रस्थ्यं सपत्नीकस्यैकाकिनो वा; १९९३ नैष्ठिकत्ववानप्रस्थ्यसंन्यासानां गार्हस्थ्यात्प्रशस्तत्वमिति मतम्; १९९४ गार्हस्थ्यमेवाऽऽश्रमान्तरेभ्यः प्रशस्तमिति मतम्; १९९६ ब्रह्मचारिणा इष्टैः सह संमन्त्र्याऽऽश्रमान्तरं ग्राह्यम्. **वैखानसधर्म-**

**सूत्रम्** – १९९७ आश्रमाश्चत्वारस्तेषां वर्णभेदेन व्यवस्था च, आश्रमावान्तरभेदाः सलक्षणाः, आश्रमसमुच्चयः. **वसिष्ठः** – १९९८ चत्वार आश्रमाः, आश्रमविकल्पः, गृहस्थभेदौ, गार्हस्थ्यप्रशंसा. **विष्णुः** – १९९९ नैष्ठिकब्रह्मचर्यविधिः, गार्हस्थ्यप्रशंसा; २००० वानप्रस्थ्येऽधिकारः, तच्च भार्यया सह विना वा, संन्यासाधिकारः संन्यासग्रहणविधिश्च; २००१ कुब्जादीनां नैष्ठिकत्वं नित्यम्; २००२ संन्यासप्रशंसा. **लघुविष्णुः** – २००२ आश्रमाणामवान्तरभेदाः तल्लक्षणानि च, आश्रमसमुच्चविकल्पौ, आरूढपतितत्वस्य स्वरूपं निषेधश्च, ब्राह्मणस्यैव संन्यासेऽधिकारः. **शङ्खः** – २००३ गार्हस्थ्यप्रशंसा, गृहस्थस्य वानप्रस्थ्येऽधिकारविशेषः, वानप्रस्थ्ये भार्यासाहित्यविकल्पः, संन्यासग्रहणविधिः. **शङ्खलिखितौ** – २००३ ब्रह्मचर्यादेव पारिव्राज्यमित्यैकाश्रम्यमिति मतं तदुपपादनं च, समुच्चयपक्षे वानप्रस्थ्यपारिव्राज्ययोरधिकारविशेषः, पारिव्राज्याधिकारे सति कालक्षपणनिषेधः. **महाभारतम्** – २००४ ब्रह्मचर्यफलम्; २००५ गार्हस्थ्यप्रशंसा; २००९ आश्रमक्रमः गार्हस्थ्यप्रशंसा च, ब्राह्मणस्य चत्वार आश्रमाः, वानप्रस्थ्याधिकारः, आश्रमविकल्पः, गार्हस्थ्यप्रशंसा; २०१० शूद्रवैश्यक्षत्रियाणां चातुराश्रम्याधिकारः सविशेषः; २०११ गार्हस्थ्यप्रशंसा, संन्यासफलम्; २०१२ आश्रमक्रमः गार्हस्थ्यप्रशंसा च; २०१३ संन्यासप्रशंसा, आश्रमविकल्पसमुच्चयौ, गार्हस्थ्यप्रशंसा, आश्रममर्यादाः; २०१५ आश्रमप्रशंसा, संन्यासप्रशंसा, गार्हस्थ्यप्रशंसा, आश्रमसमुच्चयविधिः; २०१६ ब्रह्मचर्यप्रशंसा; संन्यासिवानप्रस्थयोरवान्तरभेदाः, आश्रमक्रमः, वानप्रस्थ्ये त्रैवार्णिकानामेवाधिकारः, गार्हस्थ्यस्य आश्रमाणां संन्यासस्य च प्रशंसा, आश्रमक्रमः; २०१७ संन्यासप्रशंसा, आश्रमसमुच्चयः संन्यासविषये तदपवादश्च, आतुरसंन्यासः, संन्यासप्रशंसा. **हरिवंशः** – २०१७ आश्रमक्रमः, संन्यासप्रशंसा, गार्हस्थ्येऽपि संन्यासफलम्; २०१८ गार्हस्थ्यसंन्यासयोरधिकारः, गार्हस्थ्यप्रशंसा, आश्रमक्रमः संन्यासप्रशंसा च. **वाल्मीकिरामायणम्** – २०१८ गार्हस्थ्यप्रशंसा. **मनुः** – २०१९ अब्राह्मणगुरौ अननूचानब्राह्मणगुरौ च नैष्ठिकत्वनिषेधः, नैष्ठिकत्वफलम्; २०२० ब्रह्मचर्यकालावधिः; २०२६ गार्हस्थ्यप्रशंसा; २०२८ आयुर्भागभेदेनाऽऽद्याश्रमयोर्व्यवस्था; २०२९ संन्यासेन चित्तशुद्धिः; २०३० गृहस्थस्य वानप्रस्थ्ययोग्यता, वानप्रस्थ्ये भार्यायाः साहित्यराहित्यविकल्पः; २०३१ वानप्रस्थस्य चतुर्थाश्रमप्रवेशयोग्यता; २०३३ आश्रमसमुच्चयपक्षे अपाकृतर्णत्रयस्यैव संन्यासेऽधिकारः; २०३५ सर्वभूताभयदानर्णत्रयापाकरणपूर्वकस्य संन्यासस्य फलम्; २०३६ आश्रमसमुच्चयः तत्र गार्हस्थ्यप्रशंसा च; २०४० वेदसंन्यासिकस्य परमगतिप्राप्तिः; २०४१ चातुराश्रम्यफलम्. **याज्ञवल्क्यः** – २०४२ ब्रह्मचर्यावधिः, नैष्ठिकब्रह्मचर्यं तत्फलं च, संन्यासेन मानसपापेभ्यः शुद्धिः, वानप्रस्थ्ये पत्नीसाहित्यराहित्यविकल्पः; २०४५ गृहस्थवानप्रस्थयोः संन्यासेऽधिकारः. **बृहद्योगियाज्ञवल्क्यः** – २०४७ संन्यासेन मनःशुद्धिः; २०४८ वर्णभेदेनाऽऽश्रमव्यवस्था. **नारदः** – २०४८ गार्हस्थ्यप्रशंसा, विरक्तस्य ब्रह्मचर्यात्संन्यासः. **बृहस्पतिः** – २०४८ ब्रह्मचर्यावधिः, गार्हस्थ्यप्रशंसा, विरक्तस्य ब्रह्मचर्यात्संन्यासः. **भृगुः** – २०४९ यतिप्रशंसा. **कात्यायनः** – २०४९ वाग्दत्ताया मृतौ अन्यकन्याया अलाभे उत्तराश्रमस्वीकारः, आश्रमविकल्पः, वानप्रस्थ्ये भार्यासाहित्यराहित्यविकल्पः, आश्रमाश्चत्वारः तेषामवान्तरभेदाश्च सलक्षणाः. **व्यासः** – २०५० नैष्ठिकत्वम्, गार्हस्थ्यप्रशंसा, आश्रमसमुच्चयविकल्पौ, संन्यासाश्रमयोग्यता, वर्णभेदेनाऽऽश्रमव्यवस्था, शक्तिवैराग्यतारतम्यानुसारेण संन्यासावान्तरभेदव्यवस्था, संन्यासप्रशंसा. **लघुव्यासः** – २०५१ आश्रमविकल्पः. **देवलः** – २०५१ ब्रह्मचर्यावधिः. **उशना** – २०५१ नैष्ठिकत्वम्, अन्यतमाश्रमविषयमैकाश्रम्यम्; २०५२ आश्रमावान्तरभेदाः. **प्रजापतिः** – २०५२ अनाश्रमित्वनिषेधः, संन्यासावान्तरभेदाः सलक्षणाः. **यमः** – २०५२ ब्रह्मचर्यावधिः नैष्ठिकत्वं च; २०५३ आश्रमकालावधयः, वानप्रस्थ्ये भार्यासाहित्यराहित्य-

विकल्पः, आश्रमविकल्पः, प्रायश्चित्तरूपत्वं संन्यासस्य, आश्रमप्रशंसा. **दक्षः** – २०५३ ब्रह्मचर्याविधिः, द्विविधं ब्रह्मचर्यम्; २०५४ आश्रम-प्रातिलोम्यनिषेधः, अनाश्रमित्वनिषेधः, आश्रमलक्षणानि; २०५५ गार्हस्थ्यप्रशंसा, संन्यासाधिकारी, संन्यासप्रशंसा, गार्हस्थ्यप्रशंसा, संन्यासानधिकारिणः, संन्यासप्रशंसा. **संवर्तः** – २०५६ ब्रह्मचर्यप्रशंसा, समुच्चयपक्षे उत्तरोत्तराश्रमाधिकारिणः, संन्यासप्रशंसा, संन्यासभेदास्तेषां प्राशस्त्यतारतम्यं च, अनाश्रमित्वस्य निषेधः प्रायश्चित्तं च. **वृद्धशातातपः** – २०५६ संन्यासप्रशंसा. **पराशरः** – २०५६ संन्यासप्रशंसा, विरक्तविधुरादीनां संन्यासः, गार्हस्थ्यप्रशंसा. **बृहत्पराशरः** – २०५७ ब्रह्मचर्याविधिः, वानप्रस्थ्ये भार्यासाहित्यराहित्यविकल्पः, चतुर्थाश्रमयोग्यता, संन्यासप्रशंसा, आश्रमाणामवान्तरभेदाः सलक्षणाः. **अत्रिः** – २०५८ संन्यासस्य भेदाः प्रशंसा च. **सुमन्तुः** – २०५९ संन्यासनिमित्तानि. **जाबालिः** – २०५९ निश्चितस्य संन्यासस्याकरणं संन्यासारूढस्य पातनं पतितस्य संन्यासारोपणं संन्यासे विघ्नोत्पादनं च प्रत्यवायनिमित्तानि, संन्यासानधिकारिणः, संन्यासप्रशंसा. **पैठीनसिः** – २०५९ आश्रमगणना, गार्हस्थ्यप्रशंसा. **कण्वः** – २०५९ स्नातकत्वमर्यादा. **अङ्गिराः** – २०५९ आश्रमविकल्पः, वैराग्यातुरत्वादीनि संन्यासनिमित्तानि; २०६० वैराग्यमेव संन्यासनिमित्तं तेन विना संन्यासे पातित्यं च, मृतभार्यस्यापरभार्याया अलाभे संन्यासः, संन्यासप्रशंसा. **व्याघ्रपादः** – २०६० ब्रह्मचर्याविधिः. **आश्वलायनः** – २०६० चत्वार आश्रमा धर्महितवः, आयुर्विभागैराश्रमव्यवस्था, अनाश्रमित्वनिषेधः, आश्रमसमुच्चयविकल्पौ, साधकत्वासाधकत्वाभ्यामाश्रमद्वैविध्यम्, वानप्रस्थ्ये ब्राह्मणक्षत्रिययोरधिकारः, संन्यासे ब्राह्मणस्यैवाधिकारः; २०६० परमहंसप्रशंसा, हंसत्वपरमहंसत्वाभ्यां संन्यासिद्वैविध्यं तयोरवान्तरभेदाश्च सलक्षणाः, संन्यासप्रशंसा. **लघ्वाश्वलायनः** – २०६१ गार्हस्थ्यप्रशंसा. **बुधः** – २०६२ वानप्रस्थ्यसंन्यासग्रहणयोग्यता. **शौनकः** – २०६२ ब्रह्मचर्याविधिः. **पुलस्त्यः** – २०६२ आश्रमचतुष्टयम्. **छागलेयः** – २०६२ वानप्रस्थ्ये पत्नीराहित्यं ब्राह्मणस्य. **दत्तात्रेयः** – २०६२ संन्यासे ब्राह्मणस्यैवाधिकारः. **पितामहः** – २०६२ संन्यासचातुर्विध्यम्, परमहंसप्रशंसा. **कपिलः** – २०६२ संन्यासप्रशंसा. **शाकलः** – २०६२ ब्रह्मचर्याविधिः, गार्हस्थ्यप्रशंसा. **चतुर्विंशतिमतम्** – २०६३ ब्रह्मचर्याद्याश्रमत्रयमर्यादाः. **वायुपुराणं ब्रह्माण्डपुराणं च** – २०६३ ब्रह्मकृता आश्रमतत्संज्ञातद्धर्मोत्पत्तिः, गार्हस्थ्यप्रशंसा, सर्वेषामाश्रमाणां श्रेयस्करत्वम्, आश्रमभेदेन प्राप्यलोकभेदाः, परमहंसफलम्, आश्रमिणां साधुशब्दवाच्यत्वम्; २०६४ वानप्रस्थस्य संन्यासः, संन्यासे त्रैवर्णिकाधिकारः. **मार्कण्डेयपुराणम्** – २०६४ आश्रमसमुच्चयविकल्पौ, गार्हस्थ्यप्रशंसा, वानप्रस्थ्ये संन्यासे चाधिकारः. **विष्णुपुराणम्** – २०६४ आश्रमिणां गम्या लोकाः; २०६५ आश्रमसमुच्चयः, गार्हस्थ्यप्रशंसा वानप्रस्थ्ये भार्यासाहित्यराहित्यविकल्पः, संन्यासफलम्, आश्रमसमुच्चयविकल्पौ; २०६६ चातुराश्रम्यम्, अनाश्रमित्वनिषेधः, विरक्तवानप्रस्थस्य संन्यासेऽधिकारः. **विष्णुधर्मोत्तरपुराणम्** – २०६६ संन्यासप्रशंसा, आश्रमाणां फलानि, नैष्ठिकत्वस्य विकल्पः फलं च, आश्रमकालमर्यादाः, आश्रमसमुच्चयः तत्फलं च, गार्हस्थ्यप्रशंसा. **श्रीमद्भागवपुराणम्** –२०६७ गार्हस्थ्यप्रशंसा, आश्रमविकल्पः, सधर्माश्रमफलम्, आश्रमस्थानानि वैराजपुरुषाङ्गानि; २०६८ ब्रह्मचर्याविधिः, आश्रमविकल्पसमुच्चयौ, वानप्रस्थ्ये भार्यासाहित्यराहित्यविकल्पः, वानप्रस्थ्यमर्यादा, संन्यासे देवादिभिर्विघ्नोत्पादनम्. **लिङ्गपुराणम्** – २०६८ आश्रमिणां साधुशब्दवाच्यत्वम्, आश्रमचतुष्ट्वम्; २०६९ क्रमेणाऽऽश्रमान्तरस्वीकारधिकारिणः. **स्कन्दपुराणम्** – २०६९ प्रयत्नसाधितगार्हस्थ्यप्रशंसा, आश्रमाश्चत्वारः, आश्रमाणां विकल्पसमुच्चयौ अवान्तरभेदाः कालमर्यादाश्च, आश्रमफलानि, गार्हस्थ्यप्रशंसा; २०७० आश्रमावधयः, आश्रमविकल्पसमुच्चयौ, अनाश्रमित्वनिषेधः, आश्रमलक्षणानि, वानप्रस्थ्ये भार्यासाहित्यराहित्यविकल्पः; २०७१ संन्यासप्रशंसा, समुच्चिताश्रमफलम्, वानप्रस्थ्ये भार्याराहित्यम्, वानप्रस्थ्य-

गार्हस्थ्ययोः फले, श्रीव्यासकृता आश्रमाणां विशेषतो गार्हस्थ्यस्य प्रशंसा श्रीशुककृतस्तदपवादश्च; २०७२ आश्रमसमुच्चयः, संन्यासप्रशंसा, संन्यासविधिः. **सूतसंहिता** – २०७३ आश्रमिणां वैदिककर्माधिकारः, हरवशताद्वारा मोक्षप्राप्तिः फलं च, आश्रमसमुच्चयविकल्पौ, संन्यासचातुर्विध्यम्, आश्रमव्युत्क्रमनिषेधः; २०७४ संन्यासप्रशंसा, परमहंसस्यैव तत्त्वज्ञानम्, आश्रमिणां क्रमेण ब्रह्मलोकादिफलानि; २०७५ आश्रमक्रमः तत्राधिकारिणश्च, संन्यासस्य प्रायश्चित्तरूपता, संन्यासावान्तरभेदाः प्राशस्त्यतारतम्यसहिताः. **गरुडपुराणम्** – २०७६ आश्रमिणां क्रमेण ब्रह्मलोकादीनि फलानि, आश्रमाणामवान्तरभेदाः सलक्षणाः, नैष्ठिकत्वादीनामूर्ध्वरेतसामाश्रमाणां क्रमेण फलानि, ब्रह्मचर्यावधिः, वानप्रस्थ्ये भार्यासाहित्यराहित्यविकल्पः, आश्रमविकल्पः, संन्यासप्रशंसा. **पद्मपुराणम्** – २०७६ स्वस्वधर्मचारिणामाश्रमिणां ब्रह्मलोकः फलम्; २०७७ नैष्ठिकत्वम्, आश्रमकालमर्यादाः, वानप्रस्थ्ये भार्यासाहित्यराहित्यविकल्पः, वैराग्यं संन्यासहेतुः, संन्यासावान्तरभेदाः सलक्षणाः, गार्हस्थ्यप्रशंसा, वानप्रस्थ्यं तत्र च भार्यासाहित्यं भार्याराहित्यं वा, आश्रमिणां फलानि, आश्रमसमुच्चयः, आश्रमकालमर्यादाः; २०७८ गार्हस्थ्यप्रशंसा, ब्रह्मचर्यावधिः. **ब्रह्मपुराणम्** – २०७८ आश्रमाः पुण्यकर्मद्वाराणि, गार्हस्थ्यप्रशंसा, आश्रमकालमर्यादाः, वानप्रस्थ्ये भार्यासाहित्यराहित्यविकल्पः, संन्यासफलम्. **ब्रह्मवैवर्तपुराणम्** – २०७९ गार्हस्थ्यप्रशंसा, आश्रमसमुच्चयः, आश्रमकालमर्यादाः, संन्यासप्रशंसा, वैराग्यं संन्यासहेतुः. **वराहपुराणम्** – २०७९ गार्हस्थ्यप्रशंसा. **वामनपुराणम्** – २०७९ आश्रमकालावधयः, आश्रमविकल्पसमुच्चयौ, वर्णभेदेनाऽऽश्रमव्यवस्था, ब्रह्मणः सकाशादाश्रमसृष्टिः. **कूर्मपुराणम्** – २०८० आश्रमोत्पत्तिः, गार्हस्थ्यप्रशंसा, गार्हस्थ्यविषयकमैकाश्रम्यम्, आश्रमिणां फलानि, योगित्वविषयकपञ्चमाश्रमत्वशङ्कानिरासः, आश्रमाणामवान्तरभेदाः सलक्षणाः; २०८१ आश्रमसमुच्चविकल्पौ, आरूढपतितत्वनिषेधः, वैराग्यपङ्गुत्वादयः संन्यासहेतवः, ऐकाश्रम्यकल्पः, आश्रमकालमर्यादाः, वानप्रस्थ्यप्रशंसा, वैराग्यं संन्यासहेतुः, संन्यासावान्तरभेदाः सलक्षणाः. **भविष्यपुराणम्** – २०८२ ब्रह्मचर्यावधिः, आश्रमचतुष्टयम्, ब्रह्मचर्यचातुर्विध्यम्, गार्हस्थ्यप्रशंसा, आश्रमिणां फलानि, गार्हस्थ्यादीनां त्रयाणां क्रमेण शाक्तत्ववैष्णवत्वरौद्रत्वानि, ब्रह्मचर्यस्य तदनुगामित्वम्, आश्रमविकल्पः. **नारदपुराणम्** - २०८३ संन्यासप्रशंसा, त्रैवर्णिकानां चातुराश्म्याधिकारः, आश्रमकालावधयः, चत्वार आश्रमास्तेषामुत्पत्तिश्च, गार्हस्थ्यप्रशंसा, संन्यासप्रशंसा. **अग्निपुराणम्** – २०८३ वैराग्यं संन्यासहेतुः, आश्रमकालावधिः, संन्यासावान्तरभेदाः सर्वे ते योगयुक्ता मोक्षहेतवश्च. **देवीभागवतम्** – २०८३ गार्हस्थ्यप्रशंसा, आश्रमसमुच्चयस्यैव श्रेयस्त्वोपपादनम्, वानप्रस्थ्ये भार्याराहित्यम्. **शिवपुराणम्** – २०८५ गार्हस्थ्यप्रशंसा, आश्रमसमुच्चयः. **नरसिंहपुराणम्** – २०८५ विरक्ताविरक्तविषयौ आश्रमविकल्पसमुच्चयौ नैष्ठिवस्याऽऽश्रमान्तरनिषेधः, नैष्ठिकत्वप्रशंसा, आश्रमकालमर्यादाः; २०८६ अनाश्रमित्वनिषेधः, वैराग्यं संन्यासहेतुः, संन्यासपदार्थः, संन्यासप्रशंसा. **सौरपुराणम्** – २०८६ आश्रमाश्चत्वारः, सर्वेष्वाश्रमेषु दण्डधारणम्, आश्रमकालमर्यादाः, संन्यासस्य पापनिवर्तकत्वं मोक्षहेतुत्वं च. **पराशरपुराणम्** – २०८७ नित्यकर्मपापक्षयचित्तशुद्धिसंसारदोषदृष्टिवैराग्यसंन्यासेषु पूर्वपूर्वमुत्तरोत्तरहेतुः, तीव्रतीव्रतररूपयोर्वैराग्यविधयोश्चतुर्विधसंन्यासेषु व्यवस्थया हेतुत्वम्. **मुद्गलपुराणम्** – २०८७ महादेवावयवेभ्य आश्रमोत्पत्तिः, आश्रमक्रमसमुच्चयप्रशंसा, आश्रमचतुष्टयस्य वर्णभेदेन व्यवस्था, चित्तशुद्ध्यशुद्धिभ्यामाश्रमविकल्पसमुच्चयव्यवस्था;२०८८ वानप्रस्थ्यकालः, वानप्रस्थ्ये भार्यासाहित्यराहित्यविकल्पः, संन्यासकालः, भार्यया पतिसंन्यासोऽनुमन्तव्यः, संन्यासस्य चातुर्विध्यं सलक्षणम्, क्षत्रियस्य संन्यासेऽनधिकारः. **आदित्यपुराणम्** – २०८९ आश्रमसमुच्चायः. **संग्रहकारः (स्मृतिसंग्रहः)** – २०८९ संन्यासप्रशंसा. **स्मृत्यर्थसारः** – २०८९ ब्रह्मचर्यावधिः, आश्रमसमुच्चयः, ब्रह्मचर्याश्रमे त्रैवर्णि-

कानामधिकारः. **कुमारिलकारिकाः** – २०८९ ब्रह्मचर्यकालावधिः. **त्रिकाण्डमण्डनकारिकाः** – २०८९ मृतपत्नीकस्य संन्यासो गार्हस्थ्यं वा मतभेदेन. **रेणुकारिकाः** – २०९० ब्रह्मचर्यकालावधिः, कलौ दीर्घकालब्रह्मचर्यनिषेधः. **जीवन्मुक्तिविवेकः** – २०९० विविदिषासंन्यासविद्वत्संन्यासौ क्रमेण विदेहमुक्तिजीवन्मुक्तिहेतू, वैराग्यं संन्यासहेतुः, मन्द-तीव्र-तीव्रतरभेदैर्वैराग्यत्रैविध्यम्, मन्दवैराग्यं न संन्यासहेतुः, तीव्रतीव्रतरवैराग्ययोर्व्यवस्थया चतुर्विधसंन्यासहेतुत्वम्, त्रिविधवैराग्यलक्षणानि, एतेषां संग्रहश्लोकविषयाणां गद्येन सविस्तरं विवरणम्. **अनिर्दिष्टकर्तृकवचनानि** – २०९४ ब्रह्मचर्यावधिः, गार्हस्थ्यप्रशंसा, वर्णभेदनाऽऽश्रमव्यवस्था, विरक्ताविरक्तभेदेनाऽऽश्रमविकल्पसमुच्चयव्यवस्था; २०९५ ब्रह्मचर्यावधिः, क्षत्रियस्य यतिधर्मेऽधिकारः, वानप्रस्थ्यावधिः, संन्यासप्रशंसा.



# तृतीयभागस्य ऋष्यादिक्रमेण विषयानुक्रमणिका




**शास्त्रार्थाः**

**वर्णसामान्यधर्माः —**

ग्रहणविचारः १५८१.

**आश्रमविचारः —**

आश्रमविचारविषयकः शास्त्रार्थः — पराशरमाधवस्थः १९३१-१९३३, मदनपारिजातस्थः १९३३-१९३५, मदनरत्नस्थः १९३५-१९३६, गदाधरपद्धतिस्थः १९३६-१९३७, यतिधर्मप्रकाशस्थः १९३७-१९३८.

**वेदाः**

**वर्णसामान्यधर्माः —**

गोपालनम् १५८३. सत्यप्रशंसा; गोपालनपरा गोस्तुतिः; सप्तानां कामक्रोधजन्यमद्यपानादिदुरवस्थानां त्याज्यत्वं प्रत्यवायजनकत्वं च १५८४. गोपालनानुषङ्गिकं गोदेवगोष्ठप्रार्थनम् १५८५. सत्यवचनकर्तृकरक्षणप्रार्थनागम्या सत्यवचनकर्तव्यता; यज्ञकृत्प्रशंसया अयज्ञकृन्निन्दया च यजनप्रशंसा १५८६. सत्यप्रशंसा; श्रद्धायाः प्रशंसा प्रार्थना च; गोपालनम् १५८७. परस्परसंगमनस्य भाषणादिव्यवहारेषु परस्परसंवादस्य च सदाचाररूपस्य प्रार्थनम् १५८८. सत्यवदनप्रशंसा; स्त्रीणामा प्रसवात्संभोगानुमतिः, रजस्वलया सह संभाषणसहासनयोस्तदीयान्नग्रहणस्य च निषेधः, मतान्तरेणान्ननिषेधोऽभ्यञ्जनरूपान्नमात्रविषयः; ब्राह्मणन्यक्करणस्य निषेधः १५८९. ब्राह्मणविषये अपगोरणादिनिषेधेन ब्राह्मणप्रशंसा; दानप्रशंसा; ब्राह्मणकर्तृकभेषजनिर्माणनिषेधः भिषङ्निन्दा च; शूद्रस्य यज्ञेऽनधिकारः; सत्यवदनविधिः; श्रेष्ठपुरुषाचरणनिन्दानिषेधः; प्रथमं पापं द्वितीयादिपापकारणम्; सत्यप्रशंसा १५९०. केशश्मश्रुकक्षविषये क्षौरक्रमविधिः; श्रद्धाप्रशंसा; अनृतनिन्दा सत्यप्रशंसा च १५९१. सत्यवदनस्य प्रशंसा विधिश्च, अनृतवदननिन्दा; अपशब्दोच्चारणनिषेधः; पर्जन्ये अप्रावृतगमनविधिः; सत्यप्रशंसा अनृतनिन्दा च १५९२. आत्महत्यानिषेधः; स्त्रीहननमनाचारः १५९३. पापाचरणनिषेधः; अग्न्युपचरणविधिः, अदत्त्वाऽग्नयेऽन्नभक्षणनिन्दा; भोक्तुर्ब्राह्मणस्य शुचित्वविधिः; ब्राह्मणकर्तृकगायननर्तननिषेधः; संस्कारसंस्कृतस्याग्निमतो ब्राह्मणस्य प्रशंसा अनग्निकस्य निन्दा च; अनृतवदननिषेधः १५९४. ऐकान्तिकदानदानाभावनिन्दापूर्वकं यथाकालं तदुभयाङ्गीकारस्य विधिः; शत्रुब्राह्मणेऽप्यकुशलवचननिषेधेन ब्राह्मणप्रशंसा १५९५. नमस्कार्यत्वानिन्द्यत्वाभ्यां ब्राह्मणप्रशंसा; सत्यानृतवादिनोः तथा देवोपासकब्राह्मणपूजकयोः फलभेदानुरोधेन यमलोके विवेचनम्; श्रौतस्मार्तधर्माणामध्ययनाध्यापनाभ्यां सहानुष्ठेयत्वम् १५९६. शिष्यं प्रत्याचार्येणाऽऽवश्यकत्वेनोपदिष्टा धर्माः — सत्यवचनम्, धर्माचरणम्, अध्ययनाध्यापने, गार्हस्थ्यम्, आत्मरक्षककर्माणि, समृद्धिकरकर्माणि, दैवपित्र्यकर्माणि, मातृपित्राचार्यातिथिसेवा, अनिन्दितशिष्टाचाराचरणम्, श्रेष्ठब्राह्मणसेवा, दानम्, कर्मविषयके अभिशस्तसंसर्गविषयके च संदेहे शिष्टाचारवदाचारः १५९७. पुण्यस्य प्रशंसा पापस्य निन्दा च १५९८. सत्यदमदानप्रशंसा; प्रमाणसिद्धयज्ञादिकर्मणां कर्तुर्मोक्षः फलम्; अस्वर्ग्यैः सह स्वर्ग्यस्य संसर्गः श्रेयस्करज्ञानप्रतिबन्धकः, तत्र एकोनविंशतिसंख्याकानामस्वर्ग्याणां प्रदर्शनम् १५९९. जीवननिमित्तेन कर्मकरणविधिः; अनिष्टफलजनकत्वेनाऽऽत्महनननिन्दा; शास्त्रविरुद्धानि वदनघ्राणदर्शनश्रवणसंकल्पनानि पापानि १६००. दिगन्तदेशस्य तद्वासिजनस्य च संसर्गस्य निषेधः; पुत्रोत्पादनकर्मानुष्ठानविद्यानां मनुष्यलोकपितृलोकदेवलोकसाधनत्वात् प्रशस्यत्वं तत्र विद्यायाः प्रशस्यतमत्वं च; सहसा सुप्तप्रबोधनस्य निषेधः

१६०१. दमो दानं दयेति गुणत्रयस्य विधिः सार्थवादः १६०२. पुण्येन कर्मणोत्तमयोनिप्राप्तिः पापेन कर्मणाऽधमयोनिप्राप्तिश्च; ब्राह्मणसुवर्णस्तेयादीनि पञ्च महापातकानि; यथाशास्त्रं कर्माण्यनुतिष्ठतो निगृहीतेन्द्रियस्य क्रममुक्तिः फलम् १६०३. प्रश्नाभावेऽन्यायेन प्रश्ने च प्रतिवचनस्य निषेधः; सत्यप्रशंसा; स्त्रीशूद्रयोः प्रणवसावित्र्यादावनधिकारः; दश यमा दश नियमाश्च सव्याख्यानाः १६०४. कलञ्जभक्षणनिषेधः; अविहितहिंसानिषेधः; अर्थज्ञानपर्यन्तब्रह्मयिषडङ्गवेदाध्ययनस्य नित्यत्वम्; आत्मरक्षणविधिः आत्महत्यानिषेधश्च १६०५. ब्राह्मणहत्यासुरापानयोर्निषेधः; स्वपतः प्रबोधनस्य निषेधः; अश्लीलकीर्तननिषेधः, रात्रौ जलग्रहणस्य निषेधः; शूद्रस्य वेदमन्त्रोच्चारे दण्डः; अनृतवदननिषेधः; अपशब्दोच्चारणनिषेधः १६०६.

**आश्रमविचारः —**

ब्रह्मचर्यकालावधिः १९३८. गार्हस्थ्यसंन्यासयोर्विकल्पः; विस्तरेण संन्यासप्रशंसा १९३९. यत्यवान्तरभेदरूपस्यावधूतस्य लक्षणं संन्यासस्य प्रशंसा च; आश्रमक्रमः, संन्यासग्रहणोत्तरं नाग्निः सेव्यः एषणाशून्यः संन्यासाधिकारी १९४१. आश्रमसमुच्चयविकल्पौ, विरक्तस्य संन्यासेऽधिकारः, संन्यासफलम् १९४५. परमहंसप्रशंसा १९४७. कुटीचकादिचतुर्विधिसंन्यासिनां लक्षणानि १९४८. तुरीयातीतावधूतलक्षणं तत्प्रशंसा च १९४९. परमहंसप्रशंसा; यतिभेदाः; संन्यासाश्रमप्रशंसा; आश्रमचतुष्टयप्रशंसा १९५०. ब्रह्मचारिगृहस्थाश्रमयोः फलम्; वैराग्यं संन्यासाधिकारहेतुः, तदभावे तद्ग्रहणे पातित्यम्; संन्यासाश्रमाधिकारी १९५१. संन्यासग्रहणं संकल्प्य तदकरणे प्रायश्चित्तपूर्वकं तद्ग्रहणम्, संन्यासाधिक्षेपविघ्नौ पतितसंन्यासनं च निषिद्धानि; संन्यासानिधिकारिणः; संन्यासप्रशंसा; ज्ञानवैराग्यान्यतर-तदुभयसत्त्व-क्रमैः चतुर्विधाः संन्यासिनः तल्लक्षणानि च, कुटीचकादयः षड्विधाः संन्यासिनः तल्लक्षणानि तत्प्राप्यफलानि च १९५२. आश्रमत्रयानुष्ठानं संन्यासाधिकारसंपादकम्, संन्यासग्रहणोत्तरं नाग्निः सेव्यः १९५३. संन्यासप्रशंसा १९५४. आश्रमाणामुत्तरोत्तरं श्रैष्ठ्यम्; संक्षेपविस्ताराभ्यामाश्रमक्रमवर्णनम् १९५५. संन्यासानधिकारिणः; आसन्नमरणस्यैव आतुरसंन्यासेऽधिकारः; संन्यासाधिकारसंपादकं वैराग्यदि १९५७. संन्यासग्रहणे मन्दवैराग्यस्य आश्रमक्रमापेक्षा, तीव्रवैराग्यस्य तदनपेक्षा; ज्ञानवैराग्यान्यतर-तदुभयसत्त्व-क्रमैः चतुर्विधाः संन्यासिनः तल्लक्षणानि च १९५८. कर्मसंन्यासद्वैविध्यम्; कुटीचकादयः षड्विधाः संन्यासिनः तल्लक्षणानि च १९५९. जीवत आतुरसंन्यासिनः कर्तव्यम्; आतुरादिसप्तविधसंन्यासानां फलानि; संसारदोषदर्शनं परंपरया संन्यासाधिकारसंपादकम्; आश्रमसमुच्चयविकल्पौ; संन्यासाधिकारी १९६०. क्रमेण चातुराश्रम्यम्, त्यागरूपसंन्यासोत्तरमप्यग्नेरपरिग्रहः १९६१. चत्वार आश्रमाः तदवान्तरभेदाः तल्लक्षणानि च; गृहस्थस्य गृहकामनासत्त्वासत्त्वाभ्यां वानप्रस्थ्यास्वीकारस्वीकारौ; ब्राह्मणस्य संन्यासाधिकारः १९६३. ब्रह्मचर्याश्रमप्रशंसा; संन्यासफलम् १९६४.

### वैतानश्रौतसूत्रम्

**अनुपनीतधर्माः —**

अनुपनीतस्य कामचारः १९१५.

### आपस्तम्बपरिभाषासूत्रम्

**वर्णसामान्यधर्माः —**

यज्ञे त्रैवर्णिकानामेवाधिकारः १६०६. आर्त्विज्ये ब्राह्मणानामेवाधिकारः १६०७.

### आश्वलायनगृह्यसूत्रम्

**आश्रमविचारः —**

ब्रह्मचर्याश्रमकालावधिः १९६४.

### हिरण्यकेशिगृह्यसूत्रम्

**वर्णसामान्यधर्माः —**

क्षौरे श्मश्रुप्रभृति वपनक्रमः १६०७.

**आश्रमविचारः —**

ब्रह्मचर्याश्रमकालावधिः १९६५.

### हिरण्यकेशिगृह्यशेषसूत्रम्

**आश्रमविचारः —**

संन्यासाधिकारिणः १९६५.

### मानवगृह्यसूत्रम्

**आश्रमविचारः —**

ब्रह्मचर्याश्रमस्य कालावधिः फलं च १९६५.

### भारद्वाजगृह्यसूत्रम्

**आश्रमविचारः –**

ब्रह्मचर्याश्रमकालावधिः १९६६.

### काठकगृह्यसूत्रम्

**आश्रमविचारः –**

ब्रह्मचर्याश्रमस्य कालावधिः फलं च १९६६.

### वाराहगृह्यसूत्रम्

**आश्रमविचारः –**

ब्रह्मचर्याश्रमस्य कालावधिः फलं च १९६६.

### आग्निवेश्यगृह्यसूत्रम्

**आश्रमविचारः –**

ब्रह्मचर्यकालावधिः, वानप्रस्थ्यसंन्यासयोरधिकारिणः १९६७.

### पारस्करगृह्यसूत्रम्

**आश्रमविचारः –**

ब्रह्मचर्यकालावधिः १९६७.

### गोभिलगृह्यसूत्रम्

**आश्रमविचारः –**

गार्हस्थ्याधिकारी १९६८.

### खादिरगृह्यसूत्रम्

**आश्रमविचारः –**

गार्हस्थ्याधिकारी १९६९.

### जैमिनिगृह्यसूत्रम्

**आश्रमविचारः –**

ब्रह्मचर्यकालावधिः, गार्हस्थ्यविधिः १९७०.

### छन्दोगसूत्रम्

**आश्रमविचारः –**

त्रैवर्णिकानां संन्यासाधिकारः १९७०.

### वैखानसगृह्यसूत्रम्

**वर्णसामान्यधर्माः –**

ब्राह्मणाद्ब्राह्मण्यां जातस्य ब्राह्मणः, श्रोत्रियः, अनूचानः, भ्रूणः, ऋषिकल्पः, ऋषिः, मुनिः इत्येतासामवस्थानां लक्षणानि तासां प्राशस्त्यतारतम्यं च १६०७.

### प्रसवोत्थानपरिशिष्टम्

**आश्रमविचारः –**

आश्रमसमुच्चयविकल्पौ १९७०.

### यज्ञपार्श्वपरिशिष्टम्

**आश्रमविचारः –**

अनाश्रमित्वनिषेधः १९७१.

### ब्रह्मसूत्राणि

**वर्णसामान्यधर्माः –**

शूद्रस्यापि ब्रह्मविद्यायामधिकारः १६०८.

**आश्रमविचारः –**

उर्ध्वरेतसां नैष्ठिकत्ववानप्रस्थ्यसंन्यासाश्रमाणां श्रुतिसिद्धत्वात्सर्वैरनुष्ठेयत्वम् १९७१. उत्तराश्रमिणः पूर्वाश्रमप्रत्यवरोहणनिषेधः १९७३. चतुर्णामप्याश्रमाणां श्रौतत्वादनुष्ठेयत्वम् १९७४.

### गौतमः

**वर्णसामान्यधर्माः –**

ब्राह्मणस्य मद्यपाननिषेधः; ब्राह्मणस्य शस्त्रधारणाधिकारः; द्विजातीनां नित्यानित्या धर्माः १६११. सत्यादयः सामान्यधर्माः १६१२. शूद्रधर्माः १६१३. शूद्रस्य नमस्कारमन्त्राधिकारः १६१४. पाकयज्ञानां स्वयंयजने मतभेदः १६१५. उत्कृष्टनिकृष्टभावः परिचार्यपरिचारकभावनियामकः तदपवादश्च; स्तेयापवादः; पतितयोरपि मातापित्रोः शुश्रूषार्हत्वम् १६१६.

**अनुपनीतधर्माः –**

अनुपनीतस्य कामचारकामवादकामभक्षाः १९१५. अनुपनीतस्य कामभक्षापवादः; ब्रह्मचर्यनियमः; मूत्रपुरीषयोरनियमः १९१७. अनुपनीतस्य कल्परहितमाचमनम्; अतिबाले शुद्धिक्रियासंकोचः १९१८. पाकयज्ञानधिकारः अनुपनीतस्य; वेदोच्चारणानधिकारः सापवादः अनुपनीतस्य १९२०. मद्यनिषेधः अनुपनीतस्य १९२१.

**आश्रमविचारः –**

ब्रह्मचर्यकालः; आश्रमसमुच्चयविकल्पौ मतभेदेन १९७४. चत्वार आश्रमाः; गृहस्थोत्पादितस्यैवाऽऽश्रमाधिकारः १९७६. ब्रह्मचर्यगार्हस्थ्ये इत्येतौ द्वावेवाऽऽश्रमौ, चतुर्षु गार्हस्थ्यस्य प्राधान्यं व्याख्यातृमतभेदेन १९७७.

### वृद्धगौतमः

**वर्णसामान्यधर्माः –**

चतुर्णां वर्णानां धर्माः फलश्रुतिसहिताः; ग्रहणेषु

कर्तव्यानि दानादिधर्मकृत्यानि १६१७. ब्राह्मणगुणाः, द्विजशुश्रूषा शूद्रधर्मः; शूद्रस्य स्वाभाविकदोषाणां दर्शनं तद्धर्मद्विजशुश्रूषाविधिनिमित्तम्; ग्रहणनिमित्तको भोजननिषेधः १६१८.

**आश्रमविचारः —**

गार्हस्थ्यस्य संन्यासस्य च प्रशंसा १९७६.

**हारीतः**

**वर्णसामान्यधर्माः —**

शुश्रूषा शूद्रधर्मः; क्षत्रियवैश्यधर्माः; औदररैतसादिपञ्चाग्निनियमनविधिः तद्विवरणं च १६१९. दमदयादानदृढव्रतत्वानि ब्राह्मणगुणाः तेषां विवरणं च १६२०. सदाचारप्रशंसा; अहिंसादयः पञ्च यमाः तेषां विस्तरेण विवरणं च १६२१. क्रोधनियमादयः पञ्च नियमाः तेषां विस्तरेण विवरणं च १६२५. यमनियमप्रशंसा; यतिपूजनम्; ब्राह्मणस्य रासभाद्यारोहणनिषेधः; त्रैवर्णिकानां शिखाछेदने दोषः; पैशुन्यवर्जनम्, सर्वप्राणिकल्याणैषणम्, यतिनमस्कारः, द्विजानां मद्यपाननिषेधः, क्षौरे दिङ्नियमः १६२७.

**आश्रमविचारः —**

प्रजापतेः सकाशादाश्रमोत्पत्तिः; ब्रह्मचारिणो द्वैविध्यम्, तत्र नैष्ठिकलक्षणम्, ब्रह्मचर्यप्रशंसा; गृहस्थभेदाः तल्लक्षणानि च, यायावरत्वफलम् १९७८. वानप्रस्थभेदाः; संन्यासिभेदाः संन्यासप्रशंसा च; अनाश्रमिमरणं निरर्थकाश्रमः मिथ्याश्रमश्च नरकहेतव, आश्रमफलानि १९८०.

**लघुहारीतः**

**वर्णसामान्यधर्माः —**

ग्रहणनिमित्तकदानादिप्रशंसा १६२८.

**अनुपनीतधर्माः —**

अनुपनीतस्य कामचारत्वात् प्रायश्चित्ताभावः १९२१.

**वृद्धहारीतः**

**वर्णसामान्यधर्माः —**

षट्कर्मविषयको ब्राह्मणादीनामधिकारभेदः; सुरापानादिनिषेधः १६२८. आततायिवधे दोषाभावः; बहूनां सामान्यधर्माणां समाम्नानम् १६२९.

**आश्रमविचारः —**

संन्यासिप्रशंसा; अनाश्रमित्वनिषेधः १९८१.

**बौधायनः**

**वर्णसामान्यधर्माः —**

आर्याधिष्ठितशूद्राणां वपनावधिः आचमनकल्पश्च; कर्मयोग्यानि वस्त्राणि १६२९. चतुर्णां वर्णानां यजनादयो धर्माः १६३०. ब्राह्मणवैश्ययोः शस्त्रग्रहणे निमित्तानि; दिवास्वापादिनिषिद्धाचरणनिन्दा; दैन्यशाठ्यजैह्म्यनिषेधः; गुरुसंकरिप्रभृतयो दुष्टत्वादनाश्यान्नाः १६३१. अप्रक्षालितपादैरप्रवेष्टव्यानि स्थानानि; शूद्रस्य वस्त्रमुपवीतम्; अभिचारविधिः; नित्यानां यथाकथंचिदप्यवश्यकर्तव्यता; अर्हाभावेऽनर्हायापि ग्रहणनिमित्तकदानस्य कर्तव्यता १६३२.

**अनुपनीतधर्माः —**

कर्मनियमाभावः अनुपनीतस्य १९२१.

**आश्रमविचारः —**

ब्रह्मचर्याश्रमावधिः १९८१. स्नातकावस्थायां दीप्तिरपि ब्रह्मचर्यफलम्; चातुराश्रम्यखण्डनपूर्वकमैकाश्रम्यस्थापनम् १९८२. संन्यासस्याधिकारः इतिकर्तव्यता च १९८५. वेदसंन्यासिकलक्षणम्; शालीनयायावरचक्रचरलक्षणानि १९८७. वानप्रस्थभेदाः सलक्षणाः १९८८. नैष्ठिकवानप्रस्थसंन्यासिलक्षणानि; क्षत्रियवैश्ययोः संन्यासनिषेधः काषायादिलिङ्गधारणमात्रनिषेधो वा व्याख्यातृमतभेदेन १९८९. स्त्रीणामपि संन्यासाधिकार इति मतम् १९९०.

**आपस्तम्बः हिरण्यकेशिधर्मसूत्रं च**

**वर्णसामान्यधर्माः —**

त्रैवर्णिकानामप्यदुष्टकर्मणामुपनयनादावधिकारः १६३२. द्विजशुश्रूषा शूद्रधर्मः तत्र फलतारतम्यं च; पूज्यपूजाविधिः; धर्मातिक्रमहेतुर्हर्षो वर्ज्यः १६३३. मद्यपाननिषेधो ब्राह्मणस्य; कुहकादिविषये वर्तनविशेषविधिः; पतितैरपपात्रैश्च सह व्यवहारस्य निषेधः; परं प्रति परपातित्यकथने दोषः; क्रोधादयश्चतुर्दश दुःखहेतवो दोषाः तन्नाशका अक्रोधादयः षोडश गुणाः तेषां फलं च १६३४. परद्रव्ये स्वत्वाभिमानोऽपि स्तेयमिति मतम् १६३५. स्तेयापवादः; सर्वं परद्रव्यग्रहणं स्वाम्यनुमति-

पूर्वकमेवेति मतम्; पतिताचार्यज्ञातिमातृविषयकशिष्यादिव्यवहारविधिः १६३६. आत्मरक्षावर्जं ब्राह्मणस्याऽऽयुधग्रहणनिषेधः; द्विजानामध्ययनादयो धर्माः; अप्रोक्षितब्राह्मणहस्तसमूढस्थलाधिष्ठाननिषेधः; अग्निब्राह्मणौ ब्राह्मणांश्चान्तरेण गमननिषेधः तदपवादश्च; अग्निजलयोर्युगपद्धारणनिषेधः; नानाग्निसंनिपातनिषेधः तदपवादश्च; अप्रतिष्ठिताग्निप्रदक्षिणीकरणनिषेधः १६३७. पृष्ठतःपाणिसंश्लेषनिषेधः; संदिग्धदोषफलक्रियानिषेधः संदिग्धार्थे; निश्चयोक्तिनिषेधः; आसनरहितभूम्युपवेशननिषेधः; शूद्रेण सहान्नग्रहणादिव्यवहाराणां निषेधः; पादुकावर्जनविषयाः; ग्रहणे भोजनस्य निषेधः; आत्मसंयमक्षमयोः प्रशंसा क्रोधनिन्दा च; जपहोमैर्द्विजप्रभाववृद्धिः; परदारपरद्रव्यसर्वभूतेषु क्रमेण मातृलोष्टात्मवद्दर्शनस्य प्रशंसा; ग्रहणे अहोरात्रोपवासः १६३८. आरूढपादुकस्य देवगृहे गमननिषेधः; शूद्रस्य प्रणवोच्चारणशालग्रामार्चनब्राह्मणीगमननिषेधः १६३९.

**अनुपनीतधर्माः —**

होमानधिकारः अनुपनीतस्य; अनुपनीतस्य प्रायत्याभावे मतभेदेन मर्यादाभेदाः १९२२.

**आश्रमविचारः —**

ब्रह्मचर्यकालावधिः १९९०. नैष्ठिकब्रह्मचर्यम्; चत्वार आश्रमाः, तत्र ब्रह्मचर्याश्रमो नित्यः, अन्ये वैकल्पिकाः १९९१. नैष्ठिकब्रह्मचर्यम्; ब्रह्मचर्यात्संन्यासः वानप्रस्थ्यं वा, गार्हस्थ्याद्वानप्रस्थ्यं सपत्नीकस्यैकाकिनो वा १९९२. नैष्ठिकत्ववानप्रस्थ्यसंन्यासानां गार्हस्थ्यात्प्रशस्तत्वमिति मतम् १९९३. गार्हस्थ्यमेवाऽऽश्रमान्तरेभ्यः प्रशस्तमिति मतम् १९९४. ब्रह्मचारिणा इष्टैः सह संमन्त्र्याऽऽश्रमान्तरं ग्राह्यम् १९९६.

## वैखानसधर्मसूत्रम्

**वर्णसामान्यधर्माः —**

द्विजानां यजनादयः शूद्रस्य द्विजशुश्रूषा च धर्माः १६३९.

**आश्रमविचारः —**

आश्रमाश्चत्वारस्तेषां वर्णभेदेन व्यवस्था च, आश्रमवान्तरभेदाः सलक्षणाः, आश्रमसमुच्चयः १९९७.

## वसिष्ठः

**वर्णसामान्यधर्माः —**

ब्राह्मणस्य धर्मप्रवक्तृत्वम्; द्विजानां यजनादयः शूद्रस्य द्विजशुश्रूषा च धर्माः; वर्णेषु केशवेषविषयकव्यवस्थाऽव्यवस्थयोर्विकल्पः १६३९. आततायिवधे दोषाभावः; ब्राह्मणवैश्ययोरात्मत्राणाद्यर्थं क्षत्रियस्य तु नित्यं शस्त्रादानम्; सत्याक्रोधदानाहिंसाप्रजननानि सामान्यधर्माः; गोप्यगोप्यतमा विषयाः; पैशुन्यमत्सरादिवर्जनं सामान्यधर्मः १६४०. शस्त्रविषसुराग्रहणं ब्राह्मणस्य निषिद्धम्; अनृतनिषेधापवादः; शूद्रं प्रति मत्यादिदानधर्मोपदेशव्रतादेशानां निषेधः; भार्यायाः सुरापानेन भर्तुर्दोषः; वर्णानामापन्निवारणसाधनानि; वेदोक्तकर्मकरणविधिः; धर्माचरणसत्यवदनदीर्घदर्शनपरदर्शनानां विधिस्तदितरनिषेधश्च; पाणौ कुशधारणम्; शूद्राणां वाजसनेयित्वम्; ग्रहणे स्नानाभावे प्रत्यवायः; ग्रहणादिनिमित्तकस्नाने नदीरजोदोषाभावः; रात्रिस्नाननिषेधः सापवादः १६४१. ग्रस्तोदयग्रहणनिमित्तकः भोजननिषेधः; नैमित्तिकक्षौरे कालदोषाभावः १६४२.

**अनुपनीतधर्माः —**

अनुपनीतस्य शूद्रसमत्वं श्रौतस्मार्तकर्मानधिकारश्च १९२३.

**आश्रमविचारः —**

चत्वार आश्रमाः, आश्रमविकल्पः, गृहस्थभेदौ, गार्हस्थ्यप्रशंसा १९९८.

## वृद्धवसिष्ठः

**वर्णसामान्यधर्माः —**

ग्रहणादौ श्राद्धस्नानदानविधिः; ग्रस्तोदयादिग्रहणेषु पूर्वोत्तरकालयोर्भोजननिषेधः १६४२.

## विष्णुः

**वर्णसामान्यधर्माः —**

अध्यापनादिवर्णधर्माणां व्यवस्था; क्षमादयश्चतुर्दश सामान्यधर्माः १६४३. आततायिवधे दोषाभावः १६४४. सुरामद्यभेदाः, ब्राह्मणादिं प्रति तत्स्पर्शादिनिषेधानिषेधव्यवस्था १६४५. याजनाध्यापनाभ्यां प्राग्याज्याध्याप्ययोः परीक्षणम् १६४६. कामक्रोधलोभानां निन्दा; हिंसाया निन्दा अहिंसकस्य प्रशंसा च;

हिंसाया निन्दा अहिंसायाः स्तुतिश्च १६४७. स्तेयनिषेधः; ग्रहणकाले भोजननिषेधः स्नानादिविधिश्च; दमयमयोर्विधानं प्रशंसा च १६४८. ग्रहणनिमित्तकश्राद्धप्रशंसा, ग्रहणे सर्वतोयब्राह्मणदेयवस्तूनामुपयोगार्हत्वं स्नानदानयोर्निशायाः शुभत्वं च; वपननिमित्तानि, वृथावपननिषेधः १६४९. चक्राद्यङ्कनं गीतनृत्यादिकं च द्विजभिन्नानां धर्मः १६५०.

**अनुपनीतधर्माः —**

उपनयनपर्यन्तं शूद्रसमत्वमनुपनीतस्य १९२४.

**आश्रमविचारः —**

नैष्ठिकब्रह्मचर्यविधिः; गार्हस्थ्यप्रशंसा १९९९. वानप्रस्थ्येऽधिकारः, तच्च भार्यया सह विना वा; संन्यासाधिकारः संन्यासग्रहणविधिश्च २०००. कुब्जादीनां नैष्ठिकत्वं नित्यम् २००१. संन्यासप्रशंसा २००२.

### लघुविष्णुः

**वर्णसामान्यधर्माः —**

तेजःसत्यादयः क्षत्रियधर्माः, वाणिज्यादयो वैश्यधर्माः, द्विजशुश्रूषा पञ्चयज्ञविधानं च शूद्रधर्मः, क्षत्रियवैश्ययोरपि पूर्ववर्णशुश्रूषा धर्मः १६५०.

**आश्रमविचारः —**

आश्रमाणामवान्वरभेदाः तल्लक्षणानि च, आश्रमसमुच्चयविकल्पौ, आरूढपतितत्वस्य स्वरूपं निषेधश्च, ब्राह्मणस्यैव संन्यासेऽधिकारः २००२.

### शङ्खः

**वर्णसामान्यधर्माः —**

यजनादयो द्विजधर्माः, द्विजशुश्रूषादयः शूद्रधर्माः, क्षमादयः सामान्यधर्माः; ग्रहणादिषु दानस्नानविधिः १६५०. ब्राह्मणस्यैव विद्यास्थानेषु इतरान्प्रति वृत्त्युपदेशे चाधिकारः १६५१.

**अनुपनीतधर्माः —**

उपनयनपर्यन्तं शूद्रसमत्वमनुपनीतस्य १९२४.

**आश्रमविचारः —**

गार्हस्थ्यप्रशंसा, गृहस्थस्य वानप्रस्थ्येऽधिकारविशेषः, वानप्रस्थ्ये भार्यासाहित्यविकल्पः, संन्यासग्रहणविधिः २००३.

### लघुशङ्खः

**वर्णसामान्यधर्माः —**

इष्टापूर्ते ब्राह्मणस्य विशेषधर्मौ द्विजानां सामान्यधर्मौ च, इष्टलक्षणम्, शूद्रस्य पूर्तेऽधिकारः, न वैदिके १६५१.

### लिखितः

**वर्णसामान्यधर्माः —**

इष्टापूर्ते ब्राह्मणस्य विशेषधर्मौ द्विजानां सामान्यधर्मौ च, इष्टलक्षणम्, शूद्रस्य पूर्तेऽधिकारः, न वैदिके १६५१.

### शङ्खलिखितौ

**वर्णसामान्यधर्माः —**

विप्रकर्मककोपननिषेधः; परस्वकामनाया अभक्ष्यभक्षणस्य अकर्तव्यकरणस्य च निषेधः; संध्याकालवर्ज्यानि कर्माणि; नियमपञ्चकम् १६५१.

**आश्रमविचारः —**

ब्रह्मचर्यादेव पारिव्राज्यमित्यैकाश्रम्यमिति मतं तदुपपादनं च; समुच्चयपक्षे वानप्रस्थ्यपारिव्राज्ययोरधिकारविशेषः, पारिव्राज्याधिकारे सति कालक्षपणनिषेधः २००३.

### महाभारतम्

**वर्णसामान्यधर्माः —**

अहिंसा सत्यवचनं क्षमा च ब्राह्मणस्य परमो धर्मः, प्रजापालनं क्षत्रियधर्मः १६५१. सत्यानृते परमधर्माधर्मौ; कामनिन्दा शमविधिश्च; सुरापस्य ब्राह्मणस्य निन्दा; निर्दोषाणि पञ्चानृतानि; परुषवचननिषेधः, तितिक्षाया मधुरवचनस्य च विधिः १६५२. दर्पनिन्दा दैवाधीनसुखदुःखयोः समत्वप्रशंसा च १६५३. तपोदानादीनां सप्तानां स्वर्गद्वाराणां दम्भाहंकाराभ्यां नाशः, मानावमानसहिष्णुत्वविधिः; अब्राह्मणस्य प्रतिग्रहादिकार्पण्यानधिकारः १६५४. निकृष्टवर्णैरुत्कृष्टवर्णानां परिचर्या; आपद्यपि निन्दितनृशंसकर्माचरणनिषेधः; वर्णान्तरसहाय्यं क्षत्रियकर्तव्यं तत्र फलभेदश्च; ब्राह्मणस्यावमाननवधयोर्निषेधः वधनिषेधापवादश्च; सापराधस्यापि ब्राह्मणस्य रक्षणीयत्वम्; क्षत्रियस्य सत्यवचनं धर्मः १६५५. कीर्तिरक्षणं कर्तव्यम्; याजनं ब्राह्मणधर्मः; शस्त्रपातनाविषयाः स्त्र्यादयः; आत्मनिन्दा-

दिचतुष्टयमनार्यवृत्तम्; विरोधो राजधर्मः, प्रवासो ब्राह्मणधर्मः; स्त्र्यादिव्यसचतुष्टयनिन्दा; मन्युः क्षत्रियधर्मः क्षमाकालवर्जम्; क्रोधक्षमयोस्तत्तद्योग्यकालभेदेन श्रेयस्त्वव्यवस्था, क्षमाकालपरिगणनम् १६५६. विस्तरेण क्रोधनिन्दा क्षमाप्रशंसा च १६५८. क्षत्रियस्य याच्ञानिषेधः; युद्धं भूमिपालनं च क्षत्रियधर्मः १६६०. क्षत्रियस्य राज्यत्यागेन वनाश्रयणस्य निषेधः; सूर्यग्रहे कुरुक्षेत्रे स्नानश्राद्धयोः प्रशंसा; वर्णानां धर्मविभागः; क्षत्रियस्य याच्ञानिषेधः युद्धप्रशंसा च; क्षत्रियकार्याणां सफलताहेतुर्धृत्यादिपञ्चकम् १६६१. ब्राह्मणगुणाः; सत्यादिगुणाः सर्वेषां सिद्धिसाधनानि; कामादिदोषाणां त्याज्यत्वम्, धृतिक्षमादिगुणानां शिष्टाचारस्य च सेव्यत्वम्; सत्यापवादः; ग्रहणकृतदानप्रशंसा; हिंसानिषेधः; शरणागतशत्रुरक्षणं क्षत्रियधर्मः; तपोदानयोः कर्तव्यता; अद्रोहानुग्रहदानानि सतां धर्माः १६६२. क्षमा द्विजातिधर्मः; क्षत्रियस्य युद्धं श्रेष्ठो धर्मः युद्धात्पलायनमधर्मश्च; यजनादयो द्विजधर्माः, द्विजशुश्रूषा शूद्रधर्मः; सतां संगतेर्विधिः हिंसाया निषेधश्च; शरणागतारक्षणस्य निन्दा; चातुर्वर्ण्यधर्मविभागः १६६३. कामक्रोधलोभत्यागविधिः; शरणागतभक्तादित्रयस्य त्यागस्य निषेधः; पित्रादिरूपाग्निपञ्चकस्य पूज्यता; देवादिपूज्यपञ्चकम्; निद्रादि त्याज्यदोषषट्कम् अप्रवक्त्राचार्यादि त्याज्यपुरुषषट्कं अत्याज्यसत्यादिगुणषट्कं च; ब्राह्मणविषयकद्वेषादीन्यष्टौ विनाशनिमित्तानि वर्ज्यानि १६६४. मत्तत्वादयो धर्मज्ञानविरोधिनो दश दोषास्त्याज्याः; प्रश्नाभावेऽपि हितस्य वक्तव्यत्वम्; कपटयुक्तानां प्रयत्नासाध्यानां निष्फलानां च कर्मणामकर्तव्यत्वम्; बालाद्युक्तस्यापि सारस्य शिष्टवचनसदाचारयोश्च ग्राह्यत्वम्; परपीडाकरवचननिषेधः, मद्यपानादीन्यष्टौ वर्ज्यानि, रात्र्यादिभोग्यसुखफलककर्मणां दिवसादयः कालाः १६६५. धृतिशमसत्यतितिक्षाणां विधिः मित्रद्रोहनीचसेवापरपीडकवाचां च निषेधः १६६६. सत्सङ्गात्सत्त्वप्राप्तिः; उत्तममध्यमाधमपुरुषलक्षणानि उत्तमादीनां सेव्यत्वासेव्यत्वविवेकश्च; महाकुलताप्रयोजकानि तपोदमादिवृत्तानि तत्प्रशंसा च १६६७. मित्रसंग्रहः, शोकहर्षयोस्त्याज्यत्वम्; अवध्या ब्राह्मणादयः; परवर्तनानुसारिस्ववर्तनस्य विधिः; सर्वस्वत्यागेनाप्यात्मरक्षणकर्तव्यता; परहितात्महितोभयसाधनस्य कर्मणः कर्तव्यता; स्वभावतो विश्वासानर्हेषु स्त्र्यादिषु विश्वासस्य निषेधः १६६८. दैवतादिविषयकस्य क्रोधस्य नियन्तव्यत्वम्; दुष्टकृतघ्नादिरूपनराधमस्य वर्ज्यत्वम्; योगक्षेमविरोधिनां प्रसादनीयत्वम्; क्षमाविधिः, लोकसंग्रहः; अतिक्लेशधर्मातिक्रमादिनिमित्तककर्मनिषेधः; ब्राह्मणे व्रता-भावस्य निन्दा; चातुर्वर्ण्यधर्माणां संग्रहः प्रशंसा च १६६९. द्वादशकः क्रोधादिदोषगणः, त्रयोदशको विकत्थनत्वादिनृशंसदोषगणः, द्वादशको धर्मादिगुणगणः १६७०. दमत्यागाप्रमादाः सत्यमुखानि; अष्टादशदोषराहित्यप्रयुक्तं दमस्याष्टादशविधत्वम्; चतुर्विंशतिर्मददोषास्तत्र त्यागविपर्ययरूपाः षड्दोषाश्च १६७१. अप्रमादप्रमादयोः प्रत्येकमष्टविधत्वम् १६७२. दमादीनां सत्यमुखत्वं तपोरूपत्वं च; दमप्रशंसा; ज्ञातिकर्तव्यानि; धनप्रशंसा; धार्मिकप्रशंसा, धर्मानधिकारिणः, चातुर्वर्ण्यधर्मविवेकः १६७३. मित्रकर्तव्यानि; आचारप्रशंसा; क्षत्रियधर्माः १६७४. क्षत्रियधर्मस्य युद्धस्य तत्र मरणस्य च प्रशंसा गृहमरणस्य निन्दा च; रागद्वेषजयः; सर्वपापहेतू कामक्रोधौ, इन्द्रियनिग्रहपूर्वकस्तयोर्विनाशः १६७६. सर्वार्थानर्थकारणं मनः १६७७. अनर्थकारणकामक्रोधलोभत्यागेन शास्त्रोक्तकर्मणः कर्तव्यता; स्वाभाविकगुणप्रयुक्तश्चातुर्वर्ण्यकर्मविभागः, स्वस्वकर्मभिरेव सिद्धिलाभः १६७८. आततायिवधयुद्धप्रजारक्षणयजनानि क्षत्रियधर्माः; सहेतुकशमविधिः; क्षत्रियधर्मस्य युद्धस्य प्रशंसा; अहिंसाप्रशंसा; क्षतत्राणादिक्षत्रियधर्मप्रशंसा; ब्राह्मणस्य षट् कर्माणि; चातुर्वर्ण्यधर्मविभागः १६८०. अहिंसाया ज्यायस्त्वम्, विषयविशेषे सत्यस्याधर्म्यत्वमसत्यस्य धर्म्यत्वं च; क्षत्रिये युद्धस्य तत्र मरणस्य च प्रशंसा प्रतिग्रहस्य निन्दा च १६८१. क्षत्रधर्मिणां ब्राह्मणादीनां राजानुमत्या युद्धेऽधिकारः; शस्त्रप्रयोगाविषया गोब्राह्मणादयः; यथाशक्ति व्यवहर्तव्यम्; क्षत्रियस्य संन्यासेऽनधिकारः १६८२. दण्डकरणं क्षत्रियधर्मः; संतोषादिकतिपयसामान्यधर्मप्रशंसा; युद्धे

मरणं मारणं च क्षत्रियधर्मः, तपस्त्यागादयो ब्राह्मणधर्माः १६८३. बहूनां यज्ञादिक्षत्रियधर्माणामनुक्रमणम्, तत्र दण्डधारणं श्रेयः; ब्राह्मणधर्मपरिरक्षणं क्षत्रियधर्मः; स्वधर्मत्यागादीनां पञ्चदशानामकार्याणामनुक्रमणम् १६८४. आततायिवधादयो महापातकापवादाः; अविहितपशुहत्यानिषेधः विहितपशुहत्याप्रशंसा च; सोमविक्रयभृत्यविसर्गवनदाहनिषेधापवादः; शिष्टस्य शिष्टानुष्ठितस्य च धर्मस्यानुष्ठेयत्वम् १६८५. क्षत्रियेण युद्धे पितृगुर्वादीनां हननस्य धर्म्यत्वम्; अदण्डधारिणो राज्ञः अप्रवासिनो ब्राह्मणस्य च निन्दा; त्याज्यषट्कम्, अक्रोधादयो नव वर्णसामान्यधर्माः; चातुर्वर्ण्यधर्मविभागः, तत्र यज्ञधर्मस्य विस्तरेण विवरणम् १६८६. प्रारब्धकर्मविषये पारतन्त्र्यात्तत्प्रयुक्ता सदसत्कर्मणोः प्रवृत्तिः अपूर्वकर्मविषये स्वातन्त्र्याद्विधिनिषेधशास्त्रसाफल्यं च; ब्राह्मणस्य वर्णान्तरधर्माचरणस्य निषेधः स्वधर्माचरणस्य प्रशंसा च १६९१. युद्धमरणादयः क्षात्रधर्माः तेषां प्रशंसा च; स्वधर्मत्यागिनो ब्राह्मणस्य निन्दा १६९२. वर्णतद्धर्मरक्षणं क्षत्रियधर्मः; सर्वे जगद्व्यवहारा ब्राह्मणक्षत्रियायत्ताः; ब्राह्मणवैश्यशूद्राणां कालविशेषे शस्त्रधारणम्; चातुर्वर्ण्यधर्मविभागः; क्षत्रियाणां युद्धमरणं धर्मः तत्प्रशंसा गृहमरणनिन्दा च १६९३. भूतरक्षणं क्षत्रधर्मः; शीलपदार्थः तत्प्रशंसा च १६९४. धनार्जनप्रशंसा; यज्ञदानादयः सप्त पवित्रधर्माः; अप्रियवचनादीनि त्याज्यानि; पापमूलस्य कामक्रोधाज्ञानादिसकलदोषद्वारा सर्वानर्थमूलस्य च लोभस्य विस्तरेण निन्दा साङ्गाज्ञानवर्णनं च १६९५. सर्वब्राह्मणधर्ममूलस्य दमस्य साङ्गोपाङ्गस्य विवरणम् १६९७. सर्वकर्मफलमूलभूतस्य तपसः प्रशंसा; विस्तरेण सत्यधर्मस्य प्रशंसा सत्यप्रकाराश्च १६९९. त्रयोदशानां क्रोधादिशत्रूणामुत्पत्तिस्थितिनाशवर्णनम् १७०१. नृशंसस्य लक्षणानि त्याज्यत्वं च १७०२. पञ्चानामनृतानामनुज्ञा; वैश्यस्य शस्त्रधारणनिमित्तानि; मित्रद्रोहनिषेधः मित्रसंग्रहप्रशंसा च; तृष्णाया निन्दा १७०३. एकतादयः सप्त ब्राह्मणधर्माः; ब्राह्मणत्वादिवर्णत्वप्रयोजका गुणधर्माः १७०४. युद्धप्रजारक्षणदानानि क्षत्रियधर्माः; शौचादयः षट् सामान्यधर्माः; अहिंसादिसामान्यधर्मविधिः; विस्तरेण ब्राह्मणधर्मकथनम् १७०५. सर्वेषामौपनिषदो धर्मः साधारणः; मित्रानुग्रहामित्रनिग्रहादीनामनेकेषां धर्माणामनुक्रमणम्; महाफलस्याप्यधर्म्यकर्मणो निषेधः; प्रतिवर्णमेकैको मुख्यगुणः; सर्वभूतेष्वात्मवद्वृत्तिः १७०७. चातुर्वर्ण्यस्य प्रतिग्रहादयो विशेषधर्माः आनृशंस्यादयः सामान्यधर्माश्च १७०८. शूद्रस्य धर्माः; पापनिवृत्तिकामक्रोधनिग्रहसत्यवचनादीनामनेकधर्माणामनुक्रमणम् १७०९. ब्राह्मणस्यैव याजनेऽधिकारः; शिष्यभृत्यविप्रक्षत्रियवैश्यशूद्राणां मुख्या धर्माः; साध्वनुक्रोशस्य लम्भनीयत्वम्; मातृपित्रुपाध्यायपूजनम्; मिथ्यावचननिन्दा; ब्राह्मणरक्षणं क्षत्रियधर्मः; जातिहीनं प्रत्युपदेशस्य निषेधः १७१०. शूद्रस्य संन्यासानधिकारः; कायिकवाचिकमानसिकानि दश त्याज्यानि कर्माणि; शीलसत्ययोः प्रशंसा १७११. दानतपःसत्यादयः सामान्यधर्माः तत्प्रशंसा च; गोकुलजलपाने विघ्ननिषेधः; वरुणादिदेवतानमस्कारस्तुतिः; ब्राह्मणस्य शौद्रकर्मनिषेधः; तपोज्ञानविनयप्रशंसा; प्रतिग्रहस्य विप्रतेजोनाशकत्वम्, अप्रतिग्राहिविप्राणां राज्ञा रक्षणम् १७१२. अयुध्यमानस्य राज्ञः अप्रवासिनो ब्राह्मणस्य च निन्दा; ब्राह्मणस्य राज्ञा पूजनीयत्वम्; अवरवर्णैरुत्तमवर्णानां परिचरणं तत्प्रकारश्च; रौद्रकर्मश्रौतकर्मदानानि क्षत्रियकर्माणि; गोरक्षणप्रशंसा १७१३. ब्राह्मणस्वापहारनिषेधः; ब्राह्मणानां गवां च निन्दाया निषेधः रक्षणस्य प्रशंसा च; दमप्रशंसा; क्षत्रियवैश्यशूद्राणां स्वस्वधर्माचरणेन स्वर्गप्राप्तिः १७१४. सत्यवचनप्रशंसा; ब्रह्मचर्यप्रशंसा; मातापितृपूजनफलम्; कुटुम्बधारणविरुद्धोपवासनिषेधः, दानादिधर्मरूपाणि बहूनि तपांसि १७१५. शमविधिः; शरणागतहननस्य निन्दा; तडागकरणवृक्षारोपणयजनसत्यवचनानां विधिः; परदारगमन-ब्राह्मणक्षत्रियसर्पावमानन–मात्रादिगुरुप्रतिकूलाचरणतीक्ष्णवचन-परापवादादीनां बहूनामकार्याणां निषेधाः, वृद्धसेवा–गुर्वभिवादनतदाज्ञापालनादिकर्तव्यविषयका बहवो विधयः, क्षौरे वर्ज्यानि नक्षत्राणि दिङ्नियमश्च १७१६. अहिंसाया विधिः प्रशंसा च १७१८. अद्रोहदानसत्यवचनानामुत्तमव्रतत्वेन प्रशंसा; तपोदानविद्याप्रशंसा

१७१९. गोब्राह्मणाग्निकर्मकपादस्पर्शनिषेधः; परदारगमन-वन्ध्यागमन-ब्रह्मस्वहरणानां निषेधाः, गुरुवचनस्य श्रद्धेयत्वम्; विप्रस्य क्षत्रियवैश्यकर्मानुज्ञा शूद्रकर्मनिषेधश्च; अहिंसासत्यवचनादयो दश धर्माः; ब्राह्मणादिवर्णानां क्रमेण धर्माः १७२०. ब्राह्मणतद्धर्मप्रशंसा, ब्राह्मणधर्माः, शूद्रधर्माः १७२२. अहिंसासत्याक्रोधदानानि ब्राह्मणपूजनं च क्षत्रियधर्मः, क्षौरादौ मङ्गलवचनादिविधिः; ब्राह्मणस्य यजनादिकर्मषट्कम्; संग्रामनिधनं क्षत्रियधर्मः; सर्वभूतविषयका निर्वैरत्वसत्यद्रोहाभावाः श्रेष्ठो धर्मः; यतिपूजाविधिः; सत्यदमादयो द्वादश सनातनधर्माः तेषां लक्षणानि च; दानयज्ञादयो दश श्रेष्ठाः सामान्यधर्माः १७२३. रागद्वेषादीनां पञ्चदशानां स्वाभाविकानां तामसानां शूद्रदोषाणां द्विजशुश्रूषया नाशः श्रेयःप्राप्तिश्च; क्षमादिगुणाष्टकं ब्राह्मणलक्षणम्; यतिपूजनम्; वणिक्कर्तृकदेवब्राह्मणपूजनसाधुवञ्चनयोर्विधिनिषेधौ; सत्यवदनप्रशंसा, गोब्राह्मणार्थमसत्यमपि सत्यमेव; यूकादिहिंसावर्जनप्रशंसा; प्रत्यहं कृतयोर्धर्माधर्मयोश्चिन्तनीयत्वम् १७२४. ग्रहणनिमित्तकस्नानश्राद्धदानानां विधिः; शूद्रस्य द्विजशुश्रूषाविरुद्धधर्मेण वेदश्रवणादिना च नरकप्राप्तिः १७२५.

**आश्रमविचारः —**

ब्रह्मचर्यफलम् २००४. गार्हस्थ्यप्रशंसा २००५. आश्रमक्रमः गार्हस्थ्यप्रशंसा च; ब्राहणस्य चत्वार आश्रमाः, वानप्रस्थ्याधिकारः, आश्रमविकल्पः, गार्हस्थ्यप्रशंसा २००९. शूद्रवैश्यक्षत्रियाणां चातुराश्रम्याधिकारः सविशेषः २०१०. गार्हस्थ्यप्रशंसा; संन्यासफलम् २०११. आश्रमक्रमः गार्हस्थ्यप्रंशसा च २०१२. संन्यासप्रशंसा; आश्रमविकल्पसमुच्चयौ, गार्हस्थ्यप्रशंसा, आश्रममर्यादाः २०१३. आश्रमप्रशंसा; संन्यासप्रशंसा; गार्हस्थ्यप्रशंसा; आश्रमसमुच्चयविधिः २०१५. ब्रह्मचर्यप्रशंसा; संन्यासिवानप्रस्थयोरवान्तरभेदाः; आश्रमक्रमः; वानप्रस्थ्ये त्रैवर्णिकानामेवाधिकारः, गार्हस्थ्यस्य आश्रमाणां संन्यासस्य च प्रशंसा; आश्रमक्रमः २०१६. संन्यासप्रशंसा; आश्रमसमुच्चयः संन्यासविषये तदपवादश्च, आतुरसंन्यासः; संन्यासप्रशंसा २०१७.

### हरिवंशः

**वर्णसामान्यधर्माः —**

कुत्सितानां मित्रदेशादीनां षण्णां वर्जनीयत्वं तत्र निमित्तानि च; विश्वासानर्हास्तद्विषयकविश्वासनिषेधश्च; शत्रुऋणाग्नीनां शेषा न शेषणीयाः; गोपूजनम्; अप्रियमपि हितं वक्तव्यम्, अनृतवादिनि अधार्मिके अशुश्रूषौ अप्रिये च प्रियहिते न वाच्ये १७२५. ब्राह्मणस्य पूज्यत्वमहिंसनीयत्वं च १७२६.

**आश्रमविचारः —**

आश्रमक्रमः, संन्यासप्रशंसा, गार्हस्थ्येऽपि संन्यासफलम् २०१७. गार्हस्थ्यसंन्यासयोरधिकारः; गार्हस्थ्यप्रशंसा; आश्रमक्रमः संन्यासप्रशंसा च २०१८.

### वाल्मीकिरामायणम्

**वर्णसामान्यधर्माः —**

सत्यवचनस्य प्रशंसा; क्रोधजयप्रशंसा; शरणागतरक्षणम् १७२६.

**आश्रमविचारः —**

गार्हस्थ्यप्रशंसा २०१८.

### मनुः

**वर्णसामान्यधर्माः —**

संक्षेपेणाध्ययनादयश्चातुर्वर्ण्यधर्माः; ब्राह्मणस्य जपधर्मः श्रेयान्, सर्वभूतमैत्री ब्राह्मणगुणः; सर्वसिद्धिमूलस्येन्द्रियनिग्रहस्य विधिः लक्षणं च १७२८. सर्वार्थसाधिका वाङ्मनःशुद्धिः १७३१. ब्राह्मणावमानो ब्राह्मणस्य श्रेयस्करः अवमन्तुरनर्थकरः १७३३. शूद्रविषयका मत्यादिदानधर्माद्युपदेशनिषेधाः तत्र विषयविशेषविषयका व्याख्यातृमतभेदाश्च १७३४. वैरिप्रभृतीनां पञ्चानामुपसेवननिषेधः तत्र परदारोपसेवनस्य विशेषतो निन्दा च १७३७. क्षत्रिय-सर्पबहुश्रुतब्राह्मणावमाननिषेधः; सत्यप्रियवचनविधिः प्रियानृतवचननिषेधश्च १७३८. परोक्तशुभाशुभविषयेषु शुभार्थकशब्दः भद्रशब्दो वा प्रयोक्तव्यः; यमानुष्ठानस्य नित्यत्वम् १७३९. यमनियमपरिगणनम् १७४०. ग्रहणे भोजननिषेधः; शूद्राणां मासिकं वपनं वैश्यवच्छौचं द्विजोच्छिष्टभोजनं च १७४१. सर्वाश्रमि-

साधारणानि दश धर्मलक्षणानि तदध्ययनानुष्ठानफलं च १७४२. प्रजापालनं क्षत्रियस्य प्रकृष्टो धर्मः; धनदारत्यागेनाप्यात्मनो रक्षणीयत्वम् १७४३. धर्मोपरोधादिनिमित्तैर्द्विजातीनां शस्त्रधारणानुमतिः, आततायिवधे दोषाभावः १७४४. विप्रादिशुश्रूषा शूद्रधर्मः, शौचशुश्रूषादिधर्मैः शूद्रस्य जात्युत्कर्षः; गोब्राह्मणार्थे देहत्यागः प्रतिलोमानामभ्युदयकारणम् १७४६. चातुर्वर्ण्यसामान्यधर्माः अहिंसादयः १७४७. विप्रशुश्रूषा शूद्रस्य मुख्यो धर्मः; शूद्रे पातकसंस्कारधर्माधिकाराभावाः, ते च पातकादिविशेषविषयाः १७४८. ब्राह्मणेन स्वमन्त्रवीर्येण क्षत्रियेण बाहुवीर्येण वैश्येन धनेन शत्रुर्विजेतव्यः १७५०. ब्राह्मणो विधातृत्वादिगुणसंपन्नत्वान्नावमन्तव्यः; द्विजानां सुरापाननिषेधः सुरालक्षणं च, ब्राह्मणस्य मद्यमांसनिषेधः १७५२. मतभेदेन यज्ञादिकर्माणि त्यक्त्वा तान्यनुतिष्ठता वा आत्मज्ञानशमवेदाभ्यासेषु यत्नः कर्तव्यः, आत्मज्ञानादिप्रशंसा १७५६. स्नानहोमभोजनेषु मौनविधिः, आहारमैथुननिद्रास्वाध्यायानां संध्यायां निषेधः तदतिक्रमे फलानि च १७५७.

**अनुपनीतधर्माः —**

उपनयनपर्यन्तं श्रौतस्मार्तकर्मानधिकारः १९२४. शूद्रसमत्वात् वेदोच्चारणाभावः सापवादः अनुपनीतस्य १९२५.

**आश्रमविचारः —**

अब्राह्मणगुरौ अननूचानब्राह्मणगुरौ च नैष्ठिकत्वनिषेधः, नैष्ठिकत्वफलम् २०१९. ब्रह्मचर्यकालावधिः २०२०. गार्हस्थ्यप्रशंसा २०२६. आयुर्भागभेदेनाऽऽद्याश्रमयोर्व्यवस्था २०२८. संन्यासेन चित्तशुद्धिः २०२९. गृहस्थस्य वानप्रस्थ्यप्रवेशयोग्यता, वानप्रस्थ्ये भार्यायाः साहित्यराहित्यविकल्पः २०३०. वानप्रस्थस्य चतुर्थाश्रमप्रवेशयोग्यता २०३१. आश्रमसमुच्चयपक्षे अपाकृतर्णत्रयस्यैव संन्यासेऽधिकारः २०३३. सर्वभूताभयदानर्णत्रयापाकरणपूर्वकस्य संन्यासस्य फलम् २०३५. आश्रमसमुच्चयः तत्र गार्हस्थ्यप्रशंसा च २०३६. वेदसंन्यासिकस्य परमगतिप्राप्तिः २०४०. चातुराश्रम्यफलम् २०४१.

### वृद्धमनुः

**वर्णसामान्यधर्माः —**

जीवत्पितृकजीवदग्रजयोः पादुकादिधारणनिषेधः १७५७. आहारमैथुनादीनां संध्यायां वर्जनम् अवर्जने फलानि च; ग्रहणदोषरहिताः पदार्थाः १७५८.

**अनुपनीतधर्माः —**

अनुपनीतस्य पितृश्राद्धाधिकारः १९२५.

### याज्ञवल्क्यः

**वर्णसामान्यधर्माः —**

यजनाध्ययनादयो द्विजधर्माः द्विजशुश्रूषाश्राद्धपञ्चयज्ञादयः शूद्रधर्माश्च १७५८. धर्मसाधनभूता अहिंसादयः सामान्यधर्माः १७५९. वयोबुद्ध्याद्यनुगुणस्य जैह्म्यशाठ्यरहितस्य वर्तनस्य विधिः; परशय्यादीनामदत्तानां वर्जनम् १७६०.

**आश्रमविचारः —**

ब्रह्मचर्यावधिः; नैष्ठिकब्रह्मचर्यं तत्फलं च; संन्यासेन मानसपापेभ्यः शुद्धिः; वानप्रस्थ्ये पत्नीसाहित्यराहित्यविकल्पः २०४२. गृहस्थवानप्रस्थयोः संन्यासेऽधिकारः २०४५.

### बृहद्योगियाज्ञवल्क्यः

**वर्णसामान्यधर्माः —**

संध्यावन्दनगायत्रीजपादीनि कानिचित् ब्राह्मणस्य नित्यकर्माणि; उदकताडनादेः परपीडायाः अभिषेककालीनकर्मान्तराचरणस्य च निषेधः; अहिंसादयो धर्माः, यमनियमदमानां प्रशंसा; ग्रहणादिनिमित्तकं स्नानं रात्रावपि कर्तव्यम् १७६१.

**आश्रमविचारः —**

संन्यासेन मनःशुद्धिः २०४७. वर्णभेदेनाऽऽश्रमव्यवस्था २०४८.

### नारदः

**वर्णसामान्यधर्माः —**

सत्यप्रशंसा अनृतनिन्दा च १७६१. ब्राह्मणस्य यजनादिषु त्रयो धर्माः तिस्रो वृत्तयश्च; ब्राह्मणादिमङ्गलाष्टकं तत्पूजनादिविधिश्च १७६३. इष्टं द्विजधर्मः पूर्तं सर्ववर्णधर्मः इष्टापूर्तशब्दार्थौ च; क्षौरमुहूर्तापवादः; क्षौरे वर्जनीयः कालः १७६४.

**आश्रमविचारः —**

गार्हस्थ्यप्रशंसा, विरक्तस्य ब्रह्मचर्यात्संन्यासः २०४८.

**बृहस्पतिः**

**वर्णसामान्यधर्माः —**

अहिंसाप्रशंसा भूमिहरणगोवीथ्यादिपीडननिन्दा च; कन्यानृतादेरनृतषट्कस्योत्तरोत्तरं दूषकत्वातिशयः; ब्रह्मस्वहरणब्रह्महत्यादीनां ब्राह्मणकोपनस्य च निषेधः; नित्यस्नानसंध्याजपादीनां फलानि; शूद्रस्य शौचादयो धर्माः नमस्कारमन्त्रश्च १७६४. दयाक्षमादयोऽष्टौ सामान्यधर्माः तेषां लक्षणानि च १७६५. ब्रह्मस्वहरणात् न्यासहरणे दोषातिशयः तत्रापि परस्त्रीहरणेऽधिकः; विद्याकर्माद्यनुगुणवर्तनविधिः; महतामपि लौकिकाचारलङ्घनस्य निषेधः; गोब्राह्मणोपकारस्य ब्रह्मचर्यस्य च प्रशंसा; आततायिवधापवादः; सौत्रामण्यां मद्यपाने न दोषः; मुण्डननिषेधे कर्तनविधिः; क्षौरे कालविधिः तदपवादश्च १७६६.

**आश्रमविचारः —**

ब्रह्मचर्याविधिः; गार्हस्थ्यप्रशंसा; विरक्तस्य ब्रह्मचर्यात्संन्यासः २०४८.

**भृगुः**

**वर्णसामान्यधर्माः —**

ग्रस्तास्तमये स्नानभोजनकालः १७६७.

**आश्रमविचारः —**

यतिप्रशंसा २०४९.

**कात्यायनः**

**वर्णसामान्यधर्माः —**

ग्रहणादिस्नाने नदीरजोदोषाभावः, सर्वाणि जलानि ग्रहणनिमित्तकस्नानार्हाणि १७६७.

**अनुपनीतधर्माः —**

अनुपनीतस्य समन्त्रकपितृदाहाधिकारः १९२६.

**आश्रमविचारः —**

वाग्दत्ताया मृतौ अन्यकन्याया अलाभे उत्तराश्रमस्वीकारः; आश्रमविकल्पः, वानप्रस्थे भार्यासाहित्यराहित्यविकल्पः; आश्रमाश्चत्वारः तेषामवान्तरभेदाश्च सलक्षणाः २०४९.

**व्यासः**

**वर्णसामान्यधर्माः —**

शूद्रस्य स्मार्तधर्मेऽधिकारस्तत्र वेदमन्त्रादिवर्जनं च; तृष्णात्यागविधिः १७६७. बहुभिः सह ब्राह्मणैश्च सह विरोधः, आत्मप्रतिकूलस्य परेष्वाचरणम्, आत्मप्रशंसेत्यादीनां बहूनां वर्जनीयानामनुक्रमणम्; विधिनिषेधपालनविधिः परकर्मपरस्त्रीसेवननिषेधश्च; शूद्रे पातित्याभावः संस्कारानर्हत्वं धर्मविशेषेषु अधिकारानधिकारौ च; शूद्रस्य पूर्तेऽधिकारः वैदिकेऽनधिकारश्च; यमनियमाः; अनिर्णिक्तपादेनाप्रवेश्यानि; ग्रहणपुण्यकालः १७६८. ग्रहणे तोयद्विजदेयवस्तुविशेषानादरः; ग्रहणे गङ्गास्नानप्राशस्त्यं चन्द्रसूर्यग्रहणयोः फलतारतम्यं च; चूडामणिग्रहणस्य लक्षणं प्राशस्त्यं च; ग्रहणदानस्य प्रशंसा नैमित्तिकत्वं रात्रावपि कर्तव्यता च; ग्रहणे स्नानस्य नैमित्तिकत्वम् आमलकरहितत्वं च; ग्रहणे वेधे ग्रस्तास्तमने च भोजननिषेधः १७६९. क्षौरे वर्ज्या वारादयः; काञ्चनताम्बूलाभयदानापवादाः; वन्ध्यदिवसलक्षणम्; गवाग्निब्राह्मणेभ्यो ग्रासाहुतिदक्षिणादिदानस्य प्रत्याख्याने प्रत्यवायः; देवद्रव्यविनाशनब्राह्मणस्वहरणब्राह्मणातिक्रमैः कुलनाशः १७७०.

**आश्रमविचारः —**

नैष्ठिकत्वम्, गार्हस्थ्यप्रशंसा, आश्रमसमुच्चयविकल्पौ, संन्यासाश्रमयोग्यता; वर्णभेदेनाऽऽश्रमव्यवस्था, शक्तिवैराग्यतारतम्यानुसारेण संन्यासावान्तरभेदव्यवस्था, संन्यासप्रशंसा २०५०.

**लघुव्यासः**

**वर्णसामान्यधर्माः —**

अधीतं श्रुतं च सर्वमनुष्ठेयम् १७७०.

**आश्रमविचारः —**

आश्रमविकल्पः २०५१.

**देवलः**

**वर्णसामान्यधर्माः —**

क्षत्रियवैश्यशूद्रधर्माणां बहूनामनुक्रमणम् १७७०. वर्जनीयानां हिंसानृतस्तेयानामवान्तरभेदाः, अनृतहेतवः, अनृतस्तेयापवादाः १७७१. क्षुतनिमित्तकवचनप्रतिवचने; पररहस्यश्रवणपररन्ध्रप्रकाशनयोर्निषेधः; तृष्णा-

निषेधः, अशुद्धस्य शयनस्नानदिनिषेधः, संध्यामध्याह्नयोः शयनादिनिषेधः; अगम्यागमननिषेधः अगम्यापरिगणनं च १७७२. मातापित्रादीनामष्टानां पतितानामपि त्यागनिषेधः; कुलज्ञानवयःशीलवृद्धानां पूजनीयत्वम्; सर्वतः समादेयाः पदार्थाः; संध्यानुपासनास्नातभोजनाशुचित्वानि शूद्रसमीकरणानि; सामान्यधर्माणां श्रद्धाक्षमादयाविज्ञानविनयानां लक्षणानि; देवोत्सवे प्रवर्तमाने मनुष्योत्सवनिषेधः; ब्राह्मणं प्रति सुरारिष्टादिपाननिषेधः १७७३. ग्रहणनिमित्तकस्नानादेः रात्रावपि कर्तव्यता १७७४.

**आश्रमविचारः —**

ब्रह्मचर्याविधिः २०५१.

**उशना**

**वर्णसामान्यधर्माः —**

वैदिककर्माकरणे पातित्यम्, ब्राह्मणं प्रत्यापदुत्पादनस्यनिषेधः; मद्यदानादानपानानां निषेधः; ग्रस्तास्तचन्द्रग्रहणे मुक्तौ धर्मकृत्यमुदये भोजनं च १७७४.

**आश्रमविचारः —**

नैष्ठिकत्वम्, अन्यतमाश्रमविषयमैकाश्रम्यम् २०५१. आश्रमावान्तरभेदाः २०५२.

**प्रजापतिः**

**वर्णसामान्यधर्माः —**

चन्द्रसूर्यग्रहणयोर्दानफलतारतम्यम्; प्राणिमात्रे दया कर्तव्या १७७४.

**आश्रमविचारः —**

अनाश्रमित्वनिषेधः; संन्यासावान्तरभेदाः सलक्षणाः २०५२.

**यमः**

**वर्णसामान्यधर्माः —**

ब्राह्मणस्य इष्टापूर्तविधिः; पतितप्रत्यादेशनिषेधः १७७४. सर्वेषां विशेषतो ब्राह्मणानां च प्रत्यक्षं परोक्षं वा निन्दापरीवादयोर्निषेधः; ब्राह्मणेन शौचाध्ययनादौ प्रयतितव्यम्; सत्यप्रियवचनस्य विधिः; पञ्चानृतवदनापवादाः; स्तेयापवादाः; अशुचिकृतमिष्टादिसप्तकं रक्षोहार्यम्; क्षमाप्रशंसा १७७५. देवद्रव्यविनाशनब्राह्मणस्वहरणब्राह्मणातिक्रमैः कुलनाशः; अनिन्द्या गोब्राह्मणादयः षट्; दुर्लभं ब्राह्मण्यं तद्विरोधियोनिसंकरादिपरिहारेण रक्षणीयम्; पररहस्यश्रवणपररन्ध्रप्रकाशनयोर्निषेधः; पश्वादिविषयभेदेनानृतवचनदोषतारतम्यम्, अनृतवचननिषेधोऽनृतावचनप्रशंसा च १७७६. श्रुतिस्मृत्योः शूद्रानधिकारः; द्विजान् प्रति सुरायाः ब्राह्मणं प्रति मद्यस्य च पानदानादानानां निषेधः १७७७. ग्रहणे उष्णवारिस्नाननिषेधः; ग्रहणे स्नानदानादीनां फलाधिक्यम्; अन्तरा व्याहरणगमनयोर्निषेधः १७७८.

**अनुपनीतधर्मः —**

शिशोर्वैश्वदेवादिशेषभक्षणनिषेधः १९२६.

**आश्रमविचारः —**

ब्रह्मचर्याविधिः नैष्ठिकत्वं च २०५२. आश्रमकालावधयः, वानप्रस्थ्ये भार्यासाहित्यराहित्यविकल्पः; आश्रमविकल्पः; प्रायाश्चित्तरूपत्वं संन्यासस्य; आश्रमप्रशंसा २०५३.

**मरीचिः**

**वर्णसामान्यधर्माः —**

शूद्रकर्मसु मन्त्रा विप्रपाठ्याः; ग्रहणे सामलकस्नाननिषेधः १७७८. क्षौरवर्जननिमित्तानि १७७९.

**दक्षः**

**वर्णसामान्यधर्माः —**

ब्राह्मणधर्मः; पारलौकिकस्य दानस्य च कर्तव्यता; शूद्रकर्मणो वाजसनेयिकल्पानुसारित्वम्; ग्रहणदिनोपवासः पापक्षयहेतुः; जीवत्पितृकस्य निषिद्धानि कर्माणि १७७९.

**अनुपनीतधर्माः —**

अष्टमवर्षान्तपर्यन्तं कामचारकामवादकामभक्षाः १९२६. अनुपनीतस्य गन्धलेपक्षयमात्रकरी शौचक्रिया १९२७.

**आश्रमविचारः —**

ब्रह्मचर्याविधिः, द्विविधं ब्रह्मचर्यम् २०५३. आश्रमप्रातिलोम्यनिषेधः; अनाश्रमित्वनिषेधः, आश्रमलक्षणानि २०५४. गार्हस्थ्यप्रशंसा; संन्यासाधिकारी, संन्यासप्रशंसा, गार्हस्थ्यप्रशंसा; संन्यासानधिकारिणः, संन्यासप्रशंसा २०५५.

**भरद्वाजः**

**वर्णसामान्यधर्माः —**

स्नाने वर्ज्या देशकालास्तदपवादश्च; क्षौरे निषिद्ध-

वारादयः निषेधातिक्रमे फलं च १७७९.

**संवर्तः**

**वर्णसामान्यधर्माः —**

तपोयज्ञायुर्दानानां विनाशकानि विस्मयादीनि; द्विजानां सुरापाननिषेधः; ग्रहणादौ दाने फलाधिक्यम्; सत्यस्य प्रशंसा अपवादश्च १७८०.

**आश्रमविचारः —**

ब्रह्मचर्यप्रशंसा, समुच्चयपक्षे उत्तरोत्तराश्रमाधिकारिणः, संन्यासप्रशंसा, संन्यासभेदास्तेषां प्राशस्त्यतारतम्यं च, अनाश्रमित्वस्य निषेधः प्रायश्चित्तं च २०५६.

**शातातपः**

**वर्णसामान्यधर्माः —**

शौचादयः पञ्च नित्यधर्माः; तपोदमाद्येकादशगणो ब्राह्मणलक्षणम्; शूद्रस्य द्विजसेवाविरोधितीर्थयात्रादिनिषेधः; ग्रहणे स्नानादेरावश्यकत्वम्, उपवासः, मोक्षोत्तरभोजनस्य महानिशायां निषेधश्च १७८०. देवद्रव्यविनाशनब्राह्मणस्वहरणब्राह्मणातिक्रमैः कुलनाशः १७८१.

**अनुपनीतधर्माः —**

बालशौचं पालककर्तव्यम् १९२७.

**वृद्धशातातपः**

**अनुपनीतधर्माः —**

शिशुबालकुमारलक्षणानि तेषामस्पृश्यस्पर्शे शुद्धिकारणानि च १९२७.

**आश्रमविचारः —**

संन्यासप्रशंसा २०५६.

**लघुशातातपः**

**वर्णसामान्यधर्माः —**

शूद्रेण सहान्नासनादिव्यवहारस्य निषेधः; देवब्राह्मणधनहरणनिषेधः, पादुकावर्जनस्थलनिमित्तानि; स्नानविण्मूत्रोत्सर्जनयोर्निषिधनिमित्तानि, शुष्कवैरविवादनिषेधः; ग्रहणादौ दानविधिर्दानकालनियमश्च; ग्रहणे भोजनस्य निषेधः ग्रस्तास्तमने भोजनकालश्च १७८१.

**पराशरः**

**वर्णसामान्यधर्माः —**

आचारो धर्ममूलम्; षट् कर्माणि देवतातिथिपूजनं हुतशेषभोजनं च ब्राह्मणस्य नित्या धर्माः १७८२. व्रताध्ययनरहिता भैक्षचरा ब्राह्मणा राज्ञा दण्ड्याः; प्रजापरिपालनं क्षत्रियधर्मः १७८७. द्विजशुश्रूषा शूद्रधर्मः १७८९. शूद्रस्य मद्यविक्रयादीनि पातित्यनिमित्तानि १७९०. ग्रहणे स्नानदानादीनां रात्रावपि कर्तव्यता, चन्द्रग्रहणे दानस्य प्रशंसा, ग्रहणे सर्वं जलं गङ्गासमम् १७९१. शूद्रेण सहान्नग्रहणसहासनादिव्यवहारा द्विजपातित्यहेतवः, पशुवन्मुखेन जलपानं ब्राह्मणस्य निषिद्धम् १७९२. चन्द्रग्रहणे रात्रावपि स्नानदानविधिः; द्विजत्वोपाधयः; शुश्रूषादयः शूद्रधर्माः; ग्रहणे सर्वतोयद्विजदेयवस्तूनि क्रमेण गङ्गाब्रह्मभूमिसमानि १७९३. शूद्रान्नभक्षणेन ब्राह्मणस्य दुर्गतिः १७९४.

**अनुपनीतधर्माः —**

शिशुबालकुमारलक्षणानि १७२७.

**आश्रमविचारः —**

संन्यासप्रशंसा, विरक्तविधुरादीनां संन्यासः, गार्हस्थ्यप्रशंसा २०५६.

**बृहत्पराशरः**

**वर्णसामान्यधर्माः —**

स्नानसंध्याजपदेवतापूजनवैश्वदेवातिथ्यानि ब्राह्मणस्य नित्यकर्तव्यानि; स्नानजपदानभोगानां वैयर्थ्यनिमित्तानि; ग्रहणादिषु उष्णवारिस्नानस्य निषेधः; गोब्राह्मणादीनां पूज्यत्वम्; ब्राह्मणक्षत्रियवैश्यानां प्रत्येकं षट् कर्माणि; शूद्रस्य द्विजशुश्रूषादयो धर्माः कपिलाक्षीरपानादयः अधर्माश्च; गवां गोपूजादानादीनां च प्रशंसा गोपालनेतिकर्तव्यता च १७९४. वृषभस्य वृषभपूजादानादेश्च प्रशंसा १७९५. ग्रहणनिमित्तकस्य दानसामान्यस्य कर्तव्यता; मातापित्रादिपूजनं दमः दानं दया चेति नित्यकर्तव्यानि; पित्राद्यैः सह संवादस्य पतिताद्यैः सह संवेशनस्य शूद्रादिभ्यो मत्यादिदानस्य च निषेधः; नृपविप्रोरगाद्यवज्ञानस्य परमर्मस्पर्शस्य च निषेधः, धर्मार्थार्जनविधिः, परताडननिषेधः तदपवादश्च; ग्रहणे श्राद्धकर्तव्यता; युद्धे मरणस्य क्षतस्य च युद्धादनिवृत्तेश्च प्रशंसा; सत्यवचनविधिः; ग्रहणे कृष्णाजिनस्य रथस्य च दानम्; ग्रहणकृत्यस्याक्षय्यत्वम् १७९६.

**आश्रमविचारः —**

ब्रह्मचर्यावधिः, वानप्रस्थ्ये भार्यासाहित्यराहित्यविकल्पः, चतुर्थाश्रमयोग्यता; संन्यासप्रशंसा; आश्रमाणामवान्तरभेदाः सलक्षणाः २०५७.

**अत्रिः**

**वर्णसामान्यधर्माः —**

यजनयाजनादयश्चातुर्वर्ण्यधर्माः; शौचादीनि विप्रलक्षणानि; इष्टापूर्तशब्दार्थः, इष्टापूर्तयोर्द्विजातिसामान्यधर्मत्वम्, शूद्रस्य पूर्तेऽधिकारः; यमनियमयोर्यमानां नित्यत्वम्, यमनियमपरिगणनम्; स्त्रीशूद्रपातित्यनिमित्तानि; अष्टौ मौननिमित्तानि; प्रौढपादत्वनिषेधविषयभूतानि कर्माणि १७९७. ग्रहणादिनिमित्तकदानस्य रात्रावपि कर्तव्यता; वर्णानामापन्निवारणसाधनानि; वेदाध्ययनं कामकृतपापस्यानिवर्तकम्; यतेर्नमस्कार्यता १७९८.

**आश्रमविचारः —**

संन्यासस्य भेदाः प्रशंसा च २०५८.

**वृद्धात्रिः**

**वर्णसामान्यधर्माः —**

ग्रहणे भोजनस्य निषेधः ग्रस्तास्तमने भोजनकालः; ग्रहणे सर्वं जलं गङ्गासमं तीर्थस्नानस्य प्रशंसा च १७९८.

**सुमन्तुः**

**वर्णसामान्यधर्माः —**

विधिनिषेधातिक्रमेन्द्रियवश्यतावर्जनम्; आततायिवधे दोषाभावः सापवादः; संक्रान्तिविशेषेषु क्षौरनिषेधः १७९८.

**अनुपनीतधर्माः —**

कृतचूडस्य त्रिवत्सरस्य वा समन्त्रकपितृमेधाधिकारः १९२८.

**आश्रमविचारः —**

संन्यासनिमित्तानि २०५९.

**जाबालिः**

**वर्णसामान्यधर्माः —**

इन्द्रियचापल्यादयो द्वादश त्याज्या आचाराः; वयोवस्थाविशेषप्रयुक्तानि बुद्धिधनादिप्रयुक्तानि च कर्तव्यानि १७९८. यतिसंमाननाभावे प्रत्यवायः; ग्रहणपुण्यकालः १७९९.

**आश्रमविचारः —**

निश्चितस्य संन्यासस्याकरणं संन्यासारूढस्य पातनं पतितस्य संन्यासारोपणं संन्यासे विघ्नोत्पादनं च प्रत्यवायनिमित्तानि; संन्यासानधिकारिणः, संन्यासप्रशंसाः २०५९.

**पैठीनसिः**

**वर्णसामान्यधर्माः —**

अध्ययनादयः षट् क्षत्रियधर्माः; स्वस्वकर्माभिरतानां वर्णानां गम्या लोकाः; अनिन्द्या गोब्राह्मणादयः षट् १७९९.

**आश्रमविचारः —**

आश्रमगणना, गार्हस्थ्यप्रशंसा २०५९.

**कण्वः**

**आश्रमविचारः —**

स्नातकत्वमर्यादा २०५९.

**अङ्गिराः**

**वर्णसामान्यधर्माः —**

शूद्रेण सहान्नग्रहणादयो व्यवहारास्त्याज्याः; वेदाध्ययनेन कामकृतपापानामनिवर्तनम्; पादुकाविसर्जनस्य देशाः कर्माणि च; कर्मसु देशकालानुकूल्यमवेक्षणीयम्; वैदिककर्मसु वैदिकमन्त्रनियमः पौराणिकमन्त्रविनियोगे कर्मनाशः; शुचित्वं वैदिककर्माधिकारनिमित्तम्; कलावपि अन्यायद्रोहक्रौर्यादीनामतिशयितानां निषेधः; ग्रहणनिमित्तकश्राद्धविधिः; चाक्रिकायनग्रहणाभ्यां पूर्वो भोजने वर्ज्यः कालः सापवादः १८००. ग्रस्तास्तमनोत्तरभोजनकालनिर्णयः; ग्रहणश्राद्धपदार्थः; सूतकमृतकयोरपि ग्रहणश्राद्धकर्तव्यता; ग्रहणे कर्तव्याकर्तव्यानि; यत्यादिदुराचारदर्शनजन्यदोषपरिहारकम् १८०१.

**आश्रमविचारः —**

आश्रमविकल्पः, वैराग्यातुरत्वादीनि संन्यासनिमित्तानि २०५९. वैराग्यमेव संन्यासनिमित्तं तेन विना संन्यासे पातित्यं च, मृतभार्यस्यापरभार्याया अलाभे संन्यासः; संन्यासप्रशंसा २०६०.

**व्याघ्रः**

**वर्णसामान्यधर्माः —**

ग्रहणे उष्णवारिस्नाननिषेधस्यापवादः; ग्रहणे सूतकिनोऽपि श्राद्धादावधिकारः १८०१.

**अनुपनीतधर्माः —**

कृतचूडस्यामन्त्रकपितृमेधाधिकारः १९२८.

**व्याघ्रपादः**

**आश्रमविचारः —**

ब्रह्मचर्याविधिः २०६०.

**ऋष्यशृङ्गः**

**वर्णसामान्यधर्माः —**

ग्रहणे श्राद्धादीनां विधिः रात्रावपि कार्यता च १८०१.

**गर्गः**

**वर्णसामान्यधर्माः —**

क्षौरे तिथ्यादिविषयका विधिनिषेधाः निषिद्धकालकरणे दोषशान्तिश्च १८०२.

**गार्ग्यः**

**वर्णसामान्यधर्माः —**

ग्रस्तास्तमये भोजने निषिद्धः कालः; क्षौरे निषिद्धं वारादि १८०२.

**वृद्धगार्ग्यः**

**वर्णसामान्यधर्माः —**

जीवत्पितृकस्य मुण्डननिषेधः क्षौरे वर्ज्याः सौरराशयश्च १८०२.

**आश्वलायनः**

**वर्णसामान्यधर्माः —**

चातुर्वर्ण्यस्य संध्यामहायज्ञयजनयाजनादीनि नित्यानि कर्माणि १८०२. स्नानादीनि मौननिमित्तानि; आत्मरक्षणप्रशंसा; वैश्यधर्मानुक्रमणम्; द्विजशुश्रूषापाकयज्ञदानादीनां बहूनां शूद्रधर्माणामनुक्रमणम्; विप्रादिम्लेच्छान्तानां सर्वमानवानां साधारणा धर्माः १८०३. वपननिमित्तानि तदपवादश्च; ग्रहणे रात्र्यपराह्णयोः समुद्रस्नानानुमतिः; स्वाध्यायाग्निहोत्रादयः सदा सेव्या धर्माः; चक्राद्यङ्कनं गीतनृत्यादिकं च द्विजभिन्नानां धर्मः १८०४.

**अनुपनीतधर्माः —**

अनुपनीतस्य पितृमेधे वेदमन्त्रोच्चारणे च नाधिकारः १९२८.

**आश्रमविचारः —**

चत्वार आश्रमा धर्महेतवः, आयुर्विभागैराश्रमव्यवस्था, अनाश्रमित्वनिषेधः, आश्रमसमुच्चयविकल्पौ, साधकत्वासाधकत्वाभ्यामाश्रमद्वैविध्यम्, वानप्रस्थ्ये ब्राह्मणक्षत्रिययोरधिकारः, संन्यासे ब्राह्मणस्यैवाधिकारः २०६०. परमहंसप्रशंसा, हंसत्वपरमहंसत्वाभ्या संन्यासिद्वैविध्यं तयोरवान्तरभेदाश्च सलक्षणाः, संन्यासप्रशंसा २०६१.

**लघ्वाश्वलायनः**

**वर्णसामान्यधर्माः —**

क्षौरनिमित्तानि; ब्राह्मणक्षत्रियशूद्रधर्मा यजनपालनद्विजसेवादयः, परधर्माचरणनिषेधः; कर्मत्यागेन पराधीनत्वेन च द्विजस्य शूद्रसाम्यम् १८०४.

**आश्रमविचारः —**

गार्हस्थ्यप्रशंसा २०६१.

**बुधः**

**वर्णसामान्यधर्माः —**

स्वधर्मानुष्ठानविधिः, विधिनिषेधोल्लङ्घने नरकप्राप्तिः १८०४.

**आश्रमविचारः —**

वानप्रस्थ्यसंन्यासग्रहणयोग्यता २०६२.

**शौनकः**

**आश्रमविचारः —**

ब्रह्मचर्याविधिः २०६२.

**जातूकर्ण्यः**

**वर्णसामान्यधर्माः —**

इष्टापूर्ते द्विजसामान्यधर्मौ, पूर्तं शूद्रधर्मः १८०४.

**अनुपनीतधर्माः —**

अनुपनीतमद्यपानप्रायश्चित्तं पित्रादिभिः कार्यम् १९२८.

**क्रतुः**

**वर्णसामान्यधर्माः —**

स्वधर्मत्यागपरधर्माचरणनिन्दा १८०५.

**पुलस्त्यः**

**वर्णसामान्यधर्माः –**

चातुर्वर्ण्यधर्मा यजनादयो भूतरक्षणादयश्च; अहिंसादयो वर्णिनां लिङ्गिनां च सामान्यधर्माः; एकादश समानार्घाणि मद्यानि, सुरा तेभ्योऽधमा १८०५.

**आश्रमविचारः –**

आश्रमचतुष्टयम् २०६२.

**छागलेयः**

**आश्रमविचारः –**

वानप्रस्थ्ये पत्नीराहित्यं ब्राह्मणस्य २०६२.

**दत्तात्रेयः**

**आश्रमविचारः –**

संन्यासे ब्राह्मणस्यैवाधिकारः २०६२.

**पितामहः**

**आश्रमविचारः –**

संन्यासचातुर्विध्यम्, परमहंसप्रशंसा २०६२.

**कपिलः**

**आश्रमविचारः –**

संन्यासप्रशंसा २०६२.

**शाकलः**

**आश्रमविचारः –**

ब्रह्मचर्यावधिः, गार्हस्थ्यप्रशंसा २०६२.

**मार्कण्डेयः**

**वर्णसामान्यधर्माः –**

ग्रहणे गङ्गादितीर्थस्नानस्य प्रशंसा; ग्रहणात् पूर्वः उत्तरश्च भोजने वर्ज्यः कालः १८०५. क्षौरे वर्ज्यास्तिथयः १८०६.

**गालवः**

**वर्णसामान्यधर्माः –**

आततायिभ्रूणवधे न दोषः १८०६.

**गोभिलः**

**वर्णसामान्यधर्माः –**

ग्रहणे स्नानादौ रात्रिः शुभा १८०६.

**चतुर्विंशतिमतम्**

**वर्णसामान्यधर्माः –**

शूद्रसंपर्कस्य शूद्रात् ज्ञानग्रहणस्य च निषेधः, ज्ञानावलिप्तशूद्रस्य नरकप्राप्तिर्ब्राह्मणावमानेन; अप्रणतशूद्रे स्वस्तिकरणनिषेधः; शूद्राज्ञाधारकविप्राणां दुर्गतिः; वर्जनीया दुष्टव्यक्तयः १८०६. सत्यप्रशंसा, तत्स्वरूपम्; क्रियाप्रशंसा, क्रियाहीननिन्दा; ब्राह्मणस्य कर्माणि, तद्रहितस्य निन्दा; मनुष्याणां पावनानि कर्माणि; सत्यादिरूपः सनातनधर्मः, तत्पराणां सुगतिः, तद्विहीनानां दुर्गतिः; धर्मकर्मानुसारिब्राह्मणानां प्रशंसा, विपरीतानां निन्दा; उद्यानादावकालावस्थाननिषेधः; ग्रहणमुक्तिस्नानस्य कर्तव्यता १८०७.

**आश्रमविचारः –**

ब्रह्मचर्याद्याश्रमत्रयमर्यादाः २०६३.

**षट्त्रिंशन्मतम्**

**वर्णसामान्यधर्माः –**

ग्रहणे अशुचित्वं शुद्धिस्नानेन कर्माधिकारश्च, ग्रहणपूर्वश्रुतान्नत्यागः १८०७. ग्रहणस्नाने तिलामलकनिषेधः; रात्रौ सूर्यग्रहणं दिवा चन्द्रग्रहणं च न स्नानदानादिनिमित्तम्; मुण्डनोत्तरं शिरःप्रक्षालनम् १८०८.

**अनुपनीतधर्माः –**

अनुपनीतस्य कामचारादयो महापातकादन्यत्र १९२८.

**वायुपुराणं ब्रह्माण्डपुराणं च**

**वर्णसामान्यधर्माः –**

यजनाध्ययनदानानि द्विजसामान्यधर्माः; वर्णानां क्रमेण जपादयः प्रधानधर्माः, अवरेणोत्तमवर्णानुवृत्तिः; धर्ममूलमद्रोहादिदशकम्; ग्रहणश्राद्धस्य रात्रावपि कर्तव्यता प्रशंसा च १८०८. क्षुधितविप्रायान्नदानस्य प्रशंसा; शूद्रस्य वेदानधिकारः पुराणाधिकारश्च; गजच्छायासंज्ञकसूर्यग्रहणे श्राद्धविधिः; ग्रहणस्नाने आमलकनिषेधः; एकस्यार्थे स्वपरहिंसा पातकम्, बहूनामर्थे सा न पातकम्; जलवायुदीक्षितयोगिनिन्दाया निषेधः; द्वेषस्य ब्रह्मचर्यनाशकत्वं ब्रह्मचर्यप्रशंसा च १८०९.

**आश्रमविचारः –**

ब्रह्मकृता आश्रमतत्संज्ञातद्धर्मोत्पत्तिः, गार्हस्थ्यप्रशंसा, सर्वेषामाश्रमाणां श्रेयस्करत्वम्; आश्रमभेदेन प्राप्यलोकभेदाः; परमहंसफलम्; आश्रमिणां साधुशब्दवाच्यत्वम् २०६३. वानप्रस्थस्य संन्यासः; संन्यासे

त्रैवर्णिकाधिकारः २०६४.

**ब्रह्माण्डपुराणम्**

**वर्णसामान्यधर्माः –**

ग्रहणश्राद्धस्य रात्रावपि कर्तव्यता अकरणे प्रत्यवायश्च १८०९. ग्रहणनिमित्तकमाशौचम्, स्नानेन कर्माधिकारः, पक्वान्नवर्जनम् १८१०.

**मार्कण्डेयपुराणम्**

**वर्णसामान्यधर्माः –**

आनृशंस्यं क्षत्रियस्य प्रधानधर्मः; सत्यस्य प्रशंसा; दानाध्ययनयजनानि द्विजसामान्यधर्माः, शूद्रधर्मः द्विजशुश्रूषा, स्वधर्मत्यागपरधर्मस्वीकारयोर्निन्दा; सत्यशौचादयोऽष्टौ नित्यसामान्यधर्माः; ग्रहणनिमित्तकश्राद्धविधिः; ग्रहणे रात्रावपि स्नानम्; परोपतापककर्मजन्तुपीडनयोर्निषेधः; मैत्रीसहवासयोर्निषेधस्य विषया उद्धतादयः विधेर्विषयाः साधुप्रभृतयश्च १८१०. क्षत्रियं प्रति याच्ञाया अधर्मत्वम्; शक्तं प्रति सर्वविषयकसङ्गकामयोर्निषेधः अशक्तं प्रति सद्भिः सह सङ्गस्य मुमुक्षाविषयककामस्य चानुमतिश्च; पादन्यासजलपानवाक्प्रयोगचिन्तनानि क्रमेण चक्षुर्वस्त्रसत्यबुद्धिभिर्विशोध्य कर्तव्यानि; क्षौरे दिङ्नियमः १८११.

**अनुपनीतधर्माः –**

अनुपनीतस्य कामचारकामवादकामभक्षाः १९२९.

**आश्रमविचारः –**

आश्रमसमुच्चयविकल्पौ; गार्हस्थ्यप्रशंसा; वानप्रस्थ्ये संन्यासे चाधिकारः २०६४.

**मत्स्यपुराणम्**

**वर्णसामान्यधर्माः –**

ग्रहणश्राद्धविधिः; दानं शूद्रस्य प्रधानधर्मः; कचवञ्चितस्य शुक्रस्य अद्यप्रभृति ब्राह्मणानां सुरापानात् महान् प्रत्यवाय इति शापोक्तिः; जपादयश्चत्वारो वर्णानां क्रमेण प्रधानधर्माः, अवरवर्णैरुत्तमवर्णानामनुवर्तनम्; सर्वधर्ममूलाद्रोहादिदशकम्; ग्रहणे अमरकण्टकादिक्षेत्रमाहात्म्यम् १८११. ग्रहणनिमित्तकदानविधिः; मातृपितृगुरूणामग्नेश्च शुश्रूषाया विधिः प्रशंसा च; ग्रहणनिमित्तकदानविधिः; अपराह्णादिभवग्रहणेषु भोजने वर्ज्याः पूर्वकालाः १८१२.

**विष्णुपुराणम्**

**वर्णसामान्यधर्माः –**

वर्णाश्रमविरुद्धकर्माचरणनिषेधः; चातुर्वर्ण्यधर्माणामनुक्रमणम् १८१२. अर्थार्जनस्वभार्यर्तुगमनदयातितिक्षादयश्चतुर्दश सामान्यधर्माः १८१३. असाधुभिः साधुभिश्च सह व्यवहारस्य क्रमेण निषेधो विधिश्च; उत्तमैरधमैश्च सह विवादविवाहयोर्निषेधः; योषित्संबन्धिनामवमानविश्वासेर्ष्याधिकाराणां निषेधाः; सत्यवचनं तदपवादश्च; ग्रहणश्राद्धविधिः; स्वधर्मत्यागे हीनकर्मपरिग्रहे च नग्नतादोषः १८१४. मिश्रवर्णस्थितिके देशे निवासस्य निषेधः; अकृतवैश्वदेवेन भोक्त्रा सह व्यवहारस्य निषेधः; पाषण्डिविकर्मस्थबैडालव्रतिकशठहैतुकबकवृत्तिभिः सह संभाषणादिव्यवहाराणां निषेधः १८१५. अतितृष्णा त्याज्या; स्वाधीतविद्याया एव पूज्यत्वम्; दुष्करब्राह्मणधर्मापेक्षया द्विजशुश्रूषादिशूद्रधर्मस्य सुकरत्वात् शूद्रस्य धन्यत्वम्; प्रजापालनं शत्रुनाशश्च क्षत्रियधर्मः, याच्ञा न क्षत्रियधर्मः १८१६. परनिन्दादिनिषिद्धाचारवर्जनं सर्वत्रसमबुद्धित्वं देवद्विजगुरुशुश्रूषा रागादिराहित्यं च हरिसंतोषकारणम्; क्षमाशौचादयश्चतुर्दश सामान्यधर्माः १८१७.

**आश्रमविचारः –**

आश्रमिणां गम्या लोकाः २०६४. आश्रमसमुच्चयः, गार्हस्थ्यप्रशंसा, वानप्रस्थ्ये भार्यासाहित्यराहित्यविकल्पः, संन्यासफलम्; आश्रमसमुच्चयविकल्पौ २०६५. चातुराश्रम्यम्, अनाश्रमित्वनिषेधः; विरक्तवानप्रस्थस्य संन्यासेऽधिकारः २०६६.

**विष्णुधर्मोत्तरपुराणम्**

**वर्णसामान्यधर्माः –**

ग्रहणकालस्य स्नानादौ पुण्यत्वम्; अहिंसासत्यादिविहितधर्माचरणं मधुमांसादिनिषिद्धवर्जनं च केशवसंतोषकारणम्; ग्रहणश्राद्धसंबन्धीनि विधानानि; ब्राह्मणस्वहरणस्य दुराचारब्राह्मणस्यापि द्वेषनिन्दावधानां च निषेधः १८१७. मातृपितृगुरुज्येष्ठभ्रातृणां शुश्रूषणमेव परमो धर्मः तेषामनुज्ञया धर्मान्तराचारश्च; राजकर्तव्यत्वेन विस्तरेणेतिकर्तव्यतासहितं गोप्रशंसायुतं सफलं गोपालनविधानम् १८१८. अहिंसासत्यवचनादयः पञ्चदश-

सामान्यधर्माः, यजनयाजनादिधर्माणां वर्णेषु व्यवस्था; क्षौरानधिकारप्रयोजकानि उपोषणादीनि, क्षौरे शुभाशुभनक्षत्रादीनि १८२०. ग्रहणदिने पूर्वं ग्रस्तास्ते पुनरुदयपर्यन्तं च भोजननिषेधः, वर्णाश्रमधर्मत्यागे परपीडायां च नरकः; पापाचरणनिषेधः विष्णुभक्तिविधिश्च; यजनादयः षट् विप्रधर्माः, दानाध्ययनादयः पञ्च साधारणधर्माः; परनिन्दाया अप्रियवचनस्य क्रोधस्य पतितसंसर्गस्य च निषेधः; इन्द्रियसंयमविधिः, कामक्रोधलोभानां निषेधः; अहिंसा मधुरवाणी वाङ्मनःशुद्धिश्च; वेदाध्ययनं वेदोक्तकर्माचरणं शास्त्रनिगमाध्ययनं च; पाषण्डिविकर्मस्थादिभिः षड्भिः सह व्यवहारस्य निषेधः, नृत्तगीतिभ्यो हासकेभ्यश्च दाननिषेधः १८२१. शूद्राय मत्यादिदानस्य धर्मव्रतोपदेशस्य च निषेधः; धनार्जन-सत्यप्रियवचन-भद्रोक्तीनां विधिः शुष्कवैरविवादयोर्निषेधश्च; पाणिपादादिचापल्य परद्रोहयोर्निषेधः, पूर्वजाचारोऽनुसर्तव्यः; ऋत्विक्पुरोहितादिभिरेकविंशत्या सह विवादस्य निषेधः; धर्मध्वजित्वनिषेधः; यमानामाचरणस्य नित्यत्वम्; यमनियमयोर्दशविधत्वम्; धर्मसंचयविधिः, परपीडानिषेधः, उत्तमाधमैः संबन्धस्य क्रमेण विधिनिषेधौ; यज्ञार्थं शूद्राद्भिक्षाया निषेधः; वर्णानामापत्तरणसाधनविभागः; विषमशैलारोहणादिनिषेधरूपाणां सायंप्रातर्विद्वद्वाणीश्रवणादिविधिरूपाणां च भूयसामाचाराणामनुक्रमणम् आचारप्रशंसा च १८२२. द्विजानां सुरापाननिषेधः, ब्राह्मणानां मद्यपानमांसभक्षणनिषेधः; पापनाशधर्मवृद्ध्यर्थं तपसोऽनुष्ठानम्; आत्महत्यानिषेधः तदपवादश्च; सर्वदोषमूलस्याज्ञानस्य निन्दा तच्छमनोपायाश्च; पापापचयपुण्यचययोर्विधानम्; धर्मार्थयुक्तस्यैव कामस्य सेव्यत्वम् १८२४. संपत्तिविपत्त्योर्हर्षविषादवर्जनविधिः; सर्वदोषमूलमानवर्जनविधिः; बहुदोषहेतोर्मदस्य वर्जनीयत्वात् तद्धेतोर्मद्यपानस्य वर्जनीयत्वम्; बहुदोषमूलस्य लोभस्य वर्जनीयत्वम् १८२५. सर्वानर्थमूलस्य क्रोधस्य त्याज्यत्वम्; सर्वपापमूर्धन्यस्य नास्तिक्यस्य तद्धेतोरसच्छास्त्राध्ययनस्य च वर्जनीयत्वम्; अतिविनाशकस्याहंकारस्य वर्जनीयत्वम्; अशौचस्य वर्जनीयत्वम्, तत्प्रतियोगिनः शौचस्य स्त्रीशौचमर्थशौचं वाक्शौचमिति त्रैविध्यमुत्तरोत्तरप्रशस्ततरत्वं च १८२६. सर्वनाशकस्यानृतभाषणस्य वर्जनीयत्वं तस्य पशुगवाश्वादिविषयभेदेन नाशकत्वतारतम्यं च; सर्वपापेभ्यो हिंसा गरीयसी, आततायिहिंसा यज्ञादौ हिंसा युद्धे हिंसा च न पापम्, जितस्य हिंसायां दोषगौरवम्, स्त्रीहिंसा धनहिंसा प्राणिहिंसेति हिंसात्रैविध्यम्, सामान्यतो मांसभक्षणे दोषः, विशेषतो ब्राह्मणस्य मधुपर्कादिनिमित्ताभावे मांसभक्षणे दोषः १८२७. परपीडावर्जनम्; ज्ञानार्जनविधिः ज्ञानप्रशंसा च १८२८. गुरुशुश्रूषाप्रशंसा; स्वाध्यायविधिः, वेदादिस्वाध्यायैः पितॄणां सर्पिरादिभिस्तर्पणम्; ब्रह्मचर्यप्रशंसा; कीर्तिप्रशंसा अकीर्तिनिन्दा च १८२९. यशःप्रशंसा; यज्ञस्य विधिः प्रशंसा च; शीलस्य विधिः प्रशंसा च; दमस्य विधिः प्रशंसा च १८३०. सत्यस्य विधिः प्रशंसा च; तपसो विधिः प्रशंसा च १८३१. सर्ववर्णानामात्मरक्षणदेशविप्लवादिनिमित्तेषु युद्धाधिकारः; अहिंसा परमो धर्मः, मांसभक्षणनिन्दाद्वारा अहिंसाप्रशंसा; क्षमायाः प्रशंसा; कृतज्ञताया विधिः प्रशंसा च १८३२. तीर्थयात्राविधिः; उपवासस्य विधिः जातिभेदप्रयुक्ताः कालमर्यादाः प्रशंसा च; मनःशौचप्रशंसा; श्रद्धाप्रशंसाः; जपस्य विधिः प्रशंसा च; अग्निसेवाप्रशंसा; देवार्चनस्य विधिः प्रशंसा च; श्राद्धस्य विधिः प्रशंसा च १८३३. वर्णानां स्त्रीब्रह्मचारिगृहस्थानां च पूज्यभेदाः तत्पूजाविधिश्च; नानाविधगोसेवाविधिः गोप्रशंसा गोभक्षितोत्सृष्टगोमयस्थितयवैर्जीवनमित्येतद्रूपं व्रतं च १८३४. दयाया विधिः लक्षणभूतानि कर्माणि प्रशंसा च; दाक्षिण्यप्रशंसा; प्रियवादित्वस्य विधिः प्रशंसा च १८३५. दाक्ष्यस्य विधिः प्रशंसा च; जलाशयनिर्माणविधिः; वृक्षारोपणप्रशंसा; शास्त्र-जलाशय-वृक्षारोपण-देवमन्दिरनिर्माणस्य विधिः प्रशंसा च १८३६. पान्थपूजाया विधिः प्रशंसा च; अभयदक्षिणादानग्रहणयोरशुचेरप्यधिकारः, अन्यत्र शुचेरेव; अन्नवस्त्रादिदानविधिः; शूद्रं प्रति तपोविधिः; ग्रस्तास्तचन्द्रसूर्यग्रहणयोर्भोजने वर्ज्यौ पूर्वोत्तरकालौ; वेदमन्त्रादिरहितेषु यज्ञादिषु शूद्रस्याप्यधिकारः १८३७. चाण्डाल-

पतितादिभिर्भाषणस्य निषेधः तदतिक्रमे प्रायश्चित्तं च; गवां प्राणत्राणस्य मुमूर्षुभ्यस्ताभ्यो जलदानस्य च फलविधिः १८३८.

**आश्रमविचारः –**

संन्यासप्रशंसा, आश्रमाणां फलानि; नैष्ठिकत्वस्य विकल्पः फलं च, आश्रमकालमर्यादाः, आश्रम-समुच्चयः तत्फलं च, गार्हस्थ्यप्रशंसा २०६६

## श्रीमद्भागवतपुराणम्

**वर्णसामान्यधर्माः –**

स्त्रीशूद्रद्विजबन्धूनां वेदश्रवणानधिकारः; मनुष्य-सामान्यधर्मस्य सत्यदयातपआदीनि त्रिंशत् लक्षणानि; द्विजलक्षणम्, द्विजसामान्यधर्माः, चतुर्णां वर्णानां गुणसमुच्चयरूपाणि लक्षणानि, उक्तलक्षणप्रयुक्त एव ब्राह्मणादिशब्दव्यवहारो मुख्यः १८३८. स्नानजपादीनां पुण्याः पर्वकालाः; अहिंसा परमो धर्मः; धर्मार्थमपि यात्रार्थमपि च धनेहानिषेधः संतोषप्रशंसा च १८३९. षोडशानां कामक्रोधादीनामसंकल्पादयः असाधारणाः गुरुभक्तिरूपाः च साधारणः जयोपायाः; गार्हस्थ्या-द्याश्रमापसदत्वनिमित्तानि क्रियात्यागादीनि, तादृशा-श्रमिणामुपेक्ष्यत्वम्; रागद्वेषादयो विंशतिर्निर्दिष्टा अन्ये चाऽऽदिशब्दग्राह्याः शत्रवः, एतच्छत्रुनिरासो मोक्षप्रदः; स्वरूपत उपायतोऽपादानतश्चानिषिद्धेन द्रव्येण कर्मणां कर्तव्यत्वम्; ब्राह्मणस्य जन्म आमुष्मिकफलक-तपःक्लेशार्थम् १८४०.

**आश्रमविचारः –**

गार्हस्थ्यप्रशंसा; आश्रमविकल्पः, सधर्माश्रमफलम्; आश्रमस्थानानि वैराजपुरुषाङ्गानि २०६७. ब्रह्मचर्या-वधिः, आश्रमविकल्पसमुच्चयौ, वानप्रस्थ्ये भार्या-साहित्यराहित्यविकल्पः, वानप्रस्थ्यमर्यादा; संन्यासे देवादिभिर्विघ्नोत्पादनम् २०६८.

## लिङ्गपुराणम्

**वर्णसामान्यधर्माः –**

अहिंसा परमो धर्मः, तदर्थं शुद्धेन जलेन कर्मकरणविधिः, शुद्धजलस्वरूपम्, अहिंसाप्रशंसा; अहिंसापवादः तदपवादश्च १८४१. चक्षुःपूतमार्ग-क्रमणादीनां ज्येष्ठवन्दनादीनां च बहूनामाचाराणाम-नुक्रमणम्; ग्रहणे स्नानविधिः कर्माङ्गशुद्धिश्च १८४२. ग्रहणे त्रिरात्रमेकरात्रं वोपवासः तत्फलं च १८४३.

**आश्रमविचारः –**

आश्रमिणां साधुशब्दवाच्यत्वम्, आश्रमचतुष्ट्वम् २०६८. क्रमेणाऽऽश्रमान्तरस्वीकाराधिकारिणः २०६९.

## स्कन्दपुराणम्

**वर्णसामान्यधर्माः –**

परपीडावर्जनम्; शत्रुप्रभृतिषु विश्वासस्य निषेधः; साधूपहासनिषेधः; सामान्यतो युद्धमरणस्य विशेषतो ब्राह्मणादिरक्षार्थयुद्धमरणस्य च प्रशंसा; अति-दुर्लभस्य मनुष्यजन्मनो धर्माचरणेन साफल्यम् १८४३. चतुर्णां वर्णानां तपआदयः प्रधानधर्माः; द्विजशुश्रूषा शूद्रधर्मः, शूद्रं प्रति अध्यापनस्य निषेधः; ग्रहणे तीर्थक्षेत्रविशेषेषु दानमधिकफलम्; पुत्रभार्याभूपतीनां त्यागस्य निमित्तानि तत्संसर्गनिषेधश्च; ग्रहणनिमित्त-कमाशौचम् १८४४. ग्रहणे धनुष्कोटिरामसेत्वोः स्नानं महाफलम्; उत्तमजनसंबन्धाधमजनत्यागयोर्विधिः; अध्य-यनसदाचारादिहीनस्य द्विजस्य मृत्युभयम्; शूद्रं प्रति धर्मोपदेशस्य वेदमन्त्रश्रावणस्य च निषेधः, द्विजशुश्रूषा शूद्रधर्माः; दारिद्र्ये आत्मानवमाननम्, सत्यप्रियोक्तिः, भद्रोक्तिः इत्यादीनां बहूनामाचारणामनुक्रमणम् १८४५. ग्रहणे कुरुक्षेत्रमहिमा; विप्रसेवा शूद्रधर्मः; ब्रह्म-स्वहरणस्य निषेधः निन्दा च; देशकुलगोत्राचार-पालनविधिः १८४६. सन्मार्गसेवनम्, वृथाहिंसा-वर्जनम्, आहारादिष्वतिशयस्त्याज्यः, विद्यादिष्वतिशयः साध्यः, गुर्वादिषु विश्वासः, भृत्येष्वविश्वासः, शरणा-गतस्यावधः, कीर्तेरर्जनम्, ब्राह्मणसेवा, अतिथिसेवा, प्राधान्येन शिवोपासना इत्यादीनां बहूनां क्षत्रिय-धर्माणामनुक्रमणम् १८४७. गोः तत्सेवायाश्च प्रशंसा; ग्रहणे गङ्गास्नानस्य प्रशंसा; चूडामणिग्रहणलक्षणं तत्प्रशंसा च; व्रात्यसंबन्धनिषेधः; मात्रादिभिरपि सहैकान्तवासनिषेधः; मातृपितृगुरुसंतोषणम् १८४८. काशीमरणस्य प्रशंसा तद्धेतुः सदाचारश्च; सत्य-शौचादीनि नव धर्मसाधनानि; गोरक्षणादीनि षट् विप्रस्य शूद्रसाम्यापादकानि; पादुकाविसर्जननिमित्तानि; ग्रहणे

शिप्रास्नानशिवदर्शनयोः प्रशंसा; ग्रहणे गोप्रतिमादानस्य प्रशंसा; ग्रहणे चन्द्रहासतीर्थस्नानादेः प्रशंसा; चतुर्णां वर्णानामाश्रमक्रमेण स्वस्वधर्मपालनेन सद्गतिः १८४९. ग्रहणे रवितीर्थस्नानादेः प्रशंसा; ग्रहणे योगिभोजनविधिः; ग्रहणे रवितीर्थे दानस्य प्रशंसा; अहिंसायाः प्रशंसा; सोमवारे सोमग्रहणे सोमदर्शनस्य प्रशंसा; ग्रहणे श्राद्धविधिः; रविवारे रविग्रहणे कुरुक्षेत्रस्नानप्रशंसा; सच्छूद्राणामपि श्रुतिस्मृतिपठन-श्रवणानधिकारः पुराणश्रवणमात्राधिकारश्च, सच्छूद्र-लक्षणम्, सच्छूद्राणां धर्माः; प्रकृतीनामष्टादशमिता नीचाः, तेषां श्रौतस्मार्तकर्मानधिकारः ब्राह्मणशुश्रूषादयो धर्माश्च; प्रातर्मध्याह्नापराह्णेषु क्रमेण देवद्विजपितृकर्म-करणात्सुखावाप्तिः १८५०. चतुर्णां वर्णानां धर्मा वृत्तयश्च; अष्टादशमपदार्थः, प्रकृतीनामुत्तममध्यमसम-रूपेण त्रैविध्यम्, तत्र शिल्पिप्रभृतयः सप्त उत्तमाः, प्रकृतीनां धर्माः; सोमवारे सोमग्रहे सोमनाथदर्शनस्य प्रशंसा; ग्रहणे श्राद्धस्य विधिः; वेदविक्रयस्य निन्दा षड्विधत्वं च वैश्वदेवहीनत्वादीनि ब्राह्मणस्य शूद्रसाम्ये निमित्तानि १८५१. मनुष्यत्वस्य दुर्लभत्वात् तत्रापि ब्राह्मणत्वस्य दुर्लभतरत्वाच्च संकरस्य वर्जनीयत्वम्, संकरस्य नव विधाः; वृत्तस्य वित्ततः श्रेष्ठत्वम्; ग्रहणे पौत्रवत उपवासनिषेधः; सूर्यग्रहे कुरुक्षेत्रे दानस्य प्रशंसा; चन्द्रग्रहणे स्नानदानादिभिश्चन्द्रपीडाहरणं महाफलम्; श्रद्धापूर्वकं ज्ञानार्जनम्; शूद्राधिकारनिषेधाः कर्मविशेषेषु; यतेः पुत्रत्वेन कीर्तनस्य निषेधः, यतेर्विष्णुरूपत्वम्, यतिदर्शनादिप्रशंसा; चन्द्रग्रहणे समुद्रस्नानं महाफलम् १८५२. निशीथपूर्वोत्तरकालयोश्चन्द्रग्रहणे भोजने वर्ज्यः पूर्वकालः; द्विजानां धर्मोपदेष्टृत्वं तस्य पापनिवर्तकत्वं च; आचारसंपन्नशूद्रस्य शिवपूजनाधिकारः १८५३.

**अनुपनीतधर्माः —**

अनुपनीतस्य कामभक्षः पित्रोरौर्ध्वदेहिकाधिकारश्च १९२९.

**आश्रमविचारः —**

प्रयत्नसाधितगार्हस्थ्यप्रशंसा; आश्रमाश्चत्वारः, आश्र-माणां विकल्पसमुच्चयौ अवान्तरभेदाः काल-मर्यादाश्च, आश्रमफलानि; गार्हस्थ्यप्रशंसा २०६९. आश्रमावधयः, आश्रमविकल्पसमुच्चयौ, अनाश्रमित्व-निषेधः, आश्रमलक्षणानि, वानप्रस्थ्ये भार्यासाहित्य-राहित्यविकल्पः २०७०. संन्यासप्रशंसा, समुच्चिता-श्रमफलम्, वानप्रस्थ्ये भार्याराहित्यम्, वानप्रस्थ्य-गार्हस्थ्ययोः फले; श्रीव्यासकृता आश्रमाणां विशेषतो गार्हस्थ्यस्य प्रशंसा श्रीशुककृतस्तदपवादश्च २०७१. आश्रमसमुच्चयः; संन्यासप्रशंसा, संन्यासविधिः २०७२.

## सह्याद्रिखण्डः

**वर्णसामान्यधर्माः —**

अक्रोधादयः सामान्यधर्माः; देवभक्तशूद्रस्य मन्त्र-प्रणवरहितशिवनमस्कारानुज्ञा; द्विजधर्माः, ब्राह्मणाः षट्कर्माणः, क्षत्रियादयस्त्रिकर्माणः, अन्त्यजानां धर्म-कर्माभावः; धार्मिकाणां मानवत्वनियता दोषा न वक्तव्याः; सर्वधर्ममूलं सामान्यधर्मः, ब्राह्मणनिन्दा-निषेधः, द्विजशुश्रूषा शूद्रधर्मः १८५३.

## सूतसंहिता

**वर्णसामान्यधर्माः —**

प्रतिदिनं शिवपूजनं तत्र द्विजशूद्रादिभेदेन विशेषाश्च १८५४. ग्रहणे ब्रह्मतीर्थे स्नानदानादेर्महिमा; सत्यप्रिय-वचनम्; संन्यासिपूजनम्; सिद्धान्तश्रवणे सर्वेषाम-धिकारः; ग्रहणे वेदतीर्थे स्नानदानादेर्महिमा; वर्णाश्रमहीनैः सह लाञ्छितैश्च सह सर्वव्यवहाराणां निषेधः; अप्रियभाषणस्य परदेहे क्षतकरणलोहितकरणा-ङ्कनकरणानां च निषेधाः १८५५. वेदोक्तानामाग-मोक्तानां च धर्माणां वैदिकतान्त्रिकरूपाधिकारभेदेन व्यवस्था १८५६.

**आश्रमविचारः —**

आश्रमिणां वैदिककर्माधिकारः, हरवशताद्वारा मोक्षप्राप्तिः फलं च, आश्रमसमुच्चयविकल्पौ, संन्यास-चातुर्विध्यम्, आश्रमव्युत्क्रमनिषेधः २०७३. संन्यास-प्रशंसा, परमहंसस्यैव तत्त्वज्ञानम्; आश्रमिणां क्रमेण ब्रह्मलोकादिफलानि २०७४. आश्रमक्रमः तत्राधि-कारिणश्च; संन्यासस्य प्रायश्चित्तरूपता, संन्यासा-वान्तरभेदाः प्राशस्त्यतारतम्यसहिताः २०७५.

## शिवरहस्यम्

**वर्णसामान्यधर्माः —**

ग्रहणे जपादेर्विधिः स्वापादेर्निषेधश्च १८५६.

## गरुडपुराणम्

**वर्णसामान्यधर्माः —**

वर्णानां यजनादिधर्मविभागः क्षमादमादयः सामान्यधर्माश्च; ग्रहणे जपादेर्विधिः १८५६. वर्णानां यजनादिधर्मविभागः अहिंसादयः सामान्यधर्माश्च; कर्तव्यानां सत्सङ्गादीनां वर्जनीयानां क्षुद्रसंवादादीनां चानुक्रमणम्; यज्ञाध्ययनदानानि द्विजसामान्यधर्माः; अहिंसादयः सामान्यधर्माः; ग्रहणे रात्रिस्नानानुमतिः; शोकनिन्दा दानविधिश्च; कूपतडागादिनिर्माणप्रशंसा; साधुदर्शनप्रशंसा; सत्यदमादय एकादश सनातनधर्माः; सर्वार्थसाधनदेहधनरक्षणविधिः १८५७.

**आश्रमविचारः —**

आश्रमिणां क्रमेण ब्रह्मलोकादीनि फलानि, आश्रमाणामवान्तरभेदाः सलक्षणाः; नैष्ठिकत्वादीनामूर्ध्वरेतसामाश्रमाणांच क्रमेण फलानि; ब्रह्मचर्याविधिः, वानप्रस्थ्ये भार्यासाहित्यराहित्यविकल्पः; आश्रमविकल्पः; संन्यासप्रशंसा २०७६.

## पद्मपुराणम्

**वर्णसामान्यधर्माः —**

ग्रहणे अमरकण्टकाद्यनेकक्षेत्रतीर्थेषु शिवदर्शनस्नानादीनां प्रशंसा १८५७. अहिंसाप्रशंसा; परस्त्रीगमननिषेधः; संक्षेपेण अद्रोहादिधर्मकथनम्, तपोदानकीर्तननिषेधः; ब्राह्मणलक्षणभूता क्षमादयादिगुणाः; धर्मसाधनशरीररक्षणविधिः; परद्रोहः वेददेवतानिन्दा हिंसा अनृतम् अहिताप्रियवचनमित्येतेषां निषेधाः; धर्मध्वजित्वनिषेधः; देवगुरुद्रोहनिषेधः १८५८. शूद्राय अदेया मत्यादिपदार्थाः व्रतधर्मोपदेशनिषेधश्च; ग्रहणे दानस्य प्रशंसा; याचितयुद्धदानं वीरधर्मः, स महाफलः अन्यथा नरकश्च; पुण्यकालेष्वसद्ब्राह्मणोऽपि पूज्यः; ग्रहणस्नानादौ सर्वेषां जलानां ब्राह्मणानां वायसतीर्थस्य च प्रशंसा; दानस्य तपसोऽपि श्रेष्ठत्वम्; ब्राह्मणस्य यजनाध्यापनादिर्धर्मः गार्हस्थ्यविकल्पश्च; ग्रहणनिमित्तकश्राद्धविधिः, शूद्रस्य दानं प्रधानम्; यज्ञोद्देशेनैवान्नं पाच्यं पशवश्च वध्याः; स्वापभोजनायोग्याः कालाः; शमविधिः अर्थतृष्णानिषेधः संतोषविधिश्च १८५९. प्रतिग्रहनिन्दा; विद्वदाचरितो धर्मोऽनुष्ठेयः; दमो ब्राह्मणस्य विशेषधर्मः; अपमानेऽपि परदूषणं त्याज्यम्; अपमाने संतुष्टिः संमाने जुगुप्सा च कार्या; स्वप्रतिकूलं परस्मिन्नाऽऽचरणीयम्; श्रोत्रियलक्षणं तदनुषङ्गेण ब्राह्मण-द्विज-विप्रलक्षणानि च, पूज्यतमत्वप्रयोजकास्तीर्थस्नानादयो ब्राह्मणाचाराः १८६०. अधमत्वप्रयोजकाः स्नानरहितत्वादयोब्राह्मणचाराः, आग्नेयादीनि पञ्चस्नानानि सलक्षणानि, अधमब्राह्मणस्यापि वधस्य निषेधः; क्षुधाशान्त्यकरणादिब्राह्मणपीडानां विपाकाः, आततायिब्राह्मणहत्यानुमतिः, ब्राह्मणस्य पूज्यत्वम् १८६१. पुंगवानां स्त्रीगवीनां च नानाविधसेवाविधयः गोप्रशंसा च १८६२. ग्रहणनिमित्तकश्राद्धप्रशंसा; असत्समागमस्य दीपच्छायाकलिद्रुमयोरवस्थानस्य अस्पृश्यादिभिः सहाऽऽलापस्य च निषेधाः; ग्रहणनिमित्तकश्राद्धप्रशंसा; ग्रहणनिमित्तकदानस्नानयोः सर्वदेयवस्तुद्विजतोयानि प्रशस्तानि, विशेषतो गङ्गातोयस्य प्रशंसा; चूडामणिग्रहणस्य लक्षणं प्रशंसा च १८६३. वापीकूपतडागनिर्माणस्य वृक्षारोपणस्य च विधिः; सत्यवदनविधिः सत्यप्रशंसा च; ब्रह्मस्वदेवस्वोपभोगनिषेधः; गोरक्षणप्रशंसा; आशात्यागविधिः; परदारपरद्रव्यवर्जनस्य अक्रोधस्य च प्रशंसा; श्रौतस्मार्ताचारविधिः, शमदमादीनि षट् धर्मसाधनानि; विप्रस्य यक्षराक्षसभूतार्चननिषेधः १८६४. द्विजानामेव श्रौते शूद्राणां स्मार्ते एव चाधिकारः, शूद्रस्य शिखोपवीतसंस्कृतोच्चारणनिषेधः; समन्त्रकगोप्रणामस्य प्रशंसा. १८६५.

**आश्रमविचारः —**

स्वस्वधर्मचारिणामाश्रमिणां ब्रह्मलोकः फलम् २०७६. नैष्ठिकत्वम्; आश्रमकालमर्यादाः, वानप्रस्थ्ये भार्यासाहित्यराहित्यविकल्पः, वैराग्यं संन्यासहेतुः, संन्यासावान्तरभेदाः सलक्षणाः; गार्हस्थ्यप्रशंसा, वानप्रस्थ्यं तत्र च भार्यासाहित्यं भार्याराहित्यं वा; आश्रमिणां फलानि, आश्रमसमुच्चयः, आश्रमकालमर्यादाः २०७७. गार्हस्थ्यप्रशंसा, ब्रह्मचर्याविधिः २०७८.

## ब्रह्मपुराणम्

**वर्णसामान्यधर्माः —**

सामान्यतो याच्ञानिषेधः, विशेषतः क्षत्रियस्य;

ग्रहणे श्राद्धविधिः; असत्प्रलापादीनि षट् वर्ज्यानि; ग्रहणे रात्रिस्नानानुमतिः; क्षौरे दिक्कालनियमः सचैलस्नानं च; देववेदादीनां दशानां परिहासपरिवादौ वर्ज्यौ, मङ्गलवेषविधिः; उद्धतादिभिः चतुर्दशभिः सह मैत्र्या निषेधः; उद्यानादौ अकालावस्थाननिषेधः, जनविद्विष्टादिभिः सहाऽऽलापे तत्स्पर्शने च प्रत्यवायः; नित्यकर्मकर्तव्यता आत्माप्रकोपेण यज्ञकर्तव्यता च १८६५. वर्णानां वैशेषिकाः सामान्याश्च धर्माः; संतोषसत्पथालम्बनब्राह्ममार्गाक्रमणानि ब्राह्मणधर्माः; शीलकर्मसमाचारगुणरूपाणां स्वर्गफलानां धर्माणामनुक्रमणम्; वाचिकानां स्वर्गफलानां धर्माणामनुक्रमणम् १८६६. मानसिकानां स्वर्गफलानां धर्माणामनुक्रमणम्; मनुष्यजन्मभोग्यदीर्घायुष्ट्वाल्पायुष्ट्वकुलीनत्वाकुलीनत्वादिविषमविपाककारणीभूतानां पूर्वजन्मकृतकर्मणां विस्तरेणानुक्रमणम् १८६७. सत्यभाषणप्रशंसा; ग्रहणपुण्यकालभागभेदप्रयुक्तं कर्मफलतारतम्यम्; ग्रहणकालभोजननिषेधः, ग्रहणकालिककर्मप्रशंसा; नानाविधा गोपरिचर्या गोप्रशंसा च १८७०.

**अनुपनीतधर्माः —**

अनुपनीतस्य पित्रोरुच्छिष्टस्य भक्षणे दोषाभावः १९२९.

**आश्रमविचारः —**

आश्रमाः पुण्यकर्मद्वाराणि, गार्हस्थ्यप्रशंसा, आश्रमकालमर्यादाः, वानप्रस्थ्ये भार्यासाहित्यराहित्यविकल्पः, संन्यासफलम् २०७८.

### ब्रह्मवैवर्तपुराणम्

**वर्णसामान्यधर्माः —**

दिवास्त्रीगमनरजस्वलागमनरात्रिदधिभक्षणसंध्याकालशयनानां निषेधाः; क्षौरे वर्ज्यः कालः, क्षौराशुद्धस्य कर्मानधिकारः; ग्रहणकृतकर्मणां फलाधिक्यम्; ब्राह्मणस्य दिवास्वापशूद्रश्राद्धान्नभोजनशूद्रशवदाहाः शूद्रसाम्यकराः; विप्रस्य विष्णूपासनं नित्यम्; ग्रहणाशुचिस्पृष्टानि पाकभाण्डादीनि त्याज्यानि १८७२. क्षत्रियवैश्यशूद्रधर्माः; ग्रहणे भृष्टद्रव्यत्यागः; पीतशेषजलपानस्य माघे मूलकभक्षणस्य शयने जपादेश्च निषेधः; अहिंस्त्रे दयाविधिः हिंस्त्रहिंसानुमतिश्च; वैश्यशूद्रतत्स्त्रीणां पातकानि; ग्रहणनिमित्तककर्मणां पुण्यकालभागभेदेन कर्तव्यता; मुक्तिस्नानाभावे प्रत्यवायः; विद्यादयो दश सामान्यधर्माः १८७३.

**आश्रमविचारः —**

गार्हस्थ्यप्रशंसा, आश्रमसमुच्चयः, आश्रमकालमर्यादाः; संन्यासप्रशंसा, वैराग्यं संन्यासहेतुः २०७९.

### वराहपुराणम्

**वर्णसामान्यधर्माः —**

ग्रहणे तिलोदकेन पितृतर्पणमात्रमपि महाफलम्; गोपालनम्, गोः विशेषतः कपिलायाश्च प्रशंसा १८७३. प्रतिवर्णं भिन्नाः सर्ववर्णसाधारणाश्च धर्माः १८७४. स्वधर्मपालनं परधर्मनिन्दावर्जनं च पुण्यलोकसाधनम्; पुण्यलोकप्रापका जितेन्द्रियत्वादयः सामान्यधर्माः; गोमहिमा १८७५. वैश्यशूद्रधर्माः १८७६.

**आश्रविचारः —**

गार्हस्थ्यप्रशंसा २०७९.

### वामनपुराणम्

**वर्णसामान्यधर्माः —**

क्षौरे वर्ज्यः कालः ग्रहणे रात्रिस्नानानुमतिश्च; देशकुलगोत्रधर्मपालनम्, निरर्थककर्मकरणादिदुराचारनिषेधाः; क्षौरे निषिद्धकालाः १८७६.

**आश्रमविचारः —**

आश्रमकालावधयः, आश्रमविकल्पसमुच्चयौ, वर्णभेदेनाऽऽश्रमव्यवस्था, ब्रह्मणः सकाशादाश्रमसृष्टिः २०७९.

### कूर्मपुराणम्

**वर्णसामान्यधर्माः —**

चतुर्णां वर्णानां विशेषधर्माः सामान्यधर्माश्च, प्रथमतृतीयचतुर्थाश्रमिणां ब्रह्मचर्यं सामान्यधर्मः १८७६. द्विजस्य संध्यावन्दनं नियतम्; कुलक्रमागतधर्माचरणविधिः; क्षमादिगुणाष्टकं ब्राह्मणलक्षणम्, वेददेवतानिन्दाया निन्दकसंवादस्य च निषेधः; अहिंसा सत्यमस्तेयं विशेषतो देवब्रह्मस्वानपहरणं चेति धर्माः; पाखण्डिविकर्मस्थवामाचारपाञ्चरात्रपाशुपतवेददेवद्विजनिन्दकाः असंव्यवहार्याः; असंव्यवहार्याः पतितादयः, एकादशविधः सांकर्यदोषो वर्जनीयः, पापिसमीपावस्थानात् पापसंक्रमः; शूद्रायादेयाः पदार्थाः १८७७. ग्रहणपूर्वोत्तरकालविशेषयोर्ग्रहणकाले च भोजननिषेधः;

ग्रहणे नैमित्तिककर्मणां नित्यत्वं काम्यश्राद्धानां प्राशस्त्यं दानस्य फलातिशयश्च; ग्रहणे महानदीस्नानस्य प्राशस्त्यम्; प्रतिपर्व पुराणाध्ययनं ब्राह्मणैः कर्तव्यं शूद्रसंनिधौ तन्निषेधश्च; उपास्यमन्त्राणां ग्रहणे जपाभावे मालिन्यम् १८७८.

**आश्रमविचारः —**

आश्रमोत्पत्तिः, गार्हस्थ्यप्रशंसा, गार्हस्थ्यविषयकमैकाश्रम्यम्; आश्रमिणां फलानि, योगित्वविषयकपञ्चमाश्रमत्वशङ्कानिरासः, आश्रमाणामवान्तरभेदाः सलक्षणाः २०८०. आश्रमसमुच्चयविकल्पौ, आरूढपतितत्वनिषेधः, वैराग्यपङ्गुत्वादयः संन्यासहेतवः, ऐकाश्रम्यकल्पः; आश्रमकालमर्यादाः, वानप्रस्थ्यप्रशंसा, वैराग्यं संन्यासहेतुः, संन्यासावान्तरभेदाः सलक्षणाः २०८१.

## भविष्यपुराणम्

**वर्णसामान्यधर्माः —**

चातुर्वर्ण्यकर्मविभागः; सूर्यवारे सूर्यग्रहणे कर्तव्यः कर्मविशेषः सर्वनैमित्तिकर्मणां फलातिशयश्च; शूद्रान्नभक्षणादीनि चत्वारि कर्माणि पातित्यनिमित्तानि; गुणपरीक्षां विनैव विप्रस्य पूज्यत्वम्; ग्रहणस्य पुण्यकालत्वं तत्र सूर्यपूजावस्त्रादिदानविधिश्च १८७९. विस्तरेण गोप्रशंसा; गोब्राह्मणप्रशंसा १८८०. परस्वहरणादीनां नवानां दुराचाराणां निषेधाः; परस्त्रीसेवननिन्दा, स्त्रीविषयकेर्ष्यानिषेधः, मूर्खोन्मत्ताद्याक्षेपनिषेधः, कृशस्त्रीब्राह्मणक्षत्रियावज्ञानिषेधः; अरुंतुदत्वपरोक्षवादित्वप्रमादित्वनास्तिक्यवेददेवतानिन्दानां द्वेषदम्भातिमानक्लैब्यानां च निषेधः क्षौरान्ते सचैलस्नानम्; गुरुपतिव्रतायज्ञतपस्विनां परिवादपरिहासयोर्निषेधः; शूद्रस्य पुराणधर्मशास्त्राध्ययनानधिकारः, श्रवणमपि देवताप्रतिमादिपुरस्कारेण प्रोच्यमानानामेव पुराणादीनाम् १८८१. गोसेवा १८८२.

**आश्रमविचारः —**

ब्रह्मचर्याविधिः, आश्रमचतुष्टयम्, ब्रह्मचर्यचातुर्विध्यम्, गार्हस्थ्यप्रशंसा; आश्रमिणां फलानि; गार्हस्थ्यादीनां त्रयाणां क्रमेण शाक्तत्ववैष्णवत्वरौद्रत्वानि, ब्रह्मचर्यस्य तदनुगामित्वम्; आश्रमविकल्पः २०८२.

## नारदपुराणम्

**वर्णसामान्यधर्माः —**

इष्टापूर्तविधिः; यतिनिन्दा स्वर्णस्तेयसमा; चतुर्णां वर्णानां विशेषाः सामान्याश्च धर्माः; ग्रहणनिमित्तकश्राद्धविधिः; ग्रहणनिमित्तकर्मसु ग्राह्यास्तिथिभागः; ग्रस्तास्तमने भोजनकालः; सूर्यग्रहणात्प्राक् भोजने वर्ज्यः कालः; दुर्लभमनुष्यजन्मनः परलोकार्थकर्मभिः सार्थकता; संतोषप्रशंसा १८८२. चतुर्णां वर्णानां लक्षणभूता गुणाः तेषां जातितः प्राधान्यं च, लोभक्रोधादयो दोषास्त्याज्याः; क्षौरे शुभाशुभकालाः; क्षौरे वर्ज्यकालापवादः; ग्रहणे गङ्गास्नानस्य कुरुक्षेत्रे दानस्य च प्रशंसा १८८३.

**आश्रमविचारः —**

संन्यासप्रशंसा, त्रैवर्णिकानां चातुराश्रम्याधिकारः, आश्रमकालावधयः; चत्वार आश्रमास्तेषामुत्पत्तिश्च, गार्हस्थ्यप्रशंसा, संन्यासप्रशंसा २०८३.

## अग्निपुराणम्

**वर्णसामान्यधर्माः —**

आद्यक्षौरे मासा वाराश्च; वर्णानां सामान्या विशेषाश्च धर्माः १८८३. हस्तिच्छायासंज्ञकसूर्यग्रहणकृतश्राद्धादेः प्रशंसा; मौननिमित्तानि; ग्रहणकृतदानप्रशंसा; राज्ञा कामक्रोधादयस्त्याज्याः; ब्रह्मचारिसंन्यासिनोः सामान्यधर्माः; गोब्राह्मणप्रशंसा; सत्यप्रियभाषणविधिः; धर्मार्थशरीररक्षा १८८४.

**आश्रमविचारः —**

वैराग्यं संन्यासहेतुः, आश्रमकालावधिः, संन्यासावान्तरभेदाः सर्वे ते योगयुक्ता मोक्षहेतवश्च २०८३.

## देवीभागवतम्

**वर्णसामान्यधर्माः —**

मूर्खसंगतिनिन्दा विज्ञसंगतिप्रशंसा च; प्रभुसेवा सेवकधर्मः; चोरशत्रुपरिज्ञानकर्तव्यता; उद्यमप्रशंसा १८८४. प्राणरक्षणं यशोरक्षणं च कर्तव्यम्; मूर्खब्राह्मणनिन्दा; अवेदविद्वेदविद्भ्यां क्रमेणाऽऽहाराधिकान्नदानेऽन्नदाने च निन्दाप्रशंसे; न्यायार्जितद्रव्यकृतकर्मण एव साफल्यम्; धर्मसत्ययोः प्रशंसा; साहसबहुविरोधयोर्निषेधः; मनुष्यजन्मैव धर्मसाधनं भारते तद्दुर्लभं च १८८५. सत्यशौचदयादानवत एव धर्माचरणं सफलम्; शान्तत्वं तपसो मूलम्;

सर्वधर्मकारणं सत्यम्; उद्यमप्रशंसा; सात्त्विकादिभेदेन ब्राह्मणत्रैविध्यं सलक्षणम्; शरणागतरक्षणाभावे प्रत्यवायः; अहिंसादियमानां स्वधर्मपालनस्य क्षमायाश्च प्रशंसा; शीलादिगुणषट्कं विद्याफलम्; मनुष्यजन्मनो दुर्लभत्वमात्मज्ञानेन साफल्यं च; दयाप्रशंसा १८८६. सत्यप्रशंसा; धर्माचरणविधिः; सवेतनसेवालोपे प्रत्यवायः; स्त्रीवधनिषेधः; सवेतनसेवालोपे प्रत्यवायः; स्वभक्तत्यागनिषेधः; आत्माज्ञाननाशनेन जीवनसाफल्यम् चित्तशुद्धिपर्यन्तं कर्माचरणम् १८८७. विषहीनसर्पतुल्यतापादका विप्रस्य विष्णुमन्त्रहीनत्वादयो दोषाः; दिनविशेषेषु क्षारद्रव्यैर्वस्यप्रक्षालनस्य निषेधः; क्षौरे वर्ज्यः कालः; गोवंशसेवा; सदाचारप्रशंसा, प्रतिदिनं कृताकृतधर्माधर्मविचारः १८८८. द्विजस्य गायत्र्युपासनाया नित्यत्वम् १८८९.

**आश्रमविचारः —**

गार्हस्थ्यप्रशंसा, आश्रमसमुच्चयस्यैव श्रेयस्त्वोपपादनम्, वानप्रस्थ्ये भार्याराहित्यम् २०८३.

## शिवपुराणम्

**वर्णसामान्यधर्मः —**

ब्राह्मण-विप्र-क्षत्रियब्राह्मण-वैश्यब्राह्मण-शूद्रब्राह्मण-चण्डालब्राह्मणशब्दानां राजक्षत्रियशब्दयोः वैश्यवणिक्शब्दयोः शूद्रवृषलदस्युशब्दानां च प्रवृत्तिनिमित्तभूतानि सदाचारादिगुणवैशिष्ट्यानि १८९०. धर्ममोक्षपुरुषार्थयोः प्रशंसा, धर्मद्वैविध्यम्; पृष्टवस्तुदानाभावे दोषः, परदोषकीर्तननिषेधः; श्रद्धास्तिक्ययोर्वैलक्षण्यम्, दरिद्रस्य वाचिककायिकयजनयोरधिकारः; देवतार्पणबुद्ध्या कृतानां कर्मणां अभ्युदयः फलम्, ईश्वरार्पणबुद्ध्या कृतानां निःश्रेयसं फलम्; सर्वमानवान् प्रति लिङ्गपूजाविधिः; शिवसंतोषोद्देशेन कर्मविधिः; तत्त्वज्ञानपर्यन्तं कर्माधिकारः; मात्रादिविषयककामदृष्टिनिषेधः; अनाह्वाने परगृहगमनस्य निन्दा; तपस्विनं प्रति स्त्रीसंगतिनिषेधः; सुखोदर्कसूनृतवचनयोः प्रशंसा १८९१. स्त्रिया अजितस्य पुरुषस्य प्रशंसा जितस्य निन्दा च; क्षत्रियस्य रणमरणं प्रशस्तम्; कृतोपकारपीडननिन्दा; कृतापकारेऽप्युपकारस्य प्रशंसा; विद्यामदस्य निन्दा; वृषभेषु क्रौर्यकारिणां वन्ध्यां गां वाह्यतां च निन्दा; सत्यस्य प्रशंसा १८९२. कर्मभूमौ भारतवर्षे कर्मयोनिर्मनुष्यत्वमतिदुर्लभम्, धर्माचरणेनैव तत्साफल्यम्; युद्धं सर्वेषां धर्मः, क्षत्रियस्य युद्धं विशेषधर्मः, युद्धे वध्यावध्यविवेकः, युद्धप्रीतेः प्रशंसा; श्रौतस्मार्तधर्मे त्रैवर्णिकानामेवाधिकारः, शुश्रूषा शूद्रधर्मः, निष्कामकर्मभिर्मोक्षप्राप्तिः १८९३. पूज्यापूजने अपूज्यपूजने च महान् दोषः; परमेश्वरभक्त्या सर्वपुरुषार्थसिद्धिः; ब्राह्मणधर्माः; क्षत्रियवैश्यशूद्रधर्माः; सदाचारप्रशंसा, सदाचारमूलमास्तिक्यम् १८९४.

**आश्रमविचारः —**

गार्हस्थ्यप्रशंसा, आश्रमसमुच्चयः २०८५.

## नरसिंहपुराणम्

**वर्णसामान्यधर्माः —**

प्रधानपुरुषाचारः; पापवर्जने दृढचित्तत्वमनन्तफलम्; ज्ञानार्जनप्रशंसा; शरणागतस्य रक्षणं महाफलमुपेक्षणं महादोषं च; स्त्रीवधे महापापम्; कृतघ्नता महादोषा; षट्कर्माणि सत्यवदनादीनि च ब्राह्मणस्य धर्माः; अध्ययन्तादिकर्मत्रयं प्रजापालनाद्याश्च क्षत्रियस्य धर्माः १८९५. गोरक्षादयः अध्ययनादिकर्मत्रयं च वैश्यधर्माः; वर्णत्रयशुश्रूषापाकयज्ञादयः शूद्रधर्माः; स्वस्वधर्माचरणविधिः, ब्रह्मध्यानविधिः, दयाप्रशंसा १८९६.

**आश्रमविचारः —**

विरक्ताविरक्तविषयौ आश्रमविकल्पसमुच्चयौ, नैष्ठिकस्याऽऽश्रमान्तरनिषेधः, नैष्ठिकत्वप्रशंसा, आश्रमकालमर्यादाः २०८५. अनाश्रमित्वनिषेधः, वैराग्यं संन्यासहेतुः, संन्यासपदार्थः, संन्यासप्रशंसा २०८६.

## कालिकापुराणम्

**वर्णसामान्यधर्माः —**

धर्माचरणप्रशंसा १८९६. जात्यादिहीनावमाननिषेधः; नित्यनैमित्तिककाम्यकर्मणां शिवपूजायाश्चानाचरणे निमित्तानि; ग्रहणे गङ्गास्नानमाहात्म्यम्; कर्ममन्त्रौ शूद्रेण विप्रवचनाद्ग्राह्यौ १८९७.

## साम्बपुराणम्

**वर्णसामान्यधर्माः -**

स्नानादिविषये ग्रहणप्रशंसा; भावशुद्ध्या कर्मसाफल्यम्; सदाचारप्रशंसा; ग्रहणे गायत्रीमन्त्रजपविधिः १८९७.

## सौरपुराणम्

**वर्णसामान्यधर्माः —**

गोग्रासफलम्; ग्रहणदानप्रशंसा; अभयदानप्रशंसा;

अप्रियादिवचन-हिंसा-वेदनिन्दा-शम्भुनिन्दानिषेधाः, विशेषतः स्त्रीहिंसानिषेधः; अहिंसासत्यास्तेयभूतानुग्रहविधिः; सूर्यग्रहणे जपविधिः स्वापभोजननिषेधश्च; ग्रस्तास्तोत्तर भोजनकालः; ग्रहणे समुद्रस्नानं महाफलम् १८९८.

**आश्रमविचारः –**

आश्रमाश्चत्वारः, सर्वेष्वाश्रमेषु दण्डधारणम्, आश्रमकालमर्यादाः, संन्यासस्य पापनिवर्तकत्वं मोक्षहेतुत्वं च २०८६.

## पराशरपुराणम्

**वर्णसामान्यधर्माः –**

श्रौतस्मार्ताचारविधिः तान्त्रिकाचारनिषेधश्च; महादेवप्रसादात् वर्णानां स्वस्वधर्मे प्रवृत्तिः १८९८. चक्राद्यङ्कितस्य ब्राह्मणस्य कर्मानधिकारः, ब्राह्मणलिङ्गानि; नित्यनैमित्तिककर्मप्रशंसा १८९९.

**आश्रमविचारः –**

नित्यकर्मपापक्षयचित्तशुद्धिसंसारदोषदृष्टिवैराग्यसंन्यासेषु पूर्वपूर्वमुत्तरोत्तरहेतुः, तीव्रतीव्रतररूपयोर्वैराग्यविधयोश्चतुर्विधसंन्यासेषु व्यवस्थया हेतुत्वम् २०८७.

## आदिपुराणम्

**वर्णसामान्यधर्माः –**

दानोपासनद्विविधाध्ययनैर्नरजन्मसाफल्यम्; पातिव्रत्यधनविनयत्यागविद्यासाधुवचनानां सत्कथाश्रवणस्य च प्रशंसा; स्वधर्मत्यागे परधर्मपरिग्रहे च दोषः, कुलाचारकर्तव्यता १८९९.

## मुद्गलपुराणम्

**वर्णसामान्यधर्माः –**

कर्ममूलनरदेहपोषणकर्तव्यता; क्षमाप्रशंसा; अध्ययनादित्रयं क्षत्रिय वैश्ययोर्धर्मः होमादि ब्राह्मणद्वारा च १८९९. शूद्रस्य द्विजसेवादयो धर्माः, कर्मसु नाममन्त्राणां स्वयंपाठः पौराणमन्त्राणां ब्राह्मणेन पाठः, शूद्रस्य देवर्षिप्रतिष्ठापितमूर्तिस्पर्शानधिकार; शूद्रहीनजातीनां नामस्मरणादयो धर्माः; दैवपित्र्यकर्मकर्तव्यता, ग्रहणादिकृतकाम्य श्राद्धप्रशंसा; देवार्चनं नित्यम्, ब्रह्मार्पितकर्मभिर्योगसिद्धिः १९००. वेदोक्तान्येव कर्माणि कार्याणि; वेदाज्ञापालनं कार्यम्; योगिनिन्दानिषेधः योगिसेवाविधिश्च; चातुर्वर्ण्यस्य शूद्रहीनानां च धर्माः १९०१.

**आश्रमविचारः –**

महादेवावयवेभ्य आश्रमोत्पत्तिः, आश्रमक्रमसमुच्चयप्रशंसा, आश्रमचतुष्टयस्य वर्णभेदेन व्यवस्था, चित्तशुद्ध्यशुद्धिभ्यामाश्रमविकल्पसमुच्चयव्यवस्था २०८६. वानप्रस्थ्यकालः, वानप्रस्थ्ये भार्यासाहित्यराहित्यविकल्पः, संन्यासकालः, भार्यया पतिसंन्यासोऽनुमन्तव्यः; संन्यासस्य चातुर्विध्यं सलक्षणम्; क्षत्रियस्य संन्यासेऽनधिकारः २०८८.

## गणेशपुराणम्

**वर्णसामान्यधर्माः –**

पुराणश्रवणादयस्त्रैवर्णिक सामान्यधर्माः, याजनादित्रयं ब्राह्मणस्याधिकम्, आतिथ्यं चातुर्वर्ण्यधर्मः १९०२. ऐहिकपारलौकिकसुखकारकाणि कर्माणि कर्तव्यानि; पुण्यातिशयः क्षुद्रवाक्यानुसरणं च साधुशब्दप्रवृत्तिनिमित्तम्; शुभकर्मकर्तव्यता, शरणागतरक्षणादिभिः पुरुषार्थित्वसिद्धिः; आप्तमरणोत्तररोदननिन्दा; चतुर्णां वर्णानां कर्माणि १९०३.

## देवीपुराणम्

**वर्णसामान्यधर्माः –**

ग्रहणकाले मासभेदेन गङ्गादिनदीनां प्रशस्तत्वम्, कासांचित् सर्वमासेषु प्रशस्तत्वम्, प्रशस्तानि क्षेत्राणि च १९०३.

## आदित्यपुराणम्

**आश्रमविचारः –**

आश्रमसमुच्चयः २०८९.

## कल्किपुराणम्

**वर्णसामान्यधर्माः –**

क्षत्रियाणां धर्मो युद्धम् १९०४.

## संग्रहकारः (स्मृतिसंग्रहः)

**वर्णसामान्यधर्माः –**

तीर्थादावसंभवे गृहे ग्रहणस्नानम्; ग्रहणे निद्रामूत्रोत्सर्गादीनां दुष्फलानि; ग्रहणे पत्रादिच्छेदननिषेधः; निषिद्धकालेऽपि नैमित्तिकं क्षौरम् १९०४. सकश्रुकयतिविधवयोः निष्कश्रुकसधवायाश्च दर्शनस्य निषेधः; गृहस्थवनस्थयतिभ्यो यथाक्रमं सिद्धान्नगोरसकाञ्चन-

दाननिषेधः १९०५.

**अनुपनीतधर्माः —**

कृतचूडानुपनीतस्य वेदमन्त्ररहिते पितृश्राद्धेऽधिकारः १९२९.

**आश्रमविचारः —**

संन्यासप्रशंसा २०८९.

**स्मृत्यर्थसारः**

**वर्णसामान्यधर्माः —**

ग्रहणे वर्ज्यानि, ग्रहणे रात्रिस्नानानुमतिः, ग्रहणसंबन्धेन भोजनविषयकविधिनिषेधाः; त्रैवर्णिकं प्रति पैष्टीसुरापानस्य ब्राह्मणं प्रति मद्यपानस्य च निषेधः; ग्रहणे नद्यादिरजोदोषाभावः १९०५.

**अनुपनीतधर्माः —**

अनुपनीतस्योच्छिष्टभक्षणे दोषाभावः, कामचारकामवादकामभक्षाः महापातकादन्यत्र, अस्पृश्यस्पर्शे शुद्धिकारणानि, पितृश्राद्धादन्यत्र वेदमन्त्रानधिकारः १९२९.

**आश्रमविचारः —**

ब्रह्मचर्यावधिः, आश्रमसमुच्चयः, ब्रह्मचर्याश्रमे त्रैवर्णिकानामधिकारः २०८९.

**कुमारिलकारिका:**

**आश्रमविचारः —**

ब्रह्मचर्यकालावधिः २०८९.

**त्रिकाण्डमण्डनकारिका:**

**आश्रमविचारः —**

मृतपत्नीकस्य संन्यासो गार्हस्थ्यं वा मतभेदेन २०८९.

**रेणुकारिका:**

**वर्णसामान्यधर्माः —**

यथाशास्त्रमापद्धर्मस्वीकारः अनापदि तत्त्यागश्च १९०५.

**आश्रमविचारः —**

ब्रह्मचर्यकालावधिः, कलौ दीर्घकालब्रह्मचर्यनिषेधः २०९०.

**जीवन्मुक्तिविवेकः**

**आश्रमविचारः —**

विविदिषासंन्यासविद्वत्संन्यासौ क्रमेण विदेहमुक्तिजीवन्मुक्तिहेतू, वैराग्यं संन्यासहेतुः, मन्द-तीव्र-तीव्रतरभेदैर्वैराग्यत्रैविध्यम्, मन्दवैराग्यं न संन्यासहेतुः, तीव्रतीव्रतरवैराग्ययोर्व्यवस्थया चतुर्विधसंन्यासहेतुत्वम्, त्रिविधवैराग्यलक्षणानि, एतेषां संग्रहश्लोकविषयाणां गद्येन सविस्तरं विवरणम् २०९०.

**अनिर्दिष्टकर्तृकवचनानि**

**वर्णसामान्यधर्माः —**

ब्राह्मणहत्यानिषेधः, ब्राह्मणस्य निष्कारणं वेदाध्ययनविधिः, सुरापानमद्यव्यवहारनिषेधः संतोषक्षमादिगुणविधिश्च; सर्वाश्रमिणां तीर्थयात्राविधिः; श्रौतस्मार्तागमोक्तधर्माः सर्वद्विजसाधारणाः, विप्रस्य तु श्रौतः प्रशस्यतरः; सुजनसंगतिदुर्जनत्यागविधिः, सुजनदुर्जनलक्षणानि; स्त्रीशूद्रयोः शिवकेशवस्पर्शनिषेधः; अब्राह्मणायोच्छिष्टदानस्य निषेधः; शूद्रस्य द्विजशुश्रूषातिरिक्ततपस्यनधिकारः मन्त्रानधिकारश्च १९०६. द्विजशुश्रूषादानपाकयज्ञादयः शूद्रधर्माः; मृतगुरुकस्य शिष्यस्य गुरुपर्वणि कृत्यम्; सर्ववर्णगुरुत्वं ब्राह्मणस्यैव १९०७. शूद्रस्य द्विजशुश्रूषा धर्मः तपस्यनधिकारश्च, ब्राह्मणस्य शूद्रान्मन्त्रग्रहणे शूद्रप्रशंसायां च दोषः; शूद्रस्य नादरहितमन्त्रैर्नित्यपूजायामधिकारः; वर्णभेदेन वैदिकतान्त्रिककर्माधिकारभेदः बलभेदश्च; निन्दानिकृत्यार्जवानां फलानि, अगम्या देशाः; धनादीनां रक्षणीयत्वम्, व्याध्यादीनामनुपेक्षणीयत्वम्, बिभीतकादिच्छायानामनाश्रयणीयत्वम्, गोपुच्छादिजलविप्रुषां त्याज्यत्वम्; अन्तरागमननिषेधः; विशिष्टोऽनृतवादः; पूर्तदानाहिंसासु सर्ववर्णाधिकारः १९०८. म्लेच्छशब्दासाधुशब्दोच्चारणनिषेधः; विषयविशेषेष्वनृतवचनानुज्ञा; स्तेयनिषेधः; देवर्षिपितृनामोच्चारणनिषेधः; रोगयुक्तादिषु नित्यकर्महानौ पापाभावः; श्रमप्रशंसा; अनिर्णिक्तपादस्याप्रवेश्यानि; उपकारव्यापृतशस्याकस्मादपकारनिष्पत्तौ न दोषः; मद्यपानेन पातित्यम्; आपद्धर्मोऽपि प्रत्यवायकारणम्; ग्रहणादिनिमित्तकदानानां पूर्तत्वम्; शूद्रधर्मः शुश्रूषा; चण्डालस्य दूरतः परिहार्यत्वम्; ब्राह्मणस्य मद्यपाननिषेधः १९०९. सुरापाननिषेधस्य जातिप्रयुक्तत्वम्; नित्यादिकर्मसु ग्रहणवेधदोषाभावः; ग्रहणादिषु सूतकाभावः नक्षत्रविशेषेषु ग्रहणस्य दर्शननिषेधः; ग्रस्तचन्द्रास्तमने मोक्षस्नानादिकालविधिः;

उपोषणग्रहणदर्शनपूर्वकस्नानश्राद्धफलविधिः; ग्रहण-निमित्तककर्मसु सूतकादिदोषाभावः; अमन्त्रक-स्नाननिमित्तानि; सूर्यग्रहणे तीर्थभेदेन स्नानफलभेदः १९१०. ग्रहणस्पर्शमध्यमोक्षकालकृतकर्मभिर्देवपितृ-राक्षसानां तृप्तिर्यथाक्रमम्; ग्रहणभागभेदेन स्नानहोमा-दिविधानम्; ग्रस्तास्तमनोत्तरं भोजनकालः; ग्रहणे अभ्यङ्गस्नाननिषेधः तदपवादश्च; मलमासेऽपि ग्रहण-स्नानश्राद्धादीनां कर्तव्यता; ग्रहणे रात्रिस्नानानुमतिः; ग्रस्तास्तमनोत्तरभोजनकालः; ग्रहणदोषाभाववन्तः पदार्थाः १९११. ग्रहणशिष्टान्नत्यागः; ग्रहणदिवसे भोजनकालनियमः; वपने मुखादिङ्नियमः वपनप्रकारश्च १९१२. क्षौरे नक्षत्रादिविधानम्; राज्ञां श्मश्रुकर्मणोऽ-वान्तरकालः; अशुभर्क्षकृतक्षौरस्य शुभर्क्षे पुनः कारणम्, आहिताग्नेः प्रशस्तः क्षौरकालः; पञ्चा-शत्तमवर्षपर्यन्तं रागप्राप्तक्षौरस्य निषेधः तदूर्ध्व-मैच्छिकत्वं च; क्षौरे वर्ज्याः कालाः १९१३. क्षौरनिषेधस्यापवादः; क्षौरदोषनाशकः श्लोकः; मन्त्रादिषु भावनानुसारिणी सिद्धिः १९१४.

**अनुपनीतधर्माः –**

अकृतचूडस्य पितृमेधानधिकारः; अगृहीताक्षरस्यापि पितृसंस्काराधिकारः; पापिनोऽनुपनीतस्य चतुर्थांशः प्रायश्चित्तम् १९३०.

**आश्रमविचारः –**

ब्रह्मचर्याविधिः; गार्हस्थ्यप्रशंसा; वर्णभेदेनाऽऽश्रम-व्यवस्था, विरक्ताविरक्तभेदेनाऽऽश्रमविकल्पसमुच्चय-व्यवस्था २०९४. ब्रह्मचर्याविधिः; क्षत्रियस्य यति-धर्मेऽधिकारः; वानप्रस्थ्यावधिः; संन्यासप्रशंसा २०९५.



# धर्मकोशः

## वर्णाश्रमधर्मकाण्डम्



## §वर्णसामान्यधर्माः

### *ग्रहणविचारः

अत्र केचिद्बौद्धतुल्या आहुः – "ग्रहणस्य निमित्तत्वेन तन्निश्चयस्य प्रयोजकत्वात् ज्योतिःशास्त्रादिना जातस्य ज्ञानस्य निमित्तत्वे प्राप्तेऽपि – 'स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने। चन्द्रसूर्योपरागे तु यावद्दर्शनगोचरे॥' इति जाबाल्यादिवचनेषु दृशिप्रयोगाच्चाक्षुषज्ञानस्यैवोपसंहार-न्यायेन निमित्तत्वम्। अन्यथा दृशौ लक्षणा स्यात्। तेन मेघाच्छादनेऽन्धादीनां जन्मसप्ताष्टेत्यादिनिषिद्धदर्शनानां च स्नानश्राद्धादौ नाधिकारः" इति। कल्पतरुरप्याह – 'दर्शनशब्देन चाक्षुषज्ञानं गृह्यते, न ज्ञानमात्रम्, अज्ञातस्य निमित्तत्वासंभवान्निमित्तत्वमहिम्नैव ज्ञानलाभेन दर्शनपद-वैयर्थ्यापत्तेः। तेन चाक्षुषधीयोग्यः कालः पुण्यः। योग्यत्वं च प्रयत्नानपनेयचाक्षुषज्ञानप्रतिबन्धकराहित्यम्। तेन मेघच्छन्ने योग्यताभावान्न स्नानादि' इति। निर्णया-मृतेऽप्येवम्। तदेतत्तुच्छम्। यदि चाक्षुषज्ञानं निमित्तं स्यात्तदा 'सूर्यग्रहो यदा रात्रौ दिवा चन्द्रग्रहस्तथा। तत्र स्नानं न कुर्वीत दद्याद्दानं न च क्वचित्॥' इति वाक्यं व्यर्थं स्यात्, चाक्षुषज्ञानाभावेन प्राप्त्यभावात् तत्पूर्वकत्वाच्च निषेधस्य। न चेदं ग्रस्तास्तपरम्, रविचन्द्रयोरस्तानन्तरं रात्रिदिवाग्रहणत्वादिति वाच्यम्, तत्रपदस्य ग्रहपरत्वेऽ-धिकरणत्वायोगात्, निमित्तपरत्वे च तद्ग्रहनिमित्तक-स्नानदानादेरस्तात्प्रागप्यभावापत्तेः। अथ तत्रेति रात्रिदिने उच्येते 'सा वैश्वदेवी' इतिवद्गुणभूते अपि। तन्न, तादृशमन्त्रलिङ्गाभावात्, तयोर्निमित्तत्वेऽधिकरणत्वे वाऽन्यप्रयुक्तस्नानाद्यभावापत्तेश्च। किंच, 'नेक्षेतोद्यन्त-मादित्यं नास्तं यन्तं कदाचन। नोपरक्तं न वारिस्थं न मध्यं नभसो गतम्॥' (मस्मृ. ४।३७) इति मनुवचनं बाध्येत, 'दृष्टोऽरिष्टप्रदो राहुः' इत्यादि च। न चात्र विहिते दर्शने निषेधाप्रवृत्तिवत्पर्युदासनीयताऽपि न युक्तेति वाच्यम्, दर्शनस्य निमित्तत्वानुवादेन विधेयत्वाभावात्। एतच्चाग्रे वक्ष्यामः। तत्त्वे वा दर्शनस्य विधौ तत्र स्नानविधौ च विरुद्धत्रिकद्वयापत्तेः। अस्तु सकृद्दर्शनविधानेन संकोच इति चेन्न। 'मुक्तिं दृष्ट्वा ततः स्नायात्' इति मुक्तिस्नानेऽपि चाक्षुषज्ञानस्य निमित्तत्वापत्तेः। अस्तु, किं नश्छिन्नमिति चेत्। न, ग्रस्तास्ते 'तयोः परेद्युरुदये दृष्ट्वाऽभ्यवहरे-च्छुचिः। इति दर्शनोत्तरं भोजनविधानादन्धस्य पूर्ववेधकाल

---

§ प्रकरणेऽस्मिन् वर्णत्वावच्छेदेन सर्ववर्णानुद्दिश्य विहिताः, द्विजातित्वाद्यवच्छेदेनानेकवर्णानुद्दिश्य विहिताः, ब्राह्मणत्वाद्यवच्छेदेनैकैकं वर्णमुद्दिश्य विहिताश्च आश्रमविशेषनिरपेक्षा धर्माः संगृह्यन्ते। तथा अध्ययनेज्यादीनां केषांचिद्धर्माणामाश्रमसापेक्षाणामपि तदीयामाश्रमसापेक्षतामुपेक्ष्य केवलमनेकवर्णानुष्ठेयत्वविवक्षया यानि सामान्यरूपेण विधानानि तान्यत्रैव संगृहीतानि। तेषामेव सेतिकर्तव्यताकानामाश्रमिविशेषोद्देशेन विशेषरूपेण यानि विधानानि तानि तत्तदाश्रमिविशेषधर्मेषु संग्रहीष्यमाणेषु संग्रहीष्यन्ते। किंच, सत्याहिंसादीनां सामान्यानामपि धर्माणां गृहस्थधर्मेषु आदरातिशयार्थमनुवादोपपत्तेः गृक., गृर. इत्यादिगृहस्थधर्मविषयकेभ्योऽपि ग्रन्थेभ्यस्तद्विषयकाणि वचनान्यत्रैव संगृहीतानि।

* सामान्यतः साकल्येन विषयबोधार्थं निर्णयसिन्धुगतः शास्त्रार्थः अत्र संगृहीतः।

इव यावद्दर्शनं भोजननिषेधापत्तिः। मध्येऽन्धीभूतस्य सुतरां यावच्चक्षुःप्राप्त्युपवासप्रसङ्गश्च। अथान्नलोलुपतया तत्र ज्ञानमात्रं विवक्ष्येत, तत्पूर्वमपि निर्लज्जेन स्वीक्रियताम्। एतेन यत्केनचिदुक्तं स्पर्शस्नानं मुक्तिस्नानं च यस्य दर्शनं तेनैव कार्यं नान्येन, क्त्वाप्रत्ययेन समानकर्तृकत्वावगतेरिति, तन्निरस्तम्। का तर्हि तस्य गतिः? दृशेरुद्देश्यविशेषणत्वात् ग्रहैकत्ववदविवक्षयाऽर्थतःसिद्धज्ञानमात्रानुवादत्वे सर्वं सुस्थम्। अङ्गुल्याद्यनादेश्यग्रहव्यावृत्त्या वा दर्शनस्यार्थवत्त्वम्। न चोक्तयोग्यताऽपि साध्वी, दर्शनोत्तरं मेघच्छन्ने योग्यताभावापत्त्या दानाद्यभावापत्तेः। तेन तत्तद्रेखावच्छेदेन ज्योतिःशास्त्रवेद्यत्वमेव योग्यता। किं च – 'रजसो दर्शने नारी त्रिरात्रमशुचिर्भवेत्।' इत्यत्राप्यन्धस्त्रीणामाशौचाभावप्रसङ्गः। यत्तु वर्धमानेनोक्तम् – ज्ञानोत्तरं ह्यधिकारः, न ज्ञानकाले, स्नानकाले ज्ञानाभावात्। एवं दर्शनोत्तरं मुक्तिपर्यन्तमस्त्येव योग्यतेति, तदपि प्रतिज्ञामात्रम्। किंच, ग्रस्तास्ते 'तयोः परेद्युरुदये दृष्ट्वाऽभ्यवहरेच्छुचिः।' इत्यादिवाक्यवैयर्थ्यापत्तिः, चाक्षुषज्ञानान्यथानुपपत्त्यैवार्थादुदये स्नानसिद्धेः। ननु मुक्तिस्नाने शास्त्रीयमेव ज्ञानं निमित्तम्, न चाक्षुषम्, 'चन्द्रसूर्यग्रहे नाद्यात्तस्मिन्नहनि पूर्वतः। राहोर्विमुक्तिं विज्ञाय स्नात्वा कुर्वीत भोजनम्॥' इति वृद्धगौतमेन विज्ञायेति ज्ञानमात्रोक्तेः। यत्तु – 'मुक्तिं दृष्ट्वा तु भोक्तव्यं स्नानं कृत्वा ततः परम्' इति, तदपि ज्ञानमात्रपरम्, 'मेघमालादिदोषेण यदि मुक्तिर्न दृश्यते। आकलय्य तु तं कालं स्नात्वा भुञ्जीत वाग्यतः॥' इति गौडनिबन्धे वचनात्। मैवम्, अज्ञातस्य निमित्तत्वाभावेन निमित्तमहिम्नैव ज्ञानलाभे वाक्यवैयर्थ्यात्, ग्रस्तास्तेऽपि तदापत्तेश्च। किंच, दर्शनं पुंसो विशेषणमुपलक्षणं वा? नाऽऽद्यः, दर्शनावच्छिन्ने काले स्नानतुलादानादेर्बाधात्। दर्शनविच्छेदे कृतमपि स्नानादि न ग्रहणनिमित्तं स्यात्। नान्त्यः, 'यावद्दर्शनगोचरे' इति यावत्पदवैयर्थ्यप्रसङ्गात् दृष्टग्रहणोत्तरमपि स्नानाद्यापत्तेश्च। ज्ञानपक्षेऽप्येष दोषस्तुल्य इति चेत्, मूर्खोऽसि। यदि ज्ञानवाचकं पदं श्रूयेत, ततस्तस्यान्वयो विचार्येत। दृशिस्तु श्रूयत इति वैषम्यम्। कथं तर्हि ज्ञानं लभ्यते? 'संक्रान्तौ स्नायात्' इतिवदर्थादित्यवेहि। अश्रुतत्वादेव नोद्देश्यविशेषणविवक्षाकृतो वाक्यभेदोऽपि। अस्तु तर्हि दृष्टं ग्रहणं निमित्तमिति चेत्, ग्रस्तास्तेऽस्तोत्तरं स्नानापत्तेः विशिष्टोद्देशे वाक्यभेदाच्च। तवाप्येतत्तुल्यमिति चेत्, 'यावद्दर्शनगोचरे' इति वचनेन तन्निषेधात्। तव त्वन्यग्रह इव ग्रस्तास्तेऽपि स्यात्। किंच, दर्शनस्य विधिरनुवादो वा? आद्ये ग्रहणोद्देशेन दर्शनविधिः, उत दर्शनविशिष्टस्नानविधिः, उत स्नानोद्देशेन दर्शनविधिः? नाऽऽद्यः, ग्रहोद्देशेन स्नानविधाने दर्शनविधाने च वाक्यभेदात्। एतेन द्वितीयोऽपि परास्तः। न तृतीयः, स्नानस्याप्राप्तेः दर्शनस्य निमित्तत्वेनाविधेयत्वाच्च। अन्यथा सोमवमनादौ प्रसञ्जनविधिः केन वार्येत? अथ नानावाक्येषु क्वचिद्दर्शनविशिष्टस्नानविधिः, क्वचिच्च प्राप्तं दर्शनं निमित्तीकृत्य स्नानमात्रविधिः। तन्न, स्नानस्य प्रधानस्य प्राप्तौ तदङ्गदर्शनप्राप्तिः, तस्यां च निमित्ते सति स्नानमित्यन्योन्याश्रयात्। एवं दर्शनविधौ सति तन्निमित्तकस्नानविधिः, सति च प्रधानस्नानविधौ तदङ्गदर्शनविधिः। एवमधिकारे प्रयोजकत्वे च योज्यम्। क्त्वार्थपूर्वकालत्वविधौ चास्त्येव वाक्यभेदः। अन्यथा स्नानोत्तरमपि दर्शनमङ्गं स्यात्। न द्वितीयः, तत्रापि दर्शनग्रहयोर्निमित्तत्वे स्नानद्वयापत्तेः, दर्शनावृत्तौ नैमित्तिकावृत्तिप्रसङ्गात्, दर्शनविशिष्टग्रहस्य विशिष्टस्यानुवादे वाक्यभेदापत्तेः। न च हविरार्तिवद्विशिष्टं निमित्तमिति वाच्यम्। आर्तिमात्रस्य हि निमित्तत्वे निमेषाद्यार्तेरपि तत्त्वापत्तेर्नैमित्तिकत्वभङ्गात् युक्तं विशिष्टोद्देश्यत्वम्। इह तु ग्रहणमात्रस्य निमित्तत्वे न काचित्क्षतिः। तस्माद्दर्शनवाक्यानां ग्रस्तास्तविषयत्वादनादेश्यग्रहपरत्वाद्वा ज्ञानस्य चार्थतः प्राप्तेस्तदेव निमित्तम्। तेन मेघाद्याच्छादनेऽन्धादेश्च स्नानादि भवत्येवेत्यलं वेदबाह्यैः संलापेन।

सिन्धु. ३०६-३१६

## वेदाः

### गोपालनम्

[१]**आ गावो अग्मन्नुत भद्रमक्र -**
**न्त्सीदन्तु गोष्ठे रणयन्त्वस्मे ।**
**प्रजावतीः पुरुरूपा इह स्यु -**
**रिन्द्राय पूर्वीरुषसो दुहानाः ॥**

गावः आ अग्मन्। अस्मदीयं गृहमागच्छन्तु। उत अपि च भद्रं भजनीयं शुभम् अक्रन् कुर्वन्तु। तथा गोष्ठे अस्मदीये गवां स्थाने सीदन्तु उपविशन्तु। तदनन्तरम् अस्मे अस्मासु रणयन्तु रमन्ताम्। अपि च इह अस्मिन् गोष्ठे पुरुरूपाः नानावर्णा गावः प्रजावतीः प्रजावत्यः संततिसहिताः पूर्वीः बह्व्यः इन्द्राय इन्द्रार्थम् उषसः उषःकालान् प्रति दुहानाः दोग्ध्र्यः स्युः भवेयुः। ऋसा.

[२]**न ता नशन्ति न दभाति तस्करो**
**नाऽऽसामामित्रो व्यथिरा दधर्षति।**
**देवाँश्च याभिर्यजते ददाति च**
**ज्योगित्ताभिः सचते गोपतिः सह॥**

ताः गावः न नशन्ति अस्मत्सकाशान्न नश्यन्तु। किंच, तस्करः चोरोऽपि न दभाति अस्मदीया गा न हिंस्यात्। तथा आमित्रः अमित्रस्य शत्रोः संबन्धि व्यथिः शस्त्रम् आसाम् इमा गाः न आ दधर्षति नाऽऽक्रामतु। गोपतिः एवंभूतानां गवां स्वामी यजमानः याभिः गोभिः देवांश्च इन्द्रादीनुद्दिश्य यजते यजनं करोति, या गा इन्द्रार्थं ददाति च प्रयच्छति च, ताभिः तादृशीभिर्गोभिः सह ज्योगित् चिरकालमेव सचते संगच्छताम्। ऋसा.

[३]**न ता अर्वा रेणुककाटो अश्नुते**
**न संस्कृतत्रमुप यन्ति ता अभि।**
**उरुगायमभयं तस्य ता अनु**
**गावो मर्तस्य वि चरन्ति यज्वनः॥**

रेणुककाटः रेणुकस्य रेणोः पार्थिवस्य रजस उद्भेदकः। कटिर्भेदनकर्मा। अर्वा युद्धार्थमागतोऽश्वः ताः गाः न अश्नुते न प्राप्नुयात्। तथा ताः गावः संस्कृतत्रं विशसनादिसंस्कारं न अभि उप यन्ति नाभिगच्छन्तु। अपि च ताः गावः यज्वनः यागशीलस्य तस्य मर्तस्य मनुष्यस्य उरुगायं विस्तीर्णगमनम् अभयं भयवर्जितं प्रदेशम् अनु उद्दिश्य वि चरन्ति विशेषेण गच्छन्तु। ऋसा.

(१) **ऋसं.** ६।२८।१; **असं.** ४।२१।१; **तैब्रा.** २।८।८।११.

(२) **ऋसं.** ६।२८।३; **असं.** ४।२१।३; **तैब्रा.** २।४।६।९ नासामा (नैना अ); **आश्रौ.** ६।१४, ९।५ प्रथमचरणमात्रम्.

(३) **ऋसं.** ६।२८।४; **असं.** ४।२१।४ टो अश्नुते (टोऽश्नुते); **कासं.** १३।१६।(८१); **तैब्रा.** २।४।६।९मर्तस्य (मर्त्यस्य); **आश्रौ.**६।१४, ९।५ प्रथमचरणमात्रम्.

[१]**गावो भगो गाव इन्द्रो मे अच्छान्**
**गावः सोमस्य प्रथमस्य भक्षः ।**
**इमा या गावः स जनास इन्द्र**
**इच्छामीद्धृदा मनसा चिदिन्द्रम् ॥**

गावः एव मह्यं भगः धनं भवन्तु। इन्द्रः च मे मह्यं गावः गाः अच्छान् यच्छतु। गावः प्रथमस्य हविषां श्रेष्ठस्य सोमस्य भक्षः भक्षणं भवन्तु, अभिषुतस्य हि सोमस्य गव्येनाऽऽज्यादिना संस्क्रियमाणत्वात्। हे जनासः जनाः, इमाः एवंभूताः या गावः सन्ति सः। ता इत्यर्थः। ता एव गावः इन्द्रः भवन्ति, दधिघृतादिरूपेण इन्द्रस्याऽऽप्यायनत्वात्। एवंभूतम् इन्द्रं हृदा श्रद्धायुक्तेन मनसा चित्। चिदित्यप्यर्थे। इच्छामीत् कामय एव। साधनभूताभिर्गोभिः एवंभूतमिन्द्रं यष्टुमिच्छामीत्यर्थः। ऋसा.

[२]**यूयं गावो मेदयथा कृशं चि -**
**दश्रीरं चित्कृणुथा सुप्रतीकम्।**
**भद्रं गृहं कृणुथ भद्रवाचो**
**बृहद्वो वय उच्यते सभासु॥**

हे गावः, यूयं मेदयथ स्नेहयथ। आप्यायनं कुरुथेत्यर्थः। तथा कृशं चित् क्षीणमपि अश्रीरं चित् अश्लीलमपि सुप्रतीकं शोभानाङ्गं कृणुथ कुरुथ। हे भद्रवाचः कल्याणध्वन्युपेता गावः, अस्मदीयं गृहं भद्रं कल्याणं कृणुथ। गोभिरुपेतं कुरुथ। सभासु यागपरिषत्सु हे गावः, युष्माकं बृहत् महत् वयः अन्नम् उच्यते। सर्वैर्दीयत इत्यर्थः। ऋसा.

(१) **ऋसं.** ६।२८।५; **असं.** ४।२१।५ मे अच्छान् गा (म इच्छाद्गा) मीद्धृदा (मि हृदा); **कासं.** १३।१६। (८०); **तैब्रा.**२।८।८।१२ अच्छान् गा (अच्छाद्गा).

(२) **ऋसं.** ६।२८।६; **असं.**४।२१।६; **तैब्रा.** २।८।८।१२ दश्रीरं (दश्लीलं).

**[१]प्रजावतीः सूयवसं रिशन्तीः**
**शुद्धा अपः सुप्रपाणे पिबन्तीः।**
**मा वः स्तेन ईशत माऽघशंसः**
**परि वो हेती रुद्रस्य वृज्याः॥**

हे गावः, यूयं प्रजावतीः प्रजावत्यः वत्साभिर्युक्ताः, भवतेति शेषः। सूयवसं शोभनतृणं रिशन्तीः रिशन्त्यः भक्षणार्थं हिंसन्त्यः भवत। सुप्रपाणे सुखेन पातव्ये तटाकादौ शुद्धाः निर्मलाः अपः उदकानि पिबन्तीः पिबन्त्यश्च भवत। वः युष्मान् स्तेनः तस्करः मा ईशत मेशिष्ट ईश्वरो मा भूत्। तथापि अघशंसः व्याघ्रादिः शत्रुः मा ईशत। अपि च वः युष्मान् रुद्रस्य कालात्मकस्य परमेश्वरस्य हेतिः आयुधं च परि वृज्याः परिवृणक्तु। परिहरतु। ऋसा.

**[२]उपेदमुपपर्चनमासु गोषूप पृच्यताम्।**
**उप ऋषभस्य रेतस्युपेन्द्र तव वीर्ये॥**

आसु गोषु इदम् उपपर्चनम् आप्यायनम् उप पृच्यतां संपृच्यताम्। हे इन्द्र, तव वीर्ये त्वदीयवीर्ये निमित्ते ऋषभस्य गवां गर्भमादधानस्य वृषभस्य रेतसि इदम् उपपर्चनम् आप्यायनम्। गोषु हि आप्यायितासु सतीषु तत्संबन्धिक्षीरादिहविर्द्वारेणेन्द्र आप्यायितो भवतीत्यर्थः। उप इति पुनर्वचनं पादभेदानां पूरणार्थमिति। ऋसा.

सत्यप्रशंसा

**[३]ऋतेन देवः सविता शमायत**
**ऋतस्य शृङ्गमुर्विया वि पप्रथे।**
**ऋतं सासाह महि चित्पृतन्यतो**
**मा नो वि यौष्टं सख्या मुमोचतम्॥**

ऋषिः सत्यप्रशंसां करोति — हे अश्विनौ, देवः द्योतमानः सविता सर्वस्य स्वस्वकर्मणि प्रेरकः एतन्नामको देवः ऋतेन सत्येन शमायते सायंकाले स्वकिरणसमूहं शमयति। ततोऽनन्तरं स एव सविता ऋतस्य सत्यस्य शृङ्गम् अग्रम् उर्विया उरु विस्तीर्णं यथा भवति तथा प्रातःकाले वि पप्रथे विशेषेण प्रथयति सर्वतो विस्तारयति। किंच, पृतन्यतः पृतनामिच्छतः संयुयुत्सोः शत्रोः महि चित् महदपि बलम् ऋतं सत्यं स्वयमेवाभिभवति। इत्थमृतं प्रशस्तमभूत्। तस्माद्युवामपि तेनर्तेन नः अस्माकं सख्यानि मा वि यौष्टम् अत्राऽऽगन्तुमश्वरश्मीन् मुञ्चतमिति। ऋसा.

(१) **ऋसं.** ६।२८।७; **असं.** ४।२१।७ वसं रि (वसे रु) हेती रुद्रस्य वृज्याः (रुद्रस्य हेतिर्वृणक्तु); **तैब्रा.** २।८।८।१२ रिश (रुश) वृज्याः (वृञ्ज्यात्).

(२) **ऋसं.** ६।२८।८; **तैब्रा.** २।८।८।१२ उप ऋष (उपर्ष).

(३) **ऋसं.** ८।८६।५.

गोपालनपरा गोस्तुतिः

**[१]माता रुद्राणां दुहिता वसूनां**
**स्वसाऽऽदित्यानाममृतस्य नाभिः।**
**प्र नु वोचं चिकितुषे जनाय**
**मा गामनागामदितिं वधिष्ट॥**

अस्मिन् द्वृचे(? व्यृचे) गौः स्तूयते या गौः रुद्राणां मरुतां माता जननी, वसूनां दुहिता पुत्री, आदित्यानां स्वसा भगिनी, अमृतस्य पयसः नाभिः आवासस्थानम्, ताम् अनागाम् अनागसम् अदितिम् अदीनां गां गोरूपां देवीं मा वधिष्ट हे जनाः, मा हिंसिष्टेति चिकितुषे चेतनावते जनाय नु इदानीं प्र वोचम् अहं प्रावोचमिति शुश्रूषमाणेभ्य उपदेशः। ऋसा.

**[२]वचोविदं वाचमुदीरयन्तीं**
**विश्वाभिर्धीभिरुपतिष्ठमानाम्।**
**देवीं देवेभ्यः पर्येयुषीं गा-**
**मा माऽवृक्त मर्त्यो दभ्रचेताः॥**

वचोविदं वचसो लम्भयित्रीं वाचम् उदीरयन्तीं पयः पीत्वा पश्चाद्वाचमुदीरयन्तीम्। क्षुधितो हि जनो न वाचमुदीरयति, भुक्त्वा पश्चादुदीरयति। विश्वाभिः सर्वाभिः धीभिः वाग्भिः उपतिष्ठमानां देवीं द्योतमानां देवेभ्यः देवार्थं मा माम् एयुषीम् अव(?आ)गच्छन्तीं गां दभ्रचेताः अल्पबुद्धिः मर्त्यः मनुष्यः परि आ अवृक्त परिवर्जयति। ऋसा.

सप्तानां कामक्रोधजन्यमद्यपानादिदुरवस्थानां त्याज्यत्वं प्रत्यवायजनकत्वं च

**[३]सप्त मर्यादाः कवयस्ततक्षु-**
**स्तासामेकामिदभ्यंहुरो गात्॥**

कवयः मेधाविन ऋषयः सप्त मर्यादाः। कामजेभ्यः

(१) **ऋसं.** ८।१०१।१५; **सामब्रा.** २।८।१४; **तैआ.** ६।१२।१; **आगृ.** १।२४।२५; **हिगृ.** १९।४।२६; **मागृ.** १।९।२३; **पागृ.** १।३।२७.

(२) **ऋसं.** ८।१०१।१६.

(३) **ऋसं.** १०।५।६; **असं.** ५।१।६ मेकामिद (मिदेकाम); **नि.** ६।२७.

क्रोधजेभ्यश्चोद्भूताः पानमक्षाः स्त्रियो मृगया दण्डः पारुष्यमन्यदूषणमिति सप्त मर्यादाः। यद्वा, 'स्तेयं गुरुतल्पारोहणं ब्रह्महत्यां (भ्रूणहत्यां) सुरापानं दुष्कृतकर्मणः पुनः पुनः सेवां पातकेऽनृतोद्यम्' (नि. ६।२७) इति निरुक्ते निर्दिष्टाः सप्त मर्यादाः अवस्थिताः(?तयः) ततक्षुः। तक्षतिः करोतिकर्मा। सुष्ठु लङ्घनीयाश्चक्रुः। त्यक्तवन्त इत्यर्थः। तासां मर्यादानाम् एकामित् एकामेव अंहुरः पापवान् पुरुषः अभि गात् अभिगच्छति। यस्त्वेवं करोति स पापवान् भवतीत्यर्थः। ऋसा.

गोपालनानुषङ्गिकं गोदेवगोष्ठप्रार्थनम्

**[1]नि वर्तध्वं माऽनु गातास्मान्त्सिषक्त रेवतीः।**
**अग्नीषोमा पुनर्वसू अस्मे धारयतं रयिम्॥**

हे गावः, हे आपः, वा यूयं नि वर्तध्वम् अस्मान् प्रत्यागच्छत। माऽनुगात अस्मद्व्यतिरिक्तं यजमानं मा गच्छत। आगत्य च हे रेवतीः रेवत्यः धनवत्यः, यूयम् अस्मान् सिषक्त सेचयत। अवगाहनगोदोहनस्नान-पानादिद्वारेण सेवध्वमित्यर्थः। हे पुनर्वसू पुनःपुनर्वस्तारौ स्तोतॄणां यष्टॄणामाच्छदयितारौ हे अग्नीषोमा अग्नीषोमौ एतन्नामकौ देवौ, युवाम् अस्मे अस्मासु रयिं व्रीह्यादिलक्षणं धनं धारयतं स्थापयतम्। ऋसा.

**[2]पुनरेना नि वर्तय पुनरेना न्या कुरु।**
**इन्द्र एणा नि यच्छत्वग्निरेना उपाजतु॥**

अत्र मन्त्रद्रष्टा स्वात्मानं प्रति ब्रूते—हे मदीयात्मन्, त्वम् एनाः एताः अन्यतोऽभिगन्त्रीर्गाः अपो वा पुनः नि वर्तय पुनः पुनर्मदभिमुखी कुरु। तदनन्तरम् एनाः एताः पुनः भूयो भूयः न्या कुरु नियताः आत्मायत्ताः कुरु। किंच, इन्द्रः अपि तव सहायभूतः सन् एनाः एताः नि यच्छतु त्वदायत्ताः करोतु। अग्निः च एनाः एताः गाः अपो वा उपाजतु उपगमयतु उपक्षिपतु वा। उपयोग्याः करोत्वित्यर्थः। ऋसा.

**[3]पुनरेता नि वर्तन्तामस्मिन् पुष्यन्तु गोपतौ।**
**इहैवाग्ने नि धारयेह तिष्ठतु या रयिः॥**

एनाः एताः ईदृश्यो गावः आपो वा पुनः नि वर्तन्तां भूयो भूयो मां प्रत्यागच्छन्तु। आगत्य च गोपतौ सास्नादिमतीनां धेनूनां वृष्टिलक्षणानामपां पालके अस्मिन् ईदृशे मयि पुष्यन्तु आत्मायत्तत्वेन स्थित्वा पुष्टा भवन्तु। पुष्टाः सतीस्ताः हे अग्ने, त्वम् इहैव अस्मिन्नेव मयि नि धारय नियमेन स्थापय। या रयिः यदपि व्रीह्यादिकं धनमस्ति तदपि धनं गोसहितम् इह अस्मिन्नेव गोपतौ मयि तिष्ठतु निवसतु। ऋसा.

**[1]यन्नियानं न्ययनं संज्ञानं यत्परायणम्।**
**आवर्तनं निवर्तनं यो गोपा अपि तं हुवे॥**

नियानम्। अधिकरणे ल्युट्। नियमेन यान्ति आगच्छन्ति गावोऽत्रेति नियानं गोष्ठाख्यं स्थानं यत्। अस्तीति शेषः। यच्छब्दयोगात्तच्छब्दोऽध्याहर्तव्यः। हुवे इति क्रियापदं सर्वत्रानुषज्यते। तत्स्थानं हुवे आह्वयामि। आह्वानमभिमुखी-करणम्। तेन चात्र तत्पूर्विका प्रार्थना लक्ष्यते। गोसहितं गोष्ठं प्रार्थये इत्यर्थः। न्ययनम्। भावे ल्युट्। नियमेन गृहं प्रति प्राप्तिलक्षणं गमनं यदस्ति तदपि प्रार्थये। निवर्तनं वने चरित्वा गृहं प्रति यदागमनमस्ति तदपि प्रार्थये। यः अपि गोपाः गवां पालकोऽस्ति तम् अपि हुवे प्रार्थये। सर्वगुणोपेता गाः प्रार्थये इत्यर्थः। ऋसा.

**[2]य उदानड् व्ययनं य उदानट् परायणम्।**
**आवर्तनं निवर्तनमपि गोपा नि वर्तताम्॥**

यः गोपाः गोपालः व्ययनं नष्टानां गवामन्वेषणार्थं विविधं गमनम् उदानट् व्याप्नोति अनुभवति। यः परायणं परागमनम् उदानट् व्याप्नोति। वनं प्रति गवां चरणाय गमनमित्यर्थः। यश्च आवर्तनं वनचारिणीभिर्गोभिः सह प्रवर्तनमनुभवति। यः अपि गोपाः निवर्तनं गोभिः सह वनाद्गृहं प्रति निर्गमनमनुभवति। सोऽपि गोपालः नि वर्ततां गोभिः सह वनाद्गृहं प्रति क्षेमेणाऽऽगच्छतु। ऋसा.

**[3]आ निवर्त नि वर्तय पुनर्न इन्द्र गा देहि।**
**जीवाभिर्भुनजामहै॥**

हे इन्द्र, त्वम् आ निवर्त आनिवर्तस्व अस्मदभिमुखो भव। ततोऽन्यतो गच्छन्तीर्गाः नि वर्तय अस्मदभिमुखीः

(१) **ऋसं.** १०।१९।१; **शाब्रा.** १३।८ प्रथमचरणमात्रम्; **माश्रौ.** ९।४।१।२२.

(२) **ऋसं.** १०।१९।२.

(३) **ऋसं.** १०।१९।३; **माश्रौ.** ९।४।१।२२ (पुनरेना आ वर्तय मयि तिष्ठन्तु गोपतौ। पुनरेना आ वर्तय मयि तिष्ठतु यो रयिः॥).

(१) **ऋसं.** १०।१९।४.

(२) **ऋसं.**१०।१९।५;**असं.** ६।७७।२ (य उदानट् परायणं य उदानण्न्यायनम्। आवर्तनं निवर्तनं यो गोपा अपि तं हुवे॥).

(३) **ऋसं.** १०।१९।६, ७.

कुरु। एवं कृत्वा च हे इन्द्र, त्वं पुनः पश्चात् नः अस्मभ्यं गाः देहि प्रयच्छ। त्वया दत्ताभिः जीवाभिः चिरं जीवन्तीभिः सर्वस्य जीवयित्रीभिर्वा गोभिः भुनजामहै वयं भुञ्जीमहि। यद्वा भुजिरत्रान्तर्भावितण्यर्थः। देवपितॄन् संभोजयेमहि। ऋसा.

**परि वो विश्वतो दध ऊर्जा घृतेन पयसा।**
**ये देवाः के च यज्ञियास्ते रय्या सं सृजन्तु नः॥**

हे देवाः, विश्वतः सर्वतः स्थितान् वः युष्मान् ऊर्जा गोसंबन्धिना दधिलक्षणेनान्नेन घृतेन आज्येन पयसा क्षीरेण च परि दधे संधारयामि युष्मभ्यं हविर्द्वारेण प्रयच्छामि। न केवलमात्मानं पुष्णामीत्यर्थः। एतज्ज्ञात्वा ये के च देवाः यज्ञियाः यज्ञार्हाः सन्ति ते देवाः नः अस्मान् रय्या गोलक्षणेन धनेन सं सृजन्तु संयोजयन्तु। ऋसा.

**[1]आ निवर्तन वर्तय नि निवर्तन वर्तय।**
**भूम्याश्चतस्रः प्रदिशस्ताभ्य एना नि वर्तय॥**

मन्त्रद्रष्टर्षिः स्वात्मानं गाश्च संबोध्याऽऽह — हे मदीयात्मन्, त्वं गाः आ वर्तय। आकारोऽप्यनेनापि संबध्यते। मदभिमुखीः कुरु। स्तुत्या यागेन च ताः प्रसाद्योपनमयेत्यर्थः। हे गावः, यूयमपि प्रसाद्यमानाः आ निवर्तन आनिवर्तध्वम् आभिमुख्येनाऽऽगच्छत। पुनरप्याह — हे मदीयात्मन्, त्वं नि वर्तय गोसंचरणस्थानादपगच्छन्तीर्गा इतोऽभिगन्त्रीः कुरु। यूयमपि हे गावः, निवर्त्यमानाः सत्यः निवर्तन निवर्तध्वम्। इदानीं स्वात्मा गावश्चर्षिं प्रति ब्रुवते — हे ऋषे, अहं कुतो गा निवर्तयामीति, कुतो वयं निवर्तयामहे इति आत्मना गोभिश्च पृष्टः सन्नाह — भूम्याः पृथिव्याः चतस्रः प्रदिशः चतुःसंख्यायुक्ताः प्रकृष्टा या दिशः सन्ति ताभ्यः दिग्भ्यः एनाः गाः नि वर्तय हे आत्मन्, मदभिमुखीः कुरु। हे गावः, यूयमपि ताभ्यो दिग्भ्यो निवर्तध्वमिति सामर्थ्याल्लब्धम्। यद्वा, अब्दैवतपक्षेऽपि सूक्तार्थो यथा घटते तथा योजना कर्तव्या। ऋसा.

(१) **ऋसं.** १०।१९।८; **तैसं.** ३।३।१०।१ (आ वर्तन वर्तय नि निवर्तन वर्तयेन्द्र नर्दबुद। भूम्याश्चतस्रः प्रदिशस्ताभिरा वर्तया पुनः॥); **मैसं.** १३।९ (२३) (आवर्तय निवर्तया वर्तन वर्तय नि निवर्तन वर्तय। इन्द्र नन्दबल भूम्याश्चतस्रस्सूक्तयस्ताभ्यस्त्वा वर्तयामसि॥).

सत्यवचनकर्तृकरक्षणप्रार्थनागम्या
सत्यवचनकर्तव्यता

**[1]सा मा सत्योक्तिः परि पातु विश्वतो**
**द्यावा च यत्र ततनन्नहानि च।**
**विश्वमन्यन्नि विशते यदेजति**
**विश्वाहाऽऽपो विश्वाहोदेति सूर्यः॥**

सा सत्योक्तिः तत् सत्यवचनं मा मां विश्वतः सर्वतः परि पातु परिरक्षतु। यया सत्योक्त्या यत्र यस्मिन् देशे द्यावा च द्यावापृथिव्यौ अहानि रात्रयः च ततनन् अतन्वन् तत्र विश्वं सर्वम् अन्यत् भूतजातं नि विशते विश्राम्यति। यत् एतद्भूतजातम् एजति कम्पते विश्वाहा सर्वदा आपः च स्यन्दन्ते विश्वाहा सर्वदा सूर्यः च उदेति। सा सत्योक्तिर्मां परिपात्वित्यर्थः। ऋसा.

यज्ञकृत्प्रशंसया अयज्ञकृन्निन्दया च
यजनप्रशंसा

**[2]पृथक् प्रायन् प्रथमा देवहूतयो-**
**ऽकृण्वत श्रवस्यानि दुष्टरा।**
**न ये शेकुर्यज्ञियां नावमारुह-**
**मीर्मैव ते न्यविशन्त केपयः॥**

हे इन्द्र, तव प्रसादात् ते पृथक् प्रायन् देवलोकान् पृथग्गच्छन्ति ये प्रथमाः पूर्वे मुख्या वा देवहूतयः देवानामाह्वातारः। कर्तरि कृत्। किंच, दुष्टरा अन्यैर्दुस्तराणि श्रवस्यानि श्रवणीयानि यशांसि अकृण्वत अकुर्वत। किंच, ये त्वत्प्रसादरहिता जनाः यज्ञियां यज्ञसंबन्धिनीम्। यज्ञमयीमित्यर्थः। नावम् आरुहम् आरोढुं न शेकुः न शक्नुवन्ति ते केपयः कुत्सितपूयकर्माणः पापकर्माणो जनाः ईर्मैव ऋणेनैव न्यविशन्त नीचैरविशन्त। अधोगतिं प्राप्ता इत्यर्थः। तथा च यास्कः — 'पृथक् प्रायन् पृथक् प्रथतेः प्रथमा देवहूतयो ये देवानाह्वयन्ताकुर्वत श्रवणीयानि यशांसि दुरनुकराण्यन्यैर्येऽशक्नुवन्यज्ञियां नावमारोळ्हुमथ ये नाशक्नुवन्यज्ञियां नावमारोळ्हुमीर्मैव ते न्यविशन्त ऋणेनैव ते न्यविशन्तास्मिन्नेव लोक इति वा' (नि. ५।२५) इति। ऋसा.

(१) **ऋसं.** १०।३७।२.
(२) **ऋसं.** १०।४४।६; **असं.** २०।९४।७; **नि.** ५।२५.

[1]**एवैवापागपरे सन्तु दूढ्यो-**
**ऽश्वा येषां दुर्युज आयुयुज्रे।**
**इत्था ये प्रागुपरे सन्ति दावने**
**पुरूणि यत्र वयुनानि भोजना॥**

एवैव एवमेव दूढ्यः दुर्बुद्धयः अपरे अन्ये। अयज्वान इत्यर्थः। अपाक् अपाचीना अधोगन्तारः सन्तु भवन्तु, येषां यज्ञमकुर्वताम् अश्वाः दुर्युजः दुर्योजाः प्रबलाः अश्वाः आयुयुज्रे रथेषु युज्यन्ते। ये सत्यपि सामर्थ्ये न यजन्ति ते नरकं गच्छन्तीति भावः। किंच, इत्था इत्थं ते स्वर्गगामिनो भवन्ति ये उपरे यज्वानः प्राक् मरणात्पूर्वमेव दावने देवानां हविर्दानाय सन्ति भवन्ति। यत्र येषु च यज्ञकारिषु वयुनानि प्रज्ञानानि कान्तानि वा भोजना भोग्यानि धनानि पुरूणि बहूनि देवेभ्यो दानाय सन्ति। ऋसा.

सत्यप्रशंसा

[2]**सत्येनोत्तभिता भूमिः ...........॥**

सत्येन अनृतप्रतियोगिना धर्मेण भूमिरुत्तभिता उद्धृता फलिता भवतीत्यर्थः। ऋसा.

श्रद्धायाः प्रशंसा प्रार्थना च

[3]**श्रद्धयाऽग्निः समिध्यते श्रद्धया हूयते हविः।**
**श्रद्धां भगस्य मूर्धनि वचसाऽऽवेदयामसि॥**

पुरुषगतोऽभिलाषविशेषः श्रद्धा। तया श्रद्धया अग्निः गार्हपत्यादिः समिध्यते संदीप्यते। यदा हि पुरुषे श्रद्धा अग्निगोचर आदरातिशयो जायते तदैष पुरुषोऽग्नीन् प्रज्वालयति, नान्यदा। श्रद्धया एव हविः पुरोडाशादिहविश्च हूयते आहवनीये प्रक्षिप्यते। यद्वा, अस्य सूक्तस्य द्रष्ट्र्या श्रद्धाख्ययाऽग्निः समिध्यते। श्रद्धाम् उक्तलक्षणायाः श्रद्धाया अभिमानिदेवतां भगस्य भजनीयस्य धनस्य मूर्धनि प्रधानभूते स्थानेऽवस्थितां वचसा वचनेन स्तोत्रेण आ वेदयामसि अभितः प्रख्यापयामः। इदन्तो मसिः।

ऋसा.

[4]**प्रियं श्रद्धे ददतः प्रियं श्रद्धे दिदासतः।**
**प्रियं भोजेषु यज्वस्विदं म उदितं कृधि॥**

हे श्रद्धे, ददतः चरुपुरोडाशादीनि प्रयच्छतो यजमानस्य प्रियम् अभीष्टफलं कुरु। दिदासतः दातुमिच्छतश्च हे श्रद्धे, प्रियं कुरु। मे मम संबन्धिषु भोजेषु भोक्तृषु भोगार्थिषु यज्वसु कृतयज्ञेषु जनेषु च इदम् उदितम् उक्तं प्रियं कृधि कुरु।

ऋसा.

**यथा देवा असुरेषु श्रद्धामुग्रेषु चक्रिरे।**
**एवं भोजेषु यज्वस्वस्माकमुदितं कृधि॥**

देवाः इन्द्रादयः असुरेषु उद्गूर्णबलेषु यथा श्रद्धां चक्रिरे अवश्यमिमे हन्तव्या इत्यादरातिशयं कृतवन्तः एवं श्रद्धावत्सु भोजेषु भोक्तृषु भोगार्थिषु यज्वसु यष्टृषु अस्माकम् अस्मत्संबन्धिषु तेषु उदितं तैरुक्तं प्रार्थितं फलजातं कृधि कुरु। ऋसा.

[1]**श्रद्धां देवा यजमाना वायुगोपा उपासते।**
**श्रद्धां हृदय्ययाऽऽकूत्या श्रद्धया विन्दते वसु॥**

देवाः यजमानाः मनुष्याश्च वायुगोपाः वायुः गोपाः रक्षिता येषां ते तादृशाः सन्तः श्रद्धां देवीम् उपासते प्रार्थयन्ते। हृदय्यया, हृदये भवा हृदय्या, तथाविधया आकूत्या संकल्परूपया क्रियया श्रद्धाम् एव परिचरन्ति सर्वे जनाः। कुतः? इत्यत आह — यतः कारणात् श्रद्धया हेतुभूतया वसु धनं विन्दते लभते श्रद्धावाञ्जनः, तत इत्यर्थः।

ऋसा.

[2]**श्रद्धां प्रातर्हवामहे श्रद्धां मध्यंदिनं परि।**
**श्रद्धां सूर्यस्य निम्रुचि श्रद्धे श्रद्धापयेह नः॥**

श्रद्धां देवीं प्रातः पूर्वाह्णे हवामहे। तथा मध्यंदिनं परि। लक्षणे परेः कर्मप्रवचनीयत्वम्। मध्यंदिनं परिलक्ष्य। मध्यंदिने इत्यर्थः। मध्याह्नेऽपि तां श्रद्धाम् आह्वयामहे। सूर्यस्य सर्वस्य प्रेरकस्याऽऽदित्यस्य निम्रुचि अस्तमयवेलायां सायंसमयेऽपि तामेव श्रद्धाम् आह्वयामहे। ईदृग्रूपे हे श्रद्धे, नः अस्मान् इह लोके कर्मणि वा श्रद्धापय श्रद्धावतः कुरु। ऋसा.

गोपालनम्

[3] **मयोभूर्वातो अभि वातूस्रा**
**ऊर्जस्वतीरोषधीरा रिशन्ताम्।**

(१) **ऋसं.** १०।४४।७; **असं.** २०।९४।७.
(२) **ऋसं.** १०।८५।१; **असं.** १४।१।१.
(३) **ऋसं.** १०।१५१।१; **तैब्रा.** २।८।८।६ हूयते (विन्दते).
(४) **ऋसं.** १०।१५१।२-३; **तैब्रा.** २।८।८।६-७.

(१) **ऋसं.**१०।१५१।४; **तैब्रा.** २।८।८।७ वसु (हविः).
(२) **ऋसं.** १०।१५१।५; **तैब्रा.** २।८।८।७-८ नः (मा).
(३) **ऋसं.** १०।१६९।१; **तैसं.** ७।४।१७।१; **कासंअ.** ४।६
(८) वातूस्रा (वात्युस्रा) रा रि (रावि); **तैब्रा.** ३।८।१८।३ प्रथमचरणमात्रम्.

**पीवस्वतीर्जीवधन्याः पिब-**
**न्त्ववसाय पद्वते रुद्र मृळ॥**

वातः वायुः भूः सुखस्य भावयिता सन् उस्राः गाः अभि वातु अभिगच्छतु। ताश्च गावः ऊर्जस्वतीः रसवतीः ओषधीः बलवन्ति तृणानि आ रिशन्ताम् अभितः स्वादयन्तु। तथा पीवस्वतीः प्रवृद्धाः जीवधन्याः जीवानां प्रीणयित्रीः अपश्च पिबन्तु। हे रुद्र ज्वरादिरोगस्य प्रेक्षणेन संहर्तर्देव, पद्वते पादयुक्ताय अवसाय अन्नाय गोरूपाय मृळ उपदयां(?) कुरु। मा बाधस्वेत्यर्थः। ऋसा.

**[१]याः सरूपा विरूपा एकरूपा**
**यासामग्निरिष्ट्या नामानि वेद।**
**या अङ्गिरसस्तपसेह चक्रु-**
**स्ताभ्यः पर्जन्य महि शर्म यच्छ॥**

या गावः सरूपाः समानरूपाः, याश्च विरूपाः विभिन्नरूपाः, याश्च एकरूपाः एकेनैव वर्णेनोपेताः, यासां च गवां नामानि 'ईडे रन्तेऽदिते' इत्यादीनि इष्ट्या यागेन हेतुना अग्निः वेद जानाति, याः च गाः अङ्गिरसः ऋषयः तपसा पशुप्राप्तिसाधनेन चित्रायागादिलक्षणेन इह अस्मिँल्लोके चक्रुः कृतवन्तः, ताभ्यः सर्वाभ्यो गोभ्यः हे पर्जन्य, महि महत् शर्म सुखं यच्छ प्रदेहि। ऋसा.

**[२]या देवेषु तन्वमैरयन्त**
**यासां सोमो विश्वा रूपाणि वेद।**
**ता अस्मभ्यं पयसा पिन्वमानाः**
**प्रजावतीरिन्द्र गोष्ठे रिरीहि॥**

याः गावः देवेषु यष्टव्येषु तन्वम् आत्मीयं शरीरम् ऐरयन्त हवीरूपेण प्रेरयन्ति, यासां च गवां विश्वा सर्वाणि रूपाणि रूप्यमाणानि क्षीरादीनि श्रय(?प)णद्रव्याणि सोमः वेद जानाति, अस्मभ्यम् अस्मदर्थं पयसा क्षीरेण पिन्वमानाः वर्धमानाः अत एव प्रजावतीः प्रजाभिः वत्सैः उपेताः ताः गाः हे इन्द्र, गोष्ठे अस्मदीये रिरीहि गमय। 'री गतिरेषणयोः'। छान्दसो विकरणस्य श्लुः। ऋसा.

**[३]प्रजापतिर्मह्यमेता रराणो**
**विश्वैर्देवैः पितृभिः संविदानः।**

(१) **ऋसं**.१०।१६९।२; **तैसं**. ७।४।१७।१; **कासंअ**. ४।६(९) रिष्ट्या (र्निष्ट्या).

(२) **ऋसं**. १०।१६९।३; **तैसं**.७।४।१७।१-२ तन्व (तनुव); **कासंअ**. ४।६(१०).

(३) **ऋसं**. १०।१६९।४; **तैसं**. ७।४।१७।२; **कासंअ**. ४।६ (१२) वैः पितृभिः (वैर्यज्ञियैः) शिवाः सती (बह्वीर्भवन्ती) माक (माशु).

**शिवाः सतीरुप नो गोष्ठमाक-**
**स्तासां वयं प्रजया सं सदेम॥**

प्रजापतिः विधाता मह्यं स्तोत्रे एताः गाः रराणः प्रयच्छन्। रातेर्व्यत्ययेन शानच्। छान्दसः शपः श्लुः। 'अभ्यस्तानामादिः' (पासू. ६।१।१८९) इत्याद्युदात्तत्वम्। विश्वैः सर्वैः देवैः पितृभिः च संविदानः ऐकमत्यं गतः सन् शिवाः सतीः कल्याणीर्भवन्तीर्गाः नः अस्माकं गोष्ठं व्रजम् उप गोष्ठसमीपे अकः करोतु। तासां गवां प्रजया संतानेन वयं सं सदेम संगच्छेमहि। सदेराशिषि लिङि 'लिङ्याशिष्यङ्' (पासू. ३।१।८६)।

ऋसा.

परस्परसंगमनस्य भाषणादिव्यवहारेषु परस्परसंवादस्य च सदाचार-रूपस्य प्रार्थनम्

**[१]सं गच्छध्वं सं वदध्वं सं वो मनांसि जानताम्।**
**देवा भागं यथा पूर्वे संजानाना उपासते॥**

हे स्तोतारः, यूयं सं गच्छध्वं संगताः संभूताः भवत। 'समो गम्यृच्छि०' (पासू. १।३।२९) इत्यादिना गमेरात्मनेपदम्। तथा सं वदध्वं सह वदत। परस्परं विरोधं परित्यज्यैकविधमेव वाक्यं ब्रूतेति यावत्। 'व्यक्तवाचां समुच्चारणे' (पासू. १।३।४८) इति वदेरात्मनेपदम्। वः युष्माकं मनांसि सं जानताम्। समानम् एकरूपमेवार्थम् अवगच्छन्तु। 'संप्रतिभ्यामनाध्याने' (पासू. १।३।४६) इति जानातेरात्मनेपदम्। यथा पूर्वे पुरातनाः देवाः संजानानाः ऐकमत्यं प्राप्ताः हविर्भागम् उपासते यथास्वं स्वीकुर्वन्ति। तथा यूयमपि वैमत्यं परित्यज्य धनं स्वीकुरुतेति शेषः।

ऋसा.

**[२]समानो मन्त्रः समितिः समानी**
**समानं मनः सह चित्तमेषाम्।**
**समानं मन्त्रमभि मन्त्रये वः**
**समानेन वो हविषा जुहोमि॥**

(१) **ऋसं**. १०।१९१।२; **असं**. ६।६४।१ प्रथमचरणे (सं जानीध्वं सं पृच्यध्वं); **मैसं**. २।२।६ (२८) वदध्वं (जानीध्वं); **तैब्रा**. २।४।४।४-५ सते (सत).

(२) **ऋसं**. १०।१९१।३; **असं**. ६।६४।२ मनः (व्रतं) उत्तरार्धे (समानेन वो हविषा जुहोमि समानं चेतो अभिसंविशध्वम्।); **मैसं**. २।२।६ (२७) मनः (व्रतं) उत्तरार्धे (समानं क्रतुमभिमन्त्रयध्वꣳ समानेन वो हविषा जुहोमि।); **तैब्रा**. २।४।४।५ उत्तरार्धे (समानं केतो अभिसꣳरभध्वम्। संज्ञानेन वो हविषा यजामः।).

पूर्वोऽर्धर्चः परोक्षकृतः, उत्तरः प्रत्यक्षकृतः। एषाम् एकस्मिन् कर्मणि सह प्रवृत्तानामृत्विजां स्तोतॄणां वा मन्त्रः स्तुतिः शस्त्राद्यात्म(?त्मि)का गुप्तभाषणं वा समानः एकविधोऽस्तु। तथा समितिः प्राप्तिरपि समानी एकरूपाऽस्तु। 'केवलमामक०' (पासू. ४।१।३०) इत्यादिना समानशब्दात् ङीप्। उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम्। तथा मनः मननसाधनमन्तःकरणं चैषां समानम् एकविधम् अस्तु। चित्तं विचारजं ज्ञानं तथा सह सहितं परस्परस्यैकार्थेनैकीभूतम् अस्तु। अहं च वः युष्माकं समानम् एकविधं मन्त्रम् अभि मन्त्रये ऐकविध्याय संस्करोमि। तथा वः युष्माकं स्वभूतेन समानेन साधारणेन हविषा चरुपुरोडाशादिना अहं जुहोमि। 'तृतीया च होश्छन्दसि' (पासू. २।३।३) इति कर्मणि कारके तृतीया। वषट्कारेण हविः प्रक्षेपयामीत्यर्थः। ऋसा.

**[1]समानी व आकूतिः समाना हृदयानि वः।**
**समानमस्तु वो मनो यथा वः सुसहासति॥**

हे ऋत्विग्यजमानाः, वः युष्माकम् आकूतिः संकल्पोऽध्यवसायः समानी एकविधः अस्तु। तथा वः युष्माकं हृदयानि समाना समानानि एकविधानि सन्तु। तथा वः युष्माकं मनः अन्तःकरणम्। प्रत्येकापेक्षयैकवचनम्। तदपि समानमस्तु। यथा वः युष्माकं सुसह शोभनं साहित्यम् असति भवति। तथा समानमस्त्वित्यन्वयः। अस्तेर्लेटि 'बहुलं छन्दसि' (पासू. २।४।७३) इति शपो लुगभावः। ऋसा.

सत्यवदनप्रशंसा

**[2]प्राणो ह सत्यवादिनमुत्तमे लोक आ दधत्॥**

स एव प्राणः सत्यवादिनम्, सत्यं यथार्थं वदितुं शीलम् अस्य स तथोक्तः, सत्यवदनशीलं महानुभावम् उत्तमे उत्कृष्टतमे लोके आ दधत् आदधाति स्थापयति। असा.

स्त्रीणामा प्रसवात्संभोगानुमतिः, रजस्वलया सह संभाषणसहासनयोस्तदीयान्नग्रहणस्य च निषेधः, मतान्तरेणान्ननिषेधोऽभ्यञ्जनरूपान्नमात्रविषयः

**+ [1]स स्त्रीषंसादमुपासीदत् — अस्यै ब्रह्महत्यायै तृतीयं प्रतिगृह्णीतेति। ता अब्रुवन् वरं वृणीमहा ऋत्वियात्प्रजां विन्दामहै, काममाविजनितोः संभवामेति। तस्मादृत्वियात्स्त्रियः प्रजां विन्दन्ते काममाविजनितोः संभवन्ति। *वारेवृतं ह्यासां तृतीयं ब्रह्महत्यायै प्रत्यगृह्णन्। सा मलवद्वासा अभवत्। तस्मान्मलवद्वाससा न संवदेत, न सहाऽऽसीत। नास्या अन्नमद्यात्। ब्रह्महत्यायै ह्येषा वर्णं प्रतिमुच्याऽऽस्ते। अथो खल्वाहुः — अभ्यञ्जनं वाव स्त्रिया अन्नम्। अभ्यञ्जनमेव न प्रतिगृह्यम्, काममन्यदिति॥**

स्त्रियः सम्यक् सीदन्ति विश्रम्भेणोपविशन्ति यस्यां सभायामिति स्त्रीसभाविशेषः स्त्रीषंसादः। ऋत्वियात् ऋतुसंबन्धाद्वीर्यात् प्रथमसंभोगादेव गर्भे जातेऽपि काममुद्दिश्य आ विजनितोः आ प्रसवात् पुरुषेण संगच्छेमहि। गर्भोपद्रवः प्रत्यवायश्च निषिद्धदिनकृतोऽस्माकं मा भूदिति वरः। अत एव याज्ञवल्क्यस्मृतिः — 'यथाकामी भवेद्वाऽपि स्त्रीणां वरमनुस्मरन्।' (यास्मृ. १।८१) इति। यो ब्रह्महत्यायास्तृतीयो भागः सा मलवद्वासाः रजस्वला योषिदभवत्। यस्मादियं ब्रह्महत्याया रूपं शरीरे कञ्चुकवत्प्रतिमुच्याऽऽस्ते तस्मात्तया सह संभाषणं न कुर्यात्। तया सहैकस्मिन्गृहे वासो न कर्तव्यः। तत्स्वामिकं तत्स्पृष्टं वाऽन्नं नाश्नीयात्। अपि चाभिज्ञाः केचिदेवमाहुः — स्त्रियाः शृङ्गारोपयोगित्वेनाभ्यञ्जनमेवान्नस्थानीयम्, तदीयं तैलादिकमेव न गृह्णीयात्, तया वा स्वशरीराभ्यञ्जनं न कारयेत्। अन्यदन्नं सत्यामिच्छायां भोक्तव्यमिति। तैसा.

ब्राह्मणन्यक्करणस्य निषेधः

**[2]यद्ब्राह्मणश्चाब्राह्मणश्च प्रश्नमेयातां ब्राह्मणायाधि ब्रूयात्। यद्ब्राह्मणायाध्याहाऽऽत्मनेऽध्याह। यद्ब्राह्मणं पराहाऽऽत्मानं पराऽऽह। तस्माद्ब्राह्मणो न परोच्यः॥**

(१) **ऋसं.** १०।१९१।४; **असं.** ६।६४।३; **मैसं.** २।२।६ (२६) व आकूतिः (वा आकूतानि); **कासं.** १०।१२(३८) नी व आकूतिः (ना व आकूतानि); **तैब्रा.** २।४।४।५.

(२) **असं.** ११।४(६)। ११.

+ सः स्वीयं विश्वरूपहननोत्पन्नब्रह्महत्यापापं दित्सुरिन्द्रः।

* 'वारेवृतम्' इत्यस्यार्थः सायणेनान्यत्र (१।२।१२।१) 'वरो वृतः' इत्युक्तः।

(१) **तैसं.** २।५।१।५-६; **मेधा.** २।६ (न मलवद्वाससा सह संवदेत्) एतावदेव, श्रुतिः; **मच.** ४।५७ (मलवद्वाससा न संवेदत्) एतावदेव, श्रुतिः.

(२) **तैसं.** २।५।११।९.

यदि लोके ब्राह्मणाब्राह्मणौ विवदमानावहमेवाधिक इति अधिविषयं प्रश्नं कर्तुं कंचिदभिज्ञं प्रति आगच्छेतां तदानीं सोऽभिज्ञो ब्राह्मणस्यैवाऽऽधिक्यं ब्रूयात्। तेन वक्तुः स्वस्यैवाऽऽधिक्यं संपादितं भवति । ब्राह्मणस्य पराभववचने स्वस्यैव पराभव उक्तो भवति। तस्मात्कदाचिदपि ब्राह्मणः पराभवविषयो न कर्तव्यः। सोऽयं प्रासङ्गिकः पुरुषार्थो विधिर्द्रष्टव्यः। तैसा.

ब्राह्मणविषये अपगोरणादिनिषेधेन

ब्राह्मणप्रशंसा

[१]**किं मे प्रजाया इति । योऽपगुरातै शतेन यातयात्। यो निहनत् सहस्रेण यातयात्। यो लोहितं करवत् यावतः प्रस्कद्य पांऽसून्त्संगृह्णात् तावतः संवत्सरान्पितृलोकं न प्र जानादिति। तस्माद्ब्राह्मणाय नाप गुरेत। न नि हन्यात्। न लोहितं कुर्यात्। एतावता हैनसा भवति॥**

पुनरपि शंयुरेवमुवाच – 'तदेतदुभयं +मम संपन्नम्। मदीयायाः पुत्रपौत्रादिरूपायाः प्रजायाः किं दास्यत(?थ)?' इति। ततो देवा अपगोरणादिकर्तुर्यातना त्वत्पुत्राधीना भवत्विति वरं दत्तवन्तः। अपगोरणं ताडनोद्योगः। तमुद्योगं ब्राह्मणविषये यः करोति तं पुरुषं शतनिष्कदण्डेन यातयात् क्लेशयेत्। यो निहनत् ताडयेत् तं सहस्रनिष्कदण्डेन क्लेशयेत्। यस्तु ब्राह्मणशरीरे लोहितं ताडनेन ग्रा(?वा)-हयति, लोहितं भूमौ पतित्वा यावतः परमाणून्व्याप्नोति तावतः संवत्सरानयं पितृलोकं न प्राप्नोति, किं तु यमयातनामनुभवति। तत्सर्वं त्वत्प्रजाधीनमिति वरः। यस्मादुक्तरीत्या ब्राह्मणाधिक्षेपादौ प्रत्यवायोऽस्ति तस्मात्तन्न कुर्यात्। करणे चैतावता पूर्वोक्तपापेन युक्तो भवति। तैसा.

दानप्रशंसा

[२]**एतत्खलु वाव तप इत्याहुर्यः स्वं ददाति॥**

शरीरप्रयासादपि धनहानिकृतस्य मानसप्रयासस्याधिकत्वाद्दत्तेन धनेन परोपजीवनाच्च दानमेव महत्तप इत्यभिज्ञानां मतम्। तैसा.

ब्राह्मणकर्तृकभेषजनिर्माणनिषेधः

भिषङ्निन्दा च

+ [१]**तस्माद्ब्राह्मणेन भेषजं न कार्यम्। अपूतो ह्येषोऽमेध्यो यो भिषक्॥**

शूद्रस्य यज्ञेऽनधिकारः

[२]**तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः॥**

तस्मात् देवतामनु सृज्यत्वाभावात् शूद्रो यज्ञे प्रवर्तितुं न योग्यः। तैसा.

सत्यवदनविधिः

[३]**तस्मादेवं विदुषा सत्यमेव वदितव्यम्॥**

प्रसङ्गात्पुरुषार्थत्वेन सत्यवदनं विधत्ते – तस्मादिति। एवं विदुषा सत्यस्य श्रेयोहेतुत्वं जानता। ऐब्रासा.

श्रेष्ठपुरुषाचरणनिन्दानिषेधः

[४]**दुरववदं हि श्रेयसः॥**

श्रेयसः विद्यैश्वर्यादिनाऽधिकस्य पुरुषस्याऽऽचरणं दुरववदं हि अववादेन निन्दया रहितम्। अत एव पित्राचार्यादीनां निन्दां न कुर्वन्ति द्वेषिभिः क्रियमाणामपि न शृण्वन्ति।

ऐब्रासा.

प्रथमं पापं द्वितीयादिपापकारणम्

[५]**यः सकृत्पापकं कुर्यात्कुर्यादेनत्ततोऽपरम्॥**

यः पुमान्धर्मशास्त्रभीतिरहितः सकृत्पापकं कुर्यात् स पुमांस्ततः पापात् अन्यत् एनत् पापं तदभ्यासवशात्कुर्यदिव। ऐब्रासा.

सत्यप्रशंसा

[६]**ऋतमेव परमेष्ठि। ऋतं नात्येति किंचन। ऋते समुद्र आहितः। ऋते भूमिरियꣳ श्रिता। अग्निस्तिग्मेन शोचिषा। तप आक्रान्तमुष्णिहा। शिरस्तपस्याहितम्॥**

---

+ब्राह्मणग्रन्थानुक्तकर्तृकयज्ञोत्पन्नं श्रद्धाशून्यकर्तृकयज्ञोत्पन्नं च फलमिति प्रकरणम्।

(१) **तैसं.** २।६।१०।२; **निप्र.** २।३३३ (यो ब्राह्मणायावगुरेत्तं शतेन घातयेत्। यः शोणितं कुर्याद्यावतः पांशून् गृह्णीयात्तावतः परि संवत्सरान् स्वर्गान् लोकान्न प्रजानीयात् तस्मान्न ब्राह्मणायावगुरेत् न शोणितं कुर्यात्) एतावदेव, संख्याधिकरणे; **मच.** ११।२०५ (यो ब्राह्मणायावगुरेत्तं शतेन यातयात्) एतावदेव, श्रुतिः.

(२) **तैसं.** ६।१।६।४.

+ 'तौ देवा अब्रुवन्नपूतौ वा इमौ मनुष्यचरौ भिषजाविति' इत्यव्यवहितपूर्वो ग्रन्थः।

(१) **तैसं.** ६।४।९।२; **मभा.** १७।१५ (अपूतो ह्येषोऽमेध्यो यो भिषक्०) तैत्तिरीयाणां ब्राह्मणम्.

(२) **तैसं.** ७।१।१।६; **शूक.** ४ तैत्तिरीयश्रुतिः : १० (=).

(३) **ऐब्रा.** २२।९.

(४) **ऐब्रा.** २४।३.

(५) **ऐब्रा.** ३३।५.

(६) **तैब्रा.** १।५।५।१.

ऋतं सत्यवदनं तदेव परमेष्ठि जगत्स्रष्टुः प्रजापतेः स्वरूपम्। तस्माल्लोके किंचन वस्तुजातमतिक्रमितुं न भवति। तत्कथमिति तदेवोच्यते – योऽयं समुद्रः जलराशिः अत्युन्नतः सोऽप्यृते समाहितः। प्रजापतिर्वेलां कृत्वा तामिमां नातिक्राम त्वमिति समुद्रमुवाच। स तस्मिन्नेव सत्यवाक्ये तथैव व्यवस्थितः। समुन्नतोऽपि जलराशिर्वेलामुल्लङ्घ्य भूमिं न प्लावयति। तथा खेदमन्तरेण सर्वान्प्राणिनो धारयेति प्रजापतिनोक्ते सत्यवाक्ये भूमिरियमाश्रिता वर्तते। तथा प्रजापतेः सत्यवाक्येनैवायमग्निः तिग्मेन शोचिषा तीक्ष्णेन रश्मिना युक्तो वर्तते। तथा प्रजापतिवाक्येन सत्येन महर्षिभिस्तप्यमानं तप उष्णिहादिच्छन्दोविशेषयुक्तेन मन्त्रेणाऽऽक्रान्तम्। तपस्यमाना हि छन्दोयुक्तान्मन्त्रान् जपन्ति । तथा प्रजापतिसत्यवाक्यादेव *यजमानाः शिरोमुण्डनादिलक्षणे तपसि व्यवस्थिताः। तैब्रासा.

केशश्म्मश्रुकक्षविषये क्षौरक्रमविधिः

**[1]देवा वै यद्यज्ञेऽकुर्वत। तदसुरा अकुर्वत। तेऽसुरा ऊर्ध्वं पृष्ठेभ्यो नापश्यन्। ते केशानग्रेऽवपन्त। अथ श्मश्रूणि। अथोपपक्षौ। ततस्तेऽवाञ्च आयन्। पराभवन्। यस्यैवं वपन्ति। अवाङेति। अथो परैव भवति। अथ देवा ऊर्ध्वं पृष्ठेभ्योऽपश्यन्। त उपपक्षावग्रेऽवपन्त। अथ श्मश्रूणि। अथ केशान्। ततस्तेऽभवन्। सुवर्गं लोकमायन्। यस्यैवं वपन्ति। भवत्यात्मना। अथो सुवर्गं लोकमेति॥**

तत्राऽऽदावन्वयव्यतिरेकाभ्यां वपनक्रमं विधत्ते – देवा इति। देवैर्यद्यदङ्गं यज्ञेऽनुष्ठितं तत्तदङ्गमसुरास्तथैवान्वतिष्ठन्। वपने तु स्वबुद्ध्यैव प्रवृत्ताः। पृष्ठशब्देन तत्समीपवर्तिनौ कक्षावुपलक्ष्येते। ते सर्वेऽप्यसुराः स्वकीयान्कक्षानारभ्योर्ध्वं वपनं कर्तव्यमिति शास्त्रार्थं नापश्यन् नाज्ञासिषुः। अज्ञात्वा च केशश्मश्रूपपक्षक्रमेणाधोमुखप्रवृत्तं वपनं कृत्वा स्वयमवाञ्चो नीचा भूत्वा लोके समागत्य पराभूताः। एवमन्योऽपि नीचो भूत्वा लोके समागत्य पराभवति। देवास्तु कक्षेभ्य ऊर्ध्वक्रमं ज्ञात्वा कक्षश्मश्रुकेशक्रमेण वपनं कृत्वा लोकेऽस्मिन्नैश्वर्यं प्राप्ता ऊर्ध्वक्रमेण स्वर्गं च प्राप्नुवन्। अन्योऽप्येवं कृत्वाऽत्र स्वयमेव प्रभुर्भवति स्वर्गं च प्राप्नोति। तैब्रासा.

**[1]अथैतन्मनुर्वप्त्रे मिथुनमपश्यत्। स श्मश्रूण्यग्रेऽवपत। अथोपपक्षौ। अथ केशान्। ततो वै स प्राजायत प्रजया पशुभिः। यस्यैवं वपन्ति। प्र प्रजया पशुभिर्मिथुनैर्जायते॥**

ऊर्ध्वक्रमेण सह विकल्पार्थं क्रमान्तरं विधत्ते – अथेति। वप्त्रे यो वप्ताऽध्वर्युस्तदर्थं तस्यानुष्ठानार्थं तन्मिथुनमूर्ध्वमवाञ्चं चेति द्विविधं वपनप्रकारं मनुरपश्यत्। दृष्ट्वा च मध्यवर्तीनि श्मश्रूण्यादावुप्त्वा ततोऽधोवर्तिनोः कक्षयोर्वपनं कृत्वा पश्चात्तदूर्ध्ववर्तिनां केशानां वपनं चकार। ततस्तादृशाद्वपनात्स मनुः प्रजया पशुभिश्च प्रभूतोऽभूत्। अन्योऽप्येवं कृत्वा मनुष्यमिथुनैः पशुमिथुनैश्च प्रभूतो भवति। तैब्रासा.

श्रद्धाप्रशंसा

**[2]श्रद्धा देवानधिवस्ते।**
**श्रद्धा विश्वमिदं जगत्।**
**श्रद्धां कामस्य मातरम्।**
**हविषा वर्धयामसि॥**

इयं श्रद्धा देवी देवानधिवस्ते देवेष्वधिवसति। विश्वं सर्वमिदं जगत् श्रद्धामयम्, इच्छाविश्वासव्यतिरेकेण कस्यापि व्यवहारस्याभावात्। कामस्य मातरं काम्यमानफलस्योत्पादिकां श्रद्धां देवीमनेन हविषा वर्धयामसि। अभिवृद्धां संतुष्टां कुर्मः। तैब्रासा.

अनृतनिन्दा सत्यप्रशंसा च

**[3]अमेध्यो वै पुरुषो यदनृतं वदति॥**

**[4]द्वयं वा इदम्, न तृतीयमस्ति। सत्यं चैवानृतं च। सत्यमेव देवाः, अनृतं मनुष्याः॥**

**एतद्ध वै देवा व्रतं चरन्ति - यत् सत्यम्। तस्मात्ते यशः। यशो ह भवति य एवं विद्वान् सत्यं वदति॥**

द्वयं वा इति। यत् इदं जगत् तत्सर्वमनृतं सत्यं वेति कोटिद्वयमेव, न तृतीया कोटिरस्ति। सत्यमेव देवाः,

---

* अयं भावार्थः, पूर्वाणि वाक्यान्यनुरुध्य आहितमिति नपुंसकलिङ्गाच्च 'शिरः यजमानैर्मुण्डनादिरूपे तपस्याहितम्' इति तु शाब्दोऽर्थ इति प्रतिभाति।

(१) **तैब्रा**. १।५।६।१-२; **विपा**. ३।२।७५९ वपन्ति। अवाङे (वपति । अवाङि) वपन्ति। भवत्या (वपत्या) आपस्तम्बश्रुतौ.

(१) **तैब्रा**. १।५।६।३; **विपा**. ३।२।७५९ वप्त्रे (वप्रे) मिथुन + (दिवा) प्राजा (प्रजा) यस्यैवं (यस्तैवं) प्र प्रजया (प्रजया) आपस्तम्बश्रुतौ.

(२) **तैब्रा**. २।८।८।८.

(३) **शब्रा**. १।१।१।१, ३।१।२।१०.

(४) **शब्रा**. १।१।१।४-५.

चिरावस्थानात्, नियमेन सत्यवादित्वाद्वा। अनृतं मनुष्याः, स्वप्नदृष्टवदल्पकालावस्थानात्, प्रायेणानृतवादित्वाद्वा। तथा च देवमनुष्याणां सत्यानृतवादित्वमैतरेयकेऽप्याम्नातम् – 'सत्यसंहिता वै देवा अनृतसंहिता मनुष्याः' (ऐब्रा. १।६) इति। शब्रासा.

सत्यवदनस्य प्रशंसा विधिश्च,

अनृतवदननिन्दा

[१]**तस्य वा एतस्याग्न्याधेयस्य सत्यमेवोपचारः। स यः सत्यं वदति, यथा अग्निं समिद्धं तं घृतेनाभिषिञ्चेत्, एवं हैनं स उद्दीपयति।.... अथ योऽनृतं वदति, यथा अग्निं समिद्धं तमुदकेनाभिषिञ्चेत्, एवं हैनं स जासयति। तस्य कनीयः कनीय एव तेजो भवति, श्वः श्वः पापीयान् भवति। तस्मादु सत्यमेव वदेत्॥**

आहिताग्निना सत्यमेव वदितव्यम्, न कदाचिदप्यनृतमित्युभयं प्रतिपादयति – तस्य वा इत्यादिना।

शब्रासा.

**तदु हाप्यरुणमौपवेशिं ज्ञातय ऊचुः – स्थविरो वा असि, अग्नी आधत्स्वेति। स होवाच ते – मैतद् ब्रूथ । वाचंयम एवैधि। न वा आहिताग्निनाऽनृतं वदितव्यम् । न वदन् जातु नानृतं वदेत्। तावत् सत्यमेवोपचार इति ॥**

एतत्सत्यवदनस्याग्निसमिन्धनहेतुत्वमृषिवाक्यसंबन्धेन द्रढयति – तदु हेति। तत् तत्रोक्तविषयेऽपि खल्वेवं पूर्ववृत्तान्तः संजातः। उपवेशो नाम कश्चित्। तस्य पुत्रम् अरुणम् तदीयाः ज्ञातयः उक्तवन्तः। किमिति? हे अरुण, स्थविरः वृद्धः असि, अत आमुष्मिकसिद्धये अग्न्याधानं कुर्विति। स चैवं प्रत्युक्तवान् – कथमिति 'मैतद्ब्रूथ' इति। तद्वचनम् – 'वाचंयम एवैधि' वाग्यत एव भवेति। कुत एवं प्रार्थ्यते? तत्राऽऽह – न वा इति। आहिताग्निना हि अनृतं न वदितव्यम्। वाग्व्यवहारं कुर्वतस्त्वनृतवदननिषेधो न संभवति। यस्मादेवमृषिणोक्तम् – 'न वदन् जातु' इत्यादि। तस्मात् सत्यवचनमेवाग्न्याधेयस्याङ्गमित्यर्थः।

शब्रासा.

अपशब्दोच्चारणनिषेधः

[२]**स म्लेच्छः। तस्मान्न ब्राह्मणो म्लेच्छेत् ॥**

स म्लेच्छः संदिग्धार्थस्यापभ्रंशरूपस्य वचसो भाषणं यत् तन्म्लेच्छमित्यर्थः। यद्वा य ईदृशीं वाचं वदति स म्लेच्छः। तस्मात् न म्लेच्छेत् म्लेच्छो न भवेत्। तदीयामपार्थिकां भाषां न ब्रूयादित्यर्थः। शब्रासा.

पर्जन्ये अप्रावृतगमनविधिः.

[१]**येनाऽऽपो यन्त्यपेव तत्र पाप्मानं घ्नन्ति।.... तस्माद्वर्षत्यप्रावृतो व्रजेत्। अयं मे वज्रः पाप्मानमपहनदिति ॥**

येन मार्गेण आपो यन्ति, तत्र पाप्मानमपघ्नन्त्येव अपां वज्रत्वात्।..... तस्मात् पापहननादेव वर्षति पर्जन्ये अयं वज्रः मे पाप्मानम् अपहन्त्विति अप्रावृत एव व्रजेत्।

शब्रासा.

सत्यप्रशंसा अनृतनिन्दा च

[२]**देवाश्चासुराश्चोभये प्राजापत्याः प्रजापतेः पितुर्दायमुपेयुः – वाचमेव सत्यानृते। सत्यं चैवानृतं च। त उभय एव सत्यमवदन्, उभयेऽनृतम्। ते ह सदृशं वदन्तः सदृशा एवाऽऽसुः॥**

पुरा किल प्रजापतेरपत्यभूता देवाश्चाऽसुराश्चोभये पितुः प्रजापतेः दायमुपेयुः। तमेव दायमाह – वाचमेवेति। कीदृशीं वाचमिति तत्राऽऽह – सत्यानृते इति। तदेव विवृणोति – सत्यं चैवानृतं चेति। सत्यानृतरूपां वाचमेव दायमुपेयुरित्यर्थः। ते देवा असुरा उभय एव सत्यमवदन्[+]। तथा सदृशं वदन्त उभयेऽपि सदृशा बभूवुः। शब्रासा.

**ते देवा उत्सृज्यानृतं सत्यमन्वालेभिरे । असुरा उ होत्सृज्य सत्यमनृतमन्वालेभिरे ॥**

पश्चात्ते देवा वैषम्यसिद्धये अनृतमुत्सृज्य सत्यमेव स्वीकृतवन्तः। तथाऽसुरा अपि तेभ्यो वैलक्षण्यसिद्धये सत्यमुत्सृज्य अनृतं स्वीकृतवन्तः। शब्रासा.

**तद्धेदं सत्यमीक्षाञ्चक्रे यदसुरेष्वास। देवा वा उत्सृज्यानृतं सत्यमन्वालप्सत हन्त तदयानीति। तद् देवानाजगाम ॥**

**अनृतमु हेक्षाञ्चक्रे यद्देवेष्वास। असुरा वा उत्सृज्य सत्यमनृतमन्वालप्सत हन्त तदयानीति। तदसुरानाजगाम ॥**

ततोऽसुरेषु विद्यमानं सत्यं 'देवा अनृतं विसृज्य सत्यमेव स्वीकृतवन्तः, तत्रैव गच्छानि' इति विचार्य

(१) **शब्रा.** २।२।२।१९-२०.
(२) **शब्रा.** ३।२।१।२४.

+ अत्र 'उभयेऽनृतं च' इत्येतदर्थको ग्रन्थस्त्रुटितः।
(१) **शब्रा.** ७।५।२।४१; **विश्व.** १।१३५ (येनाऽऽपो..... घ्नन्ति॰) आम्नायः.
(२) **शब्रा.** ९।५।१।१२-१७.

देवानाजगाम। हन्तेति निपातः स्वाश्रयप्राप्तिनिमित्तं हर्षं द्योतयति। देवेषु विद्यमानमनृतं च तथैव विचार्यासुरानाजगाम। शब्रासा.

**ते देवाः सर्वं सत्यमवदन्, सर्वमसुरा अनृतम्। ते देवा आसक्ति सत्यं वदन्त ऐषावीरतरा इवाऽऽसुरनाढ्यतरा इव। तस्मादु हैतद् य आसक्ति सत्यं वदत्यैषावीरतर इवैव भवति, अनाढ्यतर इव। स ह त्वेवान्ततो भवति। देवा ह्येवान्ततोऽभवन्॥**

ततो देवा असुरेषु विद्यमानस्य सत्यस्यात्राऽऽगमनात् सर्वं सत्यमवदन्। असुराश्च देवेषु विद्यमानस्यानृतस्यात्राऽऽगमनात् सर्वमनृतमवदन्। ते देवा आसक्ति सत्यं केवलं सत्यं वदन्तस्तदानीम् अवीरतरा इव अनाढ्यतरा इवाभवन्। ऐष इति शब्दः तदानीमित्यस्मिन्नर्थे वर्तते। आसुरिति च्छान्दसत्वाद् भूत्वाभावः। केवलं सत्यं वदतां कार्यानुरोधेन वचनप्रयोगस्यासंभवात्तदानीमसमर्था इव अनाढ्या इव अभवन्। तस्मादिदानीमपि तथैव तदानीमवीरतर इवानाढ्यतर इव भवति। परंतु सः अन्ततो भवति ह विजयते खलु। शब्रासा.

**. अथ हासुरा आसक्त्यनृतं वदन्त ऊष इव पिपिशुः आढ्या इवाऽऽसुः। तस्मादु हैतद्य आसक्त्यनृतं वदति ऊषइवैव पिश्यति आढ्य इव भवति परा ह त्वेवान्ततो भवति परा ह्यसुरा अभवन्॥**

अथासुराः केवलानृतं वदन्तस्तदानीं पिपिशुः। पिश अवयवे। अवयविन इव बभूवुः। पुष्टा इव च बभूवुरित्यर्थः। आढ्या इव च बभूवुः। तस्मादिदानीमपि स्वकार्यानुसारेण तथा वदन् पुरुषः पुष्ट इव भवति आढ्य इव भवति। अन्ततस्तु पराभवति, तथा वदतामसुराणामन्ततः पराभूतत्वात्। शब्रासा.

आत्महत्यानिषेधः

**[1]तस्मादु ह न पुराऽऽयुषः स्वकामी प्रेयात्।अलोक्यं ह॥**

(१) तच्च तदु ह न स्वःकाम्यायुषः प्राक् (न?) प्रेयात् इति स्वर्गफलोद्देशेनाऽऽयुषः प्रागायुर्व्ययो न कर्तव्यो मोक्षार्थिना। यस्मादायुषः शेषे सति नित्यनैमित्तिककर्मानुष्ठानक्षपितान्तःकरणकलङ्कस्य श्रवणमनननिदिध्यासनसंपत्तौ सत्यामात्मज्ञानेन निरतिशयानन्दब्रह्मप्राप्तिलक्षणमोक्षसंभवः, तस्मादनित्याल्पसुखरूपस्वर्गार्थमायुर्व्ययो न कर्तव्य इत्यर्थः।

+मिता. ११८६

[स्वरिति। यतो बोध्यते इति शेषः। इतिर्हेतौ। तदेव विशदयति – यस्मादित्यादिना.... वस्तुतस्तु स्वःकामी आयुषः प्राङ्न प्रेयादित्यनेन स्वर्गकामस्य शास्त्रेण विहितं यन्मरणं प्रयागादौ तन्निषिध्यते, अक्षरस्वारस्यात्, तस्य जीवता यज्ञादिभिरपि साधयितुं शक्यत्वादिति तदाशयः। एवं च तथामरणे कामार्थासिद्धिर्दोषश्चेत्युभयम्। एवं च यज्ञादावसमर्थस्य तत्रानधिकारिणो वा तत्र प्रवृत्तिरुचितैव। तत्राधिकारिणोऽपि स्वर्गो मे शीघ्रं भवत्वित्युत्कटेच्छावतो दोषज्ञानेऽपि प्रवृत्तिर्भवति। परंतु तस्य दोषोऽपि, उक्तश्रुतिवशात्। एवमेव स्त्रीणां सहगमने यजमानस्य सर्वस्वारयज्ञे चाग्निप्रवेशे प्रवृत्तिः। टीकोक्तं तु न युक्तम्, अक्षरैरलाभात् स्वःकामिन एव निषेधान्मोक्षकामस्य न तन्निषेध इति बोध्यम्। तत्रापीन्द्रियग्रामस्य दुःसंचरत्वाद्युवतीभिरवश्यं कार्यम्।

बाल. पृ. २३६]

(२) यस्मात् शतायुर्जीवनं लोकहितं तस्मादस्मादायुषः पुरा पूर्वं स्वकामी स्वहितमिच्छन् स्वेच्छया न प्रेयात् न म्रियेत। तन्मरणम् अलोक्यम् अमृतत्वरूपलोकसाधनं न भवति। शब्रासा.

स्त्रीहननमनाचारः

**[1]न वै स्त्रियं घ्नन्ति । उत त्वा अस्या जीवन्त्या एवाऽऽददते ॥**

न खलु लोके क्रूरकर्माणोऽपि पुरुषाः स्त्रियं घ्नन्ति मारयन्ति। 'उत तु (*आ) अपि तु जीवन्त्याः एवास्याः संबन्धि धनम् आददते स्वीकुर्वते इत्यर्थः। शब्रासा.

---

(१) **शब्रा.** १०।२।६।७; **मेधा.** ५।१५५ (स्वकामी.) (अलोक्यं ह.) श्रुतिः : ६।३२ स्वकामी (स्वःकामी) (अलोक्यं ह.) श्रुतिः; **मिता.** ११८६ मेधा. ६।३२ वत्, श्रुतिः; **अप.** ११८७ पृ.१११ दु ह (दह) शेषं सर्वं मेधा. ६।३२ वत्; **ममु.** ६।३१ (न पुराऽऽयुषः स्वःकामी प्रेयात्) एतावदेव, श्रुतिः; **पमा.** २।४६ स्व (स्वर्ग) (अलोक्यं ह.) श्रुतिः; **मपा.** १९९ (अलोक्यं ह.) श्रुतिः; **मुक्ता.** १६३ सर्वं पमावत्; **वीमि.** ११८६ पुराऽऽयुषः स्व (वपुरायुषः स्वः) (अलोक्यं ह.) श्रुतिः.

+ मुक्ता. मितानुवादः।

* 'आढ्यं विचार्यप्रयोजनः' इत्यादर्शपुस्तके टिप्पणी।

(१) **शब्रा.** ११।४।३।२.

पापाचरणनिषेधः

[१]**तद्यदिह पुरुषस्य पापं कृतं भवति तदाविष्करोति। यदि हैनदपि रहसीव कुर्वन्मन्यतेऽथ हैनदाविरेव करोति। तस्माद्वाव पापं न कुर्यात्॥**

अग्न्युपचरणविधिः, अदत्त्वाऽग्नयेऽन्न-भक्षणनिन्दा

[२]**एष उ ह वाव देवानां नेदिष्ठमुपचर्यो यदग्निः। तं साधूपचरेत्। य एनमस्मिँल्लोके साधूपचरति तमेषोऽमुष्मिँल्लोके साधूपचरति। अथ य एनमस्मिँल्लोके नाऽऽद्रियते तमेषोऽमुष्मिँल्लोके नाऽऽद्रियते। तस्माद्वा अग्निं साधूपचरेत् । तं नैव हस्ताभ्यां स्पृशेन्न पादाभ्यां न दण्डेन। हस्ताभ्यां स्पृशति यदस्यान्तिकमवनेनिक्ते। अथ यदभिप्रसारयति तत्पादाभ्याम्। स एनमास्पृष्ट ईश्वरो दुर्धायां धातोः। तस्माद्वा अग्निं साधूपचरति। सुधायां हैवैनं दधाति॥**

[३]**एष उ ह वाव देवानां महाशनतमो यदग्निः। तन्न व्रत्यमददानोऽश्नीयात्। यो वै महाशनेऽनश्नत्यश्नातीश्वरो हैनमभिषङ्क्तोः। पूतिमिव हाऽश्नीयात्। अथो ह प्रोक्तेऽशने ब्रूयात् समिन्त्स्वाग्निमिति। स यथा प्रोक्तेऽशने श्रेयाँसं परिवेष्टवै ब्रूयात्तादृक् तत्॥**

भोक्तुर्ब्राह्मणस्य शुचित्वविधिः

[४]**तद्यथा ह वै शुद्धेन शुचिना पात्रेण पिपासन्त्येवं ह वाव देवा ब्राह्मणेन शुद्धेन शुचिना पिपासन्ति। तस्मादु ह ब्राह्मणेन शुद्धेनैव शुचिना बुभूषितव्यम् ॥**

ब्राह्मणकर्तृकगायननर्तननिषेधः

[५]**य एष ब्राह्मणो गायनो वा नर्तनो वा भवति तमाग्लागृध# इत्याचक्षते। तस्माद्ब्राह्मणो नैव गायेन्नाऽऽनृत्येन्माऽऽग्लागृधः स्यात् ॥**

संस्कारसंस्कृतस्याग्निमतो ब्राह्मणस्य प्रशंसा अनग्निकस्य निन्दा च

[१]**एष ह वै सांतपनोऽग्निर्यद्ब्राह्मणः। यस्य गर्भाधान-पुंसवनसीमन्तोन्नयनजातकर्मनामकरणनिष्क्रमणान्न-प्राशनगोदानचूडाकरणोपनयनप्लावनाग्निहोत्रव्रतचर्या-दीनि कृतानि भवन्ति स सांतपनः। अथ योऽयमनग्निकः स कुम्भे लोष्टः। तद्यथा कुम्भे लोष्टः प्रक्षिप्तो नैव शौचार्थाय कल्पते नैव शस्यं निर्वर्तयति, एवमेवायं ब्राह्मणोऽनग्निकः। तस्य ब्राह्मणस्यानग्निकस्य नैव दैवं दद्यात्, न पित्र्यम्। न चास्य स्वाध्यायाशिषो न यज्ञ आशिषः स्वर्गंगमा भवन्ति। तदप्येतदृचोक्तम् — 'अग्निं दूतं वृणीमहे होतारं विश्ववेदसम्। अस्य यज्ञस्य सुक्रतुम्॥' इति ब्राह्मणम्॥**

अनृतवदननिषेधः

[२]**अथैतन्मूलं वाचो यदनृतम्। तद्यथा वृक्ष आविर्मूलः शुष्यति स उद्वर्तत एवमेवानृतं वदन्नाविर्मूलमात्मानं करोति। स शुष्यति, स उद्वर्तते। तस्मादनृतं न वदेद्दयेत त्वेनेन॥**

प्रसङ्गाद्बुद्धिस्थमनृतवदननिषेधं पुरुषार्थतया दर्शयति — अथेति। प्रकृतादुपासनात्प्र(? नातत्प्र)शंसारूपाद्वाक्या-(?क्यार्था)दर्थान्तरकथनार्थोऽथशब्दः। न प्रकृतमुपासना-ङ्गमुच्यते, किंत्वन्यः कश्चित्प्रासङ्गिकोऽनृतनिषेध इत्यर्थः। यत् अनृतं मिथ्याभाषणम् अस्ति तदेतद्वाग्वृक्षस्य मूलस्थानीयम्। सत्यस्य §पुष्पफलस्थानीयत्वे सति तद्विपरीतस्यानृतस्य मूलत्वं युक्तम्। तत् तथा मूलत्वे सति लोके यथा कश्चिद्वृक्षो भूमेरुत्खातः सन्नाविर्भूतमूलो भूत्वा प्रथमं शुष्यति पश्चात् उद्वर्तते विनश्यति च, एवमेवानृतं वदन्पुरुषो वाग्वृक्षरूपमात्मानमाविर्मूलं करोति, मूलभूतस्यानृतवदनस्य परेषामग्रे प्रकटीकृतत्वात्। तेन पापेन स पुरुषः शुष्यति। सर्वैस्तिरस्कार्यत्वमेवास्य शोषः। 'अयमनृतवादी, न तु प्रामाणिकः' इत्येवं सर्वे तिरस्कुर्वन्ति। स तादृशः पुरुषः उद्वर्तते विनश्यति, नरकं प्राप्नोतीत्यर्थः। तस्मात् कारणात् जनतिर-

---

# 'ग्लै हर्षक्षये क्लमे च। डः, टाप्। समन्ताद् ग्लानिः। श्रमार्तिः। गृधु अभिकाङ्क्षायाम्। कः। आग्लायां लुब्धः।' इति आदर्शपुस्तके आर्यभाषाभाष्यकारस्य स्वीयसंस्कृतटिप्पण्या-मुक्तम्।

(१) **जैउब्रा.** २।५।१।५.

(२) **जैउब्रा.** २।५।२।१-६.

(३) **जैउब्रा.** २।५।३।१-३.

(४) **जैब्रा.** १।२८२.

(५) **गोब्रा.** १।२।२१.

§ 'तदेतत्पुष्पं फलं वाचो यत्सत्यम्' इति पूर्वमुक्तम्।

(१) **गोब्रा.** १।२।२३.

(२) **ऐआ.** २।३।६.

स्कारान्नरकाच्च भीतः पुमाननृतं न ब्रूयात्, किंत्वेनेन अनृतेन निमित्तेन दयेत स्वात्मानं रक्षेत्। ऐआसा.

ऐकान्तिकदानदानाभावनिन्दापूर्वकं यथाकालं तदुभयाङ्गीकारस्य विधिः

**पराग्वा एतद्रिक्तमक्षरं यदेतदोमिति । तद्यत्किंचोमित्याहात्रैवास्मै तद्रिच्यते। यत्सर्वमोंकुर्याद्रिञ्च्यादात्मानम् । स कामेभ्यो नालं स्यात्॥**

केवलमोंकारं लोकव्यवहारे निन्दति – परागिति। ओमिति यदेतदक्षरमस्ति तत् पराक् रिक्तं च। परम् उत्कृष्टं जगत्कारणमखण्डैकरसं ब्रह्मतत्त्वम् अञ्चति गच्छति प्रतिपादयतीति पराक्। अत एव संसाराद्बहिर्भूतं सत् रिक्तं संसारभोगशून्यम्। तत् तथा सति संसारी पुमान् स्वयमुदरं पुष्णन् यत्किंचित्स्वकीयं याचकाय पुरुषाय ओमिति ब्रूयात् स्वकीयकुटुम्बनिर्वाहमविचार्य याचकं प्रति 'त्वदभीष्टं तथैवास्तु, त्वमेव स्वीकुरु' इत्येव यदि ब्रूयात् तत् तदानीम् अयं पुमान् अत्रैव लोके अस्मै गृहक्षेत्रादिभोगाय रिच्यते रिक्तः भोगशून्यः भवति। एकैकद्रव्यदाने यथा तद्भोगशून्यत्वं तथा स पुमान्यदि सर्वमपि स्वकीयं धनम् ओं कुर्यात् याचकायाभ्यनुजानीयात् तदानीमात्मानं रिञ्च्यात् रिक्तं सर्वधनशून्यं कुर्यात्। स तादृशो धनहीनः पुमान्भोगेभ्यो न पर्याप्तः स्यात्। ऐआसा.

**अथैतत्पूर्णमभ्यात्मं यन्नेति। स यत्सर्वं नेति ब्रूयात्पापिकाऽस्य कीर्तिर्जायेत। सैनं तत्रैव हन्यात्॥**

केवलमोंकारं निन्दित्वा केवलं नकारमपि निन्दति – अथैतदिति। अथ केवलोंकारनिन्दानन्तरम् केवलनकारो निन्द्यते इति शेषः। यदेतन्नेति निषेधकमक्षरमस्ति तदेतदभ्यात्मं पूर्णम्। आत्मानं धनस्वामिनमभिलक्ष्य वर्तत इत्यभ्यात्मम्, तस्मिन्वर्तमानं सदिदमक्षरं धनसंपत्तिहेतुत्वात्पूर्णमित्युच्यते। यः पुमानत्यन्तलुब्धः सन्नर्थिने बलिभिक्षादिकं किमपि न प्रयच्छति, किं तु नेत्युच्चारयन्सर्वमपि याच्यमानं निषेधति, तथाविधस्य लुब्धस्य धनमक्षीणं सत्स्वगृहे पूर्णमवतिष्ठते। स तादृशो लुब्धो यदि याचकाय किमप्यदत्वा सर्वं नेति ब्रूयात्तदानीमस्य पापिका कीर्तिर्जायते 'अत्यन्तलुब्धोऽयं दुरात्मा, धिगेनम्' इत्येवं सर्वे निन्दन्ति। सा निन्दा पापरूपा कीर्तिः एनं पापात्मानं तत्रैव गृहे हन्यात् मारयेत्। जीवन्नप्यसौ मृत एव। तथा च भगवतोक्तम् – 'संभावितस्य चाकीर्तिर्मरणादतिरिच्यते।' (भगी. २।३४) इति। ऐआसा.

**तस्मात्काल एव दद्यात्, काले न दद्यात् तत्सत्यानृते मिथुनीकरोति। तयोर्मिथुनात्प्रजायते। भूयान् भवति॥**

ननु धनस्य दानादानयोरुभयोरपि निन्दितत्वे का गतिः पुरुषस्येत्याशङ्क्याऽऽह – तस्मादिति। यस्मादेकैकं निषिद्धं तस्मात्तत्परित्यज्योभयं मिलित्वैवमनुष्ठेयम्। कथमित्याशङ्क्य स प्रकार उच्यते – 'संप्राप्तो वैश्वदेवान्ते सोऽतिथिः' इत्यादिशास्त्रसिद्धो यो दानकालस्तस्मिन्नेव दद्यात्, न त्वन्यस्मिन्काले। तत् तथा सति ओंकाररूपं सत्यं निषेधनकाररूपमनृतं च मिथुनीकरोति मिलित्वा युग्मं करोति। तयोर्दानप्रतिषेधयोः सत्यानृतयोर्मिथुनात् प्रजायते इह लोके निन्दारहितः प्रकृष्टो भवति। परलोके च भूयान् (भवति) उत्कृष्टजन्मानुभवति।

ऐआसा.

शत्रुब्राह्मणेऽप्यकुशलवचननिषेधेन ब्राह्मणप्रशंसा

**'न त्वेवान्यत्कुशलाद्ब्राह्मणं ब्रूयात्। अतिद्युम्न एव ब्राह्मणं ब्रूयात्। "नातिद्युम्ने चन ब्राह्मणं ब्रूयात् 'नमो अस्तु ब्राह्मणेभ्यः" इति ह स्माऽऽह शूरवीरो माण्डूकेयः॥**

यदा शत्रुर्ब्राह्मणस्तदा विशेषं दर्शयति – न त्विति। दोषोद्भावकः शत्रुर्यदि ब्राह्मणस्तं प्रति कुशलादन्यन्नैव ब्रूयात् 'मदीयसंहितादौ दोषोद्भावनं तुभ्यं हितं न भवति, अतो दोषोक्तिं परित्यज्य त्वं सुखेन तिष्ठ' इत्येवं कुशलं ब्रूयात्, 'देवता रिष्यति' इत्येतादृशं शापं न ब्रूयात्। क्वचिद्ब्राह्मणेऽपि शापमभ्यनुजानाति – अतिद्युम्न इति। अतिशयितं द्युम्नं धनम् अतिद्युम्नम्। तस्मिन्नेव विषये विघातकं शत्रुं ब्राह्मणं शपेत्, न त्वल्पे विषये। इदानीं माण्डूकेयस्य महर्षेर्मतं दर्शयति – नातिद्युम्न इति। चनशब्दोऽप्यर्थः। अतिद्युम्नेऽपि महाधनविषयेऽपि विरोधिनं ब्राह्मणं न ब्रूयात् न शपेत्, किं तु 'ब्राह्मणेभ्यो नमोऽस्तु' इत्येतावदेव ब्रूयात्। तदेतन्महर्षेर्मतम्।

ऐआसा.

---

(१) **ऐआ.** ३।१।३,४; **शाआ.** ७।९, १०, ११ द्युम्ने चन (द्युम्नेन च) नमो अस्तु (नमोऽस्तु) (ह स्माऽऽह ०) शूर (शौर).

नमस्कार्यत्वानिन्द्यत्वाभ्यां ब्राह्मणप्रशंसा

**[1]यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति। तस्माद्ब्राह्मणेभ्यो वेदविद्भ्यो दिवे दिवे नमस्कुर्यात्। नाश्लीलं कीर्तयेत्। एता एव देवताः प्रीणाति॥**

'अग्निरवमो देवतानां विष्णुः परमः' (तैसं. ५।५।१।४) इत्युक्तत्वादग्निप्रभृतयो विष्णुपर्यन्ता यावत्यो देवताः सन्ति ताः सर्वाः पाठतोऽर्थतश्च वेदविदि ब्राह्मणे वसन्ति। एकैकस्मिन्मन्त्र एकैको देवः प्रतिपाद्यते। ते च मन्त्राः सर्वेऽध्येतुर्वाचि वेदितुर्मनसि च वर्तन्ते। अतो वेदविदां ब्राह्मणानां सर्वदेवतात्मकत्वात्तेभ्यः प्रतिदिनं नमस्कुर्यात्। अश्लीलं तदीयमशुभं किमपि विद्यमानमविद्यमानं वा न कीर्तयेत्। एतेन वेदविदो ब्राह्मणस्य सत्कारेण सर्वा अप्येता देवताः परितोषयति।

तैआसा.

सत्यानृतवादिनोः तथा देवोपासकब्राह्मणपूजकयोः फलभेदानुरोधेन यमलोके विवेचनम्

**[2]वैवस्वते विविच्यन्ते यमे राजनि ते जनाः।**
**ये चेह सत्येनेच्छन्ते य उ चानृतवादिनः॥**

इह लोके ये च पुरुषाः सत्येन वर्तितुमिच्छन्ति, येऽपि चान्ये पुरुषा अनृतवादिनः, ते द्विविधा अपि जना वैवस्वते सूर्यस्य पुत्रे यमे राजनि स्थिते सति तद्भृत्यैर्विविच्यन्ते। तत्र सत्यवादिनः स्वर्गं नयन्ति, अनृतवादिनो नरकं नयन्तीत्येवं तद्विवेकः। तैआसा.

**[3]ते राजन्निह विविच्यन्तेऽथा यन्ति त्वामुप।**
**देवांश्च ये नमस्यन्ति ब्राह्मणांश्चापचित्यति॥**

ये च पुरुषा इह लोके देवान्नमस्यन्ति उपासते, येऽपि चान्ये ब्राह्मणानपचित्यति सुवर्णदानान्नदानादिना पूजयन्ति, ते द्विविधा अपि हे राजन्, इह त्वदीये लोके विविच्यन्ते। तत्रोपासका ब्रह्मलोके नीयन्ते, दानादिकर्मनिष्ठास्तु स्वर्गलोके नीयन्त इति तद्विवेकः। अथ यस्मादेवं तस्मात्सर्वेऽपि, हे यम, त्वामुपयन्ति।

तैआसा.

(१) **तैआ.** २।१५।१.
(२) **तैआ.** ६।५।३; **आन.** ५ श्रुतिः.
(३) **तैआ.** ६।५।३.

श्रौतस्मार्तधर्माणामध्ययनाध्यापनाभ्यां सहानुष्ठेयत्वम्

**[1]ऋतं च स्वाध्यायप्रवचने च। सत्यं च स्वाध्यायप्रवचने च। तपश्च स्वाध्यायप्रवचने च। दमश्च स्वाध्यायप्रवचने च। शमश्च स्वाध्यायप्रवचने च। अग्नयश्च स्वाध्यायप्रवचने च। अग्निहोत्रं च स्वाध्यायप्रवचने च। अतिथयश्च स्वाध्यायप्रवचने च। मानुषं च स्वाध्यायप्रवचने च। प्रजा च स्वाध्यायप्रवचने च। प्रजनश्च स्वाध्यायप्रवचने च। प्रजातिश्च स्वाध्यायप्रवचने च। सत्यमिति सत्यवचा राथीतरः। तप इति तपोनित्यः पौरुशिष्टिः। स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः। तद्धि तपस्तद्धि तपः॥**

'विज्ञानादेव आप्नोति स्वाराज्यम्' इत्युक्तत्वाच्छ्रौतस्मार्तानां कर्मणामानर्थक्यं प्राप्तमित्यतस्तन्मा प्रापदिति कर्मणां पुरुषार्थं प्रति साधनत्वप्रदर्शनार्थमिहोपन्यासः। *ऋतमिति व्याख्यातम्। स्वाध्यायोऽध्ययनम्। प्रवचनमध्यापनं ब्रह्मयज्ञो वा। एतान्यृतादीन्यनुष्ठेयानीति वाक्यशेषः। सत्यं च सत्यवचनं✡ यथा व्याख्यातार्थं वा। तपः कृच्छ्रादि। दमः बाह्यकरणोपशमः। शमः अन्तःकरणोपशमः। अग्नयः आधातव्याः। अग्निहोत्रं च होतव्यम्। अतिथयश्च पूज्याः। मानुषमिति लौकिकः संव्यवहारः। तच्च यथाप्राप्तमनुष्ठेयम्। प्रजा चोत्पाद्या। प्रजनश्च प्रजननम्। ऋतौ भार्यागमनमित्यर्थः। प्रजातिः पौत्रोत्पत्तिः। पुत्रो निवेशयितव्य इत्येतत्। सर्वैरेतैः कर्मभिर्युक्तस्यापि स्वाध्यायप्रवचने यत्नतोऽनुष्ठेये इत्येवमर्थं सर्वेण सह स्वाध्यायप्रवचनग्रहणम्। स्वाध्यायाधीनं ह्यर्थज्ञानम्। अर्थज्ञानायत्तं च परं श्रेयः। प्रवचनं च तदविस्मरणार्थं धर्मप्रवृद्ध्यर्थं च। अतः स्वाध्यायप्रवचनयोरादरः कार्यः। सत्यमिति सत्यमेवानुष्ठातव्यमिति सत्यवचाः सत्यमेव वचो यस्य सोऽयं सत्यवचाः, नाम वा तस्य। राथीतरः रथीतरसगोत्रो राथीतराचार्यः मन्यते। तप इति तप एव कर्तव्यमिति तपोनित्यः तपसि नित्यः तपःपरः, तपोनित्य

* 'ऋतं यथाशास्त्रं यथाकर्तव्यं बुद्धौ सुपरिनिश्चितमर्थम्' इति तैउ. १।१ इत्यत्र व्याख्यातम्।
✡ 'सत्यमिति वाक्कायाभ्यां संपाद्यमानः (अर्थः)' इति तैउ. १।१ इत्यत्र व्याख्यातम्।
(१) **तैउ.** १।९।१-६.

इति वा नाम। पौरुशिष्टिः पुरुशिष्टस्यापत्यं पौरुशिष्टिराचार्यो मन्यते। स्वाध्यायप्रवचने एवानुष्ठेये इति नाको नामतः, मुद्गलस्यापत्यं मौद्गल्य आचार्यो मन्यते। तद्धि तपस्तद्धि तपः। हि यस्मात् स्वाध्यायप्रवचने एव तपः तस्मात्ते एवानुष्ठेये इति। उक्तानामपि सत्यतपःस्वाध्यायप्रवचनानां पुनर्ग्रहणमादरार्थम्। शंकर.

शिष्यं प्रत्याचार्येणाऽऽवश्यकत्वेनोपदिष्टा धर्माः– सत्यवचनम्, धर्माचरणम्, अध्ययनाध्यापने, गार्हस्थ्यम्, आत्मरक्षककर्माणि, समृद्धिकरकर्माणि, दैवपित्र्यकर्माणि, मातृपित्राचार्यातिथिसेवा, अनिन्दितशिष्टाचाराचरणम्, श्रेष्ठब्राह्मणसेवा, दानम्, कर्मविषयके अभिशस्तसंसर्गविषयके च संदेहे शिष्टाचारवदाचारः

**'वेदमनूच्याऽऽचार्योऽन्तेवासिनमनुशास्ति — सत्यं वद। धर्मं चर। स्वाध्यायान्मा प्रमदः। आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः। सत्यान्न प्रमदितव्यम्। धर्मान्न प्रमदितव्यम्। कुशलान्न प्रमदितव्यम्। भूत्यै न प्रमदितव्यम्। स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्। देवपितृकार्याभ्यां न प्रमदितव्यम्। मातृदेवो भव। पितृदेवो भव। आचार्यदेवो भव। अतिथिदेवो भव। यान्यनवद्यानि कर्माणि। तानि सेवितव्यानि। नो इतराणि। यान्यस्माकः सुचरितानि। तानि त्वयोपास्यानि। नो इतराणि। ये के चास्मच्छ्रेयाःसो ब्राह्मणाः। तेषां त्वयाऽऽसनेन प्रश्वसितव्यम्। श्रद्धया देयम्। अश्रद्धयाऽदेयम्। श्रिया देयम्। ह्रिया देयम्। भिया देयम्। संविदा देयम्। अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात्। ये तत्र ब्राह्मणाः संमर्शिनः। युक्ता आयुक्ताः। अलूक्षा धर्मकामाः स्युः। यथा ते तत्र वर्तेरन्। तथा तत्र वर्तेथाः। अथाभ्याख्यातेषु। ये तत्र ब्राह्मणाः संमर्शिनः। युक्ता आयुक्ताः। अलूक्षा धर्मकामाः स्युः। यथा ते तेषु वर्तेरन्। तथा तेषु वर्तेथाः। एष आदेशः। एष उपदेशः। एषा वेदोपनिषत्। एतदनुशासनम्। एवमुपासितव्यम्। एवमु चैतदुपास्यम्॥**

वेदमनूच्येत्येवमादिकर्तव्यतोपदेशारम्भः प्राग्ब्रह्मविज्ञानान्नियमेन कर्तव्यानि श्रौतस्मार्तकर्माणीत्येवमर्थः, अनुशासनश्रुतेः पुरुषसंस्कारार्थत्वात्। संस्कृतस्य हि विशुद्धसत्त्वस्य आत्मज्ञानमञ्जसैवोत्पद्यते। 'तपसा कल्मषं हन्ति विद्ययाऽमृतमश्नुते' इति स्मृतिः। वक्ष्यति च — 'तपसा ब्रह्म विजिज्ञासस्व' इति। अतो विद्योत्पत्त्यर्थमनुष्ठेयानि कर्माणि। अनुशास्तीत्यनुशासनशब्दादनुशासनातिक्रमे हि दोषोत्पत्तिः। प्रागुपन्यासाच्च कर्मणाम्। केवलब्रह्मविद्यारम्भाच्च पूर्वं कर्माण्युपन्यस्तानि। उदितायां च विद्यायाम् 'अभयं प्रतिष्ठां विन्दते', 'न बिभेति कुतश्चन', 'किमहं साधु नाकरवम्' इत्येवमादिना कर्मनैष्किंचन्यं दर्शयिष्यतीत्यतोऽवगम्यते पूर्वोपचितदुरितक्षयद्वारेण विद्योत्पत्त्यर्थानि कर्माणीति। मन्त्रवर्णाच्च — 'अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते' (ईउ. ११) इति। ऋतादीनां पूर्वत्रोपदेश आनर्थक्यपरिहारार्थः। इह तु ज्ञानोत्पत्त्यर्थत्वात्कर्तव्यनियमार्थः।

वेदम् अनूच्य अध्याप्य आचार्यः अन्तेवासिनं शिष्यम् अनुशास्ति ग्रन्थग्रहणादनु पश्चात् शास्ति, तदर्थं ग्राहयतीत्यर्थः। अतोऽवगम्यते अधीतवेदस्य धर्मजिज्ञासामकृत्वा गुरुकुलान्न समावर्तितव्यमिति। 'बुद्ध्वा कर्माणि चाऽऽरभेत्' इति स्मृतेश्च। कथमनुशास्तीत्याह — सत्यं वद यथाप्रमाणावगतं वक्तव्यं तद्वद। तद्वद्धर्मं चर। धर्म इत्यनुष्ठेयानां सामान्यवचनम्, सत्यादिविशेषनिर्देशात्। स्वाध्यायात् अध्ययनात् मा प्रमदः प्रमादं मा कार्षीः। आचार्याय आचार्यार्थं प्रियम् इष्टं धनम् आहृत्य आनीय दत्त्वा विद्यानिष्क्रयार्थम्, आचार्येण चानुज्ञातोऽनुरूपान् दारानाहृत्य प्रजातन्तुं प्रजासंतानं मा व्यवच्छेत्सीः प्रजासंततेर्विच्छित्तिर्न कर्तव्या। अनुत्पद्यमानेऽपि पुत्रे

(१) **तैउ.** १।११।१-४; **पमा.** १।११९ (धर्मं चर) एतावदेव, (=) : १।१३० (अथ....वा स्यात्) एतावदेव, श्रुत्यन्तरम्; **मच.** २।१६६ (सत्यं....प्रमदः) एतावदेव, श्रुतिः : ४।९ (स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्) एतावदेव, श्रुतिः : ४।२२८ (ह्रिया देयं भिया देयं श्रद्धया देयमश्रद्धयाऽदेयम्) एतावदेव, श्रुतिः; **बौवि.** २।११।२९ (प्रजातन्तुम्) एतावदेव, श्रुतिः; **मुक्ता.** ८ (अथ यदि ते.... वर्तेथाः) एतावदेव, तैत्तिरीयाः समामनन्ति : ३०१ (सत्यान्न....मातृदेवो भव) एतावदेव, तैत्तिरीयश्रुतौ; **पप्र.** ९ (ये तत्र ब्राह्मणाः समदर्शिनो युक्ता आयुक्ता अरूक्षा धर्मकामाः स्युः यथा ते तत्र वर्तेरन् तथा तत्र वर्तेथाः) एतावदेव, तैत्तिरीये; **आन.** ५ (ये तत्र ब्राह्मणाः संमर्शिनः। युक्ता आयुक्ताः। अलूक्षा धर्मकामाः स्युः। यथा ते तत्र वर्तेरन्। तथा तत्र वर्तेथाः) एतावदेव, श्रुतिः; **संर.** ३७१ (आचार्याय..... व्यवच्छेत्सीः) एतावदेव, श्रुतिः.

पुत्रकाम्यादिकर्मणा तदुत्पत्तौ यत्नः कर्तव्य इत्यभिप्रायः, #प्रजाप्रजन(न?)प्रजातित्रयनिर्देशसामर्थ्यात्। अन्यथा प्रजनश्चेत्येतदेकमेवावक्ष्यत्। सत्यान्न प्रमदितव्यं प्रमादो न कर्तव्यः। सत्याच्च प्रमदनम् अनृतप्रसङ्गः, प्रमादशब्द-सामर्थ्यात्। विस्मृत्याप्यनृतं न वक्तव्यमित्यर्थः। अन्यथा असत्यवदनप्रतिषेध एव स्यात्। धर्मान्न प्रमदितव्यम्। धर्मशब्दस्यानुष्ठेयविषयत्वादननुष्ठानं प्रमादः, स न कर्तव्यः। अनुष्ठातव्य एव धर्म इति यावत्। एवं कुशलात् आत्मरक्षणार्थात्कर्मणो न प्रमदितव्यम्। भूतिः विभूतिः, तस्यै भूत्यै भूत्यर्थान्मङ्गलयुक्तात्कर्मणो न प्रमदितव्यम्। स्वाध्यायप्रवचनाभ्यां न प्रमदतिव्यम्। स्वाध्यायः अध्ययनम्, प्रवचनम् अध्यापनम्, ताभ्यां न प्रमदितव्यम्। ते हि नियमेन कर्तव्ये इत्यर्थः। तथा देवपितृकार्याभ्यां न प्रमदितव्यम्। दैवपित्र्ये कर्मणी कर्तव्ये। मातृदेवः माता देवो यस्य स त्वं मातृदेवः भव स्याः। एवं पितृदेवः आचार्यदेवः अतिथिदेवः भव। देवतावदुपास्या एते इत्यर्थः। यान्यपि चान्यानि अनवद्यानि अनिन्दितानि शिष्टाचार -लक्षणानि कर्माणि, तानि सेवितव्यानि कर्तव्यानि त्वया। नो न कर्तव्यानि इतराणि सावद्यानि शिष्टकृतान्यपि। यानि अस्माकम् आचार्याणां सुचरितानि शोभनचरितानि आम्नायाद्यविरुद्धानि तान्येव त्वया उपास्यानि अदृष्टा-र्थान्यनुष्ठेयानि, नियमेन कर्तव्यानीति यावत्। नो इतराणि विपरीतानि आचार्यकृतान्यपि। ये के च विशेषिता आचार्यत्वादिधर्मैः अस्मत् अस्मत्तः श्रेयांसः प्रशस्यतराः, ते च ब्राह्मणाः, न क्षत्रियादयः, तेषामासनेन आसनदानादिना त्वया प्रश्वसितव्यम्। प्रश्वसनं प्रश्वासः श्रमापनयः। तेषां श्रमस्त्वयाऽपनेतव्य इत्यर्थः। तेषां वा आसने गोष्ठीनिमित्ते समुदिते तेषु न प्रश्वसितव्यं प्रश्वासोऽपि न कर्तव्यः। केवलं तदुक्तसारग्राहिणा भवितव्यम्। किंच यत्किंचिद्देयं तच्छ्रद्धयैव दातव्यम्। अश्रद्धया अदेयं न दातव्यम्। श्रिया विभूत्या देयं दातव्यम्। ह्रिया लज्जया च देयम्। भिया च भयेन देयम्। संविदा च। संवित् मित्रादिकार्यम्। अथैवं वर्तमानस्य यदि कदाचित् ते तव श्रौते स्मार्ते वा कर्मणि वृत्ते वा आचारलक्षणे विचिकित्सा संशयः स्यात्, ये तत्र तस्मिन्देशे काले वा ब्राह्मणास्तत्र कर्मादौ युक्ता इति व्यवहितेन संबन्धः कर्तव्यः, संमर्शिनः विचारक्षमाः, युक्ताः अभियुक्ताः कर्मणि वृत्ते वा, आयुक्ताः अपरप्रयुक्ताः, अलूक्षाः अरूक्षाः अक्रूरमतयः, धर्मकामाः अदृष्टार्थिनः अकामहता इत्येतत्, स्युः भवेयुः, ते यथा येन प्रकारेण ब्राह्मणाः तत्र तस्मिन्कर्मणि वृत्ते वा वर्तेरन् तथा त्वमपि वर्तेथाः। अथाभ्याख्यातेषु। अभ्याख्याताः अभ्युक्ताः दोषेण संदिह्यमानेन संयोजिताः केनचित्, तेषु च यथोक्तं सर्वमुपनयेत् ये तत्रेत्यादि।

एषः आदेशः विधिः। एषः उपदेशः पुत्रादिभ्यः पित्रादीनाम्। एषा वेदोपनिषत् वेदरहस्यम्, वेदार्थ इत्येतत्। एतदेव अनुशासनम् ईश्वरवचनम्, आदेशवाच्यस्य विधेरुक्तत्वात्। सर्वेषां वा प्रमाणभूतानामनुशासनमेतत्। यस्मादेवं तस्मात् एवं यथोक्तं सर्वमुपासितव्यं कर्तव्यम्। एवमु चैतदुपास्यम्। उपास्यमेव चैतत्, नानुपास्य-मित्यादरार्थं पुनर्वचनम्। शंकर.

पुण्यस्य प्रशंसा पापस्य निन्दा च

**[1]यथा वृक्षस्य संपुष्पितस्य दूराद्गन्धो वात्येवं पुण्यस्य कर्मणो दूराद्गन्धो वाति यथाऽसिधारां कर्तेऽवहिताम-वक्रामे यद्युवे युवे ह वा विह्वयिष्यामि कर्तं पतिष्या-मीत्येवममृतादात्मानं जुगुप्सेत्॥**

यथा वृक्षस्योद्यानादौ स्थितस्य चम्पकादिलक्षणस्य संपुष्पितस्य सम्यग्विकसितपुष्पोपेतस्य यो गन्धः (सुरभि-रस्ति सोऽयं) दूरात् दूरदेशात् वाति वायुना सहाऽऽगच्छति, एवं पुण्यस्य कर्मणो ज्योतिष्टोमादेः सत्कीर्तिः सुगन्ध-समाना दूराद्वाति मनुष्यलोकात्स्वर्गे गच्छति। तस्मात्पुण्य-मनुष्ठेयम्। अथ पापस्य दृष्टान्त उच्यते — यथा लोके कश्चित्कदाचित्केनचिद्धेतुना (कर्ते) गर्ते गर्तस्योपरि तिर्यक्काष्ठवत् अवहितां प्रसारिताम् असिधाराम् अहम् अवक्रामे पादाभ्यामुपर्युपरि गच्छामि (?मीतीच्छति) तदा यत् यदि युवे युवे याम्यायामि तदाऽसिधारया पादयोर्दृढस्पर्शो भविष्यति। ततः पादच्छेदस्य (?दः स्यात्) यदि दृढस्पर्शाभावः कर्तं (?कर्ते) गर्ते पतिष्यामि। उभयथा दुःखमेवेति विह्वयिष्यामि विह्वलितो भविष्यामि। तस्मादस्मात्कर्मण उपरम इति चिन्तयति। यथैवं

# पूर्वानुवाके 'प्रजा च स्वाध्यायप्रवचने च। प्रजनश्च स्वाध्याय०। प्रजातिश्च स्वाध्याय०।' इति त्रयनिर्देशः।

(१) नाउ. ११, ७८, ७९.

मुमुक्षुरप्यमृतान्मोक्षप्राप्तिहेतोः आत्मानम् अन्तःकरणं स्थिरीकृत्य पापाज्जुगुप्सेत्। यदि पापं प्रकटं करिष्यामि तदा लोकैरहं निन्द्ये। यदि रहसि तदा नरके याम्यैरहं पीड्ये। तस्माद्बहिः रहसि च न पापं करिष्य इत्युपरम्यताम्।
नाउभा.

सत्यदमदानप्रशंसा

***सत्यं परम्। परं सत्यम्। सत्येन न सुवर्गाल्लोकाच्च्यवन्ते कदाचन। सतां हि सत्यम्। तस्मात्सत्ये रमन्ते॥**

**दम इति नियतं ब्रह्मचारिणः। तस्माद्दमे रमन्ते॥**

**दानमिति सर्वाणि भूतानि प्रशंसन्ति। दानान्नातिदुश्चरम्। तस्माद्दाने रमन्ते॥**

**सत्येन वायुरावाति। सत्येनाऽऽदित्यो रोचते दिवि। सत्यं वाचः प्रतिष्ठा। सत्ये सर्वं प्रतिष्ठितम्। तस्मात्सत्यं परमं वदन्ति॥**

**दमेन दान्ताः किल्बिषमवधून्वन्ति। दमेन ब्रह्मचारिणः सुवरगच्छन्। दमो भूतानां दुराधर्षम्। दमे सर्वं प्रतिष्ठितम्। तस्माद्दमः परमं वदन्ति॥**

**दानं यज्ञानां वरूथं दक्षिणा। लोके दातारं सर्वभूतान्युपजीवन्ति। दानेनारातीरपानुदन्त। दानेन द्विषन्तो मित्रा भवन्ति। दाने सर्वं प्रतिष्ठितम्। तस्माद्दानं परमं वदन्ति॥**

प्रमाणसिद्धयज्ञादिकर्मणां
कर्तुर्मोक्षः फलम्

[1]**त्रिभिरेत्य संधिं त्रिकर्मकृत्तरति जन्ममृत्यू॥**

त्रिभिः मातृपित्राचार्यैरेत्य प्राप्य संधिं साधनं संबन्धं मात्राद्यनुशासनं यथावत्प्राप्येत्येतत्। तद्धि प्रामाण्यकारणं श्रुत्यन्तरादवगम्यते, यथा 'मातृमान् पितृमान्' इत्यादेः। वेदस्मृतिशिष्टैर्वा प्रत्यक्षानुमानागमैर्वा। तेभ्यो हि विशुद्धिः प्रत्यक्षा। त्रिकर्मकृत् इज्याध्ययनदानानां कर्ता तरति अतिक्रामति जन्ममृत्यू। शंकर.

अस्वर्ग्यैः सह स्वर्ग्यस्य संसर्गः श्रेयस्करज्ञान-
प्रतिबन्धकः, तत्र एकोनविंशतिसंख्याकाना-
मस्वर्ग्याणां प्रदर्शनम्

[2]**अथेदानीं ज्ञानोपसर्गाः राजन्मोहजालस्यैष वै योनिर्यदस्वर्ग्यैः सह स्वर्ग्यस्यैषः॥**

तदेवं श्रेयोर्थिनामुपादेयं साधनजातं सोपस्करं सफलमनेकधोपदिश्येदानीं श्रेयोमार्गविघातकं परिहरणीयं सम्यग्व्युत्पादयति–अथेदानीं....न्तरं तु यदिति। अथ उपादेयविध्यर्थनिरूपणानन्तरमिदानीं हेयनिषेधार्थकथनावसरे प्राप्ते ज्ञानोपसर्गाः ज्ञानोत्पत्तिविघातका हेतवः, प्रस्तूयन्त इति शेषः। राजन्निति संबोधनं प्रदर्शनार्थम्। अयमुपदेशप्रकार एव, आख्यायिकायाः पुरा समापनात्। के ते ज्ञानोपसर्गा इत्याकाङ्क्षायां यन्मोहजालं वस्तुतत्त्वाविवेकनिबन्धनमित्युत्तरं पूरणीयम्। पुनः कुतो मोहजालप्रसर इत्याकाङ्क्षायामाह – मोहजालस्य एषः वक्ष्यमाणः वै प्रसिद्धः योनिः प्रसरणस्थानम्। कोऽसौ? यत् अस्वर्ग्यैः स्वर्गानर्हैः नास्तिकादिभिः सह स्वर्ग्यस्य स्वर्गार्हस्य वैदिकस्य, संसर्ग इत्यध्याहारः। पुनरेष इति पूर्वोक्तस्यैवाऽऽकर्षणमन्वयस्पष्टीकरणार्थम्। मैदीपिका.

**वाट्ये पुरस्तादुक्तेऽप्यधःस्तम्बेनाऽऽश्लिष्यन्ति। अथ ये चान्ये ह नित्यप्रमुदिता नित्यप्रवसिता नित्ययाचनका नित्यं शिल्पोपजीविनः। अथ ये चान्ये ह पुरयाचका अयाज्ययाजकाः शूद्रशिष्याः शूद्राश्च शास्त्रविद्वांसः। अथ ये चान्ये ह चाटजटनटभटप्रव्रजितरङ्गावतारिणो राजकर्मणि पतितादयः॥**

तत्र निदर्शनं लुप्तोपमाव्यञ्जकमाह – वाट्य इति। वाटीमर्हतीति वाट्यः महाशाख्याम्रपनसादिः, तस्मिन् पुरस्तात् पुरःस्थितत्वेन केनचिदाप्तेनोक्तेऽपि तमनादृत्य अधःस्तम्बेन क्षुद्रेण तृणशलाकया सहाऽऽश्लिष्यन्ति। स्तम्बप्रभवं छायाफलादिकं बहु मन्यन्ते इत्यर्थः। एष दृष्टान्तो मोहस्येति। एषपदस्येहैव वाऽन्वयः। अथ पुनः ये च येऽप्यन्ये इह लोके नित्यप्रमुदिताः ऐहिकैरेव लाभैः सदा संतुष्टाः। ये च नित्यप्रवसिताः सदा परप्रेष्याः। नित्ययाचनकाः सदा दीनाः। नित्यं शिल्पोपजीविनः कारुकर्मकौशलेन जीवननिरता इत्यर्थः। अथ ये चान्ये ह पुरयाचकाः नगरभिक्षवः। ये च अयाज्यान् याजनानर्हान् याजयन्ति ते अयाज्ययाजकाः। ये चान्ये शूद्रशिष्याः शूद्रात् यां कामपि विद्यां गृहीतवन्तो ब्राह्मणादयः ते शूद्रशिष्याः। ये च शूद्राः शास्त्रं श्रुतिस्मृतिपुराणलक्षणं विदन्ति पठन्ति पाठयन्ति वा ते शास्त्रविद्वांसः। अथ ये चान्ये ह चाटाः पिशुनाः, जटाः अपरिच्छिन्नासभ्यवदनपराः, नटाः नर्तनोपजीवनाः, भटाः योधास्तस्करा वा, प्रव्रजिताः कार्पटिका अभिक्षवो

* एतेषां व्याख्यानं प्रथमभागे 'धर्मतत्त्वविचारः' इत्यस्मिन् प्रकरणे (वका. पृ. ३८१-३८४) द्रष्टव्यम्।
(१) काउ. १।१।१७.
(२) मैत्र्युप. ७।८.

भिक्षुवेषधारकाः, रङ्गावतारिणः अनेकवेषभाषाविशेषैर्नाटकनाट्यजीविनः। राजकर्मणि राज्ये। ये नियुक्ता इत्यध्याहारः। राष्ट्रसंरक्षणे चोरशासनादावधिकृता इत्यर्थः। ये च पतिताः महापातककृतः राष्ट्रान्निःसारिताः स्थिता वा। आदिपदादभिशस्ता गृह्यन्ते। मैदीपिका.

**अथ ये चान्ये ह यक्षराक्षसभूतगणपिशाचोरगग्रहादीनामर्थं पुरस्कृत्य शमयाम इत्येवं ब्रुवाणाः। अथ ये चान्ये ह वृथा कषायकुण्डलिनः कापालिनः। अथ ये चान्ये ह वृथातर्कदृष्टान्तकुहकेन्द्रजालैर्वैदिकेषु परिस्थातुमिच्छन्ति। तैः सह न संवसेत्। प्रकाशभूता वै ते तस्करा अस्वर्ग्या इत्येवं ह्याह॥**

अथ ये चान्ये ह यक्षेति। ग्रहादीनामिति कर्मणि षष्ठी। अर्थं पुरस्कृत्य धनादिकं स्वजीवनमुद्दिश्य ये यक्षादीन्प्राणिपीडकान् शमयामः उच्चाटनादिभिर्निवारयामः इत्येवं ब्रुवाणाः, मन्त्रयन्त्रपरा इत्यर्थः। अथ ये चान्ये वृथा मिथ्या कषायवाससः कुण्डलिनः शङ्खादिशकलकृतकुण्डलधारिणः कापालिनः कपालभिक्षवः। अथ ये चान्ये वृथातर्कः अनुग्राह्यप्रबलप्रमाणशून्यः स्वबुद्धिकल्पितः, दृष्टान्तः प्रायोऽदृष्टस्योदाहरणं क्वचित् दृष्टस्य वोदाहरणं दृष्टान्तः, कुहकं छलग्रहः प्रतारणं वा, इन्द्रजालं प्रत्यक्षतो मिथ्यार्थप्रदर्शनम्, एतैर्द्वारैर्ये वैदिकेषु वेदोक्तमार्गैकनिरतेषु परिस्थातुं परिपन्थितया स्थातुम् इच्छन्ति तैः सह न संवसेत् ये च पूर्वोक्तास्तैश्च न सह संवसेदित्यर्थः। तत्र हेतुमाह – ते वै निश्चितं प्रकाशभूताः अपरोक्षा एव तस्कराः चोराः परवित्तापहारिणः प्रसिद्धाः। यावन्त उक्तास्ते अस्वर्ग्या यतः अतो वैदिकानभिभूय ज्ञानमार्गमवरुन्धत इति वैदिकैर्वेदोक्तपुरुषार्थार्थिभिस्तत्सङ्गस्त्याज्य इत्यर्थः।

मैदीपिका.

**नैरात्म्यवादकुहकैर्मिथ्यादृष्टान्तहेतुभिः।**
**भ्राम्यल्लोको न जानाति वेदविद्यान्तरं तु यत्॥**

नैरात्म्यवादः शून्यक्षणिकविज्ञानाद्यात्मवादः। वेदविद्यान्तरमिति। वेदं विद्यान्तरं चेत्यर्थः। मैदीपिका.

जीवननिमित्तेन कर्मकरणविधिः

**[1]कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः।**
**एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे॥**

(१) शुसं. ४०।२; ईउ.२.

अथ इतरस्यानात्मज्ञतया आत्मग्रहणायाशक्तस्येदमुपदिशति मन्त्रः – कुर्वन्नेवेहेति। कुर्वन्नेवेह निर्वर्तयन्नेव कर्माणि अग्निहोत्रादीनि जिजीविषेत् जीवितुमिच्छेत् शतं शतसंख्याकाः समाः संवत्सरान्। तावद्धि पुरुषस्य परमायुर्निरूपितम्। तथा च प्राप्तानुवादेन यत् जिजीविषेच्छतं वर्षाणि तत् कुर्वन्नेव कर्माणीत्येतद्विधीयते। एवम् एवंप्रकारेण त्वयि जिजीविषति नरे नरमात्राभिमानिनि इतः एतस्मात् अग्निहोत्रादीनि कर्माणि कुर्वतो वर्तमानात्प्रकारात् अन्यथा प्रकारान्तरं नास्ति, येन प्रकारेणाशुभं कर्म न लिप्यते, कर्मणा न लिप्यते इत्यर्थः। अतः शास्त्रविहितानि कर्माण्यग्निहोत्रादीनि कुर्वन्नेव जिजीविषेत्। शंकर.

अनिष्टफलजनकत्वेनाऽऽत्महननिन्दा

**[1]असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः।**
**तांस्ते प्रेत्याभिगच्छन्ति ये के चाऽऽत्महनो जनाः॥***

आत्मवधश्च.....मन्त्रार्थवादैश्च तैर्दोषवान्नेति(?निति) ज्ञापितम्। तथाहि मन्त्रः – 'असुर्या.... जनाः॥' इति।

मेधा. ५।२७

शास्त्रविरुद्धानि वदनघ्राणदर्शनश्रवणसंकल्पनानि पापानि

**[2]स पाप्मा यदेवेदमप्रतिरूपं वदति॥**

यदेवेदमप्रतिरूपम् अननुरूपं शास्त्रप्रतिषिद्धं वदति।

शंकर.

**स पाप्मा यदेवेदमप्रतिरूपं जिघ्रति॥**
**स पाप्मा यदेवेदमप्रतिरूपं पश्यति॥**
**स पाप्मा यदेवेदमप्रतिरूपं शृणोति॥**
**[3]स पाप्मा यदेवेदमप्रतिरूपं संकल्पयति॥**

अश्लीलं संकल्पनमपि, + 'यदि.... यति' इति श्रुतेः।

विश्व. १।३२

* शंकराचार्यमहीधरोवटभाष्येषु 'आत्महनः' इत्यस्य प्राणत्यागिभिन्नार्थत्वोक्तेस्तानि न संगृहीतानि।

\+ 'वर्जयेत्' मूलेन संबध्यते।

(१) शुसं. ४०।३; ईउ. ३; मेधा. ५।२७ मन्त्रः; पमा. २।४६ असुर्या (असूर्या) प्रेत्याभि (प्रत्याधि) श्रुत्यन्तरम्.

(२) शब्रा. १४।४।१।३-६; बृउ. १।३।२-५.

(३) शब्रा. १४।४।१।७; बृउ. १।३।६; विश्व. १।३२ (यदि वेदमप्रतिरूपं संकल्पयति) एतावदेव, श्रुतिः.

दिगन्तदेशस्य तद्वासिजनस्य च
संसर्गस्य निषेधः

[1]**सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्य यत्राऽऽसां दिशामन्तस्तद्गमयांचकार। तदासां पाप्मनो विन्यदधात्। तस्मान्न जनमियान्नान्तमियान्नेत्पाप्मानं मृत्युमन्ववायानीति॥**

सा वा एषा देवतेति *उक्तार्थम्। एतासां वागादीनां देवतानां पाप्मानं मृत्युम्। स्वाभाविकाज्ञानप्रयुक्तेन्द्रियविषयसंसर्गासङ्गजनितेन हि पाप्मना सर्वो म्रियते, स ह्यतो मृत्युः। तं प्राणात्माभिमानरूपाभ्यो देवताभ्यः अपच्छिद्य अपहत्य। प्राणात्माभिमानमात्रतयैव प्राणोऽपहन्तेत्युच्यते। विरोधादेव तु पाप्मैवंविदो दूरं गतो भवति। किं पुनश्चकार देवतानां पाप्मानं मृत्युमपहत्येत्युच्यते – यत्र यस्मिन् आसां प्राच्यादीनां दिशामन्तः अवसानं तत् तत्र गमयांचकार गमनं कृतवानित्येतत्। ननु नास्ति दिशामन्तः, कथमन्तं गमितवानिति? उच्यते – श्रौतविज्ञानवज्जनावधिनिमित्तकल्पितत्वाद्दिशां तद्विरोधिजनाध्युषित एव देशो दिशामन्तः, देशान्तोऽरण्यमिति यद्वत्, इत्यदोषः। तत् तत्र गमयित्वा आसां देवतानां पाप्मनः, इति द्वितीयाबहुवचनम्, विन्यदधात् विविधं न्यग्भावेनादधात् स्थापितवती प्राणदेवता। प्राणात्माभिमानशून्येष्वन्त्यजनेष्विति सामर्थ्यात्। इन्द्रियसंसर्गजो हि स इति प्राण्याश्रयताऽवगम्यते। तस्मात् तमन्त्यं जनं नेयात् न गच्छेत् संभाषणदर्शनादिभिर्न संसृजेत्। तत्संसर्गे पाप्मना संसर्गः कृतः स्यात्। पाप्माश्रयो हि सः। तज्जननिवासं चान्तं दिगन्तशब्दवाच्यं नेयात् जनशून्यमपि। जनमपि तद्देशवियुक्तमित्यभिप्रायः। नेदिति परिभयार्थे निपातः। इत्थं जनसंसर्गे पाप्मानं मृत्युम् अन्ववायानीति अनु अव अयानीति अनुगच्छेयमिति। एवं भीतो न जनमन्तं चेयादिति पूर्वेण संबन्धः। शंकर.

पुत्रोत्पादनकर्मानुष्ठानविद्यानां मनुष्यलोकपितृलोकदेवलोकसाधनत्वात् प्रशस्यत्वं तत्र
विद्यायाः प्रशस्यतमत्वं च

[2]**अथ त्रयो वाव लोकाः – मनुष्यलोकः पितृलोको देवलोक इति। सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणा। कर्मणा पितृलोकः। विद्यया देवलोकः। देवलोको वै लोकानां श्रेष्ठः। तस्माद्विद्यां प्रशंसन्ति॥**

एवं पाङ्क्तेन दैववित्तविद्यासंयुक्तेन कर्मणा त्र्यन्नात्मकः प्रजापतिर्भवतीति व्याख्यातम्। अनन्तरं च जायादिवित्तं परिवारस्थानीयमित्युक्तम्। तत्र पुत्रकर्मापरविद्यानां लोकप्राप्तिसाधनत्वमात्रं सामान्येनावगतम्। न पुत्रादीनां लोकप्राप्तिफलं प्रति विशेषसंबन्धनियमः। सोऽयं पुत्रादीनां साधनानां साध्यविशेषसंबन्धो वक्तव्य इत्युत्तरकण्डिका प्रणीयते। अथेति वाक्योपन्यासार्थः। त्रयः, वावेत्यवधारणार्थः, त्रय एव शास्त्रोक्तसाधनार्हा लोकाः, न न्यूना अधिका वा। के ते इत्युच्यते – मनुष्यलोकः पितृलोको देवलोक इति। तेषां सोऽयं मनुष्यलोकः पुत्रेणैव साधनेन जय्यः जेतव्यः साध्यः। यथा च पुत्रेण जेतव्यस्तथोत्तरत्र वक्ष्यामः। नान्येन कर्मणा। विद्यया वेति वाक्यशेषः। कर्मणा अग्निहोत्रादिलक्षणेन केवलेन पितृलोको जेतव्यः, न पुत्रेण नापि विद्यया। विद्यया देवलोकः, न पुत्रेण नापि कर्मणा। देवलोको वै लोकानां त्रयाणां श्रेष्ठः प्रशस्यतमः। तस्मात् तत्साधनत्वात् विद्यां प्रशंसन्ति। शंकर.

सहसा सुप्तप्रबोधनस्य निषेधः

[1]**तं नाऽऽयतं बोधयेदित्याहुः। दुर्भिषज्यं हास्मै भवति यमेष न प्रतिपद्यते॥**

तमात्मानं सुप्तम् आयतं सहसा भृशं न बोधयेदित्याहुः एवं कथयन्ति चिकित्सकादयो जना लोके। नूनं ते पश्यन्ति – जाग्रद्देहादिन्द्रियद्वारतोऽपसृत्य केवलो बहिर्वर्तते इति, यत आहुः – तं नाऽऽयतं बोधयेदिति । तत्र च दोषं पश्यन्ति – भृशं ह्यसौ बोध्यमानस्तानीन्द्रियद्वाराणि सहसा प्रतिबोध्यमानो न प्रतिपद्यत इति। तदेतदाह – दुर्भिषज्यं हास्मै भवति यमेष न प्रतिपद्यते। यम् इन्द्रियद्वारदेशं यस्माद्देशाच्छुक्रमादायापसृतः तमिन्द्रियदेशम् एषः आत्मा पुनर्न प्रतिपद्यते, कदाचिद्व्यत्यासेनेन्द्रियमात्राः प्रवेशयति, ततः आन्ध्यबाधिर्यादिदोषप्राप्तौ दुर्भिषज्यं दुःखभिष-

*प्राणाभिमानिनी देवतेत्यर्थः।

(१) **शब्रा.** १४।४।१।११; **बृउ.** १।३।१०; **मेधा.** १०।४४ (न जनमियान्नान्तमियात्) एतावदेव, वेदः; **मच.** ४।६० सर्वं मेधावत्.

(२) **शब्रा.** १४।४।३।२४; **बृउ.** १।५।१६.

(१) **शब्रा.** १४।७।१।१५; **बृउ.** ४।३।१४; **मच.** ४।५७ (तं नाऽऽय......दित्याहुः०) श्रुतिः.

क्कर्मता ह अस्मै देहाय भवति। दुःखेन चिकित्सनीयोऽसौ देहो भवतीत्यर्थः। +शंकर.

दमो दानं दयेति गुणत्रयस्य
विधिः सार्थवादः

[1]**त्रयाः प्राजापत्याः प्रजापतौ पितरि ब्रह्मचर्यमूषुः। देवा मनुष्या असुराः। उषित्वा ब्रह्मचर्यं देवा ऊचुर्ब्रवीतु नो भवानिति। तेभ्यो हैतदक्षरमुवाच द इति । व्यज्ञासिष्टा ३ इति । व्यज्ञासिष्मेति होचुः। दाम्यतेति न आत्थेति। ओमिति होवाच व्यज्ञासिष्टेति॥**

अधुना दमादिसाधनत्रयविधानार्थोऽयमारम्भः — त्रयाः त्रिसंख्याकाः प्राजापत्याः प्रजापतेरपत्यानि प्राजापत्याः। ते किम्? प्रजापतौ पितरि ब्रह्मचर्यं शिष्यत्ववृत्तेर्ब्रह्मचर्यस्य प्राधान्यात् शिष्याः सन्तो ब्रह्मचर्यम् ऊषुः उषितवन्त इत्यर्थः। के ते? विशेषतः देवा मनुष्या असुराश्च। ते च उषित्वा ब्रह्मचर्यं किमकुर्वन्नित्युच्यते— तेषां देवा ऊचुः पितरं प्रजापतिम्। किमिति? ब्रवीतु कथयतु नः अस्मभ्यं यदनुशासनं भवानिति। तेभ्यः एवमर्थिभ्यः ह एतदक्षरं वर्णमात्रम् उवाच द इति। उक्त्वा च तान् पप्रच्छ पिता 'किं व्यज्ञासिष्टा३' इति, मया उपदेशार्थमभिहितस्याक्षरस्य अर्थं विज्ञातवन्तः आहोस्विन्नेति। देवा ऊचुः — व्यज्ञासिष्मेति, विज्ञातवन्तो वयम्। यद्येवम्, उच्यतां किं मयोक्तमिति। देवा ऊचुः — दाम्यत, अदान्ता यूयं स्वभावतः अतो दान्ता भवतेति नः अस्मान् आत्थ कथयसि। इतर आह — ओमिति सम्यग्व्यज्ञासिष्टेति। शंकर.

**अथ हैनं मनुष्या ऊचुर्ब्रवीतु नो भवानिति। तेभ्यो हैतदेवाक्षरमुवाच द इति। व्यज्ञासिष्टा३ इति। व्यज्ञासिष्मेति होचुः। दत्तेति न आत्थेति। ओमिति होवाच व्यज्ञासिष्टेति॥**

समानमन्यत्। स्वभावतो लुब्धा यूयम्, अतो यथाशक्ति संविभजत दत्तेति नः अस्मान् आत्थ, किमन्यद्ब्रूयात् नो हितमिति मनुष्याः। शंकर.

[2]**अथ हैनमसुरा ऊचुर्ब्रवीतु नो भवानिति। तेभ्यो हैतदेवाक्षरमुवाच द इति। व्यज्ञासिष्टा३ इति। व्यज्ञासिष्मेति होचुः। दयध्वमिति न आत्थेति। ओमिति होवाच व्यज्ञासिष्टेति। तदेतदेवैषा दैवी वागनुवदति स्तनयित्नुर्द द द इति। दाम्यत दत्त दयध्वमिति। तदेतत्त्रयं शिक्षेद्दमं दानं दयामिति॥**

तथा असुराः दयध्वमिति। क्रूरा यूयं हिंसादिपराः, अतो दयध्वं प्राणिषु दयां कुरुतेति। तदेतत्प्रजापतेरनुशासनं अद्याप्यनुवर्तत एव। यः पूर्वं प्रजापतिर्देवादीननुशशास सोऽद्यापि अनुशास्त्येव दैव्या स्तनयित्नुलक्षणया वाचा। कथमेषा श्रूयते दैवी वाक्? काऽसौ? स्तनयित्नुः द द द इति। दाम्यत दत्त दयध्वमिति एषां वाक्यानामुपलक्षणाय त्रिर्दकार उच्चार्यते अनुकृतिः, न तु स्तनयित्नुशब्दः त्रिरेव, संख्यानियमस्य लोके अप्रसिद्धत्वात्। यस्मात् अद्यापि प्रजापतिः दाम्यत दत्त दयध्वमित्यनुशास्त्येव तस्मात्कारणात् एतत्त्रयम्। किं तत् त्रयमित्युच्यते — दमं दानं दयामिति। शिक्षेत् उपादद्यात् प्रजापतेरनुशासनमस्माभिः कर्तव्यमित्येवं मतिं कुर्यात्। तथा च स्मृतिः — 'त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः। कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत्॥' (भगी. १६।२१) इति। अस्य हि विधेः शेषः पूर्वः। तथापि देवादीनुद्दिश्य किमर्थं दकारत्रयमुच्चारितवान् प्रजापतिः पृथगनुशासनार्थिभ्यः? ते वा कथं विवेकेन प्रतिपन्नाः प्रजापतेर्मनोगतं समानेनैव दकारवर्णमात्रेणेति पराभिप्रायज्ञा विकल्पयन्ति। अत्रैके आहुः — अदान्तत्वादातृत्वादयालुत्वैः अपराधित्वमात्मनो मन्यमानाः शङ्किता एव प्रजापतावूषुः किं नो वक्ष्यतीति। तेषां च दकारश्रवणमात्रादेव आत्माशङ्कावशेन तदर्थप्रतिपत्तिरभूत्। लोकेऽपि हि प्रसिद्धम् — पुत्राः शिष्याश्चानुशास्याः सन्तो दोषात् निवर्तयितव्या इति। अतो युक्तं प्रजापतेर्दकारमात्रोच्चारणम्, दमादित्रये च दकारान्वयात् आत्मनो दोषानुरूप्येण देवादीनां विवेकेन प्रतिपत्तुं चेति। फलं तु एतत् — आत्मदोषज्ञाने सति दोषात् निवर्तयितुं शक्यते अल्पेनाप्युपदेशेन, यथा देवादयो दकारमात्रेणेति। ननु एतत् त्रयाणां देवादीनामनुशासनम्। देवादिभिरपि एकैकमेव उपादेयम्, अद्यत्वेऽपि। न तु त्रयं मनुष्यैः शिक्षितव्यमिति। अत्रोच्यते — पूर्वैर्देवादिभिर्विशिष्टैरनुष्ठितम् एतत्त्रयम्। तस्मात् मनुष्यैरेव शिक्षितव्यमिति। तत्र दयालुत्वस्याननुष्ठेयत्वं स्यात्।

---

+मच. शंकरगतम्।

(१) शब्रा. १४।८।२।१-३; बृउ. ५।२।१-२.

(२) शब्रा. १४।८।२।४; बृउ. ५।२।३; विपा. ४।४(तदेतत्त्रयं शिक्षेद्दानं दमं दयामिति) एतावदेव, वाजसनेयके; पदी. १ (तदेतत्त्रयं शिक्षेत दमं दानं दयामिति) एतावदेव.

कथम्? असुरैरप्रशस्तैरनुष्ठितत्वादिति चेत् — न, तुल्यत्वात् त्रयाणाम्। अतः अन्योऽत्राभिप्रायः — प्रजापतेः पुत्रा देवादयस्त्रयः। पुत्रेभ्यश्च हितमेव पित्रा उपदेष्टव्यम्। प्रजापतिश्च हितज्ञः नान्यथा उपदिशति। तस्मात् पुत्रानुशासनं प्रजापतेः परम् एतत् हितम्। अतो मनुष्यैरेव एतत् त्रयं शिक्षितव्यमिति। अथवा न देवाः असुरा वा अन्ये केचन विद्यन्ते मनुष्येभ्यः। मनुष्याणामेव अदान्ताः ये अन्यैरुत्तमैर्गुणैः संपन्नाः ते देवाः। लोभप्रधाना मनुष्याः। तथा हिंसापराः क्रूरा असुराः। ते एव मनुष्याः अदान्तत्वादिदोषत्रयमपेक्ष्य देवादिशब्दभाजो भवन्ति, इतरांश्च गुणान् सत्त्वरजस्तमांसि अपेक्ष्य। अतः मनुष्यैरेव शिक्षितव्यमेतत्त्रयमिति तदपेक्षयैव प्रजापतिनोपदिष्टत्वात्। तथा हि — मनुष्या अदान्ता लुब्धाः क्रूराश्च दृश्यन्ते। तथा च स्मृतिः — 'कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत्।' (भगी. १६।२१) इति। शंकर.

पुण्येन कर्मणोत्तमयोनिप्राप्तिः पापेन कर्मणाऽधमयोनिप्राप्तिश्च

**[1]तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा। अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरञ्श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा॥**

तत् तत्र तेषु अनुशयिनां ये इह लोके रमणीयं शोभनं चरणं शीलं येषां ते रमणीयचरणाः, रमणीयचरणेनोपलक्षितः शोभनोऽनुशयः पुण्यं कर्म येषां ते रमणीयचरणा उच्यन्ते। क्रौर्यानृतमायावर्जितानां हि शक्य उपलक्षयितुं शुभानुशयसद्भावः। तेन अनुशयेन पुण्येन कर्मणा चन्द्रमण्डले भुक्तशेषेण अभ्याशो ह क्षिप्रमेव। यदिति क्रियाविशेषणम्, ते रमणीयां क्रौर्यादिवर्जितां योनिम् आपद्येरन् प्राप्नुयुः ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा स्वकर्मानुरूपेण। अथ पुनर्ये तद्विपरीताः कपूयचरणोपलक्षितकर्माणोऽशुभानुशया अभ्याशो ह यत्ते कपूयां यथाकर्म योनिमापद्येरन् कपूयामेव धर्मसंबन्धवर्जितां जुगुप्सितां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा स्वकर्मानुरूपेणैव।

शंकर.

(१) **छाउ.** ५।१०।७.

ब्राह्मणसुवर्णस्तेयादीनि पञ्च महापातकानि

**[1]स्तेनो हिरण्यस्य सुरां पिबंश्च**
**गुरोस्तल्पमावसन्ब्रह्महा च।**
**एते पतन्ति चत्वारः**
**पञ्चमश्चाऽऽचरंस्तैरिति॥**

स्तेनो हिरण्यस्य ब्राह्मणसुवर्णस्य हर्ता। सुरां पिबन् ब्राह्मणः सन्। गुरोश्च तल्पं दारान् आवसन्। ब्रह्महा ब्राह्मणस्य हन्ता च। इत्येते पतन्ति चत्वारः। पञ्चमश्च तैः सहाऽऽचरन्निति। शंकर.

यथाशास्त्रं कर्माण्यनुतिष्ठतो निगृहीतेन्द्रियस्य क्रममुक्तिः फलम्

**[2]आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान्विदधदात्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्याहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः। स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसंपद्यते। न च पुनरावर्तते न च पुनरावर्तते॥**

(१) कर्मणां न कश्चनार्थ इति प्राप्ते तदानर्थक्यप्राप्तिपरिजिहीर्षयेदं कर्मणो विद्वद्भिरनुष्ठीयमानस्य विशिष्टफलवत्त्वेनार्थवत्त्वमुच्यते — आचार्यकुलाद्वेदमधीत्य सहार्थतोऽध्ययनं कृत्वा, यथाविधानं यथास्मृत्युक्तैर्नियमैर्युक्तः सन्नित्यर्थः। सर्वस्यापि विधेः स्मृत्युक्तस्योपकुर्वाणकं प्रति कर्तव्यत्वे गुरुशुश्रूषायाः प्राधान्यप्रदर्शनार्थमाह — गुरोः कर्म यत्कर्तव्यं तत्कृत्वा कर्मशून्यो योऽतिशिष्टः कालस्तेन कालेन वेदमधीत्येत्यर्थः। एवं हि नियमवताऽधीतो वेदः कर्मज्ञानफलप्राप्तये भवति, नान्यथेत्यभिप्रायः। अभिसमावृत्य धर्मजिज्ञासां समापयित्वा गुरुकुलान्निवृत्य, न्यायतो दारानाहृत्य, कुटुम्बे स्थित्वा। गार्हस्थ्ये विहिते कर्मणि तिष्ठन्नित्यर्थः। तत्रापि गार्हस्थ्यविहितानां कर्मणां स्वाध्यायस्य प्राधान्यप्रदर्शनार्थमुच्यते — शुचौ विविक्तेऽमेध्यादिरहिते देशे यथावदासीनः स्वाध्यायमधीयानो नैत्यकमधिकं च यथाशक्ति ऋगाद्यभ्यासं च कुर्वन्

(१) **छाउ.** ५।१०।९; **मेधा.** ३।९० एते (ते) पञ्चम....रिति (संसर्गी च).

(२) **छाउ.** ८।१५।१; **अप.** ३।२०५ पृ. १०३३ (आचार्य.....वृत्य॰) कुटुम्बे (कुटुम्बी) (च पुनरावर्तते न च॰); **मच.** ४।२३८ (अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः) एतावदेव, श्रुतिः; **बौधि.** १।३।४ (आचार्य..... देशे) एतावदेव, श्रुतिः.

धार्मिकान्पुत्रान् शिष्यांश्च धर्मयुक्तान्विदधत् धार्मिकत्वेन तान्नियमयन् आत्मनि स्वहृदये हार्दे ब्रह्मणि सर्वेन्द्रियाणि संप्रतिष्ठाप्य उपसंहृत्य इन्द्रियग्रहणात्कर्माणि च संन्यस्य अहिंसन् हिंसां परपीडाम् अकुर्वन् सर्वभूतानि स्थावरजङ्गमानि भूतान्यपीडयन्नित्यर्थः। भिक्षानिमित्तमटनादिनाऽपि परपीडा स्यादित्यत आह – अन्यत्र तीर्थेभ्यः। तीर्थं नाम शास्त्रानुज्ञाविषयः, ततोऽन्यत्रेत्यर्थः। सर्वाश्रमिणां चैतत्समानम्। तीर्थेभ्योऽन्यत्राहिंसैवेत्यन्ये वर्णयन्ति। कुटुम्ब एवैतत्सर्वं कुर्वन्स खल्वधिकृतो यावदायुषं यावज्जीवम् एवं यथोक्तेन प्रकारेणैव वर्तयन् ब्रह्मलोकमभिसंपद्यते देहान्ते। न च पुनरावर्तते शरीरग्रहणाय। पुनरावृत्तेः प्राप्तायाः प्रतिषेधात् अर्चिरादिना मार्गेण कार्यब्रह्मलोकमभिसंपद्य यावद्ब्रह्मलोकस्थितिस्तावत्तत्रैव तिष्ठति, प्राक्ततो नाऽऽवर्तते इत्यर्थः। द्विरभ्यास उपनिषद्विद्यापरिसमाप्त्यर्थः। शंकर.

(२) विहिता हिंसा तीर्थानि (? तीर्थेषु)। ब्रह्मैव लोको ब्रह्मलोकः। अप.३।२०५ पृ. १०३३

प्रश्नाभावेऽन्यायेन प्रश्ने च
प्रतिवचनस्य निषेधः

[१]**नापृष्टः कस्यचिद्ब्रूयान्न चान्यायेन पृच्छतः॥**

सत्यप्रशंसा

[२]**सत्यमेव जयति नानृतं**
**सत्येन पन्था विततो देवयानः।**
**येनाऽऽक्रमन्त्यृषयो ह्याप्तकामा**
**यत्र तत्सत्यस्य परमं निधानम्॥**

सत्यमेव सत्यवानेव जयति, नानृतं नानृतवादीत्यर्थः। न हि सत्यानृतयोः केवलयोः पुरुषानाश्रितयोः जयः पराजयो वा संभवति। प्रसिद्धं लोके सत्यवादिनाऽनृतवाद्यभिभूयते, न विपर्ययः। अतः सिद्धं सत्यस्य साधनातिशयत्वम्। कथम्? सत्येन यथाभूतवादव्यवस्थया पन्था देवयानाख्यः विततः विस्तीर्णः सातत्येन प्रवृत्तः। येन पथा ह्याक्रमन्ति क्रमन्ते ऋषयः दर्शनवन्तः कुहकमायाशाठ्याहङ्कारदम्भानृतवर्जिताः हि आप्तकामाः विगततृष्णाः सर्वतः, यत्र यस्मिन् तत् परमार्थतत्त्वं सत्यस्योत्तमसाधनस्य संबन्धि साध्यं परमं प्रकृष्टं निधानं पुरुषार्थरूपेण निधीयते इति निधानं वर्तते। तत्र च येन पथा आक्रमन्ति स सत्येन वितत इति पूर्वेण संबन्धः। शंकर.

(१) **सासंउ.** २।१२१.
(२) **मुउ.** ३।१।६.

स्त्रीशूद्रयोः प्रणवसावित्र्यादावनधिकारः

[१]**सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्राय नेच्छन्ति॥**

सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्राय स्त्री च शूद्रश्च स्त्रीशूद्रम्, तस्मै स्त्रीशूद्राय नेच्छन्तीति निषेधं कुर्वन् प्रधानोपासनायां स्त्रीशूद्रस्याप्यधिकारं दर्शयति।

शंकर.

[२]**सावित्रीं लक्ष्मीं यजुः प्रणवं यदि जानीयात्स्त्रीशूद्रः स मृतोऽधो गच्छति॥**

सावित्रीं लक्ष्मीं यजुः प्रणवं यदि जानीयात्स्त्रीशूद्रः स मृतोऽधो नरकं गच्छतीति प्रत्यवायदर्शनेन निषेधमेव द्रढयति। शंकर.

[३]**तस्मात्सर्वदा नाऽऽचष्टे यद्याचष्टे स आचार्यस्तेनैव मृतोऽधो गच्छति॥**

तस्मात्सर्वदा नाऽऽचष्ट इति कदाचिदपि नाऽऽचष्ट इत्याचार्यस्य निषेधं दर्शयति। यद्याचष्टे स आचार्यस्तेनैव कथनेन मृतोऽधो गच्छतीति प्रत्यवायदर्शनेन निषेधमेव द्रढयतीति। शंकर.

दश यमा दश नियमाश्च सव्याख्यानाः

[४]**तत्र दश यमाः। तथा नियमाः॥**

**तत्राहिंसासत्यास्तेयब्रह्मचर्यदयार्जवक्षमाधृतिमिताहारशौचानि चेति यमा दश॥**

**तत्राहिंसा नाम मनोवाक्कायकर्मभिः सर्वभूतेषु सर्वदाऽक्लेशजननम्॥**

**सत्यं नाम मनोवाक्कायकर्मभिर्भूतहितयथार्थाभिभाषणम्॥**

**अस्तेयं नाम मनोवाक्कायकर्मभिः परद्रव्येषु निःस्पृहता ॥**

(१) **नृपूउ.** १।३; **पमा.** १।३५ द्राय ने (द्रयोर्ने) श्रुतिः; **शूक.** १८ नेच्छन्ति (नेच्छति) नृसिंहतापिनीये; **आम.** ६८ नृसिंहतापनीये.
(२) **नृपूउ.** १।३; **शूक.** १८ रामतापिनीये.
(३) **नृपूउ.** १।३.
(४) **शाण्डिउ.** १।१।३-१४.

ब्रह्मचर्यं नाम सर्वावस्थासु मनोवाक्कायकर्मभिः सर्वत्र मैथुनत्यागः॥

दया नाम सर्वभूतेषु सर्वत्रानुग्रहः॥

आर्जवं नाम मनोवाक्कायकर्मणां विहिताविहितेषु जनेषु प्रवृत्तौ निवृत्तौ वा एकरूपत्वम्॥

क्षमा नाम प्रियाप्रियेषु सर्वेषु ताडनपूजनेषु सहनम्॥

धृतिर्नामार्थहानौ स्वेष्टबन्धुवियोगे तत्प्राप्तौ सर्वत्र चेतःस्थापनम्॥

मिताहारो नाम चतुर्थांशावशेषकसुस्निग्धमधुराहारः॥

शौचं नाम द्विविधं बाह्यमान्तरं चेति। तत्र मृज्जलाभ्यां बाह्यम्। मनःशुद्धिरान्तरम्। तदध्यात्मविद्यया लभ्यम्॥

[२]तपःसंतोषास्तिक्यदानेश्वरपूजनसिद्धान्तश्रवणह्रीमतिजपव्रतानि दश नियमाः॥

तत्र तपो नाम विध्युक्तकृच्छ्रचान्द्रायणादिभिः शरीरशोषणम्॥

संतोषो नाम यदृच्छालाभतुष्टिः॥

आस्तिक्यं नाम वेदोक्तधर्माधर्मेषु विश्वासः॥

दानं नाम न्यायार्जितधनधान्यादेः श्रद्धयाऽर्थिभ्यः प्रदानम्॥

ईश्वरपूजनं नाम प्रसन्नस्वभावेन यथाशक्ति विष्णु-रुद्रादिपूजनम्॥

सिद्धान्तश्रवणं नाम वेदान्तार्थविचारः॥

ह्रीर्नाम वेदलौकिकमार्गकुत्सितकर्मणि लज्जा॥

मतिर्नाम वेदविहितकर्ममार्गेषु श्रद्धा॥

जपो नाम विधिवद्गुरूपदिष्टवेदाविरुद्धमन्त्राभ्यासः। तद्द्विविधं वाचिकं मानसं चेति। मानसं तु मनसा ध्यानयुक्तम्। वाचिकं द्विविधमुच्चैरुपांशुभेदेन। उच्चैरुच्चारणं यथोक्तफलम्। उपांशु सहस्रगुणम्। मानसं कोटिगुणम्॥

व्रतं नाम वेदोक्तविधिनिषेधानुष्ठाननैयत्यम्॥

कलञ्जभक्षणनिषेधः

[२]न कलञ्जं भक्षयेत्॥

(१) शाण्डिउ. १।२।१-११.
(२) पप्र. १० श्रुतिः; आन. १३४, १३६ (-).

अविहितहिंसानिषेधः

[१]न हिंस्यात्सर्वा भूतान्यन्यत्र तीर्थेभ्यः॥

अनेन हि हन्तुः सकाशादन्यस्य हन्तव्यस्य हिंसा प्रतिषिध्यते, न तु स्ववधरूपा।

अप. १।८७ पृ. १११

अर्थज्ञानपर्यवसायिषडङ्गवेदाध्ययनस्य नित्यत्वम्

[२]ब्राह्मणेन निष्कारणः षडङ्गो वेदोऽध्येयो ज्ञेयश्च॥

(१) ब्राह्मणेनेति त्रैवर्णिकोपलक्षणार्थम्। निष्कारण इत्यन्धत्वादिना कर्मानधिकारेऽप्यध्ययनावश्यकताबोधनाय। अङ्गानि शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिश्चेति षट्। ज्ञेय इत्यध्ययनविधेरक्षरग्रहणमात्रपर्यवसायित्वपरिहारेणार्थज्ञानपर्यवसायित्वावगमाय।

संप्र. ५०७

(२) मन्त्रार्थज्ञानाभावे मन्त्राणामनुष्ठेयार्थप्रकाशकत्वाभावान्न कर्मसिद्धिः। तस्मात्प्रतिपन्नमन्त्रार्थ एव अभिलषितकर्मफलानि प्राप्नोति, न च प्रत्यवैति। तस्मादर्थावबोधपर्यन्तमध्ययनमेवाध्ययनशब्दार्थ इति ज्ञेयम्। आन. ५७८

(३) ब्राह्मण इति त्रैवर्णिकोपलक्षणार्थम्। निष्कारण इत्यनेन प्रयोजनजिज्ञासां विनैवाध्येतव्यमित्युक्तं भवति।

संग. ४

आत्मरक्षणविधिः आत्महत्यानिषेधश्च

[३]सर्वत एवाऽऽत्मानं गोपायेत्॥

(१) अप. १।८७ पृ. १११(-) : १।१०९ पृ. १५४ (न हिंस्यात्सर्वभूतानि) एतावदेव, श्रुतिः; पमा. १।६२ सर्वा भू (सर्वाभू) (अन्यत्र तीर्थेभ्यः॰) एतावदेव, (-); मपा. १९९ सर्वम् अपवत्; मच. ४।५४ श्रुतिः : ५।४१ र्वाभूता (र्वभूता) श्रुतिः; वीमि. १।८६ पृ. १५३ अपवत् (-).

(२) संप्र. ५०७ श्रुतिः; आन. ५७८ रणः (रणं) (ज्ञेयश्च॰) श्रुतिः; संग.४ श्रुतिः; कृभ. ९८५ णः षडङ्गो वेदो (णो वेदः षडङ्गो) आपस्तम्बः; मुक्ता.२८ (निष्कारणः॰) (ज्ञेयश्च॰) श्रुतिः.

(३) विश्व. १।३२ (आत्मानं ह्येव सर्वतो गोपायेत्) आम्नायः; मेधा. ५।२७ द्विवारम्, ५।४३ श्रुतिः: ८।३४८-३४९ (-); मिता. १।१७९ (-); ममु. ३।७२ श्रुतिः; ७।२१३ : येत् (यीत) श्रुतिः; विपा. ३।२।३४२ (सर्वथाऽऽत्मानं गोपायीत) श्रुतिः; बाल. १।२१६ पृ. ४६९ श्रुतिः.

**[1]तस्मादु ह न पुराऽऽयुषः स्वःकामी प्रेयात्॥**

**[2]अलोक्यं ह्येतद्भवति॥**

ब्राह्मणहत्यासुरापानयोर्निषेधः

**[3]ब्राह्मणो न हन्तव्यः॥**

**सुरा न पेया॥**

स्वपतः प्रबोधनस्य निषेधः

**[4]तस्मादु ह स्वपन्तं धूरिव न बोधयेत्॥**

धूः हिंसा। तया न बोधयेत्। अभिघ्नन्निवेत्यर्थः। विश्व. १।१३७

अश्लीलकीर्तननिषेधः

**[5]नाश्लीलं कीर्तयेत्। यद्यश्लीलं कीर्तयेत्तं कदर्यमाहुः॥**

रात्रौ जलग्रहणस्य निषेधः

**[6]अपो निशि न गृह्णीयात्॥**

शूद्रस्य वेदमन्त्रोच्चारे दण्डः

**[7]व्याहरणे जिह्वाच्छेदः॥**

अथ शूद्रस्य मन्त्रविचारः। तत्र अविद्यत्वाद्वेदमन्त्रे नाधिकारः। ....... 'व्याहरणे जिह्वाच्छेदः' इति श्रुतेश्च। शूक. १८-१९

अनृतवदननिषेधः

**[8]नानृतं वदेत्॥**

व्रीहिभिर्यागं करोमीति संकल्प्य यवैर्न कुर्यात्। नानृतं वदेदिति श्रुतेरयमर्थो निर्णीतः। मच. ४।२३६

अपशब्दोच्चारणनिषेधः

**[9]न म्लेच्छितवै §नापभाषितवै॥**

---

§'म्लेच्छितवै' इत्यस्य पर्यायः 'अपभाषितवै' इति कैय्यटः।

(१) मेधा. ५।२७ श्रुतिः; मिता. १।१७९ (=).

(२) मेधा. ५।२७ श्रुतिः.

(३) मेधा. २।६ वेदः.

(४) विश्व. १।१३७ आम्नायः.

(५) मभा. १७।१५ ब्राह्मणम्.

(६) बौवि. १।६।११ श्रुतिः.

(७) शूक. १८-१९ श्रुतिः.

(८) मच. ४।२३६ श्रुतिः.

(९) वीमि. १।२२ श्रुतिः.

## आपस्तम्बपरिभाषासूत्रम्

यज्ञे त्रैवर्णिकानामेवाधिकारः

**[1]स त्रयाणां वर्णानां ब्राह्मणराजन्ययोर्वैश्यस्य च॥**

(१) स तु यागः आदितस्त्रयाणां वर्णानां ब्राह्मणराजन्यवैश्यानाम् अदुष्टकर्मणां साङ्गानुष्ठान-समर्थानां सपत्नीकानां कामिनां निमित्तवतां च प्रत्येकमुपदिश्यते। वैशस्य चेति पृथङ्निर्देशान्न क्वचिद्द्वयजमाने कर्मणि वैश्यस्य ब्राह्मणराजन्याभ्यां सह प्रयोगः। ब्राह्मणराजन्ययोरिति द्वन्द्वसमासात् 'एतेन द्वौ वा त्रीन्वा याजयेत्' इत्यादौ तयोरन्योन्यसहितयोर्यजमानत्वं लभ्यते। त्रयाणां वर्णानां यागोपदेशात् 'धर्मे चार्थे च कामे च नातिचरितव्या' इति, 'प्रजासहत्वकर्मभ्यः प्रतिपादयामि' इति स्मृतेः, 'सहोभौ धर्मम्' इति च लिङ्गात्, 'क्षौमे वसानौ जायापती अग्निमादधीयानाम्' इति श्रुतेश्च. ब्राह्मणस्य ब्राह्मण्या जायया सहाधिकारः क्षत्रियवैश्याभ्यां जायाभ्यामिति च लभ्यते। क्षत्रियस्य क्षत्रियया सह वैश्ययाऽपि लभ्यते। वैश्यस्य वैश्ययैव। न तु शूद्रया सह सर्वेषाम्, 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' इति वचनात्। वैश्यस्य चेति चकारात् क्वचिदत्रैवर्णिकस्याप्य-विदुषोऽपीष्टिः भवति स्थपतेः, 'निषादस्थपतिं याजयेत्' इति वचनात्। क्वचिदपत्नीकस्य पशुरवकीर्णिनः, 'यो ब्रह्मचारी स्त्रियमुपेयात्स गर्दभं पशुमालभेत' इति वचनात्। तयोराधानाभावाल्लौकिकेष्वग्निषु यज्ञप्रयोगः। स्थपतेरुप-नयनाभावेऽपि यावद्भिर्याजमानमन्त्रैरिष्टिसिद्धिस्तावतोऽ-नुपनीत एवाधीते। यावन्तो मन्त्राः आधानादिषु पत्नीभिरुच्चार्यास्ते सर्वे ताभिरध्येतव्याः, तासामप्युप-नयनाभावात्। 'स त्रयाणां वर्णानाम्' इति ग्रहणात् वर्णत्रयापेतानां यज्ञो न स्यात्, 'वसन्ते ब्राह्मणमुपनयीत। ग्रीष्मे राजन्यम्। शरदि वैश्यम्' 'वसन्तो ब्राह्मणस्याऽऽधाने। ग्रीष्मो राजन्यस्य हेमन्तो वा। शरद्वैश्यस्य' इत्येव सर्वत्र वर्णत्रयस्योपनयनाधानाभि-धानात्। तस्मात् त्रयाणां वर्णानामधिकारः। कपभा.

(२) स खलु यज्ञः श्रेयःसाधनत्वाद्यो निःश्रेयसार्थी तस्य प्राप्तः, श्रेयोर्थित्वेऽपि शूद्रस्य मा भूदितीदमारभ्यते। ननु 'ब्राह्मणराजन्यवैश्यानाम्' इत्येतदेव सूत्रमस्तु। 'स त्रयाणां वर्णानाम्' इत्यनर्थकम्। वैश्यस्येत्यसमासेन ग्रहणं

---

(१) आपप. १।२; उ. १।१।६ (स त्रयाणां वर्णानाम्) एतावदेव.

चानर्थकम्। उच्यते—पूर्वसूत्रे यज्ञमिति द्वितीयान्तेन कर्मतया निर्दिष्टत्वादस्मिन्सूत्रे कर्मतयाऽनुवृत्तिर्मा भूदिति स इति निर्दिष्टः। त्रयाणामिति वचनं ब्राह्मणस्य भार्यात्वेन शास्त्रान्तरविहिताभ्यां क्षत्रियवैश्याभ्यां वसन्ताधाने ज्योतिष्टोमादिषु च ब्राह्मणस्य सहाधिकारार्थं त्रयाणां परस्परसहितानामधिकार इति। यद्वा, ब्राह्मणभार्यायाः शूद्रायाः पतिप्रयुक्तसहाधिकारमाशङ्क्य तस्याः प्रतिषेधार्थं त्रयाणामेवाधिकारः, न शूद्राया इति, 'रमणायैव साऽथ न धर्माय'(वाध. १८।१८) इति वसिष्ठवचनात्। वर्णग्रहणमिन्द्रवरुणादीनां देवानां तिरश्चां च पश्वादीनामृषीणां च वसिष्ठादीनामधिकारनिवृत्त्यर्थम्। वैश्यस्येत्यसमासनिर्देशः 'एतेन द्वौ त्रीन्वा याजयेत्' इत्यनेकयजमानेष्वहीनेषु वैश्येन सहानयोरधिकारनिवृत्त्यर्थम्। चकारो निषादस्थपतेस्त्रैवर्णिकस्याप्यधिकारसमुच्चयार्थः। हवृ.

आर्त्विज्ये ब्राह्मणानामेवाधिकारः

[1]**ब्राह्मणानामार्त्विज्यम्॥**

(१) विद्वत्तया सर्वेषामेव प्राप्तमार्त्विज्यं ब्राह्मणानामेव नियम्यते। 'आर्षेयानृत्विजो वृणीत' इति वचनात्, 'ब्राह्मणानामिदं हविः' 'ब्राह्मणा अयं व ओदन' इति मन्त्रलिङ्गात्, ब्राह्मणानामेवाध्यापनयाजनविधानात्तेषामेवाऽऽर्त्विज्यम्, नेतरयोः। अत एव वाजपेययाजिनोऽपि ब्राह्मणस्यैवाऽऽर्त्विज्यम्, न तु क्षत्रियवैश्ययोः। कपभा.

(२) धर्मशास्त्रवचनेनैव सिद्धे 'तस्माद्वाजपेययाज्यार्त्विजीनः' इत्यनेन वाक्य(वि?)शेषेण क्षत्रियस्यापि वाजपेययाजिन आर्त्विज्यमाशङ्क्य तन्निषेधार्थमिदमारब्धम्। 'ब्राह्मणानार्षेयान्' इति सोमे वचनम् अनृत्विजामपि चमसाध्वर्यूणां ब्राह्मणत्वनियमार्थम्। अथवा धर्मशास्त्रे ब्राह्मणानां द्रव्यार्जनार्थमार्त्विज्यनियमः पुरुषार्थः। तदतिक्रमे च पुरुषस्य प्रत्यवायः, न क्रतोः। अयं तु क्रत्वर्थ आर्त्विज्यनियमः, अतिक्रमे च क्रतुवैगुण्यं प्रयोजनमिति। हवृ.

## हिरण्यकेशिगृह्यसूत्रम्

क्षौरे श्मश्रुप्रभृतिवपनक्रमः

[2]*** श्मश्रूण्यग्रे वापयतेऽथोपपक्षावथ केशानथ लोमान्यथ नखानि॥**

*अस्य समावर्तनविषयत्वेऽपि वपनक्रमस्य सार्वत्रिकत्वव्याख्यानादत्र संगृहीतम्।

(१) आपप. १।२३.

(२) हिगृ. १९।३।१८; आभू. १४९.

(१) श्मश्रूण्यग्रे वप्ता वापयति। अथोपपक्षौ कक्षौ। अथ केशान्। अथ लोमानीतरप्रदेशस्थानि। अथ नखानि। वापयतीति सर्वत्र शेषः। नखानां निकृन्तनम्। वपनेऽयं क्रमः सार्वत्रिकत्वादुक्तक्रमादेव सिद्धः(✡सिद्धे) अग्रेऽथाथेतिवचनम्। मातृवृ.

(वपनेऽयमिति। उक्तक्रमादेव श्मश्रूणीत्यादिकथितश्मश्रूपपक्षकेशलोमनखोद्देशानुक्रमादेव। सिद्धे अथशब्दकथनीयतत्तदानन्तर्ये फलिते सतीत्यर्थः। अग्रेऽथाथेतिवचनम् अग्रइत्यादिशब्दत्रयं वपने सार्वत्रिकत्वादयं क्रम इत्येतदर्थमस्तीत्यन्वयः। तथा च यावन्नित्यनैमित्तिकादिवपनेष्वयमेवौत्सर्गिकः क्रम इति नियमार्थमग्रइत्याद्युक्तपदत्रयमित्याशयः। आभू. १४९)

(२) 'कचः केशः शिरोरुहः' 'तनूरुहं रोम लोम तद्वृद्धौ श्मश्रु पुंमुखे' (२।६।९५, ९९) इत्यमरः।.... एतदेवाऽऽम्नायते तैत्तिरीयब्राह्मणे — 'अथैतन्मनुर्वप्त्रे मिथुनमपश्यत्। स श्मश्रूण्यग्रेऽवपत। अथोपपक्षौ। अथ केशान्। ततो वै स प्राजायत प्रजया पशुभिः। यस्यैवं वपन्ति। प्र प्रजया पशुभिर्मिथुनैर्जायते' (तैब्रा. १।५।६।३) इति। वप्त्रे वपनकर्त्रे इत्यर्थः। स्पष्टमन्यत्। +आभू. १४९

## वैखानसगृह्यसूत्रम्

ब्राह्मणाद्ब्राह्मण्यां जातस्य ब्राह्मणः, श्रोत्रियः, अनूचानः, भ्रूणः, ऋषिकल्पः, ऋषिः, मुनिः इत्येतासामवस्थानां लक्षणानि तासां प्राशस्त्यतारतम्यं च

[1]**निषेकादा जातकात्संस्कृतायां ब्राह्मण्यां ब्राह्मणाज्जातमात्रः पुत्रमात्रः। उपनीतः सावित्र्यध्ययनाद्ब्राह्मणः। वेदमधीत्य शरीरैरा पाणिग्रहणात्संस्कृतः पाकयज्ञैरपि यजञ्श्रोत्रियः। स्वाध्यायपर आहिताग्निर्हविर्यज्ञैरप्यनूचानः। सोमयज्ञैरपि भ्रूणः। संस्कारैरेतैरुपेतो नियमयमाभ्यामृषिकल्पः। साङ्गचतुर्वेदतपोयोगादृषिः। नारायणपरायणो निर्द्वन्द्वो मुनिः इति संस्कारविशेषात्पूर्वात्पूर्वात्परो वरीयानिति विज्ञायते॥**

✡ आभूव्याख्याने सप्तम्यन्तमनूदितम्।

+ शेषं मातृवृअनुवादः।

(१) वैगृ. १।१.

## ब्रह्मसूत्राणि

शूद्रस्यापि ब्रह्मविद्यायामधिकारः

[१] **शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि॥**

यथा मनुष्याधिकारनियममपोह्य देवादीनामपि विद्यास्वधिकार उक्तस्तथैव द्विजात्यधिकारनियमापवादेन शूद्रस्याप्यधिकारः स्यादित्येतामाशङ्कां निवर्तयितुमिदमधिकरणमारभ्यते। तत्र शूद्रस्याप्यधिकारः स्यादिति तावत्प्राप्तम्, अर्थित्वसामर्थ्ययोः संभवात्, 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' (तैसं.७।१।१।६) इतिवत् 'शूद्रो विद्यायामनवक्लृप्तः' इति च निषेधाश्रवणात्। यच्च कर्मस्वनधिकारकारणं शूद्रस्यानग्नित्वं न तद्विद्यास्वधिकारस्यापवादकं लिङ्गम्। न ह्याहवनीयादिरहितेन विद्या वेदितुं न शक्यते। भवति च लिङ्गं शूद्राधिकारस्योपोद्बलकम्। संवर्गविद्यायां हि जानश्रुतिं पौत्रायणं शुश्रूषुं शूद्रशब्देन परामृशति – 'अह हारे त्वा शूद्र तवैव सह गोभिरस्तु' (छाउ. ४।२।३) इति। विदुरप्रभृतयश्च शूद्रयोनिप्रभवा अपि विशिष्टविज्ञानसंपन्नाः स्मर्यन्ते। तस्मादधिक्रियते शूद्रो विद्यास्विति। एवं प्राप्ते ब्रूमः – न शूद्रस्याधिकारः, वेदाध्ययनाभावात्। अधीतवेदो हि विदितवेदार्थो वेदार्थेष्वधिक्रियते। न च शूद्रस्य वेदाध्ययनमस्ति, उपनयनपूर्वकत्वाद्वेदाध्ययनस्य, उपनयनस्य च वर्णत्रयविषयत्वात्। यत्त्वर्थित्वं न तदसति सामर्थ्येऽधिकारकारणं भवति। सामर्थ्यमपि न लौकिकं केवलमधिकारकारणं भवति, शास्त्रीयेऽर्थे शास्त्रीयस्य सामर्थ्यस्यापेक्षितत्वात्, शास्त्रीयस्य च सामर्थ्यस्याध्ययननिराकरणेन निराकृतत्वात्। यच्चेदं 'शूद्रो यज्ञेऽनवक्लृप्तः' इति तत् न्यायपूर्वकत्वाद्विद्यायामप्यनवक्लृप्तत्वं द्योतयति, न्यायस्य साधारणत्वात्। यत्पुनः संवर्गविद्यायां शूद्रशब्दश्रवणं लिङ्गं मन्यसे, न तल्लिङ्गम्, न्यायाभावात्। न्यायोक्ते हि लिङ्गदर्शनं द्योतकं भवति। न चात्र न्यायोऽस्ति। कामं चायं शूद्रशब्दः संवर्गविद्यायामेवैकस्यां शूद्रमधिकुर्यात्, तद्विषयत्वात्, न सर्वासु विद्यासु। अर्थवादस्थत्वात्तु न क्वचिदप्ययं शूद्रमधिकर्तुमुत्सहते। शक्यते चायं शूद्रशब्दोऽधिकृतविषये योजयितुम्। कथमित्युच्यते – 'कम्वर एनमेतत्सन्तं सयुग्वानमिव रैक्वमात्थ' (छाउ. ४।१।३) इत्यस्माद्धंसवाक्यदात्मनोऽनादरं श्रुतवतो जानश्रुतेः पौत्रायणस्य शुगुत्पेदे, तामृषी रैक्वः शूद्रशब्देनानेन सूचयांबभूवाऽऽत्मनः परोक्षज्ञताख्यापनायेति गम्यते, जातिशूद्रस्यानधिकारात्। कथं पुनः शूद्रशब्देन शुगुत्पन्ना सूच्यत इति? उच्यते – तदाद्रवणात्। शुचमभिदुद्राव, शुचा वाऽभिदुद्रुवे, शुचा वा रैक्वमभिदुद्रावेति शूद्रः, अवयवार्थसंभवाद्रूढ्यर्थस्य चासंभवात्। दृश्यते चायमर्थोऽस्यामाख्यायिकायाम्। शंकर.

**क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात्॥**

इतश्च न जातिशूद्रो जानश्रुतिः। यत्कारणं प्रकरणनिरूपणेन क्षत्रियत्वमस्योत्तरत्र चैत्ररथेनाभिप्रतारिणा क्षत्रियेण समभिव्याहाराल्लिङ्गाद्गम्यते। उत्तरत्र हि संवर्गविद्यावाक्यशेषे चैत्ररथिरभिप्रतारी क्षत्रियः संकीर्त्यते –'अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे' (छाउ. ४।३।५) इति। चैत्ररथित्वं चाभिप्रतारिणः कापेययोगादवगन्तव्यम्। कापेययोगो हि चित्ररथस्यावगतः 'एतेन वै चित्ररथं कापेया अयाजयन्' (ताब्रा. २०।१२।५) इति। समानान्वयानां च प्रायेण समानान्वया याजका भवन्ति। 'तस्माच्चैत्ररथिर्नामैकः क्षत्रपतिरजायत' इति च क्षत्रपतित्वावगमात्क्षत्रियत्वमस्यावगन्तव्यम्। तेन क्षत्रियेणाभिप्रतारिणा सह समानायां विद्यायां संकीर्तनं जानश्रुतेरपि क्षत्रियत्वं सूचयति। समानानामेव हि प्रायेण समभिव्याहारा भवन्ति। क्षत्तृप्रेषणाद्यैश्वर्ययोगाच्च जानश्रुतेः क्षत्रियत्वावगतिः। अतो न शूद्रस्याधिकारः। शंकर.

**संस्कारपरामर्शात्तदभावाभिलापाच्च॥**

इतश्च न शूद्रस्याधिकारः यद्विद्याप्रदेशेषूपनयनादयः संस्काराः परामृश्यन्ते – 'तं होपनिन्ये' (शब्रा.११।५।३।१३), 'अधीहि भगव इति होपससाद' (छाउ. ७।१।१), 'ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणा एष ह वै तत्सर्वं वक्ष्यतीति ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः' (प्रउ. १।१) इति च। 'तान्हानुपनीयैव' (छाउ. ५।११।७) इत्यपि प्रदर्शितैवोपनयनप्राप्तिर्भवति। शूद्रस्य संस्काराभावोऽभिलप्यते, 'शूद्रश्चतुर्थो वर्ण एकजातिः'(गौध.१०।४९-५०) इत्येकजातित्वस्मरणात्, 'न शूद्रे पातकं किंचिन्न च संस्कारमर्हति।' (मस्मृ. १०।१२६) इत्यादिभिश्च। शंकर.

(१) ब्रसू. १।३।३४-३८.

**तदभावनिर्धारणे च प्रवृत्तेः॥**

इतश्च न शूद्रस्याधिकारः, यत्सत्यवचनेन शूद्रत्वाभावे निर्धारिते जाबालं गौतम उपनेतुमनुशासितुं च प्रववृते, 'नैतदब्राह्मणो विवक्तुमर्हति, समिधं सोम्याऽऽहर, उप त्वा नेष्ये न सत्यादगाः' (छाउ. ४।४।५) इति श्रुतिलिङ्गात्।

शंकर.

**[1]श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च॥**

(१) इतश्च न शूद्रस्याधिकारः, यदस्य स्मृतेः श्रवणाध्ययनार्थप्रतिषेधो भवति। वेदश्रवणप्रतिषेधो वेदाध्ययनप्रतिषेधस्तदर्थज्ञानानुष्ठानयोश्च प्रतिषेधः शूद्रस्य स्मर्यते। श्रवणप्रतिषेधस्तावत् 'अथास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम्' (गौध. १२।४) इति, 'पद्यु ह वा एतच्छ्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाध्येतव्यम्' इति च। अत एवाध्ययनप्रतिषेधः। यस्य हि समीपेऽपि नाध्येतव्यं भवति स कथमश्रुतमधीयीत? भवति च वेदोच्चारणे जिह्वाछेदो धारणे शरीरभेद इति। अत एव चार्थादर्थज्ञानानुष्ठानयोः प्रतिषेधो भवति, 'न शूद्राय मतिं दद्यात्' (मस्मृ. ४।८०) इतिं, 'द्विजातीनामध्ययनमिज्या दानम्' (गौध. १०।१) इति च। येषां पुनः पूर्वकृतसंस्कारवशाद्विदुरधर्मव्याधप्रभृतीनां ज्ञानोत्पत्तिस्तेषां न शक्यते फलप्राप्तिः प्रतिषेद्धुम्, ज्ञानस्यैकान्तिकफलत्वात्, 'श्रावयेच्चतुरो वर्णान्' इति चेतिहासपुराणाधिगमे चातुर्वर्ण्यस्याधिकारस्मरणात्। वेदपूर्वकस्तु नास्त्यधिकारः शूद्राणामिति स्थितम्।

+ शंकर.

(२) एतेन वेदार्थविचारात्मकं यच्च यावच्च तत्सर्वं प्रतिषिध्यते। तत्र कर्मब्रह्ममीमांसाद्वये वेदवाक्यानि पूर्वोत्तरपक्षरीत्या स्पष्टमेव विचार्यन्ते। न्यायशास्त्रेऽपि 'द्वे ब्रह्मणी वेदितव्ये परं चापरं च', 'द्वा सुपर्णा सयुजा सखाया' (ऋसं. १।१६४।२०) इत्यादिश्रुत्यवगतः 'एकमेवाद्वितीयं ब्रह्म' इत्यादिश्रुत्यर्थपरिपन्थितयाऽवभासमान आत्मभेद एव विचिन्त्यते। षोडशपदार्थनिरूपणं तु तस्यैव परिकरम्। तदेतन्मननशास्त्रमित्याचक्षते परीक्षकाः। यदाहुरुदयनाचार्याः — 'न्यायचर्चेयमीशस्य मननव्यपदेशभाक्। उपासनैव क्रियते श्रवणानन्तरागता॥' (न्यायकुसुमाञ्जलिः १।३) इति। अत एव वेदाङ्गाध्ययनमपि निषिध्यते, तेषामपि तदर्थावधारणफलकत्वात्। एवं हि तान्यङ्गानि भवन्ति। अपि च, 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनविधिरेवार्थावधारणपर्यन्तमध्ययनं विदधानस्तद्धेतुतयाऽङ्गान्यध्यापयति। तथा च शूद्रं प्रति वेदाध्ययनरूपस्योपेयस्यैव बाधे तदुपयोग्यङ्गाध्ययनमपि स्वत एव निवर्तते। अत एव कूर्मपुराणम् — 'वेदं वेदौ तथा वेदान्साङ्गांश्च चतुरो द्विजः। अधीत्य चाधिगम्यार्थं ततः स्नायी द्विजोत्तमः॥' इति। यच्च व्याकरणमार्षं पाणिनीयादि, तत्स्मृतित्वाद्वेदाङ्गत्वाद्वा प्रतिषिध्यते। यच्च (अ)वैदिकं तत्तु नित्यमेवाप्राप्तम्, वेदानुपकारकत्वेन तत्र विधेरभावात्। स्यादेतत् — 'साधुभिर्भषित, न म्लेच्छितवै, नापभाषितवै, म्लेच्छो ह वा एष यदपशब्द' इति विधि(निषेध)-निन्दार्थवादैः साधुप्रयोगे विहिते तद्विवेकोपायतया विहितं व्याकरणं शूद्रमप्यधिकरिष्यतीति। तच्च वार्त्तम्, 'यर्वाणस्तर्वाणो नाम ऋषयो बभूवुस्ते यद्वानस्तद्वान इति प्रयोक्तव्ये यर्वाणस्तर्वाण इति प्रयुञ्जते। याज्ञे पुनः कर्मणि नापभाषन्ते' इति महाभाष्यकारवचनात् 'स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्।' इति श्रुतेश्च यज्ञकर्मणोऽन्यत्रापभाषणे दोषाभावात्। अथ 'नमस्कारेण मन्त्रेण पञ्च यज्ञान्न हापयेत्।' (यास्मृ. १।१२१) इति स्मृतेरस्ति तस्यापि याज्ञं कर्मेति तत्र साधु भाषणमपेक्षितमिति चेत्, नेति ब्रूमः, 'न दर्भानुद्धरेच्छूद्रो न पिबेत्कापिलं पयः। मध्यपत्रे न भुञ्जीत ब्रह्मवृक्षस्य भामिनि॥ नोच्चरेत्प्रणवं मन्त्रं पुरोडाशं न भक्षयेत्। न शिखां नोपवीतं च नोच्चरेत्संस्कृतां गिरम्॥ न पठेद्वेदवचनं त्रिषवं न हि सेवयेत्। नमस्कारेण मन्त्रेण क्रियासिद्धिर्भवेद्ध्रुवम्। निषिद्धाचरणं कुर्वन्पितृभिः सह मज्जति॥' इति स्कान्दे प्रभासखण्डे शूद्रस्यापि विशेषेण संस्कृतशब्दोच्चारणप्रतिषेधात्। एवं च नापभाषेतेति निषेधः स्त्रीशूद्रेतरविषयः। अत एव वैदिकस्य व्याकरणस्य संस्कृतशब्दात्मकत्वात्सिद्धमनध्येयत्वम्। स्मृत्यध्ययनमपि

---

+ स्मृकौ. शंकरानुवादः।

(१) **ब्रसू.** १।३।३८; **स्मृकौ.** ४७ यनार्थप्र (यनप्र) व्याससूत्रम्; **शूशि.** ४१ व्याससूत्रम्; **शूक.** १३-१४ उत्तरमीमांसायां व्याससूत्रम्; **बाल.** १।१२१ पृ.३७९ व्याससूत्रम्.

निषिद्धं मनुना — 'निषेकादिः श्मशानान्तो मन्त्रैर्यस्योदितो विधिः। तस्य शास्त्रेऽधिकारोऽस्मिञ्ज्ञेयो नान्यस्य कस्यचित्॥' (मस्मृ. २।१६)। अस्मिन् स्मृतिशास्त्रे। तथा श्रवणेऽप्यनधिकार उक्तो भविष्यत्पुराणे — 'श्रूयतां धर्मशास्त्राणि मनुर्विष्णुर्यमोऽङ्गिराः।' इत्यादिना स्मृतिपरिगणनानन्तरम् 'एतानि धर्मशास्त्राणि श्रुत्वा ज्ञात्वा च भारत। वृन्दारकपुरं गत्वा मोदन्ते नात्र संशयः॥' इति सुमन्तुवचनानन्तरं शतानीक उवाच — 'यान्येतानि त्वयोक्तानि धर्मशास्त्राणि सुव्रत। नेच्छामि श्रोतुं विप्रेन्द्र गुह्यान्येतानि हि द्विज॥ त्रयाणामेव वर्णानां प्रोक्तान्येतानि पण्डितैः। श्रेयसे न तु शूद्राणामत्र मे वचनं शृणु॥ ब्राह्मणादिषु वर्णेषु सर्वे वेदाः प्रतिष्ठिताः। मन्वादीनि च शास्त्राणि तथाऽङ्गानि समन्ततः॥' इति। तथा च पुराणश्रवणाध्ययने अपि निषिद्धे, 'पुराणं पञ्चमो वेदः पुराणं वेदसंमितम्।' इति वचनात्। तथा च कूर्मपुराणे पुराणान्यधिकृत्य — 'अध्येतव्यमिदं नित्यं विप्रैः पर्वणि पर्वणि। नाध्येतव्यमिदं शास्त्रं वृषलस्य च संनिधौ। योऽधीते चैव मोहात्मा स याति नरकान् बहून्॥'। भविष्ये — 'मोहाद्वा कामतः शूद्रः पुराणं संहितां स्मृतिम्। पठन्नरकमाप्नोति पितृभिः सह कुट्टनम्॥'। कुट्टनमिति नरकनाम। तथा 'यस्य राज्ये सदा शूद्राः पुराणं संहितां तथा। पठन्ति स्यात्स चाल्पायू राजा राष्ट्रेण सान्वयः॥'। तथा — 'पुराणं धर्मशास्त्राणि संहिताश्च मुनीरिताः। नाध्यापयेन्नृपः शूद्रैर्विहितानि यदृच्छया॥' इति। वायवीयसंहितायाम् — 'नावेदविद्भ्यः कथनीयमेतत्पुराणरत्नं पुरुशासनस्य। नाभक्तशिष्याय न नास्तिकाय दत्तं हि तद्यन्निरयं प्रयाति॥'। ननु पुराणश्रवणेऽधिकारः स्मर्यते भविष्ये — 'शूद्राश्च मे भृशं दीनाः प्रतिभान्ति ममाग्रतः। आगमेन विहीनास्तु अहो कष्टतरं मम। कश्चैषामागमः प्रोक्तः पुरा द्विज मनीषिभिः॥' इति शतानीकप्रश्नानन्तरं सुमन्तुः — 'साधु साधु महाबाहो श्रूयतां परमं वचः। चतुर्णामपि वर्णानां यानि प्रोक्तानि श्रेयसे॥ धर्मशास्त्राणि राजेन्द्र शृणु तानि नृपोत्तम। विशेषतस्तु शूद्राणां पावनानि मनीषिभिः। अष्टादश पुराणानि चरितं राघवस्य च। रामस्य कुरुशार्दूल सर्वकामार्थसिद्धये॥'। तथा च पुराणान्यधिकृत्य — 'एतानि कुरुशार्दूल धर्मशास्त्राणि पण्डितैः। साधारणानि प्रोक्तानि वर्णानां श्रेयसे सदा। चतुर्णामिह राजेन्द्र श्रोतुमर्हाणि सुव्रत॥ अस्ति शूद्रस्य शुश्रूषा पुराणेनैव वेदनम्। वदन्ति केचिद्विद्वांसः स्त्रीणां शूद्रसमानताम्॥'। तथा 'सिद्धान्तश्रवणं प्राहुर्द्विजानां मुनिसत्तम। शूद्राणां च विरक्तानां तथा स्त्रीणां महामुने। सिद्धान्तश्रवणं प्रोक्तं पुराणश्रवणं बुधैः॥' इति। भागवतेऽपि — 'स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा। इति भागवताख्यानं कृपया मुनिना कृतम्॥'। इत्यादीन्यन्यान्यप्यूह्यानि। सत्यम्। श्रवणनिषेधवाक्यपर्यालोचनया शूद्रस्य प्राधान्येन श्रवणं श्रावणं च निषिध्यते। श्रवणविधयश्च पुराणश्रवणायोपविष्टेषु द्विजेषु तच्छुश्रूषाप्रसङ्गागतेन शूद्रेण श्रोतव्यम्, न तु प्राधान्येनेत्येवाऽऽशयः। अत एव भविष्ये श्रवणप्रकार उक्तः — 'देवार्चां पुरतः कृत्वा ब्राह्मणांश्च नृपोत्तम। श्रोतव्यमेव शूद्रेण तथाऽन्यैश्च द्विजातिभिः॥ श्रौतं स्मार्तं हि वै धर्मं प्रोक्तमस्मिन्नृपोत्तम। तस्माच्छूद्रैर्विना विप्रं न श्रोतव्यं कदाचन॥' इति। अर्चां प्रतिमां पुरतः कृत्वा प्रधानतया श्रवणे पुरस्कृत्य तत्सेवानुषङ्गेण स्वयमपि श्रवणात् (?शृणुयात्), न तु स्वातन्त्र्येण। तदिदमुक्तम् — 'विना विप्रं पुराणादि न श्रोतव्यं कदाचन।' इति विप्रं श्रोतृत्वेन पुरस्कृत्येत्यर्थः। श्रावयितुरप्येषैव गतिः, 'नाध्येतव्यमिदं शास्त्रं वृषलस्य च संनिधौ।' इति निषेधे तत्संनिधौ तमुद्दिश्येत्यर्थात्। अन्ये तु अतिक्रान्तनिषेधेन पुराणे श्राव्यमाणे श्रावयितैव प्रत्यवैति, न शूद्र इत्याहुः। एवं श्रवणमेवानुज्ञातम्, न त्वध्ययनमपि, 'अध्येतव्यं न चान्येन ब्राह्मणं क्षत्रियं विना। श्रोतव्यमेव शूद्रेण नाध्येतव्यं कदाचन॥' इति भविष्ये तन्निषेधात्। यत्तु वायुपुराणे सूतः — 'न हि वेदेष्वधीकारः कश्चिच्छूद्रस्य विद्यते। पुराणेष्वधिकारो मे दर्शितो ब्राह्मणैरिह॥', तन्न शूद्राधिकारप्रतिपादकम्, सूतस्य संकरजातित्वेनाशूद्रत्वात्, 'ब्राह्मण्यां क्षत्रियात्सूतः' (यास्मृ. १।९३) इति योगिवचनात्। यद्वा ब्राह्मणद्वारा तदुपसर्जनत्वेनाधिकार इति व्याख्येयम्। अत्राध्ययनाभावेऽप्यानुषङ्गिकभूतपुराणात्(?राणश्रवणात्) श्रुतिस्मृत्यादिनिपुणद्विजमुखोपदेशाद्वा धर्मानवगत्य शूद्रोऽनुतिष्ठेत्, 'नमस्कारेण मन्त्रेण पञ्च यज्ञान्न हापयेत्।' (यास्मृ. १।१२१) इति लिङ्गात्। ×शूशि ४२-४८

× शेषं शंकरानुवादः। शूक. शूशिगतम्। बाल. शूशिवत्।

## गौतमः

ब्राह्मणस्य मद्यपाननिषेधः

[1] **मद्यं नित्यं ब्राह्मणः॥**

(१) नित्यमिति वचनान्मद्यं कृतयुगादावपि ब्राह्मणेन वर्ज्यम्। क्षत्रियवैश्याभ्यां तु कलावेव। यद्ब्रह्मपुराणम् — 'दीर्घकालं ब्रह्मचर्यं धारणं च कमण्डलोः। सगोत्राद्वा सपिण्डाद्वा विवाहो गोवधस्तथा॥ नराश्वमेधौ मद्यं च कलौ वर्ज्यं द्विजातिभिः॥' इति। नित्यं सर्वकालम्। अब्रह्मचार्यपि ब्राह्मणो मद्यं वर्जयेदित्यर्थः। अप. १।३३ पृ.६३

(२) वर्जयेदिति प्रकृतम्। मद्यं गुडमधुपिष्टकृतम् अन्यदपि यत् मदकरं यत्(?तत्) सर्वं ब्राह्मणो नित्यं प्रागप्युपनयनात् वर्जयेत्। एवं क्षत्रियवैश्ययोः प्रागुपनयनात् ऊर्ध्वं च ब्रह्मचर्यात् पैष्टीवर्जितायाः सुराया अप्रतिषेधः, स्मृत्यन्तरदर्शनात्। यथाऽऽह मनुः — 'गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा। यथैवैका तथा सर्वा न पातव्या द्विजोत्तमैः॥' (मस्मृ. ११।९४) इति। * मभा.

(३) 'मद्यं नित्यं ब्राह्मणः' वर्जयेदित्यर्थः। जातिपुरस्कारप्रवृत्तत्वादनुपनीतस्यापि निषेधः। इदमुपलक्षणम्, यान्यत्र पतनीयानि तानि वर्जयेत्, स्मृत्यन्तरे प्रायश्चित्तदर्शनात्। वस्तुतो द्विजमधिकृत्य ये निषेधास्तेषूपनयनादूर्ध्वमधिकारः, जातिमात्रपुरस्कारेण ये प्रतिषेधास्तेषूपनयनात् पूर्वमपि। भक्ष्याभक्ष्यादिषु वचनात् पर्युदासाज्जातिपुरस्कारप्रवृत्तिनिषेधा अपि न प्रवर्तन्ते। स्त्रीशूद्रयोर्विवाहादूर्ध्वं स्मार्तविधिनिषेधाः, तत्पूर्वमनुपनीतधर्मा इति। विष्णुस्मरणतन्नामकीर्तनादिधर्मस्य तु तत्तत्पुराणेभ्यः सर्वदशास्वधिकारः। किं बहुना 'नाशौचं कीर्तने तस्य स पवित्रकरो यतः।' इति वचनादशौचमध्येऽपि। निप्र. १।२४-२५

(४) वर्ज्यप्रकरणे गौतमः — 'मद्यं नित्यं ब्राह्मणः' (इति)। तेनानुपनीतस्यापि अनूढायाः कन्याया अपि मद्यमात्रनिषेधः, जातिपुरस्कारेण निषेधात्। तथा च स्मृत्यन्तरे'सुरापाननिषेधस्तु जात्याश्रय इति स्थितिः॥' इति। गप. ४०८

ब्राह्मणस्य शस्त्रधारणाधिकारः

[1] **प्राणसंशये ब्राह्मणोऽपि शस्त्रमाददीत॥**

(१) प्राणग्रहणेन पुत्रदारहिरण्यादेरपि ग्रहणम्, 'प्राणा ह्येते बहिश्चराः' इति दर्शनात्। अपिशब्दाद्वैश्यशूद्रावपि, क्षत्रियस्यार्थसिद्धत्वात् रक्षणादौ प्रवृत्तेः। यद्वा क्षत्रियस्यापि। मभा.

(२) प्राणधारणार्थमिति शेषः। गृक. २२४

(३) प्राणसंशये सति ब्राह्मणोऽपि रक्षार्थं शस्त्रमाददीत। 'तदलाभे क्षत्रवृत्तिः' (गौध. ७।६) इति शस्त्रग्रहणे सिद्धे पुनरुपादानं ब्राह्मणवृत्तेः सतोऽप्यनिषेधार्थम्। अपिशब्दात्किं पुनर्वैश्यशूद्रौ? गौमि.

द्विजातीनां नित्यानित्या धर्माः

[1] **द्विजातीनामध्ययनमिज्या दानम्॥**

(१) अध्ययनं वेदस्य ग्रहणधारणाभ्यासजपादिरूपम्। इज्या यागः देवपितृपूजा। दानं यथाशक्त्यर्थिजनस्य द्रव्यसंविभागः। असमासः समुच्चयार्थः, द्विजातीनां यथासंख्यं मा भूदिति। *अधिकग्रहणादेवैतल्लभ्यत इति चेत्, एकैकस्य एकैकधर्मप्राधान्यज्ञापनार्थ इत्यदोषः। तद्यथा — ब्राह्मणस्याध्ययनं प्रधानम्। यथाऽऽह मनुः — 'जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः।' (मस्मृ. २।८७) इत्यादि। क्षत्रियस्येज्या। तथा चाऽऽह — 'यजेत राजा क्रतुभिः' (मस्मृ. ७।७९) इति। वैश्यस्य दानम्। तथा चाऽऽह — 'दद्याच्च सर्वभूतेभ्योऽप्यन्नमेव प्रयत्नतः।' (मस्मृ. ९।३३३) इति। पूर्वस्य पूर्वस्य वा बलीयस्त्वज्ञापनार्थोऽपि विसमासः। यथाऽऽहोशना — 'दानाच्छतगुणो यागो यागाच्छतगुणो जपः' इति। तथा मनुनाऽपि यागाज्जपस्य

* निक., गौमि., आप्र. मभागतम्।

(१) **गौध.** २।२६; **मेधा.** २।१७७ (नित्यं मद्यं ब्राह्मणो वर्जयेत्); **मिता.** १।३३ मेधावत् (–); **अप.** १।३३ पृ. ६३; **ब्रक.** ९९; **निक.** ३३२; **गौमि.** २।२५; **उ.** १।१७।२१ ब्राह्मणः (ब्राह्मणस्य); **स्मृच.** १।६३ मद्यं नित्यं (नित्यं मद्यं); **गृर.** ३९५; **हभा.** १८८ स्मृचवत्; **स्मृसा.** ४ (वर्जयेन्मद्यं ब्राह्मणः सदा); **निप्र.** १।२४ (मद्यं नित्यं ब्राह्मणो वर्जयेत्); **मभा.** १९४ स्मृचवत्; **गप.** ४०८; **बौवि.** १।२।७ (नित्यं मद्यमपेयं ब्राह्मणस्य) : १।३।७ स्मृतिः; **मुक्ता.** ८५ स्मृचवत्; **संप्र.** ३२८ मेधावत् (–); **आप्र.** ५४९; **कृभ.** १२९१ मितावत् (–).

* 'ब्राह्मणस्याधिकाः प्रवचनयाजनप्रतिग्रहाः' इत्युत्तरसूत्रेऽधिकग्रहणादित्यर्थः।

(१) **गौध.** ७।२५; **समु.** ९९ प्राण (मरण); **गृक.** २२४; **उ.**१।२९।७; **गृर.** ४४९ णोऽपि श (णः श); **निप्र.** २।३२९.

(२) **गौध.** १०।१; **मिता.** १।११८, १९२६ खिस्ताब्दे मुद्रितमिताक्षरापुस्तके 'दानं च' इति चकारसहितः पाठः; **स्मृच.** २।४४९; **निप्र.** २।२५३; **मुक्ता.** १८.

प्राधान्यं दर्शितम्— 'ये पाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः। सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम्॥' (मस्मृ. २।८६) इति। अत्र द्विजातीनामध्ययनमिज्या दानमित्युपनयनोत्तरकालमेव दानस्य विधानात् अनुपनीतेन यत्कृतं दानं तस्यासिद्धत्वं द्रष्टव्यम्। मभा.

(२) उक्ताः प्रायश आश्रमधर्माः। अथ वर्णधर्मानाह — द्विजातीनामिति। दानं पात्रे द्रव्यत्यागः। द्विजातीनामिति वचनाद्यदा द्विजातयः संपन्नाः कृतोपनयनाः तत आरभ्यैते धर्माः। तेनानुपनीतानां दानेऽप्यधिकारो नास्तीति केचित्। नेति च वयम्। द्विजातीनामित्युपलक्षणम्, येषां द्विः जातिः जन्म तेषामिति। तेनानुपनीतस्याप्यर्थवतो हितैषिभिः प्रवर्तितस्य दानं भवत्येव। *गौमि.

**[1]ब्राह्मणस्याधिकाः δप्रवचनयाजनप्रतिग्रहाः॥**

(१) ब्राह्मणग्रहणं द्विजातेरधिकारादाधिक्यं पूर्वेषु सत्सु भवतीति। ननु 'वैश्यस्याधिकम्, राज्ञोऽधिकम्' इति च वक्ष्यति, ततश्च ब्राह्मणस्यैवैतद्भवतीति ब्राह्मणग्रहणं न कर्तव्यमिति। उच्यते — पूर्ववन्नैते आश्रमधर्माः, किंतु वर्णधर्मा इति ज्ञापनार्थम्। ततश्चानुपनीस्यापि प्रतिग्रहाधिकारोऽस्ति। याजनाध्यापने त्वसंभवान्न स्तः। 'ब्राह्मणस्य प्रवचनयाजनप्रतिग्रहाश्च' इति वक्तव्ये अधिकग्रहणमेते वृत्त्यर्था अपि भवन्तीति ज्ञापनार्थम्। पूर्वसूत्रवदसमासो न कृतः समुच्चयेनाप्यनुष्ठानार्थम्, एकार्थत्वाद्विकल्पो मा भूदिति। प्रवचनम् अनुवचनम्। शेषं निगदव्याख्यानम्। मभा.

(२) प्रवचनम् अध्यापनम्। याजनम् आर्त्विज्यम्। प्रतिग्रहः प्रसिद्धः। एते ब्राह्मणस्याधिकाः पूर्वेभ्योऽध्ययनादिभ्यः। ते चामी च समुच्चिता इत्युक्तं भवति। अत्राप्यनुपनीतस्यापि प्रतिग्रहो भवति। याजनाध्यापने त्वसंभवान्न भवतः। ब्राह्मणस्य प्रवचनयाजनप्रतिग्रहा इत्येव सिद्धे अधिकग्रहणं पूर्वत्र यथासंख्यं मा भूदिति। पूर्वे तावदवस्थिताः। गौमि.

(३) ब्राह्मणग्रहणं क्षत्रियव्युदासार्थम्। स्मृच. २।४४९

**[1]पूर्वेषु नियमस्तु॥**

(१) प्रथमेष्वध्ययनादिष्ववश्यकर्तव्यता, ततश्चाक्रियायां दोषः क्रियायां चाभ्युदयः। प्रवचनादिष्वनियमः, ततश्च क्रियायामभ्युदयः अक्रियायां प्रत्यवायाभावश्च। तुशब्दो विशेषवाची। क्षत्रियवैश्ययोरपि एतेषु नियमः, ब्राह्मणस्य विशेषत इति। अत एवैवं सूत्रं न कृतम् — 'द्विजातीनामध्ययनमिज्या दानं नियमतः' इति, उत्तरेष्वपि नियमाधिकारः प्रसज्येतेति। मभा.

(२) नियमः अवश्यकर्तव्यता। पूर्वाणि अध्ययनादीनि अवश्यकर्तव्यानि। अकुर्वन् प्रत्यवैति कुर्वंश्चाभ्युदेति। प्रवचनादीनि तु वृत्त्यर्थानि, अतोऽकरणे न प्रत्यवायः, करणे नाभ्युदयः। गौमि.

(३) पूर्वेषु अध्ययनादिषु आवश्यकत्वं नियमः, न तु प्रवचनादिषु, विभागादिप्राप्तकुटुम्बपोषणपर्याप्तधनस्य धनार्जननियमाभावादिति विज्ञानेश्वरः। निप्र. २।२५३

सत्यादयः सामान्यधर्माः

**[2]तस्यापि सत्यमक्रोधः शौचम्॥**

(१) तस्य शूद्रस्य। अपिशब्दात् उत्कृष्टा अवान्तरजाश्च गृह्यन्ते। द्विजातीनां ब्रह्मचारिप्रकरणे स्नातकधर्मे चोक्तानामपि वर्णधर्मप्रापणार्थः इहानुवादः, अनुपनीतानामपि प्रवेशो यथा स्यादिति। सत्यं यथाभूतार्थवादित्वम्। अक्रोधः परानभिद्रोहबुद्धिः। शौचं मृदादिभिः। अस्तेयेन्द्रियसंयमादीनामुपसंग्रहार्थो विसमासः। तथा च मनुः — 'अहिंसा सत्यमक्रोधः शौचमिन्द्रियसंयमः। एतान् सामासिकं धर्मम्॥' (मस्मृ. १०।६३) इति। तथा च वसिष्ठोऽपि — 'सर्वेषां सत्यमक्रोधो दानमहिंसा प्रजननं च' (वाध. ४।४) इति। मभा.

---

* शेषं मभागतम्।

δ एषां वृत्तिरूपत्वेऽपि धर्मरूपत्वस्यापि व्याख्यातत्वादत्र गृहीताः।

(१) **गौध.** १०।२; **मिता.** १।११८; **स्मृच.** २।४४९ धिकाः (धिकारः); **निप्र.** २।२५३; **मुक्ता.** १८.

(१) **गौध.** १०।३; **मिता.** १।११८ (तु०); **स्मृच.** २।४४९ (पूर्वेष्वनियमाः); **निप्र.** २।२५३ मितावत्; **मुक्ता.** १८ मितावत्.

(२) **गौध.** १०।५१; **गृक.** २६७; **गौमि.** १०।५२; **गृर.** ४७७ अशुद्धः पाठः; **मपा.** २३० तस्यापि (तस्याः) अशुद्धः पाठः; **स्मृकौ.** ८९; **मर.** १२; **शूशि.** ३४; **मुक्ता.** ६७; **शूक.** ६७ तस्यापि (तस्य); **बाल.** १।१२१ पृ.३७६; **सस्मृ.** ११० (=), १२७ उभयत्राप्यशुद्धः पाठः.

(२) उपनयनाध्ययनरहितत्वेऽपि यथा(काम)-वृत्तिकत्वं मा भूदिति तस्यापि शूद्रस्य सत्यादयो धर्मा भवन्ति। शौचं पूर्वोक्तद्रव्यशौचं मनःशौचमित्यादि।

⇔ गौमि.

शूद्रधर्माः

**[1]आचमनार्थे पाणिपादप्रक्षालनमेवैके॥**

(१) आचमनार्थे स्नानार्थे पाणिपादप्रक्षालनमात्रमेक इच्छन्ति। अमन्त्रकं स्नानं कर्तव्यमेवेति गौतमः। विकल्पश्च सच्छूद्रापेक्षया वर्णनीयः। तथाऽऽहोशना – 'सच्छूद्रः स्नायात्, असच्छूद्रः पाणिपादौ प्रक्षालयेत्' इति। नित्यस्नानस्यायम्, नैमित्तिकस्य तु पक्षान्तराभावात् स्नानमेव कर्तव्यम्। अथवा आचमनमेवोच्यते, तदर्थं पाणिपादप्रक्षालनमेवैके इच्छन्ति, न तु गौतमः। पाणिपादप्रक्षालनं कृत्वा सकृत्पानं च कर्तव्यमिति तस्याभिप्रायः। तथा च मनुः – 'स्त्रीशूद्रौ तु सकृत्सकृत्' (मस्मृ. ५।१३९) इति। विकल्पस्तु पूर्ववद्वर्णनीयः।

मभा.

(२) शूद्राधिकारे गौतमः – आचमनार्थ इति। आचमनार्थे आचमनरूपे प्रयोजने। ब्रक. १३४

(३) पूर्वेषां वर्णानां यत्राऽऽचमनमुक्तं तस्मिन्विषये शूद्रस्य पाणिपादप्रक्षालनमेव भवति, नान्य आचमनकल्प इत्येके मन्यन्ते। मनुस्तु सकृदम्बुपानमिच्छति 'स्त्रीशूद्रौ तु सकृत्सकृत्' (मस्मृ. ५।१३९) इति। * गौमि.

(४) आचमनार्थे आचमनेतिकर्तव्यतायाम्। पाणिपाद-प्रक्षालनमेवेत्येवकारबलेन मुखादिस्पर्शननिवृत्तिः। एके इति वचनाद्गोतममते मुखादिस्पर्शः सदार्यपरिग्रहीतशूद्रविषयः। तदाह बौधायनः – 'शूद्राणामार्याधिष्ठानात् मासि मासि वापनम्। आर्यवदाचमनकल्पः।' (बौध.१।१०।२०-२१)। आचमनेतिकर्तव्यता उपवीतवस्त्रविन्यासादि। आर्यपरतन्त्राणां शिल्पजीविनां आर्यवदित्यादि (?)। यथा द्विजानामास्यस्पर्शसहित आचमनविधिः, एवं शूद्राणां तदाश्रितानामित्यर्थः। तेनाऽऽचमनार्थे आचमनकार्ये शूद्रस्य जलाद्याहरणमन्तरेणैव पाणिपादप्रक्षालनेनैवाऽऽ-चमनकार्यसिद्धिरिति कल्पतरुकारादीनां व्यवस्था न युक्ता, आचारविरोधात् वचनविरोधाच्च।

गृर. ४७७-४७८

(५) करचरणप्रक्षालनमेवाऽऽचमनार्थ इत्येकेषां मतम्। अन्ये तु सकृदुदकपानमिच्छन्तीति। शूशि. ३४

(६) करचरणप्रक्षालनमेवाऽऽचमनार्थ इत्येकेषां मतम्, तथा चान्येषां मते सर्वोऽप्याचमनकल्पः। सकृदिति तु विशेषः। आस्योपस्पर्शादिकं च वर्णान्तरवदेव। श्रीदत्तात्रय(?त्रेया)स्तु आचमनार्हजलाभावे इदमित्याहुः। आर्याश्रितानां तदन्नसंस्कर्तॄणां शूद्राणां तदार्यवदेवाऽऽ-चमनकल्पः इत्यापस्तम्बीयबौधायनीययोः स्पष्टम्। अन्येषां सच्छूद्राणां वैश्यवदाचमनकल्पः 'मासिकं वपनं कार्यं शूद्राणां न्यायवर्तिनाम्। वैश्यवच्छौचकल्पश्च द्विजोच्छिष्टं तु भोजनम्॥' (मस्मृ. ५।१४०) इति मनोः। शौचकल्पः सूतकादौ आचमनं चेति मेधातिथिः।

बाल.१।१२१ पृ.३७६-३७७

\+ **[1]श्राद्धकर्म ॥**

(१)'अथ श्राद्धम्' (गौध. १५।१) इत्यादि वक्ष्यति। कर्मग्रहणं समस्तश्राद्धोपसंग्रहार्थम्। यथाऽऽह कण्वः– 'नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धमथापरम्। पार्वणं चेति विज्ञेयं श्राद्धं पञ्चविधं स्मृतम्॥' इति। श्राद्धग्रहणेनैव लभ्यमानत्वात् कर्मग्रहणं समस्तविध्युपसंग्रहार्थमित्येके, मा भून्मन्त्रप्रतिषेधात्तत्साध्यविधिप्रतिषेधोऽपीति।

मभा.

(२) 'अमावास्यायाम्' (गौध. १५।१) इत्यारभ्य यच्छ्राद्धकर्म वक्ष्यते तदपि शूद्रस्य कर्तव्यं मन्त्रवर्जम्।

गौमि.

⇔ शेषं मभागतम्

* स्मृकौ., मुक्ता. गौमिवत्।

(१)**गौध.** १०।५२; **ब्रक.** १३४ (पाणि०); **गृक.** २६७; **गौमि.** १०।५३; **गृर.** ४७७; **मपा.** २३० मेवैके (मेके); **स्मृकौ.** ८९ सूत्रोद्धारे पाणिशब्दो नास्ति, व्याख्याने तु 'पाणिपाद' इति पाणिशब्दसहितः प्रयोगो वर्तते; **मर.** १२; **शूशि.** ३४ नार्थे (नार्थं); **मुक्ता.** ६७; **शूक.** ६७ ब्रकवत्; **वीमि.** १।२१मेवैके (मात्रमेव); **बाल.** १।१२१ पृ. ३७६ वैके (वेत्येके); **सस्मृ.**११० शूशिवत् (–) : १२७ ब्रकवत्.

\+ अस्य वचनस्य चमव्याव्याख्यानम् अस्मिन्नेव प्रकरणे 'भार्यारतिः शुचिः' (यास्मृ. १।१२१) इति याज्ञवल्क्यवचने (वका. पृ. १७५९) द्रष्टव्यम्।

(१) **गौध.** १०।५३; **गृक.** २६७; **गौमि.** १०।५४; **गृर.** ४७७; **मपा.** २३०; **स्मृकौ.** ८९; **मर.** १२; **शूशि.** ३४; **चमव्या.** ८३; **मुक्ता.** ६७; **शूक.** ६७; **बाल.** १।१२१ पृ.३७६, १।१६६ पृ.४३०; **सस्मृ.** ११० (–) : १२७.

(३) अष्टकापार्वणश्राद्धादि कर्म।

स्मृकौ. ८९

(४) श्राद्धकर्म अमावास्यादौ आमश्राद्धं मन्त्रवर्जं कर्तव्यम्। मुक्ता. ६८

**[1]भृत्यभरणम् ॥**

(१) भृत्यदारादिपोषणम्। अर्थप्राप्तमप्येतदुच्यते मा भूदुच्छिष्टाशनविधानादभृत्यत्वमिति। मभा.

(२) भृत्यः भरणीयः पोष्यवर्गः, तस्य च भरणं कर्तव्यम्। तेन तदनुरूपमर्थार्जनमप्यस्य कर्तव्यमिति।

×गौमि.

**[2]स्वदारवृत्तिः ॥**

(१) उपनयनमूलत्वादुपरितनानां सर्वेषां प्रतिषेधे प्राप्ते दारपरिग्रहमात्रस्य प्रतिप्रसवः क्रियते। समानजातीयैवास्य भार्या, न तु प्रतिलोमेति स्वशब्दस्योपादानम्। ततश्च ब्राह्मणादीनां विजातीयपरिग्रहः सिद्धो भवति। तथाऽऽह मनुः— 'शूद्रैव भार्या शूद्रस्य सा च स्वा च विशः स्मृते। ते च, स्वा चैव राज्ञः स्युस्ताश्च स्वा चाग्रजन्मनः॥' (मस्मृ. ३।१३) इति। स्वदार इति सिद्धे वृत्तिशब्दस्योपादानं देवरादिनियोगप्रतिषेधार्थम्, स्वदार एव वृत्तिः, न परदार इति। असमासो गुर्वर्थादिदानोपसंग्रहार्थः। गार्हस्थ्यमेवाऽऽश्रमोऽस्य, नेतराणीति पृथग्योगकरणम्।

मभा.

(२) स्वेष्वेव दारेष्वस्य वृत्तिः। सजातीयेष्वपि परदारेषु वेश्यासु च प्रसज्ञन्दण्ड्य इति। अपर आह — स्वदारवृत्तिरेवास्य भवति, नाऽऽश्रमान्तरप्राप्तिरिति।

*गौमि.

× स्मृकौ., शूशि., बाल. गौमिगतम्।

* शूशि., मुक्ता., बाल. गौमिगतम्।

(१) **गौध.** १०।५४; **गृक.** २६७; **गौमि.** १०।५५; **गृर.** ४७७; **मपा.** २३०; **स्मृकौ.** ८९; **मर.** १२; **शूशि.** ३४; **चमव्या.** ८३; **मुक्ता.** ६७; **शूक.** ६७; **बाल.** १।१२१ पृ.३७६, १।१६६ पृ.४३०; **सस्मृ.** ११० (-) : १२७.

(२) **गौध.** १०।५५; **मभा.** १०।५५ 'स्वदारे वृत्तिः' इति पाठः व्याख्यानात्प्रतीयते; **गृक.** २६७; **गौमि.** १०।५६; **गृर.** ४७७; **मपा.** २३०; **स्मृकौ.** ८९; **मर.** १२; **शूशि.** ३४; **चमव्या.** ८३ वृत्तिः (तुष्टिः); **मुक्ता.** ६७; **शूक.** ६७; **बाल.** १।१२१ पृ.३७६ : १।१६६ पृ.४३० चमव्यावत्; **सस्मृ.** ११० चमव्यावत् (-) : १२७.

**δ[1]परिचर्या चोत्तरेषाम्॥**

(१) परिचर्या परिचरणं शुश्रूषा उत्तरेषां त्रयाणां वर्णानाम्। चशब्दात्कृष्यादि च। सच्छूद्रस्य शुश्रूषा, इतरस्य कृष्यादिरिति केचित्। गौतमस्य तावदयमभिप्रायः — यः सच्छूद्रस्तेनोभयमप्यविरोधेन कर्तव्यम्, इतरेण कृष्याद्येवेति। इतरेषामिति सिद्धे उत्तरग्रहणं यो य उत्तरस्तत्र तत्र फलभूयस्त्वज्ञापनार्थम्। तथा च आपस्तम्बः— 'पूर्वस्मिन्पूर्वस्मिन् वर्णे निःश्रेयसं भूयः' (आध. १।१।८) इति। #मभा.

(२) उत्तरेषाम् उत्कृष्टानां ब्राह्मणादीनाम्।

α गृक.२६८

(३) इतरेषां द्विजातीनाम्। मपा. २३१

**[2]तत्र पूर्वं पूर्वं परिचरेत्॥**

तथा चाऽऽपस्तम्बः — 'पूर्वस्मिन्पूर्वस्मिन्वर्णे निःश्रेयसं भूयः' (आध. १।१।८) इति। तदेवं यथा याजनाध्यापनप्रतिग्रहेषु ब्राह्मणस्य प्रतिग्रहो मुख्या वृत्तिस्तथा शूद्रस्य परिचर्या। तत्रापि पूर्वस्मिन्पूर्वस्मिन्वर्ण इति। गौमि.

शूद्रस्य नमस्कारमन्त्राधिकारः

**[3]अनुज्ञातोऽस्य नमस्कारो मन्त्रः॥**

(१) अनुज्ञातः श्रुतौ शिष्टैर्वाऽस्य सच्छूद्रस्य, न त्वसतः। नमस्कारो नाम मन्त्रः। सोऽयम् — 'देवताभ्यः पितृभ्यश्च

δ यद्यपीयं परिचर्या मस्करिहरदत्ताभ्यां वृत्तिरूपैव व्याख्याता, तथाऽपि तस्या धर्मरूपाया अप्यन्यत्र विज्ञायमानत्वात् सूत्रमिदमत्र संगृहीतम्। किंच, मनुस्मृतौ तद्व्याख्यानेषु च ब्राह्मणशुश्रूषाया धर्मवृत्त्युभयरूपत्वस्य क्षत्रियवैश्यशुश्रूषायाः केवलवृत्तिरूपत्वस्य च विज्ञानात् तदनुसारेण ब्राह्मणांशे शुश्रूषाया धर्मरूपत्वमस्त्येव।

# गौमि. मभागतम्।

α गृर., मर., शूशि., बाल. गृकवत्।

(१) **गौध.** १०।५६; **गृक.** २६७; **गौमि.** १०।५७; **गृर.** ४७७; **मपा.** २३० चोत्तरे (चेतरे); **मर.** १२; **शूशि.** ३४; **मुक्ता.** ६७; **बाल.** १।१२१ पृ.३७६; **सस्मृ.** ११० (-).

(२) **गौमि.** १०।५९.

(३) **गौध.** १०।६३; **मेधा.** १०।१२७ स्मृत्यन्तरम्; **गृक.** २६७; **गौमि.** १०।६६; **गृर.** ४७७; **स्मृकौ.** ५९, ८९; **दीक.** १।१२१ ज्ञातो (मतो); **मर.** १२; **निप्र.** १।४९९ (नमस्कारोऽस्य मन्त्रः) (-); **शूशि.** ३४, ३६ : ४९ ज्ञातो (मतो); **मुक्ता.** ६७; **शूक.** १९ : २३, ४६ दीकवत्, ६७; **बाल.** १।७७, पृ. २०९ दीकवत्, १।१२१; **सस्मृ.** १२७.

महायोगिभ्य एव च। नमः स्वधायै स्वाहायै नित्यमेव भवत्युत॥' इति। अस्य पितृकार्ये विनियोगः। यथाऽऽह गृह्यकारः— 'ब्राह्मणानुपवेश्य देवतादिकं मन्त्रं जपेत्' इति मन्त्रग्रहणं नमस्कार एवास्यानुज्ञात इति मा भूदाशङ्केति।

मभा.

(२) अस्य शूद्रस्य वैश्वदेवादिषु। तत्तद्देवतापदं चतुर्थ्यन्तं मनसा ध्यात्वा 'नमो नमः' इत्येवंरूपो मन्त्रोऽनुज्ञातो धर्मज्ञैः। ⇔ गौमि.

(३) अस्य शूद्रस्य कर्ममात्रे 'नमः' इत्येव मन्त्र इत्यर्थः।

+ बाल. १।१२१ पृ. ३७७

पाकयज्ञानां स्वयंयजने मतभेदः

**'पाकयज्ञैः स्वयं यजेतेत्येके॥**

(१) यत्तु गौतमेन शूद्रमधिकृत्योक्तम् 'पाकयज्ञैः स्वयं यजेतेत्येके' इति, तल्लौकिकाग्निविषयम्।

अप. १।१२१

(२) पाकयज्ञाः पाकसाध्याः अष्टकादयः, तैः स्वयं यजेत, न परं नियुञ्ज्यात्। एवं चान्यस्य परनियोगसिद्धिः। एकेग्रहणात् न तु गौतमः। सोऽयं विकल्पः सच्छूद्रासच्छूद्रविषयो व्याख्येयः। मभा.

(३) स्वयं स्वयमेव कुर्यात्, न पत्नीपुत्रादिना कारयेदित्यर्थः। * गृक. २६८

(४) पक्वगुणकेष्वपक्वगुणकेषु च गार्ह्येषु कर्मसु पाकयज्ञशब्दः प्रसिद्धः। यथाऽऽहाऽऽपस्तम्बः— 'लौकिकानां पाकयज्ञशब्दः' (आपगृ. २।९) इति। × गौमि.

(५) स्वयं स्वयमेव, न पत्नीपुत्रद्वारेण। एके स्वयमित्युक्तेर्गोतममते ब्राह्मणद्वारा पाकयज्ञान् कारयेत्, प्रतिष्ठाहोमादौ तथा दर्शनात्। एष विकल्पो व्यवस्थितः — अशक्तावन्यद्वारा शक्तौ तु स्वयमेव। अथवा असच्छूद्रविषयतया व्यवस्थितविषयः। गृर. ४७८

(६) ननु पाकयज्ञादयो ह्यग्निसाध्याः। अनग्नेः शूद्रस्य कथमग्निसाध्यकर्मस्वधिकारः? न च विवाहाग्निरस्तीति वाच्यम्, विवाहहोमाभावाच्छूद्रस्य, 'मन्त्रवर्जं हि शूद्रस्य' इति प्रागुक्तवचनान्मन्त्रसाध्यहोमस्यापि निषिद्धत्वात्। न च शूद्रस्य विवाहे तूष्णीं होमः, होमविध्यभावात्। किंच, 'मन्त्रेण तु होमः' इति गोभिलेन होमस्य मन्त्रसाध्यत्वविधानाच्च शूद्रस्य विवाहे होमाभावः सिद्धः। नमस्कारमन्त्रस्य शुङ्गग्राहिकतया पञ्चमहायज्ञेषु श्राद्धेऽग्नौकरणे च विधानात्संयोगपृथक्त्वमन्तरेणान्यत्र शेषत्वबोधकप्रमाणाभावात् विवाहहोमे न तस्य शेषत्वबोधकं प्रमाणमस्ति। तस्माद्विवाहसंस्कृताग्न्यभावात् कथं तत्साध्यकर्मस्वधिकारः? विवाहाग्निर्नाम विवाहहोमसंस्कृतः, न त्वाचारार्थं पुरतः स्थापितमग्निमात्रम्। (इति चेन्न।) श्रौतस्मार्ताग्न्यभावेऽपि लौकिकाग्नौ पाकयज्ञा भविष्यन्ति। न च वाच्यम् 'स्मार्तं कर्म विवाहाग्नौ कुर्वीत प्रत्यहं गृही।' (यास्मृ. १।९७) इति वचनाल्लौकिकाग्न्यप्राप्तिरिति, तस्य वचनस्य द्विजातिविषयत्वात्। अत एव मेधातिथिः — "अथ पाकयज्ञविधानादग्न्याधानाक्षेपः। तदपि न, लौकिकेऽग्नौ वैश्वदेवो भविष्यति। त्रैवर्णिकोद्देशेन मन्वादिभिः 'वैवाहिकेऽग्नौ कुर्वीत गृह्यं कर्म' (मस्मृ. ३।६७) इत्युक्तम्" इति। अपरार्कोऽपि — 'अनग्नेरपि शूद्रस्य वैश्वदेवादिकर्माणि लौकिकाग्नौ कार्याणि, तं प्रत्याहत्यविहितत्वात्। यथा निषादस्थपतीष्टिः। किंच, द्विजातीनामपि वैश्वदेवकर्म न विवाहाग्नौ नियतं किं पुनः शूद्रस्य?' इति। एवं च सिद्धं न शूद्रस्याग्निरस्तीति।

५९-६१

पाकयज्ञाः पञ्च महायज्ञाः ब्रह्मयज्ञव्यतिरिक्ताः, तस्य पाकनिष्पाद्यत्वाभावात्। न चैतावता ब्रह्मयज्ञस्याकरणम्, 'भार्यारतः शुचिर्भृत्यभर्ता श्राद्धक्रियापरः। नमस्कारेण मन्त्रेण पञ्च यज्ञान्न हापयेत्॥' (यास्मृ. १।१२१) इति याज्ञवल्क्यस्मरणात्। अथवा पाकशब्दः प्रशस्तवाची। पाकयज्ञाः प्रशस्ता यज्ञाः। पञ्च महायज्ञाश्च प्रशस्ता भवन्ति।

स्मृकौ. ८९

(७) अन्ये तु त्रैवर्णिकानां स्मार्ताग्न्यभावे जलादेरुपदिष्टत्वात्तद्वदेव शूद्रस्यापि जल एव वैश्वदेवादि भविष्यतीत्याहुः। × शूशि. ३७

---

⇔ शेषं मभागतं मतान्तरत्वेन। शूशि. गौमिगतम्। मुक्ता. गौमिवत्।

+ शेषं गौमिस्वमतवत् मतान्तरम्।

* मर. गृकवत्। शूक. गृक-मभा-गृर-ग्रन्थेषु गतार्थम्।

× मुक्ता. गौमिवत्।

(१) **गौध.** १०।६४; **मेधा.** १०।१२७ यजेतेत्येके (यजेत्) स्मृत्यन्तरम्; **अप.** १।१२१; **गृक.** २६७; **गौमि.** १०।६७; **गृर.** ४७७ अशुद्धो ग्रन्थः; **स्मृकौ.** ५९ (इत्येके०), ८९; **मर.** १२; **शूशि.** ३४; **मुक्ता.** ६७; **आर.** ९८; **शूक.** ६७; **बाल.** १।१२१ पृ. ३७६; **सस्मृ.** १२७ यज्ञैः (यज्ञेन).

× शेषं स्मृकौगतम्। बाल. स्मृकौ-शूशिगतम्।

उत्कृष्टनिकृष्टभावः परिचार्यपरिचारकभावनियामकः तदपवादश्च

[1]**सर्वे चोत्तरोत्तरं परिचरेयुः ॥**

न केवलं शूद्र एवैवं कुर्यात्, किं तर्हि? — सर्व इति। सर्वे निकृष्टाः अधिकं वर्णं शुश्रूषेयुः। ननु च शूद्रस्योक्तत्वात् ब्राह्मणस्य चोत्तराभावात् क्षत्रियवैश्यार्थः आरम्भः, अतो बहुवचनानुपपत्तिः परिचरेयुः सर्व इति। उच्यते, समानजातीयमप्यधिकगुणं हीनः परिचरेदिति बहुवचनम्। सर्वशब्दादनुलोमाश्चापि, अन्यथा वर्णाधिकारान्न भवति इति। शूद्रस्यापि स्वजातौ गुणाधिकपरिचरणार्थश्चकारः। * मभा.

[2]**आर्यानार्ययोर्व्यतिक्षेपे कर्मणः साम्यम् ॥**

(१) आर्यस्य उत्कृष्टजातेः अनार्यस्य निकृष्टजातेः व्यतिक्षेपे व्यतिकरे परस्परव्यत्यासे कर्मणः आचारस्य साम्यं समत्वं तयोरवगन्तव्यम्। आर्योऽपि ब्राह्मणादिः अनार्यकर्मा न शूद्रेण परिचरणीयः। अनार्योऽपि शूद्रो य उक्तकारी स आश्रयणीयः। तथा च मनुः शूद्रानधिकृत्याऽऽह—'धर्मेप्सवस्तु धर्मज्ञाः सतां वृत्तिमपुष्ठिताः। मन्त्रवर्जं न दुष्यन्ति प्रशंसां प्राप्नुवन्ति च॥' (मस्मृ.१०।१२७) इति। एवं चानेन न जातिसाम्यमुक्तम्, किंतु जातिबलमाश्रित्य कुत्सितं न कर्तव्यम्। Ωइतरोऽपि हीनोऽहमिति कृत्वाऽनादरो न कर्तव्य इति। व्यत्यये सति विहिताकरणे प्रतिषिद्धसेवने च यद्वक्ष्यति प्रायश्चितं तद्द्रष्टव्यम्। मभा.

(२) आर्यानार्ययोः उत्कृष्टापकृष्टजातीययोः स्वकर्मव्यतिक्रमे साम्यम्, परस्परं पूज्यपूजकभावो नास्तीत्यर्थः। गृक. २७२

(३) आर्यः त्रैवर्णिकः, अनार्यः शूद्रः, तयोः कर्मणः आचारस्य व्यतिक्षेपे व्यत्यासे सति तयोः साम्यमेव भवति, न परिचार्यपरिचारकभावः। ब्राह्मणादिरप्यनार्यकर्मा चेन्न शूद्रेण परिचरणीयः, शूद्रोऽप्यार्यकर्मा चेदनार्यकर्मभिरितरैर्जात्यपकर्षेण नावमन्तव्य इति। एतेन ब्राह्मणक्षत्रियौ क्षत्रियवैश्यौ च व्याख्यातौ। गौमि.

स्तेयापवादः

[1]**गोग्न्यर्थे तृणमेधान् वीरुद्वनस्पतीनां च पुष्पाणि स्ववदाददीत फलानि चापरिवृतानाम् ॥**

(१) ब्रह्मचारिप्रकरणे उक्तस्यादत्तादानप्रतिषेधस्य इदानीमपवादमाह — गोग्न्यर्थ इति। गवार्थं तृणानि। अग्निग्रहणेन श्रौतस्य स्मार्तस्यापि ग्रहणम्, न लौकिकस्य। तदर्थम् एधान् काष्ठानि। वीरुधां करवीरादीनां पुष्पाणि। वनस्पतिशब्दोऽत्र वृक्षपर्यायः, साक्षाद्वनस्पतीनां पुष्पासंभवात्। यथाऽऽह मनुः — 'अपुष्पाः फलवन्तो ये ते वनस्पतयः स्मृताः।' (मस्मृ. १।४७) इति। पुष्पाणि देवार्चनार्थानि, नानुभवार्थानि, गोग्निसाहचर्यात्। चकारात्पत्राणि ब्राह्मणभोजनार्थानि। वीरुद्वनस्पतिपुष्पाणि चेति वक्तव्ये औषधार्थं मूलादेरपि ग्रहणार्थमसमासः। स्ववत् यथा तेषां पीडा न भवति तथा ग्रहीतव्यमिति। यथाऽऽह व्यासः — 'पक्वं पक्वं प्रचिन्वीत मूलच्छेदं तु वर्जयेत्। मालाकार इवाऽऽरामे न यथाऽङ्गारकारकः॥' इति। फलानि चाऽऽम्रफलादीनि। आपत्सूचनार्थं पृथगभिधानम्। चकाराच्छाकं च। अपरिवृतानाम् अनारामीकृतानाम्। उभयविशेषणं चेदम्। एवं चाऽऽरामे तृणादेरपि प्रतिषेधः सिद्धः। मभा.

(२) एतानि तृणादीनि स्वामिभिरदत्तान्यपि स्ववदाददीत यथा स्वामी निःशङ्कमादत्ते तद्वदाददीत। ते वीरुद्वनस्पतयोऽपरिवृताश्चेत्तेषां फलान्यपि स्ववदाददीत, न स्वाम्यपेक्षा। फलविषयमेतदपरिवृतत्वं न तृणादिविषयम्, पृथग्वाक्यत्वात्। * गौमि.

पतितयोरपि मातापित्रोः शुश्रूषार्हत्वम्

[2]**न कर्हिचिन्मातापित्रोरवृत्तिः॥**

(१) न कस्यांचिदप्यवस्थायाम्, पतितावस्थायामपीत्यर्थः। अवृत्तिः अशुश्रूषा, सा न कर्तव्या। तस्यामप्य-

---

* गौमि. मभागतम्।

Ω वाक्यमिदमशुद्धम्। तत्र विवक्षाभेदेन यथाश्रुतपाठाः 'इतरेणापि' 'हीनोऽयम्' 'अनाचारः' इति शुद्धयश्च चालनीन्यायेन संभवन्तीति तात्पर्यनिर्णयो न भवति।

(१) **गौध.** १०।६५; **गृक.** २७२; **गौमि.** १०।६८.

(२) **गौध.** १०।६६; **गृक.** २७२ क्षेपे (क्रमे); **गौमि.** १०।६९.

* शेषं मभावत्।

(१) **गौध.** १२।२५; **गृक.** ३२२(च०) स्ववदा (स्वयमा) चापरिवृता (वाऽपरिवृत्ता); **स्मृच.** २।४६८; **गृर.** ५१९ मेधान् (मेधं) (च०) वृता (वृत्ता); **मुक्ता.** ५९.

(२) **गौध.** २१।१५; **गृक.** ४२० कर्हिचित् (कदाचन); **बौवि.** २।३।४३ : २।११।१८ कर्हि (कदा) (=).

वस्थायां शुश्रूषितव्यावित्यर्थः। शुश्रूषा नमस्कारादिः।
δ मभा.

(२) अवृत्तिः अ(न)नुकूलवृत्तिः अशुश्रूषेति यावत्।
गृक. ४२०

(३) अवृत्तिः अशुश्रूषा अरक्षणं वा।
बौवि. २।३।४३

## वृद्धगौतमः

चतुर्णां वर्णानां धर्माः फलश्रुतिसहिताः

**श्रीभगवानुवाच —**

**[1]शृणु वर्णक्रमेणैव धर्मान् धर्मभृतां वर ।**
**नास्ति किंचिन्नरश्रेष्ठ ब्राह्मणस्य तु विक्रयः(?) ॥**
**ये तु तासु सदा ध्यात्वा संध्यां ये च उपासते।**
**यैश्च पूर्णाहुतिः प्राप्ता विधिवज्जुह्वते च ये ॥**
**वैश्वदेवांश्च ये कुर्युः पूजयन्त्यतिथींश्च ये ।**
**नित्यस्वाध्यायशीलाश्च पञ्चयज्ञपरायणाः ॥**
**सायंप्रातर्हुताशाश्च[ε] गुर्वभोजनवर्जिताः(?) ।**
**दम्भाचारविमुक्ताश्च स्वदारनिरताः सदा॥**
**पञ्चयज्ञरताश्चैव अग्निहोत्रमुपासते।**
**ते नमस्कृतकर्माणो ब्रह्मलोकं व्रजन्ति ते॥**
**ब्रह्मलोके ततः कामं गन्धर्वैर्ब्रह्मगायकैः।**
**उपगीयमानाः प्रिय तैः पूज्यमानाः स्वयंभुवा॥**
**ब्रह्मलोके प्रमोदन्ते यावद्भूतस्य विप्लवम्॥**
**क्षत्रियोऽपि स्थितो राज्ये स्वधर्मं परिपालयन्।**
**सम्यक् प्रजाः पालयिता स्वधर्मनिरतः सदा।**
**यज्ञदानरतो धीरः स्वधर्मनिरतः शुचिः॥**
**शास्त्रानुकारी तत्त्वज्ञः प्रजाकार्यपरायणः।**
**विप्रेभ्यः कामदो नित्यं भृत्यानां भरणे रतः॥**
**सत्यसंधः शुचिर्नित्यलोभदम्भविवर्जितः।**
**क्षत्रिय उत्तमां याति गतिं देवनिषेविताम्॥**
**तत्र दिव्याप्सरोभिस्तु गन्धर्वैश्च प्रयत्नतः।**
**सेव्यमानो महातेजाः क्रियते शक्रपूजितः॥**
**चतुर्युगानि वै त्रिंशन्मोदित्वा तत्र देववत्।**
**इहैव मानुषे लोके चतुर्वेदी द्विजो भवेत्॥**
**कृषिगोपालनिरतः स्वधर्मावेक्षणे रतः।**
**वणिक् स्वकर्म वा(? स्वर्गमवा)प्नोति**
**पूज्यमानोऽप्सरोगणैः॥**
**त्रयाणामपि वर्णानां शुण्विष्ट(? शुश्रूषा)निरतः सदा।**
**विशेषेण तु विप्राणां दासवद्यस्तु तिष्ठति।**
**अयाचितप्रदाता च सत्यशौचसमन्वितः॥**
**गुरुदेवेषु निरतः परदारविवर्जितः।**
**परपीडामकृत्वैव भृत्यवर्गं बिभर्ति यः।**
**मृतोऽपि स्वर्गमाप्नोति जीवानामभयप्रदम्॥**
**स स्वर्गलोके ऋधित्वा वर्षकोटीर्महातपाः।**
**इह मानुष्यलोके वै वैश्यो धनपतिर्भवेत्॥**
**[2]यजनार्थं द्विजाः सृष्टास्तारका भुवि दैवताः।**
**क्षत्रिया रक्षणार्थं तु वैश्या वार्तानिमित्ततः।**
**शुश्रूषार्थं त्रयाणां तु शूद्राः सृष्टाः स्वयंभुवा॥**
**[3]तस्मात्प्रोषितकैर्नित्यमग्निहोत्रं द्विजातिभिः।**
**होतव्यं विधिवद्राजन्नूर्ध्वमिच्छन्ति ये गतिम्॥**

ग्रहणेषु कर्तव्यानि दानादि-
धर्मकृत्यानि

**श्रीभगवानुवाच —**

**[1]शृणुष्व राजन् विषुवे सोमार्कग्रहणेषु च।**
**व्यतीपातेऽयने चैव दानं स्यादक्षयं नृप॥**
**[4]चन्द्रसूर्यग्रहे यान्ति(?) मम वा शङ्करस्य वा।**
**गायते मम वा राजन् जपेद्वा शंकरस्य वा॥**
**शङ्खं कुर्वन्ति नादैश्च कांस(? स्य) घण्टाध्वनैरपि।**
**कारयेत्तु ध्वनिं भक्त्या तस्य पुण्यफलं महत्॥**
**गान्धर्वैर्होमजपैश्च शब्दैरुत्कृष्टनादिभिः।**
**दुर्बलोऽभिभ(? लो हि भ)वेद्राहुः सोमं च(?मश्च)**
**बलवान् भवेत्॥**
**सूर्येन्दूपप्लवे यद्वै श्रोत्रियेभ्यः प्रदीयते।**
**तत्सहस्रगुणं भूत्वा दातारमुपतिष्ठति॥**
**महापातकसंयुक्तो यद्यपि स्यान्नरो नृप।**
**निर्लेपस्तत्क्षणादेव तेन दानेन जायते॥**
**चन्द्रसूर्यप्रकाशेन विमानेन विराजता।**

---

δ गौमि. मभावत्।
ε हुताशशब्दो लक्षणया होमपरः।
(१) **वृगौसं.** ७७०-७७१.

(१) **वृगौसं.** ८३३.
(२) **वृगौसं.** ८३४.
(३) **वृगौसं.** ८४३.
(४) **वृगौसं.** ८४४.

याति सोमपुरं रम्यं सेव्यमानोऽप्सरोगणैः॥
यावदृक्षाणि तिष्ठन्ति गगने शशिना सह।
तावत्कालं स राजेन्द्र सोमलोके महीयते॥
ततश्चापि च्युतः कालादिह लोके युधिष्ठिर।
वेदवेदाङ्गविद्विप्रः कोटीधनपतिर्भवेत्॥
श्रीभगवानुवाच –
द्वादश्यां विषुवे चैव चन्द्रसूर्यग्रहे तथा॥
जप्यात्तु मम गायत्रीमथवाऽष्टाक्षरं नृप।
आजन्मदुष्कृतं तस्य नाशयेन्नात्र संशयः॥
[1]सलिलेन तु यः स्नायात् सतिलेन रविग्रहे।
तस्य यत्संचितं पापं तत्क्षणादेव नश्यति॥

ब्राह्मणगुणाः, द्विजशुश्रूषा शूद्रधर्मः

[2]क्षान्तं दान्तं जितक्रोधं जितात्मानं जितेन्द्रियम्।
तमेव ब्राह्मणं मन्ये शेषाः शूद्रा इति स्मृताः॥
अग्निहोत्रव्रतपरान्स्वाध्यायनिरताञ्शुचीन्।
उपवासरतान्दान्तांस्तान्देवा ब्राह्मणान् विदुः॥
[3]विप्रानेवार्चयेद्भक्त्या शूद्रः प्राणैश्च मत्प्रियः।
तेषां तेनैव रूपेण पूजां गृह्णामि भारत॥
[4]शूद्रवक्त्रार्चिताद्वेदाद्भयं तु सुमहन्मम।
तस्मात्सप्रणवं शूद्रो मन्त्रं मे नैव कीर्तयेत्॥
प्रणवं हि परं ब्रह्म नित्यं ब्रह्मविदो विदुः।
द्विजशुश्रूषणं धर्मं शूद्राणां भक्तितो मयि॥
तेन गच्छन्ति वै स्वर्गं चिन्तयन्तो हि मां सदा।
द्विजशुश्रूषया शूद्रः परं श्रेयोऽधिगच्छति।
द्विजशुश्रूषणादन्यन्नास्ति शूद्रस्य निष्कृतिः॥

शूद्रस्य स्वाभाविकदोषाणां दर्शनं तद्धर्मद्विजशुश्रूषाविधिनिमित्तम्

रागो द्वेषश्च मोहश्च पारुष्यं चानृशंसता।
शाम्यं(?) च दीर्घवैरत्वमतिमानमनार्जवम्॥
अनृतं चापवादं च पैशुन्यमतिलोभता।
हिंसा स्तेया(?यं) मृषावादो वञ्चना रोषलोलता॥
अबुद्धिता च नास्तिक्यं भयमालस्यमेव च।

(१) वृगौसं. ८४७.
(२) वृगौसं. ८४८.
(३) वृगौसं. ८४९.
(४) वृगौसं. ८५०.

अशौचत्वं (?शौचं) चाकृतज्ञत्वं दम्भता स्तम्भ एव च।
निकृतिश्चाप्यवज्ञानं ज्ञा(?जा)तके शूद्रमाविशे(?श)त्॥
दृष्ट्वा पितामहः शूद्रमभिभूतं तु तामसैः।
द्विजशुश्रूषणं धर्मं शूद्राणां तु प्रयुक्तवान्॥

ग्रहणनिमित्तको भोजननिषेधः

[1]सूर्यग्रहे तु नाश्नीयात्पूर्वं यामचतुष्टयम्।
चन्द्रग्रहे तु यामांस्त्रीन्बालवृद्धातुरैर्विना॥

(१) सूर्यग्रहे तु स्मृत्यन्तरोक्तो विशेषः – सूर्यग्रह इति। बालवृद्धातुरैरित्युभयत्र संबध्यते। स्मृच. २।६२१

(२) पूर्वभोजननिषेधः पुरुषार्थः, न तु निमित्तग्रहणकालीनस्नानाद्यङ्गम्, मानाभावात्। तथा ग्रहणकाले तु नाश्नीयात्। निप्र. २।६८६

(३) एतच्च भोजनं कालविशेषे निषेधति वृद्धगौतमः – सूर्यग्रह इति। चमव्याआ. ६१

(४) अथ ग्रहणं निर्णीयते। तत्र चन्द्रग्रहणे यस्मिन्यामे ग्रहणं तस्मात्पूर्वं प्रहरत्रयं न भुञ्जीत, सूर्यग्रहे तु प्रहरचतुष्टयं न भुञ्जीत, 'सूर्यग्रहे तु .... बालवृद्धातुरैर्विना॥' इति माधवीये वृद्धगौतमोक्तेः, 'ग्रहणं तु भवेदिन्दोः प्रथमादधि यामतः। भुञ्जीताδऽऽवर्तनात्पूर्वं प्रथमे प्रथमादधः॥' इति मार्कण्डेयोक्तेश्च। अधि ऊर्ध्वम्। ननु चन्द्रग्रहे यामचतुष्टयनिषेध उचितः, न तु सूर्यग्रहे, सूर्योदयात्प्राग्भोजनाप्राप्तेः। मैवम्, वचनस्य प्रथमयामे सूर्यग्रहे सति पूर्वेद्युः पूर्वरात्रे भोजननिषेधपरत्वात्। * सिन्धु. २८२

[2]चन्द्रसूर्यग्रहे नाद्यात्तस्मिन्नहनि पूर्वतः।
राहोर्विमुक्तिं विज्ञाय स्नात्वा कुर्वीत भोजनम्॥

δ आवर्तनं मध्याह्ने पश्चिमदिग्गतच्छायायाः पूर्वदिग्गमनम्। तदवच्छिन्नः काल इत्यर्थः।
* विपा. सिन्धुवत्।

(१) समु. ९५ हारीतः; स्मृच. २।६२० स्मृत्यन्तरम्; पमा. १।३८२-३८३ : १।३८४ तृतीयचरणमात्रम्; निप्र. २।६८६ चन्द्र (इन्दु) ज्योतिःशास्त्रे; चमव्याआ. ६१; सिन्धु. २८२ : २८४-२८५ चतुर्थचरणमात्रम्; सम. ८०; विपा. ३।२।४७०-४७१; यप्र. ६९; आभू. ३९६.

(२) पमा. १।३।४; चमव्याआ. ६२ उत्त.; मुक्ता. ४५०; सिन्धु. ३१२.

**[1]संध्याकाले यदा राहुर्ग्रसते शशिभास्करौ।**
**तदहर्नैव भुञ्जीत रात्रावपि कदाचन॥**

चन्द्रस्य ग्रस्तोदये तदहर्न भुञ्जीत, रवेर्ग्रस्तोदये पूर्वरात्रौ न भुञ्जीतेत्यर्थः। चन्द्रस्य ग्रस्तास्तमये अहर्न भुञ्जीत, भास्करे ग्रस्तास्तमिते रात्रावित्यपि व्याचक्षते। तथा च वसिष्ठः – 'ग्रस्तोदये विधोः पूर्वं नाहर्भोजनमाचरेत्। ग्रस्तोदिते तथा सूर्ये न रात्रौ भोजनं चरेत्॥'।

मुक्ता. ४५०

## हारीतः

शुश्रूषा शूद्रधर्मः

**[2]अथ वक्ष्ये विशेषेण पादजानां क्रियादिकम्।**
**पूर्वं शुश्रूषकरणं कृत्वा मोक्षमवाप्नुयात्॥**

क्षत्रियवैश्यधर्माः

**[3]धनुर्वेदव्रतस्नातः क्षत्रियोऽध्ययनयजनदानधर्मशिष्टपरिपालनाशिष्टनिग्रहरतोऽभिजितषड्भागवृत्तिर्व्रतैकदेशी॥**

धनुर्वेदः स्नाना(? धनुर्वेदव्रतस्नातः अ)धिगतशस्त्रविद्यः(?)। एवं वेदव्रतयोरपि। अभिजितानां शत्रोर्भूम्यादीनां षष्ठभागग्रहणम्। वेदव्रतैकदेशी वेदव्रतयोरेकदेशेनापि कृतार्थः।

×गृक. २५३

**[4]वैश्योऽध्ययनयजनदानधर्मा कृषिपशुपाल्यवणिग्वृत्तिः॥**

औदररैतसादिपञ्चाग्निनियमनविधिः

तद्विवरणं च

**[5]औदररैतसकामजक्रोधजार्थजानग्नीन् यथावन्नियच्छेत्॥**

लोकद्वयसंतापकरत्वादग्नित्वमेतेषाम्। नियच्छेत् शमयेत्।

×गृक. ३८३

**[1]औदरात्सर्वकामकर्मेन्द्रियभावदोषाः संभवन्ति। यैरुपसृष्टो विविधामापदमुपैति। तस्माच्छुचिर्यथार्थपरिमिताहारः स्यात्। आहारशुद्धौ सत्त्वशुद्धिरित्याचार्याः॥**

**[2]अथ पौंस्नात्साहसाद्रेतस्तस्य बीजं तदनृतावुत्सर्गे दोषः स्यात्। ऋतावुत्सर्गे तद्ब्रह्मचर्येण व्याख्यातम्। तदेवाऽऽदिप्रवृत्तत्वाज्जगतः प्रथमं यज्ञनियमार्थं द्वितीयं तपःसिद्ध्यर्थं तृतीयं मोक्षसिद्ध्यर्थं चतुर्थम्॥**

(१) पौंस्नात् पुरुषव्यापारात्। साहसात् बलोद्भवात्। तस्य पुंसः। तदनृताविति। तत् तस्मात्। एवं तदब्रह्मचर्येणेति। तदेवेति। δपर्वापर्वसाधारणं स्वदारगमनरूपमाद्यम्। तदेव पर्ववर्जनरूपं द्वितीयम्। एवमृतुगमननियमात्मकं तृतीयम्। ऊर्ध्वरेतस्कत्वं चतुर्थम्।

अप. १।१५४ पृ.२२२

(२) द्वितीयं पर्वादिवर्जनरूपं यज्ञार्थं यज्ञसाङ्गतासिद्ध्यर्थम्। तृतीयम् ऋतुमात्रगमनरूपं तपःसिद्ध्यर्थम्। चतुर्थमूर्ध्वरेतस्त्वं मोक्षार्थम्। ρगृर. ५६७

(३) तृतीयम् ऋतावेव गमनं पुत्रोत्पादनेन ऋणापाकरणद्वारा स्वर्गार्थम्। +निप्र.२।४६७

**[3]संकल्पात्कामः संभवति। आशयात्प्रवर्तते। स्नेहान्नि-**

---

δ 'तच्च ब्रह्मचर्यं चतुर्विधं भवति। तत्र परदारवर्जनं नित्यम्। स्वदाराभिगमनं कृष्णम्। पर्वनियमवर्जं रक्तम्। ऋतुकालाभिगमनं शुक्लम्। ऊर्ध्वरेतस्त्वं विमलम्।' इति ब्रह्मचर्यव्याख्यानरूपं हारीतवचनमनुरुध्येदं व्याख्यानम्।

ρ शेषम् अपवत्।

+ शेषं गृरवत्।

(१) **अप.** १।१५४ पृ. २२१ सृष्टो (स्पृष्टो); **गृक.** ३८३ रात्सर्व (राः सर्व) (काम०) थार्थप (था प); **गृर.** ५६५ धामापदमु (धसंतापमु) शेषं गृकवत्; **निप्र.** २।४६७ औद (उद) कामकर्मेन्द्रि (कामेन्द्रि) (भाव०) विविधामापदमुपैति (विविधा आपद उपैति) थार्थप (थावत्प) आपस्तम्बः.

(२) **अप.** १।१५४ पृ. २२१ प्रवृत्त (प्रकृत); **गृक.** ३८३ ग्रन्थः अतीवाशुद्धः। व्याख्यानादादर्शपाठवदेव पाठः प्रतीयते।; **गृर.** ५६५ गृकवत्; **निप्र.** २।४६७ अथ पौंस्ना.... स्तस्य (पौंस्त्वात् साहसं ह रेतः। तस्य) (स्यात्०) तद्ब्रह्मचर्येण (ब्रह्मचर्ये).

(३) **अप.** १।१५४ पृ. २२१ हान्निब (हाग्निर्ब) ऽनेक (नैक) एषो (एको) तस्यासं (तस्य सं); **गृक.** ३८३-३८४भूतोऽ... कामा (भूतः तृप्त एव कामानां लोकेष्वनेकविधजन्मसंसारकामा) एषोऽनलः कामः (एवानलः) वा (च) पारमाप्नोति (परमां याति); **मोक.** ८१ यात्प्रवर्त (याच्च वर्ध) स इच्छा (स ह इच्छा) एव (इव) लोके ह्यनेक (लोको ह्यनेन) रे कामा (रकामा) (स व्याख्यातः। काम..... वादिनः॥ इति॥०); **गृर.** ५६५-५६६ न्निबध्नाति (न्निवर्तते) स इच्छा (स चेच्छा) (जन्म०) रे कामा (रकामा) एषोऽनलः कामः (एष अनलः) तस्यासंकल्पो (तस्य संकल्पनं) षु यथा (ष्वयथा) नास्ति (न हि) पारमाप्नोति (परमायाति) (इति०).

---

× गृर. गृकवत्।

(१) **पमा.** १।३८३; **मुक्ता.** ४५०.

(२) **सस्मृ.**२.

(३) **गृक.** २५२-२५३ वेदव्र (वेदो व्र) दानधर्म..... देशी (दानधर्माशिष्टनिग्रहतोऽभिजितषड्भागवृत्तिः। वेदव्रतैकदेशी); **गृर.** ४७०.

(४) **गृक.** २५३; **गृर.** ४७० धर्मा कृ (धर्मकृ).

(५) **अप.** १।१५४ पृ.२२१; **गृक.** ३८२ जार्थ (जहर्ष); **गृर.** ५६५ रैतस ( रेतस ) शेषं गृकवत्.

बध्नाति। स इच्छालक्षणोऽनेकविधः कामः। येनाभिभूतोऽतृप्त एव कामानां लोके ह्यनेकजन्मसंसारे कामावर्ते निमज्जति। स एषोऽनलः कामः। 'कामो हि भगवान्वैश्वानरः' इति श्रुतिः। तस्यासंकल्पो नियमनम्। स व्याख्यातः॥

कामगीतौ चात्र श्लोकौ भवतः —

प्रवृत्तौ वा निवृत्तौ वा सर्वतः प्रतिभूरहम्।
सर्वार्थेषु यथार्थोऽहं मद्दते नास्ति किंचन॥
यो मां यथार्थं सर्वार्थे सर्वभूतेषु पश्यति।
सोऽध्वनः पारमाप्नोति नेतरे कामवादिनः॥ इति॥

(१) संकल्पः विषयसौन्दर्यज्ञानम्। कामः विषयेच्छा। आशयः पौनःपुन्येन भावनम्।

अप. १।१५४ पृ.२२२

(२) स्नेहः तत्रैवाऽऽसक्तिः। अध्वनः अर्चिरादिमार्गात् परं त्रिपाल्लक्षणम्। *गृक. ३८५

[1]क्रोधाग्निनाऽभिभूतः स्वेषामप्यबहुमतो नाभिगमनीयोऽविश्वसनीयश्च भवति। कार्याकार्यवाच्यावाच्यानि न वितर्कयति। हितवादिनो गुरूनप्यतिक्रामत्याविष्टः। प्रेतलोकायाऽऽत्मानं गमयति। तत्र घोरां निरयप्रायां यातनामनुभूय क्रूरक्रव्यादश्वतिर्यग्योनिषु जायते। तत्र सर्वासां प्रजानां वध्यो भवति। क्रमशो मनुष्यतां प्राप्य सर्वजनविद्विष्टतामुपैति। क्रोधो हि तमोरूपः। तस्य क्षमा नियमनम्। सा व्याख्याता॥

[2]लोभाग्निनाऽभिभूतः पुण्यार्थेष्वनुपयुज्यमानमतिक्रामन्तमात्मानं मन्यते। नष्टं पुत्रदारबन्धूनामुपयुङ्क्ते। सुहृत्साधुसंबन्धिनामप्यनुपजीवनीयतमो भवति। असद्वित्तानामप्युपादानमिच्छति। तत्रार्थानुषङ्गात्सोऽपि तिर्यग्योनिषु जायते। लोभो हि तमोरूपः। तस्य संतोषो नियमनम्। सोऽपि व्याख्यातः॥

नष्टं नाशम्। उपयुङ्क्ते आकाङ्क्षते।

अप. १।१५४ पृ. २२२

[1]एवं ह्याह —

औदरो रैतसश्चाग्निः कामजः क्रोधजोऽर्थजः।
एते वै निर्जिता येन स वै पञ्चतपाः स्मृतः॥

[2]वचोवेगं मनसः क्रोधवेगं
जिह्वावेगं चोदरोपस्थवेगम्।
एतान्वेगान्धारयेद्यस्तु विप्र-
स्तं वै ब्रूयुर्ब्रह्मिष्ठं वा मुनिं वा॥

दमदयादानदृढव्रतत्वानि ब्राह्मणगुणाः
तेषां विवरणं च

[3]दमो दया दानं दृढव्रतत्वं चेति ब्राह्मणस्य॥

[4]कुलशीलश्रुतवृत्तावस्थानं दम इत्याचक्षते। सर्वभूतानुकम्पनं दया। संविभागो दानम्। त्रिसंध्यमस्कन्दनं देवतार्चनजपहोमाध्ययननियमानुष्ठानं दृढव्रतत्वम्॥

[5]त्रिसंध्यं वै नियमिनां पाप्मा शीर्यते, तपो भूयस्त्वमुपैति, ब्रह्म प्रकाशतां गच्छति। तस्मात्त्रिसंध्यं नियमी स्यादिति॥

---

* शेषम् अपवत्। गृर. गृकवत्।

(१) **अप.** १।१५४ पृ.२२१-२२२ नाऽभि (ना परि) नाभि (ऽनभि) नप्यति (नति) दश्वति (दासु ति) वध्यो (वाच्यो) सा व्याख्याता (स व्याख्यातः); **गृक.** ३८४ रूनप्यतिक्राम (रून् पश्यति क्रमे) वध्यो (वश्यो); **मोक.** ८२ नाभि (नाधि) गमयति (नयति) दश्वति (दासु ति) क्रमशो (क्रमात्) (सा व्याख्याता०); **गृर.** ५६६ (हितवा... गमयति०) जायते (व्रजति) शो म (ऽनुम); **निप्र.** २।४२६ (क्रोधो हि तमोरूपं तस्य क्षमा नियमनं व्याख्यातेति।) एतावदेव : २।४२९ नाऽभिभूतः (नाद्भुतं) नाभिग (न ग) वितर्क (तर्क) याऽऽत्मानं (नात्मानं) निरयप्रायां (नरक) दश्वति (दति) (तत्र सर्वासां प्रजानां वध्यो भवति०) द्विष्टतामुपैति (द्वेषितां प्राप्नोति) (क्रोधो हि..... व्याख्याता०).

(२) **अप.** १।१५४ पृ.२२२; **गृक.** ३८४ ष्वनुप (ष्वप्युप) पुत्रदा (पुत्रं दा) युङ्क्ते (युक्तं) त्साधु (द्वन्धु) नुपजीवनीय (नुजीव्य) द्वित्तानामप्युपादा (द्वत्तानामप्यादा) षङ्गात्सोऽपि (बन्धात्); **गृर.** ५६६ र्थेष्वनुप (र्थेषूप) युङ्क्ते (युक्तं) (साधु०) द्वित्तानामप्युपादा (द्वत्तानामप्यादा) र्थानुषङ्गा (नुबन्धा).

(१) **अप.** १।१५४ पृ. २२२; **गृक.** ३८४ रैत (रेत) श्चाग्निः (श्चापि) र्थजः (द्भजः); **गृर.** ५६६ श्चाग्निः (श्चापि) र्थजः (द्भनः) तपाः (तमः).

(२) **अप.** १।१५४ पृ. २२२; **गृक.** ३८५ वचो (वाचो) चोद (तूद) वै ब्रू (प्रब्रू) मुनिं वा (मुनिं च); **गृर.** ५६६-५६७ वचो (वाचो) (जिह्वावेगं०) चोदरोपस्थ (तुरःप्रशस्त) वै ब्रू (प्रब्रू); **निप्र.** २।४६६-४६७ पूर्वार्धे (वाचोवेगं मनोवेगं क्रोधवेगं तुदरोपस्थवेगम्।) धार (पार) ह्मिष्ठं वा (ह्मनिष्ठं).

(३) **गृक.** २९३; **गृर.** ४९८; **निप्र.** २।४२६ दृढ (धृत).

(४) **गृक.** २९३ शीलश्रुत (श्रुतशील) मस्कन्दनं (मस्कन्नं) होमाध्ययन (होमध्यान) व्याख्यानात्तु 'अस्कन्दनम्' तथा 'अध्ययन' इति आदर्शानुसार्येव पाठः प्रतीयते; **गृर.** ४९८ इत्याचक्षते (इत्याहुः) (सर्वभूतानुकम्पनं दया। संविभागो दानम्०); **निप्र.** २।४२६ (सर्वभूतानुकम्पनं दया।) एतावदेव.

(५) **गृक.** २९३; **गृर.** ४९८.

(१) ब्राह्मणस्येति। ब्राह्मणग्रहणमेतेषु तस्य यत्नातिशयार्थम्। शीलं ब्रह्मण्यतादि। अस्कन्दनं सर्वाङ्गोपेतम् अस्खलितं वा। देवतार्चनजपहोमाध्ययनान्येव नियमाः, तेषामनुष्ठानम्। त्रिसंध्यमिति। संध्यात्रितयकाले यथायोग्यमेषामनुष्ठानं कर्तव्यमित्यर्थः।

गृक. २९३-२९४

(२) *'सर्वभूतानुकम्पा दया, संविभागः दानम्' इति कल्पतरुः। देवतार्चनजपहोमाध्ययनान्येव नियमाः, तेषामनुष्ठानं वा, नियमेनानुष्ठानम्।

# गृर. ४९८

**[1]स्थितिरविच्छिन्नवेदवेदिताऽयोनिसंकरिताऽविच्छिन्नार्षेयत्वं चेति कुलगुणाः॥**

**[2]वेदा(? दोऽ)ङ्गानि धर्मोऽध्यात्मवि(? त्वं वि)ज्ञानं स्मृतिश्चेति षड्विधं श्रुतम्॥**

**[3]ब्रह्मण्यता देवपितृभक्तता सौम्यताऽपरोपतापिताऽनसूयता मृदुताऽपारुष्यं मैत्रता प्रियवादिता कारुण्यं कृतज्ञता शरण्यता प्रणतिश्चेति त्रयोदशविधं शीलम्॥**

**[4]क्षमा दमो दया दानमहिंसा गुरुपूजनम्।**
**शौचं स्नानं जपो होमस्तपः स्वाध्याय एव च॥**
**सत्यवचनं संतोषो दृढव्रतत्वमुपव्रतत्वमिति षोडश गुणा वृत्तम्॥**

स्थितिः अविच्छिन्नसंतानता। अविच्छिन्नवेदवेदितेत्यत्र हविरासादनार्थदेशविशेषवाची वेदिशब्दो हविःसाध्यं यागं लक्षयति। आर्षेयत्वं प्रवरवर्तिऋषिज्ञातृत्वम्। धर्मः धर्मशास्त्रम्। विज्ञानं वैशेषिकादिशास्त्रविज्ञानम्। स्मृतिः वेदशास्त्राविस्मरणम्। उपव्रतत्वं दशम्यादावेकभक्तता।

पमा. १।६८२-६८३

---

* कल्पतरुपुस्तके हारीतवचनमिदम्।

# शेषं गृकवत्।

(१) गृक. २९४ वेद (वेदा); गृर. ४९९ चेति (वेति); पमा. १।६८२ ताऽविच्छिन्नार्षे (त्वमार्षे).

(२) गृक. २९४ स्मृति (स्थिति); गृर. ४९९ धर्मोऽध्यात्मविज्ञानं स्मृति (धर्माध्यात्मज्ञानं स्थिति); पमा. १।६८२.

(३) कृर. २६ शेषाः स्थलादिनिर्देशाः धर्मप्रमाणविचारप्रकरणे (वका. पृ. ५१) द्रष्टव्याः।

(४) गृक. २९४ स्वाध्याय .... वृत्तम् (स्वाध्यायः सत्यवचनं संतोषो दृढव्रतत्वं चेति); गृर. ४९९ गृकवत्; पमा. १।६८२ शौचं (शीलं); दीक. १।२०० निर्देशमात्रम्.

सदाचारप्रशंसा

**[1]ब्राह्मणं क्षत्रियं वाऽपि वैश्यं शूद्रमथापि वा।**
**वृत्तहीनं दुराचारं दूरतः परिवर्जयेत्॥**
**स्वपदस्थं सुवृत्तस्थं स्वकर्मपरिदेविनम्।**
**शूद्रं पुण्यतमं प्राहुर्नान्ये वृत्तच्युतास्त्रयः॥**
**वृत्तमेव प्रशंसन्ति सर्वारम्भेषु पण्डिताः।**
**वृत्तैः स्थिताः परांल्लोकान् गच्छन्ति ह्यमरा इव॥**

स्वपदस्थः द्विजशुश्रूषकः। स्ववृत्तस्थः श्राद्धाधिकारी। स्वकर्मपरिदेवी द्विजशुश्रूषात्तधनः। गृक. ४२८

अहिंसादयः पञ्च यमाः तेषां विस्तरेण विवरणं च

**[2]अहिंसा सत्यमस्तेयं शौचं ब्रह्मचर्यमिति यमाः॥**

**[3]कूर्म इवाङ्गानि कर्मभ्यः संहृत्य रूपेभ्यो दृष्टिं मूक इव वाच्येभ्यो वाचं कर्मेन्द्रियबुद्धीन्द्रियाणि मनश्च संयम्याहिंसा भवति॥**

**एवं ह्याह –**
**कर्मणा चक्षुषा चैव वाचाऽथ मनसा तथा।**
**यो वै न कुरुते पापं सा चाहिंसा चतुर्विधा॥**

**δ[4]आत्मा सन्नस्यैषा वाक् सती यया वदति यत्सतः।**
**सती वदति तदेतत्सतीयं(?त्सत्त्रितयं) सत्यमित्याचक्षते॥**

**यथाऽग्निर्घृताहुतिहुतो दीप्यत एवं सत्याभिधाप्य(? य्या)त्मा ब्रह्मान्नदत्तमाप्तिं(?) प्रतिवदन् दीपयति। अथ यथाऽद्भिरग्निं ध्वंसयंस्तमांसि प्रतिपद्यते एवमनृतं ध्रुवं वदन् तमांसि प्रतिपद्यते। तस्मान्नानृतं ब्रूयात्। सोमक्रयकन्याविवाहभयमैथुनबालसंज्ञपनगोब्राह्मणहिते च ब्रुवन् मिथ्यान्न(? मिथ्या न) लिप्यते॥**

---

δ ग्रन्थोऽयमशुद्धः। अत्रायमभिप्राय उन्नीयते – 'आत्मा सन् यथार्थवक्ता, अस्य वाक् करणभूता सती यथार्था, सा वाक् च यत् विषयभूतं वस्तु वदति तदपि सत् हितम् अबाधितं वा, तदेतत् सत्त्रितयं सत्यमित्याचक्षते' इति। 'वाक् वदति' इत्यत्र करणे कर्तृत्वारोपः।

(१) गृक. ४२७-४२८.

(२) गृक. ३०३ यमाः (नियमाः); गृर. ५०६; निप्र. २।४१५ चर्यमिति यमाः (चर्यं नियमाः).

(३) गृक. ३०४; गृर. ५०६ वाच्येभ्यो (वाचालेभ्यो) चाहिंसा (ह्यहिंसा).

(४) गृक. ३०५; गृर. ५०७ (तस्मान्नानृतं वदेत्। सोमविक्रयविवाहमैथुनं बालप्रबोधनम्।) एतावदेव.

**एवं ह्याह –**

**यत्र प्राणिवधो नास्ति यच्च नित्यमनिन्दितम्।**
**स्वभावतश्च यत्सत्यं तत्सत्यवचनं स्मृतम्॥**

(१) यया वाचा आत्मा वदतीत्यन्वयः। आत्मनो हितं यद्वस्तु सती वदति तत्सत्यम्। बालसंज्ञपनं बालसंतोषणम्। अनिन्दितम् अश्लीलतादिरहितम्। स्वभावतः छलरहितम्।

गृक. ३०५

(२) अनिन्दितं ग्लानित्वादिशून्यम्। स्वभावतः छलशून्यम्। गृर. ५०७

[1]**ऋतमिति सद्भूताभिधानं भवति। नात्र ऋतमस्तीत्यनृतम्। तच्चतुर्विधं भवति – पणितानृतं प्रत्ययानृतं सुकृतानृतं साधारणानृतमिति॥**

[2]**क्रयविक्रयकितववृत्तित्वं पणितानृतम्। तस्मान्न व्यसनादिभिः क्रीणीयान्न विक्रीणीयात्। न कितववृत्तिः स्यात्॥**

**एवं ह्याह –**

**विक्रयी शंसते पण्यं क्रयी निन्दति तद्गुणान्।**
**व्याजयोगाच्च कितवमश्रद्धेयं प्रजापतिः॥ इति॥**

(१) व्यसनं वञ्चना। गृक. ३०७

(२) न व्यसनादिभिरित्यत्र व्यसनं वञ्चना।

गृर. ५०९

(३) विक्रेतुः असद्गुणकीर्तनम्, क्रेतुः गुणापह्नवः दोषकीर्तनं च पणितानृतम्। एतच्च कितववृत्तिरूपं निषिद्धम्।

निप्र. २।४९७

[3]**विश्रम्भानृतं साक्ष्यानृतं व्यवहारानृतमिति त्रिविधं प्रत्ययानृतम्॥**

[4]**यद्विश्रम्भाद्वक्त्रा( ? द्वक्ताऽस )त्कीर्तिं करोति कारयति वा तद्विश्रम्भानृतमित्युच्यते॥**

(१) **गृक.** ३०६; **गृर.** ५०८ सद्भुता (संभूता) (भवति॰) पणितानृतं प्रत्ययानृतं (साक्ष्यानृतं पणितानृतं); **निप्र.** २।४९७ (चतुर्विधं भवति – पणितानृतं प्रत्ययानृतं सुकृतानृतं साधारणमिति।) एतावदेव.

(२) **गृक.** ३०६-३०७ तद्गुणान् (सद्गुणम्); **गृर.** ५०८ ह्याह (ह्याहुः).

(३) **गृक.** ३०७ साक्ष्या (साक्ष्य); **गृर.** ५०८.

(४) **गृक.** ३०७ तद्विश्र (विश्र); **गृर.** ५०८.

[1]**यत्साक्ष्यकर्मण्यवस्थितोऽनृतमध्यवस्यति जानन्नप्यपलपति कूटसाक्ष्यं वोपैति तत्साक्ष्यानृतमित्युच्यते॥**

[2]**द्वयोर्विवदमानयोर्मैत्र्या द्वेषाल्लोभाद्भयात्प्रमादाद्वा यत्पक्षान्तरमुपैति यत्सद्भूतं व्युदस्यासद्भूतं स्थापयति तद्व्यवहारानृतमित्युच्यते॥**

[3]**एवं ह्याह –**

**विश्रम्भात्त्रियुगं हन्ति पञ्च मिथ्यावसायतः।**
**क्षणात्सप्तयुगं हन्ति त्वनृतं व्यवहारतः॥**

(१) मिथ्यावसायः(? यतः) अनृतवचनं ज्ञानापलापः मृषासाक्षित्वं च। युगं जन्म। गृक. ३०७

(२) अनृतमध्यवस्यति वदति। जानन्नपि अपलपति मौनमाश्रयते। एतदेव कूटसाक्ष्यता(? क्ष्यम्)। युगं जन्म।

गृर. ५०९

(३) विश्रम्भसंज्ञके ऋणग्रहणानृते त्रियुगं जन्मत्रयं नरके पातयति, मिथ्यावसायतः साक्षादनृते पञ्चयुगं पञ्चजन्मपर्यन्तं नरकपातः, व्यवहारः(? रतः) जयपराजयानृते सप्तजन्मनरकपात इत्यर्थः। निप्र. २।४९८

(४) प्रत्ययानृतं त्रिविधम् – उपादाने परस्मै दापने (वा) यन्मिथ्यावचनं तद्विप्रलम्भा(? द्विश्रम्भा)नृतम्, साक्षिणः कूटसाक्षिके त्वभ्रान्त्या (?साक्षित्वे भ्रान्त्या) मिथ्यावादित्वे साक्षित्वापलापे (वा) यदनृतम् (तत् साक्ष्यानृतम्), यो द्वयोरर्थिप्रत्यर्थिनोर्जयपराजयकर्ता मैत्र्यात् द्वेषाल्लोभाद्वा पक्षपातेन मिथ्या वदति तद्व्यवहारानृतम्। एवं त्रिविधं प्रत्ययानृतम्। निप्र. २।४९७

[4]**दानानृतमिज्यानृतं तपोनृतमिति त्रिविधं सुकृतानृतम्॥**

[5]**अन्नधान्यवासोरत्नहिरण्यपशुगोश्वकन्याभूम्यभय-**

(१) **गृक.** ३०७ यत्साक्ष्य (यत्साक्षि) जानन्नप्यप (ज्ञानलभ्यप) साक्ष्यं..... क्ष्यानृत (साक्षितां चोपैति तत्साक्ष्यनृत); **गृर.** ५०८ तमध्यवस्यति (तं व्यवस्यति) व्याख्यानात्तु आदर्शानुसार्येव पाठो निश्चीयते.

(२) **गृक.** ३०७ तद्व्यप (तत्संव्यव); **गृर.** ५०८ मैत्र्या द्वे (मैत्राद्द्वे) (द्भयात्प्रमादा॰) (यत्पक्षान्तरमुपैति॰) यत्सद्भूतं (संभूतं) स्यासद्भूतं स्था (स्यासंभूतं व्यवस्था).

(३) **गृक.** ३०७ त्रियुगं (त्रितयं) त्वनृतं (त्वनृते); **गृर.** ५०९ वसायतः (पलापतः) त्वनृ (अनृ); **निप्र.** २।४९८.

(४) **गृक.** ३०९; **गृर.** ५१०; **निप्र.** २।४९८.

(५) **गृक.** ३०९ धान्य (धान्यार्थ); **गृर.** ५१० धान्यार्थ (धान्य) (पशु॰) तमं दत्त्वा यो (तमं वा यो) मया दत्त.... त्युच्यते (न मया दत्तमित्युच्यते); **निप्र.** २।४९८ (दत्त्वा द्रव्यमदत्तमिति मिथ्यावचनं दानानृतम्) एतावदेव, इदं व्याख्यानं वा वचनं वेति संदेहः.

**दानानामेकतमं दत्त्वा यो न ददाति न प्रतिपद्यते मया दत्तमिति तद्दानानृतमित्युच्यते॥**

**[1]एवं ह्याह —**

**अन्नानृते जन्म हन्ति द्वे तु वासोनृते तथा।**
**त्रीणि रत्नानृते हन्याच्चतुरं काञ्चनानृते॥**
**[2]पञ्च पश्वनृते हन्ति दश हन्ति गवानृते।**
**शतमश्वानृते हन्ति सहस्रं पुरुषानृते॥**
**एतत्तु द्विगुणं हन्ति कृत्वा भूम्यनृतं नरः।**
**ततश्च द्विगुणं भूयोऽभयं दत्त्वा हिनस्ति यः॥**

(१) अर्थः तत्र प्रतिउक्त(? प्रतिपदोक्त) धनादन्यः। दत्त्वा प्रतिश्रुत्य। गृक. ३१०

(२) अन्नधान्यार्थे(? धान्ये)त्यत्र अन्नपदम् अन्नार्थपरम्। दत्त्वा प्रतिश्रुत्य। गृर. ५११

(३) दानानृते देयद्रव्यविशेषेण दोषः। निप्र. २१४९८

**[3]यो यक्ष्य इत्युक्त्वा न यजेत महान्तं वा क्रतुमभिसमीक्ष्य स्वल्पेनैवेष्ट्वा न सर्वमुपयुनक्ति तत्र त्रैधातवी प्रायश्चित्तिः॥**

**[4]यस्तु तप उपेत्य न यथार्थं तपस्यत्यन्यथा वा चरते, असमाप्तको वा निवर्तेत तत्राऽऽग्नेयो विधिश्चान्द्रायणं वा॥**

**[5]साधारणं नाम यथा गोब्राह्मणहितमापत्कल्पः स्वैराभिधानं भवति॥**

**[6]एवं ह्याह —**

**न नर्मयुक्तं वचनं हिनस्ति**
**न स्वैरवाक्यं नच मैथुनार्थे।**
**प्राणात्यये सर्वधनापहारे**
**पञ्चानृतान्याहुरपातकानि॥**

साधारणत्वं गुणदोषाणामनुबन्धात्। यथा गोब्राह्मणहितानृतमनुज्ञातमपि गुरोरहितं सदोषम्, इतरत्रादोषम्। एवमापदनृतस्वैराभिधानानृतयोरपि। *गृक. ३१०-३११

**[1]द्विविधमेव द्रव्यमाहुः — सचेतनं निश्चेतनं च। δजङ्गमं स्थावरं च। सचेतनं जङ्गमम्। निश्चेतनम् — आप्यतैजसमणिशैलौषधिवानस्पत्यं मृण्मयं रसमयं च॥**

**[2]एवंभूतस्य दशविधा(? धादा)नात्स्तेयं भवति। अदत्तादानात्, अनतिसृष्टग्रहणात्, अनिर्देशोपयोगात्, भृत्येभ्यो भृत्यदानात्, याचितानिर्यातनात्, न्यासापला(? ल)पानात्, छद्मव्यसनायोः(? नात्), अनुपायग्रहणात्(चेति ?), प्रतिश्रुत्यादानात्, σदेवतानभिसंबन्धाच्चैतद्दशविधं भवति॥**

**[3]एवं ह्याह —**

**प्रतिश्रुत्याप्रदानेन दत्तस्याऽऽच्छेदनेन च।**
**विविधान्नरकान्याति तिर्यग्योनौ च जायते॥**
**वाचा यच्च प्रतिज्ञातं कर्मणा नोपपादितम्।**
**ऋणं तद्धर्मसंयुक्तमिह लोके परत्र च॥**

**[4]स्वामिनाऽदत्तस्याऽऽदानमदत्तादानम्। परिमाणादतिरिक्तग्रहणमनतिसृष्टग्रहणम्। देवपितृमनुष्यार्थे भिक्षित्वा**

(१) गृक. ३१०; गृर. ५११ हन्ति द्वे (हानिर्द्वे) हन्याच्चतुरं (हन्ति चतुरः); निप्र. २१४९९ (एवं ह्याह०) हन्याच्च (हन्ति च).

(२) गृक. ३१०; गृर. ५११ ततश्च (ततस्तु); निप्र. २१४९९ ऽभयं (भुवं) शेषं गृरवत्.

(३) गृक. ३१० सर्वमु (सर्वस्वमु); गृर. ५११ जेत म (जेन्म) समीक्ष्य (वीक्ष्य) नैवेष्ट्वा (नेष्ट्वा); निप्र. २१४९८ (यो यक्ष्य इत्युक्त्वा न यजते महान्तं क्रतुं कर्तुमुद्यतः स्वल्पं करोति तदिज्यानृतं तत्र त्रेधा भवति प्रायश्चित्तम्), इदं व्याख्यानं वचनं वेति संदेहः.

(४) गृक. ३१०; गृर. ५११ उपेत्य (उत्पत्य) को वा निवर्तेत (कारी निवर्तते); निप्र. २१४९८ (यस्तु उपक्रम्यायथार्थं तप्यति तत्तपोनृतम्। तत्र चान्द्रायणम्), इदं व्याख्यानं वचनं वेति संदेहः.

(५) गृक. ३१०; गृर. ५११ यथा (यो); निप्र. २१४९९ (यथा०) नं भवति (नमिति त्रिविधम्).

(६) गृक. ३१० ह्याह (त्वाह) नर्म (मर्म); गृर. ५११; निप्र. २१४९९ न च (च न) : २१५०० चतुर्थचरणमात्रम् (–).

* गृर. गृकवत्।

δ कल्पतरौ मुद्रितोऽयं पाठो न शुद्धः। कल्पतरुनित्याचारप्रदीपयोर्व्याख्यानात् 'सचेतनं जङ्गमं स्थावरं च। निश्चेतनम्— आप्य०' इति पाठस्तदभिमतः प्रतीयते। तस्मिन् पाठे ओषधिवानस्पत्यशब्दौ शुष्कनिर्जीवौषधिवानस्पत्यपरौ ग्राह्यौ। रत्नाकरे 'जङ्गमं स्थावरं च' इति वाक्यं नास्ति। अस्मिन् पाठे सचेतननिश्चेतनशब्दौ लक्षणया यथाक्रमं जङ्गमस्थावरपराविति प्रतीयते। व्याख्यानमपि एतत्पाठानुकूलमेवेति भाति।

σ निप्रव्याख्याने दत्तस्याऽऽच्छेदनं दशमी विधा। सैव युक्ता, उत्तरश्लोकोपष्टम्भात् यथाश्रुते अनिर्देशोपयोगेन पौनरुक्त्यापाताच्च।

(१) गृक. ३१२; गृर. ५१३ (जङ्गमं स्थावरं च०) आप्यतैजसमणिशैलौषधि (जरायुजमाप्यं तैजसमपि शैलोषधं); निप्र. २१४१९ (द्विविधं च द्रव्यम् — सचेतनमचेतनं स्थावरजङ्गमम्) एतावदेव.

(२) गृक. ३१२; गृर. ५१३ एवम्भू (एवं संभू) लापनात् (लापात्) च्चैतद्द (च्चेति द).

(३) गृक. ३१२-३१३ स्याऽऽच्छे (स्याऽऽच्छा); गृर. ५१३.

(४) गृक. ३१३ ऽऽनेष्यामी (नेच्छामी); गृर. ५१३ परिमाणा...सृष्टग्रहणम् (अनतिसृष्टग्रहणं परिमाणातिरिक्तग्रहणम्) भिक्षित्वा (भिक्षयित्वा) युञ्जतो (भुञ्जतो) व्यसनादब्रह्म (व्यसनेन चाब्रह्म).

**स्वयमुपयुञ्जतोऽनिर्देशोपयोगः। भृत्यानां कर्म कारयित्वा भृतेरदानम्। याचित्वाऽऽनेष्यामीत्यनिर्यातनं याचितानिर्यातनम्। विद्यामित्रकुलप्रत्ययान्यस्तस्यापलपनं न्यासापलपनम्। कूटमानतुलातस्करत्वं छद्म, व्यसनादब्रह्म-(? तस्य व्यसनम्। ब्रह्म)चारिणो हिरण्यादीनामात्मार्थं प्रतिग्रहो यतीनां चानुपायग्रहणम् ॥**

**[1]स्तेयिनो हि प्रमीताः पूर्वधनिनामुपकाराय जायन्ते। तस्मात्स्तेयं न कुर्यान्न कारयेन्नानुमन्येत॥**

(१) सचेतनं जीवाधिष्ठितम्। तच्च द्विविधं स्थावरं जङ्गमं च। गतिमत् पुरुषगवादि जङ्गमं जरायुजाण्डजस्वेदजरूपम्। वृक्षादि उद्भिज्जं स्थावरम्। निश्चेतनं जीवानधिष्ठितम्। आप्यं शङ्खादि। तैजसं सुवर्णादि। व्रीहियवादि औषधम्। वानस्पत्यं तृणकाष्ठादि। मृण्मयं घटादि। रसमयं क्षीरगुडादि। दशविधत्वं वक्ष्यमाणादत्तादानादिप्रकारेण। प्रतिश्रुत्यादानं 'तवेदं मया देयम्' इति प्रतिज्ञाय यददानम्। देवतानभिसंबन्धः 'इदं यागाय द्रव्यम्' इति निधाय तस्य देवतयाऽनभिसंबन्धः यागाकरणात्। धर्मसंयुक्तं यत्प्रतिज्ञातमित्यन्वयः। *कारयित्वा, कर्मेति शेषः। अनिर्यातनम् अप्रत्यर्पणम्। उपकाराय जायन्ते पशुदासादिभावेनेति शेषः।

δ गृक. ३१३-३१४

(२) स्वामिना अदत्तस्य ग्रहणम्, यावद्दत्तं ततोऽधिकपरिमाणग्रहणम्, देवपितृमनुष्याद्यर्थमिति यद्द्रव्यं रक्षितं तस्य स्वयं च भोगः भृत्यान् मूल्येन कारयित्वा कर्ममूल्यादानम्, पुनरानीय दास्यामीति प्रार्थनया नीत्वा पुनरदानम्, विश्वासेन स्थापितस्य धनस्याप्रत्यर्पणम्, कूटमानतुलादिना अधिकनयनम्, ब्रह्मचारिणो यतेर्वा सुवर्णादिग्रहणम्, क्षत्रियादेः प्रतिग्रहादि प्रतिश्रुत्यादानम्, दत्तस्याऽऽच्छेदनं चेति। उपकाराय जायन्ते पशुदासादिजन्म लभन्ते।

निप्र. २।४२०

**[2]अस्तेयं परमो धर्म इति धर्मविदो विदुः ।**
**परद्रव्यापहर्तॄणां न शुभा विद्यते गतिः ॥**

**[1]पूर्वाश्रमयोर्नेक्षुद्वयग्रहणे स्तैन्यम् । तथा मूत्रपुरीषा-(? मूलफला)दीनाम् । पाण्योः शाकपरिमाणे । एकपाणेः शमीनाम्। बहवस्तद्वदेके(?)। रक्ष्यवृक्षाणां तत्स्थानतक्षणे स्तोकग्रहणे वा। अन्येषां सुमनसां वाऽर्चापिनहने। अग्न्यर्थे तृणकाष्ठानां यवसोदकेन गवां चास्तैन्यम् ॥**

(१) पाण्योः शाकपरिमाणे पाणिद्वयपरिमिते शाके। (एक) पाणेः शमीनाम्, परिमाणे इत्यनुषङ्गः। एकपाणिपरिमितानां शमीनामित्यर्थः। रक्ष्यः रक्षणीयः। अर्चापिनहनं प्रतिमाच्छादनम्। # गृक. ३२३

(२) पूर्वाश्रमयोः ब्रह्मचारिगृहस्थयोः।

* गृर. ५२०

**[2]शौचं नाम धर्मादिपथो ब्रह्मायतनं श्रियोऽधिवासो मनसः प्रसादनं देवानां प्रियं शरीरे क्षेत्रज्ञदर्शनं बुद्धिप्रबोधनम्। तच्च शौचमुपरिष्टाद्वक्ष्यामः॥**

**एवं ह्याह –**

**शुचिं देवा हि रक्षन्ति पितरः शुचिमन्वयुः।**
**शुचेर्बिभ्यति रक्षांसि ये चान्ये दुष्टचारिणः॥**

(१) धर्मादिपथः धर्मस्य प्रथमः मार्गः उपाय इति यावत्, शुचेरेव कर्मण्यधिकारात्। ब्रह्मायतनं वेदाश्रयः। क्षेत्रज्ञम् आत्मानं दर्शयतीति क्षेत्रज्ञदर्शनम्। गृक. ३२५

(२) ब्रह्मायतनं ब्रह्मणः वेदस्य आयतनम् आधारः।

गृर. ५२२

**[3]तच्च द्विविधम् – बाह्यमाभ्यन्तरं च। तत्र बाह्यं कुलशौचमर्थशौचं शारीरं च। तत्र कुलशौचं सूतकाद्यशौचविरहः। अर्थशौचं भाजनादिद्रव्याणां शुद्धिः। शारीरं शौचममेध्यादिलेपप्रक्षालनम् ॥**

---

* इतो व्याख्यानात् मूले कर्मपदं नास्तीति गम्यते।

δ गृर. गृकवत्।

(१) अप. १।१५४ पृ. २२५ त्स्तेयं न (न्न स्तेयं) नुमन्ये (वमन्ये); गृक. ३१३ त्स्तेयं (त्स्तेनं); गृर. ५१४ (न कुर्यात्०); निप्र. २।४२० (न कारयेन्नानुमन्येत०).

(२) गृक. ३१९; गृर. ५१८ व्यापहर्तॄ (व्यस्य हन्तृ).

# निप्र. गृकगतम्।

* शेषं गृकवत्।

(१) गृक. ३२२; गृर. ५२० षादीनाम् (षाणाम्) रक्ष्य (रक्षा) तक्षणे (तक्षणेऽस्तैन्यम्) (स्तोकग्रहणे वा०) सुमनसां वाऽर्चा (च सुमनसामर्चा) अम्न्यर्थे (अग्न्यर्थं); निप्र. २।४२३ (शाकपरिमाणे सुमनसां चानननन्दने?) एतावदेव, 'सुमनसां चार्चापिनिह्नवे' इति व्याख्यानात्पाठः प्रतीयते (–).

(२) अप. १।१५४ पृ.२२६ (शौचं नाम.... एवं ह्याह०) देवा हि (देवाश्च) द्वितीयचरणे (रक्षन्ति पितरः शुचिम्); गृक. ३२५ शौचमुप (शौचं द्विविधमुप); गृर. ५२२ क्षेत्रज्ञ (क्षेत्र) देवा हि (देवाऽभि); मुक्त. २२० अपवत्, अपरार्के

(३) गृक. ३२५ भाजना (भोजना); गृर. ५२२ 'तच्च द्विविधम्' 'बाह्यमाभ्यन्तरं च' इति वाक्ययोर्व्यवहितयोः स्वीयवाक्येऽनुवादः, विरहः (शून्यत्वम्) शारीरं .... क्षालनम् (शारीरादिशौचममेध्याद्यलेपनम्); निप्र. २।४२३ (शौचं बाह्यमान्तरं च। कुलशौचमर्थशौचं शारीरं च। सूतकाद्यशौचराहित्यम्। अर्थशौचममेध्यलेपचण्डालादिस्पर्शादिशुद्धिः).

[1]**आभ्यन्तरं च शौचं पञ्चविधम्। तद्यथा – मानसं चाक्षुषं घ्राणं वाच्यं स्वाद्यं चेति ॥**

[2]**तत्र मानसम् अपुण्यानुध्यानदोषविरहः ॥**

[3]**चक्षुरादिशौचं चानवलोक्यावलोकनादिविरहः ॥**

(१) चाक्षुषवत् स्पर्शनीयमप्यत्र द्रष्टव्यम् ।

गृर. ५२३

(२) चाण्डालादिस्पर्शनकाले जपहोमजलादि(?)-निषेधात् तन्निमित्ताशौचापगमरूपत(? पं त)त्कर्मणि। तथा पूतिगन्धे नित्यानध्यायस्मरणात्तत्(?णात्त)त्कर्मणि तदशौचविरहः। 'तस्मात्तस्याशुचिर्ध्वनिः' (मस्मृ. ४।१२४) इति सामकीर्तनादेव(?देः) वेदान्तराध्ययनाशौचरूपत्वात् तदशुद्धिरिह वाक्य(? च्य)शुद्धिः। एवं 8सूतकादौ भोजनराहित्यं स्वाद्यशौचमिति। निप्र. २।४२३-४२४

[4]**भ्रष्टशौचं नरं दृष्ट्वा प्रहरन्तीह राक्षसाः।**
**यक्षाः पिशाचा भूतानि ये चान्येऽप्येवमादयः॥**

[5]**स्नानं दानं तपस्त्यागो मन्त्रकर्मविधिक्रियाः।**
**मङ्गलाचारनियमाः शौचभ्रष्टस्य निष्फलाः ॥**

[6]**इष्टं निवेदितं दत्तं भुक्तं जप्तं तपः श्रुतम्।**
**यातुधानाः प्रलुम्पन्ति शौचभ्रष्टाद्द्विजन्मनः॥**

निवेदितं नैवेद्यं कृतम्। गृर. ५२३

[7]**ब्रह्मचर्यं नाम दिव्यमानुषीणां तथा चित्रस्थकाष्ठस्थपोतस्थमृण्मयादीनामप्यप्रार्थनमस्मरणमसंकल्पनमनभिप्रेक्षणमसंकीर्तनमनभिभाषणमनभिगमनमसंदर्शनमसमागमश्चाऽऽसाम् ॥**

[1]**तच्च ब्रह्मचर्यं चतुर्विधं भवति– कृष्णं रक्तं शुक्लं विमलमिति। तत्र परदारवर्जनं नित्यम्। स्वदारगमनं कृष्णम्। पर्वनियमवर्जं रक्तम्। ऋतुकालाभिगमनं शुक्लम्। ऊर्ध्वरेतस्त्वं विमलम् ॥**

**एवं ह्याह –**

**कृष्णेनेमं जयेल्लोकं मध्यं रक्तेन वै जयेत्।**
**शुक्लेन तु जयेत्स्वर्गं विमलान्मोक्षमाप्नुयात्॥**

(१) दिव्याः उर्वश्याद्याः शास्त्रावगताः। पोतस्थाः पोतं प्रतिमाकरणयोग्यं रजतादि, तत्स्थाः तन्निर्मिताः। अप्रार्थनं सा मे भूयादित्याशंसाविरहः । असंकल्पम्(? ल्पनम्) 'एवं करिष्यामि' इत्यभिधानाभावः। अनभिप्रेक्षणम् अभिमुखानभिलोकनम्। असंदर्शनं सकलावयवानवलोकनम्। असमागमः असंनिधानम्। पर्वनियमवर्जम्— पर्वणि अमावास्यादौ, नियमे व्रतादौ। इति यमाः।

गृक. ३२७

(२) अनभिभाषणम् आभिमुख्येन साभिलाषभाषणविरहः। अनभिगमनम् आभिमुख्येनानागमनम्। असमागमः संयोगविरहः। सर्वे चैते रागजा निषेध्या इति ज्ञेयम्। पर्वणि नियमे वर्जनम् – पर्वणि अमावास्यादौ, नियमे द्वादशीव्रतादौ च वर्जनं त्यागः। δगृर. ५२४

क्रोधनियमादयः पञ्च नियमाः तेषां विस्तरेण विवरणं च

[2]**क्रोधनियमश्चाऽऽर्जवमकल्कता संतोषो गुरुशुश्रूषा चेति नियमाः॥**

[3]**ततो वाङ्नियमः कर्मनियमश्चेति क्रोधनियमः। मानसात्क्रोधाच्चित्तपरितापात्पीड्यमानस्य कार्श्यवैवर्ण्य -**

---

8 सूतकादिरूपमेव यदशौचं तद्विरहः कुलशौचरूपं ब्राह्मशौचम्, सूतकादौ भोजनादिरूपेण रसग्रहणात् यदशौचं तद्विरहः स्वाद्यशौचरूपमाभ्यन्तरशौचमित्युभयोर्भेदः।

(१) गृक. ३२६ रं चशौ (रशौ); गृर. ५२३ घ्राणं (घ्राण्यं) चेति (च); निप्र. २।४२३ (च.) वाच्यं (गव्यं) व्याख्यानात्तु आदर्शपाठ एव, 'वाक्यम्' इतिवापाठः.

(२) गृक. ३२६ नुध्यान (भिधान); गृर. ५२३ गृकवत्; निप्र. २।४२३.

(३) गृर. ५२३; निप्र. २।४२३ (चाक्षुषाशौचं) एतावदेव.

(४) अप. १।१५४ पृ. २२६ प्रहर (प्रह्रिस); गृक. ३२६; गृर. ५२३; मुक्ता. २२० ऽप्येवमादयः (कुत्सचारिणः).

(५) अप. १।१५४ पृ. २२६ स्नानं (ज्ञानं); गृक. ३२६ अपवत्; गृर. ५२३; मुक्ता. २२० तपस्त्यागो (तथा ध्यानं) विधिक्रियाः (विधिः क्रिया) नियमाः (नियमः).

(६) गृक. ३२६ लुम्प (लुप्य) यमः; गृर. ५२३.

(७) गृक. ३२७ चित्रस्थकाष्ठस्थ (चित्रार्थकाष्ठ); गृर. ५२४ (तथा.); निप्र. २।४२४ चित्रस्थकाष्ठस्थपोत (चित्रकाष्ठपात्र) मप्यप्रार्थनमस्मरण (मप्यार्थ) मनभिभाषण..... गमश्चा (मनभिगमनसंदर्शनमसंगमश्चा).

δशेषं गृकवत्। निप्र. गृकगतम्।

(१) गृक. ३२७ (कृष्णं रक्तं शुक्लं विमलमिति।.) दार (दाराभि); गृर. ५२४ पर्वनियमवर्जं (पर्वणि नियमे वर्जनं); निप्र. २।४२४ तच्च (तत्) (ब्रह्मचर्यं.) (भवति.) (तत्र.) नित्यम्। + (नित्यं) गमनं (सेवनं) नियमवर्जं (वर्जननियमं) विमलान्मो (विमले मो).

(२) गृक. ३२८; गृर. ५२५ श्चाऽऽर्जव (वर्जन) नियमाः (नियमः); निप्र. २।४१५ कल्क (कल्प).

(३) गृक. ३२८ ततो+(नियमाः) नियमः (नियमाः); गृर. ५२५ ततो..... श्चेति (कर्मनियमो वाङ्नियमश्चेति) (कार्श्य.) वैरूप्या (वैकृत्या); निप्र. २।४२८-४२९ (ततो....त्क्रोधनियमः.) मानसात्क्रोधाच्चित्त (मानसी तु क्रोधातीत) कार्श्य...व्याधयः (कायवैवर्ण्यवैरूप्यव्याधयः) पतापा (पघाता).

**वैरूप्यादयो व्याधयः संभवन्ति। अहङ्कारेर्ष्यासूयाद्वेषपरोपतापादीनि च क्रोधरूपाणि॥**

**[1]वाग्लक्षणाद(? णा अ)प्रियपरुषवादिता नानाविधवाक्य(? च्य)दर्शनादयः। कर्मलक्षणाः केशग्रहणसंप्रहरणादयः, अपरशरीरविप्रयोगकराश्चेति। यैरुपसृष्टः सन् विद्वानप्यवसादमुपैति, तस्मादेतान्वर्जयेत्॥**

**[2]एवं ह्याह –**

**आक्रुष्टस्ताडितः क्षिप्तः क्षमते यो न कुप्यति।**
**स तस्य दुष्कृतं दत्त्वा सुकृतं सर्वमाप्नुयात् ॥ इति ॥**

(१) तस्य आक्रोशनादेः। गृक. ३२९

(२) तस्य आक्रोशनादिकर्तुः।

गृर. ५२५

**[3]निकृतिनियमो जैह्म्यनियमश्चाऽऽर्जवम्। छद्ममायाव्याजयुक्ता निकृतिः। काठिन्यशाठ्यवैषम्यदोषसद्भावयुक्तं जैह्म्यम्, ह्येतन्नियमा(? म आ)र्जवं भवति ॥**

**[4]एवं ह्याह –**

**जैह्म्यं मृत्युपदं प्राहुर्निकृतिस्तमसः पदम्।**
**सर्वभूतात्मभूतत्वादार्जवं ब्रह्मणः पदम्॥**

(१) छद्म छलम्। माया कौटिल्यम्। व्याजः अर्थान्तरोपन्यासः। काठिन्यं निष्करुणता। शाठ्यम् अपार्थाय(?) हृदये रागादिप्रदर्शनम्। वैषम्यं निगूढपरद्रोहाभिसंधानम्। दौष्ट्यं परसुखासहिष्णुत्वम्।

गृक. ३३०

(२) छद्म छलं परमतितिरोधानमिति यावत्। असाध्यम् अयथाहृदयं नागादि(? हृदयनामादि)प्रदर्शनम्। वैषम्यं निगूढपराभिधानम्। *गृर. ५२६

(३) छद्म छन्नम्, माया कौटिल्यम्, व्याजः अर्थान्तरोपन्यासः, एतेषां निकृतिरूपाणां नियमः वर्जनम् आर्जवम्। एवं काठिन्यं निष्ठुरता दयाविरोधिपदार्थः। शाठ्यम् अयत्नता। वैषम्यं निगूढपरद्रोहप्रतिसंधानम्।

निप्र. २।४२९

(१) गृक. ३२८ वाक्यदर्शना (वाक्प्रदाना) प्रहरणा (प्रह्मरा) रविप्र (रप्र); गृर. ५२५ सन् वि (सुवि).

(२) गृक. ३२९ हारीतो यमश्च; गृर. ५२५; निप्र.२।४२६ न कुप्यति (ऽनुलिम्पति) माप्नुयात् (मश्नुते) (इति०) हारीतो यमश्च.

(३) गृक. ३२९ निकृतिनियमो जैह्म्य (निष्कृतिर्नियमो जैह्म्य) युक्ता नि (युक्ताधि) म्यदोष (म्यादौष्यं) व्याख्यानात्तु 'म्यदौष्ट्य' इति पाठः। जैह्म्यम्, ह्येतन्नियमा (जैह्मं तदेते सन्नियम्या); गृर. ५२५ निकृति... श्चाऽऽर्जवम् (कृतिर्नियमो जैह्म्यं नियमार्जवम्) काठिन्य..... जैह्म्यम्, (काठिण्यासाध्यवैषम्यदौष्ट्यं सद्भावयुक्तं); निप्र. २।४२९ व्याज (कुल) (ह्येतन्नियमार्जवं भवति०).

(४) अप. १।१५४ पृ. २२५ (एवं ह्याह०) जैह्म्यं (निन्दां) तिस्त (तिं त); गृक. ३२९ जैह्म्यं (जैह्मं) र्निकृतिस्त (र्निष्कृतिं त); गृर. ५२६ र्निकृ (र्निष्कृ); निप्र. २।४२९ (एवं ह्याह०) उत्त.

**[1]स्मयनियमः सूनानियमः सेवानियमो दम्भनियमश्चेत्यकल्कता ॥**

**[2]ज्ञानदानतपऐश्वर्यभोगविशेषैः स्मयं वर्जयेत्। स्मयोपपन्नास्तेजसाऽवपन्नाः संभवन्ति॥**

**[3]पञ्चसूनासंभूतं पापमघमित्युच्यते। अघिनो हि प्रेतीभूता बीजवज्जायन्ते। तस्मान्नाऽऽत्मार्थे सूनां कारयेत्॥**

**[4]विविधशिल्पप्रयोगैः सेवाविशेषैः परानन्नार्थं नोपचरेत्॥**

**[5]अविद्वान् विद्वत्तां ख्यापयति, अदाता दानम्, अयज्वा यज्ञम्, अतपस्वी तपः, अनाश्रमी आश्रमार्थं लिप्सन्(? लिप्सते)। तेनैवंवृत्तानां दुष्कृतं कृतं भवति॥**

**[6]एवं ह्याह –**

**किं तेन न कृतं पापं चौरेणाऽऽत्मापहारिणा।**
**योऽन्यथासन्तमात्मानमन्यथा प्रतिपद्यते॥**

(१) स्मयः दर्पः। अवपन्नाः हीनाः। बीजवज्जायन्त इति। यथा बीजात्समानमेव कार्यं जायते तथा

*शेषं गृकवत्।

(१) गृक. ३२९; गृर. ५२६ सुना (शुना) दम्भनियमश्चे (ऽदम्भश्चे); निप्र. २।४२९ (स्मयनियमो दम्भनियमश्चेदक्ल्पता।).

(२) गृक. ३३०; गृर. ५२६; निप्र. २।४३० भोगविशेषैः स्मयं (विश्लेषास्मयं) स्मयोप.... संभवन्ति(स्मयावपन्नास्तेजसोपपन्ना भवन्ति).

(३) गृक. ३३० प्रेती (प्रेत) सूनां (सूनाः); गृर. ५२६ सूनासं (शूनासंपन्नं सं) सूनां (शूनां).

(४) गृक. ३३० विविध (त्रिविध); गृर. ५२६ नन्नार्थं नोप (नत्यर्थं नोपा).

(५) गृक. ३३० (कृतं०); गृर. ५२६ मार्थं लि (ममलि); निप्र. २।४३० अविद्वान् विद्वत्तां (विद्वानविद्वत्तां) दाता दा (दत्तादा) अयज्वा.... लिप्सन् (अयाज्ययाजनं अतपास्तपः। अनाश्रयत्वं लिप्सते) (कृतं०).

(६) गृक. ३३०; गृर. ५२६; मच. ४।२५५ (एवं ह्याह०) (=).

आधि(? अधि)नोऽपि समानरूपा एव जायन्ते। अर्थग्रहणाद्विद्याद्यर्थमदोषः। एवंवृत्तानां विद्वदादीनाम्। प्रतिपद्यते इत्यन्तर्भावितण्यर्थः। गृक. ३३०

(२) अन्यथा प्रतिपद्यते अन्यथा ख्यापयति। * गृर. ५२६

(३) स्मयनियमः दर्पवर्जनम्। एवं दम्भरूपम् (?), तद्वर्जनं दम्भवर्जनमकल्पतानियम इत्यर्थः। निप्र. २।४३०

[1]**सूनानियमी सेवानियमी स्तेयाविक्रेयविक्रय्ययाज्ययाजनासत्प्रतिग्रहशूद्रश्रावणभृतकाध्यापनार्थयोगप्रतिग्रहनिवृत्त्या लोभनियमी संतुष्टो भवति॥**

[2]**एवं ह्याह —**

**संतोषः परमो धर्मः संतोषः परमं पदम्।**
**संतोषः परमं कर्म संतोषः परमं तपः।**
**संतोषः परमं श्रेयः संतोषः परमं यशः।**
**संतोषः परमा सिद्धिः संतोषः परमं सुखम्॥**8

शूद्रश्रावणं सुपात्रताख्यापनार्थं शूद्रस्याग्रे वेदपाठः। अर्थयोगपरिग्रहः पाठनिकापूर्वकः परिग्रहः। 'संतोषः परमो धर्मः' इति धर्मादीनां संतोषमूलत्वादभेदोपचारः। σ गृर. ५२८

यमनियमप्रशंसा

[3]**यमेषु नियमेषु चाप्रमत्त-**
**स्तिष्ठति याति लोकान्वरिष्ठान्।**
**भ्रष्टस्तेभ्यो विविधा याति योनी-**
**र्यासूत्पन्नो मज्जते यातनासु॥**

[1]**तेभ्यो धीरः शुश्रुवान् न्यायवृत्तो**
**यस्मिन् यशो न व्यथते नापि धर्मः।**
**धर्मो ह्येकः सुसहायो जनानां**
**य एतान् घोरात्त्रायते मृत्युदुर्गात्॥**

तेभ्यः यमनियमेभ्यः। शुश्रुवान् श्रुतवान्। *गृक. ३३३

यतिपूजनम्

[2]**सर्वेषामाश्रमाणां तु संन्यासी ह्युत्तमाश्रमी।**
**स एवात्र नमस्यः स्याद्भक्त्या सन्मार्गवर्तिभिः॥**
**ब्रह्मिष्ठः परमो हंसः साक्षान्नारायणः स्मृतः।**
**यतिं यः पूजयेन्नित्यं विष्णुस्तेन प्रपूजितः॥**
**सर्वेषामपराधानां यतिनिन्दा गरीयसी।**
**यतिर्नारायणः साक्षात्तस्मात्तां परिवर्जयेत्॥**

ब्राह्मणस्य रासभाद्यारोहणनिषेधः

[3]**रासभं महिषं मेषं बलीवर्दं क्रमेलकम्।**
**आरुह्य ब्राह्मणो मोहात्पुनः संस्कारमर्हति॥**

त्रैवर्णिकानां शिखाछेदने दोषः

[4]**शिखां छिन्दन्ति ये मोहाद्द्वेषादज्ञानतोऽपि वा।**
**पुनःसंस्कारमर्हन्ति त्रयो वर्णा द्विजातयः॥**

पैशुन्यवर्जनम्, सर्वप्राणिकल्याणैषणम्,
यतिनमस्कारः, द्विजानां
मद्यपाननिषेधः, क्षौरे
दिङ्नियमः

[5]**सवर्णेषु सूचनम्॥**

वर्जयेदित्यनुषङ्गः। सूचनं पैशुन्यम्। निप्र. २।४१९

[6]**यथाऽऽत्मनस्तथाऽन्येषां यो विद्वान् स्वस्तिमिच्छति।**
**स सर्वलोकप्रवरे ब्रह्मलोके महीयते॥**

---

* शेषं गृकवत्।

8 अतः परं पञ्चमनियमस्य गुरुशुश्रूषाया विवरणं क्रमप्राप्तमपि नोपलभ्यते।

σ गृकव्याख्यानं त्रुटितमशुद्धं च, तस्मान्न संगृहीतम्। तथापि गृरवदिति प्रतीयते।

(१) **गृक.** ३३१-३३२ नार्थ (नानु); **गृर.** ५२७ सूना (शूना) विक्रेय (विक्रय) योगप्रति (योगपरि) लोभनियमी (लोभनियमे); **निप्र.**२।४३० (निषिद्धस्थाननिषिद्धद्रव्यविक्रयायाज्ययाजनासत्परिग्रहेण शूद्रश्रवणे वेदपाठेन मूल्यग्रहणाध्यापनवेदप्रश्नपूर्वं प्रतिग्रहादिना सुखं नेच्छेत्। अनिषिद्धेन साधनेन संतुष्टो भवेदिति।).

(२) **गृक.** ३३२ पदम् (सुखम्) द्वितीयार्धं नास्ति; **गृर.** ५२७.

(३) **गृक.** ३३२ चाप्रमत्त (वा प्रसन्न) (याति०); **गृर.** ५२८; **निप्र.** २।४६७ चाप्रमत्तस्तिष्ठति (च प्रमत्तस्तिष्ठन्) वरिष्ठान् (परिभ्रष्टान्) उत्तरार्धे (भ्रष्टस्तेभ्यो विविधां याति योनिं यास्वत्यन्तं सज्जते यातनासु॥).

* गृर. गृकवत्।

(१) **गृक.** ३३३ तेभ्यो धीरः (तस्माद्धीरः); **गृर.** ५२८ शुश्रुवान् (शुश्रूषावान्) ह्येकः (ह्येषः) दुर्गात् (योगात्); **निप्र.** २।४६७ तेभ्यो धी (तस्माद्धी) वृत्तो (वृत्तौ) नापि (न) सुसहा (ससहा) य एतान् (योऽस्मात्).

(२) **मुक्ता.** २०६; **यसं.** १२८.

(३) **संप्र.** ५४६; **संग.** ७१६.

(४) **संप्र.** ५४८ हाद्द्वेषा (हाद्दैवा); **संग.** ६१९ तृतीयचरणे (तप्तकृच्छ्रेण शुध्यन्ति): ७१६.

(५) **निप्र.** २।४१९.

(६) **निक.** ३३० स्वस्तिमि (स्वस्ति चे); **गृर.** ३९२; **आप्र.** ५३९-५४०.

[1]अष्टाक्षरेण मन्त्रेण यतयस्तु नमस्कृताः।
स्मृतनारायणा घ्नन्ति प्राणिनां पापपञ्जरम्॥
[2]अष्टाक्षरेण मन्त्रेण नमोनारायणात्मना।
नमस्यो भक्तिभावेन विष्णुरूपी यतिर्यतः॥
[3]यत्र कुत्रापि यतिनं दृष्ट्वा यो दण्डवद्भुवि।
न नमेदिति कायेन कल्पान्ते रौरवादयः॥
[4]+सुरा वै मलमन्नानां पाप्मा च मलमुच्यते।
तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत्॥
[5]गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा।
यथैवैका तथा सर्वा न पातव्या द्विजातिभिः॥
[6]यक्षरक्षःपिशाचान्नं मद्यं मांसं सुरासवम्।
तद्ब्राह्मणेन नात्तव्यं देवानामश्नता हविः॥
[7]अमेध्ये वा पतेन्मत्तो वैदिकं वाऽप्युदाहरेत्।
अकार्यमन्यत्कुर्याच्च ब्राह्मणो मद्यमोहितः॥
[8]यस्य कायगतं ब्रह्म मद्येनाऽऽप्लाव्यते सकृत्।
तस्य व्यपैति ब्राह्मण्यं शूद्रत्वं च स गच्छति॥

+एषां पञ्चानां वचनानां व्याख्यानसंग्रहः एतत्सदृशमनुवचनेषु (वका. पृ. १७५२-१७५५) द्रष्टव्यः। यद्यपि आह्निकप्रकाशे एतदादीनां पञ्चानां श्लोकानां 'मनुः' इत्युपक्रम्य संगृहीतत्वात् प्रकाशकार एतेषां मानवत्वमेवाभिमन्यते इति प्रतीयते, तथाऽपि द्वितीयश्लोके 'द्विजोत्तमैः' इति मानवपाठस्थाने 'द्विजातिभिः' इति हारीतपाठनिर्देशात् तदर्थनिर्णये 'तद्ब्राह्मणेन नात्तव्यम्' इति तृतीयश्लोकांशस्य हेतूकरणाच्च 'एकदेशानुमतौ सर्वानुमतिः' इति न्यायेन अन्यनिबन्धकारसंवाददर्शनेन च प्रकाशकारस्याप्येतेषां पञ्चानामपि हारीतीयत्वेऽप्यनुमतिं निश्चित्य मनुहारीतयोरुभयोरपि प्रकाशस्य स्थलादिनिर्देशः 'मनुहारीतौ' इति ऋषिनिर्देशश्चास्माभिः कृतः।

(१) मुक्त. २०६ द्वितीयतृतीयचरणयोः (यतिर्यत्र नमस्कृतः। स्मृतं नारायणो हन्ति); यसं. १२८.

(२) मुक्त. २०६; यसं. १२८.

(३) यसं. १२८.

(४) निक. ३३० मनुहारीतयमाः; गप. ४०७ मनुहारीतयमाः; आप्र. ५४८ मनुहारीतौ, अनिर्दिष्टस्थलनिर्देशाः मनौ कृताः.

(५) निक. ३३० मनुहारीतौ; गप. ४०७ द्विजातिभिः (द्विजोत्तमैः) मनुहारीतयमाः; आप्र. ५४८ प्रथमचरणे (गौडी माध्वी तथा पैष्टी) मनुहारीतौ.

(६) निक. ३३० - ३३१ मनुहारीतौ; गप. ४०७ चान्नं (चानां) मनुहारीतयमाः; आप्र. ५४८ मनुहारीतौ.

(७) गप. ४०७ मनुहारीतयमाः; आप्र. ५४८ र्याच्च (र्याद्वा) मद्य (मद) मनुहारीतौ.

(८) निक. ३३१ मनुहारीतौ; गप. ४०७ स ग (निय) मनुहारीतयमाः; आप्र. ५४८ मनुहारीतौ.

[1]प्राङ्मुखः श्मश्रुकर्माणि कारयेत्तु सदा नरः।
उदङ्मुखो वा राजेन्द्र तथाऽऽयुर्विन्दते महत्॥

## लघुहारीतः

ग्रहणनिमित्तकदानादिप्रशंसा

[2]सर्वस्वेनापि कर्तव्यमक्षय्यं राहुदर्शने।
दानं यज्ञस्तपः श्राद्धं प्राहुर्धर्मविदो जनाः॥

## वृद्धहारीतः

षट्कर्मविषयको ब्राह्मणादीनाम-
धिकारभेदः

[3]एतेषां* ब्राह्मणाश्चाऽऽद्याः षट्कर्मसु नियोजिताः।
त्रिकर्मसु क्षत्रविशावेकस्मिञ्छूद्रयोनिजः॥

सुरापानादिनिषेधः

[4]सुरायाः प्रतिषेधस्तु द्विजानामेव कीर्तितः।
विशिष्टस्यापि शूद्रस्य केचिदिच्छन्ति सूरयः॥
अनृतं मद्यमांसं च परस्त्रीस्वापहारणम्॥
विशिष्टस्यापि शूद्रस्य पातित्यं मनुरब्रवीत्॥
सुरा वै मलमन्नादेः पापाद्वै मलमुच्यते।
तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत्॥
8चकाराद्विशिष्टस्य शूद्रस्यापि पूर्ववचनात्॥
यत्तु राजन्यवैश्ययोर्गवाज्यादिमध(? द्य)स्याप्रतिषेधस्तन्न मतं स्यान्न च निषिद्धादीनां सतां मतं च, विशिष्टशूद्रस्य मद्यमांसनिषिद्धत्वात्, इज्याध्ययनादिश्रौतस्मार्तकर्मार्हक्षत्रविशिष्टस्यापि तद्वद्वैश्यस्य च प्रतिषेधान्न तु प्रायश्चित्ताल्पत्वप्रतिपादनपराण्येव न त्वप्रतिषिद्धपराणि॥

* एतेषां वर्णानामित्यर्थः।

8 एतदादिनी २८०, २८१ इत्यङ्काङ्किते द्वे गद्यवचने पूर्ववचनैः सह व्याख्यानव्याख्येयभावप्रतीतेर्भाषाशैल्या च पूर्ववचनव्याख्यानभूते कस्यचिद्विदुषः स्याताम्, न हारीतीये इत्याशङ्का भवति। व्याख्यानमिदं प्रासङ्गिकमेतावदेव वा संपूर्णस्मृतिव्याख्यानैकदेशभूतं वा लेखकेन प्रमादात् मूले निवेशितं स्यात्। किंच, बृहत्यामस्यां वृद्धहारीतस्मृत्यामन्यत्र कुत्रापि मन्त्रान् तदृष्यादिबोधकवाक्यानि प्रकरणोपक्रमवाक्यानि च विहाय नैकमपि गद्यवचनमस्तीत्येतदपि वचनानामेतेषां स्मार्तत्वे संदेहकरम्। एवं २८२, २८३, २८४ इत्यङ्काङ्कितेषु प्रायश्चित्तविषयेषु गद्यवचनेष्वपि इयमेवाऽऽशङ्का भवति।

(१) अप. १।१५४ पृ. २२६.

(२) लहास्मृ. १०३.

(३) वृहास्मृ. ७।१५६-१५७.

(४) वृहास्मृ. ९।२७७-२८१, ३४९-३५०.

आततायिवधे दोषाभावः

**गुरुं वा बालवृद्धान्वा श्रोत्रियं वा बहुश्रुतम्।**
**आततायिनमायान्तं हन्यादेवाविचारयन्॥**
**नाऽऽततायिवधे दोषो हन्तुर्भवति कश्चन॥**

बहूनां सामान्यधर्माणां समाम्नानम्

[1]**अगम्यागमनं हिंसामभक्ष्याणां च भक्षणम्।**
**असत्यकथनं स्तेयं मनसाऽपि विवर्जयेत्॥**
**श्रवणं कीर्तनं सेवा सत्कृत्यकरणं तथा।**
**असत्कृत्यपरित्यागो विषयान्तरवर्जनम्॥**
**दानं दमस्तपः शौचमार्जवं क्षान्तिरेव च।**
**आनृशंस्यं सतां सङ्गः पारमैकान्त्यहेतवः॥**

## बौधायनः

आर्याधिष्ठितशूद्राणां वपनावधिः आचमनकल्पश्च

[2]**शूद्राणामार्याधिष्ठितानामर्धमासि मासि वा वपनम्॥**
[3]**आर्यवदाचनमनकल्पः॥**

(१) आचमनकल्पः आचमनेतिकर्तव्यता उपवीतं वस्त्र(?तवस्त्र)विन्यासादिः। आर्यपरतन्त्राणाम्, न स्वतन्त्राणां शिल्पादिजीविनाम्। गृक. २६९

(२) आर्यवदित्यादि। यथा द्विजानामास्यस्पर्शनसहित आचमनविधिरेवं शूद्राणां तदाश्रितानामित्यर्थः।

* गृर. ४७७-४७८

(३) वापनं वपनं मुण्डनम्। तच्च सर्वमुण्डनं शिखां संस्थाप्येतरमुण्डनं वा। # स्मृकौ. ९१

(४) आर्यवत् 8वैश्यवत्। # शूशि. ३९

(५) कार्यमिति शेषः। आर्याधिष्ठिताः आर्याच्छात्रादि-शुश्रूषवः। आर्यवदिति। तेषामिति शेषः। कल्पः प्रयोगः 'आसीनस्त्रिः पिबेत्' इत्यादिः। एवं च 'स्त्रीशूद्रौ तु सकृत्' इत्येतदनार्याधिष्ठितशूद्रविषयं द्रष्टव्यम्। ननु सर्व एव शूद्रा आर्याधिष्ठिताः। तथा च वक्ष्यति — 'शूद्रेषु पूर्वेषां परिचर्या' (बौध. १।१८।५) इति। सत्यम्, तथाऽपि परिचर्यायामतिक्रमः संभाव्यते। सन्ति हि केचिच्छूद्राः स्वतन्त्रा एव शिल्पजीविनश्च, तस्मादनवद्यम्। यद्वा, आर्यो ब्राह्मणोऽभिप्रेतः, न क्षत्रियवैश्यौ, तत्रैतत्स्यात्। आर्यवदिति वतिप्रत्ययेन आचमनधर्माणां सर्वेषामतिदेशे सति उपवीतादीनामपि प्राप्तिः स्यात्। नेत्याह। त्रैवर्णिक — प्रधानत्वादुपनयनस्य, तत्प्रयुक्तत्वाच्चोपवीतस्य न शूद्रस्य प्राप्तिः। तस्मादुपवीतादिवर्जितस्यातिदेशोऽयम्।

बौवि.

(६) अर्यः वैश्यः। 'अर्यः स्वामिवैश्ययोः' (पासू. ३।१।१०३) इति पाणिनिः।

शूक. ६६

कर्मयोग्यानि वस्त्राणि

[1]**अहतं वाससां शुचि। तस्माद्यत्किंचेज्यासंयुक्तं स्यात्सर्वं तदहतेन वाससा कुर्यात्॥**

(१) वाससां मध्ये अहतं वासः श्रेष्ठम्, तद्दधता क्रियमाणो यज्ञः शुचिः। गृक. १४४

(२) अहतानां वाससां संबन्धी पुरुषः क्रियाधिकारी स्यादिति। यत्किंचिदिज्याद्युक्तं तदहतवासोधारणवता पुरुषेण कर्तव्यमित्यर्थः। 'अहतवाससा शुचिः' इति क्वचित् पाठः। तदा व्यक्त एवार्थः।

* गृर. ११३-११४

(३) अहतम् अनुपभुक्तम् अभिनवं शुचि। स्यादित्य-ध्याहारः। इज्या यागः। यत्किंचिदिति वीप्सावचनात् इष्टिपशुचातुर्मास्यादीनाम्। बौवि.

[2]**प्रक्षालितोपवातान्यक्लिष्टानि वासांसि पत्नी-यजमानावृत्विजश्च परिदधीरन्॥**

---

*शेषं गृकवत्। मर. गृरगतम्।
# शेषं गृकगतम्।
8 अस्माद्व्याख्यानात् 'अर्यवत्' इति पाठोऽभिमतः स्यात्।

(१) बृहास्मृ. ११।३३३, ३३७-३३८.

(२) बौध. १।१०।२०; गृक. २६८; गृर. ४७७ ष्ठितानामर्धमा (ष्ठानात् मा) व्याख्यानात्तु 'धिष्ठितानाम्' इत्येव पाठः प्रतिभाति, वा वप (वाप); स्मृकौ. ९१ नामर्धमासि (नां मासि) वा वप (वाप); मर. १४; शूशि. ३९ नामर्धमासि (नां मासि) (वा॰) आर. १६ अशुद्धो ग्रन्थः; शूक. ६६ शूशिवत्; आप्र. ९०; सस्मृ. १५२-१५३ स्मृकौवत्.

(३) बौध. १।१०।२१; गृक. २६८; गृर. ४७७; स्मृकौ. ९१; मर. १४; शूशि. ३९; आर. १६ मनकल्पः (मनम्) अशुद्धो ग्रन्थः; शूक. ६६ आर्य (अर्य); आप्र. ९०; सस्मृ. १५३.

* शेषं गृकानुवादः।

(१) बौध. १।१३।४; गृक. १४३-१४४ शुचि + (रिति) चेज्यासं (चेज्यादिसं) तेन वाससा (तैर्वासोभिः); गृर. ११३ तं वा (तवा) शुचि + (रिति) 'तवाससा शुचिः' इत्यपि पाठान्तरं निर्दिशति। तेन वाससा (तैर्वासोभिः).

(२) बौध. १।१३।५; गृक. १४४; गृर. ११३.

(१) उपवातानि शुष्काणि। अक्लिष्टानि अच्छिद्राणि।

ρ गृक. १४४

(२) 'अहतेन वाससा कुर्यात्' इत्युक्तम्, तत्रानहतस्य वाससः साक्षात् करणत्वं न स्यात्, तन्निराकरणायाऽऽह – प्रक्षालीति। तत्र संस्कारेणानहतवाससोऽपि करणत्वमित्यभिप्रायः। उपवातानि शोषितानीत्यर्थः। अक्लिष्टानि अच्छिन्नानि अच्छिद्राणि वा। तानि च शुक्लानि भवन्ति, उत्तरत्र 'लोहितवाससः' इति विशेषश्रवणात्। चशब्दादुपद्रष्ट्रादयोऽप्येवंभूतानि वासांसि परिदधीरन्निति गम्यते।

बौवि.

[1]**एवं प्रक्रमादूर्ध्वम्॥**

आऽपवर्गादिति शेषः। प्रक्रमः उपक्रमः उपक्रमादारभ्याऽऽपवर्गादेवंभूतैर्वासोभिर्भवितव्यमित्यभिप्रायः।

बौवि.

[2]**दीर्घसोमेषु सत्रेषु चैवम्॥**

(१) दीर्घसोमः दीर्घकालव्यापी सोमः। सर्वत्रैव सर्वकर्मणि।

*गृर. ११४

(२) दीर्घसोमाः सत्राणि च प्रसिद्धानि। चशब्द एकाहाहीनोपसंग्रहार्थः। एवमित्यतिदेशः। यत्किंचेज्यासंयुक्तम् इत्यस्य विस्तरोऽयम्।

बौवि.

[3]**यथा समाम्नातं च॥**

(१) ऋत्विजो यथासमाम्नातं यथाविहितं वासः परिदधीरन्।

*गृर. ११४

(२) किमेष एवोत्सर्गः? नेत्याह – यथेति। शुक्लाद्वाससोऽन्यदपि यद्यथा समाम्नातं तथा कर्तव्यमिति।

बौवि.

[4]**यथैतदभिचरणीयेष्विष्टिपशुसोमेषु लोहितोष्णीषा लोहितवाससश्चर्त्विजः प्रचरेयुश्चित्रवाससश्चित्रासङ्गा वृषाकपाविति च॥**

(१) तदेव दर्शयति – यथैतदित्यादिना। अभिचरणीयः अभिचारसाधनं श्येनादि। चित्रवाससः विचित्रवस्त्राः। वृषाकपौ प्रक्रम्यमाने।

गृक. १४४

(२) वृषाकपौ। अत्राप्याभिचारिककर्मणि।

+ गृर. ११४

(३) उष्णीषं शिरोवेष्टनम्। वासः परिधानम्। चित्रं नानावर्णम्। आसङ्गः उत्तरीयम्। अभिचरणीया इष्टयः 'आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्' इत्याद्याः। पशवः 'ब्राह्मणस्पत्यं तूपरमालभेत' इत्याद्याः। सोमाः श्येनादयः। वृषाकपिः 'वि हि सोतोरसृक्षत' (ऋसं. १०।८६।१-२३) इति सूक्तम्। इतिशब्दचशब्दौ 'अभिचरन् दशहोतारं जुहुयात्' इत्येवमादीनामुपसंग्रहणार्थौ।

+ बौवि.

चतुर्णां वर्णानां यजनादयो धर्माः

[1]**ब्रह्म वै स्वं महिमानं ब्राह्मणेष्वदधादध्ययनाध्यापनयजनयाजनदानप्रतिग्रहसंयुक्तं वेदानां गुप्त्यै॥**

एष हि षट्कर्मयुक्तो ब्रह्मणः स्वो महिमा। किमर्थमेवं कृतवत् ब्रह्मेत्याह – वेदानां गुप्त्यै। गुप्तिः रक्षणम्।

बौवि.

[2]**क्षत्रे बलमध्ययनयजनदानशस्त्रकोशभूतरक्षणसंयुक्तं क्षत्रस्य वृद्ध्यै॥**

(१) 'ब्रह्मादधात्' इत्यनुवृत्तौ बौधायनः – क्षत्र इति।

गृक. २५३

(२) सर्वेषां वर्णानां रक्षणायेमे क्षत्रधर्मा इत्याह – क्षत्र इति। अदधादित्यनुवर्तते। किं तत्? बलं शक्तिः वेदाध्ययनादिसंयुक्तम्। शस्त्रम् आयुधम्। तथा च वसिष्ठः – 'शस्त्रेण च प्रजापालनं स्वधर्मः' (वाध. २।१७) इति। भूतग्रहणं चतुर्विधस्यापि भूतस्य ग्रहणार्थम्। तथा च गौतमः – 'चतुर्विधस्य मनुष्यजातस्यान्तःसंज्ञानां चलनपतनसर्पणानामायत्तं जीवनम्। प्रसूतिरक्षणम्' (गौध. ८।२-३) इति। क्षत्रस्य वृद्धिः अभ्युदयः।

बौवि.

[3]**विट्स्वध्ययनयजनदानकृषिवाणिज्यपशुपालनसंयुक्तं कर्मणां वृद्ध्यै॥**

---

ρ गृर. गृकवत्।

* गृक. गृरवत्।

(१) **बौध.** १।१३।६; **गृक.** १४४; **गृर.** ११३ (एवं क्रमेणोर्ध्वम्).

(२) **बौध.** १।१३।७; **गृक.** १४४ (दीर्घसोमेषु सर्वत्रैव); **गृर.** ११३ गृकवत्.

(३) **बौध.** १।१३।८; **गृक.** १४४ (ऋत्विजो यथा समाम्नातं स्यात्); **गृर.** ११३ गृकवत्.

(४) **बौध.** १।१३।९; **गृक.** १४४ यथै (तथै) येष्विष्टि (येष्टि) सोमे (मेधे) त्रासङ्गा (त्रसंख्या) (च०); **गृर.** ११३ यथैतद (यथैवम) त्रासङ्गा (त्रसंख्या).

+ शेषं गृकगतम्।

(१) **बौध.** १।१८।२.

(२) **बौध.** १।१८।३; **गृक.** २५३ क्षत्रे ब (क्षत्रव).

(३) **बौध.** १।१८।४; **गृक.** २५३ कर्मणां (कर्मणो).

वैश्येषु वैश्यकर्मादधादित्याह – विडिति। अध्ययनादिसंयुक्तम् अध्ययनादिनिष्पादितमित्यर्थः। कृषिः भूविलेखनम्। वाणिज्यं क्रयविक्रयव्यवहारः। कर्माणि यागादीनि। तेषां साधने सति वृद्धिर्भवति। बौवि.

**[1]शूद्रेषु पूर्वेषां परिचर्या ॥**

*अदधादित्येव। पूर्वेषां ब्राह्मणादीनाम्। परिचर्या शुश्रूषा। आह चाऽऽपस्तम्बः – 'शुश्रूषा शूद्रस्येतरेषां वर्णानाम्' (आध. १।१।७) इति। बौवि.

**पत्तो ह्यसृज्यन्तेति॥**

किमिति शुश्रूषा शूद्राणामित्यत आह – पत्त इति। हिशब्दो हेतौ। यस्मात्प्रजापतेः पादात्सृष्टः तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः। अतो द्विजानां शुश्रूषैव शूद्रस्य धर्मः। बौवि.

ब्राह्मणवैश्ययोः शस्त्रग्रहणे निमित्तानि

**[2]अथाप्युदाहरन्ति –**

**गवार्थे ब्राह्मणार्थे वा वर्णानां वाऽपि संकरे।**
**गृह्णीयातां विप्रविशौ शस्त्रं धर्मव्यपेक्षया ॥**

अथेदानीं विप्रविशोश्च शस्त्रग्रहणे कारणमाह – अथाप्युदाहरन्तीति। अर्थशब्दश्चात्र रक्षणप्रयोजनवचनः। वर्णानां संकरः अनर्हस्त्रीपुंसलक्षणः। शस्त्रग्रहणे हेतुः – धर्मव्यपेक्षयेति। धर्मबुद्ध्येति यावत्। बौवि.

दिवास्वापादिनिषिद्धाचरणनिन्दा

**[3]अथाप्युदाहरन्ति–**

**न दिवास्वप्नशीलेन न च सर्वान्नभोजिना ।**
**कामं शक्यं नभो गन्तुमारूढपतितेन वा ॥**

इदानीं विहिताकरणे प्रतिषिद्धसेवने च दोषं वक्तुमुपक्रमते – अथेति। न शक्यं गन्तुमिति संबन्धः। दिवास्वप्नशीलेनेतिशब्देन विहिताकरणस्वभावो लक्ष्यते। स्वप्नः निद्रा, मनोवृत्तिविशेषः। 'अभावप्रत्ययालम्बना वृत्तिर्निद्रा' (योसू. १।१०) इत्यागमः। हिताहितप्राप्तिजैतपरिहारोपायभूतशुभाशुभकर्मानुष्ठानवर्जनाकुलितचेतसो हि पुंसो नास्ति निद्रावसरः। प्रसन्ने हि चेतसि निद्रा भवति। अलसो वा दिवास्वप्नशीलः। सर्वान्नभोजिशब्देनापि प्रतिषिद्धसेवा कथ्यते। भोज्याभोज्यव्यवस्था यस्य नास्तीत्यभिप्रायः। भुजिरत्र व्यापारमात्रोपलक्षणार्थः। आरूढपतितः तापसः परिव्राजको वा प्रत्यव्यवस्थितः। एतैः नभः स्वर्गं गन्तुं प्राप्तुम् अशक्यमित्यर्थः। बौवि.

दैन्यशाठ्यजैह्म्यनिषेधः

**[1]दैन्यं शाठ्यं जैह्म्यं च वर्जयेत् ॥**

आत्मनः क्षीणत्वप्रदर्शनेन याचिष्णुता दैन्यम्। शक्तौ सत्यामपि परोपकाराकरणं शाठ्यम्। जैह्म्यं कौटिल्यम्। चशब्दादश्लीलादिकमपि। बौवि.

**[2]अथाप्यत्रोशनसश्च वृषपर्वणश्च दुहित्रोः संवादे गाथामुदाहरन्ति ॥**

उशना शुक्रः, तस्य दुहिता देवयानी। वृषपर्वा तु क्षत्रियः, तस्य दुहिता शर्मिष्ठा। तयोः संवादः विसंवादः। गाथा श्लोकः। बौवि.

**[3]स्तुवतो दुहिता त्वं वै याचतः प्रतिगृह्णतः।**
**अथाहं स्तूयमानस्य ददतोऽप्रतिगृह्णतः॥**

प्रतिशास्त्रं प्रभाषते। तत्र पूर्वेणार्धेन देवयान्याः पितुरुशनसो दीनस्वभावत्वं कथयति। उत्तरेण चाऽऽत्मनः पितुर्वृषपर्वणः ततो विपरीतस्वभावत्वम्। बौवि.

गुरुसंकरिप्रभृतयो दुष्टत्वादनाश्यान्नाः

**[4]अथाप्युदाहरन्ति –**

**गुरुसंकरिणश्चैव शिष्यसंकरिणश्च ये।**
**आहारमन्त्रसंकीर्णा दीर्घं तम उपासते॥ इति॥**

एतेऽप्यनाश्यान्नाः, एनस्वित्वात्। के ते? – अथापीति। गुरवो व्याख्याताः। प्रायश्चित्तीयतां प्राप्याकृतप्रायश्चित्तः सद्भिः संसर्गं न व्रजेदिति। आह – 'प्रायश्चित्तीयतां प्राप्य

---

* 'परिचर्या' इत्यत्र अमः सुरादेश आर्ष इत्यभिप्रायेणेदम्। अथवा प्रथमाविभक्त्यनुरोधेन 'आहिता' इति पदमध्याहार्यम्।

(१) बौध. १।१८।५-६.

(२) बौध. २।४।१८; गृक. १८८ प्रथमचरणे (ब्राह्मणार्थे गवार्थे वा) वाऽपि (चापि); गृर. ४२६ वर्णानां वाऽपि (सवर्णानां च) प्रथमचरणः गृकवत्.

(३) बौध. २।४।२४; निक. ३३८.

(१) बौध. २।४।२५; गृक. ३९७ वर्ज (परिवर्ज); गृर. ५७६ शाठ्यं जैह्म्यं (साध्यं तैक्ष्ण्यं); निप्र. २।४७०.

(२) बौध. २।४।२६; गृक. ३९८ सश्च (सोश्च) मुदा (मप्युदा); गृर. ५७६ अथाप्यत्रो (अत्राप्यु) नसश्च (नो) (णश्च०).

(३) बौध. २।४।२७; गृक. ३९८; गृर. ५७६.

(४) बौध. २।५।१; गृक. ४१६ (अथाप्युदाहरन्ति०) मन्त्र (मात्र) (इति०); गृर. ५८८ गृकवत्.

दैवात्पूर्वकृतेन वा। न संसर्गं व्रजेत्सद्भिः प्रायश्चित्तेऽकृते द्विजः॥' (मस्मृ. ११।४७) इति। बौवि.

अप्रक्षालितपादैरप्रवेष्टव्यानि स्थानानि

**[1]अथ हैके ब्रुवते – श्मशानमापो देवगृहं गोष्ठं यत्र च ब्राह्मणा अप्रक्षाल्य पादौ तन्न प्रवेष्टव्यमिति ॥**

अथेदानीं प्रक्षालितपादेनैव प्रवेष्टव्यान् देशानाह – अथेति। *श्मशानादयः प्रथमान्ताः शब्दा निर्देशफलाः। प्रातिपदिकार्थे हि प्रथमां स्मरति पाणिनिः (पासू. २।३।४६)। तेषां कर्मत्वख्यापनार्थं तच्छब्दप्रयोगः। द्वौ नञौ प्रकृतमर्थं सूचयतः। तस्मात्प्रक्षाल्यैव प्रवेष्टव्यं श्मशानादीति वाक्यार्थः। 'अर्हे कृत्यतृचश्च' (पासू. ३।३।१६९) इति स्मरणेन तव्यप्रत्ययादर्हार्थो गम्यते, न तु कर्मत्वम्, प्रक्षाल्यैव प्रवेष्टुमर्हतीत्यर्थः। बौवि.

शूद्रस्य वस्त्रमुपवीतम्

**[2]उपवीतं वस्त्रविन्यासात् ॥**

स्मृतिकौमुद्यां बौधायनः 'शूद्राणाम्' इत्युपक्रम्य 'उपवीतं वस्त्रविन्यासात्' इति। शूक. ६०

---

*यथाश्रुतं व्याख्यानमिदं चिन्त्योपपत्तिकम्। तथाहि – श्मशानादिपदार्थानां प्रवेष्टव्यपदार्थे साक्षादन्वयः, पुनश्च तत्पदपरामर्शव्यवधानेनान्वय इत्यन्वयपौनरुक्त्याद्वाक्यासाधुत्वं मनस्याशङ्क्य व्याख्यात्रा वाक्यसाधुत्वमनेन ग्रन्थेनोपपाद्यत इति प्रतीयते। तत्र 'श्मशानादयः प्रथमान्ताः शब्दाः प्रातिपदिकार्थमात्रपराः, तच्छब्दस्तेषां कर्मत्वख्यापकः' इत्युपपादनं नोपपद्यते, तच्छब्दस्यापि प्रथमान्तत्वेन प्रातिपदिकार्थमात्रपरस्य कर्मत्वानभिधायकत्वात्। 'ये श्मशानादयः सन्ति, तन्न प्रवेष्टव्यम्' इति वाक्यभेदात् तच्छब्दोपस्थापितानामेव तव्यप्रत्ययान्तपदार्थेऽन्वयात् तव्यप्रत्ययाभिहितकर्मत्वाश्रबोधकत्वमेव तच्छब्दस्य कर्मत्वख्यापकत्वमभिप्रेयते चेत्, वाक्यभेद एव व्याख्यातुमुचितः, श्मशानादिपदानां प्रथमान्तत्वोक्तिः प्रथमायाः प्रातिपदिकार्थपरत्वोक्तिश्च व्यर्था। किंच, 'तव्यप्रत्ययादर्हार्थो गम्यते, न तु कर्तव्यम्' इत्युक्तिरपि नोपपद्यते। अत्र तव्येनार्हार्थस्य गम्यत्वं द्योत्यत्वरूपं गम्यत्वमभिप्रेयते, तदा कृत्प्रत्यस्य भावकारकान्यतरवाचकत्वनियमात् सकर्मकेऽस्मिन् प्रयोगे कर्मविशेषणत्वेनैवार्हत्वस्य तव्यवाच्यत्वमास्थेयम्। तथा च 'न कर्मत्वम्' इत्युक्तिर्विरुध्यते। नाप्यर्हः कर्ता तव्यवाच्यः, कर्मपदतव्यपदयोः सामानाधिकरण्यानुपपत्तेः। तस्मात् वाक्यभेदेनैव, तच्छब्दस्य प्रसिद्धार्थकत्वमादाय वा तच्छब्दप्रयोग उपपादनीय इति प्रतिपद्यामहे।

(१) **बौध**. २।८।२; **आद**. २६ (आपो देवगृहं गोष्ठं यत्र सन्ति च ब्राह्मणाः। अप्रक्षाल्य पादौ नान्तः प्रवेष्टव्यम्॥) एतावदेव; आध१६८ (आपो देवगृहं गोष्ठं ब्राह्मणाः सन्ति यत्र च। अप्रक्षाल्य पादौ तत्र नान्तः प्रवेष्टव्यं बुधैः॥) एतावदेव; **संग**. ७७३ (आपो देवगृहं गोष्ठं द्विजालयं निर्णिक्तपादः प्रविशेत्) एतावदेव.

(२) **शूक**. ६०.

अभिचारविधिः

**[1]षट्स्वनभिचरन् पतति ॥**

नित्यानां यथाकथंचिदप्यवश्यकर्तव्यता

**[2]यथा कथंचिन्नित्यानि शक्त्यवस्थानुरूपतः। येन केनापि कार्याणि नैव नित्यानि लोपयेत्॥**

यथाकथंचित् किंचिदङ्गहीनेनापीत्यर्थः। येन केनापि स्वतः परतो वेत्यर्थः। नित्यानीति नैमित्तिकप्रारब्धकाम्योपलक्षणम्, नैत्यि(? नैमित्ति)कस्याप्यकरणे प्रत्यवायात्, 'समाप्तेः शास्त्रार्थत्वेन प्रारब्धं काम्यं नित्यायते' इति न्यायाच्च। यत्तु 'काम्ये प्रतिनिधिर्नास्ति नित्ये नैमित्तिके च सः' इति, तदनारब्धकाम्यपरम्। अन्येनाप्यसंभवे न दोषः, 'अत्यन्तरोगयुक्तेऽङ्गे राजचौरभयादिषु। गुर्वग्निदेवकृत्येषु नित्यहानौ न पापभाक्॥' इति माधवीये शैवागमात्।

+आर.१

अर्हाभावेऽनर्हायापि ग्रहणनिमित्तकदानस्य कर्तव्यता

**[3]श्रोत्रियोऽश्रोत्रियो वाऽपि पात्रं वाऽपात्रमेव वा। विप्रब्रुवोऽपि वा विप्रो ग्रहणे दानमर्हति॥**

(१) (पात्रे) अनुकल्पमाह बौधायनः – श्रोत्रिय इति। सम. ७९

(२) दानं चापात्रायापि, 'अश्रोत्रियः श्रोत्रियो वा..... ग्रहणे दानमर्हति॥' इति बौधायनोक्तेः। श्रोत्रियः संस्कारवेदाध्ययनोभययुक्तः। अश्रोत्रियः तदन्यतरहीनः। पात्रं 'न विद्यया केवलया तपसा वाऽपि पात्रता। यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्तितम्॥' इति याज्ञवल्क्योक्तं विद्यातपोयुक्तम्। विप्रब्रुवः सुसंस्कृतोऽप्यध्ययनादिरहितः, 'नाध्यापयति नाधीते स भवेद्ब्राह्मणब्रुवः॥' इति चतुर्विंशतिमतात्। कृभ. २८८-२९८

## आपस्तम्बः हिरण्यकेशिधर्मसूत्रं च

त्रैवर्णिकानामप्यदुष्टकर्मणामुपनयनादावधिकारः

**[4]अशूद्राणामदुष्टकर्मणामुपायनं वेदाध्ययनमग्न्याधेयं फलवन्ति च कर्माणि॥**

---

+ इन्दु. आरगतम्। संदी. आरवत्।

(१) **अप**. १।१५६ पृ. २३२.

(२) **पमा**. १।१०८; **आर**. १; **पप्र**. ४७-४८ शक्त्यवस्थानु (शक्यवस्त्वनु); **आभू**. ३६०; **इन्दु**. १० पप्रवत्; **संदी**. १।१.

(३) **सम**. ७९; **कृभ**. २८८ प्रथमचरणे (अश्रोत्रियः श्रोत्रियो वा) वोऽपि वा (वो वाऽपि).

(४) **आध**. १।१।६; **हिध**. २६।१।६ मुपायनं (मुपनयो); **स्मृच**. १।३५, १।१४३; **स्मृकौ**. ५८ (अशूद्राणामदुष्टकर्मणामुपनयनम्) एतावदेव; अशूद्र (शूद्र) एवमपि पाठः; **शूशि**. ७० स्मृकौवत्; **मुक्त**. ६८; **संग**. ६३६, ६४२ (अशूद्राणामदुष्टकर्मणामुपनयनम्); **संदी**. २।३ निर्देशमात्रम्.

(१) शूद्रवर्जितानां त्रयाणां वर्णानामदुष्टकर्मणामुपायनादयो धर्माः। उपायनम् उपनयनम्। नात्र त्रैवर्णिकानामुपनयनादि विधीयते, प्राप्तत्वात्; नापि शूद्राणां प्रतिषिध्यते, प्राप्त्यभावात्। तथाहि – उपनयनं तावद्गृह्ये 'गर्भाष्टमेषु ब्राह्मणमुपनयीत' (आपगृ. १०।२) इत्यादिना त्रैवर्णिकानामेव विहितम्। इहापि तथैव विधास्यते। अध्ययनमपि 'उपेतस्याऽऽचार्यकुले ब्रह्मचारिवासः' (आध. १।२।११) इत्यारभ्य विधानात् अनुपनीतस्य शूद्रस्याप्राप्तमेव। किंच, 'श्मशानवच्छूद्रपतितौ' (आध. १।९।९) इति अध्ययननिषेधो वक्ष्यते। यस्य समीपे नाध्येयं स कथं स्वयमध्येतुमर्हति? अग्न्याधेयमपि 'वसन्ता ब्राह्मणः' (तैब्रा. १।१।२।६) इत्यादि त्रैवर्णिकानामेव विहितम्। फलवन्ति चाग्निहोत्रादीनि कर्माणि 'स त्रयाणां वर्णानाम्' (आपप. १।२) इत्युक्तत्वात् त्रैवर्णिकानामेव नियतानि, विद्याग्न्यभावाच्च शूद्राणामप्रसक्तानि। उक्तो विद्याग्न्यभावः। तस्मात् दुष्टकर्मप्रतिषेधार्थं सूत्रम्। यथा शास्त्रान्तरे– 'द्विजातिकर्मभ्यो हानिः पतनम्' (गौध. २१।४) इति। अप्रतिषेधे तु दुष्टकर्मणामप्यधिकारो भवत्येव, 'फलवन्ति च कर्माणि' इत्यभिधानात्, क्रियते इति कर्मेति निर्वचनात्। 'प्रागुपनयनात् कामचारवादभक्षः' (गौध. २।१) इति गौतमस्मरणं ब्रह्महत्यादिमहापातकव्यतिरिक्तविषयमित्यनुपेतस्यापि दुष्टकर्मत्वसंभवात् अदुष्टकर्मणामित्युक्तम्। शूद्रप्रतिषेधस्तु प्राप्तानुवादः। उ.

(२) केचनाऽऽपस्तम्बवाक्यमन्यथा पठन्ति – 'शूद्राणामदुष्टकर्मणामुपनयनम्' इति। अयं च भ्रान्तः पाठः संप्रदायरहितानाम्। यदि कथमप्य(प)पाठे महानाग्रहस्तदाऽत्र शूद्रो रथकारः, तस्य श्रुत्या यागविधानात् 'रथकारं याजयेत्' इति। स्मृकौ. ५८

द्विजशुश्रूषा शूद्रधर्मः तत्र

फलतारतम्यं च

**[1]शुश्रूषा शूद्रस्येतरेषां वर्णानाम्॥**

यथा ब्राह्मणादीनामुपनयनादयो धर्माः प्रधानभूतास्तादृशं शूद्रस्य कर्माऽऽह – शुश्रूषेति। इतरेषां ब्राह्मणादीनां वर्णानां या शुश्रूषा सा शूद्रस्य परमो धर्मः। उ.

(१) **आध.** १।१।७; **हिध.** २६।१।७; **गृक.** २६६ रेषां + (च); **मर.** १२ गृकवत्; **मुक्ता.** ६८; **शूक.** ६६; **आन.** ४०३ (शुश्रूषा शूद्रस्य) एतावदेव; **सस्मृ.** १०३.

**[2]पूर्वस्मिन्पूर्वस्मिन्वर्णे निःश्रेयसं भूयः॥**

(१) तत्र विशेषमाह – पूर्वस्मिन्निति। सर्वप्रकारं कृताया अपि वैश्यशुश्रूषायाः मात्रयाऽपि कृता क्षत्रियशुश्रूषा बहुतरं फलं साधयति। एवं क्षत्रियशुश्रूषाया ब्राह्मणशुश्रूषा। उ.

(२) निःश्रेयसं निःश्रेयससाधनमतिशयेन जनयति। एषा नित्यकर्मत्वेनोक्ता प्रधानभूता। ♣ उज्ज्व.

पूज्यपूजाविधिः

**[3]पूजा वर्णज्यायसां कार्या॥**

(१) पूजा नमस्कारादिका। गृक. २७२

(२) पूजाप्रसङ्गादाह – पूजेति। वर्णतो ये ज्यायांसः प्रशस्ततराः भवन्ति तेषामवरेण वर्णेन कार्या पूजा अध्वन्यनुगमनादिका उत्सवादिषु च गन्धलेपादिका। उ.

**[4]वृद्धतराणां च॥**

(१) वृद्धतराणां सजातीयानामपीत्यर्थः। गृक. २७२

(२) सजातीयानामपि पूजा कार्या। तरपो निर्देशात् विद्यावयःकर्मभिर्वृद्धानां ग्रहणम्। हीनानामपीत्येके। तथा च मनुः – 'शूद्रोऽपि दशमीं गतः' (मस्मृ. २।१३७) इति। उ.

धर्मातिक्रमहेतुर्हर्षो वर्ज्यः

**[5]हृष्टो दर्पति दृप्तो धर्ममतिक्रामति धर्मातिक्रमे खलु पुनर्नरकः॥**

पूजा कार्या इत्युक्तम्, तद्विरोधी हर्षो वर्ज्य इत्याह – हृष्ट इति। अभिमतलाभादिनिमित्तश्चित्तविकारो हर्षः। तद्युक्तो हृष्टः। स दर्पति दृप्यति। दर्पः गर्वः अभिमानः। दृप्तो धर्ममतिक्रामति, पूज्यपूजनादिकं प्रति स्तब्धत्वात्। खलुपुनःशब्दौ वाक्यालङ्कारे। धर्मातिक्रमे खलु पुनर्नरको भवति निरयं प्रतिपद्यते। तस्माद्धर्मातिक्रममूलभूतो हर्षो न

♣शेषम् उवत्।

(१) **आध.** १।१।८; **हिध.** २६।१।८; **सभा.** १०।५६; **गृक.** २६६ पूर्वस्मिन्पूर्वस्मिन् (पूर्वस्मिन्); **गौमि.** १०।५९; **मर.** १२; **मुक्ता.** ६८; **शूक.** ६६ (वर्णे०); **सस्मृ.** १३४.

(२) **आध.** १।१३।२; **हिध.** २६।४।१६; **गृक.** २७२; उ. १।१४।९.

(३) **आध.** १।१३।३; **हिध.** २६।४।१७; **गृक.** २७२; उ. १।१४।९.

(४) **आध.** १।१३।४; **हिध.** २६।४।१८; **गृक.** २७२ धर्म (स्वधर्म).

कर्तव्यः। यद्यपि भूतदाहीयेषु दोषेषु वर्जनीयेषु हर्षोऽपि वक्ष्यते (आध. १।२३।५), तथापीह विशेषेण हर्षस्य वर्जनार्थोऽयमारम्भः, योगाङ्गत्वाद्वक्ष्यमाणस्य। उ.

मद्यपाननिषेधो ब्राह्मणस्य

[1]**सर्वं मद्यमपेयम्॥**

मद्यं मदकरं तत्सर्वमपेयम्। अत्र स्मृत्यन्तरवशाद्व्यवस्था। तत्र मनुः — 'गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा। यथैवैका न पातव्या तथा सर्वा द्विजोत्तमैः॥' (मस्मृ. ११।९४) इति। सुराव्यतिरिक्तं तु मद्यं ब्राह्मणस्य नित्यमपेयम्। तथा च गौतमः — 'मद्यं नित्यं ब्राह्मणस्य' (गौध. २।२६) क्षत्रियवैश्ययोस्तु ब्रह्मचारिणोः इति।

* उ.

कुहकादिविषये वर्तनविशेषविधिः

[2]**अनसूयुर्दुष्प्रलम्भः स्यात्कुहकशठनास्तिकबालवादेषु॥**

कुहकः प्रकाशे शुचिरेकान्ते यथेष्टचारी। शठः वक्रचित्तः। नास्तिकः प्रेत्यभावापवादी। बालः श्रुतरहितः। एतेषां वादेषु अनसूयुः स्यात्। असूयया द्वेषो लक्ष्यते। द्वेष्टा न स्यात्। तान् विषयीकृत्य द्वेषमपि न कुर्यात्। तथा दुष्प्रलम्भश्च स्यात्। प्रलम्भनं विसंवादनं मिथ्याफलाख्यानम्, 'गृधिवञ्च्योः प्रलम्भने' (पासू. १।३।६९) इति दर्शनात्। दुष्प्रलम्भः विसंवादयितुं मिथ्याफलाख्यानेन प्रवर्तयितुमशक्यः। कुहकादिवादेषु वञ्चितो न स्यात्, तद्वशो न स्यादित्यर्थः।

उ.

पतितैरपपात्रैश्च सह व्यवहारस्य निषेधः

[3]**न पतितैः संव्यवहारो विद्यते॥**

पतिताः स्तेनादयो वक्ष्यमाणाः, तैः सह न कश्चिदपि व्यवहारः कर्तव्यः। तत्र मनुः — 'संवत्सरेण पतति पतितेन सहाऽऽचरन्। याजनाध्यापनाद्यौनान्न तु यानासनाशनात्॥' (मस्मृ. ११।१८०) इति। यानादिभिः संवत्सरेण पतति; याजनादिभिस्तु सद्य एव। उ.

* आभू. उक्त्।

(१) आध. १।१७।२१; हिध. २६।५।५३; निक. २९६ (सर्वं मद्यम्०); गृर. ३६८; गप. ३९५ निकवत्; मुक्ता. ४३७; आप्र. ५२५ निकवत्; आभू. २९३ धर्मसूत्रे.

(२) आध. १।२०।५; हिध. २६।६।१९.

(३) आध. १।२१।५; हिध. २६।६।३५; उ. १।२८।६.

[1]**तथाऽपपात्रैः॥**

अपपात्राः चण्डालादयः, तैश्च संव्यवहारो न कर्तव्यः।

उ.

परं प्रति परपातित्यकथने दोषः

[2]**दोषं बुद्ध्वा न पूर्वः परेभ्यः पतितस्य समाख्याने स्याद्वर्जयेत्त्वेनं धर्मेषु॥**

पतितस्य दोषं परैरविदितं बुद्ध्वा परस्य समाख्याने पूर्वो न स्यात्। परैरविदितं स्वयं विद्वानपि न परेभ्यः पूर्वमाचक्षीत, किंतु स्वयं धर्मकृत्येष्वेनं वर्जयेत्, यथा परे न जानन्ति। अन्यथा दोषवान् स्यात्। उ.

क्रोधादयश्चतुर्दश दुःखहेतवो दोषाः तन्नाशका अक्रोधादयः षोडश गुणाः तेषां फलं च

[3]**अथ भूतदाहीयान्दोषानुदाहरिष्यामः॥**

भूतानां दाहो भूतदाहः, तस्मै हिताः भूतदाहीयाः। 'तस्मै हितम्' (पासू. ५।१।५) इति छः। उ.

[4]**क्रोधो हर्षो रोषो लोभो मोहो दम्भो द्रोहो मृषोद्यमत्याशपरीवादावसूया काममन्यू अनात्म्यमयोगस्तेषां योगमूलो निर्घातः॥**

(१) तत्र क्रोधः ताडनाक्रोशनादिहेतुः अन्तःकरणविक्षोभः गात्रस्वेदकम्पनादिलिङ्गः। हर्षः तद्विपरीतः अभीष्टलाभजनितः बाष्परोमाञ्चनादिलिङ्गः। रोषः अनिष्टविषयो मानसः विक्रियाविशेषः। लोभः परद्रव्येप्सा, स्वद्रव्याविनियोगस्तीर्थे। मोहः कार्याकार्याविवेकिता। दम्भः आत्मनो धार्मिकत्वप्रकाशनम्। द्रोहः परानिष्टचिकीर्षा। मृषोद्यम् अनृतवचनम्। अत्याशपरीवादौ। अत्याशः अतिमात्रमशनम्। परीवादः असमक्षं परदोषाभिधानम्। असूया परगुणेष्वक्षमा। काममन्यू। कामः स्त्रीव्यतिकराभिलाषः। मन्युः तद्विघातकृत्सु द्वेषः। अनात्म्यम् अनात्मवत्ता। एष क्रोधादिः अयोगः असमाधानलक्षणो ह्येष चेतसो विक्षेपप्रकारः। तेषां योगमूलो निर्घातः।

शंविवरण.

(१) आध. १।२१।६; हिध. २६।६।३६.

(२) आध. १।२१।२०; हिध. २६।६।५०.

(३) आध. १।२३।४; हिध. २६।६।१२.

(४) आध. १।२३।५; हिध. २६।६।१३ मोहो दम्भो द्रोहो (द्रोहो दम्भो).

(२) रोषः क्रोधस्यैव कियानपि भेदः, मित्रादिषु प्रतिकूलेषु मनसो वैलोम्यमात्रकार्यकरः। लोभः द्रव्यसङ्गः, यो धर्मव्ययमपि रुणद्धि। मोहः कार्याकार्ययोरविवेकः। स च प्रायेण क्रोधादिजन्योऽपि पृथगुपदिश्यते कदाचित्तदभावेऽपि संभवतीति। दम्भः धार्मिकत्वप्रकाशनेन लोकवञ्चनम्। कामः स्त्रीसंसर्गः। मन्युः गूढो द्वेषः। अनात्म्यम् अजितेन्द्रियत्वं जिह्वाचापलादि। अयोगः विक्षिप्तचित्तता। एते भूतदाहीया दोषाः। तेषां योगमूलो निर्घातः। +उ.

**[1]अक्रोधोऽहर्षोऽरोषोऽलोभोऽमोहोऽदम्भोऽद्रोहः सत्यवचनमनत्याशोऽपैशुनमनसूया संविभागस्त्याग आर्जवं मार्दवं शमो दमः सर्वभूतैरविरोधो योग आर्यमानृशंसं तुष्टिरिति सर्वाश्रमाणां समयपदानि। तान्यनुतिष्ठन् विधिना सार्वगामी भवति॥**

(१) के पुनस्ते योगा इति, उच्यते — अक्रोध इति। अक्रोधोऽहर्षः इत्येवमाद्या अयोगविपरीताः। अतस्ते समाधिलक्षणत्वात् योगाः। संविभागः आत्मनो यात्रासाधनस्याऽर्थिभ्यः संविभजनम्। त्यागः दृष्टादृष्टेष्टभोगानां शक्तितः परित्यजनम्, तत्साधनानां च। आर्जवम् ऋजुता अदुष्टाकलनपूर्विका वाङ्मनःकायानां प्रवृत्तिः। मार्दवं मृदुत्वम्। शमः अन्तःकरणोपशमः। दमः बाह्यकरणोपशमः। इदमन्यत् योगलक्षणं संक्षेपत उच्यते — सर्वभूताविरोधः योगः, विरोधे हि भूतानां पीडा, तदभावेऽपीडा। स एव सर्वभूतापीडालक्षणो योगः। आर्यम् आर्याणां भावः अक्षुद्रता। आनृशंसम् आनृशंस्यम् अक्रौर्यम्। तुष्टिः लब्धव्यस्यालाभेऽपि चेतसः प्रसन्नतयाऽवस्थानं लाभ इव। सर्वभूताविरोधलक्षणाहिंसा परिव्राजकस्यैव संभवति इत्यार्यादीनां त्रयाणामन्येषां चाविरुद्धानां सर्वाश्रमान् प्रति प्राप्तिरिति इतिशब्दसामर्थ्यात्। इतिशब्दस्य च प्रकारवचनत्वादार्यादीनीत्थंप्रकाराणि सर्वाश्रमान् प्रति गमयति। सर्वाश्रमाणां समयपदानीति। समयस्थानानीत्येतत्। अवश्यानुष्ठेयानीत्यर्थः। तान्येतानि यथोक्तान्यनुतिष्ठन् विधिना सार्वगामी सर्वगमनशीलः, ज्ञानाभिव्यक्तिक्रमेण, भवति मुच्यते इत्यर्थः।

शंविवरण.

(२) के पुनस्ते योगाः? तानाह — अक्रोध इति। एते चाक्रोधादयोऽपि भावरूपाः, न क्रोधाद्यभावमात्रम्, क्रोधादिनिर्घातहेतुतयोपदेशात्। के पुनस्ते? अक्रोधः क्रोधादिषु प्रसक्तेष्वपि मा कार्षमिति संकल्पः। अहर्षः, इष्टलाभालाभेषु चेतस ऐकरूप्यम्। अरोषः मित्रादिषु प्रतिकूलेष्वपि मनोविकाराभावः। अलोभः संतोषः अलंबुद्धिः। अमोहः अवधानम्। अदम्भः धर्मानुष्ठानम्। अद्रोहः परेष्वपकारिष्वप्यनपकारः। अनसूया परगुणेष्वभिमोदनम्। सत्यवचनं यथादृष्टार्थवादित्वम्। संविभागः आत्मानमुपरुध्याऽप्यग्रादिदानम्। त्यागः अपरिग्रहः। आर्जवं मनोवाक्कायानामेकरूपत्वम्। मार्दवं सूपगम्यता। शमः मन्युपरित्यागः। दमः इन्द्रियजयः। एताभ्यामेव गतत्वात् पूर्वत्र स्वस्मिन् क्रमे अकामः, अमन्युः, आत्मवत्त्वमिति नोपदिष्टम्। सर्वभूतैरविरोधः। सर्वग्रहणं क्षुद्रैरविरोधार्थम्। योगः ऐकाग्र्यम्। आर्याणां भावः आर्यम् शिष्टाचारानुपालनम्। आनृशंसम् आनृशंस्यं व्यवहारवचनादौ प्रसक्तनैष्ठुर्यस्य वर्जनम्। तुष्टिः निर्वेदः। समयः व्यवस्था। सा च प्रकरणाद्धर्मज्ञानाम्। पदं विषयः। एते अक्रोधादयः सर्वेषामाश्रमाणां सेव्याः, न केवलं योगिनामेवेति धर्मज्ञानां समय इत्यर्थः। एते हि भाव्यमानाः क्रोधादीन् समूलघातं घ्नन्ति। अतश्च तान्यनुतिष्ठन् विधिना सार्वगामी भवति। तानि अक्रोधादीनि तुष्ट्यन्तानि विधिना यथाशास्त्रम् अनुतिष्ठन् सार्वगामी, सर्वस्मै हितः सार्वः आत्मा, तं गच्छति प्राप्नोति। विधिनेति वचनात् 'प्राणिनां तु वधो यत्र तत्र साक्ष्यनृतं वदेत्।' इत्यादिके विषये अनृतवचनादावपि न दोषः इति। उ.

परद्रव्ये स्वत्वाभिमानोऽपि स्तेयमिति मतम्

**[1]यथाकथाच परपरिग्रहमभिमन्यते स्तेनो ह भवतीति कौत्सहारीतौ तथा काण्वपुष्करसादी॥**

(१) यथाकथंचित् इत्यर्थे यथाकथेति छान्दसः प्रयोगः। एवं विधिं परपरिगृहीतमदीयमानं परेण परिग्रहः परस्वम् अभिमन्यते स्वीकरोति। गृक. ३२०

(२) यथाकथाच आपद्यनापदि वा भूयांसमल्पं वा परपरिग्रहं परस्वम् अभिमन्यते ममेदमस्त्विति बुद्धौ कुरुते, सर्वथा स्तेन एव भवतीति कौत्सादयो मन्यन्ते। उ.

---

+ शेषं शंविवरणगतम्।

(१) आध. १।२३।६; हिध. २६।६।१४ दम्भोऽद्रोहः (द्रोहोऽदम्भः).

(१) आध. १।२८।१; हिध. २६।७।३७; गृक. ३२० पुष्कर (पौष्कर); निप्र. २।४२२ (ह०).

स्तेयापवादः

[1]**सन्त्यपवादाः परपरिग्रहेष्विति वार्ष्यायणिः॥**

वार्ष्यायणिस्तु मन्यते केषुचित्परपरिग्रहेषु स्तेयस्यापवादाः सन्तीति। उ.

[2]**शम्योषा युग्यघासो न स्वामिनः प्रतिषेधयन्ति॥**

(१) शम्योषा(?शमी) मुद्गचणकादीनां बीजकोषः। उ(?ओ)षाः अभ्य(?भ्यु)षाख्या यवादिकणिशाः। युग्यानां वाहनानां घासः यवसः। एवं विधिं यस्तु (?एवंविधं वस्तु) परिगृहीतमादीयमानं परेण तत्स्वामिनां (? न स्वामिनः) प्रतिषेधयन्ति *निवारयन्ति। ρगृक. ३२०

(२) तानेवोदाहरति – शम्योषा इति। शमी बीजकोशी, तस्यामुष्यन्ते दह्यन्ते कालवशेन पच्यन्ते इति शम्योषाः कोशीधान्यानि मुद्गमाषचणकादीनि। युगं वहतीति युग्यः शकटवाही बलीवर्दः, तस्य घासः भक्षः तृणादिः युग्यघासः। एते आदीयमानाः स्वामिनो न प्रतिषेधयन्ति स्वामिभिः प्रतिषेधं न कारयन्ति। एतेष्वादीयमानेषु स्वामिनो न प्रतिषेद्धुमर्हन्तीत्यर्थः। स्वयंग्रहणेऽपि न स्तेयदोष इति यावत्। अत्र स्मृत्यन्तरे विशेषः - 'चणकव्रीहिगोधूमयवानां मुद्गमाषयोः। अनिषिद्धैर्ग्रहीतव्यो मुष्टिरेकोऽध्वनि स्थितैः॥'। मनुस्तु – 'द्विजोऽध्वगः क्षीणवृत्तिर्द्वाविक्षू द्वे च मूलके। आददानः परक्षेत्रान्न दण्डं दातुमर्हति॥' (मस्मृ. ८।३४१)। ♣ उ.

[3]**अतिव्यवहारो व्यृद्धो भवति॥**

(१) अतिव्यवहारः अतिमात्रग्रहणम्। विरुद्धः निषिद्धः। ρ गृक. ३२०

(२) शम्योषादिष्वपि अतिव्यवहारो व्यृद्धः दुष्टः भवति। अतिमात्रापहारे स्तेयदोषो भवतीत्यर्थः। उ.

सर्वं परद्रव्यग्रहणं स्वाम्यनुमतिपूर्वकमेवेति मतम्

[1]**सर्वत्रानुमतिपूर्वमिति हारीतः॥**

सर्वेषु द्रव्येषु सर्वास्ववस्थासु स्वाम्यनुमतिपूर्वमेव ग्रहणमिति हारीत आचार्यो मन्यते। उ.

पतिताचार्यज्ञातिमातृविषयकशिष्यादिव्यवहारविधिः

[2]**न पतितमाचार्यं ज्ञातिं वा दर्शनार्थो गच्छेत्॥**

'न पतितैः संव्यवहारो विद्यते' (आध. १।२१।५) इत्युक्तेऽपि पुनरुच्यते – आचार्यादिषु विशेषं वक्ष्यामीति। उ.

**न चास्माद्भोगानुपयुञ्जीत॥**

अस्मात् पतितादाचार्यात् ज्ञातेर्वा पित्रादेः भोगान् भोगसाधनानि दायप्राप्तान्यपि नोपयुञ्जीत न गृह्णीयात्। उ.

**यदृच्छासंनिपात उपसंगृह्य तूष्णीं व्यतिव्रजेत्॥**

यदि पतितैराचार्यादिभिर्यदृच्छया संनिपातः संगतिः स्यात्, तदाऽविधिनोपसंगृह्य तूष्णीं तैः सह किंचिदप्यसंभाष्य व्यतिव्रजेत् गच्छेत्, न क्षणमपि सह तिष्ठेत्। उ.

**माता पुत्रत्वस्य भूयांसि कर्माण्यारभते, तस्यां शुश्रूषा नित्या पतितायामपि॥**

पुत्रत्वस्य, स्वार्थिकस्त्वः। यथा 'देहत्वमेवान्यत्' (आध. २।२४।२) इति। पुत्रस्य कृते माता भूयांसि दृष्टार्थानि गर्भधारणाशुचिनिर्हरणस्तन्यदानप्रदक्षिणनमस्कारोपवासादीनि कर्माणि करोति, तस्मात्तस्यां पतितायामपि शुश्रूषा अभ्यङ्गस्नापनादिका नित्या नित्यमेव कर्तव्या। उ.

[3]**न तु धर्मसंनिवापः स्यात्॥**

एकस्मिन्धर्मे सहान्वयो धर्मसंनिवापः। स पतितमात्रा सह न कर्तव्यः। नामसुब्रह्मण्यायां मातुर्नामग्रहणम्, वरुणप्रघासेषु 'यावन्तो यजमानस्यामात्याः सस्त्रीकास्तावन्त्येकातिरिक्तानि' (आपश्रौ. ८।५।१) इत्येवमादिकमुदाहरणम्। किं पुनरेवमादिषु मातुरन्वयः शुश्रूषा? ओमित्याह। अन्विता हि सा संमता मन्यते, निरस्ता तु विमता। वैश्वदेवार्थे च पाके सा न भोजयितव्या। मृतायास्तु तस्याः संस्कारादिकाः क्रियाः कर्तव्याः, नेति विप्रतिपन्नाः। उ.

---

* 'आ धृषाद्वा' (गणसूत्रम्) इत्यनेन स्वार्थणिचो वैकल्पिकत्वादण्यन्तात् स्वार्थणिजन्ताद्वा वृञो प्रेषणार्थेऽत्र णिच्।

ρ निप्र. गृकगतम्।

♣ मुक्त. उगतम्।

(१) आध. १।२८।२; हिध. २६।७।३८; गृक. ३२०; निप्र. २।४२२ वार्ष्या (वार्षा).

(२) आध. १।२८।३; हिध. २६।७।३९; गृक. ३२०; निप्र. २।४२२ अशुद्धो ग्रन्थः; मुक्त. ५८.

(३) आध. १।२८।४; हिध. २६।७।४०; गृक. ३२० व्यृद्धो (विरुद्धो) इव उत्तरम् 'शिवोषायुग्यघासोऽस्वामिनः प्रतिषेधे' इति अशुद्धो ग्रन्थः; निप्र. २।४२२ अतिव्य (अव्य) व्यृद्धो (विरुद्धो); मुक्त. ५८.

(१) आध. १।२८।५; हिध. २६।७।४१; गृक. ३२०; निप्र. २।४२२ (इति हारीतः०); मुक्त. ५८.

(२) आध. १।२८।६-९; हिध. २६।७।४२-४५.

(३) आध. १।२८।१०; हिध. २६।७।४६ वापः (पातः).

आत्मरक्षावर्जं ब्राह्मणस्याऽऽयुधग्रहणनिषेधः

**[1]परीक्षार्थोऽपि ब्राह्मण आयुधं नाऽऽददीत॥**

(१) गुणदोषपरीक्षा संप्रयोजनं यस्य एवंभूतोऽपि भूत्वा ब्राह्मण आयुधं न गृह्णीयात्। समु. ९८

(२) असति यथाभिहिते निमित्ते आकर्ष(?आक्रम)णस्य प्रतिषेधः, न ग्रहणस्य। मेधा. ८।३४८-३४९

(३) गुणदोषज्ञानं परीक्षा, तया अर्थः प्रयोजनं यस्य सः। एवंभूतोऽपि ब्राह्मण आयुधं न गृह्णीयात्, किं पुनर्हिंसार्थम्? इत्यपिशब्दार्थः। उ.

**[2]यो हिंसार्थमभिक्रान्तं हन्ति मन्युरेव मन्युं स्पृशति न तस्मिन् दोष इति पुराणे॥**

अस्य प्रतिप्रसवः यो हिंसार्थमिति। यस्तु हिंसार्थं मारणार्थम् अभिक्रान्तम् अभिपतितं हन्ति, न तस्मिन् दोषो विद्यत इति पुराणे श्रुतम्। दोषाभावे हेतुः — यस्मान्मन्युरेव मन्युं स्पृशति, न पुरुषः पुरुषम्। उ.

द्विजानामध्ययनादयो धर्माः

***[3]स्वकर्म ब्राह्मणस्याध्ययनमध्यापनं यज्ञो याजनं दानं प्रतिग्रहणं दायाद्यं सिलोञ्छः॥**

**एतान्येव क्षत्रियस्याध्यापनयाजनप्रतिग्रहणानीति परिहाप्य दण्डयुद्धाधिकानि॥**

**क्षत्रियवद्वैश्यस्य दण्डयुद्धवर्जं कृषिगोरक्ष्यवाणिज्याधिकम् ॥**

अप्रोक्षितब्राह्मणहस्तसमूढस्थलाधिष्ठाननिषेधः

**[4]पाणिसमूढं ब्राह्मणस्य नाप्रोक्षितमभितिष्ठेत्॥**

(१) ब्राह्मणेन पाणिनोपलिप्तमप्रोक्षितं नाधितिष्ठेदित्यर्थः। अप. ११।३९

(२) ब्राह्मणस्य पाणिना समूढम् उपलिप्तं संमृष्टं वा भूप्रदेशम् अप्रोक्षितं नाभितिष्ठेत् नाधितिष्ठेत्, प्रोक्ष्यैवाधितिष्ठेदिति। उ.

अग्निब्राह्मणौ ब्राह्मणांश्चान्तरेण गमननिषेधः तदपवादश्च

**[1]अग्निं ब्राह्मणं चान्तरेण नातिक्रमेत्॥**

अग्नेर्ब्राह्मणस्य च मध्ये न गच्छेत्। उ.

**[2]ब्राह्मणांश्च॥**

अन्तरेण नातिक्रामेदित्येव। ब्राह्मणानां च मध्ये न गच्छेत्। उ.

**[3]अनुज्ञाप्य वाऽतिक्रामेत्॥**

अग्निजलयोर्युगपद्धारणनिषेधः

**[4]अग्निमपश्च न युगपद्धारयीत॥**

अग्निमुदकं च न युगपद्धारयेत्। उ.

नानाग्निसंनिपातनिषेधः तदपवादश्च

**[5]नानाग्नीनां च संनिपातं वर्जयेत्॥**

(१) संनिवापः संसर्गः। ♣ गृक. ४०६

(२) पृथगवस्थितानामग्नीनामेकत्र समावपनं वर्जयेत् न कुर्यात्। अग्नावग्निं न प्रक्षिपेदित्यन्ये। उ.

**[6]अवचनात्॥**

विना वचनम्। वचने सति तु कुर्यात्। उज्व.

अप्रतिष्ठिताग्निप्रदक्षिणीकरणनिषेधः

**[7]प्रतिमुखमग्निमाह्रियमाणं नाप्रतिष्ठितं भूमौ प्रदक्षिणीकुर्यात्॥**

---

* एतदादीनां त्रयाणां सूत्राणां व्याख्यानानि 'वर्णाः तद्वृत्तयश्च' इत्यस्मिन् प्रकरणे (वका. पृ. १०६४-१०६५) द्रष्टव्यानि।

(१) **आध.** १।२९।६; **हिध.** २६।७।६२; **समु.** ९८; **मेधा.** ८।३४८-३४९ (न ब्राह्मणः परीक्षार्थमपि शस्त्रमाददीत); **बौवि.** १।२।७ (=).

(२) **आध.** १।२९।७; **हिध.** २६।७।६३ हन्ति + (स).

(३) **आध.** २।१०।५, ७, ८; **हिध.** २७।४।४, ६, ७. शेषस्थलादिनिर्देशाः 'वर्णाः तद्वृत्तयश्च' इत्यस्मिन्प्रकरणे (वका. पृ. १०६४-१०६५) द्रष्टव्याः.

(४) **आध.** २।१२।५; **हिध.** २७।४।४१ (ब्राह्मदेवास्त्वधिकारिणः पाणिमूढं ब्राह्मणेन नाप्रोक्षितमभितिष्ठते। (?)) ; **अप.** ११।३९ मूढं (मूहं) मभि (मधि); **गृक.** ३७४ मूढं (मृघ्नं) मभि (मधि); **गृर.** ५५८ गृकवत्.

♣ गृर. गृकवत्।

(१) **आध.** २।१२।६; **हिध.** २७।४।४२; **संर.** ३८६.

(२) **आध.** २।१२।७; **हिध.** २७।४।४४ श्च + (न); **संर.** ३८६.

(३) **आध.** २।१२।८; **हिध.** २७।४।४३.

(४) **आध.** २।१२।९; **हिध.** २७।४।४५ यीत (येत्); **गृक.** ४०६; **गृर.** ५८२ हिधवत्; **संर.** ३८६ अग्नि (नाग्नि) (न०).

(५) **आध.** २।१२।१०; **हिध.** २७।४।४६ (अग्नीनां संनिवापं च वर्जयेत्।); **गृक.** ४०६ पातं (वापं); **गृर.** ५८२ (च०) **शेषं** गृकवत्; **संर.** ३८६(अग्नीनां च संनिवापं वर्जयेत्।).

(६) **हिध.** २७।४।४७; **संर.** ३८६.

(७) **आध.** २।१२।११; **हिध.** २७।४।४८ कुर्यात् (कुर्वीत); **गृक.** ३६३ (अभिमुखमग्नये क्रियमाण नाऽऽमप्रतिष्ठितं भूमौ प्रदक्षिणीकृत्योपेयात्।); **गृर.** ५५० प्रतिमु (अभिमु) नाप्रति (प्रति) प्रद (नाप्रद) कुर्यात् (कृत्योपेयात्); **निप्र.** २।५।१६ प्रतिमुख (प्रदक्षिण) कुर्यात् (कृत्योपेयात्); **संर.** ३८६ हिधवत्.

(१) भूमौ (प्रतिष्ठितमग्निं) प्रदक्षिणीकृत्यैव गच्छेदित्यर्थः। ρ गृक. ३६३

(२) यदाऽस्य गच्छतः प्रतिमुखमग्निराह्रियते तदा न तं प्रदक्षिणीकुर्यात् स चेद्भूमौ प्रतिष्ठितो न भवति। प्रतिष्ठिते त्वग्नौ दृष्टे प्रदक्षिणीकुर्यादिति। δ उ.

पृष्ठतःपाणिसंश्लेषनिषेधः

**[1]पृष्ठतश्चाऽऽत्मनः पाणी न संश्लेषयेत्॥**

(१) स्वस्य पृष्ठभागे स्वपाणिद्वयं न संश्लेषयेत् न बध्नीयात्। उ.

(२) आत्मनः स्वस्य पृष्ठतः पृष्ठे, चकाराच्छिरसि पाणी हस्तौ न संश्लेषयेत्। युगपन्न योजयेदित्यर्थः। उज्व.

संदिग्धदोषफलक्रियानिषेधः

**[2]दोषफलसंशये न तत्कर्तव्यम्॥**

यस्मिन्कर्मणि कृते पक्षे दोषफलं संभाव्यते न तत् कुर्यात्। यथा सभये देशे एकाकिनो गमनमिति। उ.

संदिग्धार्थे निश्चयोक्तिनिषेधः

**[3]न संशये प्रत्यक्षवद्ब्रूयात्॥**

संशयितमर्थमात्मनोऽज्ञानपरिहाराय प्रत्यक्षवत् निश्चितवन्न ब्रूयात्। उ.

आसनरहितभूम्युपवेशननिषेधः

**[4]न भूमावनन्तर्हितायामासीत॥**

शूद्रेण सहान्नग्रहणादिव्यवहाराणां निषेधः

**[5]शूद्रान्नं शूद्रसंपर्कः शूद्रेणैव सहाऽऽसनम्।**
**शूद्राज्ज्ञानागमः कश्चिज्ज्वलन्तमपि पातयेत्॥**

पादुकावर्जनविषयाः

**[6]अग्न्यगारे गवां गोष्ठे ब्राह्मणानां च संनिधौ।**
**स्वाध्याये भोजने चैव पादुकानां विसर्जनम्॥**

ρ गृर. गृकगतम्।

δ निप्र. उगतम्।

(१) **आध.** २।१२।१२; **हिध.** २७।४।४९; **गृक.** ४०२; **गृर.** ५७९; **निप्र.** २।५१३ तश्चाऽऽ (तस्त्वा) पाणी (पाणिं); **संर.** ३८६.

(२) **आध.** २।१२।१९; **हिध.** २७।४।५६.

(३) **आध.** २।१२।२१; **हिध.** २७।४।५८.

(४) **गृक.** ३७४; **गृर.** ५५८ न्तर्हि (न्तरि).

(५) **आपस्मृ.** ८।७-८; **पमा.** २।३०४ संपर्कः (संस्पर्शः) मः कश्चिज्ज्व (मश्चैव ज्व).

(६) **आपस्मृ.** ९।२१; **स्मृच.** २।६१६ द्वितीयचरणे (देवब्राह्मणसंनिधौ) उत्तरार्धे (जप्ये भोजनकाले च पादुके परिवर्जयेत्॥); **आर.** ७ उत्तरार्धे (आहारे जपकाले च पादुके परिवर्जयेत्॥); **आभू.** ३२५ द्वितीयचरणे स्मृचवत्, उत्तरार्धे आरवत्; **इन्दु.** १२ आभूवत्.

ग्रहणे भोजनस्य निषेधः

**[1]मृतके सूतके चैव गृहीते शशिभास्करे।**
**हस्तिच्छायां तु यो भुङ्क्ते पापः स पुरुषो भवेत्॥**

आत्मसंयमक्षमयोः प्रशंसा क्रोधनिन्दा च

**[2]न यमं यममित्याहुरात्मा वै यम उच्यते।**
**आत्मा संयमितो येन तं यमः किं करिष्यति॥**
**न तथाऽसिस्तथा तीक्ष्णः सर्पो वा दुरधिष्ठितः।**
**यथा क्रोधो हि जन्तूनां शरीरस्थो विनाशकः॥**
**क्षमा गुणो हि जन्तूनामिहामुत्र सुखप्रदः।**
**अरिर्वा नित्यसंक्रुद्धो यथाऽऽत्मा दुरधिष्ठितः॥**
**एकः क्षमावतां दोषो द्वितीयो नोपपद्यते।**
**यदेनं क्षमया युक्तमशक्तं मन्यते जनः॥**
**क्रोधयुक्तो यद्यजते यज्जुहोति यदर्चति।**
**सर्वं हरति तत्तस्य आमकुम्भ इवोदकम्॥**
**[3]अपमानात्तपोवृद्धिः संमानात्तपसः क्षयः।**
**अर्चितः पूजितो विप्रो दुग्ध्वा गौरिव सीदति॥**

जपहोमैर्द्विजप्रभाववृद्धिः

**[4]आप्यायते यथा धेनुस्तृणैरमृतसंभवैः।**
**एवं जपैश्च होमैश्च पुनराप्यायते द्विजः॥**

परदारपरद्रव्यसर्वभूतेषु क्रमेण
मातृलोष्टात्मवद्दर्शनस्य प्रशंसा

**[5]मातृवत्परदारांश्च परद्रव्याणि लोष्टवत्।**
**आत्मवत्सर्वभूतानि यः पश्यति स पश्यति॥**

ग्रहणे अहोरात्रोपवासः

**[6]अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः।**
**अहोरात्रोषितः स्नातः सर्वपापैः प्रमुच्यते॥**

(१) **आपस्मृ.** ९।२९; **अप.** १।१६५-१६७ पृ. २४३ (सुतके मृतके भुङ्क्ते गृहीते शशिभास्करे। छायायां हस्तिनो भुङ्क्ते न भूयः पुरुषो भवेत्॥); **मुक्ता.** ४४६(सुतके मृतके भुक्त्वा गृहीते शशिभास्करे। जलादौ हस्ततो भुक्त्वा न भूयः पुरुषो भवेत्॥) स्मृतिभास्करे; **सिन्धु.** २९३ नो भुङ्क्ते (नश्चैव) इति पाठभेदं वर्जयित्वा अपवत्.

(२) **आपस्मृ.** १०।३-६,९.

(३) **आपस्मृ.** १०।१०; **मुक्ता.** ४६५ अप (अव) त्तपसः क्ष (च्च तपःक्ष) दुग्ध्वा (दुग्धा) सीदति (गच्छति) स्मृत्यर्णवे; **आन.** ६५३ मुक्तावत् (=).

(४) **आपस्मृ.** १०।११; **ब्रक.** २३३ पैश्च (प्यैश्च) शातातपः.

(५) **आपस्मृ.** १०।१२.

(६) **निप्र.** २।६८१; **सिन्धु.** १५ विषुवे (संक्रमे) स्नातः (स्नात्वा) वृद्धवसिष्ठः; **सम.** ८५ स्नातः (स्नात्वा).

(१) अत्रोपवासो गृहस्थेतरेषाम्। स्मृतिमीमांसायाम् - 'आदित्येऽहनि संक्रान्त्यां ग्रहणे चन्द्रसूर्ययोः। उपवासो न कर्तव्यो गृहिणा पुत्रिणा सदा॥'। ωनिप्र. २।६८२

(२) एतच्च पुत्रवद्गृहस्थातिरिक्तविषयम्, 'आदित्येऽहनि संक्रान्तौ ग्रहणे चन्द्रसूर्ययोः। उपवासो न कर्तव्यो गृहिणा पुत्रिणा तथा॥' इति तस्य तत्र उपवासनिषेधात्। यस्तु रवेर्ग्रस्तास्तादावहोरात्रभोजननिषेधः स पुत्रवन्तमपि गोचरयति, एतद्वचनाप्रवृत्तेः। इदं हि वचनं 'नियमो व्रतमस्त्री तच्चोपवासादिपुण्यकम्।' इति कोशादुपवासस्य व्रतरूपत्वावगमाद्विहित एव व्रतात्मक उपवासे प्रवर्तते, न निषेधप्रवृत्तिमात्रेणाहोरात्रे भोजनाभावमात्रे, तस्य व्रतरूपत्वाभावादिति द्वैतनिर्णये तातचरणाः।

सम. ८५

आरूढपादुकस्य देवगृहे गमननिषेधः

**[१]आरुह्य पादुके यस्तु गृहाद्देवगृहं व्रजेत्।**
**छेत्तव्यौ चरणौ तस्य नान्यो दण्डो विधीयते॥**

शूद्रस्य प्रणवोच्चारणशालग्रामार्चन-
ब्राह्मणीगमननिषेधः

**[२]प्रणवोच्चारणाच्चैव शालग्रामशिलार्चनात्।**
**ब्राह्मणीगमनाच्चापि शूद्रश्चाण्डालतां व्रजेत्॥**

## वैखानसधर्मसूत्रम्

द्विजानां यजनादयः शूद्रस्य द्विजशुश्रूषा
च धर्माः

**[३]तेषां द्विजन्मनां वेदाधिकारस्तस्माद्ब्राह्मणस्याध्ययनाध्यापनयजनयाजनदानप्रतिग्रहाणि षट् कर्माणि भवन्ति॥**

**क्षत्रियवैश्ययोर्यजनाध्ययनदानानि॥**

**क्षत्रियस्य प्रजापालनदुष्टनिग्रहयुद्धानि॥**

**वैश्यस्य पाशुपाल्यकुसीदवाणिज्यानि॥**

**शूद्रस्य द्विजन्मनां शुश्रूषा कृषिश्चैव॥**

ω सिन्धु. निप्रवत्। अत्रत्यं शेषव्याख्यानं संक्रमविषयकमिति न संगृहीतम्।

(१) आर. ७ हाद्देव (हात्पर); आभू. ३२५.

(२) चमव्याआ. ४९ द्रश्चा (द्रश्च) तां व्रजेत् (तामियात्); आम. ६५.

(३) वैध. १।१.

## वसिष्ठः

ब्राह्मणस्य धर्मप्रवक्तृत्वम्

**[१]त्रयो वर्णा ब्राह्मणस्य निर्देशेन वर्तेरन्।**

**[२]ब्राह्मणो धर्मान्प्रब्रूयात्॥**

द्विजानां यजनादयः शूद्रस्य द्विजशुश्रूषा च धर्माः

**[३]षट् कर्माणि ब्राह्मणस्य॥**

**स्वाध्यायाध्ययनमध्यापनं यजनं याजनं दानं प्रतिग्रहश्चेति॥**

**त्रीणि राजन्यस्य॥**

**अध्ययनं यजनं दानं च॥**

**शस्त्रेण च प्रजापालनं स्वधर्मस्तेन जीवेत्॥**

**एतान्येव त्रीणि वैश्यस्य॥**

**कृषिर्वाणिज्यं पाशुपाल्यं कुसीदं च॥**

**[४]एतेषां परिचर्या शूद्रस्यानियता च वृत्तिः॥**

(१) एतेषां त्रैवर्णिकानाम्। अनियता एतावद्दातव्यमिति नियमरहिता। *गृक. २६८

(२) एतेषां त्रैवर्णिकानां परिचर्या शूद्रस्य कर्तव्या भवति। तथा वृत्तिः भृतिः अनियता एतावद्दातव्यमिति नियमरहिता तत्पोष्यवर्गोपयिकीत्यर्थः। स्मृकौ. ९१-९२

वर्णेषु केशवेषविषयकव्यवस्थाव्यवस्थ-
योर्विकल्पः

**[५]अनियतकेशवेषाः, सर्वेषां वा मुक्तशिखावर्जम्॥**

* गृर., मर. गृकवत्।

(१) वाध. १।३९.

(२) वाध. १।४०; बौवि. १।१।८.

(३) वाध. २।१३-१९.

(४) वाध. २।२०; मभा. २।४३ (अनियता च वृत्तिः) एतावदेव; गृक. २६८ (च०); गृर. ४७६ गृकवत्; स्मृकौ. ५७ (परिचर्या शूद्रस्य) एतावदेव : ९१ गृकवत्; मर. १४ स्यानि (स्य नि) (च०); शूशि. ३८ मरवत्; संम. ८० (परिचये तु शूद्रस्य) एतावदेव; विपा. ३।३१८ (एतेषां०) स्यानि (स्य नि) (च०); बाल. १।८९ पृ. २४५ विपावत् : १।१२१ पृ. ३७८ मरवत्; सस्मृ. १८९ (परिचर्या तु शूद्रस्य) एतावदेव.

(५) वाध. २।२१; विश्व. १।१३० (अनियतकेशवेषाः) एतावदेव (-); मभा. २।४३ विश्ववत्; गृक. २६८; गृर. ४७६ वेषाः (वेशाः); स्मृकौ. ५७ (अनियताः केशवेषाः) एतावदेव : ९१ तकेश (ताः केश) (वा०); मर. १५ (वा०); शूशि. ३८ तकेश (ताः केश); शूक. ५१ (शूद्रस्यानियताः केशवेषाः) एतावदेव; संम. ८० (अनियतः केशवेशः) एतावदेव; विपा. ३।३१८ (अनियताः केशवेशाः) एतावदेव; बाल. १।८९ पृ.२४५ विपावत् : १।१२१ पृ. ३७८ तकेश (ताः केश) वर्जम् (वर्जितम्); सस्मृ. १८९ अशुद्धः पाठः.

(१) अनियतकेशवेषाः अनियताः केशवेषाश्च शूद्रस्येत्यन्वयः। सर्वेषां ब्राह्मणादीनाम्। मुक्तशिखावर्जमिति मुक्तशिखात्वं न केनापि कर्तव्यमित्यर्थः।

σ गृक.२६८

(२) अनियताः केशवेषाः शिखाबन्धनार्थमुपयुक्ताः केशा अनियताः। एतेन शिखा वैकल्पिकीत्युक्तं भवति। अतः सर्वमुण्डनमपि पक्षे प्राप्तम्। एवं शूद्रस्य पाक्षिकप्राप्तशिखाबन्धनं कर्मकालव्यतिरिक्तस्थले वैकल्पिकं दर्शयन् प्रसङ्गात् ब्राह्मणादीनामपि दर्शयति सर्वेषां वा मुक्तशिखावर्जमिति। सर्वेषां ब्राह्मणादीनां चतुर्णामपि वर्णानां वा विकल्पेन मुक्तशिखावर्जं स्थितिर्भवति। कर्मकाले मुक्तशिखात्वं सर्वदा प्रतिषिद्धम्। अतोऽकर्मकाले मुक्तशिखात्वं विकल्पेन निषिध्यते।

# स्मृकौ.९२

(३) सर्वमुण्डनं शिखातिरिक्तकेशमुण्डनं वेति वाशब्दार्थः। तच्च सदसद्विषयतया व्यवस्थाप्यम्।

* शूशि. ३८

आततायिवधे दोषाभावः

**[1]आततायिनमायान्तमपि वेदान्तपारगम्।**
**जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत्॥**
**स्वाध्यायिनं कुले जातं यो हन्यादाततायिनम्।**
**न तेन भ्रूणहा स स्यान्मन्युस्तन्मन्युमृच्छतीति॥**

ब्राह्मणवैश्ययोरात्मत्राणाद्यर्थं क्षत्रियस्य तु नित्यं शस्त्रादानम्

**[2]आत्मत्राणे वर्णसंवर्गे वा ब्राह्मणवैश्यौ शस्त्रमाददीयाताम् ॥**
**क्षत्रियस्य तु तन्नित्यमेव रक्षणाधिकारात्॥**

सत्याक्रोधदानाहिंसाप्रजननानि सामान्यधर्माः

**[3]सर्वेषां सत्यमक्रोधो दानमहिंसा प्रजननं च॥**

---

σ गृर. गृकवत्।
# संम., बाल. स्मृकौगतम्।
* शेषं स्मृतिकौमुद्यनुवादः।
(१) **वाध.** ३।१७-१८.
(२) **वाध.** ३।२४-२५.
(३) **वाध.** ४।४; **मभा.** १०।५१; **गौमि.** १०।५२.

गोप्यगोप्यतमा विषयाः

**[1]आहारनिर्हारविहारयोगाः**
**सुसंवृता धर्मविदा तु कार्याः।**
**वाग्बुद्धिकार्याणि तपस्तथैव**
**धनायुषी गुप्ततमे तु कार्ये॥**

(१) निर्हारः मूत्रपुरीषोत्सर्गः। विहारः स्त्रीसेवा। योगः समाधिः। वाग्गुप्तिः असत्यालापादिपरिवर्जनेन। बुद्धिगुप्तिः अशुभसंकल्पादिपरिवर्जनेन। वीर्यं सामर्थ्यम्, तस्य रक्षा अस्थाने विनियोगाभावः। तपः ब्रह्मचर्यादि, तस्य रक्षा विस्मयाकरणम्। गुप्ततमे अप्रकाशिततमे।

♣ गृक. २७७

(२) बुद्धिगुप्तिः अनिष्टचिन्तात्यागः।

α आत. ३२९

(३) आहारः भोजनम्। सुसंवृताः गुप्ताः।

α संप्र. ५७२

पैशुन्यमत्सरादिवर्जनं सामान्यधर्मः

**[2]पैशुन्यमत्सराभिमानाहङ्काराश्रद्धानार्जवात्मस्तवपरगर्हादम्भलोभमोहक्रोधासूयाविवर्जनं सर्वाश्रमाणां धर्म इष्टः॥**

(१) पैशुनं दोषसूचकत्वम्। 'मत्सरः परसमृद्ध्यसहनम्। अभिमानः स्तम्भः। नमस्यानामप्रणाम इति यावत्। अहंकारः अभिजनप्रज्ञादिगर्वः। अश्रद्धा परलोकादिषु नास्तिकत्वम्। अनार्जवं मायाविता। आत्मस्तवः स्वगुणकीर्तनम्। परगर्हा परापवादः। दम्भः सोपधं धर्मचरणम्। लोभः विध्यतिक्रमेण द्रव्यस्याऽऽदानमप्रदानं च। एषां वर्जनं परिहरणं सर्वेषामाश्रमाणां धर्मान्तरेभ्य उत्कृष्टम्।

अप. ३।५७ पृ. ९५७

(२) धर्मिष्ठः धर्म्येषु मध्ये प्रधानतमः। मोक.५२

---

♣ गृर., मपा., आप्र. गृकगतम्।
α शेषं गृकगतम्।
(१) **वाध.** ६।९; **गृक.** २७७ कार्याणि (वीर्याणि); **गृर.** ४८४ तमे तु (तमे च) शेषं गृकवत्; **मपा.** ११७ कार्याणि तपस्त (गुप्तानि नयस्त) तमे तु (तमे च); **आत.** ३२९ संवृता (संभृता); **संप्र.** ५७२; **आप्र.** ३४ पू.
(२) **वाध.** १०।३०; **अप.** ३।५७ पृ. ९५७ पैशुन्य (पैशुन) (मोहक्रोधासूयावि॰) धर्म इष्टः (धर्मिष्ठम्); **मभा.** ३।११ पैशुन्य (पैशुन) राश्रद्धानार्ज (रानार्ज) गर्हा (गर्ह) मोहक्रोधासूयावि (क्रोधमोहवि) धर्म इष्टः (धर्मिष्ठम्) (-); **मोक.** ५१ (मोहक्रोधासूया॰) धर्म इष्टः (धर्मिष्ठः).

शस्त्रविषसुराग्रहणं ब्राह्मणस्य निषिद्धम्

**[१]शस्त्रं विषं सुरा चाप्रतिग्राह्याणि ब्राह्मणस्य॥**

अनृतनिषेधापवादः

**[२]उद्वाहकाले रतिसंप्रयोगे**
**प्राणात्यये सर्वधनापहारे।**
**विप्रस्य चार्थे ह्यनृतं वदेयुः**
**पञ्चानृतान्याहुरपातकानि॥**

शूद्रं प्रति मत्यादिदानधर्मोपदेशव्रतादेशानां निषेधः

**[३]न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविष्कृतम्।**
**न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत्॥**

मतिः अदृष्टार्थकार्याकार्यविषया। उच्छिष्टं भोजनपात्रस्थं भक्तशिष्टम्। हविष्कृतं हविष्ट्वेन कल्पितं पुरोडाशादि। धर्मं पञ्चयज्ञादि। गृक. ३८०

**[४]यश्चास्योपदिशेद्धर्मं यश्चास्य व्रतमादिशेत्।**
**सोऽसंवृतं तमो घोरं सह तेन प्रपद्यते॥ इति॥**

भार्यायाः सुरापानेन भर्तुर्दोषः

**σ[५]पतत्यर्धं शरीरस्य यस्य भार्या सुरां पिबेत्।**
**पतितार्धशरीरस्य निष्कृतिर्न विधीयते॥**

वर्णानामापन्निवारणसाधनानि

**[६]क्षत्रियो बाहुवीर्येण तरेदापदमात्मनः।**
**धनेन वैश्यशूद्रौ तु जपैर्होमैर्द्विजोत्तमः॥**

वेदोक्तकर्मकरणविधिः

**[७]वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः।**
**तद्धि कुर्वन्यथाशक्त्या प्राप्नोति परमां गतिम्॥**

धर्माचरणसत्यवदनदीर्घदर्शनपरदर्शनानां विधिस्तदितरनिषेधश्च

**[८]धर्मं चरत माऽधर्मं सत्यं वदत माऽनृतम्।**
**दीर्घं पश्यत मा ह्रस्वं परं पश्यत माऽपरम्॥**

σ अस्य शुशिव्याख्यानं पराशरस्य 'विक्रीणन्मद्यमांसा॰' इति श्लोके (वका. पृ. १७९०) द्रष्टव्यम्।

(१) वाध. १३।५५; गृक. २४७; गृर. ४६६.
(२) वाध. १६।३६.
(३) वाध. १८।१४; गृक. ३८० चास्य व्र (चान्यव्र) यमवसिष्ठौ.
(४) वाध. १८।१५.
(५) वाध. २१।१५; शुशि. ५५ मनुः.
(६) वाध. २६।१६.
(७) वाध. २७।८.
(८) वाध. ३०।१.

पाणौ कुशधारणम्

**[१]कुशपाणिः सदा तिष्ठेद्ब्राह्मणो दम्भवर्जितः।**
**स नित्यं हन्ति पापानि तृणराशिमिवानलः॥**

शूद्राणां वाजसनेयित्वम्

**[२]शूद्रा वाजसनेयिनः॥**

अत्र च 'शूद्रा वाजसनेयिनः' इति वसिष्ठवाक्याद्यानि तेषां कर्माणि तानि कातीयसूत्रानुसारेण कार्याणीति। संम. ८१

ग्रहणे स्नानाभावे प्रत्यवायः

**[३]ग्रहणे संक्रमे वाऽपि न स्नायाद्यदि मानवः।**
**सप्तजन्मसु कुष्ठी स्याद्दुःखभागी च जायते॥**

यत्र क्वापि जले स्नानाकरणे प्रत्यवायमाह वसिष्ठः — ग्रहणे इति। ♣मुक्ता. २७२

**[४]चन्द्रसूर्यग्रहे स्नायान्मृतके सूतकेऽपि वा।**
**अस्नायी मृत्युमाप्नोति स्नायी मृत्युं न विन्दति॥**

(१) अत्र 'चन्द्रसूर्योपरागे तु यावद्दर्शनगोचरे' इति चक्षुर्गोचरमेव निमित्तम्। निप. ११७

(२) जन्ममरणनिमित्ताशौचवानपि स्नानं कुर्यादित्याह वसिष्ठः — चन्द्रसूर्यग्रहे इति। *मुक्ता. २७२

(३) इत्यादिविशेषविधिस्तु स्नानाकरणेऽनिष्टविशेषबोधनार्थं इति हेमाद्रिः। कृभ. २९४

ग्रहणादिनिमित्तकस्नाने नदीरजोदोषाभावः

**[५]उपाकर्मणि चोत्सर्गे प्रेतस्नाने तथैव च।**
**चन्द्रसूर्यग्रहे चैव रजोदोषो न विद्यते॥**

रात्रिस्नाननिषेधः सापवादः

**[६]अप्रशस्तं निशि स्नानमासुरी चाधिदेवता।**
**पुत्रोत्सवे विवाहे च ग्रहणे स्नानमाचरेत्॥**

♣ सम., आन. मुक्तागतम्।
* आन. मुक्तागतम्।

(१) स्मु. १६.
(२) संम. ८१.
(३) निप. ११७ वाऽपि (चैव) जायते (सर्वदा) (-); मुक्ता. २७२ जन्मसु (जन्मनि); सम. ७७ वाऽपि (चैव) च जायते (न संशयः) वृद्धवसिष्ठः; आन. २३९ मुक्तावत्.
(४) निप. ११७ न्मृतके सूतकेऽपि वा (त्सूतके मृतकेऽपि च) मृत्युं (पापं) (-); निप्र. ११५ प्रथमचरणमात्रम् (-); मुक्ता. २७२; आन. २४० न्मृतके सूतकेऽपि (त्सूतके मृतकेऽपि); कृभ. २९४, ३१५ न्मृतके सूतकेऽपि वा (त्सूतके मृतके तथा) पू. (-).
(५) मपा. २५२ वशिष्ठः; सिन्धु. ४१४; सम. ९२; विपा. ३।२।७७७ वशिष्ठः; संग. ७७२.
(६) स्मु. ६१.

[1]पुत्रजन्मनि यज्ञे च तथा संक्रमणे रवेः।
राहोश्च दर्शने स्नानं प्रशस्तं नान्यथा निशि॥

ग्रस्तोदयग्रहणनिमित्तकः
भोजननिषेधः

[2]ग्रस्तोदये विधोः पूर्वं नाहर्भोजनमाचरेत्।
ग्रस्तोदिते तथा सूर्ये न रात्रौ भोजनं चरेत्॥

नैमित्तिकक्षौरे कालदोषाभावः

[3]वैधे कर्मणि तु प्राप्ते कालदोषं न चिन्तयेत्।
सद्यः क्षौरं तु कुर्वीत मातापित्रोर्मृतौ तथा॥

## वृद्धवसिष्ठः

ग्रहणादौ श्राद्धस्नानदानविधिः

[4]विषुवत्ययने ग्रहणे
संक्रान्तौ पुण्यदिवसे वा।
पितृतृप्तिं यो न करोति
दत्त्वा शापं व्रजन्ति तस्य सदा॥
सुतजनने संक्रान्ता-
वुपरागे चन्द्रसूर्ययोर्नित्यम्।
रात्रावपि कर्तव्यं
स्नानं दानं विशेषतो नृणाम्॥

[5]सर्वेषामपि वर्णानां सूतकं राहुदर्शने।
सचैलं तु भवेत्स्नानं सूतकान्नं च वर्जयेत्॥

(१) सूतकान्नं राहुसूतकान्नम्।
+अप. १।१५४ पृ. १९८

(२) सचैलत्वं मुक्तिस्नानपरमिति मदनरत्ने उक्तम्।
सिन्धु. २८९

(३) ग्रहणात्पूर्वं यत्पक्वं तत्सूतकान्नं तत्पश्चादपि न भुञ्जीतेत्यर्थः इति मुक्ताफले। आन. २४०

+ स्मृच., मुक्ता. अपवत्।

(१) अप. १।१५४ पृ. १९७; स्मृच. १४८; संग. २२६, ४३६.

(२) मुक्ता. ४५०; विपा. ३।२।४७१ पू. वृद्धवशिष्ठः.

(३) मुक्ता. ३५.

(४) वृवसं. १९।१७, १९.

(५) अप. १।१५४ पृ. १९८ षामपि (षामेव) तु भ (च भ); स्मृच. २।६२२ षामपि (षामेव) दर्शने (सूतके) चैलं तु (चेलं तद्); मुक्ता. २७२ सूतकं (निमित्तं) : ४५० षामपि (षामेव) षट्त्रिंशन्मते; सिन्धु. २८८ मुक्ता. ४५० वत्; आन. २४० पूर्वार्धे (सर्वेषामेव वर्णानां निमित्तं राहुदर्शनम्।) चैलं (चेलं) च (तु).

[1]गवां कोटिप्रदानेन सम्यग्दत्तेन यत्फलम्।
गङ्गास्नाने तत्फलं स्याद्राहुग्रस्ते निशाकरे।
दिवाकरे पुनस्तत्र दशसंख्यमुदाहृतम्॥

[2]चन्द्रसूर्यग्रहे चैव योऽवगाहेत जाह्नवीम्।
स स्नातः सर्वतीर्थेषु किमर्थमटते महीम्॥

ग्रस्तोदयादिग्रहणेषु पूर्वोत्तरकालयो-
र्भोजननिषेधः

[3]ग्रस्तोदये विधोः पूर्वं नाहर्भोजनमाचरेत्॥

(१) शशिग्रहणे यामत्रयस्यापवादमाह वृद्धवसिष्ठः — ग्रस्तोदये इति। * पमा. १।३८३

(२) ग्रस्तोदये विशेषोऽभिहितस्तत्रैव — ग्रस्तोदये इति। रविग्रहणे ग्रस्तोदये मुक्तिदर्शनाद्भोजननिषेधो नास्तीत्यभिप्रायः। आन. २४२

[4]ग्रहणं तु भवेदिन्दोः प्रथमादधि यामतः।
भुञ्जीताऽऽवर्तनात्पूर्वं पश्चिमे प्रहरादधः॥

[5]रवेस्त्वावर्तनादूर्ध्वमर्वागेव निशीथतः।
चतुर्थे प्रहरे चेत्स्याच्चतुर्थप्रहरादधः॥

(१) पूर्वकाले भोजननिषेधे विशेषमाह वृद्धवशिष्ठः— ग्रहणमिति। रात्रौ प्रथमात् यामात् अधि ऊर्ध्वं ग्रहणं चेत् आवर्तनात् मध्याह्नात् पूर्वं भुञ्जीत, रात्रिपश्चिमयामे चेत् रात्रिप्रथमयामादर्वाक् भुञ्जीत। अह्नश्चतुर्थप्रहरे रविग्रहश्चेत् रात्रेः चतुर्थप्रहरादधो भुञ्जीतेत्यर्थः। निशीथः मध्यरात्रिः। मध्याह्नादूर्ध्वं रविग्रहणं चेत् मध्यरात्रादर्वागेव भुञ्जीतेत्यर्थः। शशिग्रहणे यामत्रयेण व्यवधानमपेक्षितम्, सूर्यग्रहे तु यामचतुष्टयेनेति तात्पर्यार्थः। तथा च वृद्धगौतमः — 'सूर्यग्रहे तु नाश्नीयात् पूर्वं यामचतुष्टयम्। चन्द्रग्रहे तु यामांस्त्रीन् बालवृद्धातुरैर्विना॥' इति। पमा. १।३८२-३८३

(२) इदं च न रात्रिभोजनपरम्, किंतु सूर्यग्रहे पूर्वं यामचतुष्टयं त्याज्यम्, चन्द्रग्रहे यामत्रयमित्येवंपरमिति माधवः। Σ सम. ८०

* चमव्याआ., सम. पमावत्।
Σ शेषं पमावत्।

(१) मुक्ता. २७२; सम. ७७.

(२) मुक्ता. २७२.

(३) पमा. १।३८३ पू. वृद्धवशिष्ठः; चमव्याआ. ६१; सिन्धु. २८२; सम. ८०; आन. २४२ कालादर्शे.

(४) पमा. १।३८२ वृद्धवशिष्ठः; सम. ७९ प्रहरा (प्रथमा).

(५) पमा. १।३८२ वृद्धवशिष्ठः; सम. ८०.

## विष्णुः

अध्यापनादिवर्णधर्माणां

व्यवस्था

[1]**तेषां च धर्माः॥**

तेषां चतुर्णां वर्णानाम्। व्यवहितपरामर्शाय पुनस्तच्छब्दः। धर्माः अभ्युदयस्थानानि। चकारोऽनुलोमजसंग्रहार्थः। वै.

**ब्राह्मणस्याध्यापनम् ॥**

यद्यप्यध्यापनस्य वृत्तितया तास्वेव पठनमुचितम्, तथाऽपि 'अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्। श्राद्धं वा पितृयज्ञः स्यात् पित्र्यो बलिरथापि वा॥' इति कात्यायनेन तस्य नित्यकर्मत्वाभिधानात् धर्मत्वमप्यविरुद्धम्। तच्च ब्राह्मणस्यैव, 'ब्राह्मणस्याधिकाः प्रवचनयाजनप्रतिग्रहाः' (गौध. १०।२) इति गौतमस्मरणात्। क्षत्रियवैश्ययोस्तु आपदि ब्राह्मणप्रेरितयोर्भवति, 'आपत्काले ब्राह्मणस्याब्राह्मणाद्विद्योपयोगः' (गौध. ७।१) इति तस्यैव स्मरणात्। वै.

**क्षत्रियस्य शस्त्रनित्यता॥**

शस्त्राणि अमन्त्रप्रयोज्यानि धनुरादीनि। * तेषु नित्यता तत्परता युद्धाद्यभिसंधिं विनाऽपि। आहिताग्न्यादित्वात् पूर्वनिपातेन नित्यशस्त्रतेत्यर्थः, 'अधीत्य वेदं विप्रेभ्यः क्षत्रियोऽथ धनुःश्रुतिम्। आददीत द्विजेभ्यस्तु तथाऽसौ क्षत्रियो भवेत्॥' इति धनुर्वेदस्मरणात्। वै.

**वैश्यस्य पशुपालनम्॥**

पशूनां गवादीनां पालनम् आहारादिदानेन पोषणम्, दुग्धाद्यभिसंधिं विना। वै.

**शूद्रस्य द्विजातिशुश्रूषा॥**

द्विजातीनां ब्राह्मणादीनां त्रयाणां शुश्रूषा परिचर्या, वेतनाद्यभिसंधिं विना। वै.

**द्विजानां यजनाध्ययने॥**

त्रितयसाधारणं धर्ममाह — द्विजानामिति। द्विजानां ब्राह्मणादीनां त्रयाणां यजनं यागः, अध्ययनं गुरुसकाशादेव वेदग्रहणम्, ते धर्मौ। दानं तु सर्वसाधारणमस्त्येव। वै.

* 'तेषु' इतीयं विषयसप्तमी वा औपश्लेषिकसप्तमी वा? उभयत्रापि तत्पुरुषेणैव शस्त्रनित्यताशब्दस्य साधुत्वे संभवति बहुव्रीहिविषयमाहिताग्न्यादित्वकल्पनेन गौरवग्रस्तं पूर्वनिपाताश्रयणं व्यर्थम्। किंच, द्वितीयपक्षे नित्यतायाः शस्त्रधर्मत्वेन क्षत्रियधर्मतत्परतारूपत्वं न युज्यते।

(१) विस्मृ. २।४-९.

क्षमादयश्चतुर्दश सामान्यधर्माः

[1]**क्षमा सत्यं दमः शौचं दानमिन्द्रियसंयमः।**
**अहिंसा गुरुशुश्रूषा तीर्थानुसरणं दया॥**
[2]**आर्जवं लोभशून्यत्वं देवब्राह्मणपूजनम्।**
**अनभ्यसूया च तथा धर्मः सामान्य उच्यते॥**

(१) सामान्यः चतुर्णामपि वर्णानाम्। ω ब्रक. १०

(२) सामान्यः सर्वसाधारणः। * कृर. १४

(३) सामान्यधर्मानाह — क्षमेति। अपकारेऽपि चित्तस्याविकारः क्षमा। अप्राणिपीडाकरं यथार्थवचनं सत्यम्। अन्तःकरणसंयमो दमः। बाह्याभ्यन्तरशुद्धिः शौचम्। प्राणिनामार्त्यपहाराय यथाशक्ति अन्नोदकादिप्रतिपादनं दानम्। कर्मबुद्धीन्द्रियाणामनिषिद्धविषयवृत्तिरिन्द्रियसंयमः। हिंसा प्राणवियोगफलको व्यापारः, तद्वर्जनमहिंसा। मातृ(? ता)पित्रादीनामनुमताचरणं गुरुशुश्रूषा। काशीप्रयागादिशीलनं तीर्थानुसरणम्। आपन्नभूतहितैषित्वं दया। अकौटिल्यम् आर्जवम्। यथोत्पन्नद्रव्यसंतोषः लोभशून्यत्वम्। देवब्राह्मणयोः संमाननं पूजनम्। परोत्कर्षासहिष्णुत्वम् असूया, तद्वर्जनमनसूया। तथाशब्देनाऽऽनृशंस्यादीनां ग्रहणम्। अयं च प्रत्येकं संकल्पितः ब्राह्मणाद्याचण्डालमतिशयं जनयतीति साधारणो धर्म उच्यते। यथाऽऽह व्यासः — 'आनृशंस्यमहिंसा च प्रसादः संविभागिता। श्राद्धकर्माऽऽतिथेयं च सत्यमक्रोध एव च॥ स्वेषु दारेषु संतोषः शौचं नित्यानसूयता। आत्मज्ञानं तितिक्षा च धर्मः साधारणो नृप॥' इति। वै.

ω आर. ब्रकवत्।

* पप्र. कृरवत्।

(१) विस्मृ. २।१६; ब्रक. १० दया (तथा); चव्र. ७; कृर. १४ संयमः (निग्रहः); पमा. १।७६; शुशि. ५६; शूक. ६९ पूर्वार्धे (क्षमा शौचं दमो दानमिन्द्रियं सत्यसंयमौ।) हेमाद्रौ; विपा. ३।२।३१९ सरणं (गमनं) शेषं कृरवत्; पप्र. ३२; बाल. १।८९ पृ.२४५ सरणं (गमनं).

(२) विस्मृ. २।१७; ब्रक. ११; चव्र. ७; कृर. १४; पमा. १।७७ पूर्वार्धे(आत्मपत्वमलोभत्वं देवतानां च पूजनम्।); शुशि. ५६; आर. ७८; शूक. ६९; विपा. ३।२।३१९; पप्र. ३२; बाल. १।८९ पृ. २४५.

(४) साधारणधर्माः शूद्रेणाप्यनुष्ठेयाः।

* विपा. ३।२।१९

आततायिवधे दोषाभावः

**'गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम्।**
**आततायिनमायान्तं हन्यादेवाविचारयन्॥**

मनुष्यमारणदण्डस्यापि क्वचिदपवादमाह — गुरुमिति। गुरुः आचार्यः वक्ष्यमाणलक्षणः। बालः आ षोडशात्। वृद्धः अशीतिकावरः। बहुश्रुतः 'स एष बहुश्रुतो भवति लोकवेदवेदाङ्गवित् वाकोवाक्येतिहासपुराणकुशल-स्तदपेक्षस्तद्वृत्तिरष्टाचत्वारिंशता संस्कारैः संस्कृतः त्रिषु कर्मस्वभिरतः षट्सु वा सामयाचारिकेष्वभिविनीतः' (गौध. ८।४–११) इति गौतमोक्तलक्षणो ब्राह्मणः। यद्यपि बहुश्रुत इत्यनेनैव ब्राह्मणोपलब्धिः, तथाऽपि अतीन्द्रियत्वेन ब्राह्मण्यस्य निर्णीतब्राह्मण्य इति वक्तुं पुनरुपादानम्। एषामन्यतमम् आततायिनं वक्ष्यमाणलक्षणं मारणाभिसंधिना आयान्तम् 'अयं हन्तव्यो न वा' इत्यविचारयन् हन्यादेव। नायं विधिः, रागप्राप्तत्वात्। नाप्याततायिन्यागते पलायनपक्षे हननं चाप्राप्तमिति नियमः, अहनने दोषाश्रवणात्, 'पापमेवाऽऽश्रयेदस्मान् हत्वैतानाततायिनः।' (भगी. १।३६) इति हनने दोषश्रवणाच्च, 'आततायिनमुत्कृष्टं वृत्त-स्वाध्यायसंयुतम्। यो न हन्याद्वधः प्राप्तं सोऽश्वमेधफलं लभेत्॥' इति बार्हस्पत्ये अहनने फलश्रवणाच्च। अनेनाऽऽत्मरक्षणविध्यतिक्रमदोष एवास्य नियमस्य फलमिति निरस्तम्, फलदोषयोः परस्परविरोधात्। नापि परिसंख्या, तदर्थस्यानाततायिहनननिषेधस्य हिंसानिषेधकसामान्य-शास्त्रेणैव प्राप्तत्वात्। किंच, 'आचार्यं च प्रवक्तारं पितरं मातरं गुरुम्। न हिंस्याद्ब्राह्मणान् गाश्च सर्वांश्चैव तपस्विनः॥' (मस्मृ. ४।१६२) इति मनुवचन-माततायिहिंसानिषेधं विनाऽनर्थकमेव, हिंसामात्रस्य सामान्यशास्त्रेणैव निषिद्धत्वात्। अथ प्रत्यवाया-तिशयबोधनार्थमिदम्, तदपि न, तस्यापि प्रायश्चित्तगौरवेणैव सिद्धत्वात्। नापि प्रतिप्रसवः, 'नाऽऽततायिवधे दोषोऽन्यत्र गोब्राह्मणवधात्' इति सुमन्तुना तत्रापि पर्युदासात्। अथ 'नाऽऽततायिवधे' इत्येकम्, 'दोषोऽन्यत्र' इत्यपरम्, 'गोब्राह्मणवधात् स्नातः प्रायश्चित्तं कुर्यात्' इत्यग्रेतनसूत्रानुप्रविष्टं तृतीयम्, एवं सूत्रत्रयकरणेनाऽऽद्यस्य पूर्वोक्तब्रह्मवधप्रायश्चित्तापवादार्थत्वम्, द्वितीयस्यानाततायि-वधे दोषप्रतिपादकत्वम्, तृतीयस्य गोब्राह्मणवधहेतु-कप्रायश्चित्ताङ्गस्नानप्रतिपादकत्वमिति भवदेवव्याख्या-नुसरणं कार्यमिति चेत्, न। एवं सति 'दोषोऽन्यत्र' 'गोब्राह्मणवधात्' इति विभागे 'दोषोऽन्यत्र' इति द्वितीयसूत्रानर्थक्यं दुष्परिहरमेव, पूर्वमनाततायिवधे प्रायश्चित्तविधानादेव दोषसिद्धेः। किंच, 'नाऽऽततायिवधे' इति पूर्वोक्तब्राह्मणवधप्रायश्चित्तापवादोऽपि न घटते, 'क्षिण्वन्तमपि गोविप्रं न हन्याद्वै कदाचन। हत्वा तु प्रहरन्तं वै ब्राह्मणं वेदपारगम्। कामतोऽपि चरेद्वीर द्वादशाब्दं व्रतं शुभम्॥' इति भविष्यपुराणवचनविरोधात्, 'पापमेवाऽऽश्रयेदस्मान् हत्वैतानाततायिनः' (भगी. १।३६) इति गीतावाक्यविरोधाच्च। न च मरणान्तिकप्रायश्चित्ताप-वादोऽयमित्यपि सम्यक्, द्वादशवार्षिकस्यैवोपक्रमात्। तस्मादिदमेकमेव सूत्रं मन्तव्यम्। तेन गोब्राह्मणाति-रिक्ताततायिवधे दोषाभावस्तदर्थ इति सर्ववचनानामविरोधः। गुर्वादिपदं तु कैमुतिकन्यायेन व्याख्येयम्। अत एव कात्यायनः — 'आततायिनि वोत्कृष्टे तपःस्वाध्यायजन्मतः। वधस्तत्र तु नैव स्यात् पापे हीने वधो भृगुः॥ उद्यतानां तु पापानां हन्तुर्दोषो न विद्यते। निवृत्तानां यथाऽऽरम्भात् ग्रहणं न वधः स्मृतः॥' इति। उत्कृष्टे वधनिषेधात् दोषो भवति, परं स्वल्पः, कामकृतेऽपि तत्र द्वादशवार्षिकव्रतस्याऽऽम्नानात्। पापादौ तु सर्वथैव दोषाभावः। तत्र हेतुः — उद्यतानामिति। तत्र दृष्टान्तः — यथा हननारम्भान्निवृत्तानामिति। तत्र हेतुः आततायिवधार्थशस्त्रग्रहणं वधो नेति। तेन च ब्राह्मणवधे 'अहत्वाऽपि(? त्वा हि)' (भगी. २।५) इति वचनमनाततायिविषयम्। तस्मात् दण्डप्रायश्चित्ताभावा-याभ्यनुज्ञानमात्रमेतत्। इदमपि पलायनाद्यसंभवे वेदितव्यम्, 'सर्वत एवाऽऽत्मानं गोपायेत्' इति श्रुतेरित्यलं विस्तरेण।

वै.

**नाऽऽततायिवधे दोषो हन्तुर्भवति कश्चन।**
**प्रकाशं वाऽप्रकाशं वा मन्युस्तन्मन्युमृच्छति॥**

उक्ताभ्यनुज्ञानस्य प्रयोजनमाह — नाऽऽततायीति।

*बाल. विपावत्।

(१) विस्मृ. ५।१९० - १९१.

गोब्राह्मणातिरिक्तातातायिनां वधेऽपि हन्तुः कश्चन दण्डस्य प्रायश्चित्तस्य वा प्रयोजको दोषो न भवति। यतः प्रकाशं शस्त्रप्रयोगादिनिमित्तम्, अप्रकाशम् अभिचारादिनिमित्तं वा तस्य आततायिनः मन्युं हन्तुर्मन्युरेव ऋच्छति नाशयति, न पुनः पुरुषो हन्ति हन्यते इत्यर्थवादः। यथाऽऽह बृहस्पतिः — 'नाऽऽततायिवधे हन्ता किल्बिषं प्राप्नुयात् क्वचित्। विनाशार्थिनमायान्तं घातयन्नापराध्नुयात्॥' इति।

वै.

सुरामद्यभेदाः, ब्राह्मणादिं प्रति तत्स्पर्शादिनिषेधानिषेधव्यवस्था

**'गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा। यथैवैका तथा सर्वा न पातव्या द्विजातिभिः॥**

(१) द्विजातिभिः ब्राह्मणैः। + निक. ३३२

(२) सुराभिरित्युक्तम्। तद्भेदानाह — गौडी इति। गौडी गुडविकारः। माध्वी मधुविकारः। पैष्टी पिष्टविकारः। सेयं त्रिविधा सुरा विज्ञेया। विज्ञेयतावचनाच्च एतत्त्रये सुराशब्दस्य शक्तिं गमयति, अन्यथा वाक्यारम्भानर्थक्यात्। न चानेकार्थत्वम्, तालादिमद्यव्यावृत्तमदविशेषशक्तेरेकस्याः प्रवृत्तिनिमित्तत्वात्। यत्तु 'द्वादशं तु सुरा मद्यम्' इति पुलस्त्येन गौडीमाध्वीभ्यामपि सुरायाः पृथक् निर्देशात् भेद इति प्राचोक्तम्, तत् ऐक्षवमधूत्थयोर्मद्ययोः गौडीमाध्वीत्वभ्रमेणेति मन्तव्यम्, अन्यथा मूलवाक्ये ताभ्यां तयोः पृथगुद्देशानुपपत्तेः। परिगणनादेव त्रैविध्यसिद्धौ पुनर्वचनं प्रत्येकं त्रैविध्यप्रतिपादनाय। यथाऽऽह हारीतः — गौडी माध्वी तथा पैष्टी निर्यास्या कथिताऽपरा। एवं चतुर्विधा ज्ञेयाः सुरास्तासां प्रभेदकाः॥ भेदेन द्वादश प्रोक्ताः सुराः सौवीरकारसैः। सीधुर्गौडी च मत्स्यण्डी गुडेन प्रभवास्त्रयः॥ माध्वीकं मधुकं माध्वी मधुना संयुतास्त्रयः। पैष्टी अरिष्टं जातं च तण्डुलप्रभवास्त्रयः॥ मृद्वीकारससंभूता ताडमाडरसोद्भवा। निर्यास्या सा तु विज्ञेया तासां वच्मि गुणागुणान्॥' इति। एषां च लक्षणानि वैद्यकादवगन्तव्यानि। गौड्यादिपरिगणनं तु क्षत्रियादीनां चतुर्थ्यनिषेधाय, 'कामादपि हि राजन्यो वैश्यो वाऽऽपि कथंचन। मद्यमेवासुरां पीत्वा न दोषं प्रतिपद्यते॥' इति स्मरणात्। तासु यथैवैका पैष्टी त्रिभिरपि द्विजैर्वर्जनीया, 'सुरा वै मलमन्नानां पाप्मा च मलमुच्यते। अतो ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत्॥' (मस्मृ. ११।९३) इति मनुस्मरणात्, तथा द्विजातिभिः ब्राह्मणक्षत्रियवैश्यैर्मूर्धावसिक्ताद्यनुलोमजैश्च सर्वा गौड्यादिर्नवविधाऽपि वर्जनीया, 'यथैवैका तथा सर्वा न पेया ब्रह्मवादिभिः।' (मस्मृ. ११।९४) इति मानवात्। ब्रह्मवादिनः त्रैवर्णिकाः, वेदाध्येतृत्वात्, नाध्यापनयोगिनो ब्राह्मणा एव, वदेरुच्चारणार्थत्वेनाध्यापनपरत्वाभावात्, 'एका माध्वी च पैष्टी च गौडी च त्रिविधा सुरा। द्विजातिभिर्न पातव्या कथंचिदपि कर्हिचित्॥ अज्ञानाद्वारुणीं पीत्वा प्राश्य मूत्रपुरीषके। पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः॥' इति यमस्मरणाच्च कथंचित् रोगादिष्वपि, 'मद्यं तावत् त्रिविधं गौडी पैष्टी च माध्वी च' इत्युपक्रम्य, 'मद्यप्रयोगं कुर्वन्ति शूद्रादिषु महार्तिषु। द्विजैस्त्रिभिस्तु न ग्राह्यं यद्यप्युज्जीवयेन्मृतम्॥' इति धन्वन्तरिस्मरणात्। यदपि 'कामादपि हि राजन्यो वैश्यो वाऽपि कथंचन। मद्यमेवासुरां पीत्वा न दोषं प्रतिपद्यते॥' इति वृद्धयाज्ञवल्कीयमभ्यनुज्ञानम्, तदपि उक्तनिषेधवशीकृतं सत् तालादिमद्यमात्रविषयमेव, असुरापदेन त्रिविधाया अपि सुराया व्यावर्तनात्। यत्तु 'उभौ मध्वासवक्षीबावुभौ चन्दनचर्चितौ। एकपर्यङ्कशयनौ दृष्टौ मे केशवार्जुनौ॥' इति लिङ्गम्, तदपि 'मधुमद्ये पुष्परसे' इति कोशेन 'यदपक्वौषधाम्बुभ्यां सिद्धं मद्यं स आसवः।' इत्याद्यायुर्वेदेन च गौडीमाध्वीव्यतिरिक्ततालादिमद्यासवपानगमकम्, न गौडीमाध्वीपानस्य, तयोस्तद्भेदस्याऽऽयुर्वेदप्रसिद्धत्वात्। यदपि 'यन्माल्यमासीत् तत्पश्चात् पर्यौहत। सुरा वै माल्यम्। ततो राजन्यमसृजत्। तस्माज्ज्यायांश्च कनीयांश्च श्वशुरश्च स्नुषा च श्वश्रूश्च सुरां पीत्वा विलपन्त आसते। पाप्मा वै माल्यम्। तस्माद्ब्राह्मणः सुरां न पिबेदिति पाप्मना न संसृज्यत, इति। तदेतत् क्षत्रियो ब्राह्मणं ब्रूयान्नैव सुरा पीता हिनस्ति' इति श्रुतौ अन्यार्थदर्शनम्, तत्रापि 'ब्राह्मणः सुरां न पिबेत्' इत्युपक्रमैकवाक्यतार्थं सुराशब्दः तालादिमद्यपरोऽवधेयः, अन्यथा ब्राह्मणवाक्ये सुराशब्दः त्रिविधसुरापरः, क्षत्रिय-

---

+ गृर., आप्र. निकवत्।

(१) **विस्मृ.** २२।८२; **निक.** ३३२ माध्वी च पैष्टी (पैष्टी च माध्वी) पातव्या (स्प्रष्टव्या); **गृर.** ३९४ माध्वी च पैष्टी (पैष्टी च माध्वी) पातव्या (स्पृष्टव्या); **आप्र.** ५४९ जातिभिः (जोत्तमैः) शेषं निकवत्.

वाक्ये च गौडीमाध्वीमात्रपर इति उपक्रमोपसंहारयोरर्थभेदेन वाक्यभेदापत्तेः। तालादिमद्यपरत्वे तु यदेव ब्राह्मणस्य निषिद्धं तदेव क्षत्रियस्यानुज्ञातमित्येकवाक्यत्वम्। प्रयुक्तश्च तालादिमद्येऽपि सुराशब्दो हारीतेन, 'गौडी माध्वी तथा पैष्टी निर्यास्या कथिताऽपरा। एवं चतुर्विधा ज्ञेयाः सुरास्तासां प्रभेदकाः॥' इत्युपक्रम्य 'मृद्वीकारससंभूता ताडमाडरसोद्भवा। निर्यास्या सा तु विज्ञेया तासां वच्मि गुणागुणान्॥' इत्युपसंहारात्। प्रपञ्चितं चैतत् प्रमिताक्षरायामस्माभिरिति नेहोच्यते। बहुवचनात् शूद्रोपसंग्रहः, 'गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा। चातुर्वर्णैरपेया सा तत्स्त्रीभिश्च द्विजोत्तमाः॥' इति बृहन्नारदीयात्, 'शूद्रस्य चेदृशं पापं मद्यपस्य दुरात्मनः। काको भूत्वा चिरं देवि विष्ठाभक्षश्च जायते।' इति उमामहेश्वरसंवादाच्च। मद्यशब्दोऽत्र त्रिविधसुरापरः, पूर्ववाक्यानुरोधात्, अन्यथा क्षत्रियादेः मद्याद्यभ्यनुज्ञानं शूद्रस्य च तन्निषेध इति महावैशसापत्तेः। एतेन 'न पातव्या द्विजोत्तमैः' इत्यपि व्याख्यातम्, 'एषोत्तमा' इत्यादिश्रुत्योत्तमशब्दस्यान्त्ये प्रयोगात्, सप्तमीतत्पुरुषात् द्वन्द्वस्य लघुत्वाच्चेत्यलं विस्तरेण। वै.

**[1]माधूकमैक्षवं टाङ्कं कौलं खार्जूरपानसे।**
**मृद्वीकारसमाध्वीके मैरेयं नारिकेलजम्॥**
**[2]अमेध्यानि दशैतानि मद्यानि ब्राह्मणस्य च।**
**राजन्यश्चैव वैश्यश्च स्पृष्ट्वैतानि न दुष्यतः॥**

(१) माधूकं मधुपुष्पभवम्। ऐक्षवम् इक्षुरसभवम्। टाङ्कम्, टङ्कः कपित्थविशेषः, तद्भवम्। कौलं कोलिफलजम्। खार्जूरं खर्जूरफलजम्। पानसं कण्टकिफलजम्। मृद्वीकारसं द्राक्षाद्रवजम्। मैरेयं धातुपुष्पं गुडधान्याम्बुसहितमिति शब्दार्णवे वाचस्पतिः।

+ निक. ३३२-३३३

(२) कोलिः बदरी। माध्वीकं मधुकार्यम्।

* गृर. ३९४

(३) टङ्कः कपित्थसदृशः काश्मीरदेशप्रसिद्धः, तद्भवं टाङ्कम्, खार्जूरं खर्जूरवृक्षजं तत्फलजं च। एवं पानसम्। माध्वीकं मधुसंधानजम्।

ρ गप. ४०८

(४) ऐक्षवम् इक्षुरससंभवं गौडीव्यतिरिक्तम्। ...कौलम्, कोलं बदरम्, तज्जातम्। ... माध्वीकं मधूद्भवं माध्वीव्यतिरिक्तम्। ...नारिकेलजं नारिकेलवृक्षोद्भवं जलम्। एतानि दश मद्यानि मदजनकानि ब्राह्मणस्य अमेध्यानि अस्पृश्यानि। स्पर्शनिषेधादर्थसिद्धः पाननिषेधः, 'नित्यं मद्यं ब्राह्मणो वर्जयेत्' इति गौतमीयात्। राजन्यवैश्ययोः पुनरेतत्स्पर्शे न दोषः। स्पर्शः पानोपलक्षणम्, 'मद्यमेवासुरां पीत्वा' इत्यभ्यनुज्ञानात्। न च ऐक्षवमाध्वीकयोरेव मद्ययोर्गौडीमाध्वीत्वं शङ्कनीयम्, पूर्वेण पौनरुक्त्यात्, क्षत्रियवैश्ययोस्तन्निषेधाभ्यनुज्ञाविरोधाच्च। पुलस्त्यस्तु एकादशेत्याह — 'पानसं द्राक्षमाधूकं खार्जूरं तालमैक्षवम्। मधूत्थं सैरमारिष्टं मैरेयं नारिकेलजम्। समानानि विजानीयान्मद्यान्येकादशैव तु॥' इति। तालं तालवृक्षोद्भवम्। सिरा सिन्दीवृक्षः, तद्भवं सैरम्। अरिष्टः फेनिलः, तद्भवमारिष्टम्। मिरा माडीवृक्षः, तद्भवं मैरेयम्।

*वै.

याजनाध्यापनाभ्यां प्राग्याज्याध्याप्ययोः परीक्षणम्

**[1]नापरीक्षितं याजयेत्॥**

कुलशीलवृत्तादिभिरपरीक्षितं न याजयेत्। वै.

**नाध्यापयेत्॥**

उक्तगुणैरपरीक्षितं नाध्यापयेत्। वै.

---

(१) **विस्मृ.** २२।८३; **निक.** ३३२ रिकेल (लिकेर); **गृर.** ३९४ माधूक (माध्वीक) खार्जू (खर्जू) नसे (नसम्) रसमाध्वीके (रसं माध्वीकं); **पमा.** २।४१० टाङ्कं (सैरं) द्वितीयतृतीयचरणयोः (तालखार्जूरपानसम्। धूस्तूरं चैव माध्वीकं) बृहद्विष्णुः; **गप.** ४०८ नसे (नसम्) माध्वीके (माध्वीकं) वशिष्ठः; **आप्र.** ५४९ नसे (नसम्) के मैरेयं नारिकेल (कमैरेयं नालिकेर); **बाल.** १।३३ पृ.१६१ निकवत्; **कृभ.** १२९१ (माधूकमैक्षवं सैरं तालं खार्जूरपानसम्। मधूत्थं चैव माध्वीकं मैरेयं नारिकेरजम्॥).

(२) **विस्मृ.** २२।८४; **निक.** ३३२ च (तु); **गृर.** ३९४ चतुर्थचरणे (स्पृष्ट्वा चेतो न दुष्यति); **पमा.** २।४१० मद्यानि (निन्द्यानि) च (तु) पू. बृहद्विष्णुः; **गप.** ४०८ च (तु) चतुर्थचरणे (स्पृष्ट्वा वै तैर्न दुष्यतः) वशिष्ठः; **आप्र.** ५५० च (तु) स्पृष्ट्वैतानि न (स्पृष्ट्वा चैतानि); **बाल.** १।३३ पृ.१६१ स्पृष्ट्वैतानि (स्पृष्ट्वा चैतौ); **कृभ.** १२९१ च (तु) पू.

\+ आप्र., बाल. निकगतम्।

* शेषं निकवत्।

ρ शेषं निकगतम्।

(१) **विस्मृ.** २९।४-५; **ब्रक.** १०५; **पमा.** १।१३६; **प्रपा.** २६२; **आपा.** १११; **निप्र.** २।२४०; **संर.** ३१२.

कामक्रोधलोभानां निन्दा

**[1]अथ पुरुषस्य कामक्रोधलोभाख्यं रिपुत्रयं सुघोरं भवति॥**

अथेति प्रकरणान्तरप्रस्तावः। पुरुषस्य मनुष्यस्य कामादिसंज्ञकं सुघोरं दुर्जयं रिपुत्रयं भवतीति प्रायोवादः, दोषबहुलत्वान्मनुष्याणाम्। तत्र कामः अभिलाषः। क्रोधः जिघांसाहेतुरमर्षः। लोभः लिप्सातिशयः। वै.

**परिग्रहप्रसङ्गाद्विशेषेण गृहाश्रमिणः॥**

परिग्रहः गृहदारादिस्वीकारः। तत्र प्रसङ्गः अभिनिवेशः। तस्माद्धेतोः गृहाश्रमिणो विशेषेण अन्यापेक्षयाऽतिशयेन कामादयो भवन्तीति स्वभावानुवादः। वै.

**तेनायमाक्रान्तोऽतिपातकमहापातकानुपातकोपपातकेषु प्रवर्तते॥**

कामादिकार्यतां प्रदर्शयन्नेव पातकगणस्योद्देशमाह— तेनेति। तेन कामादिरिपुत्रयेण आक्रान्तः अभिभूतः अयं मनुष्योऽतिपातकादौ प्रवर्तते। अतिशयेन पातयति नरके इत्यतिपातकम्। अतिशयश्च कल्पोपभोग्यत्वम्। तेन कल्पोपभोग्यमतिपातकम्, मन्वन्तरोपभोग्यं महापातकम्, मन्वन्तरोपभोग्यमेवानुपातकम्, चतुर्युगोपभोग्यमुपपातकमिति वक्ष्यति। अत्र प्रथमोद्देशान्नरकातिशयात्प्रायश्चित्तातिरेकाच्च महापातकादतिपातकं गरीयः, महारुद्रादतिरुद्र इव। तथा च हारीतः — 'पञ्चविधमशुभं भवति प्रासङ्गिकोपपातकपातकमहापातकात्यन्तपातकानि' इति। मूलवचने पूर्वपूर्वं गरीयः, अत्र तूत्तरोत्तरमिति। प्रासङ्गिकं जातिभ्रंशकरादिपञ्चकम्। पातकम् अनुपातकपर्यायः, 'महापातकतुल्यानि पापान्युक्तानि यानि तु। तानि पातकसंज्ञानि तन्न्यूनमुपपातकम्॥' इति स्मरणात्।

यत्तु 'स्त्रीगोवृषलवैश्यक्षत्रियघाती सोमविक्रयी शूद्रसहभोजी कन्यादूष्यगारदाही वृषलीपतिरग्न्युत्सादी चेति पातकानि' इति पैठीनसिना पृथक् पातकानि परिगणितानि तत् पापपर्यायत्वेन न संज्ञाकरणाय, उपपातकादिषु पाठेन तत्संज्ञावरुद्धत्वात्। न च तुल्यकालनरकफलत्वादेकप्रायश्चित्तत्वाच्चा महापातकानुपातकयोरभेदापत्तिः, नरकानन्तरोत्पन्नयोनिविशेषप्राप्तेर्भेदकत्वात्। वै.

(१) **विस्मृ.** ३३।१-५.

**जातिभ्रंशकरेषु संकरीकरणेष्वपात्रीकरणेषु॥**

किञ्च — जातिभ्रंशेति। एते त्रयः संज्ञाशब्दाः योगरूढाः। तत्र जातेः अभिजनसमूहात् भ्रंशम् अधःपातं कुर्वन्तीति जातिभ्रंशकराणि। असंकरं ब्राह्मणादिवर्णमपि संकरं संकरसमानधर्माणं कुर्वन्तीति संकरीकरणानि। अनपात्रं प्रतिग्रहाद्यर्हमप्यपात्रं प्रतिग्रहाद्यनर्हं कुर्वन्तीत्यपात्रीकरणानि। वै.

**मलावहेषु प्रकीर्णकेषु च॥**

पूर्ववदेतावपि योगरूढौ शब्दौ मलम् आवहन्तीति मलावहानि, अमलिनं मलिनं कुर्वन्तीति मलिनीकरणानीति वा संज्ञान्तरम्। प्रकर्षेण कीर्णं बहुलम् अनायासोपपन्नं प्रकीर्णकम्। तेषु च प्रवर्तते। वै.

**[1]त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः।**
**कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत्॥**

उक्तार्थोपसंहारेण तत्त्यागमाह — त्रिविधमिति। कामादित्रिकमिदमुक्तपातकोपजननेन तत्फलीभूतवक्ष्यमाणनरकस्य द्वारं प्रवेशनोपाय इत्यनुवादः। तस्मादेतत्त्रयं त्यजेदिति विधिः। वै.

हिंसाया निन्दा अहिंसकस्य
प्रशंसा च

**[2]गृहे गुरावरण्ये वा निवसन्नात्मवान् द्विजः।**
**नावेदविहितां हिंसामापद्यपि समाचरेत्॥**

मांसार्थं हिंसानिषेधस्य सर्वाश्रमसाधारण्यमाह — गृह इति। गृहादिवासिनः गृहस्थब्रह्मचारिवानप्रस्थाः, आत्मवान् संन्यासी च। द्विजग्रहणात् शूद्रस्यानिषेधः। एते आपदि प्राणसंशयेऽपि तद्रक्षायै मांसार्थं वेदाविहितां हिंसां नाऽऽचरेयुः। हिंसानिषेधात् सिद्धोपादानं वेदाविहितनिषेधाच्च यज्ञशिष्टोपादानमनिषिद्धम्। वै.

हिंसाया निन्दा अहिंसायाः
स्तुतिश्च

**[3]योऽहिंसकानि भूतानि हिनस्त्यात्मसुखेच्छया।**
**स जीवंश्च मृतश्चैव न क्वचित्सुखमेधते॥**

(१) **विस्मृ.** ३३।६; **अप.** ११५४ पृ. २२२ स्येदं (स्येह); **गृक.** ३८५ चतुर्थचरणे (तदेतत् त्रितयं त्यजेत्); **गृर.** ५६७; **निप्र.** २।४७०; **मुक्ता.** १७० अपवत्.

(२) **विस्मृ.** ५१।६६.

(३) **विस्मृ.** ५१।६८-७०.

वृथाहिंसास्वरूपमाह — योऽहिंसेति। स्वसुखनिमित्तम् अहिंसकानि हिंसार्थमनुद्यतानि भूतानि यः हिनस्ति स इहामुत्र च सुखभाक् न भवति। अहिंसकानीति विशेषणात् आततायिवधे न दोषः इत्युक्तमधस्तात्। व्याघ्रादिहनने तु न दोषः। वै.

**यो बन्धनवधक्लेशान् प्राणिनां न चिकीर्षति।**
**स सर्वस्य हितप्रेप्सुः सुखमत्यन्तमश्नुते॥**

कायिकीमहिंसां स्तुत्वा मानसीं स्तौति — यो बन्धेति। यः प्राणिनां वधबन्धादिक्लेशान् न चिकीर्षति स सर्वेषामपि हितप्रेप्सुत्वादात्यन्तिकसुखभाग्भवति। वै.

**यद्ध्यायति यत् कुरुते रतिं बध्नाति यत्र च।**
**तदेवाऽऽप्नोत्ययत्नेन यो हिनस्ति न किंचन॥**

अहिंसायामैहिकं फलमाह — यद्ध्यायतीति। यत् स्थावरं जङ्गमं वा किंचिदपि भूतं न हिनस्ति, स ज्ञानेच्छाकृतिविषयान् सर्वानपि ऐहिकान् कामान् अयत्नेनैव प्राप्नोति। वै.

स्तेयनिषेधः

[1]**जीवितं धर्मकामौ च धने यस्मात्प्रतिष्ठितौ।**
**तस्मात्सर्वप्रयत्नेन धनहिंसां विवर्जयेत्॥**

यतो जीवितं प्राणधारणम् आहारादिसाधनतया, धर्मः दानादिकर्म(साधन)तया, कामश्चोपभोगविषयं(साधन)तया धनेनैव साध्यन्ते, अतः धनापहारे परकीयप्राणधर्मकामनाशात् सर्वेण कायवाङ्मनोजन्येन व्यापारेण धनस्य हिंसां स्तेयं वर्जयेत्। वै.

ग्रहणकाले भोजननिषेधः
स्नानादिविधिश्च

[2]**चन्द्रार्कोपरागे नाश्नीयात्॥**

उक्ते भोजने विधिनिषेधावष्टषष्टितमेनाऽऽह — चन्द्रेति। चन्द्रसूर्यग्रहणकाले ग्रहणप्रहरात् पूर्वं यामत्रयं यामचतुष्टयं च नाश्नीयात्। तथा च व्यासः — 'ग्रहकाले च नाश्नीयात्' इति। वृद्धगौतमोऽपि — 'सूर्यग्रहे तु नाश्नीयात् पूर्वं यामचतुष्टयम्। चन्द्रग्रहे तु यामांस्त्रीन् बालवृद्धातुरैर्विना॥' इति। चन्द्रार्कयोः सर्वग्रहे यामचतुष्टयम्, खण्डग्रहे यामत्रयमित्यर्थः, 'चन्द्रार्कसर्वग्रासे तु नाद्याद्यामचतुष्टयम्। खण्डग्रहे तु यामांस्त्रीन् प्राग्भुजिं परिवर्जयेत्॥' इति ब्रह्मवैवर्तात्। बालादिषु तु विशेषमाह मार्कण्डेयः — 'सायाह्ने ग्रहणं चेत् स्यादपराह्ने न भोजनम्। अपराह्ने न मध्याह्ने मध्याह्ने न तु संगवे। भुञ्जीत संगवे चेत् स्यान्न पूर्वभुजिमाचरेत्॥' इति। वै.

[1]**स्नात्वा मुक्तयोरश्नीयात्॥**

यदा तु न पूर्वं भोजनकालस्तदाऽऽह — स्नात्वेति। मु(? भु)क्तेः पूर्वं स्नानवचनं मुक्तिस्नानताभ्रमनिरासाय। तेन मुक्तिस्नानानन्तरं भोजनाङ्गतया स्नात्वाऽश्नीयात्, 'अस्नाताशी मलं भुङ्क्ते' इति भोजनाङ्गस्नानश्रवणात्, तस्मिंश्च मुक्तिस्नानानन्तरमेवाधिकारात्, 'आशौचं जायते नृणां ग्रहणे चन्द्रसूर्ययोः। राहुस्पर्शे तयोः स्नात्वा स्नानादौ कल्पते नरः॥' इति ब्रह्माण्डपुराणात्। वै.

[2]**अमुक्तयोरस्तं गतयोः स्नात्वा दृष्ट्वा चापरेऽह्नि॥**

ग्रस्तास्ते विशेषमाह — अमुक्तयोरिति। अमुक्तयोरित्यादि(? दिः) कर्मणि षष्ठी। तेन राहुग्रस्तावेव अस्तं गतौ चन्द्रार्कौ परेऽह्नि अर्थादुदितौ दृष्ट्वा, चकारात् मुक्तिनिमित्तं स्नात्वा, पुनः स्नात्वा अश्नीयात्। मुक्तिदर्शनोत्कर्षात् स्नानस्याप्युत्कर्षः, 8तदाद्युत्कर्षन्यायात्। दर्शनात् प्राक् स्नानवचनं तूक्तप्रयोजनमेव। ततश्च रविग्रस्तास्ते अहोरात्रं चन्द्रग्रस्तास्ते अहर्मात्रं नाश्नीयादिति सिद्धम्। तथा च भृगुः — 'ग्रस्तावेवास्तमानं तु रवीन्दू प्राप्नुतो यदि। परेद्युरुदये दृष्ट्वा स्नात्वाऽभ्यवहरेन्नरः॥' इति। दर्शनं शास्त्रीयज्ञानोपलक्षणम्, 'मेघमालादिदोषेण यदि मुक्तिर्न दृश्यते। आकलय्य ततः कालं स्नात्वा भुञ्जीत वाग्यतः॥' इति स्मृत्यन्तरात्। ग्रस्तोदये तु वसिष्ठः — 'ग्रस्तोदये विधोः पूर्वं नाहर्भोजनमाचरेत्। रविग्रस्तोदये पूर्वरात्रौ च भुजिवर्जनम्॥' इति। वै.

दमयमयोर्विधानं प्रशंसा च

[3]**दमयमेन तिष्ठेत्॥**

एवं गृहस्थसाधारणं स्नातकधर्ममभिधाय, आश्रमचतुष्टयसाधारणं धर्मं द्विसप्ततितमाध्यायेनाऽऽह — दमेति।

(१) विस्मृ. ५२।१६; गृक. ३१५; गृर. ५१५; निप्र. २।४२०.
(२) विस्मृ. ६८।१; कृर. ६२६; गृर. ३२८.

8'तदादि वाऽभिसंबन्धात् तदन्तमपकर्षे स्यात्' (जैसू. ५।१।२४) इति न्यायादित्यर्थः।
(१) विस्मृ. ६८।२.
(२) विस्मृ. ६८।३; कृर. ६२६ गतयोः.... परेऽह्नि (गतयोर्दृष्ट्वा स्नात्वा परेऽहनि).
(३) विस्मृ. ७२।१; गृक. २९५ न ति (नाऽऽति).

आशौचान्ते तु 'आशौचान्ते कृतश्मश्रुकर्माणः' इति विष्णुवचनेन जीवत्पितृकोऽपि श्मश्रुवपनं कुर्यात्, निषेधस्य रागप्राप्तविषयकत्वादिति गुर्जराः। श्मश्रुवपनस्य पितृमरणादिवपनं विना आचार्येण निषेधात्, 'यस्य यस्य च वर्णस्य यद्यत्स्यात्पश्चिमं त्वहः। स तत्र वस्त्रशुद्धिं च गृहशुद्धिं करोत्यपि। केशश्मश्रुनखादीनां यत्त्याज्यं तज्जहात्यपि॥' इति ब्रह्मपुराणीयवचनेन आशौचान्तवपनस्य शुद्ध्यर्थत्वलाभात्, श्मश्रुव्यतिरिक्तकेशादिवपनेनापि शुद्धेर्लाभात्, समाचाराच्चा श्मश्रुव्यतिरिक्तकेशादिवपनमेव जीवत्पितृकेणाऽऽशौचान्तेऽनुष्ठेयमित्यन्ये।

संदी. २।६२-६३

चक्राद्यङ्कनं गीतनृत्यादिकं च
द्विजभिन्नानां धर्मः

[1]**शङ्खचक्राद्यङ्कनं च गीतनृत्यादिकं तथा।**
**एकजातेरयं धर्मो न जातु स्याद्द्विजन्मनः॥**

## लघुविष्णुः

तेजःसत्यादयः क्षत्रियधर्माः, वाणिज्यादयो
वैश्यधर्माः, द्विजशुश्रूषा पञ्चयज्ञविधानं
च शूद्रधर्माः, क्षत्रियवैश्ययोरपि
पूर्ववर्णशुश्रूषा धर्मः

[2]**तेजः सत्यं धृतिर्दाक्ष्यं संग्रामेष्वनिवर्तिता।**
**दानमीश्वरभावश्च क्षत्रधर्मः प्रकीर्तितः॥**
**क्षत्रियस्य परो धर्मः प्रजानां परिपालनम्।**
**तस्मात्सर्वप्रयत्नेन रक्षयेन्नृपतिः प्रजाः॥**
**त्रीणि कर्माणि कुर्वीत राजन्यस्तु प्रयत्नतः।**
**दानमध्ययनं यज्ञं ततो योगनिषेवणम्॥**
**ब्राह्मणानां च संतुष्टिमाचरेत्सततं तथा।**
**तेषु तुष्टेषु नियतं राज्यं कोशश्च वर्धते॥**
**वाणिज्यं कर्षणं चैव गवां च परिपालनम्।**
**ब्राह्मणक्षत्रसेवा च वैश्यकर्म प्रकीर्तितम्॥**
**खलयज्ञं कृषीणां च गोयज्ञं चैव यत्नतः।**
**कुर्याद्वैश्यश्च सततं गवां च शरणं तथा॥**
**ब्राह्मणक्षत्रवैश्यांश्च चरेन्नित्यममत्सरः।**
**कुर्वंस्तु शूद्रः शुश्रूषां लोकाञ्जयति धर्मतः॥**
**पञ्चयज्ञविधानं तु शूद्रस्यापि विधीयते।**
**तस्य प्रोक्तो नमस्कारः कुर्वन्नित्यं न हीयते॥**

(१) शूक. ६० विष्ण्वाश्वलायनौ.
(२) लविस्मृ. ५।२-९, १२.

**कुर्याच्छूद्रस्तु शुश्रूषां ब्रह्मक्षत्रविशां क्रमात्।**
**कुर्यादुत्तरयोर्वैश्यः क्षत्रियो ब्राह्मणस्य तु॥**

## शङ्खः

यजनादयो द्विजधर्माः, द्विजशुश्रूषादयः
शूद्रधर्माः, क्षमादयः
सामान्यधर्माः

[1]**यजनं याजनं दानं तथैवाध्यापनक्रिया।**
**प्रतिग्रहं चाध्ययनं विप्रकर्माणि निर्दिशेत्॥**
**दानं चाध्ययनं चैव यजनं च यथाविधि।**
**क्षत्रियस्य च वैश्यस्य कर्मेदं परिकीर्तितम्॥**
**क्षत्रियस्य विशेषेण प्रजानां परिपालनम्।**
**कृषिगोरक्ष्यवाणिज्यं विशश्च परिकीर्तितम्॥**
**शूद्रस्य द्विजशुश्रूषा सर्वशिल्पानि चाप्यथ।**
**क्षमा सत्यं दमः शौचं सर्वेषामविशेषतः॥**

ग्रहणादिषु दानस्नानविधिः

[2]**हस्तिच्छायासु यद्दत्तं यद्दत्तं राहुदर्शने।**
**विषुवत्ययने चैव सर्वमानन्त्यमुच्यते॥**
[3]**वापीकूपतटाकेषु गिरिप्रस्रवणेऽपि वा।**
**नद्यां नदे देवखाते सरसीषूद्धृताम्बुभिः।**
**उष्णोदकेऽपि वा स्नायाद्ग्रहणे चन्द्रसूर्ययोः॥**

(१) उष्णोदकस्नानमातुरविषयम्, 'आदित्यकिरणैः पूतं पुनः पूतं च वह्निना। आर्तो व्याध्यातुरः स्नायाद्ग्रहणेऽप्युष्णवारिणा॥' इति व्याघ्रस्मरणात्। × मुक्ता. २७१

(२) महानद्यसंभवे शङ्खः – 'वापीकूपतडागेषु... चन्द्रसूर्ययोः॥'। इह पूर्वपूर्वाभावे उत्तरोत्तरोऽनुकल्पः। उक्तं च मार्कण्डेयेन – 'शीतमुष्णोदकात्पुण्यमपारक्यं परोदकात्। भूमिष्ठमुद्धृतात्पुण्यं ततः प्रस्रवणोदकम्॥ ततोऽपि सारसं पुण्यं ततः पुण्यं नदीजलम्। तीर्थतोयं ततः पुण्यं महानद्यम्बु पावनम्। ततस्ततोऽपि गङ्गाम्बु पुण्यं पुण्यस्ततोऽम्बुधिः॥'।

αसम. ७७

× आन. मुक्तावत्।
α शेषं मुक्तावत्।
(१) शंस्मृ. १।२-५.
(२) शंस्मृ. १४।३१.
(३) मुक्ता. २७१; सिन्धु. २९० तटाके (तडागे) णेऽपि वा (णेऽपि च) म्बुभिः (म्बुनि) दकेऽपि (दकेन); सम. ७७ णेऽपि वा (णेषु च) शेषं सिन्धुवत्; विपा. ३।२।४६५ समवत्; आन. २४२ णेऽपि वा (णेऽपि च) ताम्बुभिः (ताम्भसि).

ब्राह्मणस्यैव विद्यास्थानेषु इतरान्प्रति
वृत्त्युपदेशे चाधिकारः

**[1]एतानि ब्राह्मणोऽधिकुरुते स च वृत्तिं दर्शयतीतरेषाम्॥**

शङ्खेन विद्यास्थानान्युक्त्वा 'एतानि...तीतरेषाम्' इति बहुवचनेन ज्ञानोपदेशो विप्रद्वारेणैवेति शूद्रस्याधिकार उक्तः सोऽपि श्रवणपर एव। शूक. १७

## लघुशङ्खः

इष्टापूर्ते ब्राह्मणस्य विशेषधर्मौ द्विजानां
सामान्यधर्मौ च, इष्टलक्षणम्,
शूद्रस्य पूर्तेऽधिकारः,
न वैदिके

**[2]इष्टापूर्तौ(?र्ते) तु कर्तव्यौ(?व्ये) ब्राह्मणेन विशेषतः।**
**इष्टेन लभते स्वर्गं मोक्षं पूर्तेन विन्दति॥**
**अग्निहोत्रं तपः सत्यं वेदानां चैव धारणम्।**
**आतिथ्यं वैश्वदेवं च इष्टमित्यभिधीयते॥**
**[3]इष्टापूर्तै(?र्ते) द्विजातीनां सामान्ये धर्मसाधने।**
**अधिकारी भवेच्छूद्रः पूर्तधर्मे न वैदिके॥**

## लिखितः

इष्टापूर्ते ब्राह्मणस्य विशेषधर्मौ द्विजानां
सामान्यधर्मौ च, इष्टलक्षणम्,
शूद्रस्य पूर्तेऽधिकारः,
न वैदिके

**[4]इष्टापूर्ते तु कर्तव्ये ब्राह्मणेन प्रयत्नतः।**
**इष्टेन लभते स्वर्गं पूर्तेन मोक्षमाप्नुयात्॥**
**अग्निहोत्रं तपः सत्यं वेदानां चैव पालनम्।**
**आतिथ्यं वैश्वदेवं च इष्टमित्यभिधीयते॥**
**इष्टापूर्ते द्विजातीनां सामान्यो धर्म उच्यते।**
**अधिकारी भवेच्छूद्रः पूर्ते धर्मे न वैदिके॥**

## शङ्खलिखितौ

विप्रकर्मककोपननिषेधः

**[5]मन्युप्रहरणा विप्राश्चक्रप्रहरणो हरिः।**
**चक्रात्तीक्ष्णतरो मन्युस्तस्माद्विप्रान्न कोपयेत्॥**

(१) मिता. १।३; शूक. १७; संप्र. ५१२ (वृत्तिं०).
(२) लशंस्मृ. १, ५.
(३) लशंस्मृ. ६; शूक. ४१ उत्त. (=).
(४) लिस्मृ. १, ५-६.
(५) शंलिस्मृ. ३१.

परस्वकामनाया अभक्ष्यभक्षणस्य
अकर्तव्यकरणस्य च निषेधः

**[1]आपत्स्वपि हि कष्टासु परस्वं नैव कामयेत्।**
**नाभक्ष्यं भक्षयेत्किंचिन्न पूर्वचरितं चरेत्॥**

(१) पूर्वचरितं निषिद्धमात्रा(?त्रम)भिप्रेतम्। 8ब्रक. २८

(२) पूर्वैः पित्रादिभिः आचरितं न चरेदित्यर्थः। आन. ६५२

**[2]अकर्तव्यं न कर्तव्यं प्राणैः कण्ठगतैरपि।**
**कर्तव्यमेव कर्तव्यं प्राणैः कण्ठगतैरपि॥**

संध्याकालवर्ज्यानि कर्माणि

**[3]आहारं मैथुनं निद्रां संध्याकालेषु वर्जयेत्।**
**कर्म चाध्यापनं चैव तथा दानप्रतिग्रहौ॥**

नियमपञ्चकम्

**[4]अक्रोध आर्जवं शौचं व्यवहारो गुरुशुश्रूषा चेति नियमाः पञ्च॥**

व्यवहारः शास्त्रार्थाचरणम्। अक्रोधादीनामत्रान्तर्भावेऽपि आदरार्थं पुनर्वचनम्। गृक. ३०३

## महाभारतम्

अहिंसा सत्यवचनं क्षमा च ब्राह्मणस्य
परमो धर्मः, प्रजापालनं
क्षत्रियधर्मः

**[5]अहिंसा परमो धर्मः सर्वप्राणभृतां स्मृतः।**
**तस्मात्प्राणभृतः सर्वान्न हिंस्याद्ब्राह्मणः क्वचित्॥**
**[6]ब्राह्मणः सौम्य एवेह जायतेति परा श्रुतिः।**
**वेदवेदाङ्गवित्तात सर्वभूताभयप्रदः॥**

सौम्यः अतीक्ष्णस्वभावः। नीटी.

**[7]अहिंसा सत्यवचनं क्षमा चेति विनिश्चितम्।**
**ब्राह्मणस्य परो धर्मो वेदानां धारणादपि॥**

8 कृर. ब्रकवत्।
(१) अप. १।१५४ पृ. २२४ नैव कामयेत् (कामयेत न); ब्रक. २८ कष्टा (काष्ठा); कृर. ३४ परस्वं (परमं); मुक्ता. ४६५ हि (च) न पू (नापू) शेषम् अपवत्; आन. ६५२ मुक्तावत्.
(२) मुक्ता. ४६५; आन. ६५२.
(३) पमा. १।१८१; मुक्ता. ४७ चाध्याप (चाध्यय).
(४) गृक. ३०३.
(५) भा. १।११।१२; भापु. १।११।१३-१४ स्मृतः (वरः).
(६) भा. १।११।१३; भापु. १।११।१४-१५ जायतेति (भवतीति) तात (न्नाम).
(७) भा. १।११।१४; भापु. १।११।१५-१६ णादपि (णाऽपि च).

अहिंसा अविधिस्पृष्टहिंसाया अभावः। नीटी.

[1]क्षत्रियस्य तु यो धर्मः स नेहेष्यति वै तव।
दण्डधारणमुग्रत्वं प्रजानां परिपालनम्॥
[2]तदिदं क्षत्रियस्याऽऽसीत्कर्म वै शृणु मे रुरो॥
[3]सर्वथा वर्तमानस्य राज्ञो ह्यस्मद्विधैः सदा।
क्षन्तव्यं पुत्र धर्मो हि हतो हन्ति न संशयः॥

सर्वथा अस्मास्वपराधेनापि वर्तमानस्य। हतो नाशितो धर्मो हन्त्येव। धर्मनाशमेवाऽऽह यदीत्यादिना।

नीटी.

[4]यदि राजा न रक्षेत पीडा वै नः परा भवेत्।
न शक्नुयाम चरितुं धर्मं पुत्र यथासुखम्॥
[5]रक्ष्यमाणा वयं तात राजभिः शास्त्रदृष्टिभिः।
चरामो विपुलं धर्मं तेषां चांशोऽस्ति धर्मतः॥
[6]सर्वथा वर्तमानस्य राज्ञः क्षन्तव्यमेव हि॥

सत्यानृते परमधर्माधर्मौ

[7]नास्ति सत्यात्परो धर्मो न सत्याद्विद्यते परम्।
न हि तीव्रतरं किंचिदनृतादिह विद्यते॥

कामनिन्दा शमविधिश्च

[8]न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते॥
पृथिवी रत्नसंपूर्णा हिरण्यं पशवः स्त्रियः।
नालमेकस्य तत्सर्वमिति मत्वा शमं व्रजेत्॥

हविषा समिदाज्यादिना। एकस्य कामिनः सर्वं नालम् अपर्याप्तम्। शमं कामशान्तिम्। नीटी.

सुरापस्य ब्राह्मणस्य निन्दा

[9]यो ब्राह्मणोऽद्यप्रभृतीह कश्चि-
न्मोहात्सुरां पास्यति मन्दबुद्धिः।
अपेतधर्मा ब्रह्महा चैव स स्या-
दस्मिँल्लोके गर्हितः स्यात्परे च॥
[1]मया चेमां विप्रधर्मोक्तिसीमां
मर्यादां वै स्थापितां सर्वलोके।
सन्तो विप्राः शुश्रुवांसो गुरूणां
देवा लोकाश्चोपशृण्वन्तु सर्वे॥

निर्दोषाणि पञ्चानृतानि

[2]न नर्मयुक्तं वचनं हिनस्ति
न स्त्रीषु राजन्न विवाहकाले।
प्राणात्यये सर्वधनापहारे
पञ्चानृतान्याहुरपातकानि॥

नर्मयुक्तं परिहासयुक्तं वचनम् अनृतमपि न हिनस्ति। दोषजनकं न भवतीत्यर्थः। स्त्रीषु गम्यासु 'अहमेनां न रमये' इत्युक्तिरनृताऽपि कृता चेन्न हिनस्ति। धनेत्युपलक्षणं स्वदेहेऽपि। नीटी.

परुषवचननिषेधः, तितिक्षायाः
मधुरवचनस्य च विधिः

[3]आक्रुश्यमानो नाऽऽक्रोशेन्मन्युरेव तितिक्षतः।
आक्रोष्टारं निर्दहति सुकृतं चास्य विन्दति॥

अस्य आक्रोष्टुः सुकृतं तितिक्षुर्विन्दति, न त्वाक्रोशी। प्रत्याक्रोशी तु स्वीयमपि सुकृतं नाशयतीति भावः॥

नीटी.

[4]नारुंतुदः स्यान्न नृशंसवादी
न हीनतः परमभ्याददीत।
ययाऽस्य वाचा पर उद्विजेत
न तां वदेद्रुशतीं पापलोक्याम्॥

नारुंतुद इति। कोपेन न नृशंसवादीति वाचा परपीडां न कुर्यादित्युक्तम्। न हीनतः परमभ्याददीतेति हीनेन अभिचारादिकर्मणा परं शत्रुं न वशे कर्तुमिच्छेदिति न मनसाऽपि परपीडां कुर्यादित्युक्तम्। अरुः क्षतम्, तद्वदत्यन्तं तुदति व्यथयतीति कण्टकवन्न स्यादिति पदार्थः ॥ न नृशंसवादी स्यादित्येतत्सार्धेन प्रपञ्चयति — ययाऽस्येति।

(१) भा. १।११।१५; भानु. १।११।१६-१७ तु (हि) नेहेष्यति (हि नेष्येत).
(२) भा. १।११।१६; भानु. १।११।१७.
(३) भा. १।३७।२२; भानु. १।४१।२१-२२.
(४) भा. १।३७।२३; भानु. १।४१।२२-२३ रक्षेत (संरक्षेत्) वै नः परा (नः परमा).
(५) भा. १।३७।२४; भानु. १।४१।२३-२४ भिः शास्त्र (निर्धर्म) चांशो (भागो).
(६) भानु. १।४१।२४.
(७) भा. १।६१।२४; भानु. १।७४।१०५ सत्यात्परो (सत्यसमो).
(८) भानु. १।७५।५०-५१.
(९) भा. १।७१।५४; भानु. १।७६।६७ धर्मो (धर्मा).

(१) भा. १।७१।५५; भानु. १।७६।६८ चेमां (चैतां).
(२) भा. १।७७।१६; भानु. १।८२।१६.
(३) भा. १।८२।७; भानु. १।८७।७.
(४) भा. १।८२।८; भानु. १।८७।८ रुशतीं (रुषतीं) आदर्शवदपि पाठः.

केचिद्धर्मरुचयः केचिद्विपरीताः, यतो दैवाधीनाः। अत एव नष्टा वृथाभूता चेष्टा उद्योगः अधिकारः योग्यता च येषां ते तथा। मूढानां पुण्ये पण्डितानां पापे च प्रवृत्तिकरं दैवमेव बलवदित्यर्थः। एवं विद्वांस्तत्तत्प्राप्य न विहन्येत हर्ष-विषादाभ्यामात्मानं न हिंस्यादित्यर्थः। नीटी.

**[1]सुखं हि जन्तुर्यदि वाऽपि दुःखं**
**दैवाधीनं विन्दति नाऽऽत्मशक्त्या।**
**तस्माद्दिष्टं बलवन्मन्यमानो**
**न संज्वरेन्नापि हृष्येत्कदाचित्॥**
**[2]दुःखे न तप्येन्न सुखेन हृष्ये-**
**त्समेन वर्तेत सदैव धीरः।**
**दिष्टं बलीय इति मन्यमानो**
**न संज्वरेन्नापि हृष्येत्कदाचित्॥**

एतदेव विवृणोति– सुखं हीति द्वाभ्याम्।

नीटी.

तपोदानादीनां सप्तानां स्वर्गद्वाराणां दम्भाहंकाराभ्यां नाशः, मानाव-मानसहिष्णुत्वविधिः

**ययातिरुवाच –**

**[3]तपश्च दानं च शमो दमश्च**
**ह्रीरार्जवं सर्वभूतानुकम्पा।**
**स्वर्गस्य लोकस्य वदन्ति सन्तो**
**द्वाराणि सप्तैव महान्ति पुंसाम्।**
**नश्यन्ति मानेन तमोभिभूताः**
**पुंसः सदैवेति वदन्ति सन्तः॥**

नश्यन्ति मानेन तमोभिभूताः पुंस इति। तपआदयः सप्त स्वर्गस्य द्वारभूता अपि पुंसः पुरुषस्य मानेन अहमेव श्रेष्ठः कर्ता इत्यभिमानेन नश्यन्ति। यतस्ते तमोभिभूताः मानरूपेण तमसा अभिभूताः षण्ढीकृताः। नीटी.

**[4]अधीयानः पण्डितं मन्यमानो**
**यो विद्यया हन्ति यशः परेषाम्।**
**तस्यान्तवन्तश्च भवन्ति लोका**
**न चास्य तद्ब्रह्म फलं ददाति॥**

दर्पवता कृतमध्ययनादि न मोक्षोपयोगि नापि स्वर्गदं प्रत्युत भयावहमित्याह द्वाभ्याम् – अधीयान इति।

नीटी.

**चत्वारि कर्माण्यभयंकराणि**
**भयं प्रयच्छन्त्ययथाकृतानि।**
**मानाग्निहोत्रमुत मानमौनं**
**मानेनाधीतमुत मानयज्ञः॥**

चत्वारीत्यत्र अधीतं ब्रह्मचारिणो धर्मः। मौनं यतेः। यज्ञाग्निहोत्रे इतरयोर्द्वयोरपि साधारणे। नीटी.

**[1]न मान्यमानो मुदमाददीत**
**न संतापं प्राप्नुयाच्चावमानात्।**
**सन्तः सतः पूजयन्तीह लोके**
**नासाधवः साधुबुद्धिं लभन्ते॥**

अतो मानापमानादिद्वन्द्वसहिष्णुर्भवेदित्याह – न मानमान्य इति। नीटी.

**[2]इति दद्यादिति यजेदित्यधीयीत मे व्रतम्।**
**इत्यस्मिन्नभयान्याहुस्तानि वर्ज्यानि नित्यशः॥**

इति दद्यामिति दाम्भिकस्य स्वधर्मप्रकाशनाभिनयः। अतस्तपआदिदम्भविवर्जितं चेन्मोक्षद्वारं नान्यथेत्यर्थः।

नीटी.

अब्राह्मणस्य प्रतिग्रहादिका-र्पण्यानधिकारः

**ययातिरुवाच–**

**[3]नास्मद्विधोऽब्राह्मणो ब्रह्मविच्च**
**प्रतिग्रहे वर्तते राजमुख्य।**
**यथा प्रदेयं सततं द्विजेभ्य-**
**स्तथाऽददं पूर्वमहं नरेन्द्र॥**

ब्राह्मणोऽपि ब्रह्मवित् वेदविदेव प्रतिग्रहे वर्तेत, न त्वन्यः। अस्मद्विधस्तु नैव वर्ततेत्यर्थः। नीटी.

---

(१) भा. १।८४।७; भामु. १।८९।८ विन्दति (विन्दते) त्कदा (त्कथं).

(२) भा. १।८४।८; भामु. १।८९।९ दुःखे न (दुःखैर्न) सुखेन (सुखैः प्र) त्कदा (त्कथं).

(३) भा. १।८५।२२ तृतीयचतुर्थचरणौ न स्तः; भामु. १।९०।२२.

(४) भा. १।८५।२३-२४; भामु.१।९०।२३-२४.

(१) भा. १।८५।२५; भामु. १।९०।२५ मान्यमानो (मानमान्यो).

(२) भा. १।८५।२६; भामु. १।९०।२६ (इति दद्यामिति यज इत्यधीय इति व्रतम्। इत्येतानि भयान्याहुस्तानि वर्ज्यानि सर्वशः॥).

(३) भा. १।८७।११; भामु. १।९२।१२ धोऽब्रा (धो ब्रा) थाद (थाऽद).

[1]**नाब्राह्मणः कृपणो जातु जीवे-**
**द्या चापि स्याद्ब्राह्मणी वीरपत्नी।**
**सोऽहं यदैवाकृतपूर्वं चरेयं**
**विवित्समानः किमु तत्र साधु॥**

कृपणो याच्ञादैन्ययुक्तः। वीरस्य विद्यया दिग्विजयिनः पत्नी। तत्र कर्मभूमौ साधु सत्कर्म विधित्समानः कर्तुमिच्छन् किमु कथं चरेयम्? नैव कुर्यामित्यर्थः। 'विवित्समानः' इति पाठे तत्र स्वर्गे साधुः(?धु) लब्धुमिच्छन्। नीटी.

[2]**न तुल्यतेजाः सुकृतं कामयेत**
**योगक्षेमं पार्थिव पार्थिवः सन्।**
**दैवादेशादापदं प्राप्य विद्वां-**
**श्चरेन्नृशंसं न हि जातु राजा॥**
[3]**धर्म्यं मार्गं चेतयानो यशस्यं**
**कुर्यान्नृपो धर्ममवेक्षमाणः।**
**न मद्विधो धर्मबुद्धिः प्रजान-**
**न्कुर्यादेवं कृपणं मां यथाऽऽत्थ।**
**कुर्यामपूर्वं न कृतं यदन्यै-**
**र्विवित्समानः किमु तत्र साधु॥**

नृशंसं निन्द्यम्। अन्यैः राजभिः यत्प्रतिग्रहाख्यं न कृतं तत् अपूर्वं प्रथमम्। अहमेव कथं कुर्यामिति भावः। नीटी.

निकृष्टवर्णैरुत्कृष्टवर्णानां
परिचर्या

[4]**नियमात्सर्ववर्णानां ब्रह्मोत्तरमवर्तत।**
**ब्रह्म पर्यचरत्क्षत्रं विशः क्षत्रमनुव्रताः।**
**ब्रह्मक्षत्रानुरक्ताश्च शूद्राः पर्यचरन्विशः॥**

आपद्यपि निन्दितनृशंसकर्म-
चरणनिषेधः

[5]**कुर्यान्न निन्दितं कर्म न नृशंसं कदाचन।**
**इति पूर्वे महात्मान आपद्धर्मविदो विदुः॥**

(१) भा. ११८७।१२; भामु. ११९२।१३ द्या चापि (द्याश्चाऽपि) यदैवा (नैवा) विवि (विधि) साधु (साधुः).

(२) भा. ११८७।१६; भामु. ११९२।१७.

(३) भा. ११८७।१७; भामु. ११९२।१८-१९ चेतयानो (यतमानो) मपूर्वं (दपूर्वं) वित्स (धित्स).

(४) भा. ११९४।८-९; भामु. ११।१००।१०-११.

(५) भा. १११४९।११; भामु. १११६१।११ कदा (कथं).

वर्णान्तरसहाय्यं क्षत्रियकर्तव्यं तत्र
फलभेदश्च

[1]**यो ब्राह्मणस्य साहाय्यं कुर्यादर्थेषु कर्हिचित्।**
**क्षत्रियः स शुभाँल्लोकान्प्राप्नुयादिति मे श्रुतम्॥**
[2]**क्षत्रियः क्षत्रियस्यैव कुर्वाणो वधमोक्षणम्।**
**विपुलां कीर्तिमाप्नोति लोकेऽस्मिंश्च परत्र च॥**
[3]**वैश्यस्यैव तु साहाय्यं कुर्वाणः क्षत्रियो युधि।**
**स सर्वेष्वपि लोकेषु प्रजा रञ्जयते ध्रुवम्॥**
[4]**शूद्रं तु मोक्षयन्राजा शरणार्थिनमागतम्।**
**प्राप्नोतीह कुले जन्म सद्रव्ये राजसत्कृते॥**

ब्राह्मणस्यावमाननवधयोर्निषेधः
वधनिषेधापवादश्च

[5]**ब्राह्मणो नावमन्तव्यः सद्वाऽसद्वा समाचरन्॥**
[6]**ब्राह्मणो यदि वा बाल्याल्लोभाद्वा कृतवानिदम्।**
**विप्रियं पार्थिवेन्द्राणां नैष वध्यः कथंचन॥**
[7]**आहवे हि द्विजस्यापि वधो दृष्टो युयुत्सतः॥**

सापराधस्यापि ब्राह्मणस्य
रक्षणीयत्वम्

[8]**ब्राह्मणा हि सदा रक्ष्याः सापराधाऽपि नित्यदा॥**

सापराधा अपीति। संधिरार्षः। नीटी.

क्षत्रियस्य सत्यवचनं धर्मः

[9]**कामया ब्रूहि सत्यं त्वं सत्यं राजसु शोभते।**
**इष्टापूर्तेन च तथा वक्तव्यमनृतं न तु॥**

इष्टं यागादि। आपूर्तं वाप्यादि। तव धर्मकृत्यं नश्येद्यद्यसत्यं ब्रूया इत्यर्थः। नीटी.

(१) भा. १११५०।२१; भामु. १११६२।२२ कान्प्रा (काना) श्रुतम् (मतिः).

(२) भा. १११५०।२२; भामु. १११६२।२३ पूर्वार्धे (क्षत्रियस्यैव कुर्वाणः क्षत्रियो वधमोक्षणम्।).

(३) भा. १११५०।२३; भामु. १११६२।२४ स्यैव तु (स्यार्थे च) युधि (भुवि).

(४) भा. १११५०।२४; भामु. १११६२।२५ क्षयन्राजा (चयेद्राजा) सद्रव्ये (सद्द्रव्ये) सत्कृते (पूजिते).

(५) भा. १११७९।१३; भामु. १११८८।१३ सद्वाऽसद्वा (सदसद्वा).

(६) भा. १११८०।८; भामु. १११८९।९ वा बाल्या (चापल्या).

(७) भा. १११८१।६; भामु. १११९०।६.

(८) भामु. १११९०।३६.

(९) भा. १११८७।६; भामु. १११९५।६ प्रथमचरणे (इच्छया ब्रूहि तत्सत्यं).

[1]अवज्ञाय हि तं भृत्या भजन्ते बहुदोषताम्।
आदातुं चास्य वित्तानि प्रार्थयन्तेऽल्पचेतसः॥
यानं वस्त्राण्यलङ्काराञ्शयनान्यासनानि च।
भोजनान्यथ पानानि सर्वोपकरणानि च॥
आददीरन्नधिकृता यथाकाममचेतसः।
प्रदिष्टानि च देयानि न दद्युर्भर्तृशासनात्॥

अधिकृताः अन्नपानादिसंरक्षणे नियुक्ताः। प्रदिष्टानि इदमस्मै देयमित्याज्ञापितानि। नीटी.

[2]न चैनं भर्तृपूजाभिः पूजयन्ति कदाचन।
अवज्ञानं हि लोकेऽस्मिन्मरणादपि गर्हितम्॥

एनं क्षमिणम्। भर्तृपूजाभिः स्वाम्युचितमानेन। नीटी.

[3]क्षमिणं तादृशं तात ब्रुवन्ति कटुकान्यपि।
प्रेष्याः पुत्राश्च भृत्याश्च तथोदासीनवृत्तयः॥
[4]अप्यस्य दारानिच्छन्ति परिभूय क्षमावतः।
दाराश्चास्य प्रवर्तन्ते यथाकाममचेतसः॥
[5]तथा च नित्यमुदिता यदि स्वल्पमपीश्वरात्।
दण्डमर्हन्ति दुष्यन्ति दुष्टाश्चाप्यपकुर्वते॥

नित्यमुदिताः नित्यं होलकाद्युत्सवपराः। नीटी.

[6]एते चान्ये च बहवो नित्यं दोषाः क्षमावताम्।
अथ वैरोचने दोषानिमान्विद्ध्यक्षमावताम्॥
[7]अस्थाने यदि वा स्थाने सततं रजसाऽऽवृतः।
क्रुद्धो दण्डान्प्रणयति विविधान्स्वेन तेजसा॥

तेजसा क्रोधेन। नीटी.

[8]मित्रैः सह विरोधं च प्राप्नुते तेजसाऽऽवृतः।
प्राप्नोति द्वेष्यतां चैव लोकात्स्वजनतस्तथा॥
[9]सोऽवमानादर्थहानिमुपालम्भमनादरम्।
संतापद्वेषलोभांश्च शत्रूंश्च लभते नरः॥

उपालम्भं धिक्कारम्। नीटी.

(१) भा. ३।२९।९-११; भामु. ३।२८।९-११.
(२) भा. ३।२९।१२; भामु. ३।२८।१२ कदाचन (कथंचन).
(३) भा. ३।२९।१३; भामु. ३।२८।१३.
(४) भा. ३।२९।१४; भामु. ३।२८।१४ अप्यस्य (अथास्य).
(५) भा. ३।२९।१५; भामु. ३।२८।१५ स्वल्प (नाल्प).
(६) भा. ३।२९।१६; भामु. ३।२८।१६.
(७) भा. ३।२९।१७; भामु. ३।२८।१७ साऽऽवृतः (सा वृतः).
(८) भा. ३।२९।१८; भामु. ३।२८।१८साऽऽवृतः (सा वृतः) प्राप्नोति (आप्नोति).
(९) भा. ३।२९।१९; भामु. ३।२८।१९ लोभांश्च (मोहांश्च).

[1]क्रोधाद्दण्डान्मनुष्येषु विविधान्पुरुषो नयन्।
भ्रश्यते शीघ्रमैश्वर्यात्प्राणेभ्यः स्वजनादपि॥
[2]योऽपकर्तॄंश्च कर्तॄंश्च तेजसैवोपगच्छति।
तस्मादुद्विजते लोकः सर्पाद्वेश्मगतादिव॥

उपकर्तॄनिति च्छेदः संधिरार्षः। उपकर्तॄन् कोशादिवृद्धिकरान्। हर्तॄन् चोरान्। नीटी.

[3]यस्मादुद्विजते लोकः कथं तस्य भवो भवेत्।
अन्तरं ह्यस्य दृष्ट्वैव लोको विकुरुते ध्रुवम्।
तस्मान्नात्युत्सृजेत्तेजो न च नित्यं मृदुर्भवेत्॥

भवः ऐश्वर्यम्। अन्तरं छिद्रम्। विकुरुते प्रथयति। नीटी.

[4]काले काले तु संप्राप्ते मृदुस्तीक्ष्णोऽपि वा भवेत्॥
[5]काले मृदुर्यो भवति काले भवति दारुणः।
स वै सुखमवाप्नोति लोकेऽमुष्मिन्निहैव च॥
[6]क्षमाकालांस्तु वक्ष्यामि शृणु मे विस्तरेण तान्।
ये ते नित्यमसंत्याज्या यथा प्राहुर्मनीषिणः॥

असंत्याज्याः क्रोधेनानतिक्रमणीयाः। नीटी.

[7]पूर्वोपकारी यस्तु स्यादपराधेऽगरीयसि।
उपकारेण तत्तस्य क्षन्तव्यमपराधिनः॥

पूर्वेषां पूर्वकाले वा उपकारी उपकर्ता। नीटी.

[8]अबुद्धिमाश्रितानां च क्षन्तव्यमपराधिनाम्।
न हि सर्वत्र पाण्डित्यं सुलभं पुरुषेण वै॥

अबुद्धिं मौढ्यम्। नीटी.

[9]अथ चेद्बुद्धिजं कृत्वा ब्रूयुस्ते तदबुद्धिजम्।
पापान्स्वल्पेऽपि तान्हन्यादपराधे तथाऽनृजून्॥

(१) भा. ३।२९।२०; भामु. ३।२८।२० नयन् (ऽनयात्).
(२) भा. ३।२९।२१; भामु. ३।२८।२१ प्रथमचरणे (योपकर्तॄंश्च हर्तॄंश्च).
(३) भा. ३।२९।२२; भामु. ३।२८।२२-२३ ह्यस्य (तस्य).
(४) भामु. ३।२८।२३.
(५) भा. ३।२९।२३; भामु. ३।२८।२४.
(६) भा. ३।२९।२४; भामु. ३।२८।२५.
(७) भा. ३।२९।२५; भामु. ३।२८।२६ यस्तु (यस्ते) धेऽग (धे ग).
(८) भा. ३।२९।२६; भामु. ३।२८।२७ च (तु).
(९) भा. ३।२९।२७-२९; भामु. ३।२८।२८-३०.

**सर्वस्यैकोऽपराधस्ते क्षन्तव्यः प्राणिनो भवेत्।**
**द्वितीये सति वध्यस्तु स्वल्पेऽप्यपकृते भवेत्॥**

अपकृते अपकारे। नीटी.

**अजानता भवेत्कश्चिदपराधः कृतो यदि।**
**क्षन्तव्यमेव तस्याऽऽहुः सुपरीक्ष्य परीक्षया॥**

**[1]मृदुना मार्दवं हन्ति मृदुना हन्ति दारुणम्।**
**नासाध्यं मृदुना किंचित्तस्मात्तीक्ष्णतरो मृदुः॥**

मृदुना साम्ना। नीटी.

विस्तरेण क्रोधनिन्दा क्षमाप्रशंसा च

**युधिष्ठिर उवाच —**

**[2]क्रोधो हन्ता मनुष्याणां क्रोधो भावयिता पुनः।**
**इति विद्धि महाप्राज्ञे क्रोधमूलौ भवाभवौ॥**

क्रोध इति। परैरपकृताः आप्तैश्चोद्दीपिताः सामर्थ्यवन्तोऽपि सन्तः क्षमामेव श्रयन्ते, इत्यध्यायतात्पर्यम्। भावयिता वर्धयिता, जितः सन्निति शेषः। नीटी.

**[3]यो हि संहरते क्रोधं भावस्तस्य सुशोभने।**
**यः पुनः पुरुषः क्रोधं नित्यं न सहते शुभे।**
**तस्याभावाय भवति क्रोधः परमदारुणः॥**

तदेवाऽऽह — यो हीति। नीटी.

**[4]क्रोधमूलो विनाशो हि प्रजानामिह दृश्यते।**
**तत्कथं मादृशः क्रोधमुत्सृजेल्लोकनाशनम्॥**

लोकः आत्मा स्वर्गो वा, तन्नाशनम्। नीटी.

**क्रुद्धः पापं नरः कुर्यात्क्रुद्धो हन्याद्गुरूनपि।**
**क्रुद्धः परुषया वाचा श्रेयसोऽप्यवमन्यते॥**

तदेवाऽऽह — क्रुद्ध इति। श्रेयसः श्रेष्ठान्। श्रेयोऽपि प्राप्येति वा ल्यब्लोपे पञ्चमीमाश्रित्य व्याख्येयम्। नीटी.

**वाच्यावाच्ये हि कुपितो न प्रजानाति कर्हिचित्।**
**नाकार्यमस्ति क्रुद्धस्य नावाच्यं विद्यते तथा॥**
**[5]हिंस्यात्क्रोधादवध्यांश्च वध्यान्संपूजयेदपि।**
**आत्मानमपि च क्रुद्धः प्रेषयेद्यमसादनम्॥**

(१) **भा.** ३।२९।३०; **भामु.** ३।२८।३१ मार्दवं (दारुणं) हन्ति दा (हन्त्यदा) त्तीक्ष्णतरो मृदुः (त्तीव्रतरं मृदु).
(२) **भा.** ३।३०।१; **भामु.** ३।२९।१.
(३) **भा.** ३।३०।२; **भामु.** ३।२९।२ भावस्त (भवस्त).
(४) **भा.** ३।३०।३-५; **भामु.** ३।२९।३-५.
(५) **भा.** ३।३०।६; **भामु.** ३।२९।६ ध्यांश्च (ध्यांस्तु) जयेदपि (जयीत च).

**[1]एतान्दोषान्प्रपश्यद्भिर्जितः क्रोधो मनीषिभिः।**
**इच्छद्भिः परमं श्रेय इह चामुत्र चोत्तमम्॥**
**तं क्रोधं वर्जितं धीरैः कथमस्मद्विधश्चरेत्।**
**एतद्द्रौपदि संधाय न मे मन्युः प्रवर्धते॥**

तं क्रोधम्। विक्रमं धीरैरिति पाठे विपरीतः क्रमो येन तमित्यर्थः। चरेत् आचरेत्। नीटी.

**[2]आत्मानं च परं चैव त्रायते महतो भयात्।**
**क्रुध्यन्तमप्रतिक्रुध्यन्द्वयोरेष चिकित्सकः॥**

अप्रतिक्रुध्यन् त्रायते। द्वयोः आत्मपरयोः चिकित्सकः दोषापहर्ता। नीटी.

**[3]मूढो यदि क्लिश्यमानः क्रुध्यतेऽशक्तिमान्नरः।**
**बलीयसां मनुष्याणां त्यजत्यात्मानमन्ततः॥**

एतदेवाऽऽह — मूढ इति। बलीयसामुपरि यदि अशक्तिमान् क्लिश्यते क्रुध्यते, तर्हि आत्मानं देहं त्यजति। नीटी.

**[4]तस्याऽऽत्मानं संत्यजतो लोका नश्यन्त्यनात्मनः।**
**तस्माद्द्रौपद्यशक्तस्य मन्योर्नियमनं स्मृतम्॥**

अनात्मनः अजितचित्तस्य। नियमनं कर्तव्यमिति स्मृतम्। अशक्तः क्रोधं जित्वा आत्मानमात्महत्यादोषात् परं च परहत्यादोषात्त्रायत इत्यर्थः। नीटी.

**[5]विद्वांस्तथैव यः शक्तः क्लिश्यमानो न कुप्यति।**
**स नाशयित्वा क्लेष्टारं परलोके च नन्दति॥**

शक्तस्यापि क्रोधजये आत्मपरत्रातृत्वमाह — विद्वानिति। नीटी.

**[6]तस्माद्बलवता चैव दुर्बलेन च नित्यदा।**
**क्षन्तव्यं पुरुषेणाऽऽहुरापत्स्वपि विजानता॥**
**मन्योर्हि विजयं कृष्णे प्रशंसन्तीह साधवः।**
**क्षमावतो जयो नित्यं साधोरिह सतां मतम्॥**
**सत्यं चानृततः श्रेयो नृशंसाच्चानृशंसता॥**
**तमेवं बहुदोषं तु क्रोधं साधुविवर्जितम्।**
**मादृशः प्रसृजेत्कस्मात्सुयोधनवधादपि॥**

(१) **भा.** ३।३०।७-८; **भामु.** ३।२९।७-८.
(२) **भा.** ३।३०।९; **भामु.** ३।२९।९ परं चैव (परांश्चैव).
(३) **भा.** ३।३०।१०; **भामु.** ३।२९।१० क्रुध्यते (क्लिश्यते) मन्ततः (मात्मना).
(४) **भा.** ३।३०।११; **भामु.** ३।२९।११.
(५) **भा.** ३।३०।१२; **भामु.** ३।२९।१२ स नाश (अनाश).
(६) **भा.** ३।३०।१३-१७; **भामु.** ३।२९।१३-१८.

प्रसृजेत् प्रकर्षेण प्रयुञ्जीत। सुयोधनवधादपि सुयोधनाद्वधं प्राप्यापीत्यर्थः। नीटी.

**तेजस्वीति यमाहुर्वै पण्डिता दीर्घदर्शिनः।**
**न क्रोधोऽभ्यन्तरस्तस्य भवतीति विनिश्चितम्॥**

यदुक्तम् 'तेजसश्चाऽऽगते काले तेज उत्स्रष्टुमर्हसि' इति, तत्राऽऽह – तेजस्वीति। क्रोधजिदेव तेजस्वी, न तु क्रोधीत्यर्थः। नीटी.

**यस्तु क्रोधं समुत्पन्नं प्रज्ञया प्रतिबाधते।**
**तेजस्विनं तं विद्वांसो मन्यन्ते तत्त्वदर्शिनः॥**

**[1]क्रुद्धो हि कार्यं सुश्रोणि न यथावत्प्रपश्यति।**
**न कार्यं न च मर्यादां नरः क्रुद्धोऽनुपश्यति॥**

प्रत्युत क्रोधाजये दोषमाह – क्रुद्धो हीति। नीटी.

**[2]हन्त्यवध्यानपि क्रुद्धो गुरून्रूक्षैस्तुदत्यपि।**
**तस्मात्तेजसि कर्तव्ये क्रोधो दूरात्प्रतिष्ठितः॥**

तुदति व्यथयति परुषोक्त्यादिना। तेजसि सति। क्रोधजयित्वमेव तेजः, नान्यदित्यर्थः। नीटी.

**[3]दाक्ष्यं ह्यमर्षः शौर्यं च शीघ्रत्वमिति तेजसः।**
**गुणाः क्रोधाभिभूतेन न शक्याः प्राप्तुमञ्जसा॥**

एतदेव तेजोलक्षणप्रदर्शनेन प्रतिपादयति – दाक्ष्यमिति। दाक्ष्यं कर्मसु कौशलम्। अमर्षः शत्रोरपकारोपायचिन्तनम्। शौर्यं पराभिभवशक्तिः। शीघ्रत्वम् आशुकारिता। अञ्जसा आर्जवेन। नीटी.

**क्रोधं त्यक्त्वा तु पुरुषः सम्यक्तेजोऽभिपद्यते।**
**कालयुक्तं महाप्राज्ञे क्रुद्धैस्तेजः सुदुःसहम्॥**

क्रुद्धैः कालयुक्तं देशकालोपपन्नं तेजः सुदुःसहम्। नीटी.

**[4]क्रोधस्त्वपण्डितैः शश्वत्तेज इत्यभिधीयते।**
**रजस्तल्लोकनाशाय विहितं मानुषान्प्रति॥**

पण्डितैरित्युपहासः, मूर्खैरित्यर्थः। अपण्डितैरिति गौडपाठः स्वच्छः। रजः रजोगुणपरिणामः। नीटी.

(१) भा. ३।३०।१८; भामु. ३।२९।१८ न कार्यं (नाकार्यं).
(२) भा. ३।३०।१९; भामु. ३।२९।१९ रूक्षै (रून्क्रुद्ध) कर्तव्ये (कर्तव्यः) दूरात्प्र (दूरे प्र).
(३) भा. ३।३०।२०-२१; भामु. ३।२९।२०-२१.
(४) भा. ३।३०।२२; भामु. ३।२९।२२ क्रोधस्त्व (क्रोधस्तु) धीयते (निश्चितम्) स्तल्लोक (स्तु लोक) षान्प्र (षं प्र).

**[1]तस्माच्छंस्यजेत्क्रोधं पुरुषः सम्यगाचरन्।**
**श्रेयान्स्वधर्मानपगो न क्रुद्ध इति निश्चितम्॥**

स्वधर्मान् अपगः अपहाय गच्छतीति तथा। द्वितीयाया अलुगार्षः। जातिभ्रष्टात् पतितादपि क्रोधी हीन इत्यर्थः। नीटी.

**[2]यदि सर्वमबुद्धीनामतिक्रान्तममेधसाम्।**
**अतिक्रमो मद्विधस्य कथं स्वित्स्यादनिन्दिते॥**

सर्वं क्षमार्जवादिकम् अबुद्धीनां मूढैः अतिक्रान्तं लङ्घितम्। अनिन्दिते प्रशस्ते विषये क्षमादौ। नीटी.

**[3]यदि न स्युर्मनुष्येषु क्षमिणः पृथिवीसमाः।**
**न स्यात्संधिर्मनुष्याणां क्रोधमूलो हि विग्रहः॥**

**[4]अभिषक्तो ह्यभिषजेदाहन्याद्गुरुणा हतः।**
**एवं विनाशो भूतानामधर्मः प्रथितो भवेत्॥**

अभिषक्तः तापितः अभिषजेत् तापयेत्, गुरुणाऽपि हतस्तम् आहन्यात् ताडयेत्, किमुतान्यमिति भावः। एवं विनाशः अधर्मश्च प्रथितो भवेत्। नीटी.

**[5]आक्रुष्टः पुरुषः सर्वः प्रत्याक्रोशेदनन्तरम्।**
**प्रतिहन्याद्धतश्चैव तथा हिंस्याच्च हिंसितः॥**

आक्रुष्टः वाचा ताडितः हतः अन्येनाभिग(? ह)तः हिंसितः ताडितः। नीटी.

**[6]हन्युर्हि पितरः पुत्रान्पुत्राश्चापि तथा पितॄन्।**
**हन्युश्च पतयो भार्याः पतीन्भार्यास्तथैव च॥**
**एवं संकुपिते लोके जन्म कृष्णे न विद्यते।**
**प्रजानां संधिमूलं हि जन्म विद्धि शुभानने॥**

जन्म उत्पत्तिः। तत्र हेतुः प्रजानां संधिः दंपत्योः प्रीतिः। शम इति पाठे क्षमा। नीटी.

**[7]ताः क्षीयेरन्प्रजाः सर्वाः क्षिप्रं द्रौपदि तादृशे।**
**तस्मान्मन्युर्विनाशाय प्रजानामभवाय च॥**

तादृशे क्रोधपरे राज्ञि सति। क्षिपेरन् नश्येयुः। अभवाय अनैश्वर्याय। नीटी.

(१) भा. ३।३०।२३; भामु. ३।२९।२३.
(२) भा. ३।३०।२४; भामु. ३।२९।२४ मेधसाम् (चेतसाम्).
(३) भा. ३।३०।२५; भामु. ३।२९।२५ मनुष्येषु (मानुषेषु).
(४) भा. ३।३०।२६; भामु. ३।२९।२६.
(५) भा. ३।३०।२७; भामु. ३।२९।२७ सर्वः (सर्वं).
(६) भा. ३।३०।२८-२९; भामु. ३।२९।२८-२९.
(७) भा. ३।३०।३०; भामु. ३।२९।३० क्षीये (क्षिपे).

**[1]यस्मात्तु लोके दृश्यन्ते क्षमिणः पृथिवीसमाः।**
**तस्माज्जन्म च भूतानां भवश्च प्रतिपद्यते॥**

जन्म प्रतिपद्यते, अन्यथा क्रोधप्राबल्ये पूर्ववयस्येव दम्पत्योर्नाशाज्जन्मासंभव इत्यर्थः। नीटी.

**[2]क्षन्तव्यं पुरुषेणेह सर्वास्वापत्सु शोभने।**
**क्षमा भवो हि भूतानां जन्म चैव प्रकीर्तितम्॥**
**[3]आक्रुष्टस्ताडितः क्रुद्धः क्षमते यो बलीयसा।**
**यश्च नित्यं जितक्रोधो विद्वानुत्तमपूरुषः॥**
**प्रभाववानपि नरस्तस्य लोकाः सनातनाः।**
**क्रोधनस्त्वल्पविज्ञानः प्रेत्य चेह च नश्यति॥**

बलीयसा बलवत्तरेण स्वाम्यादिना यथा आक्रुष्टस्ताडितो वाऽशक्तः क्षमते तथा यः प्रभाववानपि क्षमते तस्य लोका इति सार्धश्लोको वाक्यम्। अन्यथा दोषमाहार्धेन — क्रोधनस्त्विति। नीटी.

**[4]अत्राप्युदाहरन्तीमा गाथा नित्यं क्षमावताम्।**
**गीताः क्षमावता कृष्णे काश्यपेन महात्मना॥**

क्षमावतां गाथाः प्रशंसाः। क्षमावतां मध्ये महात्मना। नीटी.

**[5]क्षमा धर्मः क्षमा यज्ञः क्षमा वेदाः क्षमा श्रुतम्।**
**यस्तामेवं विजानाति स सर्वं क्षन्तुमर्हति॥**

क्षमाहीनस्य धर्मादिरनर्थकर इत्यर्थः। यः धर्मादिफलार्थी। नीटी.

**[6]क्षमा ब्रह्म क्षमा सत्यं क्षमा भूतं च भावि च।**
**क्षमा तपः क्षमा शौचं क्षमया चोद्धृतं जगत्॥**

ब्रह्म ब्राह्मणजातिः। सत्यं परं ब्रह्मापि क्षमाप्राप्यम्। भूतं संचितं तपः भावि च क्षमैव रक्षति। नीटी.

**[7]अति ब्रह्मविदां लोकानति चापि तपस्विनाम्।**
**अति यज्ञविदां चैव क्षमिणः प्राप्नुवन्ति तान्॥**

अति अतिक्रम्य प्राप्नुवन्ति, तदूर्ध्वं पदमिति शेषः। ब्रह्मविदां वेदविदाम्। नीटी.

**[1]अन्ये वै यजुषां लोकाः कर्मिणामपरे तथा।**
**क्षमावतां ब्रह्मलोके लोकाः परमपूजिताः॥**

यजुषां त्रेताग्निसाध्यकर्मवताम्। कर्मिणां वापीकूपादिधर्मवताम्। नीटी.

**[2]क्षमा तेजस्विनां तेजः क्षमा ब्रह्म तपस्विनाम्।**
**क्षमा सत्यं सत्यवतां क्षमा दानं क्षमा यशः॥**
**[3]तां क्षमामीदृशीं कृष्णे कथमस्मद्विधस्त्यजेत्।**
**यस्यां ब्रह्म च सत्यं च यज्ञा लोकाश्च विष्ठिताः।**
**भुज्यन्ते यज्वनां लोकाः क्षमिणामपरे तथा॥**
**[4]क्षन्तव्यमेव सततं पुरुषेण विजानता।**
**यदा हि क्षमते सर्वं ब्रह्म संपद्यते तदा॥**

सर्वं मनःप्राणेन्द्रियाणां वेगं क्षमते सोढुं शक्नोति। नीटी.

**[5]क्षमावतामयं लोकः परश्चैव क्षमावताम्।**
**इह संमानमृच्छन्ति परत्र च शुभां गतिम्॥**
**[6]येषां मन्युर्मनुष्याणां क्षमया निहतः सदा।**
**तेषां परतरे लोकास्तस्मात्क्षान्तिः परा मता॥**

क्षत्रियस्य याच्ञानिषेधः

**[7]प्रतिषिद्धा हि ते याच्ञा यया सिद्ध्यति वै द्विजः।**
**तेजसैवार्थलिप्सायां यतस्व पुरुषर्षभ॥**
**भैक्षचर्या न विहिता न च विट्शूद्रजीविका।**
**क्षत्रियस्य विशेषेण धर्मस्तु बलमौरसम्॥**

द्विजः ब्राह्मणः। तेजसा पराभिभवशक्त्या औरसम् उत्साहः। नीटी.

युद्धं भूमिपालनं च क्षत्रियधर्मः

**[8]एतद्ध्यपि तपो राजन् पुराणमिति नः श्रुतम्।**
**विधिना पालनं भूमेर्यत्कृतं नः पितामहैः॥**

---

(१) भा. ३।३०।३१; भामु. ३।२९।३१.

(२) भा. ३।३०।३२; भामु. ३।२९।३२ सर्वास्वापत्सु (सर्वापत्सु सु) क्षमा भवो (क्षमावतो).

(३) भा. ३।३०।३३-३४; भामु. ३।२९।३३-३४.

(४) भा.३।३०।३५; भामु. ३।२९।३५ वता (वतां).

(५) भा. ३।३०।३६; भामु. ३।२९।३६ यस्तामेवं वि (य एतदेवं).

(६) भा.३।३०।३७; भामु.३।२९।३७ क्षमया चोद्धृतं (क्षमयेदं धृतं).

(७) भा. ३।३०।३८; भामु. ३।२९।३८ (अतियज्ञविदां लोकान् क्षमिणः प्राप्नुवन्ति च। अतिब्रह्मविदां लोकानति चापि तपस्विनाम्॥).

(१) भामु. ३।२९।३९.

(२) भा. ३।३०।३९; भामु. ३।२९।४० चतुर्थचरणे (क्षमा यज्ञः क्षमा शमः).

(३) भा. ३।३०।४०; भामु. ३।२९।४१ क्षमामी (क्षमां ता) विष्ठिताः (धिष्ठिताः) तृतीयार्धं नास्ति.

(४) भा. ३।३०।४१; भामु. ३।२९।४२.

(५) भा. ३।३०।४२; भामु. ३।२९।४३ संमान (सन्मान).

(६) भा. ३।३०।४३; भामु. ३।२९।४४ निहतः (ऽभिहतः).

(७) भा. ३।३४।४९-५०; भामु. ३।३३।५०-५१ भैक्ष (भैक्ष्य).

(८) भा. ३।३४।७०; भामु. ३।३३।७२ एतद्ध्य (एतच्चा).

एतत् भूमेः पालनं वक्ष्यमाणं तपः स्वधर्मः पुराणम् अनादि। 'एतच्चावितथम्' इति पाठान्तरे पुराणं वेदविहितमित्यर्थः। नीटी.

[1]न तथा तपसा राजँल्लोकान् प्राप्नोति क्षत्रियः।
यथा सृष्टेन युद्धेन विजयेनेतरेण वा॥

सृष्टेन विहितेन धर्मेणेत्यर्थः। इतरेण मरणेन। नीटी.

[2]क्षत्रियस्य तु सर्वस्य नान्यो धर्मोऽस्ति संयुगात्॥

क्षत्रियस्य राज्यत्यागेन वनाश्रयणस्य निषेधः

[3]न हि धर्मो महाराज क्षत्रियस्य वनाश्रयः।
राज्यमेव परं धर्मं क्षत्रियस्य विदुर्बुधाः॥

सूर्यग्रहे कुरुक्षेत्रे स्नानश्राद्धयोः प्रशंसा

[4]संनिहित्यामुपस्पृश्य राहुग्रस्ते दिवाकरे।
अश्वमेधशतं तेन इष्टं भवति शाश्वतम्॥

संनिहत्यां कुरुक्षेत्रे। अस्यैव नामान्तरं संनिहतीति। नीटी.

[5]अमावास्यां तु तत्रैव राहुग्रस्ते दिवाकरे।
यः श्राध्दं कुरुते मर्त्यस्तस्य पुण्यफलं शृणु॥
अश्वमेधसहस्रस्य सम्यगिष्टस्य यत्फलम्।
स्नात एव समाप्नोति कृत्वा श्राद्धं च मानवः॥

वर्णानां धर्मविभागः

[6]द्विजानाममृतं धर्मो ह्येकश्चैवैकवर्णिकः।
यज्ञाध्ययनदानानि त्रयः साधारणाः स्मृताः॥

ऋतं सत्यम् आत्मज्ञानाख्यम्। एको वर्णः शुक्लः। केवलसात्त्विकः धर्मः योगाख्यः। नीटी.

[7]याजनाध्यापने चोभे ब्राह्मणानां प्रतिग्रहः।
पालनं क्षत्रियाणां वै वैश्यधर्मश्च पोषणम्॥

(१) भामु. ३।३३।७३.
(२) भा. ३।३६।३४; भामु. ३।३५।३५ तु (हि).
(३) भा. ३।४९।१३; भामु. ३।४९।१४-१५.
(४) भा. ३।८१।१६७; भामु. ३।८३।१९२ हित्या (हत्या) चतुर्थचरणे (तत्रेष्टं शाश्वतं भवेत्).
(५) भामु. ३।८३।१९६-१९८.
(६) भा. ३।१४९।३४; भामु. ३।१५०।३४ नाममृतं (तीनामृतं).
(७) भा. ३।१४९।३५; भामु. ३।१५०।३५ ने चोभे ब्राह्मणानां (नं विप्रे धर्मश्चैव).

[1]शुश्रूषा तु द्विजातीनां शूद्राणां धर्म उच्यते।
भैक्षहोमव्रतैर्हीनास्तथैव गुरुवासिनाम्॥

गुरौ त्रिवर्णे वासितं वासो येषां ते शूद्राः भैक्ष्यादिभिर्हीना भवन्ति। नीटी.

[2]तपोधर्मदमेज्याभिर्विप्रा यान्ति यथा दिवम्।
दानातिथ्यक्रियाधर्मैर्यान्ति वैश्याश्च सद्गतिम्॥
[3]क्षत्रं याति तथा स्वर्गं भुवि निग्रहपालनैः।
सम्यक्प्रणीय दण्डं हि कामद्वेषविवर्जिताः।
अलुब्धा विगतक्रोधाः सतां यान्ति सलोकताम्॥

क्षत्रियस्य याच्ञानिषेधः युद्धप्रशंसा च

[4]न हि याचन्ति राजान एष धर्मः सनातनः।
न चाहं हातुमिच्छामि क्षात्रधर्मं कथंचन॥
[5]द्रोग्धव्यं न च मित्रेषु न विश्वस्तेषु कर्हिचित्।
येषां चान्नानि भुञ्जीत यत्र च स्यात्प्रतिश्रयः॥

प्रतिश्रयः गृहम्। नीटी.

[6]राजन् किं नाम तत्कृत्यं क्षत्रियस्यास्त्यतोऽधिकम्।
यद्युद्धेऽभिमुखः प्राणांस्त्यजेच्छत्रूञ्जयेत वा॥

सत्कृत्यं साधुकार्यम्। नीटी.

क्षत्रियकार्याणां सफलताहेतुधृत्यादिपञ्चकम्

वैश्रवण उवाच –

[7]युधिष्ठिर धृतिर्दाक्ष्यं देशकालौ पराक्रमः।
लोकतन्त्रविधानानामेष पञ्चविधो विधिः॥

धृतिः संकटेष्वविक्लवता, दाक्ष्यं यत्नशीलता, पराक्रमः शत्रूणामभिभवनहेतुः क्रिया, देशकालयोरानुकूल्यं चेति विधानानां कार्याणां विधिः अभ्युदयहेतुः। अदेशे अकाले च कृतं धृत्यादिकमभिभवहेतुरित्यर्थः। नीटी.

(१) भा. ३।१४९।३६; भामु. ३।१५०।३६ तु (च) भैक्ष (भैक्ष्य) वासिनाम् (वासिताः).
(२) भा. ३।१४९।५१; भामु. ३।१५०।५१.
(३) भा. ३।१४९।५२; भामु. ३।१५०।५२ णीय दण्डं (णीतदण्डा).
(४) भा. ३।१५२।९; भामु. ३।१५४।१०.
(५) भा. ३।१५४।१३; भामु. ३।१५७।२१-२२.
(६) भा. ३।१५४।२३; भामु. ३।१५७।३१-३२ तत्कृ (सत्कृ) त्रूञ्ज (त्रुं ज).
(७) भा. ३।१५९।१; भामु. ३।१६२।१ वैश्रवण (धनद) लौ पराक्रमः (लपराक्रमाः).

[1]धृतिमान्देशकालज्ञः सर्वधर्मविधानवित्।
क्षत्रियः क्षत्रियश्रेष्ठ पृथिवीमनुशास्ति वै॥

क्षत्रियाणां तु सर्वदैवैतत्पञ्चकमावश्यकमित्याह– धृतिमानिति। नीटी.

ब्राह्मणगुणाः

[2]सत्यं दानं क्षमा शीलमानृशंस्यं दमो घृणा।
दृश्यन्ते यत्र नागेन्द्र स ब्राह्मण इति स्मृतः॥

सत्यं यथार्थमहिंस्रं च वचनम्। आनृशंस्यम् अनैष्ठुर्यम्। तपः स्वधर्माचरणम्। घृणा कृपा। नीटी.

सत्यादिगुणाः सर्वेषां सिद्धिसाधनानि

[3]सत्यं दमस्तपो योगमहिंसा दाननित्यता।
साधनानि सदा पुंसां न जातिर्न कुलं नृप॥

कामादिदोषाणां त्याज्यत्वम्, धृतिक्षमादि-
गुणानां शिष्टाचारस्य च
सेव्यत्वम्

[4]नास्तिकान्भिन्नमर्यादान्क्रूरान्पापमतौ स्थितान्।
त्यज ताञ्ज्ञानमाश्रित्य धार्मिकानुपसेव्य च॥
कामलोभग्रहाकीर्णां पञ्चेन्द्रियजलां नदीम्।
नावं धृतिमयीं कृत्वा जन्मदुर्गाणि संतर॥
[5]अनसूया क्षमा शान्तिः संतोषः प्रियवादिता।
कामक्रोधपरित्यागः शिष्टाचारनिषेवणम्॥
कर्मणा श्रुतसंपन्नं सतां मार्गमनुत्तमम्।
शिष्टाचारं निषेवन्ते नित्यं धर्मेष्वतन्द्रिताः॥

कर्म च कर्मैव। कर्मणेति गौडपाठे कर्मणा श्रुतेन च संपन्नमित्यर्थः। नीटी.

सत्यापवादः

[6]प्राणात्यये विवाहे च वक्तव्यमनृतं भवेत्।
अनृतं च भवेत्सत्यं सत्यं चैवानृतं भवेत्॥

[1]यद्भूतहितमत्यन्तं तत्सत्यमिति धारणा।
विपर्ययकृतोऽधर्मः पश्य धर्मस्य सूक्ष्मताम्॥

धारणा अवधारणं निश्चय इत्यर्थः। नीटी.

ग्रहणकृतदानप्रशंसा

[2]चन्द्रसूर्योपरागे च दत्तमक्षयमुच्यते॥

हिंसानिषेधः

[3]न हिंस्यात्सर्वभूतानि मैत्रायणगतश्चरेत्।
नेदं जीवितमासाद्य वैरं कुर्वीत केनचित्॥

मैत्रं मित्रभावः, तदेव अयनं मार्गः, तद्गतश्चरेत्। नीटी.

शरणागतशत्रुरक्षणं क्षत्रियधर्मः

[4]य एव कश्चिद्राजन्यः शरणार्थमिहाऽऽगतम्।
परं शक्त्याऽभिरक्षेत किं पुनस्त्वं वृकोदर॥
[5]वरप्रदानं राज्यं च पुत्रजन्म च पाण्डव।
शत्रोश्च मोक्षणं क्लेशात्त्रीणि चैकं च तत्समम्॥

तपोदानयोः कर्तव्यता

[6]इह यत्क्रियते कर्म तत्परत्रोपभुज्यते।
तस्माच्छरीरं युञ्जीत तपसा नियमेन च॥
[7]यथाशक्ति प्रयच्छेच्च संपूज्याभिप्रणम्य च।
काले पात्रे च हृष्टात्मा राजन्विगतमत्सरः॥
[8]विशेषस्त्वत्र विज्ञेयो न्यायेनोपार्जितं धनम्।
पात्रे देशे च काले च साधुभ्यः प्रतिपादयेत्॥

अद्रोहानुग्रहदानानि सतां धर्मः

[9]अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा।
अनुग्रहश्च दानं च सतां धर्मः सनातनः॥

अद्रोहः द्रोहाभावः। अनुग्रहः दया। दानं संविभागः। त्वमपि मयि दयां कुर्विति भावः। नीटी.

---

(१) भा. ३।१५९।३; भामु. ३।१६२।३ चतुर्थचरणे (प्रशास्ति पृथिवीं चिरम्).

(२) भा. ३।१७७।१६; भामु. ३।१८०।२१ दमो (तपो); पमा. १।२०४ क्षमा शील (तपः शौच) नागेन्द्र (विप्रेन्द्र).

(३) भा. ३।१७८।४३; भामु. ३।१८१।४२-४३ योग (दान) दान (धर्म).

(४) भा. ३।१९८।६६-६७; भामु. ३।२०७।७१-७२.

(५) भा. ३।१९८।९१-९२; भामु. ३।२०७।९६-९७ कर्मणा (कर्म च) धर्मेष्वतन्द्रिताः (धर्ममनुव्रताः).

(६) भा. ३।२००।३; भामु. ३।२०९।३ त्यये (न्तिके) अनृतं च (अनृतेन) सत्यं चै (सत्येनै).

(१) भा. ३।२००।४; भामु. ३।२०९।४.

(२) भामु. ३।२००।१२५.

(३) भा. ३।२०३।४५; भामु. ३।२१३।३४.

(४) भा. ३।२३२।१०; भामु. ३।२४३।११.

(५) भा. ३।२३२।१२; भामु. ३।२४३।१३ पाण्डव (पाण्डवाः).

(६) भा. ३।२४५।१९; भामु. ३।२५९।२० भुज्य (युज्य).

(७) भा. ३।२४५।२०; भामु. ३।२५९।२१ च्छेच्च (च्छेत) पात्रे (प्राप्ते).

(८) भा. ३।२४५।३१; भामु. ३।२५९।३२ पात्रे देशे च काले (पात्रे काले च देशे).

(९) भा. ३।२८१।३४; भामु. ३।२९७।३५.

क्षमा द्विजातिधर्मः

**[1]द्विजातयो महाभागा वृद्धबालतपस्विषु।**
**भवन्त्यक्रोधनाः प्रायो विरुद्धेष्वपि नित्यदा॥**
**सुमहत्यपराधेऽपि क्षान्तिः कार्या द्विजातिभिः।**
**यथाशक्ति यथोत्साहं पूजा ग्राह्या द्विजोत्तम॥**

क्षत्रियस्य युद्धं श्रेष्ठो धर्मः
युद्धात्पलायनमधर्मश्च

**[2]वदतां वर्णधर्मांश्च ब्राह्मणानां हि मे श्रुतम्।**
**क्षत्रियस्य सदा धर्मो नान्यः शत्रुनिबर्हणात्॥**

वदतां कथयतां ब्राह्मणानां मुखात् वर्णधर्मश्च श्रुतः। नीटी.

**बृहन्नडोवाच –**
**[3]नैष पूर्वैः स्मृतो धर्मः क्षत्रियस्य पलायनम्।**
**श्रेयस्ते मरणं युद्धे न भीतस्य पलायनम्॥**
**[4]चातुर्वर्ण्यस्य कर्माणि विहितानि मनीषिभिः।**
**धनं यैरधिगन्तव्यं यच्च कुर्वन्न दुष्यति॥**

यदुक्तम् 'नैते महाभये प्राप्ते संप्रष्टव्याः' इत्यादिना ब्राह्मणानां भोजनादावेव कौशलं न युद्धे, तत्र तवापि वैश्यत्वान्न युद्धे सामर्थ्यमस्तीति दर्शयिष्यन् वर्णानां कर्माणि विभजते – चातुर्वर्ण्यस्येत्यादिना। नीटी.

यजनादयो द्विजधर्माः, द्विजशुश्रूषा
शूद्रधर्मः

**[5]अधीत्य ब्राह्मणो वेदान्याजयेत यजेत च।**
**क्षत्रियो धनुराश्रित्य यजेतैव न याजयेत्।**
**वैश्योऽधिगम्य द्रव्याणि ब्रह्मकर्माणि कारयेत्॥**

वित्तान्यधिगम्य, कृष्यादिनेति शेषः। ब्रह्मकर्माणि वेदोक्तकर्माणि आधानादीनि कारयेत्। स्वार्थे णिच्। नीटी.

(१) भा. ३।२८८।१४-१५; भामु. ३।३०४।१५-१६ विरुद्धेष्वपि (ह्यपराद्धेषु).
(२) भा. ४।२०।२८; भामु. ४।२१।४२-४३ धर्मांश्च (धर्मश्च) नां हि मे श्रुतम् (नामिति श्रुतः).
(३) भा. ४।३६।२६; भामु. ४।३८।२९ पूर्वैः (शूरैः) श्रेयस्ते (श्रेयस्तु).
(४) भा. ४।४५।४; भामु. ४।५०।४ मनीषिभिः (स्वयंभुवा).
(५) भा. ४।४५।५; भामु. ४।५०।५-६ च (वा) जेतैव (जेच्चैव) द्रव्याणि (वित्तानि).

**[1]शूद्रः शुश्रूषणं कुर्यात्त्रिषु वर्णेषु नित्यशः।**
**वन्दनायोगविधिभिर्वैतसीं वृत्तिमास्थितः॥**

सतां संगतेर्विधिः हिंसाया निषेधश्च

**ऋषय ऊचुः –**
**[2]सकृत्सतां संगतं लिप्सितव्यं**
**ततः परं भविता भव्यमेव।**
**नातिक्रमेत्सत्पुरुषेण संगतं**
**तस्मात्सतां संगतं लिप्सितव्यम्॥**
**[3]दृढं सतां संगतं चापि नित्यं**
**ब्रूयाच्चार्थं ह्यर्थकृच्छ्रेषु धीरः।**
**महार्थवत्सत्पुरुषेण संगतं**
**तस्मात्सन्तं न जिघांसेत धीरः॥**

शरणागतारक्षणस्य निन्दा

**[4]न तस्य बीजं रोहति बीजकाले**
**न चास्य वर्षं वर्षति वर्षकाले।**
**भीतं प्रपन्नं प्रददाति शत्रवे**
**न सोऽन्तरं लभते त्राणमिच्छन्॥**

प्रपन्नं शरणागतम्। नीटी.

**[5]मोघमन्नं विन्दति चाप्यचेताः**
**स्वर्गाल्लोकाद्भ्रश्यति नष्टचेष्टः।**
**भीतं प्रपन्नं प्रददाति यो वै**
**न तस्य हव्यं प्रतिगृह्णन्ति देवाः॥**

अचेताः दुर्बलचित्तः। नीटी.

**प्रमीयते चास्य प्रजा ह्यकाले**
**सदा विवासं पितरोऽस्य कुर्वते।**
**भीतं प्रपन्नं प्रददाति शत्रवे**
**सेन्द्रा देवाः प्रहरन्त्यस्य वज्रम्॥**

चातुर्वर्ण्यधर्मविभागः

**[6]अधीयीत ब्राह्मणोऽथो यजेत**
**दद्यादियात्तीर्थमुख्यानि चैव।**

(१) भामु. ४।५०।६.
(२) भा. ५।१०।२३; भामु. ५।१०।२३ क्रमे (क्रामे).
(३) भा. ५।१०।२४; भामु.
(४) भा. ५।१२।१९; भामु. ५।१२।१९ बीज (रोह) चास्य (तस्य) सोऽन्तरं (स त्रातारं).
(५) भा. ५।१२।२०-२१; भामु.
(६) भा. ५।२९।२१; भामु. ५।२९।२३ णोऽथो (णो वै) दिया (दीया) विदिता (विहिता).

**अध्यापयेद्याजयेच्चापि याज्यान्**
**प्रतिग्रहान्वा विदितान्प्रतीच्छेत्॥**

प्रतीच्छेत् प्रतिगृह्णीयात्। नीटी.

[1]**तथा राजन्यो रक्षणं वै प्रजानां**
**कृत्वा धर्मेणाप्रमत्तोऽथ दत्त्वा।**
**यज्ञैरिष्ट्वा सर्ववेदानधीत्य**
**दारान्कृत्वा पुण्यकृदावसेद्गृहान्॥**

[2]**स धर्मात्मा धर्ममधीत्य पुण्यं**
**यदिच्छया व्रजति ब्रह्मलोकम्॥**

स क्षत्रियः। अधीत्य प्राप्य। यदिच्छया यस्य धर्मस्य इच्छया बलेन ब्रह्मलोकं गच्छति, नो चेज्जनकादिवदिहैव कृतकृत्यो भवतीत्यर्थः। भोगमोक्षकरः क्षात्रो धर्मो दुस्त्यज इति भावः। नीटी.

[3]**वैश्योऽधीत्य कृषिगोरक्षपण्यै-**
**र्वित्तं चिन्वन्पालयन्नप्रमत्तः।**
**प्रियं कुर्वन्ब्राह्मणक्षत्रियाणां**
**धर्मशीलः पुण्यकृदावसेद्गृहान्॥**

[4]**परिचर्या वन्दनं ब्राह्मणानां**
**नाधीयीत प्रतिषिद्धोऽस्य यज्ञः।**
**नित्योत्थितो भूतयेऽतन्द्रितः स्या-**
**देष स्मृतः शूद्रधर्मः पुराणः॥**

नाधीयीत वेदाध्ययनं न कुर्यात्। यज्ञः श्रौतः स्मार्तश्च प्रतिषिद्धः, 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' (तैसं. ७।१।१।६) इति श्रुतेः। नीटी.

कामक्रोधलोभत्यागविधिः

[5]**त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः।**
**कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत्॥**

शरणागतभक्तादित्रयस्य
त्यागस्य निषेधः

**भक्तं च भजमानं च तवास्मीति च वादिनम्।**
**त्रीनेताञ्छरणं प्राप्तान् विषमेऽपि न संत्यजेत्॥**

पित्रादिरूपाग्निपञ्चकस्य पूज्यता

[1]**पञ्चाग्नयो मनुष्येण परिचर्याः प्रयत्नतः।**
**पिता माताऽग्निरात्मा च गुरुश्च भरतर्षभ॥**

अग्निवत्पित्रादयोऽपि पूज्या एव, नाऽऽस्कन्दनीयाः। नीटी.

देवादिपूज्यपञ्चकम्

**पञ्चैव पूजयँल्लोके यशः प्राप्नोति केवलम्।**
**देवान्पितॄन्मनुष्यांश्च भिक्षूनतिथिपञ्चमान्॥**

पितॄन् अग्निष्वात्तादीन् गोत्रप्रवर्तकानृषींश्च। मनुष्यान् पित्रादीन्। नीटी.

निद्रादित्याज्यदोषषट्कम् अप्रवक्त्राचार्यादि-
त्याज्यपुरुषषट्कम् अत्याज्यसत्यादि-
गुणषट्कं च

[2]**षड्दोषाः पुरुषेणेह हातव्या भूतिमिच्छता।**
**निद्रा तन्द्री भयं क्रोध आलस्यं दीर्घसूत्रता।**
**षडिमान्पुरुषो जह्याद्भिन्नां नावमिवार्णवे॥**

क्रोधोऽत्र तन्मूलको द्वेषो ग्राह्यः। नीटी.

**अप्रवक्तारमाचार्यमनधीयानमृत्विजम्।**
**अरक्षितारं राजानं भार्यां चाप्रियवादिनीम्।**
**ग्रामकामं च गोपालं वनकामं च नापितम्॥**
**षडेव तु गुणाः पुंसा न हातव्याः कदाचन।**
**सत्यं दानमनालस्यमनसूया क्षमा धृतिः॥**

ब्राह्मणविषयकद्वेषादीन्यष्टौ विनाशनिमित्तानि
वर्ज्यानि

[3]**अष्टौ पूर्वनिमित्तानि नरस्य विनशिष्यतः।**
**ब्राह्मणान्प्रथमं द्वेष्टि ब्राह्मणैश्च विरुध्यते॥**
**ब्राह्मणस्वानि चाऽऽदत्ते ब्राह्मणांश्च जिघांसति।**
**रमते निन्दया चैषां प्रशंसां नाभिनन्दति॥**

[4]**नैतान्स्मरति कृत्येषु याचितश्चाभ्यसूयति।**
**एतान्दोषान्नरः प्राज्ञो बुद्ध्या बुद्ध्वा विवर्जयेत्॥**

द्वेष्टि मनसाऽनिष्टं चिन्तयति। विरुध्यते कर्मणा। नीटी.

---

(१) भा. ५।२९।२२; भामु. ५।२९।२४.
(२) भामु. ५।२९।२५.
(३) भा. ५।२९।२३; भामु. ५।२९।२५-२६.
(४) भा. ५।२९।२४; भामु. ५।२९।२६ देष (देवं).
(५) भामु. ५।३३।६६, ६८.

(१) भा. ५।३३।६२-६३; भामु. ५।३३।७४-७५.
(२) भा. ५।३३।६६-६९; भामु. ५।३३।७८-८१.
(३) भा. ५।३३।७५-७६; भामु. ५।३३।९३-९४.
(४) भा. ५।३३।७७; भामु. ५।३३।९५ नैतान् (नैनान्) बुद्ध्या (बुध्येत्).

मत्तत्वादयो धर्मज्ञानविरोधिनो दश दोषास्त्याज्याः

**[1]दश धर्मं न जानन्ति धृतराष्ट्र निबोध तान्।**
**मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः॥**
**[2]त्वरमाणश्च भीरुश्च लुब्धः कामी च ते दश।**
**तस्मादेतेषु भावेषु न प्रसज्जेत पण्डितः॥**

मत्तः मद्यादिना। प्रमत्तः विषयान्तरासक्त्याऽनवहितः। उन्मत्तः धातुदोषात्। नीटी.

प्रश्नाभावेऽपि हितस्य वक्तव्यत्वम्

**विदुर उवाच –**
**[3]शुभं वा यदि वा पापं द्वेष्यं वा यदि वा प्रियम्।**
**अपृष्टस्तस्य तद्ब्रूयाद्यस्य नेच्छेत्पराभवम्॥**

कपटयुक्तानां प्रयत्नासाध्यानां निष्फलानां च कर्मणामकर्तव्यत्वम्

**मिथ्योपेतानि कर्माणि सिध्येयुर्यानि भारत।**
**अनुपायप्रयुक्तानि मा स्म तेषु मनः कृथाः॥**

मिथ्योपेतानि कपटद्यूतादीनि। अनुपायैः असदुपायैः प्रयुक्तानि दुःखफलानीत्यर्थः। नीटी.

**[4]तथैव योगविहितं न सिध्येत्कर्म यन्नृप।**
**उपाययुक्तं मेधावी न तत्र ग्लपयेन्मनः॥**
**[5]अनुबन्धानवेक्षेत सानुबन्धेषु कर्मसु।**
**संप्रधार्य च कुर्वीत न वेगेन समाचरेत्॥**

अनुबन्धान् प्रयोजनानि। संप्रधार्य निश्चित्य। नीटी.

**[6]अनुबन्धं च संप्रेक्ष्य विपाकांश्चैव कर्मणाम्।**
**उत्थानमात्मनश्चैव धीरः कुर्वीत वा न वा॥**

विपाकः फलसिद्धावपि परिपाकः। उत्थानमुद्यमम्। वा न वेति सिद्धिपक्षे कुर्वीत, नान्यथेत्यर्थः। नीटी.

**[7]किं नु मे स्यादिदं कृत्वा किं नु मे स्यादकुर्वतः।**
**इति कर्माणि संचिन्त्य कुर्याद्वा पुरुषो न वा॥**

(१) भा. ५।३३।८२; भामु. ५।३३।१०१.
(२) भा. ५।३३।८३; भामु. ५।३३।१०२ भीरुश्च लुब्धः (लुब्धश्च भीतः).
(३) भा. ५।३४।४,६; भामु.
(४) भा. ५।३४।७; भामु. ५।३४।७ द्वितीयचरणे (यत्तु कर्म न सिध्यति).
(५) भा. ५।३४।८; भामु. ५।३४।८ नवेक्षे (नपेक्षे).
(६) भा. ५।३४।९; भामु. ५।३४।९ कांश्चैव (कं चैव).
(७) भा. ५।३४।१९; भामु.; अप. १।११५ पृ. १५८ उत्तरार्धे (इति संचिन्त्य कार्याणि धीरः कुर्वीत वा न वा॥) व्यासः; आपा. ३ सर्वम् अपवत्; मुक्ता. २१० सर्वम् अपवत्.

**[1]अनारभ्या भवन्त्यर्थाः केचिन्नित्यं तथाऽगताः।**
**कृतः पुरुषकारोऽपि भवेद्येषु निरर्थकः॥**

अनारभ्याः प्रबलैः सह वैरादयः। अगताः कदाचिदप्यप्राप्ताः। नीटी.

बालाद्युक्तस्यापि सारस्य शिष्टवचनसदाचारयोश्च ग्राह्यत्वम्

**[2]अप्युन्मत्तात्प्रलपतो बालाच्च परिसर्पतः।**
**सर्वतः सारमादद्यादश्मभ्य इव काञ्चनम्॥**
**[3]सुव्याहृतानि सुधियां सुकृतानि ततस्ततः।**
**संचिन्वन्धीर आसीत शिलाहारी शिलं यथा॥**

सुव्याहृतानि पाण्डित्यवचनानि। सूक्तानि शोभनतया उक्तानि मातृपितृगुर्वादीनि(?दीनाम्)। सुकृतानि तदुपदिष्टकर्माणि। शिलं कणिशाद्यर्जनम्। 'उञ्छः कणश आदानं कणिशाद्यर्जनं शिलम्' इति यादवः। नीटी.

परपीडाकरवचननिषेधः

**[4]वाक्सायका वदनान्निष्पतन्ति**
**यैराहतः शोचति रात्र्यहानि।**
**परस्य नाममर्मसु ते पतन्ति**
**तान्पण्डितो नावसृजेत्परेषु॥**

नाममर्मसु, किंतु मर्मस्वेव। नीटी.

मद्यपानादीन्यष्टौ वर्ज्यानि

**[5]मत्तापानं कलहं पूगवैरं**
**भार्यापत्योरन्तरं ज्ञातिभेदम्।**
**राजद्विष्टं स्त्रीपुमांसोर्विवादं**
**वर्ज्यान्याहुर्यश्च पन्थाः प्रदुष्टः॥**

अन्तरं वियोगम्। विवादं वैरप्रवर्तनम्। नीटी.

रात्र्यादिभोग्यसुखफलककर्मणां दिवसादयः कालाः

**[6]दिवसेनैव तत्कुर्याद्येन रात्रौ सुखं वसेत्।**
**अष्टमासेन तत्कुर्याद्येन वर्षाः सुखं वसेत्॥**

वर्षाः इत्यत्यन्तसंयोगे द्वितीया। नीटी.

(१) भा. ५।३४।२०; भामु. ५।३४।२० कारोऽपि (कारो हि).
(२) भा. ५।३४।३०; भामु. ५।३४।३२ सर्पतः (जल्पतः).
(३) भा. ५।३४।३१; भामु. ५।३४।३३ सुधियां (सूक्तानि).
(४) भा. ५।३४।७७; भामु. ५।३४।८० त्परेषु (त्परेभ्यः).
(५) भा. ५।३५।३६; भामु. ५।३५।४३ मत्ता (मद्य) पुमांसो (पुंसयो).
(६) भा. ५।३५।५७-५८; भामु. ५।३५।६७-६८.

**पूर्वे वयसि तत्कुर्याद्येन वृद्धः सुखं वसेत्।**
**यावज्जीवेन तत्कुर्याद्येन प्रेत्य सुखं वसेत्॥**

धृतिशमसत्यतितिक्षाणां विधिः मित्रद्रोहनीचसेवा-
परपीडकवाचां च निषेधः

**हंस उवाच –**

**[1]एतत्कार्यममराः संश्रुतं मे**
**धृतिः शमः सत्यधर्मानुवृत्तिः।**
**ग्रन्थिं विनीय हृदयस्य सर्वं**
**प्रियाप्रिये चाऽऽत्मवशं नयीत॥**

मे मया संश्रुतम्, गुरुभ्य इति शेषः। तदेवाऽऽह – धृतिरिति। धृतिः दुःखैरभिघातेऽपि अवैकल्यम्। दमः सर्वेन्द्रियजयः। सत्यधर्माः ब्रह्मप्रापका धर्माः धारणा-ध्यानसमाधयः, तेषामनुवृत्तिः अविच्छेदः। तैश्च ग्रन्थिं चिज्जडयोरात्मान्तःकरणयोरेकलोलीभावं विनीय तयोः पृथक्करणेन शिथिलीकृत्य प्रियाप्रिये सुखदुःखे आत्मसमम् आत्मसाम्यं नयीत प्रापयेत्। प्रियाप्रियधर्मिणोऽ-न्तःकरणस्याऽऽत्मन्यध्यस्तस्य स्वाधिष्ठाने प्रलये सति तयोरपि तत्रैव लय इत्यर्थः। यथा रज्ज्वां रज्जुसर्पे लीने सति भीषणत्वादयोऽपि तत्रैव लीयन्ते तद्वत्।

नीटी.

**[2]आक्रुश्यमानो नाऽऽक्रोशेन्मन्युरेव तितिक्षतः।**
**आक्रोष्टारं निर्दहति सुकृतं चास्य विन्दति॥**

नाऽऽक्रोशेत् न शपेत्, यतस्तितिक्षतो मन्युः क्रोध एव आक्रोष्टारं दहति। नीटी.

**[3]नाऽऽक्रोशी स्यान्नावमानी परस्य**
**मित्रद्रोही नोत नीचोपसेवी।**
**न चातिमानी न च हीनवृत्तो**
**रूक्षां वाचं रुशतीं वर्जयीत॥**

रुषतीं रोषवतीम्। पाठान्तरे उषतीं दाहिकां वा।

नीटी.

**[4]मर्माण्यस्थीनि हृदयं तथाऽसून्**
**घोरा वाचो निर्दहन्तीह पुंसाम्।**

(१) भा. ५।३६।४; भामु. ५।३६।४ वशं (समं).
(२) भा. ५।३६।५; भामु.
(३) भा. ५।३६।६; भामु. ५।३६।६ चाति (चाभि) रुशतीं (रुषतीं).
(४) भा. ५।३६।७; भामु. ५।३६।७ घोरा (रूक्षा) चं रुश (चमुष).

**तस्माद्वाचं रुशतीं रूक्षरूपां**
**धर्मारामो नित्यशो वर्जयीत॥**
**[1]अरुंतुदं परुषं रूक्षवाचं**
**वाक्कण्टकैर्वितुदन्तं मनुष्यान्।**
**विद्यादलक्ष्मीकतमं जनानां**
**मुखे निबद्धां निर्ऋतिं वहन्तम्॥**

निर्ऋतिम् अलक्ष्मीं मृत्युं वा। नीटी.

**[2]परश्चेदेनमधिविध्येत बाणै-**
**र्भृशं सुतीक्ष्णैरनलार्कदीप्तैः।**
**विरिच्यमानोऽप्यतिरिच्यमानो**
**विद्यात्कविः सुकृतं मे दधाति॥**

बाणैः वाग्बाणैः। दधाति पुष्णाति। नीटी.

**[3]यदि सन्तं सेवते यद्यसन्तं**
**तपस्विनं यदि वा स्तेनमेव।**
**वासो यथा रङ्गवशं प्रयाति**
**तथा स तेषां वशमभ्युपैति॥**

रङ्गस्य नीलादेः वशं नीलताम्। नीटी.

**[4]वादं तु यो न प्रवदेन्न वादये-**
**द्यो नाऽऽहतः प्रतिहन्यान्न घातयेत्।**
**यो हन्तुकामस्य न पापमिच्छे-**
**त्तस्मै देवाः स्पृहयन्त्यागताय॥**

अतिप्रोक्तोऽपि न वदेत् वादयेद्वा। अनाहतो नैव प्रतिहन्यात्। आहतोऽपि पापकं हन्तारं यदि हन्तुं नेच्छेत् स देवानामपि श्रेष्ठो भवतीत्यर्थः। नीटी.

**[5]अव्याहृतं व्याहृताच्छ्रेय आहुः**
**सत्यं वदेद्व्याहृतं तद्द्वितीयम्।**
**प्रियं वदेद्व्याहृतं तत्तृतीयं**
**धर्म्यं वदेद्व्याहृतं तच्चतुर्थम्॥**

अव्याहृतं मौनम्। ततोऽपि श्रेयः सत्यवचनम्। सत्यमपि प्रियं चेत्ततोऽपि श्रेयः, तदपि धर्मादनपेतं चेत् श्रेष्ठत-ममित्यर्थः। नीटी.

(१) भा. ५।३६।८; भामु. ५।३६।८ तिं व (तिं वै व).
(२) भा. ५।३६।९; भामु. ५।३६।९ मधिवि (मभिवि) विरिच्य (स विध्य) तिरिच्य (तिदह्य).
(३) भा. ५।३६।१०; भामु. ५।३६।१० सेवते (सेवति).
(४) भा. ५।३६।११; भामु. ५।३६।११ वादं तु यो (अतिवादं) द्यो ना (द्योऽना) तृतीयचरणे (हन्तुं च यो नेच्छति पापकं वै).
(५) भा. ५।३६।१२; भामु.

सत्सङ्गात्सत्त्वप्राप्तिः

**[1]यादृशैः संविवदते यादृशांश्चोपसेवते।**
**यादृगिच्छेच्च भवितुं तादृग्भवति पूरुषः॥**

तस्मात्सत्सङ्ग एव त्वयाऽपि कर्तव्य इत्याशयेनाऽऽह- यादृशैरिति। नीटी.

उत्तममध्यमाधमपुरुषलक्षणानि उत्तमादीनां सेव्यत्वासेव्यत्वविवेकश्च

**[2]भावमिच्छति सर्वस्य नाभावे कुरुते मतिम्।**
**सत्यवादी मृदुर्दान्तो यः स उत्तमपूरुषः॥**

भावं कल्याणम् अभावे अकल्याणे। नीटी.

**[3]नानर्थकं सान्त्वयति प्रतिज्ञाय ददाति च।**
**राद्धापराद्धे जानाति यः स मध्यमपूरुषः॥**

अनर्थकं मिथ्या न सान्त्वयति। नीटी.

**[4]न श्रद्दधाति कल्याणं परेभ्योऽप्यात्मशङ्कितः।**
**निराकरोति मित्राणि यो वै सोऽधमपूरुषः॥**

अधमलक्षणमाह — नेति। परेभ्यः गुरुभ्यः। आत्मन्येव शङ्कितः विश्वासहीनः। नीटी.

**[5]उत्तमानेव सेवेत प्राप्ते काले तु मध्यमान्।**
**अधमांस्तु न सेवेत य इच्छेच्छ्रेय आत्मनः॥**

महाकुलताप्रयोजकानि तपोदमादिवृत्तानि तत्प्रशंसा च

**[6]प्राप्नोति वै वित्तमसद्बलेन**
**नित्योत्थानात्प्रज्ञया पौरुषेण।**
**न त्वेव सम्यग्लभते प्रशंसां**
**न वृत्तमाप्नोति महाकुलानाम्॥**

**धृतराष्ट्र उवाच —**

**[7]महाकुलानां स्पृहयन्ति देवा**
**धर्मार्थवृद्धाश्च बहुश्रुताश्च।**

(१) भा. ५।३६।१३; भामु. ५।३६।१३ विवद (निविश).

(२) भा. ५।३६।१६; भामु. ५।३६।१६ मतिम् (मनः).

(३) भा. ५।३६।१७; भामु. ५।३६।१७ राद्धापराद्धे (रन्ध्रं परस्य).

(४) भा. ५।३६।१९; भामु.

(५) भा. ५।३६।२०; भामु. ५।३६।२० प्राप्ते का (प्राप्तका) च्छ्रेय (द्भूति).

(६) भा. ५।३६।२१; भामु.

(७) भा. ५।३६।२२; भामु. ५।३६।२२ कुलानां (कुलेभ्यः) वृद्धाश्च (नित्याश्च).

**पृच्छामि त्वां विदुर प्रश्नमेतं**
**भवन्ति वै कानि महाकुलानि॥**

महाकुलेभ्य इति 'स्पृहेरीप्सितः' (पासू. १।४।३६) इति कर्मणि चतुर्थी। नीटी.

**विदुर उवाच —**

**[1]तपो दमो ब्रह्मवित्त्वं वितानाः**
**पुण्या विवाहाः सततान्नदानम्।**
**येष्वेवैते सप्त गुणा भवन्ति**
**सम्यग्वृत्तास्तानि महाकुलानि॥**

तपः कृच्छ्रचान्द्रायणादि, दमः इन्द्रियजयः, ब्रह्मवित्तं ब्राह्मणस्य धनं वेदाध्ययनं वेदाध्यापनं च, वितानाः यज्ञकर्माणि, सम्यग्वृत्ताश्च ये तानि, क्लीबत्वं विधेयापेक्षया, महाकुलानि विद्धि। नीटी.

**[2]येषां न वृत्तं व्यथते न योनि-**
**र्वृत्तप्रसादेन चरन्ति धर्मम्।**
**ये कीर्तिमिच्छन्ति कुले विशिष्टां**
**त्यक्तानृतास्तानि महाकुलानि॥**

न व्यथते न चलति, न योनिः पित्रादयोऽपि येषां दोषेण न व्यथन्ते, किन्तु गुणैरेव तुष्यन्ति। नीटी.

**[3]अनिज्ययाऽविवाहैश्च वेदस्योत्सादनेन च।**
**कुलान्यकुलतां यान्ति धर्मस्यातिक्रमेण च॥**

**[4]देवद्रव्यविनाशेन ब्रह्मस्वहरणेन च।**
**कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च॥**

**[5]ब्राह्मणानां परिभवात्परिवादाच्च भारत।**
**कुलान्यकुलतां यान्ति न्यासापहरणेन च॥**

परिभवात् ताडनात्। परीवादात् निन्दातः। नीटी.

**[6]कुलानि समुपेतानि गोभिः पुरुषतोऽश्वतः।**
**कुलसंख्यां न गच्छन्ति यानि हीनानि वृत्ततः॥**

गोभिः वाग्भिः विद्ययेत्यर्थः, पुरुषतः सत्पुरुषैः अर्थतः धनैश्च कुलानि कुलसंख्यां कुलेषु गणनां समुपेतानि भवन्ति। नीटी.

(१) भा. ५।३६।२३; भामु. ५।३६।२३ वित्त्वं (वित्तं).

(२) भा. ५।३६।२४; भामु. ५।३६।२४ वृत्तं (श्वित्त).

(३) भा. ५।३६।२५; भामु. ५।३६।२५ऽविवाहैश्च वे (कुविवाहैर्वे).

(४) भा. ५।३६।२६; भामु.

(५) भा. ५।३६।२७; भामु. ५।३६।२७ त्परिवा (त्परीवा).

(६) भा. ५।३६।२८; भामु. ५।३६।२८ ऽश्वतः (ऽर्थतः).

**[1]वृत्ततस्त्वविहीनानि कुलान्यल्पधनान्यपि।**
**कुलसंख्यां तु गच्छन्ति कर्षन्ति च महद्यशः॥**

वृत्ततः धर्मेण। कर्षन्ति आहरन्ति। नीटी.

**[2]वृत्तं यत्नेन संरक्षेद्वित्तमेति च याति च।**
**अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः॥**
**गोभिः पशुभिरश्वैश्च कृष्या च सुसमृद्धया।**
**कुलानि न प्ररोहन्ति यानि हीनानि वृत्ततः॥**

गोभिः विद्याभिः। नीटी.

**[3]अर्थयेदेव मित्राणि सति वाऽसति वा धने।**
**नानर्थयन्विजानाति मित्राणां सारफल्गुताम्॥**

अनर्थयन् प्रार्थनाशून्यः। लुब्धस्तु मित्राणां सारफल्गुत्वे न जानातीत्यतः स कार्यार्थी वणिक्तुल्यः, न तु मित्रम्। नीटी.

मित्रसंग्रहः, शोकहर्षयोस्त्याज्यत्वम्

**[4]संतापाद्भ्रश्यते रूपं संतापाद्भ्रश्यते बलम्।**
**संतापाद्भ्रश्यते ज्ञानं संतापाद्व्याधिमृच्छति॥**

संतापात् इष्टवियोगात् शोकात्। नीटी.

**अनवाप्यं च शोकेन शरीरं चोपतप्यते।**
**अमित्राश्च प्रहृष्यन्ति मा स्म शोके मनः कृथाः॥**

अनवाप्यं न प्राप्यं शोकेन शोकमात्रेण। इष्टमिति शेषः। नीटी.

**[5]पुनर्नरो म्रियते जायते च**
**पुनर्नरो हीयते वर्धते पुनः।**
**पुनर्नरो याचति याच्यते च**
**पुनर्नरः शोचति शोच्यते पुनः॥**

दुःखादेरागमापायित्वादपि न शोकादिकं कर्तव्यमित्याह — पुनरिति। नीटी.

**[6]सुखं च दुःखं च भवाभवौ च**
**लाभालाभौ मरणं जीवितं च।**
**पर्यायशः सर्वमिह स्पृशन्ति**
**तस्माद्धीरो नैव हृष्येन्न शोचेत्॥**

सर्वं पुरुषमात्रम्। नीटी.

अवध्या ब्राह्मणादयः

**[1]अवध्या ब्राह्मणा गावः स्त्रियो बालाश्च ज्ञातयः।**
**येषां चान्नानि भुञ्जीत ये च स्युः शरणागताः॥**

परवर्तनानुसारिस्ववर्तनस्य विधिः

**[2]यस्मिन्यथा वर्तते यो मनुष्य-**
**स्तस्मिंस्तथा वर्तितव्यं स धर्मः।**
**मायाचारो मायया वर्तितव्यः**
**साध्वाचारः साधुना प्रत्युदेयः॥**

सर्वस्वत्यागेनाप्यात्मरक्षणकर्तव्यता

**[3]त्यजेत्कुलार्थे पुरुषं ग्रामस्यार्थे कुलं त्यजेत्।**
**ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्॥**
**[4]आपदर्थं धनं रक्षेद्दारान्रक्षेद्धनैरपि।**
**आत्मानं सततं रक्षेद्दारैरपि धनैरपि॥**

परहितात्महितोभयसाधनस्य कर्मणः कर्तव्यता

**[5]हितं यत्सर्वभूतानामात्मनश्च सुखावहम्।**
**तत्कुर्यादीश्वरो ह्येतन्मूलं धर्मार्थसिद्धये॥**

ईश्वरे कालान्तरीयफलप्रतिभूभूते एतदेव स्वपरहिताचरणं मूलं हेतुभूतम्। एतद्विना ईश्वरोऽपि फलं दातुं न समर्थ इत्यर्थः। नीटी.

स्वभावतो विश्वासानर्हेषु स्त्र्यादिषु विश्वासस्य निषेधः

**[6]महते योऽपकाराय नरस्य प्रभवेन्नरः।**
**तेन वैरं समासज्य दूरस्थोऽस्मीति नाऽऽश्वसेत्॥**
**[7]स्त्रीषु राजसु सर्पेषु स्वाध्याये शत्रुसेविषु।**
**भोगे चाऽऽयुषि विश्वासं कः प्राज्ञः कर्तुमर्हति॥**

(१) भा. ५।३६।२९; भामु.५।३६।२९ तु (च).
(२) भामु. ५।३६।३०-३१.
(३) भा. ५।३६।४१; भामु. ५।३६।४३ अर्थ (अर्च) यन्विजा (यन्प्रजा).
(४) भा. ५।३६।४२-४३; भामु. ५।३६।४४-४५.
(५) भा. ५।३६।४४; भामु. ५।३६।४६ पुनः (च).
(६) भा. ५।३६।४५; भामु. ५।३६।४७ मिह (मेते) नैव (न च).

(१) भा. ५।३६।६४; भामु. ५।३६।६६ द्वितीयचरणे (ज्ञातयः शिशवः स्त्रियः).
(२) भा. ५।३७।७; भामु. ५।३७।७ प्रत्युदेयः (प्रत्युपेयः).
(३) भा. ५।३७।१६, ५।१२६।४८; भामु. ५।३७।१७, ५।१२८।४९.
(४) भा. ५।३७।१७; भामु. ५।३७।१८ आपदर्थं (आपदर्थे).
(५) भा. ५।३७।३६; भामु. ५।३७।४० श्वरो (श्वरे) धर्मा (सर्वा).
(६) भा. ५।३७।५२; भामु. ५।३७।५६.
(७) भा. ५।३७।५३; भामु. ५।३७।५७ ये शत्रुसेविषु (यप्रभुशत्रुषु) गे चाऽऽ (गेष्वा).

[१]सर्पश्चाग्निश्च सिंहश्च कुलपुत्रश्च भारत।
नावज्ञेया मनुष्येण सर्वे ते ह्यतितेजसः॥

कुलपुत्रः ज्ञातिः। नीटी.

[२]अपकृत्वा बुद्धिमतो दूरस्थोऽस्मीति नाऽऽश्वसेत्।
दीर्घौ बुद्धिमतो बाहू याभ्यां हिंसति हिंसितः॥

दीर्घौ बाहू बुद्ध्या दूरस्थमप्यादातुं शक्नुत इत्यर्थः। हिंसति हिनस्ति। नीटी.

[३]न विश्वसेदविश्वस्ते विश्वस्ते नाति विश्वसेत्।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति॥

दैवतादिविषयकस्य क्रोधस्य नियन्तव्यत्वम्

[४]दैवतेषु च यत्नेन राजसु ब्राह्मणेषु च।
नियन्तव्यः सदा क्रोधो वृद्धबालातुरेषु च॥

[५]निरर्थं कलहं प्राज्ञो वर्जयेन्मूढसेवितम्।
कीर्तिं च लभते लोके न चानर्थेन युज्यते॥

दुष्टकृतघ्नादिरूपनराधमस्य वर्ज्यत्वम्

[६]असंविभागी दुष्टात्मा कृतघ्नो निरपत्रपः।
तादृङ्नराधमो लोके वर्जनीयो नराधिप॥

असंविभागी पोष्येभ्योऽदत्त्वा स्वयं भुञ्जानः। नीटी.

योगक्षेमविरोधिनां प्रसादनीयत्वम्

[७]येषु दुष्टेषु दोषः स्याद्योगक्षेमस्य भारत।
सदा प्रसादनं तेषां देवतानामिवाऽऽचरेत्॥

दुष्टेषु दूषितेषु वेतनाद्यतिक्रमात्। नीटी.

क्षमाविधिः, लोकसंग्रहः

[८]कर्मणा मनसा वाचा यदभीक्ष्णं निषेवते।
तदेवापहरत्येनं तस्मात्कल्याणमाचरेत्॥

[९]नातः श्रीमत्तरं किंचिदन्यत्पथ्यतमं तथा।
प्रभविष्णोर्यथा तात क्षमा सर्वत्र सर्वदा॥

(१) भा. ५।३७।५५; भामु. ५।३७।५९ ते ह्यति (ह्येतेऽति).
(२) भा. ५।३८।८; भामु.५।३८।८ कृत्वा (कृत्य).
(३) भा. ५।३८।९; भामु.
(४) भा. ५।३८।२७; भामु. ५।३८।३० च यत्ने (प्रयत्ने).
(५) भा. ५।३८।२८; भामु. ५।३८।३१.
(६) भा. ५।३८।३६; भामु. ५।३८।३९ धमो (धिपो).
(७) भा. ५।३८।३८; भामु. ५।३८।४१.
(८) भा. ५।३९।४२; भामु. ५।३९।५६-५७; निप. ७ तृतीयचरणे (तदभ्यासो हरत्येनः) माचरेत् (मभ्यसेत्) (=).
(९) भा. ५।३९।४५; भामु. ५।३९।५९-६० तथा (मतम्).

[१]क्षमेदशक्तः सर्वस्य शक्तिमान्धर्मकारणात्।
अर्थानर्थौ समौ यस्य तस्य नित्यं क्षमा हिता॥

तस्य मध्यमस्य, यो न शक्तः नाप्यशक्तस्तस्येत्यर्थः। सर्वेषां क्षमा श्रेयस्करीत्यर्थः। नीटी.

[२]न तत्परस्य संदध्यात्प्रतिकूलं यदात्मनः।
संग्रहेणैष धर्मः स्यात्कामादन्यः प्रवर्तते॥

संदध्यात् कुर्यात्। अन्यः अधर्मः। कामात् इच्छया। नीटी.

अक्रोधेन जयेत्क्रोधमसाधुं साधुना जयेत्।
जयेत्कदर्यं दानेन जयेत्सत्येन चानृतम्॥

साधुना कर्मणा। नीटी.

अतिक्लेशधर्मातिक्रमादिनिमित्तककर्मनिषेधः

[३]अतिक्लेशेन येऽर्थाः स्युर्धर्मस्यातिक्रमेण च।
अरेर्वा प्रणिपातेन मा स्म तेषु मनः कृथाः॥

ब्राह्मणे व्रताभावस्य निन्दा

[४]ब्राह्मणस्याव्रतं मलम्॥

चातुर्वर्ण्यधर्माणां संग्रहः प्रशंसा च

[५]नित्योदकी नित्ययज्ञोपवीती
नित्यस्वाध्यायी पतितान्नवर्जी।
ऋतं ब्रुवन् गुरवे कर्म कुर्वन्
न ब्राह्मणश्च्यवते ब्रह्मलोकात्॥

नित्योदकी नित्यं यथाकालं स्नानाचमनपरः। नीटी.

[६]अधीत्य वेदान्परिसंस्तीर्य चाग्नी-
निष्ट्वा यज्ञैः पालयित्वा प्रजाश्च।
गोब्राह्मणार्थे शस्त्रपूतान्तरात्मा
हतः संग्रामे क्षत्रियः स्वर्गमेति॥

परिसंस्तीर्याग्नीन् परिस्तरणैः। एतेनाग्निहोत्रमुपलक्षयतीति नारायणः। परिसंस्तीर्य वितत्य स्वे स्वे स्थाने

(१) भा. ५।३९।४६; भामु. ५।३९।६०.
(२) भा. ५।३९।५७-५८; भामु. ५।३९।७२-७४.
(३) भा. ५।३९।६१; भामु. ५।३९।७६-७७ च (वा).
(४) भा. ५।३९।६४, १२।३१५।२०; भामु. ५।३९।७९, १२।३२८।२०; विपा. ३।२।२४० (=).
(५) भा. ५।४०।२३; भामु. ५।४०।२५.
(६) भा. ५।४०।२४; भामु. ५।४०।२६ णार्थे (णार्थं).

आधायेत्यर्थः। ततो यज्ञैरिष्ट्वा। शस्त्रपूतः अन्तरात्मा चित्तं यस्य, गोब्राह्मणार्थं मृत इत्यर्थः। संग्रामे हतो वा क्षत्रियः। नीटी.

**[1]वैश्योऽधीत्य ब्राह्मणान्क्षत्रियांश्च**
**धनैः काले संविभज्याऽऽश्रितांश्च।**
**त्रेतापूतं धूममाघ्राय पुण्यं**
**प्रेत्य स्वर्गे देवसुखानि भुङ्क्ते॥**

अधीत्य, वेदं शास्त्रमिति शेषः। त्रेता अग्नित्रयम्, तस्याः पूतं धूमम् आघ्राय। पुण्यं पावनम्। प्रेत्य मृत्वा। नीटी.

**[2]ब्रह्म क्षत्रं वैश्यवर्णं च शूद्रः**
**क्रमेणैतान्न्यायतः पूजयानः।**
**तुष्टेष्वेतेष्वव्यथो दग्धपाप-**
**स्त्यक्त्वा देहं स्वर्गसुखानि भुङ्क्ते॥**

द्वादशकः क्रोधादिदोषगणः, त्रयोदशको
विकत्थनत्वादिनृशंसदोषगणः,
द्वादशको धर्मादि-
गुणगणः

**सनत्सुजात उवाच –**
**[3]क्रोधादयो द्वादश यस्य दोषा-**
**स्तथा नृशंसादि षडत्र राजन्।**
**धर्मादयो द्वादश चाऽऽतताना:**
**शास्त्रे गुणा ये विदिता द्विजानाम्॥**

क्रोधादिगणो द्वादशकः। दशत्रि त्रयोदशेत्यर्थः। तावान् नृशंसवर्गश्च तपसः कल्मषम्, धर्मादिगणविरुद्धत्वात्। तद्रहितधर्माद्युपेतं तु तपो निष्कल्मषं मोक्षहेतुरित्यर्थः। पितॄणां वंशकर्तॄणां मन्वादीनाम्। आतताना इत्यपि पाठः। नीटी.

**[4]क्रोधः कामो लोभमोहौ विवित्सा-**
**ऽकृपाऽसूया मानशोकौ स्पृहा च।**
**ईर्ष्या जुगुप्सा च मनुष्यदोषा**
**वर्ज्याः सदा द्वादशैते नरेण॥**

क्रोधः इच्छाप्रतीघातोत्थ आक्रोशताडनादिहेतुर्मनस्तापः। कामः स्त्र्यभिलाषः। लोभः धनव्ययभीरुत्वम्। मोहः कृत्याकृत्यविवेकराहित्यम्। विधित्सा सत्यप्युत्तरोत्तरलाभे पिपासाख्या अतृप्तिः। 'धेट् पाने' इत्यस्य रूपम्। अकृपा निर्दयत्वम्। असूया परगुणेषु दोषदर्शनम्। मानः आत्मनि पूज्यताबुद्धिः। शोकः इष्टार्थनाशे सति मनोवैक्लव्यम्। स्पृहा भोग्यवर्गेष्वादरः। ईर्ष्या परोत्कर्षासहिष्णुत्वम्। जुगुप्सा परनिन्दा बीभत्सता वा। मनुष्याणां योगिनामयोगिनां चैते दोषाः सर्वेषामपि वर्ज्या इत्यर्थः। नीटी.

**[1]विकत्थनः स्पृहयालुर्मनस्वी**
**बिभ्रत्कोपं चपलोऽरक्षणश्च।**
**एते प्राप्ताः षण्नरान्पापधर्मान्**
**प्रकुर्वते नोत सन्तः सुदुर्गे॥**
**[2]संभोगसंविद्द्विषमेधमानो**
**दत्तानुतापी कृपणोऽबलीयान्।**
**वर्गप्रशंसी वनितासु द्वेष्टा**
**एतेऽपरे सप्त नृशंसधर्माः॥**

त्रयोदश नृशंसानि हिंस्राण्याह द्वाभ्याम् – विकत्थन इति। विकत्थनः परगुणाक्षेपेण स्वगुणोत्कर्षाभिधानशीलः, स्पृहयालुः अतियत्नपूर्वकं परस्त्र्यादिभोगेच्छावान्, मनस्वी गर्वाधिक्यात्परावमानशीलः, बिभ्रत्कोपं निमित्तं विनाऽपि सदा कोपपरः, चपलः मित्रभावा-दिष्वस्थिरः, अरक्षणः शक्तौ सत्यां स्वीकृतस्त्र्यादेः पालनमकुर्वन्, एतान् षट् पापधर्मान् पापाः पापिनो नराः कुर्वते। के ते? ये सुदुर्गे महासंकटे इह परत्र वा उपस्थिते नोत्रसन्तः त्रासमकुर्वन्तः। एकमिदं पदम्, सुप्सुपेति समासः। एते षडत्यन्तं हिंस्रा इत्यर्थः।

संभोगः स्त्रीसङ्गादिः, तद्विषया संवित् संमतिः, तदेव पुरुषार्थ इति या बुद्धिः तया विषमः दुर्व्यवस्थितः। अतिमानी अत्यन्तं दर्पवान्। पाठान्तरे संभोगसंवित् भोगे बुद्धिमान्, द्विषं द्वेषम् एधमानः वर्धयन्। दत्तानुतापी दानं कृत्वा अपि लोभवशात् मम धनं नष्टमिति संतापवान्।

(१) भा. ५।४०।२५; भामु. ५।४०।२७ देव (दिव्य).
(२) भा. ५।४०।२६; भामु. ५।४०।२८.
(३) भा. ५।४३।७; भामु. ५।४३।१५ दि षडत्र (नि दशत्रि) श चाऽऽतताना: (शैते पितॄणां).
(४) भा. ५।४३।८; भामु. ५।४३।१६ विवित्सा (विधित्सा) सूया (सूये) नरेण (नराणाम्).

(१) भा. ५।४३।१०; भामु. ५।४३।१८ एते प्राप्ताः षण्नरान् (एतान् पापाः षण्नराः) नोत स (नोत्रस).
(२) भा. ५।४३।११; भामु. ५।४३।१९ द्विषमेधमानो (द्विषमोऽतिमानी) णोऽब (णो ब) एतेऽपरे (एते परे) धर्माः (वर्गाः).

कृपणः प्राणान्ते अपि वित्तव्ययमसहमानः। *बलीयान् अतिशयेन बलिमान्। पूर्वराजेभ्योऽप्यधिकं प्रजानां सकाशात् बलिं गृह्णन्नित्यर्थः। वर्गप्रशंसी वर्गः वृजिनं पराभिभवः, तत्प्रशंसनशीलः, अन्येषां दुःखेन सुखीत्यर्थः। वनितासु परिणीतासु द्वेष्टा। एते सप्त नृशंसाः, पूर्वे च षट्, एवं त्रयोदश। नीटी.

**(१)धर्मश्च सत्यं च दमस्तपश्च**
**अमात्सर्यं ह्रीस्तितिक्षाऽनसूया।**
**यज्ञश्च दानं च धृतिः श्रुतं च**
**महाव्रता द्वादश ब्राह्मणस्य॥**

गुणानाह — धर्म इति। धर्मः वर्णाश्रमनियतः संध्योपासनादिः। सत्यं हिंसावर्जं यथार्थभाषणम्। दमः जिह्वोपस्थादिनिग्रहः। तपः कृच्छ्रचान्द्रायणादि। अमात्सर्यम्, मत्सरः परगुणासहिष्णुत्वम्, तदभावः। ह्रीः लज्जा। तितिक्षा सत्यपि क्रोधनिमित्ते तदनुत्पादः। अनसूया, परगुणेषु दोषाविष्करणमसूया, तदभावः। यज्ञः ज्योतिष्टोमादिः। दानं बहिर्वेदिसंविभागः। धृतिः अत्यन्तापद्यपि व्रतादेरत्यागः। श्रुतम् अर्थग्रहणसहितं वेदाध्ययनम्। ब्राह्मणस्य ब्रह्म प्राप्तुमिच्छोः। नीटी.

**(२)यस्त्वेतेभ्यः प्रवसेद्द्वादशेभ्यः**
**सर्वामपीमां पृथिवीं प्रशिष्यात्।**
**त्रिभिर्द्वाभ्यामेकतो वा विशिष्टो**
**नास्य स्वमस्तीति स वेदितव्यः॥**

सर्वगुणाढ्यो ब्रह्मवित् सत्यकामादिगुणभाक् भवति, 'यस्तमात्मानमनुविद्य विजानाति स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्' (छाउ. ८।७।१) इति श्रुतेः। एतेषां मध्ये त्रिभिर्द्वाभ्यामेकतो वा अर्थितः, अर्थः वित्तं संजातमस्य स तथा। स्वं दैवं वित्तम्। नीटी.

दमत्यागाप्रमादाः सत्यमुखानि

**(३)दमस्त्यागोऽप्रमादश्च एतेष्वमृतमाहितम्।**
**तानि सत्यमुखान्याहुर्ब्राह्मणा ये मनीषिणः॥**

*बलिमच्छब्दादीयसुनि 'विन्मतोर्लुक्' (पासू. ५।३।६५) इति मतुल्लोपः।

(१) भा. ५।४३।१२; भामु. ५।४३।२० महाव्रता (व्रतानि वै).

(२) भा. ५।४३।१३; भामु. ५।४३।२१ प्रवसे (प्रभवे) शेभ्यः (शभ्यः) प्रशिष्यात् (स शिष्यात्) विशिष्टो नास्य (ऽर्थितो यस्तस्य).

(३) भा. ५।४३।१४; भामु. ५।४३।२२.

दमः जितेन्द्रियत्वम्, त्यागः कर्मणामीश्वरेऽर्पणम्, अप्रमादः तत्त्वानुसंधानम्, अमृतं मुक्तिः। सत्यमुखानि सत्यप्रधानान्येव एतानि फलानि भवन्तीत्यर्थः। नीटी.

अष्टादशदोषराहित्यप्रयुक्तं दमस्याष्टा-
दशविधत्वम्

**8(१)दमोऽष्टादशदोषः स्यात्प्रतिकूलं कृताकृते।**
**अनृतं चाभ्यसूया च कामार्थौ च तथा स्पृहा॥**

अष्टादशदोषत्यागादष्टादशगुणत्वं दमस्याऽऽह — दम इति। कृते कर्मणि वैदिके प्रतिकूलमश्रद्धा आलस्यादि च। अकृते उपवासव्रतादौ प्रतिकूलं क्षुधाजिह्वालौल्यादि। इदं द्वयमेको दोषः। अनृताभ्यसूये प्रसिद्धे। कामः स्त्र्यभिलाषः। अर्थः धनार्जनार्थेऽतियत्नः। स्पृहा धनाद्यभिलाषः। नीटी.

**(२)क्रोधः शोकस्तथा तृष्णा लोभः पैशुन्यमेव च।**
**मत्सरश्च विवित्सा च परितापस्तथा रतिः॥**

पैशुन्यं परदोषसूचकत्वम्। परितापः अतिदुःखित्वम्। अरतिः सत्क्रियानभिलाषः। नीटी.

**(३)अपस्मारः सातिवादस्तथा संभावनाऽऽत्मनि।**
**एतैर्विमुक्तो दोषैर्यः स दमः सद्भिरुच्यते॥**

अपस्मारः कर्तव्यविस्मरणम्। अतिवादः पराक्रोशः। संभावना महत्त्वबुद्धिः। नीटी.

चतुर्विंशतिर्मददोषास्तत्र त्यागविपर्ययरूपाः
षड्दोषाश्च

**(४)मदोऽष्टादशदोषः स्यात्त्यागो भवति षड्विधः।**
**विपर्ययाः स्मृता एते मददोषा उदाहृताः॥**

येषां विपर्यया दमगुणत्वेन उक्तास्त एव कृताकृत-प्रतिकूलादयोऽष्टादश। तथा वक्ष्यमाणस्य षड्विधत्यागस्य च विपर्ययाः षट्। ते च लक्ष्मीप्राप्तौ हर्षः, अप्रिये जाते व्यथा, स्वीयेषु याच्ञा, पात्रेष्वप्रदानम्, सत्यधिकारे इष्टापूर्त-योरकरणम्, कामस्यात्यागः प्रमादश्च। एते चतुर्विंश-तिर्मददोषाः। नीटी.

8 नात्र वक्ष्यमाणा अष्टादश दोषा दमनिष्ठाः, दमस्य गुणत्वेन वर्णनीयत्वात्, दमे एतद्दोषमुक्तत्वस्य वक्ष्यमाणत्वाच्च। अतो भामुपाठ एव साधीयान्। एतत्पाठाग्रहे तु 'अष्टादश दोषाः यस्य विरुद्धत्वेन यत्संबन्धिनः' इति क्लेशेन कथंचित् तत्साधुत्वं प्रतिपत्तव्यम्।

(१) भा. ५।४३।१५; भामु. ५।४३।२३ प्रथमचरणे (दमो ह्यष्टादशगुणः).

(२) भा. ५।४३।१६; भामु. ५।४३।२४ विवित्सा (विहिंसा) तथा रतिः (तथाऽरतिः).

(३) भा. ५।४३।१७; भामु. ५।४३।२५ रः साति (रश्चाति) दमः (दान्तः).

(४) भामु. ५।४३।२६-२७.

**[1]श्रेयांस्तु षड्विधस्त्यागस्तृतीयो दुष्करो भवेत्।**
**तेन दुःखं तरत्येव भिन्नं तस्मिञ् जितं कृते॥**

श्रेयान् प्रशस्ततरः। तृतीयो वक्ष्यमाणः कामत्यागः। तस्मिन् कामत्यागे कृते सति भिन्नं भेदः, भावे निष्ठा, द्वैतमिति यावत्, स एव दुःखम्, 'द्वितीयाद्वै भयं भवति' (बृउ. १।४।२) 'यत्रान्यत्पश्यत्यन्यच्छृणोति तदल्पं... अथ यदल्पं तद्दुःखम् (? तन्मर्त्यम्)' (छाउ. ७।२४।१) इत्यादि-श्रुतिभ्यः। कामत्यागादेव सर्वदुःखनिवृत्तिरूपो मोक्षः सिद्धः। तथा च श्रुतिः — 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते॥' (काउ. २६।१४) इति। नीटी.

**[2]श्रेयांस्तु षड्विधस्त्यागः प्रियं प्राप्य न हृष्यति।**
**अप्रिये तु समुत्पन्ने व्यथां जातु न चार्च्छति॥**
**इष्टान्दारांश्च पुत्रांश्च न चान्यं यद्वचो भवेत्।**
**अर्हते याचमानाय प्रदेयं तद्वचो भवेत्।**
**अप्यवाच्यं वदत्येव स तृतीयो गुणः स्मृतः॥**
**त्यक्तैर्द्रव्यैर्यो भवति नोपयुङ्क्ते च कामतः।**
**न च कर्मसु तद्धीनः शिष्यबुद्धिर्नरो यथा।**
**सर्वैरेव गुणैर्युक्तो द्रव्यवानपि यो भवेत्॥**
**[3]श्रेयांस्तु षड्विधस्त्यागः श्रियं प्राप्य न हृष्यति।**
**इष्टापूर्ते द्वितीयं स्यान्नित्यवैराग्ययोगतः॥**

त्यागमेवाऽऽह — श्रेयानिति। श्रियं लक्ष्मीं विद्यां च। न हृष्यति न दृप्यति। इष्टं यागहोमादि। आपूर्तं तडागारामादि। नीटी.

**कामत्यागश्च राजेन्द्र स तृतीय इति स्मृतः।**
**अप्यवाच्यं वदन्त्येतं स तृतीयो गुणः स्मृतः॥**

कामत्यागस्य परां काष्ठामाह — अपीति। अवाच्यं निर्वृत्तिकत्वात्। तथा चोदाहृतम् — 'यदा सर्वे प्रमुच्यन्ते' इति। नीटी.

**त्यक्तैर्द्रव्यैर्यद्भवति नोपयुक्तैश्च कामतः।**
**न च द्रव्यैस्तद्भवति नोपयुक्तैश्च कामतः॥**

द्रव्यैः स्त्र्यादिभिः त्यक्तैरेव यत् निष्कामत्वं भवति तत्कामपूर्वकमुपभुक्तैर्न भवति। यथोक्तम् — 'न जातु कामः कामानामुपभोगेन शाम्यति।' (भामु. १।७५।५०) इति। निष्कामत्वं बहुभिर्लब्धैरपि द्रव्यैर्न भवति नाप्युपयुक्तैः काम्यद्वारा व्ययीकृतैरित्यर्थः। नीटी.

**न च कर्मस्वसिद्धेषु दुःखं तेन च न ग्लपेत्।**
**सर्वैरेव गुणैर्युक्तो द्रव्यवानपि यो भवेत्॥**

न दुःखं कुर्यादिति शेषः। तेन च दुःखेन न ग्लपेत् ग्लानिं न प्राप्नुयात्। गुणैः कीर्त्यादिभिः। नीटी.

**अप्रिये च समुत्पन्ने व्यथां जातु न गच्छति॥**

अप्रिये कीर्तिवित्तनाशादिप्रभवे समुत्पन्नेऽपि यो व्यथां न गच्छति स चतुर्थस्त्याग इत्यर्थः। नीटी.

**इष्टान्पुत्रांश्च दारांश्च न याचेत कदाचन ।**
**अर्हते याचमानाय प्रदेयं तच्छुभं भवेत् ॥**

पञ्चमं त्यागमयाच्ञास्वरूपमाह — इष्टानिति। षष्ठमाह — अर्हत इति। अर्हते योग्याय। नीटी.

अप्रमादप्रमादयोः प्रत्येकमष्टविधत्वम्

**[1]अप्रमादी भवेदेतैः स चाप्यष्टगुणो भवेत्॥**
**सत्यं ध्यानं समाधानं चोद्यं वैराग्यमेव च।**
**अस्तेयं ब्रह्मचर्यं च तथाऽसंग्रहमेव च॥**
**एवं दोषा मदस्योक्तास्तान् दोषान् परिवर्जयेत्।**
**तथा त्यागोऽप्रमादश्च स चाप्यष्टगुणो मतः॥**

षड्विधत्यागफलमाह — अप्रमादीति। स च अप्रमादश्च। सत्यं यथार्थ वचनम्। ध्यानं मूर्तेरीश्वरस्य आत्मनो वाऽनुसंधानम्। समाधानं संप्रज्ञातासंप्रज्ञातभेदेन द्विविधः समाधिः। चोद्यं तर्कः येन समाधिफले सार्वकाम्यादौ दोषमुन्नयन्ति। वैराग्यम् उपरमः। अस्तेयं परस्वापहरणाभावः। ब्रह्मचर्यं स्त्रीसङ्गराहित्यम्। असंग्रहः निष्परिग्रहता। उक्तमनुवदत्यप्रमादप्रतियोगिनं प्रमादं वक्तुम् — एवमिति। नीटी.

**'अप्रमादोऽष्टदोषः स्यात्तान्दोषान्परिवर्जयेत्।**
**इन्द्रियेभ्यश्च पञ्चभ्यो मनसश्चैव भारत।**
**अतीतानागतेभ्यश्च मुक्तो ह्येतैः सुखी भवेत्॥**

पञ्चभ्य इन्द्रियेभ्यः षष्ठान्मनसश्च स्वस्वविषये रागद्वेषोत्थाः षट् प्रमादाः। अतीते नष्टपुत्रशोकादिजः सप्तमः। अनागते पुत्रकामस्य तदभावे यः क्लेशः सोऽष्टमः

(१) भामु. ५।४३।२७.
(२) भा. ५।४३।१८-२०.
(३) भामु. ५।४३।२८-३५.

(१) भा. ५।४३।२१; भामु. ५।४३।३६ प्रथमचरणे (अष्टौ दोषाः प्रमादस्य) मुक्तो ह्येतैः (मुक्त्युपेतः).

प्रमादः। एतेभ्यः प्रमादेभ्यो मुक्त्युपेतः मुक्तिं प्राप्तः सुखी भवेत्। नीटी.

दमादीनां सत्यमुखत्वं तपोरूपत्वं च

**[1]सत्यात्मा भव राजेन्द्र सत्ये लोकाः प्रतिष्ठिताः।**
**तांस्तु सत्यमुखानाहुः सत्ये ह्यमृतमाहितम्॥**
**निवृत्तेनैव दोषेण तपोव्रतमिहाऽऽचरेत्।**
**एतद्धातृकृतं वृत्तं सत्यमेव सतां व्रतम्॥**

दमत्यागाप्रमादानुक्त्वा तेषां सत्यमुखत्वं प्रागुक्तं विवृणोति — सत्यात्मेति। सत्ये आत्मा चित्तं यस्य स तथा। तान् दमत्यागाप्रमादान्। दोषनिवृत्त्यैव तपःसिद्धिर्धात्रा कृतेत्याह — निवृत्तेनैवेति। नीटी.

**[2]दोषैरेतैर्विमुक्तं तु गुणैरेतैः समन्वितम्।**
**एतत्समृद्धमप्यृद्धं तपो भवति केवलम्॥**

दमप्रशंसा

**विदुर उवाच —**
**[3]इह निःश्रेयसं प्राहुर्वृद्धा निश्चितदर्शिनः।**
**ब्राह्मणस्य विशेषेण दमो धर्मः सनातनः॥**

अदान्तोऽयं कुलक्षयं करिष्यतीति वक्ष्यन् दममेव प्रशंसन् विदुर उवाच — इहेति। किं तन्निःश्रेयसं कल्याणं ब्राह्मणस्य ब्रह्मजिज्ञासोः दम एव सनातनोऽनादिर्मुख्यो धर्मः। नीटी.

**तस्य दानं क्षमा सिद्धिर्यथावदुपपद्यते।**
**दमो दानं तपो ज्ञानमधीतं चानुवर्तते॥**

तस्य पुंसः दानं क्षमा सिद्धिर्मोक्षश्च उपपद्यते। कस्य? यस्य दमः दानादीन् अनुवर्तते। दान्तः सन् यो दानादिकं करोति स दानफलं क्षमां सिद्धिं च प्राप्नोतीत्यर्थः। नीटी.

ज्ञातिकर्तव्यानि

**[4]एवं ये ज्ञातयोऽर्थेषु मिथो गच्छन्ति विग्रहम्।**
**तेऽमित्रवशमायान्ति शकुनाविव विग्रहात्॥**
**संभोजनं संकथनं संप्रश्नोऽथ समागमः।**
**एतानि ज्ञातिकार्याणि न विरोधः कदाचन॥**

(१) भामु. ५।४३।३७-३८.
(२) भा. ५।४३।२२; भामु. ५।४३।३९ र्विमुक्तं तु (र्वियुक्तस्तु) न्वितम् (न्वितः) मप्यृद्धं (मत्यर्थं).
(३) भामु. ५।६३।९-१०.
(४) भा. ५।६२।१५-१६; भामु. ५।६४।१०-११.

धनप्रशंसा

**[1]धनमाहुः परं धर्मं धने सर्वं प्रतिष्ठितम्।**
**जीवन्ति धनिनो लोके मृता ये त्वधना नराः॥**

धर्मं धर्मकारणम्। सर्वं यज्ञदानादिः। येऽधनास्ते मृता एव। नीटी.

धार्मिकप्रशंसा, धर्मानधिकारिणः, चातुर्वर्ण्यधर्मविवेकः

**[2]धर्मनित्यः प्रशान्तात्मा कार्ययोगवहः सदा।**
**नाधर्मे कुरुते बुद्धिं न च पापेषु वर्तते॥**
**[3]अह्रीको वा विमूढो वा नैव स्त्री न पुनः पुमान्।**
**नास्याधिकारो धर्मेऽस्ति यथा शूद्रस्तथैव सः॥**

अह्रीकः तिर्यक्स्थावरतुल्यः, न मनुष्य इत्यर्थः। नीटी.

**ह्रीमानवति देवांश्च पितॄनात्मानमेव च।**
**तेनामृतत्वं व्रजति सा काष्ठा पुण्यकर्मणाम्॥**
**[4]पापः क्षत्रियधर्मोऽयं वयं च क्षत्रबान्धवाः।**
**स नः स्वधर्मोऽधर्मो वा वृत्तिरन्या विगर्हिता॥**
**[5]शूद्रः करोति शुश्रूषां वैश्या विपणिजीविनः।**
**वयं वधेन जीवामः कपालं ब्राह्मणैर्वृतम्॥**

कपालं भिक्षापात्रम्। नीटी.

**[6]क्षत्रियः क्षत्रियं हन्ति मत्स्यो मत्स्येन जीवति।**
**श्वा श्वानं हन्ति दाशार्ह पश्य धर्मो यथागतः॥**

यथा येन प्रकारेण आगतः कुलपरंपरया प्राप्तस्तं पश्येति योजना। नीटी.

**[7]न च तन्नैष्ठिकं कर्म क्षत्रियस्य विशां पते।**
**आहुराश्रमिणः सर्वे यद्भैक्षं क्षत्रियश्चरेत्॥**

नैष्ठिकं कर्म यावज्जीवं ब्रह्मचर्यं पारिव्राज्यं च, विहितमिति शेषः। नीटी.

(१) भा. ५।७०।२३; भामु. ५।७२।२३.
(२) भा. ५।७०।३७; भामु. ५।७२।३७.
(३) भा. ५।७०।३८-३९; भामु. ५।७२।३८-३९.
(४) भा. ५।७०।४६; भामु. ५।७२।४६ बान्धवाः (बन्धवः).
(५) भा. ५।७०।४७; भामु. ५।७२।४७ द्वितीयचरणे (वैश्या वै पण्यजीविकाः).
(६) भा. ५।७०।४८; भामु. ५।७२।४८.
(७) भा. ५।७१।३; भामु. ५।७३।३ च तन्नै (चैवं नै) यद्भैक्षं (न भैक्षं).

[1]जयो वधो वा संग्रामे धात्रा दिष्टः सनातनः।
स्वधर्मः क्षत्रियस्यैष कार्पण्यं न प्रशस्यते॥
कार्पण्यं ग्रामपञ्चकं देहीति दीनवचनम्। नीटी.
[2]यदोजसा न लभते क्षत्रियो न तदश्नुते॥
[3]कथं हि पुरुषो जातः क्षत्रियेषु धनुर्धरः।
समाहूतो निवर्तेत प्राणत्यागेऽप्युपस्थिते॥
समाहूतो द्यूतार्थम्। नीटी.
[4]क्षत्रियेण हि हन्तव्यः क्षत्रियो लोभमास्थितः।
अक्षत्रियो वा दाशार्ह स्वधर्ममनुतिष्ठता॥
अन्यत्र ब्राह्मणात्तात सर्वपापेष्ववस्थितात्।
गुरुर्हि सर्ववर्णानां ब्राह्मणः प्रसृताग्रभुक्॥
प्रसृतं प्रदत्तं च तदग्रयं च, तस्य भोक्ता प्रसृताग्रभुक्। पूज्य इत्यर्थः। नीटी.

मित्रकर्तव्यानि

[5]व्यसनैः क्लिश्यमानं हि यो मित्रं नाभिपद्यते।
अनुनीय यथाशक्ति तं नृशंसं विदुर्बुधाः॥
तं नृशंसमनर्थाय विदुरिति संबन्धः। अनुनीयेत्यपि पाठः। नीटी.
[6]आ केशग्रहणान्मित्रमकार्यात्संनिवर्तयन्।
अवाच्यः कस्यचिद्भवति कृतयत्नो यथाबलम्॥
[7]ज्ञातीनां हि मिथो भेदे यन्मित्रं नाभिपद्यते।
सर्वयत्नेन मध्यस्थं न तन्मित्रं विदुर्बुधाः॥
नाभिपद्यते नोपकरोति। नीटी.

आचारप्रशंसा

[8]आचाराल्लभते धर्ममाचाराल्लभते धनम्।
आचाराच्छ्रियमाप्नोति आचारो हन्त्यलक्षणम्॥

क्षत्रियधर्माः

[9]नाहं प्रतिग्रहधनो ब्राह्मणः क्षत्रियो ह्यहम्।
न च मे प्रवणा बुद्धिः परपुण्यविनाशने॥

(१) भा. ५।७१।४; भामु. ५।७३।४ त्रा दि (त्राऽऽदि).
(२) भा. ५।७३।२३; भामु. ५।७५।२३.
(३) भा. ५।७६।१४; भामु. ५।७८।१३-१४.
(४) भा. ५।८०।१६-१७; भामु. ५।८२।१६-१७.
(५) भा. ५।९१।१०; भामु. ५।९३।१० व्यसनैः (व्यसने) नुनीय (नर्थाय) तं नृ (तन्नृ).
(६) भा. ५।९१।११; भामु. ५।९३।११; मेधा. २।२०६ कार्यात्सं (कार्येभ्यो) यन् (येत्) पू. (=).
(७) भा. ५।९१।१५; भामु. ५।९३।१५ मध्यस्थं (माध्यस्थं).
(८) भा. ५।१११।१५; भामु. ५।११३।१५ राल्लभते (रः फलते).
(९) भा. ५।११९।१९; भामु. ५।१२१।१९.

[1]स्वधर्ममनुतिष्ठन्तो यदि माधव संयुगे।
शस्त्रेण निधनं काले प्राप्स्यामः स्वर्गमेव तत्॥
[2]मुख्यश्चैवैष नो धर्मः क्षत्रियाणां जनार्दन।
यच्छयीमहि संग्रामे शरतल्पगता वयम्॥
[3]ते वयं वीरशयनं प्राप्स्यामो यदि संयुगे।
अप्रणम्यैव शत्रूणां न नस्तप्स्यति माधव॥
[4]कश्च जातु कुले जातः क्षत्रधर्मेण वर्तयन्।
भयाद्वृत्तिं समीक्ष्यैवं प्रणमेदिह कस्यचित्॥
[5]उद्यच्छेदेव न नमेदुद्यमो ह्येव पौरुषम्।
अप्यपर्वणि भज्येत न नमेदिह कस्यचित्॥
उद्यच्छेदेव उद्यमं कुर्यादिव। अपर्वणि अप्रस्तावे। 'पर्व स्यादुत्सवे ग्रन्थौ प्रस्तावे लक्षणान्तरे।' इति विश्वः। नीटी.
[6]इति मातङ्गवचनं परीप्सन्ति हितेप्सवः।
धर्माय चैव प्रणमेद्ब्राह्मणेभ्यश्च मद्विधः॥
मातङ्गः मुनिः। नीटी.
अचिन्तयन्कंचिदन्यं यावज्जीवं तथाऽऽचरेत्।
एष धर्मः क्षत्रियाणां मतमेतच्च मे सदा॥
[7]ब्राह्मणः प्रचरेद्भैक्षं क्षत्रियं परिपालयेत्।
वैश्यो धनार्जनं कुर्याच्छूद्रः परिचरेच्च तान्॥
भैक्षं विप्रतिषिद्धं ते कृषिर्नैवोपपद्यते।
क्षत्रियोऽसि क्षतात्त्राता बाहुवीर्योपजीविता॥
[8]यो हि तेजो यथाशक्ति न दर्शयति विक्रमात्।
क्षत्रियो जीविताकाङ्क्षी स्तेन इत्येव तं विदुः॥
[9]यो वै कश्चिदिहाऽऽजातः क्षत्रियः क्षत्रधर्मवित्।
भयाद्वृत्तिसमीक्षो वा न नमेदिह कस्यचित्॥

(१) भा. ५।१२५।१५; भामु. ५।१२७।१५ तिष्ठन्तो (पश्यन्तो) शस्त्रेण (अस्त्रेण) स्वर्ग (स्वर्ग्य).
(२) भा. ५।१२५।१६; भामु. ५।१२७।१६.
(३) भा. ५।१२५।१७; भामु. ५।१२७।१७ स्तप्स्यति (स्तप्स्यन्ति).
(४) भा. ५।१२५।१८; भामु. ५।१२७।१८ कस्यचित् (कर्हिचित्).
(५) भा. ५।१२५।१९; भामु. ५।१२७।१९ कस्यचित् (कर्हिचित्).
(६) भा. ५।१२५।२०-२१; भामु. ५।१२७।२०-२१.
(७) भा. ५।१३०।२८-२९; भामु. ५।१३२।३०-३१.
(८) भा. ५।१३२।२; भामु. ५।१३४।२.
(९) भा. ५।१३२।३७; भामु. ५।१३४।३८ धर्म (कर्म).

आजातः सम्यग्जातः, कुले जात इत्यर्थः। य आजातः स भयात् कस्यचिन्न नमेत्, वृत्तिसमीक्षः वृत्तिं समीक्षमाणो वा न नमेत्। नीटी.

**[१]उद्यच्छेदेव न नमेदुद्यमो ह्येव पौरुषम्।**
**अप्यपर्वणि भज्येत न नमेदिह कस्यचित्॥**

उद्यच्छेत् उद्यमं कुर्यात्। अपर्वणि अकाण्डे वृथाऽपीत्यर्थः। नीटी.

**[२]मातङ्गो मत्त इव च परीयात्सुमहामनाः।**
**ब्राह्मणेभ्यो नमेन्नित्यं धर्मायैव च संजय॥**

परीयात् पर्यटनं कुर्यात्। नीटी.

**[३]नियच्छन्नितरान्वर्णान्विनिघ्नन्सर्वदुष्कृतः।**
**ससहायोऽसहायो वा यावज्जीवं तथा भवेत्॥**

दुष्कृतः पापिष्ठान्। नीटी.

**[४]युद्धाय क्षत्रियः सृष्टः संजयेह जयाय च।**
**क्रूराय कर्मणे नित्यं प्रजानां परिपालने।**
**जयन्वा वध्यमानो वा प्राप्नोतीन्द्रसलोकताम्॥**
**[५]न शक्रभवने पुण्ये दिवि तद्विद्यते सुखम्।**
**यदमित्रान्वशे कृत्वा क्षत्रियः सुखमश्नुते॥**
**[६]मन्युना दह्यमानेन पुरुषेण मनस्विना।**
**निकृतेनेह बहुशः शत्रून्प्रतिजिगीषया॥**

निकृतेन अपकृतेनापि शत्रून् प्रति जिगीषया, प्रस्थातव्यमेवेति शेषः। नीटी.

**[७]आत्मानं वा परित्यज्य शत्रून्वा विनिपात्य वै 8।**
**अतोऽन्येन प्रकारेण शान्तिरस्य कुतो भवेत्॥**
**[८]इह प्राज्ञो हि पुरुषः स्वल्पमप्रियमिच्छति।**
**यस्य स्वल्पं प्रियं लोके ध्रुवं तस्याल्पमप्रियम्॥**

स्वल्पमैश्वर्यम् अप्रियमनिष्टम् इच्छति मन्यते प्राज्ञः। यस्य तु अल्पमेवैश्वर्यं प्रियं तस्य ध्रुवं निश्चितं तदेवाल्पं प्रियत्वेन गृहीतम् अप्रियम् अनर्थकरं स्यात्। तेन राज्ञाऽल्पसंतुष्टेन न भवितव्यमित्यर्थः। नीटी.

**प्रियाभावाच्च पुरुषो नैव प्राप्नोति शोभनम्।**
**ध्रुवं चाभावमभ्येति गत्वा गङ्गेव सागरम्॥**

अभावं नाशम्। नीटी.

**[१]क्षत्रधर्मः किल रणे तनुत्यागोऽभिपूजितः॥**
**[२]स्ववीर्यं यः समाश्रित्य समाह्वयति वै परान्।**
**अभीतः पूरयञ्शक्तिं स वै पुरुष उच्यते॥**
**[३]परवीर्यं समाश्रित्य यः समाह्वयते परान्।**
**क्षत्रबन्धुरशक्तत्वाल्लोके स पुरुषाधमः॥**

क्षत्रबन्धुः क्षत्रजातिरेव, न तु क्षत्रकर्मेत्यर्थः। नीटी.

**[४]गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः।**
**उत्पथप्रतिपन्नस्य कार्यं भवति शासनम्॥**

अवलिप्तस्य दृप्तस्य। नीटी.

**[५]उद्यतेषुमथो दृष्ट्वा ब्राह्मणं क्षत्रबन्धुवत्।**
**यो हन्यात्समरे क्रुद्धो युध्यन्तमपलायिनम्।**
**ब्रह्महत्या न तस्य स्यादिति धर्मेषु निश्चयः॥**
**[६]यो यथा वर्तते यस्मिंस्तथा तस्मिन् प्रवर्तयन्।**
**नाधर्मं समवाप्नोति नरः श्रेयश्च विन्दति॥**

यः पुमान् यस्मिन्नरे यथा प्रीत्या द्वेषेण वा वर्तते स नरस्तस्मिन् तथैव प्रीतिं द्वेषं वा प्रवर्तयन्। नीटी.

**[७]ब्राह्मणः क्षत्रियत्वं हि याति शस्त्रसमुद्यमात्।**
**[८]क्षत्रियस्य तु धर्मोऽयं यद्युद्धं भृगुनन्दन।**
**स्वाध्यायो व्रतचर्या च ब्राह्मणानां परं धनम्॥**

---

8 शाम्येदिति शेषोऽध्याहार्यः।

(१) भा. ५।१३२।३८; भामु. ५।१३४।३९ नमेदिह (नमेतेह).

(२) भा. ५।१३२।३९; भामु. ५।१३४।४० त्सुमहा (त्स महा).

(३) भा. ५।१३२।४०; भामु. ५।१३४।४१.

(४) भा. ५।१३३।११; भामु. ५।१३५।१३-१४ द्वितीयार्धं नास्ति.

(५) भा. ५।१३३।१२; भामु. ५।१३५।१४ मश्नुते (मेधते).

(६) भा. ५।१३३।१३; भामु. ५।१३५।१५.

(७) भा. ५।१३३।१४; भामु. ५।१३५।१६ शत्रून्वा (शत्रुं वा) वै (च).

(८) भा. ५।१३३।१५-१६; भामु. ५।१३५।१७-१८.

(१) भा. ५।१५६।७; भामु. ५।१५९।७ गोऽभिपू (गो हि पू).

(२) भा. ५।१६०।३; भामु. ५।१६३।३ तृतीयचरणे (अभीतो युध्यते शत्रून्).

(३) भा. ५।१६०।४; भामु. ५।१६३।४.

(४) भा. ५।१७८।२४; भामु. ५।१७८।४८ चतुर्थचरणे (परित्यागो विधीयते).

(५) भा. ५।१७८।२७; भामु. ५।१७८।५१-५२ क्रुद्धो (क्रुद्धं).

(६) भा. ५।१७८।२८; भामु. ५।१७८।५३ स्तथा तस्मिन् (स्तस्मिन्नेव) नरः श्रेयश्च (न चाश्रेयश्च).

(७) भा. ५।१८०।२५; भामु. ५।१७९।२५.

(८) भा. ५।१८६।११; भामु. ५।१८५।११ र्यां च (र्याऽथ).

क्षत्रियधर्मस्य युद्धस्य तत्र मरणस्य च
प्रशंसा गृहमरणस्य निन्दा च

**[1]क्षत्रियाः क्षत्रधर्मेण वध्यन्ते यदि संयुगे।**
**वीरलोकं समासाद्य सुखं प्राप्स्यन्ति केवलम्॥**
**[2]इह कीर्तिं परे लोके दीर्घकालं महत्सुखम्।**
**प्राप्स्यन्ति पुरुषव्याघ्राः प्राणांस्त्यक्त्वा महाहवे॥**
**[3]अधर्मः क्षत्रियस्यैष यद्व्याधिमरणं गृहे।**
**यदाजौ निधनं याति सोऽस्य धर्मः सनातनः॥**

अयोनिधनम् अयसा शस्त्रेण मरणम्। नीटी.

**[4]स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि।**
**धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते॥**

अर्जुनस्य अनात्मनि देहे आत्मधीरूपो मोहो निवारितः। इदानीं स्वधर्मे युद्धे अधर्मधीरूपं मोहं निवारयति – स्वधर्ममपीत्यादिना। युद्धं क्षत्रियस्य स्वो धर्मः, तमवेक्ष्यापि विकम्पितुं चलितुं नार्हसि, हि यस्मात् धर्म्यात् धर्मादनपेताद्युद्धादन्यत् क्षत्रियस्य श्रेयः प्रशस्ततरं नास्ति। नीटी.

रागद्वेषजयः

**[5]इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ।**
**तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ॥**

एवं तर्हि पुरुषस्य स्वातन्त्र्याभावाद्विधिनिषेधशास्त्रं व्यर्थमित्याशङ्क्याऽऽह – इन्द्रियस्येति। इन्द्रियस्येन्द्रियस्येति द्विर्वचनं वीप्सायाम्। प्रतीन्द्रियं स्वे स्वेऽर्थे शब्दादौ वचनादौ च विषये रागद्वेषौ अनुकूले रागः प्रतिकूले द्वेषश्च व्यवस्थितौ नित्यसंबद्धौ, तत्र तयोर्वशं नाऽऽगच्छेदिति शास्त्रस्याभ्यनुज्ञा। पुरुषस्य च तदनुष्ठाने स्वातन्त्र्यमस्ति। हि यतः तौ रागद्वेषावेवास्य प्राणिनः परिपन्थिनौ विरोधिनौ, दृष्टद्वारेण प्रवर्तकत्वात्। न तु प्रकृत्यनुसारी ईश्वरोऽस्य परिपन्थी, तस्य वैषम्यादिदोषापत्तेः। अयं भावः – यथा ह्यस्तनेन स्वाज्ञोल्लङ्घनजेनापराधेन कुपितो राजाऽपराधिनं हि निगडादौ निग्रहीतुं स्वीयान् भटान् प्रवर्तयति, स एवाद्यतनेन दानमानेन प्रसादित एनं तेषामेव भटानामाधिपत्ये नियुङ्क्ते, एवं पूर्वकर्मानुसारी ईश्वरो रागादिद्वारा पुरुषं बाधमानोऽपि विधिप्रतिषेधशास्त्रानुसारिणा तेनैव भक्तिध्यानप्रणिधानेनाऽऽवर्जितः एनं रागादिजये नियुङ्क्ते, तस्माद्विधिप्रतिषेधशास्त्रस्य नानर्थक्यम्, पुरुषस्य स्वातन्त्र्यसत्त्वात्, नापीश्वरे वैषम्यादिकम्, प्राणिकर्मायत्तत्वादिति। नीटी.

सर्वपापहेतू कामक्रोधौ, इन्द्रियनिग्रहपूर्वकस्तयोर्विनाशः

**अर्जुन उवाच –**

**[1]अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः।**
**अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः॥**

ईश्वरो धर्माधर्मौ रागद्वेषौ वा पुरुषस्य प्रवर्तकौ भवतः इत्यात्मनोऽस्वातन्त्र्यं मन्वानोऽर्जुन उवाच – अथ केनेति। केन ईश्वरादीनामन्यतमेनान्येन वा प्रयुक्तः प्रवर्तितः सन्नयं पुरुषः पापम् अनिष्टं चरति करोति? अनिच्छन्नित्यनेन रागद्वेषयोः प्रवर्तकत्वं निरस्तम्। सति हि रागे इच्छा भवति। अत इच्छाया अभावाद्रागाभावः। रागस्याप्रवर्तकत्वे तन्मूलभूतसंस्कारहेत्वोर्धर्माधर्मयोरप्रवर्तकत्वम्, ततश्च तत्सापेक्षस्य ईश्वरस्यापीति सर्वेषामाक्षेपः। तस्मान्मुख्यं प्रवर्तकं यत्तद्वाच्यमित्यर्थः। बलादिव नियोजितः विष्टिगृहीत इवेत्यर्थः। नीटी.

**श्रीभगवानुवाच –**

**[2]काम एष क्रोध एष रजोगुणसमुद्भवः।**
**महाशनो महापाप्मा विद्ध्येनमिह वैरिणम्॥**

अत्रोत्तरं 'काममय एवायं पुरुषः' (बृउ. ४।४।५) इत्यादिश्रुतिसिद्धं भगवानुवाच – काम एष इति। एषः प्रसिद्धः कामः। 'सोऽकामयत जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीय' (बृउ. १।४।१७) इति श्रुतेः 'इदं मे भूयादिदं मे भूयात्' इति तीव्राभिलाषहेतुभूतश्चेतसोऽनवस्थितत्वापादको वृत्तिविशेषः। स च चेतोरूप एव, 'कामः संकल्पः' इत्युपक्रम्य 'एतत्सर्वं मनः'

(१) भा. ६।३।४५; भामु. ६।३।४८ क्षत्रियाः (राजानः) वध्यन्ते यदि (यदि वध्यन्ते).
(२) भा. ६।३।४६; भामु. ६।३।४९.
(३) भा. ६।१७।११; भामु. ६।१७।११ यदाजौ नि (यदयोनि).
(४) भा. ६।२४।३१; भामु. ६।२६।३१.
(५) भा. ६।२५।३४; भामु. ६।२७।३४; मच. १२।११ पू., (-).

(१) भा. ६।२५।३६; भामु. ६।२७।३६; मोक. ८३.
(२) भा. ६।२५।३७; भामु. ६।२७।३७; मोक. ८३; मुक्ता. ३१८; आन. १३०, १३७.

(बृउ. १।५।३) इत्युपसंहारात्। स एष कामः केनचिन्निमित्तेन प्रतिहतः क्रोधरूपेण परिणमते, अतः क्रोधः अभिज्वलनात्माऽप्येष एव। तमेनमिह शरीरेऽन्तःस्थितं वैरिणं विद्धि। कुतो वैरी? यतः रजोगुणसमुद्भवः। रजः रञ्जनात्मकः प्राकृतो गुणः, तस्य गुणौ कार्यभूतौ तृष्णासङ्गौ, तावेव उद्भवो यस्य सः। रजःकार्यत्वात् दुःखैकफलोऽयम्, अतो वैरी। यद्वा, रजोगुणस्य लोभप्रवृत्त्यादिलक्षणस्य समुद्भवो यस्मात्। ननु विषयाभिलाषात्मकः कामो विषयार्पणेन शाम्यति। विषयस्य दौर्लभ्यनिश्चये स्वत एव वा निवर्तते अन्ध इव रूपदर्शनाभिलाषादित्याशङ्क्याऽऽह — महाशनो महापाप्मेति। महत् दातुम् अपारणीयम् अशनमस्य स तथा। यथोक्तम्— 'न जातु कामः कामानामुपभोगेन शाम्यति। हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते॥' इति, 'यत् पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः। नालमेकस्य तत्सर्वमिति मत्वा शमं व्रजेत्॥' (भामु. १।७५।५०, ५१) इति। तथा महापाप्मा अत्युग्रः। स हि सहस्रशः प्रबोधितोऽपि न निवर्तते। नीटी.

**'धूमेनाऽऽव्रियते वह्निर्यथाऽऽदर्शो मलेन च।**
**यथोल्बेनाऽऽवृतो गर्भस्तथा तेनेदमावृतम्॥**

अस्य वैरित्वमेव विवृणोति — धूमेनेत्यादिना। उल्बेन गर्भवेष्टनेन जरायुणा। तेन कामेन इदं वक्ष्यमाणं ज्ञानमावृतम्। आवरणीयस्य त्रैविध्यात्तदनुगुणं दृष्टान्तत्रयं ज्ञेयम्। नीटी.

**आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा।**
**कामरूपेण कौन्तेय दुष्पूरेणानलेन च॥**

ज्ञानम् अन्तःकरणसत्त्वम्, 'ह्रीर्धीर्भीरित्येतत्सर्वं मन एव' (बृउ. १।५।३) इति श्रुतेः। एतेन कामेन रजोगुणात्मकेन आवृतं ज्ञानिनः अन्तःकरणविशिष्टस्य प्रमातुः नित्यवैरिणा कामरूपेण दुष्पूरेण पूरयितुमयोग्येन। अयं हि पूर्यमाणोऽनर्थानेव प्रसवेत्। अनलेन अथापि पूर्यते चेत् अनलः नास्ति अलं पर्याप्तिः यस्य सः तथा, तेनानलेन। न ह्यनलः काष्ठैस्तर्पयितुं शक्यः, किंतु वर्धत एव, तद्वदयमपीत्यर्थः। अयं भावः — अन्तःकरणसत्त्वं हि वह्निवत् प्रकाशात्मकम्। तत्सहजेन कामेन वह्निरिव धूमेनाऽऽवृतं चेत् प्रमातारमनर्थे पातयति। अन्यथा तदेव स्वभावशुद्धत्वाद्विवेकवैराग्योपगं भूत्वा तमुद्धरेत्। अतोऽयं कामो ज्ञानिनो नित्यवैरीति। नीटी.

**इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते।**
**एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम्॥**

किंच — इन्द्रियाणीति। अयमर्थः — इन्द्रियमनोबुद्धयो हि कामेनाधिष्ठिता बाह्यार्थप्रवणा भवन्ति। तैश्च तथाभूतैरयं कामो ज्ञानं चिदाकाशरूपमादर्शतलप्रख्यम्, यत्र योगिनो व्यवहितं विप्रकृष्टमतीतमनागतं वा पश्यन्ति। यथोक्तमाचार्यैः — 'विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतं पश्यन्त्यात्मनि' इति। निजान्तर्गतं शरीरान्तर्गतम् आत्मनि हार्दाकाशाख्ये ब्रह्मणि। तत् मलेनाऽऽदर्शमिवाऽऽवृत्य देहिनं देहाभिमानिनं विशेषेण मोहयति। विशब्दाद्देहाभिमानशून्यं योगिनमपि व्युत्थानावस्थायां किंचिन्मोहयतीति गम्यत इति। अक्षरयोजना स्पष्टा। नीटी.

**तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ।**
**पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम्॥**

यस्मादिन्द्रियाण्यस्याधिष्ठानं सामन्तस्येव गिरिदुर्गादिकम्, तस्मात्तान्येव नियम्य वशीकृत्य एनं कामं हि निश्चयेन प्रजहि प्रकर्षेण नाशय। गिरिदुर्गादीन् स्वायत्तीकृत्यैव तत्स्थं सामन्तं घ्नन्ति राजानस्तद्वत्। हन्तव्यत्वे हेतुः — पाप्मानम् अत्युग्रम्। तत्रापि हेतुः — ज्ञानविज्ञाननाशनमिति। ज्ञानस्य शास्त्राचार्योपदेशजस्य परोक्षस्य विज्ञानस्य निदिध्यासनपरिपाकजस्यापरोक्षस्य च नाशनम्। नीटी.

सर्वार्थानर्थकारणं मनः

**'उद्धरेदात्मनाऽऽत्मानं नाऽऽत्मानमवसादयेत्।**
**आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः॥**

एवं क्रमेण कर्मद्वारा चित्तशुद्धिं संपाद्य योगारूढोऽभ्यासवैराग्यबलेनाऽऽत्मानमुद्धरेत्। हि यस्मादात्मैवाऽऽत्मनो बन्धुः, न पुत्रादय उद्धर्तुं क्षमाः। आत्मैव रिपुरात्मनः, न त्वन्ये शत्रवः संसारे मज्जयितुमेनं क्षमा इत्यर्थः। नीटी.

**बन्धुरात्माऽऽत्मनस्तस्य येनाऽऽत्मैवाऽऽत्मना जितः।**
**अनात्मनस्तु शत्रुत्वे वर्तेताऽऽत्मैव शत्रुवत्॥**

(१) भा. ६।२५।३८-४१; भामु. ६।२७।३८-४१; मोक. ८३-८४.

(१) भा. ६।२८।५-६; भामु. ६।३०।५-६; मोक. ९९.

आत्मा मनः। आत्मना मनसा। अनात्मनः अजितचेतसः। आत्मा मन एव शत्रुः। नीटी.

अनर्थकारणकामक्रोधलोभत्यागेन शास्त्रोक्तकर्मणः कर्तव्यता

[1]**त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः।**
**कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत्॥**
[2]**एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः।**
**आचरत्यात्मनः श्रेयस्ततो याति परां गतिम्॥**

कामादित्रयत्यागे किं स्यादत आह – एतैरिति। तमोद्वारैः तमसः नरकस्य दुःखमोहात्मकस्य द्वारभूतैर्विमुक्तः सन् आत्मनः श्रेयः कल्याणं भगवदाराधनादिकम् आचरति। ततः परां गतिं मोक्षं याति। तस्मात्कामादित्रयं त्यजेदिति। नीटी.

[3]**यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः।**
**न स सिद्धिमवाप्नोति न सुखं न परां गतिम्॥**

न केवलं काष्ठतपस्विवत् कामादित्यागमात्रेणोच्छास्त्रवर्ती सिध्यतीत्याह – य इति। शास्त्रविधिं शास्त्रेण इष्टसाधनतयाऽनिष्टसाधनतया च ज्ञापितम् 'ब्राह्मणो यजेत', 'न सुरां पिबेत्' इत्यादिना विहितं निषिद्धं च उत्सृज्य विहितमकरणेन निषिद्धमाचरणेन च उत्सृज्य यो वर्तते कामकारतः इच्छया, सः सिद्धिं चित्तशुद्धिं सुखं वैराग्यादिजनितां तृप्तिं परां गतिं मोक्षं च नावाप्नोति। नीटी.

**तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ।**
**ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि॥**

यस्माच्छास्त्रातिगः शु(? सि)द्ध्यादिकं त्रयं नाऽऽप्नोति, तस्मात् ते तव शु(? सि)द्ध्यादिकामस्य शास्त्रमेव प्रमाणं 'किं कार्यम्, किं न कार्यम्' इत्यस्यां व्यवस्थायाम्। एवं ज्ञात्वा शास्त्रम् 'इदं कर्तव्यम्, इदं न कर्तव्यम्' इति शासनं वेदाज्ञारूपम्, विधानं च तदुल्लङ्घने प्रतिसमाधानम्, अग्निहोत्राद्यकरणेऽयं दोषस्तत्परिहारार्थमिदं कृच्छ्रादिकं प्रायश्चित्तम्, ब्रह्महत्यादिकरणेऽयं दोषस्तत्परिहारार्थमिदमश्वमेधादि अन्यद्वा प्रायश्चित्तम्। शास्त्रं च विधानं च ताभ्यामुक्तं कर्म इह मनुष्यलोके कर्तुमर्हसि। लोकान्तरे कर्मस्वनधिकारं दर्शयितुमिहेत्युक्तम्। तदेवं शास्त्रानुवर्तिन एव चित्तशुद्ध्यादिकम् नान्यस्येति सिद्धम्। नीटी.

स्वाभाविकगुणप्रयुक्तश्चातुर्वर्ण्यकर्मविभागः, स्वस्वकर्मभिरेव सिद्धिलाभः

[1]**ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप।**
**कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः॥**

अथेदानीं सर्वगीताशास्त्रार्थमुपसंहर्तुमसङ्गशस्त्राप्त्युपायं च प्रदर्शयितुं प्रकरणान्तरमारभते – ब्राह्मणेत्यादिना। शूद्राणामसमासकरणं वेदानधिकारात्। प्रविभक्तानि असंकीर्णानि। तत्र हेतुमाह – स्वभावप्रभवैर्गुणैः। स्वभावः ईश्वरस्य प्रकृतिस्त्रिगुणात्मिका, सैव प्रभवः हेतुः येषां गुणानां ते स्वभावप्रभवाः, तैः। यद्वा, ब्राह्मणस्वभावस्य सत्त्वगुण एव प्रभवः, शान्तत्वात्। क्षत्रियस्वभावस्य सत्त्वोपसर्जनं रजः, ईश्वरस्वभावत्वात्। वैश्यस्वभावस्य तमउपसर्जनं रजः, कृष्यादिस्वभावत्वात्। शूद्रस्वभावस्य रजउपसर्जनं तमः, शुश्रूषास्वभावत्वात्। अथवा, स्वभावः प्राग्भवीयः संस्कारः, तत्प्रभवैः, न तु जातिमात्रप्रभवैः, पक्षिणामाकाशगमनवत्। अत एव जात्यन्तरव्यावृत्तानां धर्माणां शमादिषु पाठो न दृश्यते। न हि शूद्राद्द्वयावृत्तं त्रैवर्णिकानामध्ययनादिकं वा इतरद्वयाद्व्यावृत्तं ब्राह्मणानामध्यापनादिकं वा इह पठ्यते, किंतु सर्वे सर्वजातीयानां साधारणा धर्माः शमादयो दृश्यन्ते। यथा हि द्रोणादिषु ब्राह्मणेष्वपि शौर्यादिकम्, भरतादिषु क्षत्रियेष्वपि शमादिकं दृष्टम्, एवमितरत्र। तस्माद्यस्मिन्कस्मिंश्चिद्वर्णे शमादयो दृश्यन्ते स शूद्रोऽप्येतैर्लक्षणैर्ब्राह्मण एव ज्ञातव्यः। यत्र च ब्राह्मणेऽपि शूद्रधर्मा दृश्यन्ते स शूद्र एव। तथा चाऽऽरण्यके सर्पभूतं नहुषं प्रति युधिष्ठिरवाक्यम् – 'सत्यं दानं क्षमा शीलमानृशंस्यं तपो घृणा। दृश्यन्ते यत्र नागेन्द्र स ब्राह्मण इति स्मृतः॥' (भा. ३।१७७।१६), तथा

(१) **भा.** ६।३८।२१; **भामु.** ६।४०।२१; **आपा.** ८७.
(२) **भा.** ६।३८।२२; **भामु.** ६।४०।२२; **निप्र.** २।४७० मुक्तः (मुक्तैः).
(३) **भा.** ६।३८।२३-२४; **भामु.** ६।४०।२३-२४.

(१) **भा.** ६।४०।४१; **भामु.** ६।४२।४१; **ब्रक.**९; **कृर.** १३ भविष्यपुराणे; **पमा.** १।७७ गीतासु भगवान्; **पप्र.** ४६.

'यत्रैतल्लक्ष्यते सर्प वृत्तं स ब्राह्मणः स्मृतः। यत्रैतन्न भवेत्सर्प तं शूद्रमिति निर्दिशेत्॥' (भा. ३।१७७।२१) इति। जातिधर्मास्तु मनुना दर्शिताः — 'अध्यापनं चाध्ययनं यजनं याजनं तथा। दानं प्रतिग्रहं चैव ब्राह्मणानामकल्पयत्॥ प्रजानां रक्षणं दानमिज्याऽध्ययनमेव च। विषयेष्वप्रसक्तिं च क्षत्रियस्य समादिशत्॥ पशूनां रक्षणं दानमिज्याऽध्ययनमेव च। वणिक्पथं कुसीदं च वैश्यस्य कृषिमेव च॥ एकमेव तु शूद्रस्य प्रभुः कर्म समादिशत्। एतेषामेव वर्णानां शुश्रूषामनसूयया॥' (मस्मृ. १।८८-९१) इति। तस्मात् शमादयो यत्राब्राह्मणे ब्राह्मणे वा दृश्यन्ते स एव ब्राह्मण इत्यत्र विवक्षितम्। 'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते पराम्'। (भगी. १८।४५) इत्यत्र तु मनूक्तान्यध्यापनादीन्येव स्वकर्माणि ग्राह्याणि, न तु शमदमादीनि। न हि ज्ञानविज्ञानवतोऽन्या संसिद्धिर्लब्धव्याऽस्ति, तस्मात् शमदमादयो ब्रह्मिष्ठस्यैव ब्राह्मणस्य लक्षणमिति दिक्।

नीटी.

**[1]शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च।**
**ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम्॥**

(१) विज्ञानं यज्ञादिकर्मकौशलम्।

♣ब्रक.९

(२) ज्ञानं शास्त्रीयम्। विज्ञानम् आत्मसाक्षात्कारः।

*पप्र. ४७

(३) ब्राह्मणकर्मण्याह — शम इति। अन्तःकरणनिग्रहः शमः। बाह्येन्द्रियनिग्रहो दमः। तपः पूर्वोक्तं शारीरादिभेदेन त्रिविधम्। शौचं बाह्यं मृज्जलाभ्याम्, आभ्यन्तरं भावशुद्धिः। क्षान्तिः क्षमा। आर्जवम् अकौटिल्यम्। ज्ञानं शास्त्रीयं कर्म ब्रह्मविषयम्। विज्ञानं तदनुष्ठाना(? नाद)नुभवात्मकम्। आस्तिक्यं श्रद्धा। एतन्नवकं ब्रह्मकर्म ब्राह्मणत्वजात्यभिव्यञ्जकं कर्म स्वभावजं प्राचीनधर्मसंस्कारजम्।

नीटी.

**[1]शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्।**
**दानमीश्वरभावश्च क्षत्रकर्म स्वभाजम्॥**

(१) शौर्यं विक्रमशीलत्वम्। तेजः अधृष्यतौपाधिको गुणविशेषः। दाक्ष्यम् उत्साहः। ईश्वरभावः प्रभुत्वम्।

Ωब्रक. ९

(२) शौर्यं पराक्रमः। तेजः प्रागल्भ्यम्। धृतिः धैर्यम्। दाक्ष्यं युद्धे कौशलमुत्साहो वा। दानम् औदार्यम्। ईश्वरभावः उन्मार्गवर्तिनां नियमनशक्तिः। एतत् क्षात्रं कर्म स्वभावजम्।

नीटी.

**[2]कृषिगोरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम्।**
**परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम्॥**

(१) गोरक्षं पाशुपाल्यम्। ब्रक. १०

(२) गोरक्षं पशुपालनम्। परिचर्यात्मकं वर्णत्रयशुश्रूषात्मकम्। कृर. १३

(३) वैश्यशूद्रयोः कर्मण्याह — कृषीति। स्पष्टार्थः श्लोकः। नीटी.

**[3]स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः॥**

(१) अत्र संसिद्धिरूपश्रेयःसाधकतया एतेषां कर्मणां धर्मत्वं विवक्षितम्। कृर. १३

(२) कर्मप्रविभागफलमाह — स्वे स्वे इति। स्वे स्वे मन्वादिभिरुक्ते अध्यापनादावसाधारणे शमदमादौ साधारणे च कर्मण्यभिरतो निष्ठावान् संसिद्धिं ज्ञानयोग्यतां लभते नरः।

नीटी.

---

♣ कृर. ब्रकवत्।

* आप्र., बाल. पप्रवत्।

(१) **भा.** ६।४०।४२; **भामु.** ६।४२।४२; **ब्रक.** ९; **कृर.** १३ शमो (यमो) ब्रह्म (ब्राह्मं) भविष्यपुराणे; **पमा.** १।७८ ब्रह्म (ब्राह्मं) गीतासु भगवान्; **निप्र.** २।४१४ ज्ञानं वि (ज्ञानवि) गीतायाम्; **पप्र.** ४६; **आप्र.** ४८९ पमावत्, गीतायाम्; **बाल.** १।११८ पृ. ३६४ गीतायाम् : १।१६० पृ. ४२५ द्वितीयचरणे (सत्यमिन्द्रियनिग्रहः) ब्रह्म (ब्राह्मं) गीतायाम्; **आभू.** १९७ स्मृतिः.

Ω कृर. ब्रकगतम्।

(१) **भा.** ६।४०।४३; **भामु.** ६।४२।४३ क्षत्र (क्षात्रं); **ब्रक.** ९ भामुवत्; **कृर.** १३ भामुवत्, भविष्यपुराणे; **पमा.** १।७८ गीतासु भगवान्; **संम.** ७९ गीतायाम्; **पप्र.** ४६-४७; **बाल.** १।११९ पृ. ३६६ भामुवत्, गीतायाम्.

(२) **भा.** ६।४०।४४; **भामु.** ६।४२।४४ रक्ष्य (रक्ष); **ब्रक.** ९-१० भामुवत्; **कृर.** १३ स्यापि (स्य तु) शेषं भामुवत्, भविष्यपुराणे; **पमा.** १।७८ वैश्य (वैश्यं) शेषं भामुवत्, गीतासु; **पप्र.** ४७ भामुवत्; **बाल.** १।११९ पृ. ३६६ (कुसीदं कृषिवाणिज्यं वैश्यकर्म स्वभावजम्।) एतावदेव, गीतायाम्.

(३) **भा.** ६।४०।४५; **भामु.** ६।४२।४५; **ब्रक.** १०; **कृर.** १३ भविष्यपुराणे; **पप्र.** ४७; **आभू.** ३५९ भगवद्गीतासु.

आततायिवधयुद्धप्रजारक्षणयजनानि

क्षत्रियधर्माः

[1]ज्यायांसमपि चेच्छक्र गुणैरपि समन्वितम्।
आततायिनमामन्त्र्य हन्याद्घातकमागतम्॥

आततायिनमित्यस्य घातकमिति विशेषणमन्येभ्य आततायिभ्यो व्यवच्छेदायोक्तम्। नीटी.

[2]शाश्वतोऽयं स्थितो धर्मः क्षत्रियाणां धनंजय।
योद्धव्यं रक्षितव्यं च यष्टव्यं चानसूयुभिः॥

[3]एवमेतन्महाबाहो धर्मेषु परिनिष्ठितम्।
स्वप्तव्यं क्षत्रियेणाऽऽजौ शरतल्पगतेन वै॥

[4]युध्यस्व निरहंकारो बलवीर्यव्यपाश्रयः।
धर्मो हि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते॥

[5]प्रजानां पालनं धर्मो दानमिज्या द्विषज्जयः॥

सहेतुकशमविधिः

[6]यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः।
नालमेकस्य तत्सर्वमिति मत्वा शमं व्रजेत्॥

क्षत्रियधर्मस्य युद्धस्य प्रशंसा

[7]सर्वेषामेष वै पन्थाः शूराणामनिवर्तिनाम्।
क्षत्रियाणां विशेषेण येषां युद्धेन जीविका॥

[8]एषा वै युध्यमानानां शूराणामनिवर्तिनाम्।
विहिता धर्मशास्त्रज्ञैर्गतिर्गतिमतां वर॥

[9]ध्रुवं युद्धे हि मरणं शूराणामनिवर्तिनाम्।
गतः पुण्यकृतां लोकानभिमन्युर्न संशयः॥

[10]एतच्च सर्ववीराणां काङ्क्षितं भरतर्षभ।
संग्रामेऽभिमुखा मृत्युं प्राप्नुयामेति मानद॥

(१) भा. ६।१०३।९५; भामु. ६।१०७।१०१ चेच्छक्र (चेद्वृद्धं) मामन्त्र्य (मायान्तं) मागतम् (मात्मनः).
(२) भा. ६।१०३।९६; भामु. ६।१०७।१०२.
(३) भा. ६।११५।४६; भामु. ६।१२०।४९मेतन्म (मेव म) निष्ठितम् (तिष्ठता).
(४) भा. ६।११७।३२; भामु. ६।१२२।३७ धर्मो हि (धर्म्याद्धि).
(५) भामु. ७।५६।३.
(६) भामु. ७।६३।९.
(७) भा. ७।५०।६२; भामु. ७।७२।६७.
(८) भा. ७।५०।६३; भामु. ७।७२।६८ धर्म (सर्व) र्गतिम (र्मतिम).
(९) भा. ७।५०।६४; भामु. ७।७२।६९.
(१०) भा. ७।५०।६५; भामु. ७।७२।७० मुखा (मुखो) यामेति (यादिति).

[1]स च वीरव्रणे हत्वा राजपुत्रान्महाबलान्।
वीरैराकाङ्क्षितं मृत्युं संप्राप्तोऽभिमुखो रणे॥

[2]मा शुचः पुरुषव्याघ्र पूर्वैरेष सनातनः।
धर्मकृद्भिः कृतो धर्मः क्षत्रियाणां रणे क्षयः॥

[3]धर्मो युद्धं क्षत्रियस्य ब्राह्मणस्य परं तपः॥

अहिंसाप्रशंसा

[4]अहिंसा सर्वभूतेषु धर्मं ज्यायस्तरं विदुः।
तस्य च ब्राह्मणो मूलं....॥

क्षतत्राणादिक्षत्रियधर्मप्रशंसा

[5]क्षतात्त्राता क्षताज्जीवन्क्षान्तस्त्रिष्वपि साधुषु।
क्षत्रियः क्षितिमाप्नोति क्षिप्रं धर्मं यशः श्रियम्॥

ब्राह्मणस्य षट् कर्माणि

[6]बीभत्सो विप्रकर्माणि विदितानि मनीषिणाम्।
याजनाध्यापने दानं तथा यज्ञप्रतिग्रहौ॥
षष्ठमध्ययनं नाम .....॥

चातुर्वर्ण्यधर्मविभागः

[7]गोप्तारः संग्रहीतारो दातारः क्षत्रियाः स्मृताः॥

[8]याजनाध्यापनैर्विप्रा विशुद्धैश्च प्रतिग्रहैः।
लोकस्यानुग्रहार्थाय स्थापिता ब्रह्मणा भुवि॥

[9]कृषिश्च पाशुपाल्यं च विशां दानं च सर्वशः।
ब्रह्मक्षत्रविशां शूद्रा विहिताः परिचारकाः॥

[10]क्षत्रियस्य मलं भैक्षं ब्राह्मणस्यानृतं मलम्॥

[11]ब्राह्मणेन तपः कार्यं दानमध्ययनं तथा।
क्षत्रियेण धनुर्नाम्यं....॥

(१) भा. ७।५०।६६; भामु. ७।७२।७१ मुखो (मुखं).
(२) भा. ७।५०।६७; भामु. ७।७२।७२.
(३) भा. ७।१०१।५६; भामु. ७।१२५।६०.
(४) भा. ७।१६५।२९; भामु. ७।१९२।३८.
(५) भा. ७।१६८।४; भामु. ७।१९७।४ क्षतात्त्राता (क्षतत्राता) क्षान्तस्त्रिष्वपि (क्षन्ता स्त्रीष्वपि) श्रियम् (श्रियः).
(६) भा. ७।१६८।२२-२३; भामु. ७।१९७।२४-२५.
(७) भा. ८।२३।३३; भामु. ८।३२।४५ संग्रही (संगृही).
(८) भा. ८।२३।३४; भामु. ८।३२।४६ ब्रह्मणा (ब्राह्मणा).
(९) भा. ८।२३।३५; भामु. ८।३२।४७ सर्वशः (धर्मतः).
(१०) भा. ८।३०।६८; भामु. ८।४५।२३ भैक्षं (भैक्ष्यं) स्यानृतं (स्याश्रुतं).
(११) भा. ८।३९।३२; भामु. ८।५५।३३-३४.

अहिंसाया ज्यायस्त्वम्, विषयविशेषे सत्यस्याधर्म्यत्वमसत्यस्य धर्म्यत्वं च

**[१]प्राणिनामवधस्तात सर्वज्यायान्मतो मम।**
**अनृतं तु भवेद्वाच्यं न च हिंस्यात्कथंचन॥**
**[२]सत्यस्य वचनं साधु न सत्याद्विद्यते परम्।**
**तत्त्वेनैतत्सुदुर्ज्ञेयं यस्य सत्यमनुष्ठितम्॥**

सत्यं तत्त्वेन याथातथ्येन सुदुर्ज्ञेयं पश्य। क्वचित्सत्यमप्यधर्माय भवतीत्यर्थः। नीटी.

**[३]भवेत्सत्यमवक्तव्यं वक्तव्यमनृतं भवेत्।**
**सर्वस्वस्यापहारे तु वक्तव्यमनृतं भवेत्॥**
**प्राणात्यये विवाहे च वक्तव्यमनृतं भवेत्।**
**यत्रानृतं भवेत्सत्यं सत्यं चाप्यनृतं भवेत्॥**
**[४]तादृशं पश्यते बालो यस्य सत्यमनुष्ठितम्।**
**सत्यानृते विनिश्चित्य ततो भवति धर्मवित्॥**

यस्य येन हेतुना सत्यमेव सत्यतया अनुष्ठितं तादृशमेव पश्यति सत्यवादितया अनेन हेतुना बालः अज्ञः। नीटी.

**[५]प्राणात्यये विवाहे वा सर्वज्ञातिधनक्षये।**
**नर्मण्यभिप्रवृत्ते वा प्रवक्तव्यं मृषा भवेत्।**
**अधर्मं नात्र पश्यन्ति धर्मतत्त्वार्थदर्शिनः॥**
**[६]यः स्तेनैः सह संबन्धान्मुच्यते शपथैरपि।**
**श्रेयस्तत्रानृतं वक्तुं तत्सत्यमविचारितम्॥**
**[७]न च तेभ्यो धनं देयं शक्ये सति कथंचन।**
**पापेभ्यो हि धनं दत्तं दातारमपि पीडयेत्।**
**तस्माद्धर्मार्थमनृतमुक्त्वा नानृतवाग्भवेत्॥**

तेभ्यः स्तेनेभ्यः। पीडयेत् नरकं प्रापयेत्। नीटी.

क्षत्रिये युद्धस्य तत्र मरणस्य च प्रशंसा प्रतिग्रहस्य निन्दा च

**8[१]न ध्रुवं सुखमस्तीह कुतो राज्यं कुतो यशः।**
**इह कीर्तिर्विधातव्या सा च युद्धेन नान्यथा॥**
**[२]गृहे यत्क्षत्रियस्यापि निधनं तद्विगर्हितम्।**
**अधर्मः सुमहानेष यच्छय्यामरणं गृहे॥**
**[३]अरण्ये यो विमुञ्चेत सङ्ग्रामे वा तनुं नरः।**
**क्रतूनाहृत्य महतो महिमानं स गच्छति॥**
**[४]कृपणं विलपन्नार्तो जरयाऽभिपरिप्लुतः।**
**म्रियते रुदतां मध्ये ज्ञातीनां न स पूरुषः॥**
**[५]त्यक्त्वा तु विविधान् भोगान्प्राप्तानां परमां गतिम्।**
**अपीदानीं सुयुद्धेन गच्छेयं सत्सलोकताम्॥**
**[६]शूराणामार्यवृत्तानां सङ्ग्रामेष्वनिवर्तिनाम्।**
**धीमतां सत्यसंधानां सर्वेषां क्रतुयाजिनाम्।**
**शस्त्रावभृथमाप्तानां ध्रुवं वासस्त्रिविष्टपे॥**
**युधिष्ठिर उवाच —**
**[७]यदि चापि समर्थः स्यास्त्वं दानाय सुयोधन।**
**नाहमिच्छेयमवनिं त्वया दत्तां प्रशासितुम्॥**
**[८]अधर्मेण न गृह्णीयां त्वया दत्तां महीमिमाम्।**
**न हि धर्मः स्मृतो राजन् क्षत्रियस्य प्रतिग्रहः॥**

---

(१) **भा.** ८।४९।२०; **भामु.** ८।६९।२३ तृतीयचरणे (अनृतं वा वदेद्वाचं) च (तु).

(२) **भा.** ८।४९।२७; **भामु.** ८।६९।३१ प्रथमचरणे (सत्यस्य वदिता साधुः) नैतत्सु (नैव सु) यस्य (पश्य).

(३) **भा.** ८।४९।२८-२९; **भामु.** ८।६९।३२-३४ (भवेत्सत्यमवक्तव्यं वक्तव्यमनृतं भवेत्। यत्रानृतं भवेत्सत्यं सत्यं चाप्यनृतं भवेत्॥३२॥ विवाहकाले रतिसंप्रयोगे प्राणात्यये सर्वधनापहारे। विप्रस्य चार्थे ह्यनृतं वदेत पञ्चानृतान्याहुरपातकानि॥३३॥ सर्वस्वस्यापहारे तु वक्तव्यमनृतं भवेत्। तत्रानृतं भवेत्सत्यं सत्यं चाप्यनृतं भवेत्॥३४॥).

(४) **भा.** ८।४९।३०; **भामु.** ८।६९।३४-३५ प्रथमार्धानन्तरम् 'भवेत्सत्यमवक्तव्यं न वक्तव्यमनुष्ठितम्' इदमर्धमधिकम्.

(५) **भा.** ८।४९।५३; **भामु.** ८।६९।६२-६३ धनक्षये (वधात्यये) प्रवक्तव्यं (न च प्रोक्तं).

(६) **भा.** ८।४९।५४; **भामु.** ८।६९।६३-६४.

8दुर्योधनोक्तिरियम्।

(१) **भा.** ८।४९।५५; **भामु.** ८।६९।६४-६५ वाग्भ (भाग्भ).

(२) **भा.** ९।४।२९; **भामु.** ९।५।३१ मस्तीह (मस्तीति) राज्यं (राष्ट्रं).

(३) **भा.** ९।४।३०; **भामु.** ९।५।३२.

(४) **भा.** ९।४।३१; **भामु.** ९।५।३३ मुञ्चेत (मुच्येत).

(५) **भा.** ९।४।३२; **भामु.** ९।५।३४.

(६) **भा.** ९।४।३३; **भामु.** ९।५।३५ सत्स (यत्स).

(७) **भा.** ९।४।३४-३५; **भामु.** ९।५।३६-३७ माप्तानां (पूतानां).

(८) **भा.** ९।३०।५२; **भामु.** ९।३१।५६ चापि (वाऽपि).

(९) **भा.** ९।३०।५३-५४; **भामु.** ९।३१।५७-५८.

**त्वया दत्तां न चेच्छेयं पृथिवीमखिलामहम्।**
**त्वां तु युद्धे विनिर्जित्य भोक्ताऽस्मि वसुधामिमाम्॥**

क्षत्रधर्मिणां ब्राह्मणादीनां राजानुमत्या युद्धेऽधिकारः

[1]**राज्ञो नियोगाद्योद्धव्यं ब्राह्मणेन विशेषतः।**
**वर्तता क्षत्रधर्मेण ह्येवं धर्मविदो विदुः॥**

शस्त्रप्रयोगाविषया गोब्राह्मणादयः

[2]**गोब्राह्मणनृपस्त्रीषु सख्युर्मातुर्गुरोस्तथा।**
**वृद्धबालजडान्धेषु सुप्तभीतोत्थितेषु च॥**
[3]**मत्तोन्मत्तप्रमत्तेषु न शस्त्राण्युपधारयेत्।**
**इत्येवं गुरुभिः पूर्वमुपदिष्टं नृणां सदा॥**

यथाशक्ति व्यवहर्तव्यम्

[4]**आदावेव मनुष्येण वर्तितव्यं यथा क्षमम्।**
**यथा नातीतमर्थं वै पश्चात्तापेन युज्यते॥**

क्षत्रियस्य संन्यासेऽनधिकारः

*[5]**आददानस्य चेद्राज्यं ये केचित्परिपन्थिनः।**
**हन्तव्यास्त इति प्राज्ञाः क्षत्रधर्मविदो विदुः॥**
**ते सदोषा हतास्माभी राज्यस्य परिपन्थिनः।**
**तान्हत्वा भुङ्क्ष्व धर्मेण युधिष्ठिर महीमिमाम्॥**

हतास्माभिरिति संधिरार्षः। तान् धर्मेण हत्वा निघ्नन् त्वं राज्यं भुङ्क्ष्व। हन्तेः 'अन्येभ्योऽपि दृश्यन्ते' (पासू. ३।२।७५) इति क्वनिप्, अनुनासिकलोपः, 'ह्रस्वस्य' (पासू. ६।१।७१) इति तुक्। नीटी.

[6]**यथा शत्रून् घातयित्वा पुरुषः कुरुसत्तम।**
**आत्मानं घातयेत्पश्चात्कर्मेदं नस्तथाविधम्॥**
[7]**आपत्काले हि संन्यासः कर्तव्य इति शिष्यते।**
**जरयाऽभिपरीतेन शत्रुभिर्व्यंसितेन च॥**

ननु 'संन्यास एव नः श्रेयान्' इत्युक्तम्, तत आह— आपदिति। व्यंसितेन दुर्गतिं प्रापितेन। नीटी.

[1]**तस्मादिह कृतप्रज्ञास्त्यागं न परिचक्षते।**
**धर्मव्यतिक्रमं चेदं मन्यन्ते सूक्ष्मदर्शिनः॥**

इह क्षत्रयोनौ त्यागं 'चरन् भैक्ष्यं मुनिर्मुण्डः' इत्युक्तविधं संन्यासं न परिचक्षते न प्रशंसन्ति। तत्र हेतुः — धर्मेति। 'मुखजानामयं धर्मो वैष्णवं लिङ्गधारणम्। बाहुजातोरुजातानां नायं धर्मो विधीयते॥' इति स्मृतेः क्षत्रियस्य मौण्ड्यादिकं निषिद्धम्, तस्याऽऽचरणे धर्मव्यतिक्रमोऽस्त्येवेति भावः। नीटी.

[2]**कथं तस्मात्समुत्पन्नस्तन्निष्ठस्तदुपाश्रयः।**
**तदेव निन्दन्नासीत श्रद्धा वाऽन्यत्र गृह्यते॥**

ननु हिंस्रोऽयं क्षात्रधर्मो निन्द्य एवेत्याशङ्क्याऽऽह — कथमिति। हिंसार्थमुत्पन्नाः हिंस्रयोनौ जाताः हिंसैकजीवनाः तदेव तस्यैव हिंस्रधर्मस्य निन्दां कथं भाषेयुः? कथं वा तत्र धाता तस्य धर्मस्य स्रष्टा न गर्ह्यते न निन्द्यते? धातृविहितत्वात्सहजत्वाच्च नासौ धर्मो निन्द्य इत्यर्थः। यदाह भगवान् — 'सदोषमपि कौन्तेय सहजं कर्म न त्यजेत्' (भगी. १८।४८) इति। नीटी.

[3]**श्रिया विहीनैरधनैर्नास्तिकैः संप्रवर्तितम्।**
**वेदवादस्य विज्ञानं सत्याभासमिवानृतम्॥**

कथं तर्हि जाबालोपनिषदि 'अथ परिव्राट् मुण्डो विवर्णवासाः' इत्युपक्रम्य 'भरतरैवतकप्रभृतयोऽनुन्मत्ता उन्मत्तवदाचरन्तः' (जाबालोपनिषत् ५-६) इति भरतादीनां क्षत्रियाणां मौण्ड्यमुन्मत्तचर्या च श्रूयते? इत्याशङ्क्याऽऽह — श्रियेति। 'ऋचः सामानि यजूंषि। सा हि श्रीरमृता सताम्' (तैब्रा. १।२।१।२६) इति श्रुतेः श्रिया त्रय्या विद्यया विहीनैः, अधनैः लक्ष्म्या च हीनैः इदमनृतं संप्रवर्तितम्। वेदयतीति वेदः विधिः, तस्य वादः अर्थवादः, तत्संबन्धि विज्ञानं संन्यास-विधिस्तुत्यर्थम्। भरतादिकीर्तनं प्रजापतिवपोत्खनन-

---

* ज्ञातिक्षयविरक्तं संन्यासकामं युधिष्ठिरं प्रति भीमोक्तिरियम्।

(१) भा. ९।६४।३९; भामु. ९।६५।४२.

(२) भा. १०।६।२१; भामु. १०।६।२१-२२ वृद्धबाल (हीनप्राण).

(३) भा. १०।६।२२; भामु. १०।६।२२-२३ द्वितीयचरणे (न शस्त्राणि च पातयेत्).

(४) भा. ११।१।२८; भामु. ११।१।३५ यथा क्ष (यथाक्ष).

(५) भा. १२।१०।७-८; भामु.

(६) भा. १२।१०।१२; भामु. १२।१०।१२ सत्तम (नन्दन) थाविधम् (थोपमम्).

(७) भा. १२।१०।१७; भामु. १२।१०।१७ च (वा).

(१) भा. १२।१०।१८; भामु. १२।१०।१८ चेदं (चैव).

(२) भा. १२।१०।१९; भामु. १२।१०।१९ न्नस्तन्निष्ठ-स्तदुपाश्रयः (न्नास्तन्निष्ठास्तदुपाश्रयाः) उत्तरार्धे (तदेव निन्दां भाषेयुर्धाता तत्र न गर्ह्यते॥).

(३) भा. १२।१०।२०; भामु.

वदर्थवादः, न तु तावता मौण्ड्ये क्षत्रियस्याधिकारः सिध्यतीति भावः। नीटी.

[1]यदि संन्यासतः सिद्धिं राजन्कश्चिदवाप्नुयात्।
पर्वताश्च द्रुमाश्चैव क्षिप्रं सिद्धिमवाप्नुयुः॥
[2]एते हि नित्यसंन्यासा दृश्यन्ते निरुपद्रवाः।
अपरिग्रहवन्तश्च सततं चाऽऽत्मचारिणः॥

संन्यासयुक्तमेकाकित्वमपि निरस्यति द्वाभ्याम् — यदीति। नीटी.

दण्डकरणं क्षत्रियधर्मः

[3]नादण्डः क्षत्रियो भाति नादण्डो भूतिमश्नुते।
नादण्डस्य प्रजा राज्ञः सुखमेधन्ति भारत॥
[4]मित्रता सर्वभूतेषु दानमध्ययनं तपः।
ब्राह्मणस्यैष धर्मः स्यान्न राज्ञो राजसत्तम॥
[5]असतां प्रतिषेधश्च सतां च परिपालनम्।
एष राज्ञां परो धर्मः समरे चापलायनम्॥

प्रतिषेधः दण्डः राज्यान्निर्वासनं वा। नीटी.

यस्मिन्क्षमा च क्रोधश्च दानादाने भयाभये।
निग्रहानुग्रहौ चोभौ स वै धर्मविदुच्यते॥

दानम् आदानं च ते। नीटी.

संतोषादिकतिपयसामान्य-
धर्मप्रशंसा

[6]संतोषो वै स्वर्गतमः संतोषः परमं सुखम्।
तुष्टेर्न किंचित्परतः सुसम्यक्परितिष्ठति॥

सा तुष्टिः। नीटी.

[7]यदा संहरते कामान् कूर्मोऽङ्गानीव सर्वशः।
तदाऽऽत्मज्योतिरात्मैव स्वात्मनैव प्रसीदति॥

सम्यक्प्रतितिष्ठति येन तदाह — यदेति। यदा प्रसीदति तदा तुष्टिः प्रतितिष्ठतीति संबन्धः। कदा प्रसीदति? यदा कामान् जाग्रदादिविषयान् संहरते आत्मनि प्रविलापयति तदा आत्मज्योतिः स्वयं-ज्योतिरात्मा स्वात्मन्येव स्वस्वरूपे एव प्रसीदति द्रष्टृदर्शनेन दृश्यादिभेददर्शनरूपं मलं त्यजति। नीटी.

[1]न बिभेति यदा चायं यदा चास्मान्न बिभ्यति।
कामद्वेषौ च जयति तदाऽऽत्मानं प्रपश्यति॥

न बिभेति द्वितीयाभावात्। अस्मान्न बिभ्यति अस्य निष्क्रियत्वात् समाधौ। व्युत्थाने तु कामक्रोधौ जयति। नीटी.

[2]यदाऽसौ सर्वभूतानां न क्रुध्यति न दुष्यति।
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा॥

यदा काले। नीटी.

[3]एतत्सर्वं समालोक्य बुधानामेष निश्चयः।
अद्रोहेणैव भूतानां यो धर्मः स सतां मतः॥
[4]अद्रोहः सत्यवचनं संविभागो धृतिः क्षमा।
प्रजनः स्वेषु दारेषु मार्दवं ह्रीरचापलम्॥
धनं धर्मप्रधानेष्टं मनुः स्वायंभुवोऽब्रवीत्॥

सिद्धान्तमाह — अद्रोहेणेति। प्रजनं पुत्रोत्पादनम्। प्रधानं चासौ इष्टश्चेति समासः, तम्। नीटी.

युद्धे मरणं मारणं च क्षत्रियधर्मः,
तपस्त्यागादयो ब्राह्मणधर्माः

[5]क्षत्रियाणां महाराज सङ्ग्रामे निधनं स्मृतम्।
विशिष्टं बहुभिर्यज्ञैः क्षत्रधर्ममनुस्मर॥
[6]ब्राह्मणानां तपस्त्यागः प्रेत्यधर्मविधिः स्मृतः।
क्षत्रियाणां च विहितं सङ्ग्रामे निधनं विभो॥

त्यागः संन्यासः। नीटी.

---

(१) **भा.** १२।१०।२४; **भामु.** १२।१०।२४ राजन् (राजा).

(२) **भा.** १२।१०।२५; **भामु.** १२।१०।२५ चाऽऽत्म (ब्रह्म).

(३) **भा.** १२।१४।१४; **भामु.** १२।१४।१४ भूति (भूमि) सुखमेधन्ति (सुखं विन्दन्ति).

(४) **भा.** १२।१४।१५; **भामु.** १२।१४।१५ स्यैष (स्यैव).

(५) **भा.** १२।१४।१६-१७; **भामु.**

(६) **भा.** १२।२१।२; **भामु.** १२।२१।२ सुसम्य (सा सम्य).

(७) **भा.** १२।२१।३; **भामु.** १२।२१।३ रात्मैव स्वात्मनैव (रचिरात्स्वात्मन्येव).

(१) **भा.** १२।२१।४; **भामु.** १२।२१।४ प्रपश्यति (च पश्यति).

(२) **भा.** १२।२१।५; **भामु.** १२।२१।५ द्वितीयचरणे (न दुह्यति न काङ्क्षति).

(३) **भा.** १२।२१।१०; **भामु.** १२।२१।१०-११.

(४) **भा.** १२।२१।११-१२; **भामु.** १२।२१।११-१२ धृतिः क्षमा (दया दमः) प्रजनः (प्रजनं) धनं धर्मप्र (एवं धर्मं प्र).

(५) **भा.** १२।२२।३; **भामु.** १२।२२।३ स्मृतम् (मतम्).

(६) **भा.** १२।२२।४; **भामु.** १२।२२।४ प्रेत्यध (प्रेत्य ध) विहितं (निधनं) निधनं (विहितं).

[1]क्षत्रधर्मो महारौद्रः शस्त्रनित्य इति स्मृतः।
वधश्च भरतश्रेष्ठ काले शस्त्रेण संयुगे॥
[2]ब्राह्मणस्यापि चेद्राजन्क्षत्रधर्मेण तिष्ठतः।
प्रशस्तं जीवितं लोके क्षत्रं हि ब्रह्मसंस्थितम्॥
[3]न त्यागो न पुनर्याच्ञा न तपो मनुजेश्वर।
क्षत्रियस्य विधीयन्ते न परस्वोपजीवनम्॥

यज्ञः आत्मयज्ञः समाधिरिति यावत्। नीटी.

[4]इन्द्रो वै ब्रह्मणः पुत्रः कर्मणा क्षत्रियोऽभवत्।
ज्ञातीनां पापवृत्तीनां जघान नवतीर्नव॥

ब्रह्मणः कश्यपस्य। नवतीर्नव दशाधिकं शताष्टकम्। नीटी.

[5]तच्चास्य कर्म पूज्यं हि प्रशस्यं च विशां पते।
तेन चेन्द्रत्वमापेदे देवानामिति नः श्रुतम्॥

इन्द्रत्वम् ऐश्वर्यम्। नीटी.

[6]तपो यज्ञस्तथा विद्या भैक्षमिन्द्रियनिग्रहः।
ध्यानमेकान्तशीलत्वं तुष्टिर्दानं च शक्तितः॥
ब्राह्मणानां महाराज चेष्टाः संसिद्धिकारकाः॥

विद्या आत्मनोऽसङ्गत्वज्ञानम्। ज्ञानं शास्त्रविषयम्। नीटी.

बहूनां यज्ञादिक्षत्रियधर्माणामनुक्रमणम्,
तत्र दण्डधारणं श्रेयः

[7]क्षत्रियाणां च वक्ष्यामि तवापि विदितं पुनः।
यज्ञो विद्या समुत्थानमसंतोषः श्रियं प्रति।
दण्डधारणमत्युग्रं प्रजानां परिपालनम्॥
[8]वेदज्ञानं तथा कृत्स्नं तपः सुचरितं तथा।
द्रविणोपार्जनं भूरि पात्रेषु प्रतिपादनम्॥

(१) भा. १२।२२।५; भामु. १२।२२।५ क्षत्र (क्षात्र).

(२) भा. १२।२२।६; भामु. १२।२२।६ तिष्ठतः (वर्ततः) संस्थितम् (संभवम्).

(३) भा. १२।२२।७; भामु. १२।२२।७ र्याच्ञा (र्यज्ञो).

(४) भा. १२।२२।११; भामु. १२।२२।११ द्वितीयचरणे (क्षत्रियः कर्मणाऽभवत्).

(५) भा. १२।२२।१२; भामु. १२।२२।१२ हि (च) तेन चेन्द्रत्वमा (तेनेन्द्रत्वं समा).

(६) भा. १२।२३।८-९; भामु. १२।२३।८-९ निग्रहः (संयमः) र्दानं (र्ज्ञानं) चेष्टाः (चेष्टा) कारकाः (कारिका).

(७) भा. १२।२३।९-१०; भामु. १२।२३।९-१० च (तु) मत्युग्रं (मुग्रत्वं).

(८) भा. १२।२३।११; भामु. १२।२३।११ पात्रेषु (पात्रे च).

[1]एतानि राज्ञां कर्माणि सुकृतानि विशां पते।
इमं लोकममुं लोकं साधयन्तीति नः श्रुतम्॥
[2]तेषां ज्यायस्तु कौन्तेय दण्डधारणमुच्यते।
बलं हि क्षत्रिये नित्यं बले दण्डः समाहितः॥
[3]एताश्चेष्टाः क्षत्रियाणां राजन्संसिद्धिकारिकाः।
अपि गाथामिमां चापि बृहस्पतिरभाषत॥
[4]भूमिरेतौ निगिरति सर्पो बिलशयानिव।
राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम्॥

बिलशयान् मूषिकान्। अप्रवासिनं गृहादिसङ्गिनम्। नीटी.

सुद्युम्नश्चापि राजर्षिः श्रूयते दण्डधारणात्।
प्राप्तवान्परमां सिद्धिं दक्षः प्राचेतसो यथा॥
[5]दण्ड एव हि राजेन्द्र क्षत्रधर्मो न मुण्डनम्॥

ब्राह्मणधर्मपरिरक्षणं
क्षत्रियधर्मः

[6]ब्राह्मणेषु च यो धर्मः स नित्यो वेदनिश्चितः॥
तत्प्रमाणं प्रमाणानां शाश्वतं भरतर्षभ।
तस्य धर्मस्य कृत्स्नस्य क्षत्रियः परिरक्षिता॥

स्वधर्मत्यागादीनां पञ्चदशानाम-
कार्याणामनुक्रमणम्

[7]अकार्याण्यपि वक्ष्यामि यानि तानि निबोध मे।
लोकवेदविरुद्धानि तान्येकाग्रमनाः शृणु॥
[8]स्वधर्मस्य परित्यागः परधर्मस्य च क्रिया।
अयाज्ययाजनं चैव तथाऽभक्ष्यस्य भक्षणम्॥

अभक्ष्यस्य लशुनादेः। नीटी.

शरणागतसंत्यागो भृत्यस्याभरणं तथा।
रसानां विक्रयश्चापि तिर्यग्योनिवधस्तथा॥

रसानां लवणगुडादीनाम्। नीटी.

(१) भा. १२।२३।१२; भामु. १२।२३।१२ लोकं सा (चैव सा).

(२) भा. १२।२३।१३; भामु. १२।२३।१३ तेषां (एषां).

(३) भा. १२।२३।१४; भामु. १२।२३।१४ एताश्चेष्टाः (एता विद्याः) भाषत (गायत).

(४) भा. १२।२३।१५-१६; भामु.

(५) भा. १२।२४।३०; भामु. १२।२३।४७.

(६) भा. १२।३२।३-४; भामु. १२।३२।३-४ च यो (तपो) प्रमाणानां (ब्राह्मणानां).

(७) भा. १२।३५।९; भामु. १२।३४।९ ण्यपि (णि तु).

(८) भा. १२।३५।१०-११; भामु. १२।३४।१०-११.

**[1]आधानादीनि कर्माणि शक्तिमान्न करोति यः।**
**अप्रयच्छंश्च सर्वाणि नित्यं देयानि भारत॥**
नित्यदेयानि गोग्रासादीनि। नीटी.

**[2]दक्षिणानामदानं च ब्राह्मणस्वाभिमर्शनम्।**
**सर्वाण्येतान्यकार्याणि प्राहुर्धर्मविदो जनाः॥**
दक्षिणानां प्रतिश्रुतानाम्। नीटी.

**[3]पित्रा विभजते पुत्रो यश्च स्याद्गुरुतल्पगः।**
**अप्रजायन्नधर्मेण भवत्यधार्मिको जनः॥**
विवदते धनाद्यर्थं पित्रा सह कलहं करोति। अप्रजायन् धर्मपत्न्यां काले मैथुनमकुर्वन्। नीटी.

आततायिवधादयो महापातकापवादाः

**[4]प्रगृह्य शस्त्रमायान्तमपि वेदान्तगं रणे।**
**जिघांसन्तं निहत्याऽऽजौ न तेन ब्रह्महा भवेत्॥**
जिघांसी हातुमिच्छावान् इयात् गच्छेत्। नीटी.

**[5]अपेतं ब्राह्मणं वृत्ताद्यो हन्यादाततायिनम्।**
**न तेन ब्रह्महा स स्यान्मन्युस्तं मन्युमृच्छति॥**
मन्युः क्रोधः तन्मन्युं शत्रोः क्रोधं प्रति ऋच्छति गच्छति। क्रोध एव तं प्रतीपीभूय परशरीरद्वारा हन्तीत्यर्थः। नीटी.

**[6]प्राणात्यये तथाऽज्ञानादाचरन्मदिरामपि।**
**अचोदितो धर्मपरः पुनः संस्कारमर्हति॥**
असाध्यरोगादिना प्राणात्यये उपस्थिते जीवनार्थं मदिरामपि आचरन् पिबन्। धर्मपरैः चिकित्सकैः आदेशितः उपदिष्टः। नीटी.

**[7]गुरुतल्पं हि गुर्वर्थे न दूषयति मानवम्।**
**उद्दालकः श्वेतकेतुं जनयामास शिष्यतः॥**
गुर्वर्थं गुर्वाज्ञया। नीटी.

(१) भा. १२।३५।१२; भामु. १२।३४।१२ नित्यं दे (नित्यदे).
(२) भा. १२।३५।१३; भामु. १२।३४।१३.
(३) भा. १२।३५।१४; भामु. १२।३४।१४ विभजते (विवदते) न्नधर्मेण (न्नरव्याघ्र) जनः (नरः).
(४) भा. १२।३५।१७; भामु. १२।३४।१७ निहत्याऽऽजौ न (जिघांसीयान्न); स्मृतिकौ. ४७५ (अपि वेदान्तपारगम्) एतावदेव.
(५) भा. १२।३५।१९; भामु. १२।३४।१९ स्तं मन्यु (स्तन्मन्यु).
(६) भा. १२।३५।२०; भामु. १२।३४।१९ तृतीयचरणे (आदेशितो धर्मपरैः)
(७) भा. १२।३५।२२; भामु. १२।३४।२२ गुर्वर्थे (गुर्वर्थं).

**[1]स्तेयं कुर्वंस्तु गुर्वर्थमापत्सु न निबध्यते।**
**बहुशः कामकारेण न चेद्यः संप्रवर्तते॥**

**[2]अन्यत्र ब्राह्मणस्वेभ्य आददानो न दुष्यति।**
**स्वयमप्राशिता यश्च न स पापेन लिप्यते॥**

**[3]प्राणत्राणेऽनृतं वाच्यमात्मनो वा परस्य वा।**
**गुर्वर्थे स्त्रीषु चैव स्याद्विवाहकरणेषु च॥**

अविहितपशुहत्यानिषेधः विहितपशुहत्याप्रशंसा च

**[4]वृथापशुसमालम्भं नैव कुर्यान्न कारयेत्।**
**अनुग्रहः पशूनां हि संस्कारो विधिचोदितः॥**
वृथा श्राद्धादिनिमित्तं विना। संस्कारः पावित्र्यम्- (? शामित्रम्), 'यो यजेताश्वमेधेन मासि मासि शतं समाः। मांसानि च न खादेत द्वयमेतत्समं स्मृतम्॥' इति स्मृतेः। नीटी.

सोमविक्रयभृत्यविसर्गवनदाहनिषेधापवादः

**[5]तत्त्वं ज्ञात्वा तु सोमस्य विक्रयः स्याददूषकः।**
**असमर्थस्य भृत्यस्य विसर्गः स्याददोषवान्।**
**वनदाहो गवामर्थे क्रियमाणो न दूषकः॥**
सोमस्य तत्त्वम् 'अनेन तृप्ता देवा मनुष्यान्कामैरभिवर्षन्तीति लोकद्वयोपकारणकोऽयं सोमः' इति। नीटी.

शिष्टस्य शिष्टानुष्ठितस्य च धर्मस्यानुष्ठेयत्वम्

**[6]शिष्टाचारश्च शिष्टश्च धर्मो धर्मभृतां वर।**
**सेवितव्यो नरव्याघ्र प्रेत्य चेह सुखार्थिना॥**

(१) भा. १२।३५।२३; भामु. १२।३४।२३ कुर्वंस्तु (कुर्वंश्च) निबध्य (निषिध्य).
(२) भा. १२।३५।२४; भामु. १२।३४।२४.
(३) भा. १२।३५।२५; भामु. १२।३४।२५ परस्य वा (परस्य च).
(४) भा. १२।३५।२८; भामु. १२।३४।२८ चोदि (नोदि).
(५) भा. १२।३५।३१; भामु. १२।३४।३१ ददूषकः (ददोषवान्).
(६) भा. १२।३६।४४; भामु. १२।३५।४८ चतुर्थचरणे (प्रेत्येह च सुखेप्सुना).

क्षत्रियेण युद्धे पितृगुर्वादीनां हननस्य धर्म्यत्वम्

**भीष्म उवाच –**

**[1]ब्राह्मणानां यथा धर्मो दानमध्ययनं तपः।**
**क्षत्रियाणां तथा कृष्ण समरे देहपातनम्॥**

गोत्रवधजां ग्लानिं धर्मराजस्यापनेष्यन् भीष्म उवाच – ब्राह्मणानामिति। नीटी.

**[2]पितॄन्पितामहान्पुत्रान्गुरून्संबन्धिबान्धवान्।**
**मिथ्याप्रवृत्तान्यः संख्ये निहन्याद्धर्म एव सः॥**
**[3]समयत्यागिनो लुब्धान्गुरूनपि च केशव।**
**निहन्ति समरे पापान्क्षत्रियो यः स धर्मवित्॥**
**[4]यो लोभान्न समीक्षेत धर्मसेतुं सनातनम्।**
**निहन्ति यस्तं समरे क्षत्रियो वै स धर्मवित्॥**

तं लोभिनम्। नीटी.

**लोहितोदां केशतृणां गजशैलां ध्वजद्रुमाम्।**
**महीं करोति युद्धेषु क्षत्रियो यः स धर्मवित्॥**
**[5]आहूतेन रणे नित्यं योद्धव्यं क्षत्रबन्धुना।**
**धर्म्यं स्वर्ग्यं च लोक्यं च युद्धं हि मनुरब्रवीत्॥**

अदण्डधारिणो राज्ञः अप्रवासिनो ब्राह्मणस्य च निन्दा

**[6]द्वावेतौ ग्रसते भूमिः सर्पो बिलशयानिव।**
**राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम्॥**

अप्रवासिनं वेदाध्ययनार्थं ब्राह्मणं यतिं वा। नीटी.

त्याज्यषट्कम्

**[7]षडेतान्पुरुषो जह्याद्भिन्नां नावमिवार्णवे।**
**अप्रवक्तारमाचार्यमनधीयानमृत्विजम्॥**
**अरक्षितारं राजानं भार्यां चाप्रियवादिनीम्।**
**ग्रामकामं च गोपालं वनकामं च नापितम्॥**

(१) **भा.** १२।५५।१४; **भामु.**
(२) **भा.** १२।५५।१५; **भामु.** १२।५५।१५ पुत्रान् (भ्रातॄन्).
(३) **भा.** १२।५५।१६; **भामु.**
(४) **भामु.** १२।५५।१७-१८.
(५) **भा.** १२।५५।१७; **भामु.** १२।५५।१९.
(६) **भा.** १२।५७।३; **भामु.** १२।५७।३ द्वावेतौ (द्वाविमौ).
(७) **भा.** १२।५७।४४-४५; **भामु.**

अक्रोधादयो नव वर्णसामान्यधर्माः

**[1]अक्रोधः सत्यवचनं संविभागः क्षमा तथा।**
**प्रजनः स्वेषु दारेषु शौचमद्रोह एव च॥**
**आर्जवं भृत्यभरणं नवैते सार्ववर्णिकाः॥**

सर्ववर्णधर्मानाह – अक्रोध इति सार्धेन। नीटी.

चातुर्वर्ण्यधर्मविभागः, तत्र यज्ञधर्मस्य विस्तरेण विवरणम्

**[2]ब्राह्मणस्य तु यो धर्मस्तं ते वक्ष्यामि केवलम्।**
**दममेव महाराज धर्ममाहुः पुरातनम्।**
**स्वाध्यायोऽध्यापनं चैव तत्र कर्म समाप्यते॥**

तत्र अध्ययने। तावतैव नैष्ठिकः कृतार्थो भवतीत्यर्थः। नीटी.

**[3]तं चेद्वित्तमुपागच्छेद्वर्तमानं स्वकर्मणि।**
**अकुर्वाणं विकर्माणि शान्तं प्रज्ञानतर्पितम्॥**
**[4]कुर्वीतापत्यसंतानमथो दद्याद्यजेत च।**
**संविभज्य हि भोक्तव्यं धनं सद्भिरितीष्यते॥**

स्वयमुपागते वित्ते दारक्रियापूर्वकं अपत्यसंतानमिच्छेत्स इत्याह द्वाभ्याम् – तं चेदिति। नीटी.

**[5]परिनिष्ठितकार्यस्तु स्वाध्यायेनैव ब्राह्मणः।**
**कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते॥**
**[6]क्षत्रियस्यापि यो धर्मस्तं ते वक्ष्यामि भारत।**
**दद्याद्राजा न याचेत यजेत न तु याजयेत्॥**
**[7]नाध्यापयेदधीयीत प्रजाश्च परिपालयेत्।**
**नित्योद्युक्तो दस्युवधे रणे कुर्यात्पराक्रमम्॥**

(१) **भा.** १२।६०।७-८; **भामु.**
(२) **भा.** १२।६०।८-९; **भामु.** १२।६०।८-९ योऽध्यापनं (याभ्यसनं).
(३) **भा.** १२।६०।१०; **भामु.** १२।६०।१० चेद्वित्त (चेद्द्विज).
(४) **भा.** १२।६०।११; **भामु.** १२।६०।११ हि (च) तीष्यते (तीर्यते).
(५) **भा.** १२।६०।१२ : १२।२३०।१३ कार्यस्तु (कार्यो हि) येनैव ब्राह्मणः (येन द्विजो भवेत्); **भामु.** १२।६०।१२ दन्यन्न (दन्यत्र).
(६) **भा.** १२।६०।१३; **भामु.** १२।६०।१३ द्राजा न (द्राजन्न) तु (च).
(७) **भा.** १२।६०।१४; **भामु.**

[1]ये च क्रतुभिरीजानाः श्रुतवन्तश्च भूमिपाः।
य एवाऽऽहवजेतारस्त एषां लोकजित्तमाः॥
[2]अविक्षतेन देहेन समराद्यो निवर्तते।
क्षत्रियो नास्य तत्कर्म प्रशंसन्ति पुराविदः॥
[3]वधं हि क्षत्रबन्धूनां धर्ममाहुः प्रधानतः।
नास्य कृत्यतमं किंचिदन्यद्दस्युनिबर्हणात्॥
[4]दानमध्ययनं यज्ञो योगः क्षेमो विधीयते।
तस्माद्राज्ञा विशेषेण योद्धव्यं धर्ममीप्सता॥
[5]स्वेषु धर्मेष्ववस्थाप्य प्रजाः सर्वा महीपतिः।
धर्मेण सर्वकृत्यानि समनिष्ठानि कारयेत्॥
[6]परिनिष्ठितकार्यः स्यान्नृपतिः परिपालनात्।
कुर्यादन्यन्न वा कुर्यादैन्द्रो राजन्य उच्यते॥
[7]वैश्यस्यापीह यो धर्मस्तं ते वक्ष्यामि भारत।
दानमध्ययनं यज्ञः शौचेन धनसंचयः॥
[8]पितृवत्पालयेद्वैश्यो युक्तः सर्वपशूनिह।
विकर्म तद्भवेदन्यत्कर्म यद्यत्समाचरेत्।
रक्षया स हि तेषां वै महत्सुखमवाप्नुयात्॥
[9]प्रजापतिर्हि वैश्याय सृष्ट्वा परिददे पशून्।
ब्राह्मणाय च राज्ञे च सर्वाः परिददे प्रजाः॥
[10]शूद्रस्यापि हि यो धर्मस्तं ते वक्ष्यामि भारत।
प्रजापतिर्हि वर्णानां दासं शूद्रमकल्पयत्॥
तस्माच्छूद्रस्य वर्णानां परिचर्या विधीयते।
तेषां शुश्रूषणाच्चैव महत्सुखमवाप्नुयात्॥

[1]शूद्र एतान्परिचरेत्त्रीन्वर्णाननसूयकः॥
[2]शूद्रेण च न हातव्यो भर्ता कस्यांचिदापदि।
अतिरेकेण भर्तव्यो भर्ता द्रव्यपरिक्षये।
न हि स्वमस्ति शूद्रस्य भर्तृहार्यधनो ह्यसौ॥

अतिरेकेण स्वकुटुम्बपोषणादाधिक्येन। भर्ता पोष्टा। अन्यत्र भृत्यार्जितमपि धनं शूद्रस्य स्वामिनैव हार्यम्। यथोक्तम् – 'त्रय एवाधना राजन्भार्या दासस्तथा सुतः। यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनम्॥' इति । तस्माद्युक्तमुक्तम् 'भर्तृहार्यधनो हि सः' इति।

नीटी.

[3]उक्तस्त्रयाणां वर्णानां यज्ञस्त्रय्यैव भारत।
स्वाहाकारनमस्कारौ मन्त्रः शूद्रे विधीयते॥
[4]ताभ्यां शूद्रः पाकयज्ञैर्यजेत व्रतवान्स्वयम्।
पूर्णपात्रमयीमाहुः पाकयज्ञस्य दक्षिणाम्॥

(१) स्वाहाकारनमस्कारौ द्वावपि पृथक् मन्त्रौ, न समुच्चितौ। अत एव 'स्वाहाकारो वा नमस्कारो वा मन्त्रः शूद्रे विधीयते। ताभ्यां शूद्रः पाकयज्ञैः यजेत ब्रह्मवान्' इति। ताभ्यां स्वाहाकारनमस्काराभ्यां विकल्पिताभ्यामसमुच्चिताभ्याम्। ब्रह्म मन्त्रः, तद्वान्। स्वाहाकाररूपमन्त्रवान् नमस्काररूपमन्त्रवान् वा।

९०-९१

(१) **भा.** १२।६०।१५; **भामु.** १२।६०।१५ ये च (ये तु).

(२) **भा.** १२।६०।१६; **भामु.**

(३) **भा.** १२।६०।१७; **भामु.** १२।६०।१७ वधं (एवं) धर्म (मार्ग).

(४) **भा.** १२।६०।१८; **भामु.** १२।६०।१८ योगः (राज्ञां).

(५) **भा.** १२।६०।१९; **भामु.** १२।६०।१९ सम (शम).

(६) **भा.** १२।६०।२०; **भामु.** १२।६०।२० र्यः स्यान्नृ (र्यस्तु नृ).

(७) **भा.** १२।६०।२१; **भामु.** १२।६०।२१ स्यापीह (स्यापि हि) भारत (शाश्वतम्).

(८) **भा.** १२।६०।२२; **भामु.** १२।६०।२२-२३ सर्व (सर्वान्) यद्यत् (यत्स).

(९) **भा.** १२।६०।२३; **भामु.** १२।६०।२३-२४ ददे प (ददौ प).

(१०) **भा.** १२।६०।२७-२८; **भामु.** १२।६०।२७-२९.

(१) **भा.** १२।६०।२९; **भामु.** १२।६०।२९ नसूयकः (नुपूर्वशः).

(२) **भा.** १२।६०।३५; **भामु.** १२।६०।३६-३७ च (तु) ह्यसौ (हि सः).

(३) **भा.** १२।६०।३६; **भामु.** १२।६०।३७ स्त्रय्यैव (स्तस्य च) नमस्कारौ (वषट्कारौ) विधीयते (न विद्यते); **पमा.** १।४१९ रौ मन्त्रः (रमन्त्रं) उत्त.; **स्मृकौ.** ९० उत्त., क्रमेण आनुशासनिकपर्वणि, २३६ उत्त., आनुशासनिकपर्वणि; **शूशि.** ४९ उत्त., स्मृतिकौमुद्यामनुशासनपर्वणि; **संम.** ८१ कार (कारो) स्कारौ (स्कारो) उत्त., भारते; **शूक.** ६५ मन्त्रः शूद्रे विधीयते (मन्त्रौ शूद्रो विधीयताम्) उत्त., क्रमेण आनुशासनिके पर्वणि : १५३ कार (कारे) स्कारौ (स्कारो) उत्त., भारते; **सस्मृ.** १२८ मन्त्रः (मन्त्रौ) उत्त., आनुशासनिके : १७२ उत्त., आनुशासनिके.

(४) **भा.** १२।६०।३७; **भामु.** १२।६०।३८ ताभ्यां शू (तस्माच्छू) त व्रत (तावत); **पमा.** १।४२० व्रतवान् (ब्राह्मणान्) पू.; **स्मृकौ.** ९० व्रत (ब्रह्म) पू., क्रमेण आनुशासनिकपर्वणि; **शूशि.** ४९ व्रत (ब्रह्म) पू., स्मृतिकौमुद्यामनुशासनपर्वणि; **शूक.** ५३ ताभ्यां शू (तस्माच्छू) उत्तरार्धे (दक्षिणा पाकयज्ञानां हिरण्यं तु विधीयते॥) भारते : ६५ सर्वं स्मृकौवत्; **सस्मृ.** १७२ व्रत (ब्रह्म) पू., आनुशासनिके पर्वणि.

स्वाहेत्येको मन्त्रः, नमः इत्यपरः। 'नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत्' (यास्मृ. १।१२१) इति याज्ञवल्क्यः। तत्र होमे स्वाहाकारनमस्कारौ विकल्पितौ, बल्यादिषु नम इत्येव मन्त्रः। स्मृकौ. २३६

(२) स्वाहाकारो नमस्कारो वेति (वि)कल्पितावेतौ मन्त्रौ, (न) समुच्चितौ। ताभ्यां स्वाहाकारनमस्काराभ्यां ब्रह्मवान्, ब्रह्म मन्त्रः, तद्वान् पाकयज्ञैः स्वयं यजेतेत्यर्थः। तत्र स्वाहाकारमन्त्रः शूद्रे लोकविद्विष्टत्वात् आचारविरोधाच्च न भवतीत्याहुः। अत्राऽऽह गौडः — मन्त्रपाठस्य द्वयं कृत्यम् — अदृष्टसिद्धिः, अनुष्ठेयार्थप्रकाशनरूपदृष्टसिद्धिश्च। तत्र सामान्यप्राप्तनमस्काररूपमन्त्रोच्चारणेनादृष्टं तावत्सिद्धम्। अनुष्ठेयार्थ - प्रकाशनार्थं तु ब्राह्मणद्वारा मन्त्रं पाठयेत्। यद्यपि शूद्रं प्रति श्रवणं श्रावणं च निषिद्धं तथापि विशेषवचनान्न तन्निषिध्यते, तथा चैकोद्दिष्टमभिधाय वराहपुराणे — 'अयमेव विधिः प्रोक्तः शूद्राणां मन्त्रवर्जितः। अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते॥' इति वचनात्। मन्त्रेण गृह्यते संबध्यते पाठकत्वेनेत्यर्थः। अमन्त्रस्येति विशेषणोपादानं यावदमन्त्रव्याप्त्यर्थम्। तेन स्त्रियाऽपि क्रियमाणे कर्मणि ब्राह्मणो मन्त्रं पठेत्, तुल्यन्यायत्वात्। तस्य चार्थप्रकाशनरूपदृष्टस्यानुक्रमध्यानादितोऽपि संभवे ब्राह्मणद्वारकमन्त्रपाठोऽपि नाऽऽवश्यकः, तस्य दृष्टमात्रप्रयोजनकत्वात्। 'अमन्त्रस्य च (? तु) शूद्रस्य' इति चेयं परिभाषा। न च परिभाषा प्रकरणेन नियम्यते। तेनैकोद्दिष्टादन्यत्रापि स्नानदानादौ विप्रेण मन्त्रः पठितव्यः। अत एव 'पित्र्ये तु द्विगुणा दर्भाः' (श्राद्धकल्पः १।२४) इति कात्यायनोक्तवचनं श्राद्धप्रकरणपठितमपि परिभाषात्वात् पितृक्षयमात्रपरमिति वृद्धाः। मदनपालस्तदन्यथा व्याचष्टे — "यत्र शाखाविशेषे श्राद्धे क्षणदानाद्यनन्तरं निमन्त्रितब्राह्मणस्य मन्त्रपाठो विहितः। तत्र शूद्रकर्तृकश्राद्धेऽपि निमन्त्रितेन मन्त्रपाठः कार्य इत्येष 'विप्रो मन्त्रेण गृह्यते' इत्यस्यार्थः" इति। कल्पतरुकारस्तु — 'शूद्राणां वैदिकमन्त्र एवानधिकारः, न पौराणेष्वपि। तेन पौराणधर्माणां स्त्रीशूद्रान् प्रति 8विशेष्य विधानात्तेषां च मन्त्रविशिष्टतयैवोत्पन्नत्वादगत्या कर्माङ्गभूतपौराणमन्त्रपाठोऽप्यस्ति' इत्याह। तथैव मध्यदेशाचार इति। अत्र शूद्राणां ये धर्माः साक्षान्निषिद्धास्ते निवर्तन्ते, साक्षाद्विहितास्ते प्रवर्तन्ते, ये च न विहिता न च प्रतिषिद्धाः साधारणास्तेऽपि भवन्ति, किंत्वमन्त्रकमेव। श्रौतस्मार्तार्श्च केचिदमन्त्रका अपि निषिध्यन्ते। मोक्षधर्मे व्यासः — 'ब्राह्मणाः क्षत्रिया वैश्यास्त्रयो वर्णा द्विजातयः। अत्र तेषामधीकारो धर्मेषु द्विपदां वर॥'। अत्र श्रौते याजनादौ स्मार्ते संध्यावन्दनादौ। यज्ञादिषु तु विशेषवचनादधिकार इति वक्ष्यते। शूशि. ४९-५१

(३) §तत्र 'स्वाहाकारे नमस्कारो मन्त्रः शूद्रे विधीयते' इति भारतोक्तेर्होमे स्वाहाशब्दः, बलौ नमःशब्द इति स्मृतिकौमुदी। तन्न, 'नमस्कारेण मन्त्रेण' इत्येतद्विरोधात्। शूक.१५३

(४) तस्य (च) शूद्रस्य च। अमन्त्रको यज्ञोऽस्तीत्यर्थः। पाकयज्ञैः क्षुद्रयज्ञैः ग्रहशान्तिवैश्वदेवादिभिः यजेत अव्रतवान् श्रौतव्रतोपायहीनः। 'अष्टमुष्टि भवेत्किंचित्किंचिदष्टौ तु पुष्कलम्। पुष्कलानि तु चत्वारि पूर्णपात्रं प्रचक्षते॥' इत्युक्तलक्षणपूर्णपात्रमयी। यज्ञे गवामिव पूर्णपात्राणामेव गणना यज्ञानुसारेण। मन्त्रास्तेषां पौराणिका नाममन्त्रा वा प्रणववर्जिता इति सर्वं शूद्रपद्धत्युक्तं द्रष्टव्यम्। नीटी.

**[1]शूद्रः पैजवनो नाम सहस्राणां शतं ददौ।**
**ऐन्द्राग्नेन विधानेन दक्षिणामिति नः श्रुतम्॥**

सहस्राणां शतं लक्षं पूर्णपात्राणि। ऐन्द्राग्नस्य विधिर्यथा श्रौते चरोः पशोर्वा विधिस्तथैवामन्त्रकमस्य विधानम्, तेन। नीटी.

8 चौरादिकस्येदं रूपम्।

§ ग्रन्थोऽयं व्याकुलः, यथाश्रुतभारतोक्तेः स्मृतिकौमुद्युक्तसाध्यरूपेऽर्थे हेतुत्वानुपपत्तेः। तन्निषेधे हेतुत्वविवक्षायां तु हेत्वाकाङ्क्षायाः शान्तत्वेन 'नमस्कारेण मन्त्रेण' इति वचनेन विरोधस्य उत्थाप्याकाङ्क्षोपष्टम्भकहेतुरूपस्य तत्त्वबोधकाभावेन प्रतीयमानमुत्थिताकाङ्क्षहेतुत्वं नोपपद्यते। 'स्वाहाकारे' इति मुद्रणस्य प्रामादिकत्वम्, 'स्वाहाकारो नमस्कारः' इति च शुद्धं पाठं प्रकल्प्य भारतोक्तेः स्मृतिकौमुद्युक्तसाध्ये हेतुत्वं स्वीक्रियते चेत्, स्मृत्योः परस्परविरोधे विनिगमकाभावेऽन्यतरस्याः स्वार्थे प्रामाण्यमन्यतरस्याश्च नेति न युज्यते। शूद्रकमलाकरे एवान्यत्र 'स्वाहाकारनमस्कारौ मन्त्रौ शूद्रो विधीयताम्' इति पाठो मुद्रितः। तत्र 'विधीयताम्' इति दैवादिकस्य धीङो रूपम्, 'मन्त्रौ' इति च कर्मपदं ग्राह्यम्।

(१) भा. १२।६०।३८; भामु. १२।६०।३९.

**[1]अतो हि सर्ववर्णानां श्रद्धायज्ञो विधीयते।**
**दैवतं हि महच्छ्रद्धा पवित्रं यजतां च यत्॥**

ननु 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' इति श्रुतेः कथमस्यामन्त्रोऽपि यज्ञः? इत्याशङ्क्याऽऽह – यत इति। सर्ववर्णानां त्रैवर्णिकानां यो यज्ञः स तस्यैव शूद्रस्यैव भवति, तस्य तत्सेवकत्वात्। यथा हि श्रद्धया गुर्वग्नीन्परिचरत उपकोसलस्याग्नयो ब्रह्मविद्यां दत्तवन्तः एवं श्रद्धया ब्राह्मणादीनाराधयतः शूद्रस्यापि ब्राह्मणकृतयज्ञफलभागित्वमस्त्येवेत्यर्थः। सार्धः श्लोकः।

नीटी.

**[2]दैवतं परमं विप्राः स्वेन स्वेन परस्परम्।**
**अयजन्निह सत्रैस्ते तैस्तैः कामैः सनातनैः॥**
**[3]संसृष्टा ब्राह्मणैरेव त्रिषु वर्णेषु सृष्टयः।**
**देवानामपि ये देवा यद्ब्रूयुस्ते परं हि तत्।**
**तस्माद्वर्णैः सर्वयज्ञाः संसृज्यन्ते न काम्यया॥**

सृष्टयः संतानानि, तेन सर्वेषां वर्णानां ब्राह्मणजत्वादस्त्येव शूद्रस्यापि यज्ञेऽधिकार इत्यर्थः। यद्ब्रूयुस्ते तत् ते तव परं हितम्। वर्णैः सशूद्रैः सर्वयज्ञाः श्रौताः स्मार्ताश्च न काम्यया, स्वभावात्संसृज्यन्ते इति पूर्वस्योपसंहारः। नीटी.

**[4]ऋग्यजुःसामवित्पूज्यो नित्यं स्याद्देववद्द्विजः।**
**अनृग्यजुरसामा तु प्राजापत्य उपद्रवः॥**

अत्र हेतुमाह – ऋगिति। द्विजः त्रैवर्णिकः पूज्यः शूद्रेण। उपद्रवतीति तत्समीपगामित्वात् उपद्रवः दासः शूद्रः, स वेदहीनोऽपि प्राजापत्यः प्रजापतिदेवताकः, यथाऽऽग्नेयो ब्राह्मणः, ऐन्द्रः क्षत्रियस्तद्वत्। नीटी.

**[5]यज्ञो मनीषया तात सर्ववर्णेषु भारत।**
**नास्य यज्ञहनो देवा ईहन्ते नेतरे जनाः।**
**तस्मात्सर्वेषु वर्णेषु श्रद्धायज्ञो विधीयते॥**

तथा च मानसे देवतोद्देशेन द्रव्यत्यागात्मके यज्ञे सर्वे वर्णा अधिक्रियन्त इत्यर्थः सार्धः श्लोकः। अस्य मानसयज्ञकर्तुः देवाः इतरे जनाश्च न ईहन्ते इति न, अपि तु श्रद्धापूतत्वात्सर्वेऽप्यस्य यज्ञे भागं कामयन्त इत्यर्थः। 'नास्य यज्ञस्य ते' इति पाठे एनं यज्ञं देवा अपि कर्तुं न ईहन्ते न समर्था भवन्तीति योज्यम्।

नीटी.

**[1]स्वं दैवतं ब्राह्मणाः स्वेन नित्यं**
**परान्वर्णानयजन्नेवमासीत्।**
**आरोचिता नः सुमहान्स धर्मः**
**सृष्टो ब्रह्मणा त्रिषु वर्णेषु दृष्टः॥**

नन्वग्निहीनस्य शूद्रस्य कथं पाकयज्ञेष्वधिकार इत्याशङ्क्याऽऽह – 'स्वं दैवतं ब्राह्मणः स्वे न नित्यं परान्वर्णानयजन्नैवमासीत्। अधरो वितानः संसृष्टो वैश्यो ब्राह्मणस्त्रिषु वर्णेषु यज्ञसृष्टः॥' इति। ब्राह्मणस्त्रयाणामपि वर्णानां स्वम् असाधारणं दैवतम्। अतः कारणात् ते स्वे आत्मीयाः ब्राह्मणाः परान्वर्णानुद्दिश्य न अयजन्निति नैव आसीत्, अपि तु 'अमुककामेनामुकशर्मणाऽहं वृतोऽमुकयज्ञेन यक्ष्ये' इत्युद्देशं कृत्वा अयजन्नेव यागं कृतवन्त एव इत्येवमेवाऽऽसीत्। एवं पुराकल्पप्रदर्शनमुखेनायं विधिर्ज्ञेयः। अयजन्निति परस्मैपदप्रयोगस्तु परगामित्वात्क्रियाफलस्य युक्तः। अधरः नीचः वैवाहिकात् श्रौताच्चान्यत्वात् वितानोऽग्नीनां विस्तरः। तस्य अग्नयो लौकिका एव पञ्चकुण्डीविधानादौ ज्ञेयाः। एककुण्डपक्षे त्वेक एव लौकिकः। स वा(? च) 'अथ खलु यत्र क्वच होष्यन्स्यात्' इत्युपक्रम्य 'अग्निं प्रतिष्ठाप्य' (आगृ. १।३।१) इति गृह्यकारैर्दर्शितः। संसृष्ट इति। तत्रापि मन्त्रसंसर्ग उच्यते। वैश्यः वैश्यगृहादानीतः। श्रौतेऽपि 'विट्कुलाद्वित्तवतो वा' इति वैश्यगृहाद्दक्षिणाग्न्यर्थमग्न्यानयनं दृश्यते। यस्मादेवं तस्माद्ब्राह्मणस्त्रिष्वपि वर्णेषु यज्ञः सृष्टो येन सः यज्ञस्त्रष्टा भवतीत्यर्थः। पाठान्तरे वैश्यपदे विभक्तिलोप आर्षः। नीटी.

---

(१) **भा**. १२।६०।३९; **भामु**. १२।६०।४०-४१ पूर्वार्धे (यतो हि सर्ववर्णानां यज्ञस्तस्यैव भारत। अग्रे सर्वेषु यज्ञेषु श्रद्धायज्ञो विधीयते।).

(२) **भा**. १२।६०।४०; **भामु**. १२।६०।४१-४२ परमं (हि परं) सनातनैः (समाहिताः).

(३) **भा**. १२।६०।४१; **भामु**. १२।६०।४२-४३ हि तत् (हितम्).

(४) **भा**. १२।६०।४२; **भामु**.१२।६०।४४ तु (च).

(५) **भा**. १२।६०।४३; **भामु**. १२।६०।४४-४५ हनो (कृतो) तस्मात्स (ततः स).

(१) **भा**. १२।६०।४४; **भामु**. १२।६०।४६ ब्राह्मणाः (ब्राह्मणः) उत्तरार्धे (अधरो वितानः संसृष्टो वैश्यो ब्राह्मणस्त्रिषु वर्णेषु यज्ञसृष्टः॥)

**[1]तस्माद्वर्णा ऋजवो जातिधर्माः**
**संसृज्यन्ते तस्य विपाक एषः।**
**एकं साम यजुरेकमृगेका**
**विप्रश्चैकोऽनिश्चयस्तेषु दृष्टः॥**

यस्मात् त्रिषु वर्णेषु ब्राह्मणो यज्ञस्रष्टा तस्मात् सर्वेऽपि वर्णाः ऋजवः साधव एव, यज्ञसंयोगात्। एवं धर्मसाम्येऽपि ज्ञातिसाम्यं नास्तीत्याशङ्क्याऽऽह – ज्ञातिवर्णाः अपि क्षत्रियवैश्यशूद्राः तस्य ब्राह्मणस्यैव विकारे क्षत्रियादिकन्यासूत्पन्ने मूर्धाभिषिक्तादौ संसृज्यन्ते एव। तेन धर्मतो जन्मतश्च सर्वे वर्णा ब्राह्मणसंसृष्टा इति स्थितम्। तत्र हेतुमाह – एक इति। तेषु तत्त्वनिश्चये क्रियमाणे एको विप्रः ब्रह्मैव प्रथमो ब्राह्मणः सृष्टः जातः। ब्राह्मणसंततित्वात्सर्वेऽप्येते ब्राह्मणा एवेत्यर्थः। तत्र दृष्टान्तः – एकं सामेति। 'अकारो वै सर्वा वाक्सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति' इति श्रुतेः एकम् अकाररूपमेव अक्षरं यथा सामादिरूपं तथा ब्रह्मैव ब्राह्मणादिरूपमित्यर्थः। नीटी.

**[2]अत्र गाथा यज्ञगीताः कीर्तयन्ति पुराविदः।**
**वैखानसानां राजेन्द्र मुनीनां यष्टुमिच्छताम्॥**

वैखानसानां वानप्रस्थानाम्। गाथाः यज्ञस्तुतिश्लोकाः यज्ञगीताः विष्णुगीताः। नीटी.

**उदितेऽनुदिते वाऽपि श्रद्दधानो जितेन्द्रियः।**
**वह्निं जुहोति धर्मेण श्रद्धा वै कारणं महत्॥**
**यत्स्कन्नमस्य तत्पूर्वं यदस्कन्नं तदुत्तरम्।**
**बहूनि यज्ञरूपाणि नानाकर्मफलानि च॥**

'रौद्रं गवि सद्वायव्यमुपावसृष्टम्' (ऐब्रा. २५।१) इत्यादिबहवृचब्राह्मणे षोडशक(ल)मग्निहोत्रमुक्तम्। तत्र 'मारुतं विष्यन्दमानम्' इति स्कन्नमपि मरुद्देवत्यं भवतीति तत् पूर्वम् आद्यम् अग्निहोत्रम्, यत् अस्कन्नं यथाविधि हुतम् उत्तरं सर्वोत्कृष्टम्। बहूनीति रौद्रादीनि। नीटी.

**[1]तानि यः संविजानाति ज्ञाननिश्चयनिश्चितः।**
**द्विजातिः श्रद्धयोपेतः स यष्टुं पुरुषोऽर्हति॥**

तानि षोडश अग्निहोत्ररूपाणि। नीटी.

**[2]स्तेनो वा यदि वा पापो यदि वा पापकृत्तमः।**
**यष्टुमिच्छति यज्ञं यः साधुमेव वदन्ति तम्॥**

यज्ञं विष्णुं यष्टुं यज्ञदानादिना आराधितुम्। नीटी.

**[3]ऋषयस्तं प्रशंसन्ति साधु चैतदसंशयम्।**
**सर्वथा सर्ववर्णैर्हि यष्टव्यमिति निश्चयः।**
**न हि यज्ञसमं किंचित्त्रिषु लोकेषु विद्यते॥**
**[4]तस्माद्यष्टव्यमित्याहुः पुरुषेणानसूयता।**
**श्रद्धापवित्रमाश्रित्य यथाशक्ति प्रयच्छता॥**

श्रद्धापवित्रं यथा स्यात्तथा यष्टव्यमिति संबन्धः। आश्रित्य, शास्त्रमिति शेषः। नीटी.

**[5]क्षात्राणि वैश्यानि च सेवमानः**
**शौद्राणि कर्माणि च ब्राह्मणः सन्।**
**अस्मिँल्लोके निन्दितो मन्दचेताः**
**परे च लोके निरयं प्रयाति॥**
**[6]या संज्ञा विहिता लोके दासे शुनि वृके पशौ॥**
**विकर्मणि स्थिते विप्रे तां संज्ञां कुरु पाण्डव॥**
**[7]षट्कर्मसंप्रवृत्तस्य आश्रमेषु चतुर्ष्वपि।**
**सर्वधर्मोपपन्नस्य संभूतस्य कृतात्मनः॥**
**[8]ब्राह्मणस्य विशुद्धस्य तपस्यभिरतस्य च।**
**निराशिषो वदान्यस्य लोका ह्यक्षरसंज्ञिताः॥**

षट्कर्माणि – प्राणायामः, प्रत्याहारः, ध्यानम्, धारणा, तर्कः, समाधिरिति। इज्यादीनामाश्रमान्तरेष्वयो-

---

(१) **भा.** १२।६०।४५; **भामु.** १२।६०।४७ जातिधर्माः (ज्ञातिवर्णाः) विपाक एषः(विकार एव)ऽनिश्चयस्तेषु दृष्टः (निश्चये तेषु सृष्टः).

(२) **भा.** १२।६०।४६-४८; **भामु.** १२।६०।४८-५०.

(१) **भा.** १२।६०।४९; **भामु.** १२।६०।५१ संविजा (संप्रजा).

(२) **भा.** १२।६०।५०; **भामु.** १२।६०।५२.

(३) **भा.** १२।६०।५१; **भामु.** १२।६०।५३ द्वितीयार्धे (सर्वथा सर्वदा वर्णैर्यष्टव्यमिति निर्णयः॥).

(४) **भा.** १२।६०।५२; **भामु.** १२।६०।५४ प्रयच्छता (यथेच्छया).

(५) **भा.** १२।६२।४; **भामु.** १२।६२।४ सेव (सेव्य).

(६) **भा.** १२।६२।५; **भामु.** १२।६२।५ तां संज्ञां कुरु (सैव संज्ञा च).

(७) **भा.** १२।६२।६; **भामु.** १२।६२।६ संभूत (संवृत).

(८) **भा.** १२।६२।७; **भामु.** १२।६२।७ संज्ञिताः (संमिताः).

गात्सर्वाश्रमयोग्यान्येतान्येव षट्कर्माणि। सर्वधर्मः अहिंसा। संवृतस्य अचपलस्य। कृतात्मनः जितचित्तस्य। तपसि विचारे। अक्षरसंमिताः अक्षयाः।

नीटी.

प्रारब्धकर्मविषये पारतन्त्र्यात्तत्प्रयुक्ता सदसत्कर्मणोः प्रवृत्तिः अपूर्वकर्मविषये स्वातन्त्र्याद्विधिनिषेधशास्त्रसाफल्यं च

**[1]यो यस्मिन्कुरुते कर्म यादृशं येन यत्र च।**
**तादृशं तादृशेनैव स गुणं प्रतिपद्यते॥**

नन्वेवं ब्राह्मणः स्वधर्मं त्यक्त्वा किमिति हीनधर्मे रमते? इत्याशङ्क्याऽऽह – य इति। यः पुमान् यस्मिन्नवस्थाविशेषे यत्र देशे काले वा येन फलेन निमित्तेन यत्कर्म करोति साधु असाधु वा तत्सकलं लोभाच्चिराभ्यासाच्च सगुणमेवेति प्रतिपद्यते। न तु 'इदं निन्द्यम्' इति ततो विरज्यत इत्यर्थः। नीटी.

**[2]वृद्ध्या कृषिवणिक्त्वेन जीवसंजीवनेन च।**
**वेत्तुमर्हसि राजेन्द्र स्वाध्यायगणितं महत्॥**

तान्येवाऽऽह – वृद्ध्येति। जीवैः संजीवनं मृगयाजीवित्वम्, तेन। महदपि स्वाध्यायगणितं वेदाभ्यसनं वृद्ध्यादिभिः समानमिति वेत्तुमर्हसि उक्तहेतोरित्यर्थः।

नीटी.

**[3]कालसंचोदितः कालः कालपर्यायनिश्चितः।**
**उत्तमाधममध्यानि कर्माणि कुरुतेऽवशः॥**

अभ्यासात्कर्माणि रोचन्ते चेदुत्तमान्येव तानि कुतो नाभ्यस्यन्ते? इत्याशङ्क्याऽऽह – कालेति। कालेन पर्येति आविर्भवतीति कालपर्यायः प्राग्भवीयो वासनासमूहः, तेन निश्चितः तेन कालेन प्रेरितस्तदनुगुणं कर्म करोति, यतः अवशः कालाद्यधीनः। नीटी.

**[4]अन्तवन्ति प्रदानानि पुरा श्रेयस्कराणि च।**
**स्वकर्मनिरतो लोको ह्यक्षरः सर्वतोमुखः॥**

एवं चेत्, कृतं विधिनिषेधाभ्यामित्यत आह – अन्तवन्तीति। पुरा श्रेयस्कराणि प्राचीनानि पुण्यापुण्यानि यानि प्रधानानि देहारम्भकाणि तानि अन्तवन्ति, देहस्यैव अन्तवत्त्वात्। देहसंबन्धि यत्सुखदुःखाद्यागमनं तदपरिहार्यम्। अन्यत्र तु शुभाशुभप्रवृत्त्यादौ लोकः – (? के) स्वकर्मनिरतः स्वस्य अभीष्टं यत्कर्म रागादिविषयभूतं तत्रैव निरतः तत्राऽऽयत्तः, सर्वतोमुखः प्रवृत्तौ वा (निवृत्तौ वा) स्वतन्त्रः अक्षरो जीवः। तत्र तत्र कामकारेण प्रवर्तते, अतो विधिनिषेधशास्त्रस्यास्त्येवार्थवत्त्वमित्यर्थः।

नीटी.

ब्राह्मणस्य वर्णान्तरधर्माचरणस्य निषेधः स्वधर्माचरणस्य प्रशंसा च

**भीष्म उवाच –**

**[1]ज्याकर्षणं शत्रुनिबर्हणं च**
**कृषिर्वणिज्या पशुपालनं च।**
**शुश्रूषणं चापि तथाऽर्थहेतो-**
**रकार्यमेतत्परमं वदन्ति॥**
**सेव्यं तु ब्रह्मषट्कर्म गृहस्थेन मनीषिणा।**
**कृतकृत्यस्य चारण्ये वासो विप्रस्य शस्यते॥**
**[2]राजप्रैष्यं कृषिधनं जीवनं च वणिज्यया।**
**कौटिल्यं कौलटेयं च कुसीदं च विवर्जयेत्॥**

कौटिल्यम् अनार्जवम्। कौलटेयं कुलटाप्रधानं जारकर्म पारदार्यं वा। अन्ये तु कौटिलीयमिति पाठं प्रकल्प्य मात्सर्यमिति व्याचक्षते। कुसीदं वृद्धिजीविकाम्। नीटी.

**[3]शूद्रो राजन्भवति ब्रह्मबन्धु-**
**र्दुश्चारित्र्यो यश्च धर्मादपेतः।**
**वृषलीपतिः पिशुनो नर्तकश्च**
**ग्रामप्रैष्यो यश्च भवेद्विकर्मा॥**
**[4]जपन्वेदानजपंश्चापि राज-**
**न्समः शूद्रैर्दासवच्चापि भोज्यः।**

(१) भा. १२।६२।८; भामु. १२।६२।८ स गुणं (सगुणं).
(२) भा. १२।६२।९; भामु.
(३) भा. १२।६२।१०; भामु. १२।६२।१० कालः (लोकः).
(४) भा. १२।६२।११; भामु. १२।६२।११ प्रदानानि (प्रधानानि).

(१) भा. १२।६३।१-२; भामु.
(२) भा. १२।६३।३; भामु. १२।६३।३ प्रैष्यं (प्रेष्यं) वणिज्यया (वणिक्पथा).
(३) भा. १२।६३।४; भामु. १२।६३।४ रित्र्यो (रित्रो) नर्तकश्च (नर्तनश्च) ग्रामप्रैष्यो (राजप्रेष्यो).
(४) भा. १२।६३।५; भामु.

**एते सर्वे शूद्रसमा भवन्ति**
**राजन्नेतान्वर्जयेद्देवकृत्ये॥**

राजप्रेष्यादिः वेदान् जपन् अजपन्वा शूद्र इव पङ्क्तेर्बहिर्भोजनीय एवेति भावः। नीटी.

**[1]निर्मर्यादे चाशने क्रूरवृत्तौ**
**हिंसात्मके त्यक्तधर्मस्ववृत्ते।**
**हव्यं कव्यं यानि चान्यानि राजन्**
**देयान्यदेयानि भवन्ति तस्मिन्॥**

**[2]तस्माद्धर्मो विहितो ब्राह्मणस्य**
**दमः शौचं चाऽऽर्जवं चापि राजन्।**
**तथा विप्रस्याऽऽश्रमाः सर्व एव**
**पुरा राजन्ब्रह्मणा वै निसृष्टाः॥**

**[3]यः स्याद्दान्तः सोमप आर्यशीलः**
**सानुक्रोशः सर्वसहो निराशीः।**
**ऋजुर्मृदुरनृशंसः क्षमावान्**
**स वै विप्रो नेतरः पापकर्मा॥**

**[4]शूद्रं वैश्यं राजपुत्रं च राजन्**
**लोकाः सर्वे संश्रिता धर्मकामाः।**
**तस्माद्वर्णाञ्जातिधर्मेषु सक्तान्**
**मत्वा विष्णुर्नेच्छति पाण्डुपुत्र॥**

युद्धमरणादयः क्षात्रधर्माः तेषां प्रशंसा च

***[5]आत्मत्यागः सर्वभूतानुकम्पा**
**लोकज्ञानं मोक्षणं पालनं च।**
**विषण्णानां मोक्षणं पीडितानां**
**क्षात्रे धर्मे विद्यते पार्थिवानाम्॥**

आत्मत्यागः युद्धे मरणम्। नीटी.

* इतः पूर्वोत्तरेष्वनेकेष्वध्यायेषु क्षात्रधर्मप्रशंसा भूयसा विस्तरेण कृताऽस्ति, सा राजनीतिकाण्डे 'राजनीतेः सामान्यसिद्धान्ताः शास्त्रविषयाश्च' इत्यस्मिन्प्रकरणे द्रष्टव्या।

(१) **भा.** १२।६३।६; **भामु.** १२।६३।६ चाशने (चाशुचौ) तस्मिन् (चास्मै).

(२) **भा.** १२।६३।७; **भामु.** १२।६३।७ शौचं चा (शौचमा).

(३) **भा.** १२।६३।८; **भामु.** १२।६३।८ प आर्य (पश्चाऽऽर्य).

(४) **भा.** १२।६३।९; **भामु.** १२।६३।९ जातिधर्मेषु स (शान्तिधर्मेष्वस).

(५) **भा.** १२।६४।२६; **भामु.** १२।६४।२७ मोक्षणं पालनं (पालनं मोक्षणं).

**[1]एवंवीर्यः सर्वधर्मोपपन्नः**
**क्षात्रः श्रेष्ठः सर्वधर्मेषु धर्मः।**
**पाल्यो युष्माभिर्लोकसिंहैरुदारै-**
**र्विपर्यये स्यादभावः प्रजानाम्॥**

**[2]भुवः संस्कारं राजसंस्कारयोग-**
**मभैक्षचर्यां पालनं च प्रजानाम्।**
**विद्याद्राजा सर्वभूतानुकम्पां**
**देहत्यागं चाऽऽहवे धर्ममग्र्यम्॥**

भूसंस्कारं भुवः संपन्नसस्यत्वम्। राजसंस्कारः राजसूयाश्वमेधावभृथस्नानम्। अभैक्षचर्यां संन्यासाभावम्। एतेन संन्यासो राज्ञामधर्म इत्युक्तम्। नीटी.

**[3]त्यागं श्रेष्ठं मुनयो वै वदन्ति**
**सर्वश्रेष्ठो यः शरीरं त्यजेत।**
**नित्यं त्यक्तं राजधर्मेषु सर्वं**
**प्रत्यक्षं ते भूमिपालाः सदैते॥**

यथैव शरीराणि त्यक्तवन्तः। नीटी.

स्वधर्मत्यागिनो ब्राह्मणस्य निन्दा

**[4]त्रैविद्यानां या गतिर्ब्राह्मणानां**
**यश्चैवोक्तोऽथाऽऽश्रमो ब्राह्मणानाम्।**
**एतत्कर्म ब्राह्मणस्याऽऽहुरग्र्य-**
**मन्यत्कुर्वञ्छूद्रवच्छस्त्रवध्यः॥**

या गतिः यज्ञादिः आश्रमधर्मश्च एतद्द्वयम्। नीटी.

**[5]चातुराश्रम्यधर्माश्च वेदधर्माश्च पार्थिव।**
**ब्राह्मणेनानुगन्तव्या नान्यो विद्यात्कथंचन॥**

(१) **भा.** १२।६५।१; **भामु.** १२।६५।१ सिंहै (हितै) भावः (भवः).

(२) **भा.** १२।६५।२; **भामु.** १२।६५।२ भुवः सं (भूसं) भैक्ष (भैक्ष्य) कम्पां (कम्पी).

(३) **भा.** १२।६५।३; **भामु.** १२।६५।३ द्वितीयचरणे (सर्वश्रेष्ठं यच्छरीरं त्यजन्तः) त्यक्तं (युक्ता) सर्वं (सर्वे) लाः सदैते (ला यथैव).

(४) **भा.** १२।६५।८; **भामु.** १२।६५।८ यश्चैवोक्तोऽथाऽऽश्रमो (ये चैवोक्ताश्चाऽऽश्रमा).

(५) **भा.** १२।६५।९; **भामु.** १२।६५।९ त्कथं (त्कदा).

**[1]अन्यथा वर्तमानस्य न सा वृत्तिः प्रकल्प्यते।**
**कर्मणा व्यज्यते धर्मो यथैव श्वा तथैव सः॥**
**[2]यो विकर्मस्थितो विप्रो न स सन्मानमर्हति।**
**कर्मस्वनुपयुञ्जानमविश्वास्यं हि तं विदुः॥**
नोपयुञ्जानं नाऽऽचरन्तम्। नीटी.

वर्णतद्धर्मरक्षणं क्षत्रियधर्मः

**[3]एते धर्माः सर्ववर्णाश्च वीरै-**
**रुत्क्रष्टव्याः क्षत्रियैरेष धर्मः।**
**तस्माज्ज्येष्ठा राजधर्मा न चान्ये**
**वीर्यज्येष्ठा वीरधर्मा मता मे॥**
उत्क्रष्टव्याः उत्कर्षं प्रापणीयाः एष धर्मः क्षत्रियस्य। नीटी.

सर्वे जगद्व्यवहारा ब्राह्मणक्षत्रियायत्ताः

**[4]नित्योदको ब्राह्मणः स्यान्नित्यशस्त्रश्च क्षत्रियः।**
**तयोर्हि सर्वमायत्तं यत्किंचिज्जगतीगतम्॥**

ब्राह्मणवैश्यशूद्राणां कालविशेषे शस्त्रधारणम्

**[5]उन्मयदि प्रवृत्ते तु दस्युभिः संकरे कृते।**
**सर्वे वर्णा न दुष्येयुः शस्त्रवन्तो युधिष्ठिर॥**
कालविशेषे सर्वेषामपि शस्त्रधारणं युक्तमित्याह — उन्मयदि इति। नीटी.
**[6]ब्राह्मणस्त्रिषु कालेषु शस्त्रं गृह्णन्न दुष्यति।**
**आत्मत्राणे वर्णदोषे दुर्गस्य नियमेषु च॥**
वर्णदोषे क्षत्रियादिषूत्पथगामिषु सत्सु। नीटी.

चातुर्वर्ण्यधर्मविभागः

**[7]कर्म शूद्रे कृषिर्वैश्ये दण्डनीतिश्च राजनि।**
**ब्रह्मचर्यं तपो मन्त्राः सत्यं चापि द्विजातिषु॥**

क्षत्रियाणां युद्धमरणं धर्मः तत्प्रशंसा गृहमरणनिन्दा च

**[1]मा स्म तांस्तादृशांस्तात जनिष्ठाः पुरुषाधमान्।**
**ये सहायाव्रणे हित्वा स्वस्तिमन्तो गृहान्ययुः॥**
**अस्वस्ति तेभ्यः कुर्वन्ति देवा इन्द्रपुरोगमाः।**
**त्यागेन यः सहायानां स्वान्प्राणांस्त्रातुमिच्छति॥**
तेभ्यः तस्मै। नीटी.
**[2]तं हन्युः काष्ठलोष्टैर्वा दहेयुर्वा कटाग्निना।**
**पशुवन्मारयेयुर्वा क्षत्रिया ये स्युरीदृशाः॥**
तस्य दण्डमाह — तं हन्युरिति। तृणमये कटे बद्ध्वा दहनं कटाग्निना दाहः। नीटी.
**[3]अधर्मः क्षत्रियस्यैष यच्छय्यामरणं भवेत्।**
**विसृजञ्श्लेष्मपित्तानि कृपणं परिदेवयन्॥**
**[4]अविक्षतेन देहेन प्रलयं योऽधिगच्छति।**
**क्षत्रियो नास्य तत्कर्म प्रशंसन्ति पुराविदः॥**
**[5]न गृहे मरणं तात क्षत्रियाणां प्रशस्यते।**
**शौटीराणामशौटीरमधर्म्यं कृपणं च तत्॥**
शौटीराणां शूरत्वाभिमानवताम्। नीटी.
**[6]इदं दुःखमहो कष्टं पापीय इति निष्टनन्।**
**प्रतिध्वस्तमुखः पूतिरमात्यान्बहु शोचयन्॥**
निष्टनन् शब्दं कुर्वन्। पूतिः दुर्गन्धिः। अमात्यान् पुत्रान्। नीटी.
**[7]अरोगाणां स्पृहयते मुहुर्मृत्युमपीच्छति।**
**वीरो दृप्तोऽभिमानी च नेदृशं मृत्युमर्हति॥**
**[8]रणेषु कदनं कृत्वा ज्ञातिभिः परिवारितः।**
**तीक्ष्णैः शस्त्रैः सुविक्लिष्टः क्षत्रियो मृत्युमर्हति॥**

(१) **भा.** १२।६५।१०; **भामु.** १२।६५।१० न सा (नासौ) व्यज्यते (वर्धते) यथैव श्वा त (यथा धर्मस्त).

(२) **भा.** १२।६५।११; **भामु.** १२।६५।११ कर्मस्वनुप (कर्म स्वं नोप).

(३) **भा.** १२।६५।१२; **भामु.** १२।६५।१२ सर्ववर्णाश्च वीरैः (सर्ववर्णेषु लीनाः) वीर्य (वीर).

(४) **भा.** १२।७५।२२; **भामु.** १२।७४।२२ नित्योदको (नित्योदकी).

(५) **भा.** १२।७९।१८; **भामु.** १२।७८।१८.

(६) **भा.** १२।७९।३३; **भामु.** १२।७८।३४ दुर्गस्य नि (दुर्दम्यनि).

(७) **भा.** १२।९२।४; **भामु.** १२।९१।४.

(१) **भा.** १२।९८।२०-२१; **भामु.** १२।९७।२०-२१.

(२) **भा.** १२।९८।२२; **भामु.** १२।९७।२२ लोष्टैर्वा (लोष्ठैर्वा).

(३) **भा.** १२।९८।२३; **भामु.** १२।९७।२३ पित्तानि (मूत्राणि).

(४) **भा.** १२।९८।२४; **भामु.** १२।९७।२४.

(५) **भा.** १२।९८।२५; **भामु.** १२।९७।२५ टीरमधर्म्यं (टीर्यमधर्मं).

(६) **भा.** १२।९८।२६; **भामु.** १२।९७।२६ दुःखमहो कष्टं (दुःखं महत्कष्टं) त्यान्बहु (त्याननु).

(७) **भा.** १२।९८।२७; **भामु.** १२।९७।२७.

(८) **भा.** १२।९८।२८; **भामु.** १२।९७।२८ शस्त्रैः सुवि (शस्त्रैरभि).

[1]शूरो हि सत्यमन्युभ्यामाविष्टो युध्यते भृशम्।
कृत्यमानानि गात्राणि परैर्नैवावबुध्यते॥
[2]स संख्ये निधनं प्राप्य प्रशस्तं लोकपूजितम्।
स्वधर्मं विपुलं प्राप्य शक्रस्यैति सलोकताम्॥
[3]सर्वो योधः परं त्यक्तुमाविष्टस्त्यक्तजीवितः।
प्राप्नोतीन्द्रस्य सालोक्यं शूरः पृष्ठमदर्शयन्॥
[4]यत्र यत्र हतः शूरः शत्रुभिः परिवारितः।
अक्षयाँल्लभते लोकान् यदि दैन्यं न सेवते॥
[5]ब्रह्मस्वे ह्रियमाणे यः प्रियां युद्धे तनुं त्यजेत्।
आत्मानं यूपमुच्छ्रित्य स यज्ञोऽनन्तदक्षिणः॥
[6]भर्तुरर्थे तु यः शूरो विक्रमेद्वाहिनीमुखे।
भयान्न च निवर्तेत तस्य लोका यथा मम॥
[7]नीलचन्द्राकृतैः खड्गैर्बाहुभिः परिघोपमैः।
यस्य वेदिरुपस्तीर्णा तस्य लोका यथा मम॥
[8]यस्तु नावेक्षते कंचित्सहायं विजये स्थितः।
विगाह्य वाहिनीमध्यं तस्य लोका यथा मम॥
[9]यस्तु योधः परावृत्तः संत्रस्तो हन्यते परैः।
अप्रतिष्ठं स नरकं याति नास्त्यत्र संशयः॥
[10]यस्य शोणितवेगेन नदी स्यात्समभिप्लुता।
केशमांसास्थिसंकीर्णा स गच्छेत्परमां गतिम्॥

(१) भा. १२।९८।२९; भामु. १२।९७।२९ सत्य (काम) कृत्यमा (हन्यमा).

(२) भा. १२।९८।३०; भामु. १२।९७।३०.

(३) भा. १२।९८।३१; भामु. १२।९७।३१ पूर्वार्धे (सर्वोपायै रणमुखमातिष्ठंस्त्यक्तजीवितः।).

(४) भामु. १२।९७।३२.

(५) भा. १२।९९।२६; भामु. १२।९८।२७-२८ पूर्वार्धे (ब्रह्मस्वे ह्रियमाणे तु त्यक्त्वा युद्धे प्रियां तनुम्।) मुच्छ्रित्य (मुत्सृज्य).

(६) भा. १२।९९।२७; भामु. १२।९८।२८-२९ तु (च) भयान्न च नि (न भयाद्विनि).

(७) भा. १२।९९।२८; भामु. १२।९८।२९-३० चन्द्राकृतैः (चर्मावृतैः).

(८) भा. १२।९९।२९; भामु. १२।९८।३०-३१ नावे (नापे).

(९) भा. १२।९९।३९; भामु. १२।९८।४०-४१ ष्ठं स (ष्ठः स).

(१०) भा. १२।९९।४०; भामु. १२।९८।४१-४२ नदी स्यात्समभि (वेदिः स्यात्संपरि) संकीर्णा (संपूर्णा).

[1]यस्तु सेनापतिं हत्वा तद्यानमधिरोहति।
स विष्णुविक्रमक्रामी बृहस्पतिसमः क्रतुः॥
[2]नायकं वा प्रमाणं वा यो वा स्यात्तत्र पूजितः।
जीवग्राहं निगृह्णाति तस्य लोका यथा मम॥
[3]आहवे निहतं शूरं न शोचेत कदाचन।
अशोच्यो हि हतः शूरः स्वर्गलोके महीयते॥
[4]न ह्यन्नं नोदकं तस्य न स्नानं नाप्यशौचकम्।
हतस्य कर्तुमिच्छन्ति तस्य लोकाञ्शृणुष्व मे॥
[5]वराप्सरःसहस्राणि शूरमायोधने हतम्।
त्वरमाणा हि धावन्ति मम भर्ता भवेदिति॥
[6]एतत्तपश्च पुण्यं च धर्मश्चैव सनातनः।
चत्वारश्चाऽऽश्रमास्तस्य यो युद्धे न पलायते॥
[7]वृद्धं बलं न हन्तव्यं नैव स्त्री न च वै द्विजः।
तृणपूर्णमुखश्चैव तवास्मीति च यो वदेत्॥

भूतरक्षणं क्षत्रधर्मः

[8]रक्षणं सर्वभूतानामिति क्षत्रे परं मतम्॥

सर्वभूतरक्षणे कृत्स्नो राजधर्मः परिसमाप्त इत्याह — रक्षणमिति। नीटी.

शीलपदार्थः तत्प्रशंसा च

[9]अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा।
अनुग्रहश्च दानं च शीलमेतत्प्रशस्यते॥

(१) भा. १२।९९।४१; भामु. १२।९८।४२-४३ क्रतुः (प्रभुः).

(२) भा. १२।९९।४२; भामु. १२।९८।४३-४४ वा प्रमाणं (तत्कुमारं) निगृ (प्रगृ).

(३) भा. १२।९९।४३; भामु. १२।९८।४४-४५ निहतं (तु हतं) कदा (कथं).

(४) भा. १२।९९।४४; भामु. १२।९८।४५-४६.

(५) भा. १२।९९।४५; भामु. १२।९८।४६-४७ माणा हि (माणाऽभि).

(६) भा. १२।९९।४६; भामु. १२।९८।४७-४८ चतुर्थचरणे (यो युद्धमनुपालयेत्).

(७) भा. १२।९९।४७; भामु. १२।९८।४८-४९ पूर्वार्धे (वृद्धबालौ न हन्तव्यौ न च स्त्री नैव पृष्ठतः।).

(८) भा. १२।१२०।३; भामु. १२।१२०।३ क्षत्रे (क्षात्रं).

(९) भा. १२।१२४।६४; भामु. १२।१२४।६६; ब्रक. २० भूतेषु (भूतानां) दानं च (दानश्च) तत्प्रशस्यते (तद्विदुर्बुधाः); कृर. २६ दानं (ज्ञानं) शेषं ब्रकवत्; गप. १२ (अद्रोहः सर्वभूतानाम्) एतावदेव; निप्र. १।१७ गपवत्; वीमि. १।७ कृरवत्.

**[1]यदन्येषां हितं न स्यादात्मनः कर्म पौरुषम्।**
**अपत्रपेत वा येन न तत्कुर्यात्कथंचन॥**
**[2]तत्तु कर्म तथा कुर्याद्येन श्लाघेत संसदि।**
**एतच्छीलं समासेन कथितं कुरुसत्तम॥**
**[3]यद्यप्यशीला नृपते प्राप्नुवन्ति क्वचिच्छ्रियम्।**
**न भुञ्जते चिरं तात समूलाश्च पतन्ति ते॥**

धनार्जनप्रशंसा

**[4]अधनं दुर्बलं प्राहुर्धनेन बलवान्भवेत्।**
**सर्वं धनवतः प्राप्यं सर्वं तरति कोशवान्॥**
**कोशाद्धर्मश्च कामश्च परो लोकस्तथाप्ययम्।**
**[5]तं च धर्मेण लिप्सेत नाधर्मेण कदाचन॥**

यज्ञदानादयः सप्त
पवित्रधर्माः

**[6]यज्ञो दानं दया वेदाः सत्यं च पृथिवीपते।**
**पञ्चैतानि पवित्राणि षष्ठं सुचरितं तपः॥**
**[7]पुण्यदेशाभिगमनं पवित्रं परमं स्मृतम्॥**

अप्रियवचनादीनि
त्याज्यानि

**[8]अप्रियं परुषं चापि परद्रोहं परस्त्रियम्॥**
**अधर्ममनृतं चैव दूरात्प्राज्ञो निवर्तयेत्॥**
**[9]मातरं पितरं चैव बान्धवान्सुहृदस्तथा।**
**जीवतो ये न पश्यन्ति तेषां धर्मविपर्ययः॥**

(१) **भा.** १२।१२४।६५; **भामु.** १२।१२४।६७.

(२) **भा.** १२।१२४।६६; **भामु.** १२।१२४।६८ श्लाघेत (श्लाघ्येत) तृतीयचरणे (शीलं समासेनैतत्ते); **मुक्ता.** १ तत्तु (तत्तत्) सत्तम (नन्दन) शेषं भामुवत्; **नन्द.** २।६ सत्तम (नन्दन) शेषं भामुवत्.

(३) **भा.** १२।१२४।६७; **भामु.** १२।१२४।६९ क्वचिच्छ्रियम् (श्रियं क्वचित्) पतन्ति (न सन्ति).

(४) **भा.** १२।१२८।४९; **भामु.** १२।१३०।४९-५० धनवतः (धनवता) तृतीयार्धे (कोशेन धर्मः कामश्च परलोकस्तथा ह्ययम्॥).

(५) **भामु.** १२।१३०।५०.

(६) **भा.** १२।१४८।६; **भामु.** १२।१५२।७.

(७) **भा.** १२।१४८।८; **भामु.** १२।१५२।९.

(८) **भा.** १२।१४९।७५; **भामु.** १२।१५३।७९-८० निवर्तयेत् (विवर्जयेत्).

(९) **भा.** १२।१४९।७७; **भामु.** १२।१५३।८१-८२ चैव (वाऽपि).

पापमूलस्य कामक्रोधाज्ञानादिसकल-
दोषद्वारा सर्वानर्थमूलस्य
च लोभस्य विस्तरेण
निन्दा साङ्गाज्ञान-
वर्णनं च

**युधिष्ठिर उवाच —**

**[1]पापस्य यदधिष्ठानं यतः पापं प्रवर्तते।**
**एतदिच्छाम्यहं ज्ञातुं तत्त्वेन भरतर्षभ॥**

तदेवमापद्धर्मानुक्त्वा राज्ञामराज्ञां च सर्वापन्मूलभूतान् दोषान् उत्पत्तिप्रतिबन्धकान् गुणांश्च लोभाज्ञानदमतपःसत्यादीन् हेयानुपादेयांश्च क्रमेणाध्यायसप्तकेनाऽऽह — पापस्य यदधिष्ठानमित्यादिना। नीटी.

**भीष्म उवाच —**

**[2]पापस्य यदधिष्ठानं तच्छृणुष्व नराधिप।**
**एको लोभो महाग्राहो लोभात्पापं प्रवर्तते॥**

ग्राह इव ग्राहः ग्रासकर्ता। नीटी.

**अतः पापमधर्मश्च तथा दुःखमनुत्तमम्।**
**निकृत्या मूलमेतद्धि येन पापकृतो जनाः॥**

येन लोभेन जनाः पापकृतो भवन्ति। नीटी.

**लोभात्क्रोधः प्रभवति लोभात्कामः प्रवर्तते।**
**लोभान्मोहश्च माया च मानस्तम्भः परासुता॥**

परासुता पराधीनप्राणत्वम्। नीटी.

**[3]अक्षमा ह्रीपरित्यागः श्रीनाशो धर्मसंक्षयः।**
**अभिध्याऽप्रज्ञता चैव सर्वं लोभात्प्रवर्तते॥**

अभिध्या चिन्ता। अप्रख्यता अपकीर्तिः।
नीटी.

**[4]अन्यायश्चावितर्कश्च विकर्मसु च याः क्रियाः।**
**कूटविद्यादयश्चैव रूपैश्वर्यमदस्तथा॥**
**[5]सर्वभूतेष्वविश्वासः सर्वभूतेष्वनार्जवम्।**
**सर्वभूतेष्वभिद्रोहः सर्वभूतेष्वयुक्तता।**
**हरणं परवित्तानां परदाराभिमर्शनम्॥**

(१) **भा.** १२।१५२।१; **भामु.** १२।१५८।१ ज्ञातुं (श्रोतुं).

(२) **भा.** १२।१५२।२-४; **भामु.** १२।१५८।२-४.

(३) **भा.**१२।१५२।५; **भामु.** १२।१५८।५ प्रज्ञता (प्रख्यता).

(४) **भा.** १२।१५२।६; **भामु.** १२।१५८।६ प्रथमचरणे (अत्यागश्चातितर्षश्च) तृतीयचरणे (कुलविद्यामदश्चैव).

(५) **भा.** १२।१५२।७; **भामु.** १२।१५८।७-८ प्वयुक्तता (प्वसत्कृतिः) प्रथमद्वितीयार्धौ व्यत्यासेन पठितौ.

**[१]वाग्वेगो मानसो वेगो निन्दावेगस्तथैव च।**
**उपस्थोदरयोर्वेगो मृत्युवेगश्च दारुणः॥**
**[२]ईर्ष्यावेगश्च बलवान्मिथ्यावेगश्च दुस्त्यजः।**
**रसवेगश्च दुर्वारः श्रोत्रवेगश्च दुःसहः॥**
**[३]कुत्सा विकत्था मात्सर्यं पापं दुष्करकारिता।**
**साहसानां च सर्वेषामकार्याणां क्रियास्तथा॥**

अत्यागादयोऽकार्यक्रियान्ताः सर्वे दोषाः लोभात् प्रवर्तन्त इति पूर्वेणान्वयः। नीटी.

**[४]जातौ बाल्येऽथ कौमारे यौवने चापि मानवः।**
**न संत्यजत्यात्मकर्म यन्न जीर्यति जीर्यतः॥**

जातौ जन्मनि। नीटी.

**[५]यो न पूरयितुं शक्यो लोभः प्राप्त्या कुरूद्वह।**
**नित्यं गम्भीरतोयाभिरापगाभिरिवोदधिः।**
**न प्रहृष्यति लाभैर्यो यश्च कामैर्न तृप्यति॥**
**[६]यो न देवैर्न गन्धर्वैर्नासुरैर्न महोरगैः।**
**ज्ञायते नृप तत्त्वेन सर्वैर्भूतगणैस्तथा।**
**स लोभः सह मोहेन विजेतव्यो जितात्मना॥**

'यो न पूरयितुं शक्यः' इत्यादीनां 'स लोभो जेतव्यः' इति तृतीयेनान्वयः। नीटी.

**दम्भो द्रोहश्च निन्दा च पैशुन्यं मत्सरस्तथा।**
**भवन्त्येतानि कौरव्य लुब्धानामकृतात्मनाम्॥**
**सुमहान्त्यपि शास्त्राणि धारयन्ति बहुश्रुताः।**
**छेत्तारः संशयानां च क्लिश्यन्तीहाल्पबुद्धयः॥**

अल्पेऽपि धनादौ बुद्धिर्येषां तेऽल्पबुद्धयः लुब्धा इत्यर्थः। नीटी.

**[७]द्वेषक्रोधप्रसक्ताश्च शिष्टाचारबहिष्कृताः।**
**अन्तःक्षुरा वाङ्मधुराः कूपाश्छन्नास्तृणैरिव।**
**धर्मवैतंसिकाः क्षुद्रा मुष्णन्ति ध्वजिनो जगत्॥**

धर्मवैतंसिकाः धर्मव्याजेनेतरान् हिंसन्तः। ध्वजिनः धर्मख्यापकाः। नीटी.

**[१]कुर्वते च बहून्मार्गांस्तांस्तान्हेतुबलाश्रिताः।**
**सर्वं मार्गं विलुम्पन्ति लोभाज्ञानेषु निष्ठिताः॥**

हेतुबलम्। 'येन केनाप्युपायेन यस्य कस्यापि देहिनः। संतोषं जनयेत्प्राज्ञस्तदेवेश्वरपूजनम्'॥ इत्यागमबलेन अन्योन्यसंतोषहेतुतया पारदायदिरपि धर्मत्वं वर्णयन्तीति भावः। नीटी.

**[२]धर्मस्याह्रियमाणस्य लोभग्रस्तैर्दुरात्मभिः।**
**या या विक्रियते संस्था ततः साऽभिप्रपद्यते॥**

संस्था स्थितिः विक्रियते अन्यथा भवति। सा तथैव प्रपद्यते प्रथां याति। नीटी.

**[३]दर्पः क्रोधो मदः स्वप्नो हर्षः शोकोऽतिमानिता।**
**तत एव हि कौरव्य दृश्यन्ते लुब्धबुद्धिषु।**
**एतानशिष्टान्बुध्यस्व नित्यं लोभसमन्वितान्॥**

**युधिष्ठिर उवाच —**

**[४]अनर्थानामधिष्ठानमुक्तो लोभः पितामह।**
**अज्ञानमपि वै तात श्रोतुमिच्छामि तत्त्वतः॥**

**भीष्म उवाच —**

**[५]करोति पापं योऽज्ञानान्नाऽऽत्मनो वेत्ति च क्षमम्।**
**प्रद्वेष्टि साधुवृत्तांश्च स लोकस्यैति वाच्यताम्॥**

वाच्यतां निन्द्यताम्। नीटी.

**[६]अज्ञानान्निरयं याति तथाऽज्ञानेन दुर्गतिम्।**
**अज्ञानात्क्लेशमाप्नोति तथाऽऽपत्सु निमज्जति॥**

**युधिष्ठिर उवाच —**

**[७]अज्ञानस्य प्रवृत्तिं च स्थानं वृद्धिं क्षयोदयौ।**
**मूलं योगं गतिं कालं कारणं हेतुमेव च॥**

---

(१) भा. १२।१५२।८; भामु. १२।१५८।८-९.
(२) भा. १२।१५२।९; भामु. १२।१५८।९-१० दुस्त्यजः (दुर्जयः) दुर्वारः (दुर्वार्यः).
(३) भा. १२।१५२।१०; भामु. १२।१५८।१०-११.
(४) भा. १२।१५२।११; भामु. १२।१५८।११-१२ बाल्येऽथ (बाल्ये च) मानवः (मानवाः) जत्यात्म (जन्त्यात्म) यन्न (यो न).
(५) भा. १२।१५२।१२; भामु. १२।१५८।१२-१३ लाभैर्यो यश्च कामैर्न (यो लोभैः कामैर्यश्च न).
(६) भा. १२।१५२।१३-१५; भामु. १२।१५८।१४-१७.
(७) भा. १२।१५२।१६; भामु. १२।१५८।१७-१८ क्षुरा (क्रूरा).

(१) भा. १२।१५२।१७; भामु. १२।१५८।१९ (कुर्वते च बहून्मार्गांस्तान् हेतुबलमाश्रिताः। सतां मार्गान् विलुम्पन्ति लोभज्ञानेष्ववस्थिताः॥)
(२) भा. १२।१५२।१८; भामु. १२।१५८।२० स्याहि (स्य हि) साऽभि (साऽपि).
(३) भा. १२।१५२।१९; भामु. १२।१५८।२१-२२ तत (एत).
(४) भा. १२।१५३।१; भामु. १२।१५९।१.
(५) भा. १२।१५३।२; भामु. १२।१५९।२ क्षमम् (क्षयम्).
(६) भा. १२।१५३।३; भामु. १२।१५९।३.
(७) भा. १२।१५३।४; भामु. १२।१५९।४ वृद्धिं क्ष (वृद्धिक्ष).

[1]श्रोतुमिच्छामि तत्त्वेन यथावदिह पार्थिव।
अज्ञानप्रभवं हीदं यद्दुःखमुपलभ्यते॥

अज्ञानस्य स्वरूपेण सह प्रवृत्त्यादयो द्वादश प्रश्नाः। नीटी.

**भीष्म उवाच —**

**[2]रागो द्वेषस्तथा मोहो हर्षः शोकोऽभिमानिता।
कामः क्रोधश्च दर्पश्च तन्द्रीरालस्यमेव च॥
[3]इच्छा द्वेषस्तथा तापः परवृद्ध्युपतापिता।
अज्ञानमेतन्निर्दिष्टं पापानां चैव याः क्रियाः॥**

स्वरूपमाह द्वाभ्याम् — राग इति। कार्ये कारणोपचाराद्रागादय एवाज्ञानम्। पापानां क्रियाः हिंसादयः। नीटी.

**[4]एतया या प्रवृत्तिश्च वृद्ध्यादीन्यांश्च पृच्छसि।
विस्तरेण महाबाहो शृणु तच्च विशां पते॥**

एतस्य एतत्प्रवृत्तेः प्रवृत्तिम्। तच्च त्रयं शृणु। नीटी.

**[5]उभावेतौ समफलौ समदोषौ च भारत।
अज्ञानं चातिलोभश्चाप्येकं जानीहि पार्थिव॥**

अत्रापि पूर्ववत्कारणे कार्योपचारः। नीटी.

**[6]लोभप्रभवमज्ञानं वृद्धं भूयः प्रवर्धते।
स्थाने स्थानं क्षये क्षैण्यमुपैति विविधां गतिम्॥**

लोभप्रभवं लोभात्तस्य प्रवृत्तिः। लोभवृद्धौ वृद्धिः। लोभस्थाने साम्ये स्थानं समता। लोभे क्षीणे क्षीणं भवति। उदेति उपैति लोभस्योदये उदेतीत्यर्थः। विविधां गतिं दुःखसंतापमोहादिरूपाम्। प्रापयितुमिति शेषः। तदेवं षण्णां प्रश्नानामुत्तरमुक्तम्। नीटी.

(१) **भा.** १२।१५३।५; **भामु.** १२।१५९।५ प्रभवं (प्रसवं).
(२) **भा.** १२।१५३।६; **भामु.** १२।१५९।६ तन्द्रीरा (तन्द्री चाऽऽ).
(३) **भा.** १२।१५३।७; **भामु.** १२।१५९।७.
(४) **भा.** १२।१५३।८; **भामु.** १२।१५९।८ प्रथमचरणे (एतस्य वा प्रवृत्तेश्च) महाबाहो (महाराज) विशां पते (विशेषतः).
(५) **भा.** १२।१५३।९; **भामु.** १२।१५९।९.
(६) **भा.** १२।१५३।१०; **भामु.** १२।१५९।१० स्थानं क्षये क्षैण्य (स्थाने भवेत्क्षीण).

**[1]मूलं लोभस्य महतः कालात्मगतिरेव च।
छिन्नेऽच्छिन्ने तथा लोभे कारणं काल एव हि॥**

लोभस्याज्ञानात्मकस्य मूलं मोहः वैचित्त्यं कार्याकार्याप्रतिपत्तिरूपम्। एतेनैव मोहसंयोग एवाज्ञानयोग इत्यष्टमस्याप्युत्तरम्। कालात्मनामिति(?कालात्मगतिरिति।) तेनाज्ञानस्य गतिः स्वर्गनरकनरसुरतिर्यग्रूपेति नवमस्योत्तरम्। लोभस्य च्छेदभेदादिस्तस्थः(?स्तस्य) कालः। यदा लिप्स्यमानोऽर्थो विघ्नितो भवति तदैव वैचित्त्यरूपस्याज्ञानस्य काल इति दशमस्योत्तरम्। नीटी.

**[2]तस्याज्ञानात्तु लोभो हि लोभादज्ञानमेव च।
सर्वे दोषास्तथा लोभात्तस्माल्लोभं विवर्जयेत्॥**

कारणं निदानम्, हेतुः फलम्। तस्य, कालस्य मूढस्य (?मोहस्य) वा तदुभयमाह — अज्ञानकारणाल्लोभः कार्यं फलम्, एवं लोभादज्ञानम् इत्यन्तयोरुत्तरम्। नीटी.

## सर्वब्राह्मणधर्ममूलस्य दमस्य साङ्गोपाङ्गस्य विवरणम्

**युधिष्ठिर उवाच —**

**[3]स्वाध्यायकृतयत्नस्य ब्राह्मणस्य पितामह।
धर्मकामस्य धर्मात्मन्किं नु श्रेय इहोच्यते॥
[4]बहुधादर्शने लोके श्रेयो यदिह मन्यसे।
अस्मिँल्लोके परे चैव तन्मे ब्रूहि पितामह॥
महानयं धर्मपथो बहुशाखश्च भारत।
किं स्विदेवेह धर्माणामनुष्ठेयतमं मतम्॥
[5]धर्मस्य महतो राजन्बहुशाखस्य तत्त्वतः।
यन्मूलं परमं तात तत्सर्वं ब्रूह्यतन्द्रितः॥**

(१) **भा.** १२।१५३।११; **भामु.** १२।१५९।११ महतः (मोहो वै) ऽच्छिन्ने (भिन्ने) हि (च).
(२) **भा.** १२।१५३।१२; **भामु.** १२।१५९।१२ नात्तु (नाद्धि) सर्वे दो (सर्वदो).
(३) **भा.** १२।१५४।१; **भामु.** १२।१६०।१ स्वाध्याय (स्वाध्याये) ब्राह्मणस्य (नरस्य च).
(४) **भा.** १२।१५४।२-३; **भामु.** १२।१६०।२-३.
(५) **भा.** १२।१५४।४; **भामु.** १२।१६०।४ ह्यतन्द्रितः (ह्यशेषतः).

भीष्म उवाच –

[१]हन्त ते कथयिष्यामि येन श्रेयः प्रपत्स्यसे।
पीत्वाऽमृतमिव प्राज्ञो ज्ञानतृप्तो भविष्यसि॥
[२]धर्मस्य विधयो नैके ते ते प्रोक्ता महर्षिभिः।
स्वं स्वं विज्ञानमाश्रित्य दमस्तेषां परायणम्॥

दमः इन्द्रियनियमः। परायणं पराकाष्ठा, अत्रैव सर्वे धर्मा अन्तर्भूता इत्यर्थः। नीटी.

[३]दमं निःश्रेयसं प्राहुर्वृद्धा निश्चयदर्शिनः।
ब्राह्मणस्य विशेषेण दमो धर्मः सनातनः॥
[४]नादान्तस्य क्रियासिद्धिर्यथावदुपलभ्यते।
दमो दानं तथा यज्ञानधीतं चातिवर्तते॥
[५]दमस्तेजो वर्धयति पवित्रं च दमः परम्।
विपाप्मा तेजसा युक्तः पुरुषो विन्दते महत्॥
दमेन सदृशं धर्मं नान्यं लोकेषु शुश्रुम।
दमो हि परमो लोके प्रशस्तः सर्वधर्मिणाम्॥
[६]प्रेत्य चापि मनुष्येन्द्र परमं विन्दते सुखम्।
दमेन हि समायुक्तो महान्तं धर्ममश्नुते॥
[७]सुखं दान्तः प्रस्वपिति सुखं च प्रतिबुध्यते।
सुखं पर्येति लोकांश्च मनश्चास्य प्रसीदति॥
अदान्तः पुरुषः क्लेशमभीक्ष्णं प्रतिपद्यते।
अनर्थांश्च बहूनन्यान्प्रसृजत्यात्मदोषजान्॥
आश्रमेषु चतुर्ष्वाहुर्दममेवोत्तमं व्रतम्।
तस्य लिङ्गानि वक्ष्यामि येषां समुदयो दमः॥
[८]क्षमा धृतिरहिंसा च समता सत्यमार्जवम्।
इन्द्रियावजयो दाक्ष्यं मार्दवं ह्रीरचापलम्॥

(१) भा. १२।१५४।५; भामु. १२।१६०।५ प्रपत्स्यसे (ह्यवाप्स्यसि).
(२) भा. १२।१५४।६; भामु. १२।१६०।६ ते ते (ये वै).
(३) भा. १२।१५४।७; भामु. १२।१६०।७ निश्चय (निश्चित).
(४) भा. १२।१५४।८; भामु. १२।१६०।८ नादान्तस्य (दमात्तस्य).
(५) भा. १२।१५४।९-१०; भामु. १२।१६०।९-१०.
(६) भा. १२।१५४।११; भामु. १२।१६०।११ चापि (चात्र).
(७) भा. १२।१५४।१२-१४; भामु. १२।१६०।१२-१४.
(८) भा. १२।१५४।१५; भामु. १२।१६०।१५ यावज (याभिज).

[१]अकार्पण्यमसंरम्भः संतोषः प्रियवादिता।
अविवित्साऽनसूया चाप्येषां समुदयो दमः॥
[२]गुरुपूजा च कौरव्य दया भूतेष्वपैशुनम्।
जनवादोऽमृषावादः स्तुतिनिन्दाविवर्जनम्॥

पैशुनं दान्तो नैव निषेवत इत्युत्तरेणान्वयः। स्तुतिनिन्दयोरविसर्जनम्। नीटी.

[३]कामः क्रोधश्च लोभश्च दर्पः स्तम्भो विकत्थनम्।
मोह ईर्ष्याऽवमानश्चेत्येतद्दान्तो न सेवते॥

दर्पं गर्वम्। स्तम्भम् अविनयम्। नीटी.

[४]अनिन्दितो ह्यकामात्माऽथाल्पेच्छोऽथानसूयकः।
समुद्रकल्पः स नरो न कदाचन पूर्यते॥

अल्पेषु अनित्यसुखेषु। कथंचन ब्रह्मलोकलाभेऽपि न पूर्यते न तृप्तो भवति। नीटी.

[५]अहं त्वयि मम त्वं च मयि ते तेषु चाप्यहम्।
पूर्वसंबन्धिसंयोगान्नैतद्दान्तो निषेवते॥
[६]यच्च पैतामहं स्थानं ब्रह्मराशिसमुद्भवम्।
गुहायां पिहितं नित्यं तद्दमेनाभिपद्यते॥

गुहायां हृत्पुण्डरीके। पैतामहं ब्रह्मलोकाख्यम्। नीटी.

[७]ज्ञानारामस्य बुद्धस्य सर्वभूताविरोधिनः।
नाऽऽवृत्तिभयमस्तीह परलोके भयं कुतः॥
[८]एक एव दमे दोषो द्वितीयो नोपपद्यते।
यदेनं क्षमया युक्तमशक्तं मन्यते जनः॥

(१) भा. १२।१५४।१६; भामु. १२।१६०।१६ अविवित्सा (अविहिंसा).
(२) भा. १२।१५४।१७; भामु. १२।१६०।१७ ष्वपै (षु पै) तृतीयचरणे (जनवादं मृषावादं) विवर्ज (विसर्ज).
(३) भा. १२।१५४।१८; भामु. १२।१६०।१८ (कामं क्रोधं च लोभं च दर्पं स्तम्भं विकत्थनम्। रोषमीर्ष्यावमानं च नैव दान्तो निषेवते॥).
(४) भा. १२।१५४।१९; भामु. १२।१६०।१९ ऽथाल्पेच्छोऽथान (नाल्पेष्वर्थ्यन) कदाचन (कथंचन).
(५) भा. १२।१५४।२०; भामु. १२।१६०।२० ते तेषु चाप्य (तेषु तथाऽप्य) गान्नै (गं नै).
(६) भा. १२।१५४।३२; भामु. १२।१६०।३२ पद्यते (गम्यते).
(७) भा. १२।१५४।३३; भामु. १२।१६०।३३ लोके भयं (लोकभयं).
(८) भा. १२।१५४।३४; भामु. १२।१६०।३४.

[१]एतस्य तु महाप्राज्ञ दोषस्य सुमहान्गुणः।
क्षमायां विपुला लोकाः सुलभा हि सहिष्णुना॥
[२]दान्तस्य किमरण्येन तथाऽदान्तस्य भारत।
यत्रैव हि वसेद्दान्तस्तदरण्यं स आश्रमः॥

सर्वकर्मफलमूलभूतस्य
तपसः प्रशंसा

भीष्म उवाच —
[३]सर्वमेतत्तपोमूलं कवयः परिचक्षते।
न ह्यतप्ततपा मूढः क्रियाफलमवाप्यते॥
[४]प्रजापतिरिदं सर्वं तपसैवासृजत्प्रभुः।
तथैव वेदानृषयस्तपसा प्रतिपेदिरे॥
[५]तपसो ह्यानुपूर्व्येण फलमूलानिलाशनाः।
त्रीँल्लोकांस्तपसा सिद्धाः पश्यन्ति सुसमाहिताः॥
[६]औषधान्यगदादीनि तिस्रो विद्याश्च संस्कृताः।
तपसैव हि सिध्यन्ति तपो मूलं हि साधनम्॥
[७]यद्दुरापं दुराम्नायं दुराधर्षं दुरुत्सहम्।
सर्वं तत्तपसा शक्यं तपो हि दुरतिक्रमम्॥
[८]सुरापोऽसंमतादायी भ्रूणहा गुरुतल्पगः।
तपसैव सुतप्तेन नरः पापाद्विमुच्यते॥
[९]तपसो बहुरूपस्य तैस्तैर्द्वारैः प्रवर्ततः।
निवृत्त्या वर्तमानस्य तपो नानशनात्परम्॥

(१) भा. १२।१५४।३५; भामु. १२।१६०।३५ एतस्य तु (एकोऽस्य सु) दोषस्य (दोषः स्यात्) क्षमायां (क्षमया) ष्णुना (ष्णुता).

(२) भा. १२।१५४।३६; भामु. १२।१६०।३६ हि वसे (निवसे) आश्रमः (चाऽऽश्रमः).

(३) भा. १२।१५५।१; भामु. १२।१६१।१ वाप्यते (वाप्नुते).

(४) भा. १२।१५५।२; भामु. १२।१६१।२.

(५) भा. १२।१५५।३; भामु. १२।१६१।३ पूर्वार्धे (तपसैव ससर्जान्नं फलमूलानि यानि च।).

(६) भा. १२।१५५।४; भामु. १२।१६१।४ द्वितीयचरणे (क्रियाश्च विविधास्तथा) तपो मू (तपोमू).

(७) भा. १२।१५५।५; भामु. १२।१६१।५ (यद्दुरापं भवेत्किंचित्तत्सर्वं तपसो भवेत्। ऐश्वर्यमृषयः प्राप्तास्तपसैव न संशयः॥).

(८) भा. १२।१५५।६; भामु. १२।१६१।६ पापाद्वि (पापात्प्र).

(९) भा. १२।१५५।७-८; भामु. १२।१६१।७-८.

अहिंसा सत्यवचनं दानमिन्द्रियनिग्रहः।
एतेभ्यो हि महाराज तपो नानशनात्परम्॥
[१]न दुष्करतरं दानान्नातिमातरमाश्रमः।
त्रैविद्येभ्यः परं नास्ति संन्यासः परमं तपः॥

मातरम् अतिक्रम्याऽऽश्रमो न। सर्वेष्वप्याश्रमेषु माता पालनीयैव, तत्त्यागस्य संन्यासिनोऽप्ययोगात्। 'नास्ति दानसमा गतिः' इति पाठान्तरे स्पष्ट एवार्थः।

नीटी.

[२]इन्द्रियाणीह रक्षन्ति धनधान्याभिगुप्तये।
तस्मादर्थे च धर्मे च तपो नानशनात्परम्॥
[३]ऋषयः पितरो देवा मनुष्या मृगसत्तमाः।
यानि चान्यानि भूतानि स्थावराणि चराणि च॥
[४]तपःपरायणाः सर्वे सिध्यन्ति तपसा च ते।
इत्येवं तपसा देवा महत्त्वं चाप्यवाप्नुवन्॥
[५]इमानीष्टविभागानि फलानि तपसा सदा।
तपसा शक्यते प्राप्तुं देवत्वमपि निश्चयात्॥

इमानि नक्षत्रादीनि, 'सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणि' (तैसं. ५।४।१।३) इति श्रुतेः।

नीटी.

विस्तरेण सत्यधर्मस्य प्रशंसा
सत्यप्रकाराश्च

युधिष्ठिर उवाच —
[६]सत्यं धर्मे प्रशंसन्ति विप्रर्षिपितृदेवताः।
सत्यमिच्छाम्यहं श्रोतुं तन्मे ब्रूहि पितामह॥
[७]सत्यं किंलक्षणं राजन्कथं वा तदवाप्यते।
सत्यं प्राप्य भवेत्किं च कथं चैव तदुच्यते॥

(१) भा. १२।१५५।९; भामु. १२।१६१।९.

(२) भा. १२।१५५।१०; भामु. १२।१६१।१० धनधान्या (स्वर्गधर्मा).

(३) भा. १२।१५५।११; भामु. १२।१६१।११ सत्तमाः (पक्षिणः).

(४) भा. १२।१५५।१२; भामु. १२।१६१।१२ चाप्यवाप्नुवन् (प्रतिपेदिरे).

(५) भा. १२।१५५।१३; भामु. १२।१६१।१३ तपसा सदा (तपसः सदा).

(६) भा. १२।१५६।१; भामु. १२।१६२।१ धर्मे (धर्मं).

(७) भा. १२।१५६।२; भामु. १२।१६२।२ दुच्यते (दुच्यताम्).

भीष्म उवाच –

[1]चातुर्वर्ण्यस्य धर्माणां संकरो न प्रशस्यते।
अविकारितमं सत्यं सर्ववर्णेषु भारत॥
सत्यं सत्सु सदा धर्मः सत्यं धर्मः सनातनः।
सत्यमेव नमस्येत सत्यं हि परमा गतिः॥
[2]सत्यं धर्मस्तपो योगः सत्यं ब्रह्म सनातनम्।
सत्यं यज्ञः परः प्रोक्तः सत्ये सर्वं प्रतिष्ठितम्॥
[3]आचारानिह सत्यस्य यथावदनुपूर्वशः।
लक्षणं च प्रवक्ष्यामि सत्यस्येह यथाक्रमम्॥
[4]प्राप्यते ह यथा सत्यं तच्च श्रोतुं त्वमर्हसि।
सत्यं त्रयोदशविधं सर्वलोकेषु भारत॥
[5]सत्यं च समता चैव दमश्चैव न संशयः।
अमात्सर्यं क्षमा चैव ह्रीस्तितिक्षाऽनसूयता॥
[6]त्यागो ध्यानमथाऽऽर्यत्वं धृतिश्च सततं स्थिरा।
अहिंसा चैव राजेन्द्र सत्याकारास्त्रयोदश॥
[7]सत्यं नामाव्ययं नित्यमविकारि तथैव च।
सर्वधर्माविरुद्धं च योगेनैतदवाप्यते॥

सत्यादीनां पदानां त्रयोदशानामर्थान् व्याचष्टे – सत्यं नामेत्यादिना। नीटी.

[8]आत्मनीष्टे तथाऽनिष्टे रिपौ च समता तथा।
इच्छाद्वेषक्षयं प्राप्य कामक्रोधक्षयं तथा॥
[9]दमो नान्यस्पृहा नित्यं धैर्यं गाम्भीर्यमेव च।
अभयं क्रोधशमनं ज्ञानेनैतदवाप्यते॥

(१) भा. १२।१५६।३-४; भामु. १२।१६२।३-४.
(२) भा. १२।१५६।५; भामु. १२।१६२।५ सत्ये सर्वं (सर्वं सत्ये).
(३) भा. १२।१५६।६; भामु. १२।१६२।६.
(४) भा. १२।१५६।७; भामु. १२।१६२।७ ह (च) श्रोतुं त्वम (श्रोतुमिहा).
(५) भा. १२।१५६।८; भामु. १२।१६२।८.
(६) भा. १२।१५६।९; भामु. १२।१६२।९ स्थिरा (दया).
(७) भा. १२।१५६।१०; भामु. १२।१६२।१० रुद्धं च (रुद्धेन).
(८) भा. १२।१५६।११; भामु. १२।१६२।११ द्वेष (द्वेषं).
(९) भा. १२।१५६।१२; भामु. १२।१६२।१२ धैर्यं गाम्भीर्य (गाम्भीर्यं धैर्य) क्रोध (रोग).

[1]अमात्सर्यं बुधाः प्राहुर्दानं धर्मे च संयमम्।
अवस्थितेन नित्यं च सत्येनामत्सरी भवेत्॥
[2]अक्षमायाः क्षमायाश्च प्रियाणीहाप्रियाणि च।
क्षमते सर्वतः साधुः साध्वाप्नोति च सत्यवान्॥

अक्षमाया विषये तथा क्षमाया इति दृष्टान्तार्थम्। नीटी.

[3]कल्याणं कुरुते गाढं ह्रीमान्न श्लाघते क्वचित्।
प्रशान्तवाङ्मना नित्यं ह्रीस्तु धर्मादवाप्यते॥
[4]धर्मार्थहेतोः क्षमते तितिक्षा क्षान्तिरुच्यते।
लोकसंग्रहणार्थं तु सा तु धैर्येण लभ्यते॥
[5]त्यागः स्नेहस्य यस्त्यागो विषयाणां तथैव च।
रागद्वेषप्रहीणस्य त्यागो भवति नान्यथा॥

असूया परगुणेषु दोषदर्शनं तद्वत्तितिक्षाया असंभवात्तितिक्षाव्याख्यानेनैव तद्व्याख्यानं सिद्धमिति न सा पृथगुक्ता। तद्व्याख्यानश्लोको लुप्त इति वा तां व्याख्याय त्यागं व्याख्याति – त्याग इति। सूत्र(?मूल)-श्लोके त्यागो ध्यानमिति त्यागानुसंधानाख्यः पदद्वयोपात्तः एकः पदार्थः। नीटी.

[6]आर्यता नाम भूतानां यः करोति प्रयत्नतः।
शुभं कर्म निराकारो वीतरागत्वमेव च॥
[7]धृतिर्नाम सुखे दुःखे यथा नाऽऽप्नोति विक्रियाम्।
तां भजेत सदा प्राज्ञो य इच्छेद्धृतिमात्मनः॥
सर्वथा क्षमिणा भाव्यं तथा सत्यपरेण च।
वीतहर्षभयक्रोधो धृतिमाप्नोति पण्डितः॥

सर्वथेतिश्लोके धृतिशब्देन उद्देशक्रमप्राप्ता दया ग्राह्या। नीटी.

(१) भा. १२।१५६।१३; भामु. १२।१६२।१३ दानं (दाने) यमम् (यमः).
(२) भा. १२।१५६।१४; भामु. १२।१६२।१४ सर्वतः (संमतः) सत्यवान् (सत्यवाक्).
(३) भा. १२।१५६।१५; भामु. १२।१६२।१५ गाढं (बाढं) द्वितीयचरणे (धीमान्न ग्लायते क्वचित्).
(४) भा. १२।१५६।१६; भामु. १२।१६२।१६ र्थं तु (र्थं वै).
(५) भा. १२।१५६।१७; भामु. १२।१६२।१७ यस्त्यागो (यत्त्यागो).
(६) भा. १२।१५६।१८; भामु. १२।१६२।१८ त्वमेव (स्तथैव).
(७) भा. १२।१५६।१९-२१; भामु. १२।१६२।१९-२१.

अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा।
अनुग्रहश्च दानं च सतां धर्मः सनातनः॥
[1]एते त्रयोदशाकाराः पृथक्सत्यैकलक्षणाः।
भजन्ते सत्यमेवेह बृंहयन्ति च भारत॥
[2]नान्तः शक्यो गुणानां हि वक्तुं सत्यस्य भारत।
अतः सत्यं प्रशंसन्ति विप्राः सपितृदेवताः॥
[3]नास्ति सत्यात्परो धर्मो नानृतात्पातकं परम्।
स्थितिर्हि सत्यं धर्मस्य तस्मात्सत्यं न लोपयेत्॥
[4]उपैति सत्याद्दानं हि तथा यज्ञाः सदक्षिणाः।
व्रताग्निहोत्रं वेदाश्च ये चान्ये धर्मनिश्चयाः॥
[5]अश्वमेधसहस्रं च सत्यं च तुलया धृतम्।
अश्वमेधसहस्राद्धि सत्यमेवातिरिच्यते॥

त्रयोदशानां क्रोधादिशत्रूणामुत्पत्तिस्थिति-
नाशवर्णनम्

युधिष्ठिर उवाच –
[6]यतः प्रभवति क्रोधः कामश्च भरतर्षभ।
शोकमोहौ विवित्सा च परासुत्वं तथा मदः॥
यतः अज्ञानात्। नीटी.
[7]लोभो मात्सर्यमीर्ष्या च कुत्साऽसूया कृपा तथा।
एतत्सर्वं महाप्राज्ञ याथातथ्येन मे वद॥
'कृपाभयम्' इत्यन्तास्त्रयोदश। नीटी.
भीष्म उवाच –
[8]त्रयोदशैतेऽतिबलाः शत्रवः प्राणिनां स्मृताः।
उपासते महाराज समस्ताः पुरुषानिह॥

(१) भा. १२।१५६।२२; भामु. १२।१६२।२२ यन्ति (यन्ते).
(२) भा. १२।१५६।२३; भामु. १२।१६२।२३ हि (च) भारत (पार्थिव).
(३) भा. १२।१५६।२४; भामु. १२।१६२।२४ स्थिति (श्रुति).
(४) भा. १२।१५६।२५; भामु. १२।१६२।२५ व्रता (त्रेता).
(५) भा. १२।१५६।२६; भामु. १२।१६२।२६ मेवातिरिच्यते (मेव विशिष्यते); यसं. ३१ स्राद्धि (स्रात्तु) शेषं भामुवत्.
(६) भा. १२।१५७।१; भामु. १२।१६३।१ कामश्च (कामो वा) विवित्सा (विधित्सा) तथा मदः (च तद्वद).
(७) भा. १२।१५७।२; भामु. १२।१६३।२ तथा (भयम्).
(८) भा. १२।१५७।३; भामु. १२।१६३।३ सते (सन्ते) समस्ताः (समन्तात्).

[1]एते प्रमत्तं पुरुषमप्रमत्ता नुदन्ति हि।
वृका इव विलुम्पन्ति दृष्ट्वैव पुरुषेतरान्॥
[2]एभ्यः प्रवर्तते दुःखमेभ्यः पापं प्रवर्तते।
इति मर्त्यो विजानीयात्सततं भरतर्षभ॥
[3]एतेषामुदयं स्थानं क्षयं च पुरुषोत्तम।
हन्त ते वर्तयिष्यामि तन्मे निगदतः शृणु॥
[4]लोभात्क्रोधः प्रभवति परदोषैरुदीर्यते।
क्षमया तिष्ठते राजञ्श्रीमांश्च विनिवर्तते॥
क्रोधादीनामुत्पत्तिस्थितिलक्षणानि व्याख्याति–लोभादित्यादिना। लोभात् केनचिन्निमित्तेनोपहतात् क्रोधो भवति। स च परदोषैर्दृष्टैः उदीर्यते उद्दीप्तो भवति। स क्षमया तिष्ठते निरुध्यते विनिवर्तते चेति। एवं सर्वत्र द्रष्टव्यम्। नीटी.
[5]संकल्पाज्जायते कामः सेव्यमानो विवर्धते।
यदा प्राज्ञो विरमते तदा सद्यः प्रणश्यति॥
परासूया क्रोधलोभावन्तरा प्रतिमुच्यते।
दयया सर्वभूतानां निर्वेदाद्विनिवर्तते।
अवद्यदर्शनाद्व्येति तत्त्वज्ञानाच्च धीमताम्॥
परस्मिन् असूया दोषदर्शनम्, तत्क्रोधाल्लोभाद्वा भवति, दयया निवर्तते। अत्र क्रोधादीनां व्युत्पादनप्रसङ्गे उद्देशक्रमो नाऽऽदर्तव्यः। असूया च अवद्यदर्शनात् परस्मिन्दोषदर्शनात् एति उदेति। तत्त्वज्ञानात् वस्तुनो निर्दोषत्वज्ञानात् असूया धीमताम्, निवर्तते इत्यनुषङ्गः। सार्धश्लोकोऽयम्। नीटी.
[6]अज्ञानप्रभवो मोहः पापाभ्यासात्प्रवर्तते।
यदा प्राज्ञेषु रमते तदा सद्यः प्रणश्यति॥
मोहः विपरीतबुद्धिः। नीटी.

(१) भा. १२।१५७।४; भामु. १२।१६३।४ त्ता नुदन्ति हि (त्तास्तुदन्ति च) षेतरान् (षं बलात्).
(२) भा. १२।१५७।५; भामु. १२।१६३।५ भरत (पुरुष).
(३) भा. १२।१५७।६; भामु. १२।१६३।६ पुरुषोत्तम (पृथिवीपते) उत्तरार्धे (हन्त ते कथयिष्यामि क्रोधस्योत्पत्तिमादितः। यथातत्त्वं क्षितिपते तदिहैकमनाः शृणु॥).
(४) भा. १२।१५७।७; भामु. १२।१६३।७-८ राजञ्श्रीमांश्च (राजन् क्षमया).
(५) भा. १२।१५७।८ द्वितीयतृतीयचतुर्थार्धानि न सन्ति; भामु. १२।१६३।८-१० द्व्येति (देति).
(६) भामु. १२।१६३।११.

**[1]विरुद्धानि हि शास्त्राणि पश्यन्तीहाल्पबुद्धयः।**
**विवित्सा जायते तत्र तत्त्वज्ञानान्निवर्तते॥**

मोह इत्याकृष्यते, विधित्सा आरम्भप्रावण्यम्, इदमुभयं विरुद्धानि कौलिकादिशास्त्राणि ये पश्यन्ति तेषां जायते, तत्त्वज्ञानात् सम्यग्वैदिकार्थज्ञानात् तत्र विश्वासाच्च निवर्तते। नीटी.

**[2]प्रीतेः शोकः प्रभवति वियोगात्तस्य देहिनः।**
**यदा निरर्थकं वेति तदा सद्यः प्रणश्यति॥**

पुत्रादिप्रियवस्तुनाशे शोको जायते, स च शोचतोऽपि पुनर्दुर्लभ इति निरर्थक इति ज्ञानान्नश्यतीत्याह – प्रीत्येति। नीटी.

**[3]परासुता क्रोधलोभादभ्यासाच्च प्रवर्तते।**
**दयया सर्वभूतानां निर्वेदात्सा निवर्तते॥**

परासुता अत्यन्तम् अकार्यपारवश्यम्। अभ्यासात् असकृदावृत्तेः। दयया क्रोधपरासुता निवर्तते, निर्वेदात् वैराग्यात् लोभादिनेति (? लोभपरासुतेति) भेदः। नीटी.

**[4]सत्त्वत्यागात्तु मात्सर्यमहितानि च सेवते।**
**एतत्तु क्षीयते तात साधूनामुपसेवनात्॥**
**[5]कुलाज्ज्ञानात्तथैश्वर्यान्मदो भवति देहिनाम्।**
**एभिरेव तु विज्ञातैर्मदः सद्यः प्रणश्यति॥**
**[6]ईर्ष्या कामात्प्रभवति संघर्षाच्चैव भारत।**
**इतरेषां तु मर्त्यानां प्रज्ञया सा प्रणश्यति॥**
**[7]विभ्रमाल्लोकबाह्यानां द्वेष्यैर्वाक्यैरसंगतैः।**
**कुत्सा संजायते राजन्नुपेक्षाभिः प्रशाम्यति॥**

(१) **भा.** १२।१५७।९; **भामु.** १२।१६३।१२ नि हि (नीह) द्वितीयचरणे (ये पश्यन्ति कुरूद्वह) विवित्सा (विधित्सा) तत्र (तेषां).

(२) **भा.** १२।१५७।१०; **भामु.** १२।१६३।१३ प्रीतेः (प्रीत्या).

(३) **भा.** १२।१५७।११; **भामु.** १२।१६३।१४.

(४) **भा.** १२।१५७।१२; **भामु.** १२।१६३।१५ सत्त्व (सत्य) नि च सेवते (नां च सेवया).

(५) **भा.** १२।१५७।१३; **भामु.** १२।१६३।१६ तैर्मदः (तैः स च).

(६) **भा.** १२।१५७।१४; **भामु.** १२।१६३।१७ द्वितीयचरणे (संहर्षाच्चैव जायते) मर्त्यानां (सत्त्वानां).

(७) **भा.** १२।१५७।१५; **भामु.** १२।१६३।१८ गतैः (मतैः) न्नुपेक्षाभिः प्र (न्लोकान् प्रेक्ष्याभि).

**[1]प्रतिकर्तुमशक्याय बलस्थायापकारिणे।**
**असूया जायते तीव्रा कारुण्याद्विनिवर्तते॥**

इति कर्तुं यथायोग्यं प्रतीकारं कर्तुम्। नीटी.

**[2]कृपणान्सततं दृष्ट्वा ततः संजायते कृपा।**
**धर्मनिष्ठां यदा वेत्ति तदा शाम्यति सा कृपा॥**

कृपाऽपि चित्तोन्माथकरीति द्वेषवद्धेयैवेत्यभिप्रेत्याऽऽह – कृपणानिति। नीटी.

**[3]अज्ञानप्रभवो लोभो भूतानां दृश्यते सदा।**
**अस्थिरत्वं च भोगानां दृष्ट्वा ज्ञात्वा निवर्तते॥**

अज्ञानप्रभवो लोभ इत्यत्र लोभपदेन भयं ग्राह्यम्, लोभस्य प्राग्व्याख्यातत्वात् 'कृपा भयम्' इति भयस्यापि प्रागुद्दिष्टत्वाच्च। नीटी.

**[4]एतान्येव जितान्याहुः प्रशमाच्च त्रयोदश॥**

नृशंसस्य लक्षणानि त्याज्यत्वं च

**युधिष्ठिर उवाच –**

**[5]आनृशंस्यं विजानामि दर्शनेन सतां सदा।**
**नृशंसान्न विजानामि तेषां कर्म च भारत॥**

आनृशंस्यं सतां धर्म इति यद्यपि सामान्यतो जानामि, तथापि नृशंसत्वे ज्ञाते तदभावरूपमानृशंस्यं विशेषतः सुज्ञेयम्, अतो नृशंसस्यैव स्वरूपादिकं ब्रूहीति प्रश्नः। नीटी.

**कण्टकान्कूपमग्निं च वर्जयन्ति यथा नराः।**
**तथा नृशंसकर्माणं वर्जयन्ति नरा नरम्॥**
**[6]नृशंसो ह्यधमो नित्यं प्रेत्य चेह च भारत।**
**तस्माद्ब्रवीहि कौरव्य तस्य धर्मविनिश्चयम्॥**

**भीष्म उवाच –**

**[7]स्पृहाऽस्यान्तर्हिता चैव विदितार्था च कर्मणा।**
**आक्रोष्टा क्रुश्यते चैव बन्धिता बध्यते च यः॥**

(१) **भा.** १२।१५७।१६; **भामु.** १२।१६३।१९ प्रथमचरणे (इति कर्तुं न शक्ता ये).

(२) **भा.** १२।१५७।१७; **भामु.** १२।१६३।२०.

(३) **भामु.** १२।१६३।२१.

(४) **भा.** १२।१५७।१८; **भामु.** १२।१६३।२२.

(५) **भा.** १२।१५८।१-२; **भामु.** १२।१६४।१-२.

(६) **भा.** १२।१५८।३; **भामु.** १२।१६४।३ ह्यधमो नित्यं (हि दहेद्व्यक्तं) द्ब्रवीहि (त्त्वं ब्रूहि).

(७) **भा.** १२।१५८।४; **भामु.** १२।१६४।४ न्तर्हिता (द्दर्हिता) द्वितीयचरणे (विधित्सा चैव कर्मणाम्) चतुर्थचरणे (वञ्चितो बुद्ध्यते स च).

यस्य स्पृहा विधित्सा च वध्यश्येनादिविषया गर्हिता स्यात्। यो निन्दको निन्द्यश्च 'दैवेनाहं वञ्चितोऽस्मि, यदीदृशं कुकर्म करोमि' इति बुध्यते, करोति वा कृत्यम्, स आत्महा नृशंसकृदिति चतुर्थेनान्वयः।

नीटी.

**[1]दत्तानुकीर्तिर्विषमः क्षुद्रो नैकृतिकः शठः।**
**असंभोगी च मानी च तथा सङ्गी विकत्थनः॥**

दत्तमनुकीर्तयतीति दत्तानुकीर्तिः स्वस्य वदान्यत्व-प्रकाशकः। विषमः विद्वेषकर्ता। क्षुद्रः नीचकर्मकारी। नैकृतिकः स्नेहं प्रदर्श्य वञ्चकः। शठः सत्यपि सामर्थ्ये दारिद्र्यव्यञ्जकः। नीटी.

**[2]सर्वातिशङ्की परुषो बालिशः कृपणस्तथा।**
**वर्गप्रशंसी सततमाश्रमद्वेषसंकटी॥**

बलीशः काक इव वञ्चकदृष्टिः। आश्रमद्वेषः संकरश्चास्यास्तीति आश्रमद्वेषसंकरी। नीटी.

**[3]हिंसाविहारी सततमविशेषगुणागुणः।**
**बह्वलीको मनस्वी च लुब्धोऽत्यर्थं नृशंसकृत्॥**
**[4]धर्मशीलं गुणोपेतं पाप इत्यवगच्छति।**
**आत्मशीलानुमानेन न विश्वसिति कस्यचित्॥**
**[5]परेषां यत्र दोषः स्यात्तद्गुह्यं संप्रकाशयेत्।**
**समानेष्वेव दोषेषु वृत्त्यर्थमुपघातयेत्॥**
**तथोपकारिणं चैव मन्यते वञ्चितं परम्।**
**दत्त्वाऽपि च धनं काले संतपत्युपकारिणे॥**
**[6]भक्ष्यं भोज्यमथो लेह्यं यच्चान्यत्साधु भोजनम्।**
**प्रेक्षमाणेषु योऽश्नीयान्नृशंस इति तं विदुः॥**

**[1]ब्राह्मणेभ्यः प्रदायाग्रं यः सुहृद्भिः सहाश्नुते।**
**स प्रेत्य लभते स्वर्गमिह चाऽऽनन्त्यमश्नुते॥**
**[2]एष ते भरतश्रेष्ठ नृशंसः परिकीर्तितः।**
**सदा विवर्जनीयो वै पुरुषेण बुभूषता॥**

पञ्चानामनृतानामनुज्ञा

**[3]न नर्मयुक्तं वचनं हिनस्ति**
**न स्त्रीषु राजन्न विवाहकाले।**
**न गुर्वर्थे नाऽऽत्मनो जीवितार्थे**
**पञ्चानृतान्याहुरपातकानि॥**

वैश्यस्य शस्त्रधारणनिमित्तानि

**[4]गोब्राह्मणहितार्थं च वर्णानां संकरेषु च।**
**गृह्णीयात्तु धनुर्वैश्यः परित्राणाय चाऽऽत्मनः॥**

मित्रद्रोहनिषेधः मित्रसंग्रह-प्रशंसा च

**[5]मित्रद्रोहो न कर्तव्यः पुरुषेण विशेषतः।**
**मित्रध्रुङ्निरयं घोरमनन्तं प्रतिपद्यते॥**
**[6]कृतज्ञेन सदा भाव्यं मित्रकामेन चानघ।**
**मित्रात्प्रभवते सत्यं मित्रात्प्रभवते बलम्।**
**सत्कारैरुत्तमैर्मित्रं पूजयेत विचक्षणः॥**
**[7]परित्याज्यो बुधैः पापः कृतघ्नो निरपत्रपः।**
**मित्रद्रोही कुलाङ्गारः पापकर्मा नराधमः॥**

तृष्णाया निन्दा

**[8]या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः।**
**योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम्॥**

---

(१) **भा.** १२।१५८।५; **भामु.** १२।१६४।५ असंभोगी च (असंविभागी).

(२) **भा.** १२।१५८।६; **भामु.** १२।१६४।६ पूर्वार्धे (सर्वातिशङ्की पुरुषो बलीशः कृपणोऽथवा।).

(३) **भा.** १२।१५८।७; **भामु.** १२।१६४।७ री स (रः स).

(४) **भा.** १२।१५८।८; **भामु.** १२।१६४।८ पाप इ (पापमि) लानुमानेन (लप्रमाणेन).

(५) **भा.** १२।१५८।९-१०; **भामु.** १२।१६४।९-१०.

(६) **भा.** १२।१५८।११; **भामु.** १२।१६४।११ प्रथमचरणे (भक्ष्यं पेयमथालेह्यं) स इति तं विदुः (समिति तं वदेत्).

(१) **भा.** १२।१५८।१२; **भामु.** १२।१६४।१२.

(२) **भा.** १२।१५८।१३; **भामु.** १२।१६४।१३ वै (हि) बुभूषता (विजानता).

(३) **भा.** १२।१५९।२८; **भामु.** १२।१६५।३० क्तं वचनं (क्तमनृतं) गुर्वर्थे (गुर्वर्थं).

(४) **भा.** १२।१५९।३१; **भामु.** १२।१६५।३३ उत्तरार्धे (वैश्यो गृह्णीत शस्त्राणि परित्राणार्थमात्मनः॥).

(५) **भा.** १२।१६७।२०; **भामु.** १२।१७३।२१ निरयं (नरकं).

(६) **भा.** १२।१६७।२१; **भामु.** १२।१७३।२२-२३ चानघ (चैव ह) द्वितीयार्धे (मित्राच्च लभते सर्वं मित्रात्पूजां लभेत च। मित्राद्भोगांश्च भुञ्जीत मित्रेणाऽऽपत्सु मुच्यते॥).

(७) **भा.** १२।१६७।२२; **भामु.** १२।१७३।२४.

(८) **भा.** १२।१६८।४५, १२।२६८।१२, १३।७।२१; **भामु.** १२।१७४।५५.

एकतादयः सप्त ब्राह्मणधर्माः

**[1]नैतादृशं ब्राह्मणस्यास्ति वित्तं**
**यथैकता समता सत्यता च।**
**शीले स्थितिर्दण्डनिधानमार्जवं**
**ततस्ततश्चोपरमः क्रियाभ्यः॥**

एकता एकाकित्वम्। शीलं श्लाघनीयं वृत्तम्। दण्डनिधानं वाङ्मनःकायैर्हिंसात्यागः। नीटी.

ब्राह्मणत्वादिवर्णत्वप्रयोजका
गुणधर्माः

**भरद्वाज उवाच —**

**[2]ब्राह्मणः केन भवति क्षत्रियो वा द्विजोत्तम।**
**वैश्यः शूद्रश्च विप्रर्षे तद्ब्रूहि वदतां वर॥**

'इत्येतैः कर्मभिर्व्यस्ता द्विजा वर्णान्तरं गताः' (भा. १२।१८८।१४) इत्युक्तम्, तत्प्रश्नपूर्वकं विवृणोति — ब्राह्मण इत्यादिना। नीटी.

**भृगुरुवाच —**

**जातकर्मादिभिर्यस्तु संस्कारैः संस्कृतः शुचिः।**
**वेदाध्ययनसंपन्नः षट्सु कर्मस्ववस्थितः॥**

जातकर्मादिभिरष्टाचत्वारिंशता,'यस्यैतेऽष्टाचत्वारिंशत्संस्काराः स ब्रह्मणः सायुज्यतां सरूपतां गच्छति' (गौध. ८।२२) इति स्मृतेः। षट्कर्माणि 'संध्या स्नानं जपो होमो देवतानां च पूजनम्। आतिथ्यं वैश्वदेवं च षट्कर्माणि दिने दिने॥' इति। नीटी.

**शौचाचारस्थितः सम्यग्विघसाशी गुरुप्रियः।**
**नित्यव्रती सत्यपरः स वै ब्राह्मण उच्यते॥**

विघसं ब्राह्मणादिभुक्तशेषम्, तदेवाश्नातीति विघसाशी। नीटी.

**[3]सत्यं दानं दमोऽद्रोह आनृशंस्यं क्षमा घृणा।**
**तपश्च दृश्यते यत्र स ब्राह्मण इति स्मृतः॥**

'अथाद्रोहः' इत्यत्र 'तपः क्रोधः' इत्यपि पाठः। आनृशंस्यं नैष्ठुर्याभावः। त्रपा लज्जा। घृणा कारुण्यम्। नीटी.

(१) भा. १२।१६९।३५; भामु. १२।१७५।३७ शीले (शीलं).
(२) भा. १२।१८२।१-३; भामु. १२।१८९।१-३.
(३) भा. १२।१८२।४; भामु. १२।१८९।४ दानं दमोऽद्रोह (दानमथाद्रोह) क्षमा (त्रपा).

**[1]क्षत्रजं सेवते कर्म वेदाध्ययनसंमतः।**
**दानादानरतिर्यश्च स वै क्षत्रिय उच्यते॥**

क्षत्रं हिंसा, तदर्थं जातं क्षत्रजं युद्धात्मकं कर्म। दानं विप्रेभ्यः, आदानं प्रजाभ्यः। नीटी.

**[2]कृषिगोरक्ष्यवाणिज्यं यो विशत्यनिशं शुचिः।**
**वेदाध्ययनसंपन्नः स वैश्य इति संज्ञितः॥**

'वणिज्या पशुरक्षा च' इत्यत्र 'विशत्याशु पशुभ्यश्च' इति पाठे पशुभ्य इति ल्यब्लोपे पञ्चमी। पशून् वाणिज्याद्युपयोगिनो लब्ध्वा विशति प्रतिष्ठां लभते इत्यर्थः। नीटी.

**[3]सर्वभक्षरतिर्नित्यं सर्वकर्मकरोऽशुचिः।**
**त्यक्तवेदस्त्वनाचारः स वै शूद्र इति स्मृतः॥**
**[4]शूद्रे चैतद्भवेल्लक्ष्यं द्विजे चैतन्न विद्यते।**
**न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः॥**

एतत् सत्यादिसप्तकम्। द्विजे त्रैवर्णिके। धर्म एव वर्णविभागे कारणं न जातिरित्यर्थः। नीटी.

**[5]सर्वोपायैस्तु लोभस्य क्रोधस्य च विनिग्रहः।**
**एतत्पवित्रं ज्ञातव्यं तथा चैवाऽऽत्मसंयमः।**
**वार्यौ सर्वात्मना तौ हि श्रेयोघातार्थमुच्छ्रितौ॥**

तमेव ब्राह्मण्यहेतुं धर्ममाह — सर्वोपायैरित्यादिना। तौ क्रोधलोभौ। सार्धः श्लोकः। नीटी.

**[6]नित्यं क्रोधात्तपो रक्षेच्छ्रियं रक्षेत मत्सरात्।**
**विद्यां मानावमानाभ्यामात्मानं तु प्रमादतः॥**
**[7]यस्य सर्वे समारम्भा निराशीर्बन्धनास्त्विह।**
**त्यागे यस्य हुतं सर्वं स त्यागी स च बुद्धिमान्॥**

(१) भा. १२।१८२।५; भामु. १२।१८९।५ संमतः (संगतः) यश्च (यस्तु).
(२) भा. १२।१८२।६; भामु. १२।१८९।६ पूर्वार्धे (वणिज्या पशुरक्षा च कृष्यादानरतिः शुचिः।).
(३) भा. १२।१८२।७; भामु. १२।१८९।७.
(४) भा. १२।१८२।८; भामु. १२।१८९।८ चैतन्न (तच्च न).
(५) भा. १२।१८२।९ तृतीयार्धं नास्ति; भामु. १२।१८९।९-१० ज्ञातव्यं (ज्ञानानां).
(६) भा. १२।१८२।१०; भामु. १२।१८९।१०-११ पूर्वार्धे (नित्यं क्रोधाच्छ्रियं रक्षेत्तपो रक्षेच्च मत्सरात्।) मानाव (मानाप).
(७) भा. १२।१८२।११; भामु. १२।१८९।१२ नास्त्विह (ना द्विज) स च (च स).

आशीः इष्टकाम्या, तदेव बन्धनम्, तद्वर्जिताः निराशीर्बन्धनाः समारम्भाः सम्यगारभ्यन्ते इति यज्ञादयः। काम्यकर्मत्यागीत्यर्थः। हुतम् अग्नौ ब्राह्मणे वा दत्तम् अग्निहोत्रनित्यश्राद्धादि। त्यागे फलत्यागनिमित्तम्, 'सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः' (भगी. १८।२) इति। नीटी.

युद्धप्रजारक्षणदानानि क्षत्रियधर्माः

**राजोवाच –**

**[1]योद्धव्यं रक्षितव्यं च क्षत्रधर्मः किल द्विज।**
**दातारः क्षत्रियाः प्रोक्ता गृह्णीयां भवतः कथम्॥**
**[2]द्विजाः प्रतिग्रहे युक्ता दातारो राजवंशजाः॥**

शौचादयः षट् सामान्यधर्माः

**[3]वाग्देहमनसां शौचं क्षमा सत्यं धृतिः स्मृतिः।**
**सर्वधर्मेषु धर्मज्ञा ज्ञापयन्ति गुणानिमान्॥**

गुणानेवाऽऽह – वागिति। अनृतहिंसाकामादिराहित्यं वागादीनां शौचम्। सर्वेषु प्रवृत्तिनिवृत्त्यात्मकेषु धर्मेषु। नीटी.

**[4]यदिदं ब्रह्मणो रूपं ब्रह्मचर्यमिति स्मृतम्।**
**परं तत्सर्वभूतेभ्यस्तेन यान्ति परां गतिम्॥**

ब्रह्मणि चर्या ब्रह्मचर्यं योगधर्मः। ब्रह्मणो रूपं ब्रह्मप्रापकत्वात्तदभिन्नम् । परां गतिं मोक्षम्। नीटी.

अहिंसादिसामान्यधर्मविधिः

**[5]यत्कृतं प्राक् शुभं कर्म पापं वा तदुपाश्नुते।**
**तस्माच्छुभानि कर्माणि कुर्याद्वाग्बुद्धिकर्मभिः॥**
**[6]अहिंसा सत्यवचनं सर्वभूतेषु चाऽऽर्जवम्।**
**क्षमा चैवाप्रमादश्च यस्यैते स सुखी भवेत्।**
**तस्मात्समाहितं बुद्ध्या मनो भूतेषु धारयेत्॥**

शुभं कर्माऽऽह – अहिंसेति। बुद्ध्या 'इदं सर्वं यदयमात्मा' (बृउ. २।४।६) इतिशास्त्रोत्थया समाहितं स्थिरं रागद्वेषादिशून्यम्। नीटी.

**[1]यश्चैनं परमं धर्मं सर्वभूतसुखावहम्।**
**दुःखान्निःसरणं वेद स तत्त्वज्ञः सुखी भवेत्॥**

एनम् अहिंसादिरूपम्। नीटी.

**[2]तस्मात्समाहितं बुद्ध्या मनो भूतेषु धारयेत्।**
**नापध्यायेन्न स्पृहयेन्नाबद्धं चिन्तयेदसत्॥**

नापध्यायेत् परानिष्टं न चिन्तयेत्। अबद्धं स्वस्यायोग्यं राज्यादि रङ्को न स्पृहयेत्। असत् नष्टं भावि वा स्त्रीपुत्रादिकं न चिन्तयेत्। नीटी.

**प्रह्राद उवाच –**

**[3]आर्जवेनाप्रमादेन प्रसादेनाऽऽत्मवत्तया।**
**वृद्धशुश्रूषया शक्र पुरुषो लभते महत्॥**

प्रसादेन बुद्धेर्नैर्मल्येन। आत्मवत्तया जितेन्द्रियतया। महत् मोक्षम्। नीटी.

विस्तरेण ब्राह्मणधर्मकथनम्

**व्यास उवाच –**

**[4]ब्राह्मणस्य तु यत्कृत्यं तत्ते वक्ष्यामि पृच्छते॥**
**[5]जातकर्मप्रभृत्यस्य कर्मणां दक्षिणावताम्।**
**क्रिया स्यादा समावृत्तेराचार्ये वेदपारगे॥**
**अधीत्य वेदानखिलान्गुरुशुश्रूषणे रतः।**
**गुरूणामनृणो भूत्वा समावर्तेत यज्ञवित्॥**
**[6]आचार्येणाभ्यनुज्ञातश्चतुर्णामेकमाश्रमम्।**
**आ विमोक्षाच्छरीरस्य सोऽनुतिष्ठेद्यथाविधि॥**
**[7]प्रजासर्गेण दारैश्च ब्रह्मचर्येण वा पुनः।**
**वने गुरुसकाशे वा यतिधर्मेण वा पुनः॥**

---

(१) **भा.** १२।१९२।७३; **भामु.** १२।१९९।७४.

(२) **भा.** १२।१९२।८१; **भामु.** १२।१९९।८२.

(३) **भा.** १२।२०७।६; **भामु.** १२।२१४।६ गुणानिमान् (गुणाञ्छुभान्).

(४) **भा.** १२।२०७।७; **भामु.** १२।२१४।७ भूतेभ्य (धर्मेभ्य).

(५) **भा.** १२।२०८।५; **भामु.** १२।२१५।५ प्राक् शुभं (स्याच्छुभं) तदुपा (यदि वाऽ) द्वाग्बुद्धि (द्वा बुद्धि).

(६) **भा.** १२।२०८।६ तृतीयार्धं नास्ति; **भामु.** १२।२१५।६-७.

(१) **भा.** १२।२०८।७; **भामु.** २।२१५।७-८ स तत्त्वज्ञः (सर्वज्ञः स).

(२) **भा.** १२।२०८।८; **भामु.** १२।२१५।८-९.

(३) **भा.** १२।२१५।३४; **भामु.** १२।२२२।३४.

(४) **भा.** १२।२२६।१; **भामु.** १२।२३४।१ पृच्छते (तच्छृणु).

(५) **भा.** १२।२२६।२-३; **भामु.** १२।२३४।२-३.

(६) **भा.** १२।२२६।४; **भामु.** १२।२३४।४ सोऽनु (सोऽव).

(७) **भा.** १२।२२६।५; **भामु.** १२।२३४।५.

[१]गृहस्थस्त्वेव सर्वेषां चतुर्णां मूलमुच्यते।
तत्र पक्वकषायो हि दान्तः सर्वत्र सिध्यति॥
[२]प्रजावाञ्छ्रोत्रियो यज्वा मुक्तो दिव्यैस्त्रिभिर्ऋणैः।
अथान्यानाश्रमान्पश्चात्पूतो गच्छति कर्मभिः॥
[३]यत्पृथिव्यां पुण्यतमं विद्यास्थानं तदावसेत्।
यतेत तस्मिन्प्रामाण्यं गन्तुं यशसि चोत्तमे॥
[४]तपसा वा सुमहता विद्यानां पारणेन वा।
इज्यया वा प्रदानैर्वा विप्राणां वर्धते यशः॥
[५]यावदस्य भवत्यस्मिँल्लोके कीर्तिर्यशस्करी।
तावत्पुण्यकृताँल्लोकाननन्तान्पुरुषोऽश्नुते॥
[६]अध्यापयेदधीयीत याजयेत यजेत च।
न वृथा प्रतिगृह्णीयान्न च दद्यात्कथंचन॥
[७]याज्यतः शिष्यतो वाऽपि कन्यया वा धनं महत्।
यद्यागच्छेद्यजेद्दद्यान्नैकोऽश्नीयात्कथंचन॥
[८]गृहमावसतो ह्यस्य नान्यत्तीर्थं प्रतिग्रहात्।
देवर्षिपितृगुर्वर्थं वृद्धातुरबुभुक्षताम्॥
[९]अन्तर्हिताभितप्तानां यथाशक्ति बुभूषताम्।
द्रव्याणामतिशक्त्याऽपि देयमेषां कृतादपि॥
अर्हतामनुरूपाणां नादेयं ह्यस्ति किंचन॥

कृतात् पक्वान्नादपि। नीटी.

[१०]त्रयीविद्यामवेक्षेत वेदेषूक्तामथाङ्गतः।
ऋक्सामवर्णाक्षरतो यजुषोऽथर्वणस्तथा॥

[१]तिष्ठत्येतेषु भगवान् षट्सु कर्मसु संस्थितः॥
[२]वेदवादेषु कुशला ह्यध्यात्मकुशलाश्च ये।
सत्त्ववन्तो महाभागाः पश्यन्ति प्रभवाप्ययौ॥
[३]एवं धर्मेण वर्तेत क्रियाः शिष्टवदाचरेत्।
असंरोधेन भूतानां वृत्तिं लिप्सेत वै द्विजः॥
[४]सद्भ्य आगतविज्ञानः शिष्टः शास्त्रविचक्षणः।
स्वधर्मेण क्रिया लोके कुर्वाणः सत्यसंगरः॥
[५]तिष्ठत्येतेषु गृहवान् षट्सु कर्मसु स द्विजः।
पञ्चभिः सततं यज्ञैः श्रद्दधानो यजेत च॥
[६]धृतिमानप्रमत्तश्च दान्तो धर्मविदात्मवान्।
वीतहर्षभयक्रोधो ब्राह्मणो नावसीदति॥
[७]दानमध्ययनं यज्ञस्तपो ह्रीरार्जवं दमः।
एतैर्वर्धयते तेजः पाप्मानं चापकर्षति॥
[८]धूतपाप्मा तु मेधावी लघ्वाहारो जितेन्द्रियः।
कामक्रोधौ वशे कृत्वा निनीषेद्ब्रह्मणः पदम्॥
[९]अग्नींश्च ब्राह्मणांश्चार्चेद्देवताः प्रणमेत च।
वर्जयेदुषतीं वाचं हिंसां चाधर्मसंहिताम्॥
[१०]एषा पूर्वतरा वृत्तिर्ब्राह्मणस्य विधीयते।
ज्ञानागमेन कर्माणि कुर्वन्कर्मसु सिध्यति॥
[११]सतां वृत्तेन वर्तेत क्रियाः शिष्टवदाचरेत्।
असंरोधेन धर्मस्य वृत्तिं लिप्सेदगर्हिताम्॥

(१) भा. १२।२२६।६; भामु. १२।२३४।६ स्त्वेव सर्वेषां चतुर्णां (स्त्वेष धर्माणां सर्वेषां) तत्र(यत्र).

(२) भा. १२।२२६।७; भामु. १२।२३४।७ द्वितीयचरणे (मुक्त एव ऋणैस्त्रिभिः) गच्छति (गच्छेत).

(३) भा. १२।२२६।८; भामु. १२।२३४।८ विद्यास्थानं (विद्यात्स्थानं).

(४) भा. १२।२२६।९; भामु. १२।२३४।९.

(५) भा. १२।२२६।१०; भामु. १२।२३४।१० त्यस्मिँल्लोके कीर्तिर्य (त्यस्मिन्कीर्तिर्लोके य).

(६) भा. १२।२२६।११; भामु. १२।२३४।११ यजेत च (यजेत वा).

(७) भा. १२।२२६।१२; भामु. १२।२३४।१२ कन्यया (कन्याया) यद्याग (यदाऽऽग).

(८) भा. १२।२२६।१३; भामु. १२।२३४।१३.

(९) भा. १२।२२६।१४-१५; भामु. १२।२३४।१४-१५ ताभि (तारि).

(१०) भा. १२।२२७।१; भामु. १२।२३५।१ त्रयी (त्रयीं).

(१) भामु. १२।२३५।२.

(२) भा. १२।२२७।२; भामु. १२।२३५।२-३.

(३) भा. १२।२२७।३; भामु. १२।२३५।३-४ क्रियाः (क्रियां).

(४) भा. १२।२२७।४; भामु. १२।२३५।४-५ चतुर्थचरणे (कर्म सत्त्वस्थसंचरः).

(५) भा. १२।२२७।५; भामु. १२।२३५।५-६ तिष्ठत्येतेषु (तिष्ठते तेषु).

(६) भा. १२।२२७।६; भामु. १२।२३५।६-७ भय (मद).

(७) भा. १२।२२७।७; भामु. १२।२३५।७-८.

(८) भा. १२।२२७।८; भामु. १२।२३५।८-९ तु (च).

(९) भा. १२।२२७।९; भामु. १२।२३५।९-१० दुषतीं (दुशतीं).

(१०) भा. १२।२२७।१०; भामु. १२।२३५।१०-११ पूर्वतरा (पूर्वगता).

(११) भा. १२।२२७।२५; भामु. १२।२३५।२६ वृत्तेन (धर्मेण) क्रियाः (क्रियां) धर्मस्य (लोकस्य).

सर्वेषामौपनिषदो धर्मः साधारणः

**[1]चतुर्थश्चौपनिषदो धर्मः साधारणः स्मृतः।**
**वानप्रस्थो गृहस्थश्च ततोऽन्यः संप्रवर्तते॥**

चतुर्थः चतुर्थाश्रमे विहितः औपनिषदः 'शान्तो दान्तः उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति' (सुबालोपनिषत् ९) इत्याद्युपनिषदि विदितो धर्मः साधारणः सर्वेष्वाश्रमेषु। अन्यः असाधारणः। नीटी.

मित्रानुग्रहामित्रनिग्रहादीनामनेकेषां धर्माणामनुक्रमणम्

**[2]अनुग्रहं च मित्राणाममित्राणां च निग्रहम्।**
**संग्रहं च त्रिवर्गस्य श्रेय आहुर्मनीषिणः॥**

मित्राणां सर्वभूताभयप्रदानाम् अनुग्रहम्, अमित्राणां हिंस्राणां च निग्रहं श्रेय आहुरित्यग्रिमेणान्वयः। हिंस्रनिग्रहस्य श्रेयस्त्वोक्त्या हिंस्रसत्त्वस्यातिनिन्द्यत्वमुक्तम्। नीटी.

**[3]निवृत्तिः कर्मणः पापात्सततं पुण्यशीलता।**
**सद्भिश्च समुदाचारः श्रेय एतदसंशयम्॥**
**मार्दवं सर्वभूतेषु व्यवहारेषु चाऽऽर्जवम्।**
**वाक्चैव मधुरा प्रोक्ता श्रेय एतदसंशयम्॥**
**[4]देवताभ्यः पितृभ्यश्च संविभागोऽतिथिष्वपि।**
**असंत्यागश्च भृत्यानां श्रेय एतदसंशयम्॥**
**[5]सत्यस्य वचनं श्रेयः सत्यज्ञानं तु दुष्करम्।**
**यद्भूतहितमत्यन्तमेतत्सत्यं ब्रवीम्यहम्॥**

सत्यस्य अबाधितात्मतत्त्वस्य वचनं श्रवणादिकम्। सत्यं सत्यप्रापकम्। नीटी.

**[6]अहंकारस्य च त्यागः प्रणयस्य च निग्रहः।**
**संतोषश्चैकचर्या च कूटस्थं श्रेय उच्यते॥**
**[7]धर्मेण वेदाध्ययनं वेदाङ्गानां तथैव च।**
**विद्यार्थानां च जिज्ञासा श्रेय एतदसंशयम्॥**

जिज्ञासा अनुभवेच्छा। नीटी.

(१) भा. १२।२३६।१५; भामु. १२।२४४।१५ तृतीयचरणे (वानप्रस्थादृगृहस्थाच्च).
(२) भा. १२।२७६।१५; भामु. १२।२८७।१५-१६.
(३) भा. १२।२७६।१६-१७; भामु. १२।२८७।१६-१८.
(४) भा. १२।२७६।१८; भामु. १२।२८७।१८-१९ देवताभ्यः (दैवतेभ्यः).
(५) भा. १२।२७६।१९; भामु. १२।२८७।१९-२०.
(६) भा. १२।२७६।२०; भामु. १२।२८७।२०-२१ प्रणयस्य (प्रमादस्य).
(७) भा. १२।२७६।२१; भामु. १२।२८७।२१-२२ वेदाङ्गानां (वेदान्तानां) विद्यार्थानां (ज्ञानार्थानां).

**[1]शब्दरूपरसस्पर्शान्सह गन्धेन केवलान्।**
**नात्यर्थमुपसेवेत श्रेयसोऽर्थी परंतप॥**
**[2]नक्तंचर्यां दिवास्वप्नमालस्यं पैशुनं मदम्।**
**अतियोगमयोगं च श्रेयसोऽर्थी परित्यजेत्॥**

अतियोगमाहारादीनाम्। यथोक्तम् – 'नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः। न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन॥' (भगी. ६।१६) इति॥ नीटी.

**[3]कर्मोत्कर्षं न मार्गेत परेषां परिनिन्दया।**
**स्वगुणैरेव मार्गेत विप्रकर्षं पृथग्जनात्॥**

विप्रकर्षम् उत्कर्षम्। नीचादुत्कर्षं नेच्छेदपि तूच्चादेवेति भावः। नीटी.

**[4]नापृष्टः कस्यचिद्ब्रूयान्न चान्यायेन पृच्छतः।**
**ज्ञानवानपि मेधावी जडवल्लोकमाचरेत्॥**
**[5]परेषां यदसूयेत न तत्कुर्यात्स्वयं नरः।**
**यो ह्यसूयुस्तथायुक्तः सोऽवहासं नियच्छति॥**

महाफलस्याप्यधर्म्यकर्मणो निषेधः

**[6]धर्मादपेतं यत्कर्म यद्यपि स्यान्महाफलम्।**
**न तत्सेवेत मेधावी न तद्धितमिहोच्यते॥**

प्रतिवर्णमेकैको मुख्यगुणः

**[7]दमेन शोभते विप्रः क्षत्रियो विजयेन तु।**
**धनेन वैश्यः शूद्रस्तु नित्यं दाक्ष्येण शोभते॥**

दाक्ष्येण सेवार्थोत्साहेन। नीटी.

सर्वभूतेष्वात्मवद्वृत्तिः

**[8]धर्मशीलो नरो विद्वानीहकोऽनीहकोऽपि वा।**
**आत्मभूतः सदा लोके चरेद्भूतान्यहिंसयन्॥**

ईहकः अन्नाद्यर्थी। नीटी.

(१) भा. १२।२७६।२२; भामु. १२।२८७।२३ परंतप (कथंचन).
(२) भा. १२।२७६।२३; भामु. १२।२८७।२४.
(३) भा. १२।२७६।२४; भामु. १२।२८७।२५ कर्मो (आत्मो).
(४) भा. १२।२७६।३४; भामु. १२।२८७।३५ न्न चान्या (न्नाप्यन्या) चतुर्थचरणे (जडवत्समुपाविशेत्).
(५) भा. १२।२७९।२३; भामु. १२।२९०।२४.
(६) भा. १२।२८२।८; भामु. १२।२९३।८; चव्र. १५ चतुर्थचरणे (शुचिः कुशतिलं यथा).
(७) भा. १२।२८२।११; भामु. १२।२९३।११.
(८) भा. १२।२८३।२९; भामु. १२।२९४।३० हिंसयन् (हिंसया).

चातुर्वर्ण्यस्य प्रतिग्रहादयो विशेषधर्माः आनृशंस्यादयः सामान्यधर्माश्च

**पराशर उवाच –**

**[1]प्रतिग्रहो याजनं च तथैवाध्यापनं नृप।**
**विशेषधर्मो विप्राणां रक्षा क्षत्रस्य शोभना॥**
**कृषिश्च पाशुपाल्यं च वाणिज्यं च विशामपि।**
**[2]द्विजानां परिचर्या च शूद्रकर्म नराधिप॥**
**विशेषधर्मा नृपते वर्णानां परिकीर्तिताः।**
**धर्मान्साधारणांस्तात विस्तरेण शृणुष्व मे॥**
**[3]आनृशंस्यमहिंसा चाप्रमादः संविभागिता।**
**श्राद्धकर्माऽऽतिथेयं च सत्यमक्रोध एव च॥**
**[4]स्वेषु दारेषु संतोषः शौचं नित्यानसूयता।**
**आत्मज्ञानं तितिक्षा च धर्माः साधारणा नृप॥**

(१) आनृशंस्यम् अक्रूरत्वम्। आत्मज्ञानं नित्यत्वज्ञानम्। तितिक्षा क्षमा। ब्रक. १०

(२) चातुर्वर्ण्यस्येति शेषः। तपः चान्द्रायणादि। यदाह देवलः – 'व्रतोपवासनियमैः शरीरोत्तापनं नृप'। *व्रतशब्दोऽत्र स्नानदानजपहोमपूजोपवासादिपरः। एतेन व्रतखण्डप्रतिपाद्यानां धर्माणामपि साधारणत्वं सूचितम्। 'आत्मज्ञानम्' इत्यनेन मोक्षखण्डप्रतिपाद्यानामपि धर्माणां साधारणत्वम्। न चापि शूद्राधिकरणन्यायेन शूद्राणां विद्यायामनधिकार इति कथं मोक्षधर्माणां साधारणत्वमिति वाच्यम्, तेषामुपनयनाभावेनाध्ययनासंभवात् वेदवाक्यविचारे एवानधिकारः, न पुनरवैदिके, 'श्रावयेच्चतुरो वर्णान्' (भा. १२।३१४।४५) इति शूद्राणामपि पञ्चयज्ञादिवत् पुराणस्मृतिप्रतिपाद्यविद्योपदेशदर्शनात्। ननु तथापि कथं वेदान्तवाक्यविचारजनितज्ञानाभावे शूद्राणां मोक्षधर्माधिकार इति चेत्, मैवम्, मोक्षसाधनस्य ज्ञानस्य तदेकसाध्यत्व(?त्वा)सिद्धेः। तथा च श्रुतिः 'तरति शोकमात्मवित्' (छाउ. ७।१।३) 'ब्रह्म वेद ब्रह्मैव भवति'(मुउ. ३।२।९) 'ब्रह्मविदाप्नोति परम्' (तैउ.२।१) 'विद्ययाऽमृतत्वमश्नुते' (ईउ. ११) इति मोक्षस्य आत्मज्ञानसाध्यतां वदति। आत्मज्ञानस्य च पुराणादिवचननिचयविचारपरिचयादप्युपपत्तेः, 'श्रोतव्यः' इत्यादिवाक्यानां तु विचारनियमविधित्वानङ्गीकारात्। अङ्गीकारे वा तस्य द्विजातिनियततया 'श्रावयेच्चतुरो वर्णान्' इत्यादिपुराणवचनविषयविधेरप्यध्ययनविधिवद्विचारपर्यन्तताऽस्तु, ततश्च यथा द्रव्यसाध्यत्वाविशेषेऽपि क्रतूनां तत्तद्वर्णविहितोपायनियमार्जितद्रव्यसाध्यत्वम्, एवमात्मज्ञानसाध्यत्वाविशेषेऽपि मोक्षस्य तदुपायविशेषजनितज्ञानसाध्यत्वमिति सर्वमनवद्यम्। तथा चोक्तं भागवते – 'स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा। इति भारतमाख्यानं मुनिना कृपया कृतम्॥' (भाग. १।४।२५)। ×चव्र. ६-७

(३) आत्मज्ञानं नित्यात्मज्ञानम्, अन्यस्य पाषण्डेऽपि सत्त्वात्। *कूर. १४

(४) संविभागिता भोग्यस्यान्नादेर्यथार्हं विभज्य प्रतिपादनम्। आत्मज्ञानं शरीरादिभिन्नत्वेनाऽऽत्मविवेकः। * पप्र. ३३

(५) आनृशंस्यादित्रयोदशको गणः सर्ववर्णाश्रमसाधारणः। नीटी.

**[1]ब्राह्मणाः क्षत्रिया वैश्यास्त्रयो वर्णा द्विजातयः।**
**अत्र तेषामधीकारो धर्मेषु द्विपदां वर॥**

---

*मूले व्रतातिरेकेणोपवासग्रहणं गोबलीवर्दन्यायेनेति व्याख्यातुरभिप्रायोऽत्र गम्यते।

(१) **भा.** १२।२८५।२०; **भामु.** १२।२९६।२० धर्मो (धर्मा).

(२) **भा.** १२।२८५।२१-२२; **भामु.** १२।२९६।२१-२२.

(३) **भा.** १२।२८५।२३; **भामु.** १२।२९६।२३; **अप.** १।१२२ चाप्रमादः (च प्रसादः) व्यासः; **ब्रक.** १०; **चव्र.** ६ कर्माऽऽतिथेयं च (कर्म तपश्चैव) उत्त.; **कूर.** १४(=); **शूशि.** ५६ चव्रवत्; **शूक.** ६९ कर्माऽऽतिथेयं च (कर्म नयश्चैव) उत्त.; **पप्र.** ३३.

(४) **भा.** १२।२८५।२४; **भामु.** १२।२९६।२४; **अप.** १।१२२ धर्माः (धर्मः) रणा (रणो) व्यासः; **ब्रक.** १० नित्यानसूयता (नित्यानुरूपतः) धर्माः (धर्मः) रणा (रणो); **चव्र.** ६ सूयता (सूयिता) धर्माः (धर्मः) रणा (रणो); **कूर.** १४ स्वेषु दारेषु (स्वदारेषु च) शौचं (सत्यं) सूयता (सूयया) धर्माः (धर्मः) रणा (रणो) (=); **शूशि.** ५६ धर्माः (धर्मः) रणा (रणो); **शूक.** ६९ शूशिवत्; **पप्र.** ३३.

× शूशि., शूक. चव्रगतम्।

* शेषं ब्रकवत्।

(१) **भा.** १२।२८५।२५; **भामु.** १२।२९६।२५; **स्मृकौ.** ५४ मोक्षधर्मे व्यासः; **शूशि.** ५१ मोक्षधर्मे व्यासः.

(१) अत्रेति श्रौतेषु यजनयाजनादिषु स्मार्तेषु संध्यावन्दनादिषु च। +स्मृकौ. ६३

(२) अधीकारः 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' (पासू. ६।३।१२२) इति दीर्घः। धर्मेषु पूर्वोक्तेषु। नीटी.

**[१]विकर्मावस्थिता वर्णाः पतन्ति नृपते त्रयः।**
**उन्नमन्ति यथासन्तमाश्रित्येह स्वकर्मसु॥**

विकर्म निषिद्धं कर्म। स्वकर्मसु सन्तं नरमाश्रित्य वर्णाः सत्त्वादिगुणजा उन्नमन्ति। नीटी.

शूद्रस्य धर्माः

**8[२]न चापि शूद्रः पततीति निश्चयो**
**न चापि संस्कारमिहार्हतीति वा।**
**श्रुतिप्रवृत्तं न च धर्ममाप्नुते**
**न चास्य धर्मे प्रतिषेधनं कृतम्॥**

(१) न चेह शूद्रः पततीति मांसादिविक्रयेणापि। संस्कारः इहोपनयनम्। श्रुतिप्रयुक्तं श्रौतमग्निहोत्रादि। धर्मात् श्रुतौ कथितात्। ×गृक. २७१

(२) न चेह शूद्रः पतति इति लशुनभक्षणसुरापानादेर्न पततीति। स्मृकौ. ५५

(३) संस्कारार्हो हि तदभावे पतेत्, न त्वयं तथेत्यर्थः। धर्मे आनृशंस्यादित्रयोदशकरूपे। नीटी.

**[३]वैदेहकं शूद्रमुदाहरन्ति**
**द्विजा महाराज श्रुतोपपन्नाः।**
**अहं हि पश्यामि नरेन्द्र देवं**
**विश्वस्य विष्णुं जगतः प्रधानम्॥**

हे वैदेह, द्विजाः शूद्रं कं प्रजापतिं ब्राह्मणतुल्यमाहुः। अहं तु तं विष्णुं क्षत्रियतुल्यं पश्यामि। ब्रह्मविष्णू हि ब्राह्मणक्षत्रियौ। यथोक्तं द्रोणपर्वणि द्रोणं प्रकृत्य— 'ब्रह्मकल्पोऽभवद्ब्राह्मे क्षात्रे नारायणोपमः' इति प्राञ्चः। वस्तुतस्तु ये स्थूलं शरीरं त्यक्त्वा लिङ्गमेवाऽऽत्मत्वेन प्रतिपन्नास्ते विदेहाः, ये तु स्थूलसूक्ष्मे त्यक्त्वा प्रधानाख्यं कारणमात्मत्वेन प्रतिपन्नास्ते प्रकृतिलयाः, त्रयमतिक्रान्ताः ब्राह्मणाः। आद्यस्य मुक्तिर्जन्मद्वयेन व्यवहिता, द्वितीयस्यैकेन, अन्त्यस्य सद्यः। एवं सति द्विजाः शूद्रं वैदेहकं विदेहेषु विदितं प्राहुः। शूद्रो विट्क्षत्रजन्मनी प्राप्य ब्राह्मणो भवतीत्यर्थः। स्वमते तु स प्रधानम्, अत एकमेव जन्म प्राप्य मुच्यते इति। नीटी.

**[१]सतां वृत्तमनुष्ठाय निहीना उज्जिहीर्षवः।**
**मन्त्रवर्जं न दुष्यन्ति कुर्वाणाः पौष्टिकीः क्रियाः॥**

ननु अयज्ञस्य शूद्रस्य चित्तशुद्ध्यभावात्कथं विदेहत्वादिकं स्यात्? अत आह — सतामिति। सतां वृत्तं दमदयादानादि। निहीनाः शूद्राः। उद्दिधीर्षवः आत्मानमुद्धर्तुमिच्छवः। निहीनानुज्जिहीर्षवः' इति पाठे कामादीन् दोषान् उज्जिहीर्षवः उच्छेत्तुमिच्छव इत्यर्थः। नीटी.

**[२]यथा यथा हि सद्वृत्तमालम्बन्तीतरे जनाः।**
**तथा तथा सुखं प्राप्य प्रेत्य चेह च शेरते॥**

मोदते मोदन्ते। नीटी.

पापनिवृत्तिकामक्रोधनिग्रहसत्यवचनादीनामनेकधर्माणामनुक्रमणम्

**[३]निवृत्तिः कर्मणः पापात्सततं पुण्यशीलता।**
**सद्वृत्तिः समुदाचारः श्रेय एतदनुत्तमम्॥**

---

+ शूशि. स्मृकौगतम्।

8 अस्य मेधाव्याख्यानं 'धर्मेप्सव' इति मनुश्लोके (वका. पृ. १७४९) द्रष्टव्यम्।

× गृर. गृकवत्।

(१) **भा.** १२।२८५।२६; **भामु.** १२।२९६।२६ पतन्ति (पतन्ते) यथास (यथा स).

(२) **भा.** १२।२८५।२७; **भामु.** १२।२९६।२७; **मेधा.** १०।१२७ चापि शू (चेह शू) तीति वा (तीति) तृतीयचरणे (स्मृतिप्रयुक्तं तु न धर्ममश्नुते) कृतम् (स्मृतम्) भगवान् व्यासः; **गृक.** २७१ चापि शू (चेह शू) चापि सं (चैव सं) तीति वा (तीति च) प्रवृत्तं (प्रयुक्तं) माप्नुते (मश्नुते) चास्य धर्मे (चापि धर्मात्) कृतम् (श्रुतौ) व्यासः; **गृर.** ४८० चापि शू (चेह शू) 'चैव शू' इति व्याख्याने पाठः प्रतीयते, चापि सं (चैव सं) मिहा (मथा) तीति वा (तीति) प्रवृत्तं (प्रयुक्तं) माप्नुते (मश्नुते) चास्य धर्मे (चैव धर्मात्) कृतम् (श्रुतौ) व्यासः; **स्मृकौ.** ५४ चापि शू (चेह शू) तीति वा (तीति च) माप्नुते (मश्नुते) मोक्षधर्मेषु भगवान् व्यासः; **शूशि.** ६६ सर्वं स्मृकौवत्.

(३) **भा.** १२।२८५।२८; **भामु.** १२।२९६।२८ देहकं (देह कं).

(१) **भा.** १२।२८५।२९; **भामु.** १२।२९६।२९ मनु (मधि) उज्जिही (उद्दिधी); **स्मृकौ.** ५४ उत्त. मोक्षधर्मेषु भगवान् व्यासः; **शूशि.** ६६ कीः क्रियाः (कीं क्रियाम्) उत्त. मोक्षधर्मेषु व्यासः; **शूक.** ४१, ४४ सर्वं शूशिवत्; **नीटी.** निहीना उज्जिही इत्यत्र 'निहीनानुज्जिही' इत्यपि पाठभेदं निर्दिशति.

(२) **भा.** १२।२८५।३०; **भामु.** १२।२९६।३० शेरते (मोदते); **स्मृकौ.** ५४ मोक्षधर्मेषु भगवान् व्यासः; **शूशि.** ६६ लम्बन्ती (लवन्ती) मोक्षधर्मेषु व्यासः.

(३) **भा.** १२।३१६।७; **भामु.** १२।३२९।७.

[1]सर्वोपायेन कामस्य क्रोधस्य च विनिग्रहः।
कार्यः श्रेयोर्थिना तौ हि श्रेयोघातार्थमुद्यतौ॥
[2]नित्यं क्रोधात्तपो रक्षेच्छ्रियं रक्षेत मत्सरात्।
विद्यां मानावमानाभ्यामात्मानं तु प्रमादतः॥
[3]आनृशंस्यं परो धर्मः क्षमा च परमं बलम्।
आत्मज्ञानं परं ज्ञानं न सत्याद्विद्यते परम्॥
[4]सत्यस्य वचनं श्रेयः सत्यादपि हितं भवेत्।
यद्भूतहितमत्यन्तमेतत्सत्यं मतं मम॥

ब्राह्मणस्यैव याजनेऽधिकारः

[5]ब्राह्मणस्य हि याजनं विधीयते, न क्षत्रवैश्ययोर्द्विजात्योः। तस्माद्ब्राह्मणा ह्यग्निभूता यज्ञानुद्वहन्ति॥

शिष्यभृत्यविप्रक्षत्रियवैश्यशूद्राणां मुख्या धर्माः

नागभार्योवाच –
[6]शिष्याणां गुरुशुश्रूषा विप्राणां वेदपारणम्।
भृत्यानां स्वामिवचनं राज्ञां लोकानुपालनम्॥
[7]सर्वभूतपरित्राणं क्षत्रधर्म इहोच्यते।
वैश्यानां यज्ञसंवृत्तिरातिथेयसमन्विता॥
विप्रक्षत्रियवैश्यानां शुश्रूषा शूद्रकर्म तत्॥

साध्वनुक्रोशस्य लम्भनीयत्वम्

[8]अनुक्रोशो हि साधूनां सुमहद्धर्मलक्षणम्।
अनुक्रोशश्च साधूनां सदा प्रीतिं प्रयच्छति॥

(१) भा. १२।३१६।१०; भामु. १२।३२९।१० पायेन (पायात्तु).
(२) भा. १२।३१६।११; भामु. १२।३२९।११ रक्षेत (रक्षेच्च).
(३) भा. १२।३१६।१२; भामु. १२।३२९।१२.
(४) भा. १२।३१६।१३; भामु. १२।३२९।१३ भवेत् (वदेत्).
(५) भा. १२।३२९।७; भामु. १२।३४२।१३.
(६) भा. १२।३४७।५; भामु. १२।३५९।५ पारणम् (धारणम्) राज्ञां (राज्ञो).
(७) भा. १२।३४७।६-७; भामु. १२।३५९।६-७.
(८) भा. १३।५।२३; भामु. १३।५।२४ सुमहद्धर्म (महद्धर्मस्य).

मातृपित्रुपाध्यायपूजनम्

[1]येन प्रीणाति पितरं तेन प्रीतः प्रजापतिः।
प्रीणाति मातरं येन पृथिवी तेन पूजिता।
येन प्रीणात्युपाध्यायं तेन स्याद्ब्रह्म पूजितम्॥
सर्वे तस्याऽऽदृता धर्मा यस्यैते त्रय आदृताः।
अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः॥

मिथ्यावचननिन्दा

[2]यन्मन्त्रे भवति वृथा प्रयुज्यमाने
यत्सोमे भवति वृथाऽभिषूयमाणे।
यच्चाग्नौ भवति वृथाऽभिहूयमाने
तत्सर्वं भवति वृथाऽभिधीयमाने॥

मन्त्रोच्चारणं जिगीषाद्यर्थं वृथा, सोमाभिषवो दक्षिणां विना वृथा, होमो मन्त्रं विना वृथा। एतैस्त्रिभिर्यत्पापं तत्सर्वं मिथ्यावादिनो भवतीत्यर्थः। नीटी.

ब्राह्मणरक्षणं क्षत्रियधर्मः

[3]यथा पत्याश्रयो धर्मः स्त्रीणां लोके युधिष्ठिर।
स देवः सा गतिर्नान्या क्षत्रियस्य तथा द्विजाः॥
[4]पुत्रवच्च ततो रक्ष्या उपास्या गुरुवच्च ते।
अग्निवच्चोपचर्या वै ब्राह्मणाः कुरुसत्तम॥
[5]दण्डपाणिर्यथा गोषु पालो नित्यं स्थिरो भवेत्।
ब्राह्मणान् ब्रह्म च तथा क्षत्रियः परिपालयेत्॥

जातिहीनं प्रत्युपदेशस्य निषेधः

[6]उपदेशो न कर्तव्यो जातिहीनस्य कस्यचित्।
उपदेशे महान् दोष उपाध्यायस्य भाष्यते॥

उपाध्यायस्य उपदेशकर्तुः। भाष्यते 'न शूद्राय मतिं दद्यात्' (मस्मृ. ४।८०) इत्यादिशास्त्रेण। नीटी.

(१) भा. १३।७।२५-२६; भामु.
(२) भा. १३।७।२८; भामु. १३।७।२८ वृथा प्र (वृथोप).
(३) भा. १३।८।१९; भामु. १३।८।२० पत्या (भर्त्रा).
(४) भा. १३।८।२२; भामु. १३।८।२३.
(५) भा. १३।८।२७; भामु. १३।८।२८ स्थिरो भवेत् (हि रक्षयेत्) ब्राह्मणान् (ब्राह्मणा).
(६) भा. १३।१०।४; भामु.

शूद्रस्य संन्यासानधिकारः

**[१]अथास्य* बुद्धिरभवत्तपस्ये भरतर्षभ।**
**ततोऽब्रवीत्कुलपतिं पादौ संगृह्य भारत॥**

तपस्ये तपः करिष्ये। नीटी.

**[२]भवत्प्रसादादिच्छामि धर्मं चर्तुं द्विजर्षभ।**
**तन्मां त्वं भगवन्वक्तुं प्रव्राजयितुमर्हसि॥**

वक्तुम् अधिगन्तुम्। 'व्रज गतौ' इत्यस्य रूपम्। प्रव्राजयितुं विधिवत्स्वोचितं कर्म त्याजयितुम्। नीटी.

**[३]वर्णावरोऽहं भगवञ्छूद्रो जात्याऽस्मि सत्तम।**
**शुश्रूषां कर्तुमिच्छामि प्रपन्नाय प्रसीद मे॥**

**कुलपतिरुवाच —**

**न शक्यमिह शूद्रेण लिङ्गमाश्रित्य वर्तितुम्।**
**आस्यतां यदि ते बुद्धिः शुश्रूषानिरतो भव॥**
**[४]शुश्रूषया पराँल्लोकानवाप्स्यसि न संशयः॥**

लिङ्गं संन्यासचिह्नं सेवकस्य तव प्रव्रज्यानधिकारान्न युक्तम्। नीटी.

कायिकवाचिकमानसिकानि दश त्याज्यानि कर्माणि

**युधिष्ठिर उवाच —**

**[५]किं कर्तव्यं मनुष्येण लोकयात्राहितार्थिना।**
**कथं वै लोकयात्रां तु किंशीलश्च समाचरेत्॥**

तदेवं गौतमीसुदर्शनशुकप्रभृतीनामाख्यानैर्यदृच्छोपगतेषु दुःखेषु अनुद्विग्नमना अतिथिभक्त आनृशंस्यादिधर्मवान् श्रियं प्राप्नोति। तस्याश्च फलं कामः इन्द्रियप्रीतिरूपः। सा च स्त्रीणामेव भूयसी पुंसस्त्वल्पतरेत्येतावता ग्रन्थेनोक्तम्। तमिमं कामं तुच्छीकृत्य परमसुखावाप्तिकामस्य पूर्वोक्ताननुद्वेगादीनुपासीनस्य वक्ष्यमाणविधिना परमेश्वरमाराधयिष्यतो हेयं दोषजातं वक्तुमयमध्याय आरभ्यते—किमिति। लोकयात्रा ऐहिकशिष्टव्यवहारः, हितं च पारलौकिकं श्रेयः, तदर्थिना किं कर्तव्यं किमवश्यमनुष्ठेयम्? लोकयात्रां लोकद्वयश्रेयःसाधनम्। नीटी.

**भीष्म उवाच —**

**कायेन त्रिविधं कर्म वाचा चापि चतुर्विधम्।**
**मनसा त्रिविधं चैव दश कर्मपथांस्त्यजेत्॥**

कर्मपथान् स्वाभाविककर्ममार्गान्। नीटी.

**[१]प्राणातिपातं स्तैन्यं च परदारमथापि च।**
**त्रीणि पापानि कायेन सर्वतः परिवर्जयेत्॥**

प्राणातिपातः हिंसा। नीटी.

**[२]असत्प्रलापं पारुष्यं पैशुन्यमनृतं तथा।**
**चत्वारि वाचा राजेन्द्र न जल्पेन्नानुचिन्तयेत्॥**

असत्प्रलापं ग्राम्यवार्तादिम्, पारुष्यं निष्ठुरभाषणम्, पैशुन्यं राजद्वारादौ परदोषसूचनम्, अनृतं मिथ्यावादः परपीडाकरः मनसाऽप्येवं वदिष्यामीति नानुचिन्तयेत्। नीटी.

**[३]अनभिध्या परस्वेषु सर्वसत्त्वेषु सौहृदम्।**
**कर्मणां फलमस्तीति त्रिविधं मनसा चरेत्॥**

अनभिध्येति श्लोकेन परद्रव्येष्वभिध्यानं परस्यानिष्टचिन्तनं वेदवादेषु नास्तिक्यमिति त्रीणि त्याज्यानि लक्षयेत्, दश त्यजेदित्युपक्रमात्। नीटी.

**[४]तस्माद्वाक्कायमनसा नाऽऽचरेदशुभं नरः।**
**शुभाशुभान्याचरन्हि तस्य तस्याश्नुते फलम्॥**

शुभम् अहिंसादि आस्तिक्यान्तम्, अशुभं हिंसादि नास्तिक्यान्तम् फलम् अभयदुःखादि स्वर्गनरकान्तम्। नीटी.

शीलसत्ययोः प्रशंसा

**काश्यप उवाच —**

**[५]सर्वे च वेदाः सह षड्भिरङ्गैः**
**सांख्यं पुराणं च कुले च जन्म।**

---

* अस्य आश्रमागतशूद्रस्य।

(१) **भा.** १३।१०।१२; **भामु.** १३।१०।१३.

(२) **भा.** १३।१०।१३; **भामु.** १३।१०।१४ चर्तुं (वक्तुं).

(३) **भा.** १३।१०।१४-१५; **भामु.** १३।१०।१५-१६.

(४) **भामु.** १३।१०।१७.

(५) **भा.** १३।१३।१-२; **भामु.**

(१) **भा.** १३।१३।३; **भामु.** १३।१३।३ पातं (पातः) दारम (दारान).

(२) **भा.** १३।१३।४; **भामु.**

(३) **भा.**१३।१३।५; **भामु.**; **मेधा.** १२।५ कर्मणां (धर्मिणां) चरेत् (स्मरेत्) व्यासः; **मच.** १२।५ सर्वं मेधावत्.

(४) **भा.** १३।१३।६; **भामु.**

(५) **भा.** १३।२३।१२; **भामु.** १३।२२।१२ नरस्य राजन् (नृप द्विजस्य).

**नैतानि सर्वाणि गतिर्भवन्ति**
**शीलव्यपेतस्य नरस्य राजन्॥**

ह्रीमत्त्वऋजुत्वे शीलपदेन संगृह्णाति – सर्वे चेति। नीटी.

**मार्कण्डेय उवाच –**

[1]**अश्वमेधसहस्रं च सत्यं च तुलया धृतम्।**
**नाभिजानामि यद्यस्य सत्यस्यार्धमवाप्नुयात्॥**

दानतपःसत्यादयः सामान्यधर्माः
तत्प्रशंसा च

[2]**दानेन तपसा चैव सत्येन च युधिष्ठिर।**
**ये धर्ममनुवर्तन्ते ते नराः स्वर्गगामिनः॥**
[3]**शुश्रूषाभिस्तपोभिश्च श्रुतमादाय भारत।**
**ये प्रतिग्रहनिःस्नेहास्ते नराः स्वर्गगामिनः॥**
[4]**भयात्पापात्तथाबाधाद्दारिद्र्याद्व्याधिधर्षणात्।**
**यत्कृते प्रतिमुच्यन्ते ते नराः स्वर्गगामिनः॥**

आबाधात् सङ्कटात्। नीटी.

[5]**क्षमावन्तश्च धीराश्च धर्मकार्येषु चोत्थिताः।**
**मङ्गलाचारयुक्ताश्च ते नराः स्वर्गगामिनः॥**
[6]**निवृत्ता मधुमांसेभ्यः परदारेभ्य एव च।**
**निवृत्ताश्चैव मद्येभ्यस्ते नराः स्वर्गगामिनः॥**

मधु क्षौद्रम्। नीटी.

**सर्वहिंसानिवृत्ताश्च नराः सर्वसहाश्च ये।**
**सर्वस्याऽऽश्रयभूताश्च ते नराः स्वर्गगामिनः॥**
**मातरं पितरं चैव शुश्रूषन्ति जितेन्द्रियाः।**
**भ्रातॄणां चैव सस्नेहास्ते नराः स्वर्गगामिनः॥**
**आढ्याश्च बलवन्तश्च यौवनस्थाश्च भारत।**
**ये वै जितेन्द्रिया धीरास्ते नराः स्वर्गगामिनः॥**
[7]**अपराद्धेषु सस्नेहा मृदवो मित्रवत्सलाः।**
**आराधनसुखाश्चापि ते नराः स्वर्गगामिनः॥**

आराधनेन इतरान् सुखयन्ति ते तथा। नीटी.

गोकुलजलपाने विघ्ननिषेधः

[1]**गोकुलस्य तृषार्तस्य जलार्थे वसुधाधिप।**
**उत्पादयति यो विघ्नं तं विद्याद्ब्रह्मघातिनम्॥**

वरुणादिदेवतानमस्कारस्तुतिः

[2]**वरुणं वायुमादित्यं पर्जन्यं जातवेदसम्।**
**स्थाणुं स्कन्दं तथा लक्ष्मीं विष्णुं ब्रह्माणमेव च॥**
[3]**वाचस्पतिं चन्द्रमसमपः पृथ्वीं सरस्वतीम्।**
**सततं ये नमस्यन्ति तान्नमस्याम्यहं विभो॥**

'वरुणं ...प्रभो' इति नारदवचनात् तान्नमस्कुर्यात्। +निप्र. १।४०२

ब्राह्मणस्य शौद्रकर्मनिषेधः

[4]**न शौद्रं कर्म कर्तव्यं ब्राह्मणेन विपश्चिता।**
**शौद्रं हि कुर्वतः कर्म धर्मः समुपरुध्यते॥**

शौद्रं कर्म सेवा। कर्तव्यं कारयितव्यम्। कुर्वतः कारयतः। नीटी.

तपोज्ञानविनयप्रशंसा

[5]**यच्चैव मानुषे लोके यच्च देवेषु किंचन।**
**सर्वं तत्तपसा साध्यं ज्ञानेन विनयेन च॥**

प्रतिग्रहस्य विप्रतेजोनाशकत्वम्,
अप्रतिग्राहिविप्राणां
राज्ञा रक्षणम्

[6]**प्रतिग्रहेण तेजो हि विप्राणां शाम्यतेऽनघ।**
**प्रतिग्रहं ये नेच्छेयुस्तेऽपि रक्ष्यास्त्वयाऽनघ॥**

तेभ्यो रक्ष्यं स्वकुलमिति शेषः। नीटी.

---

(१) **भा.** १३।२३।१४; **भामु.** १३।२२।१४.
(२) **भा.** १३।२४।८३; **भामु.** १३।२३।८५.
(३) **भा.** १३।२४।८४; **भामु.** १३।२३।८६ श्रुत (विद्या).
(४) **भा.**१३।२४।८५; **भामु.** १३।२३।८७ थाबा (थाऽऽबा).
(५) **भा.** १३।२४।८६; **भामु.** १३।२३।८८ युक्ताश्च ते नराः (संपन्नाः पुरुषाः).
(६) **भा.** १३।२४।८७, ९०-९२; **भामु.** १३।२३।८९, ९२-९४.
(७) **भा.** १३।२४।९३; **भामु.** १३।२३।९५ राद्धेषु (राधिषु) मित्र (मृदु) ते नराः (पुरुषाः).

+ गप. निप्रवत्।
(१) **भा.** १३।२५।७; **भामु.** १३।२४।७; **निप्र.** २।५७१ द्वितीयचरणे (जलार्थं प्रतिधावतः) चतुर्थचरणे (तमाहुर्ब्रह्मघातकम्).
(२) **भा.** १३।३२।६; **भामु.** १३।३१।३; **निप्र.** १।४०२; **गप.** १४१ स्कन्दं (स्कन्धं).
(३) **भा.** १३।३२।७; **भामु.** १३।३१।७; **निप्र.** १।४०२ विभो (प्रभो); **गप.** १४१ मपः (मापः) शेषं निप्रवत्.
(४) **भा.** १३।३५।७; **भामु.**
(५) **भा.** १३।३५।११; **भामु.** १३।३५।११ तत्तप (तु तप) विनयेन (नियमेन).
(६) **भा.** १३।३५।२३; **भामु.** १३।३५।२३ चतुर्थचरणे (तेभ्यो रक्ष्यं त्वया नृप).

अयुध्यमानस्य राज्ञः अप्रवासिनो ब्राह्मणस्य च निन्दा

[1]**भूमिरेतौ निगिरति सर्पो बिलशयानिव।**
**राजानं चाप्ययोद्धारं ब्राह्मणं चाप्रवासिनम्॥**

अप्रवासिनं वेदार्थं ग्रामान्तरे वासमकुर्वाणम्।

नीटी.

ब्राह्मणस्य राज्ञा पूजनीयत्वम्

[2]**ब्राह्मणा हि महाभाग देवानामपि देवताः।**
**तेषु राजा प्रवर्तेत पूजया विधिपूर्वकम्॥**

अवरवर्णैरुत्तमवर्णानां परिचरणं तत्प्रकारश्च

[3]**अत्र ते वर्तयिष्यामि यथा धर्मः सनातनः।**
**राजन्यो ब्राह्मणं राजन्पुरा परिचचार ह।**
**वैश्यो राजन्यमित्येव शूद्रो वैश्यमिति श्रुतिः॥**

[4]**दूराच्छूद्रेणोपचर्यो ब्राह्मणोऽग्निरिव ज्वलन्।**
**संस्पृश्य परिचर्यस्तु वैश्येन क्षत्रियेण च॥**

रौद्रकर्मश्रौतकर्मदानानि क्षत्रियकर्माणि

[5]**रौद्रं कर्म क्षत्रियस्य सततं तात वर्तते।**
**तस्य वैतानिकं कर्म दानं चैवेह पावनम्॥**

गोरक्षणप्रशंसा

[6]**तथा गवार्थे शरणं शीतवर्षसहं महत्।**
**आसप्तमं तारयति कुलं भरतसत्तम॥**

शरणं गृहम्। निप्र. २१५७१

[7]**गावोऽधिकास्तपस्विभ्यो यस्मात्सर्वेभ्य एव च।**
**तस्मान्महेश्वरो देवस्तपस्ताभिः समास्थितः॥**

[1]**ब्रह्मलोके वसन्त्येताः सोमेन सह भारत।**
**आसां ब्रह्मर्षयः सिद्धाः प्रार्थयन्ति परां गतिम्॥**

[2]**पयसा हविषा दध्ना शकृताऽप्यथ चर्मणा।**
**अस्थिभिश्चोपकुर्वन्ति शृङ्गैर्वालैश्च भारत॥**

[3]**नाऽऽसां शीतातपौ स्यातां सदैताः कर्म कुर्वते।**
**न वर्षं विषमं वाऽपि दुःखमासां भवत्युत॥**

[4]**ब्राह्मणैः सहिता यान्ति तस्मात्परतरं पदम्।**
**एकं गोब्राह्मणं तस्मात्प्रवदन्ति मनीषिणः॥**

[5]**मातरः सर्वभूतानां गावः सर्वसुखप्रदाः।**
**वृद्धिमाकाङ्क्षता नित्यं गावः कार्याः प्रदक्षिणाः॥**

[6]**संताड्या न तु पादेन गवां मध्ये न च व्रजेत्।**
**मङ्गलायतनं देव्यस्तस्मात्पूज्याः सदैव हि॥**

[7]**प्रचोदनं देवकृतं गवां कर्मसु वर्तताम्।**
**पूर्वमेवाक्षरं नान्यदभिधेयं कथंचन॥**

गवां बलिवर्दानां कर्मसु यज्ञाद्यर्थेषु कृष्याद्यर्थेषु कर्षणादिषु वर्ततां प्रचोदनं प्रतोदेन प्रेरणं देवैः कृतमिति न तत्र दोष इति भावः। तथापि पूर्वं यज्ञार्थमेव चोदनम् अक्षरं श्रेयस्करम्। अन्यत्कृष्याद्यर्थं तु ततः परं वैदिककर्षणमनुप्रवृत्तम् अभिधेयं वाच्यं निन्द्यमित्यर्थः। तथा च स्मृतिः – 'हलान्तं ब्रह्मवर्चसम्' इति। तेन गोद्रोहकारित्वात्कृष्यर्थं कर्षणं दोषावहमित्यर्थः।

नीटी.

[8]**प्रचारे वा निपाने वा बुधो नोद्वेजयेत गाः।**
**तृषिता ह्यभिवीक्षन्त्यो नरं हन्युः सबान्धवम्॥**

---

(१) **भा.** १३।३६।१६; **भामु.**

(२) **भा.** १३।४७।४२; **भामु.** १३।४७।४२ राजा (राजन्).

(३) **भा.** १३।५८।३२; **भामु.** १३।५९।३२-३३ धर्मः सनातनः (धर्मं सनातनम्) ब्राह्मणं (ब्राह्मणान्).

(४) **भा.** १३।५८।३३; **भामु.** १३।५९।३३-३४ संस्पृश्य (संस्पर्शे); **अप.** ११।२० पृ. १६२; **गृक.** २७३; **गृर.** ४८१; **स्मृकौ.** ९६ च (वा); **शूशि.** ३३ चर्यो (चार्यो) च (वा); **शूक.** ७१ पू., नृसिंहपुराणे.

(५) **भा.** १३।६०।४; **भामु.** १३।६१।४.

(६) **भा.** १३।६५।२९; **भामु.** १३।६६।३०-३१ महत् (दृढम्); **निप्र.** २१५७१ तथा (कृत्वा) वर्ष (वात); **विपा.** ४।४१५ तथा गवार्थे (कृत्वा गवां वै) वर्षसहं (वातक्षयं).

(७) **भा.** १३।६५।३६; **भामु.** १३।६६।३७-३८ समा (सहा).

(१) **भा.** १३।६५।३७; **भामु.** १३।६६।३८-३९ ब्रह्मलो (ब्राह्मे लो) आसां (या तां).

(२) **भा.** १३।६५।३८; **भामु.** १३।६६।३९-४० ताऽप्यथ (ता चाथ).

(३) **भा.** १३।६५।३९; **भामु.** १३।६६।४०-४१ वर्षं विषमं (वर्षविषयं).

(४) **भा.** १३।६५।४०; **भामु.** १३।६६।४१-४२ परतरं (पारमकं).

(५) **भा.** १३।६८।६ उत्त.; **भामु.** १३।६९।७.

(६) **भामु.** १३।६९।८.

(७) **भा.** १३।६८।८; **भामु.** १३।६९।९ नान्य (चान्य) कथंचन (ततः परम्).

(८) **भा.** १३।६८।९; **भामु.** १३।६९।१० निपाने (निवाते).

प्रचारे पलायने। निवाते कठिनोपवेशने। अभि-वीक्षन्त्यः जलमलभमानाः। नीटी.

[1]पितृसद्मानि सततं देवतायतनानि च।
पूयन्ते शकृता यासां पूतं किमधिकं ततः॥

ब्राह्मणस्वापहारनिषेधः

[2]शुभे पात्रे ये गुणा गोप्रदाने
तावान्दोषो ब्राह्मणस्वापहारे।
सर्वावस्थं ब्राह्मणस्वापहारो
दाराश्चैषां दूरतो वर्जनीयाः॥
[3]ब्राह्मणस्वं न हर्तव्यं पुरुषेण विजानता।
ब्राह्मणस्वं हृतं हन्ति नृगं ब्राह्मणगौरिव॥

ब्राह्मणानां गवां च निन्दाया
निषेधः रक्षणस्य
प्रशंसा च

[4]न जातु ब्राह्मणो वाच्यो यदवाच्यं शचीपते।
मनसा गोषु न दुह्येद्गोवृत्तिर्गोनुकम्पकः॥

गोवृत्तिः असंग्रहपरः। गवां घासादेरनुकल्पकः संपादकः गोनुकल्पकः। नीटी.

[5]कान्तारे ब्राह्मणान्गाश्च यः परित्राति कौशिक।
क्षेमेण च विमुच्येत तस्य पुण्यफलं शृणु।
अश्वमेधक्रतोस्तुल्यं फलं भवति शाश्वतम्॥
[6]मृत्युकाले सहस्राक्ष यां वृत्तिमनुकाङ्क्षते।
लोकान्बहुविधान्दिव्यान् यद्वाऽस्य हृदि वर्तते॥
[7]तत्सर्वं समवाप्नोति कर्मणा तेन मानवः।
गोभिश्च समनुज्ञातः सर्वत्र स महीयते॥

(१) भा. १३।६८।१०; भामु. १३।६९।११.

(२) भा. १३।६८।२१; भामु. १३।६९।२२.

(३) भा. १३।६९।३१; भामु. १३।७०।३१.

(४) भा. १३।७२।२१; भामु. १३।७३।२२ कम्पकः (कल्पकः).

(५) भा. १३।७२।४४; भामु. १३।७३।४६-४७ तृतीयचरणे (क्षणेन विप्रमुच्येत).

(६) भा. १३।७२।४५; भामु. १३।७३।४७-४८ यद्वाऽस्य (यच्चास्य).

(७) भा. १३।७२।४६; भामु. १३।७३।४८-४९ णा तेन (णैतेन) स (च).

दमप्रशंसा

[1]दमस्य तु फलं राजञ्शृणु त्वं विस्तरेण मे।
दान्ताः सर्वत्र सुखिनो दान्ताः सर्वत्र निर्वृताः॥
यत्रेच्छागामिनो दान्ताः सर्वशत्रुनिषूदनाः।
प्रार्थयन्ति च यद्दान्ता लभन्ते तन्न संशयः॥
[2]युज्यन्ते सर्वकामैर्हि दान्ताः सर्वत्र पाण्डव।
स्वर्गे तथा प्रमोदन्ते तपसा विक्रमेण च॥
[3]दानैर्यज्ञैश्च विविधैर्यथा दान्ताः क्षमान्विताः।
दानाद्दमो विशिष्टो हि ददत्किंचिद्द्विजातये॥
[4]दाता कुप्यति नो दान्तस्तस्माद्दानात्परो दमः॥
[5]यस्तु दद्यादकुप्यन् हि तस्य लोकाः सनातनाः।
क्रोधो हन्ति हि यद्दानं तस्माद्दानात्परो दमः॥
[6]अदृश्यानि महाराज स्थानान्ययुतशो दिवि।
ऋषीणां सर्वलोकेषु यानीतो यान्ति देवताः॥
[7]दमेन यानि नृपते गच्छन्ति परमर्षयः।
कामयाना महत्स्थानं तस्माद्दानात्परो दमः॥

क्षत्रियवैश्यशूद्राणां स्वस्वधर्माचरणेन
स्वर्गप्राप्तिः

[8]क्षत्रियोऽध्ययने युक्तो यजने दानकर्मणि।
युद्धे यश्च परित्राता सोऽपि स्वर्गे महीयते॥
वैश्यः स्वकर्मनिरतः प्रदानाल्लभते महत्।
शूद्रः स्वकर्मनिरतः स्वर्गं शुश्रूषयार्च्छति8॥

8 अत्र 'यर्च्छति' इत्येवं गुणे प्राप्ते 'यार्च्छति' इति वृद्धिरार्षी। उभयोरप्यादर्शयोरेवमेव पाठः। वस्तुतोऽत्राऽऽर्षत्वकल्पनापेक्षया लेखकप्रमादकल्पनैव ज्यायसी।

(१) भा. १३।७४।११-१२; भामु. १३।७५।११-१२.

(२) भा. १३।७४।१३; भामु. १३।७५।१३ तथा (यथा).

(३) भा. १३।७४।१४ पू.; भामु. १३।७५।१४ धैर्यथा (धैस्तथा).

(४) भा. १३।७४।१४; भामु. १३।७५।१५ त्परो (त्परं).

(५) भा. १३।७४।१५; भामु. १३।७५।१५-१६ त्परो (त्परं).

(६) भा. १३।७४।१६; भामु. १३।७५।१६-१७ यानीतो (यानि ते).

(७) भा. १३।७४।१७; भामु. १३।७५।१७-१८ त्परो (त्परं).

(८) भा. १३।७४।२०-२१; भामु. १३।७५।२०-२१.

सत्यवचनप्रशंसा

[1]धारणं सर्ववेदानां सर्वतीर्थावगाहनम्।
सत्यं च ब्रुवतो नित्यं समं वा स्यान्न वा समम्॥
अश्वमेधसहस्रं च सत्यं च तुलया धृतम्।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते॥
[2]सत्येन सूर्यस्तपति सत्येनाग्निः प्रदीप्यते।
सत्येन मारुतो वाति सर्वं सत्ये प्रतिष्ठितम्॥
[3]सत्येन देवान्प्रीणाति पितॄन्वै ब्राह्मणांस्तथा।
सत्यमाहुः परं धर्मं तस्मात्सत्यं न लङ्घयेत्॥
[4]मुनयः सत्यनिरता मुनयः सत्यविक्रमाः।
मुनयः सत्यशपथास्तस्मात्सत्यं विशिष्यते।
सत्यवन्तः स्वर्गलोके मोदन्ते भरतर्षभ॥

ब्रह्मचर्यप्रशंसा

[5]दमः सत्यफलावाप्तिरुक्ता सर्वात्मना मया।
असंशयं विनीतात्मा सर्वः स्वर्गे महीयते॥
[6]ब्रह्मचर्यस्य तु गुणाञ्शृणु मे वसुधाधिप।
आ जन्ममरणाद्यस्तु ब्रह्मचारी भवेदिह।
न तस्य किंचिदप्राप्यमिति विद्धि जनाधिप॥
[7]बह्व्यः कोट्यस्त्वृषीणां तु ब्रह्मलोके वसन्त्युत।
सत्ये रतानां सततं दान्तानामूर्ध्वरेतसाम्॥
ब्रह्मचर्यं दहेद्राजन्सर्वपापान्युपासितम्।
ब्राह्मणेन विशेषेण ब्राह्मणो ह्यग्निरुच्यते॥
[8]प्रत्यक्षं च तवाप्येतद्ब्राह्मणेषु तपस्विषु।
बिभेति हि यथा शक्रो ब्रह्मचारिप्रधर्षितः।
तद्ब्रह्मचर्यस्य फलमृषीणामिह दृश्यते॥

(१) भा. १३।७४।२८-२९; भामु. १३।७५।२८-२९.
(२) भा. १३।७४।३०; भामु. १३।७५।३० मारुतो वाति (मरुतो वान्ति).
(३) भा. १३।७४।३१; भामु. १३।७५।३१ पूर्वार्धे (सत्येन देवाः प्रीयन्ते पितरो ब्राह्मणास्तथा।) परं धर्मं (परो धर्मः).
(४) भा. १३।७४।३२; भामु. १३।७५।३२-३३.
(५) भा. १३।७४।३३; भामु. १३।७५।३३-३४ सर्वः (स वै).
(६) भा. १३।७४।३४; भामु. १३।७५।३४-३५ गुणाञ्शृ (गुणं शृ) मे (त्वं) जनाधिप (नराधिप).
(७) भा. १३।७४।३५-३६; भामु. १३।७५।३६-३७.
(८) भा. १३।७४।३७; भामु. १३।७५।३८-३९ च तवाप्ये (हि तथा ह्ये).

मातापितृपूजनफलम्

[1]मातापित्रोः पूजने यो धर्मस्तमपि मे शृणु।
शुश्रूषते यः पितरं न चासूयेत्कथंचन।
मातरं वाऽनहंवादी गुरुमाचार्यमेव च॥
[2]तस्य राजन्फलं विद्धि स्वर्लोके स्थानमुत्तमम्।
न च पश्येत नरकं गुरुशुश्रूषुरात्मवान्॥

कुटुम्बधारणविरुद्धोपवासनिषेधः, दानादिधर्मरूपाणि बहूनि तपांसि

युधिष्ठिर उवाच —
[3]यदिदं तप इत्याहुरुपवासं पृथग्जनाः।
तपः स्यादेतदिह वै तपोऽन्यद्वाऽपि किं भवेत्॥
तपस्विनः पात्रत्वमुक्तम्, तत्र तपसो रूपं पृच्छति—यदिदमिति। नीटी.

भीष्म उवाच —
[4]मासार्धमासौ नोपवसेद्यत्तपो मन्यते जनः।
आत्मतन्त्रोपघाती यो न तपस्वी न धर्मवित्॥
आत्मतन्त्रं शरीररूपं कुटुम्बरूपं वा, तदुपघाती। नीटी.

[5]त्यागस्यापि च संपत्तिः शिष्यते तप उत्तमम्।
सदोपवासी च भवेद्ब्रह्मचारी तथैव च॥
[6]मुनिश्च स्यात्सदा विप्रो देवांश्चैव सदा यजेत्।
कुटुम्बिको धर्मकामः सदाऽस्वप्नश्च भारत॥
दानं वेदजपश्च परमं तप इति श्लोकद्वयार्थः। अस्वप्नः स्वधर्मे जागरूकः। नीटी.
[7]अमृताशी सदा च स्यात्पवित्री च सदा भवेत्।
ऋतवादी सदा च स्यान्नियतश्च सदा भवेत्॥

(१) भा. १३।७४।३८; भामु. १३।७५।३९-४० त्कथं (त्कदा) वाऽनहंवादी (भ्रातरं वाऽपि).
(२) भा. १३।७४।३९; भामु. १३।७५।४१ मुत्तमम् (मर्चितम्) षुरात्म (षयाऽऽत्म).
(३) भा. १३।९३।३; भामु. १३।९३।३ देतदिह वै (देतदेवेह).
(४) भा. १३।९३।४; भामु. १३।९३।४ मासौ नोपवसेद्य (मासोपवासाद्य).
(५) भा. १३।९३।५; भामु. १३।९३।५ स्यापि च (स्य चापि).
(६) भा. १३।९३।६; भामु. १३।९३।६ द्वितीयचरणे (वेदांश्चैव सदा जपेत्) भारत (मानवः).
(७) भा. १३।९३।७; भामु. १३।९३।७ पूर्वार्धे (अमांसाशी सदा च स्यात्पवित्रं च सदा पठेत्।).

[1]विघसाशी सदा च स्यात्सदा चैवातिथिप्रियः।
अमांसाशी सदा च स्यात्पवित्री च सदा भवेत्॥
[2]देवतातिथिभिः सार्धं पितृभिश्चोपभुञ्जते।
रमन्ते पुत्रपौत्रैश्च तेषां गतिरनुत्तमा॥

शमविधिः

[3]यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः।
सर्वं तन्नालमेकस्य तस्माद्विद्वाञ्शमं व्रजेत्॥
[4]उत्पन्नस्य रुरोः शृङ्गं वर्धमानस्य वर्धते।
8प्रार्थना पुरुषस्येव तस्य मात्रा न विद्यते॥
तस्य लाभसुखस्य मात्रा इयत्ता। नीटी.

शरणागतहननस्य निन्दा

[5]तस्मात्सर्वास्ववस्थासु नरो लोभं विवर्जयेत्।
एष धर्मः परो राजन्नलोभ इति विश्रुतः॥
[6]ब्राह्मणेष्वार्जवं यच्च स्थैर्यं च धरणीतले।
सौम्यतां चैव सोमस्य गाम्भीर्यं वरुणस्य च॥
दीप्तिमग्नेः प्रभां मेरोः प्रतापं तपनस्य च।
एतान्यतिक्रमेद्यो वै स हन्याच्छरणागतम्॥
[7]भवेत्स गुरुतल्पी च ब्रह्महा च तथा भवेत्।
सुरापानं च कुर्यात्स यो हन्याच्छरणागतम्॥

8 अत्र यथाश्रुतोपमानोपमेयभावो न घटते, किंतु शमविरुद्ध-प्रार्थनानिन्दायाः प्रकृतशमविधिप्रसक्तत्वेन प्रकृता निन्दाविषयः प्रार्थना उपमेयम्, रुरुशृङ्गमुपमानमित्येवोपमानोपमेयभावः स्वाभाविकः। अतः 'रुरोः शृङ्गमिव प्रार्थना वर्धते' इति क्लिष्टोऽप्यन्वयोऽभ्युपगन्तव्यः, पदसांनिध्यापेक्षयाऽर्थयोग्यताया बलीयस्त्वात्। किंच, तस्येति पदस्य नीलकण्ठकृतव्याख्यानं न मनोहरम्, लाभसुखस्याप्रकृतत्वात्, अपि तु 'प्रार्थनावर्धनस्य' इति प्रकृतपरामर्श एव युक्तः। अत एवेदं वाक्यमपि उक्तक्लिष्टान्वयमुपोद्बलयति। उपमानोपमेयभावो वर्धनमात्रे, तस्य मात्राराहित्यं तु उपमेये विशेषः।

(१) भा. १३।९३।८; भामु. १३।९३।८ विघसाशी सदा (विघसाशी कथं) अमांसाशी (अमृताशी).

(२) भा. १३।९३।१७; भामु. १३।९३।१७ पितृभि (पितृभ्य) पौत्रैश्च (पौत्रेण).

(३) भा. १३।९४।२७; भामु. १३।९३।४४ व्रजेत् (चरेत्); आपा. ११३ उत्तरार्धे (नालमेकस्य तत्सर्वमिति मत्वा शमं व्रजेत्॥).

(४) भा. १३।९४।२८; भामु. १३।९३।४५.

(५) भा. १३।९५।८४; भामु. १३।९३।१४७ चतुर्थचरणे (तस्माल्लोभं विवर्जयेत्).

(६) भा. १३।९८।९-१०; भामु. १३।९६।९-१०.

(७) भा. १३।९८।११; भामु. १३।९६।११ तथा (स वै) च कुर्यात्स (स कुर्याच्च).

तडागकरणवृक्षारोपणयजन-सत्यवचनानां विधिः

[1]तडागकृद्वृक्षरोपी इष्टयज्ञश्च यो द्विजः।
एते स्वर्गे महीयन्ते ये चान्ये सत्यवादिनः॥
तस्मात्तडागं कुर्वीत आरामांश्चैव रोपयेत्।
यजेच्च विविधैर्यज्ञैः सत्यं च सततं वदेत्॥

परदारगमन-ब्राह्मणक्षत्रियसर्पावमानन-मात्रादि-गुरुप्रतिकूलाचरणतीक्ष्णवचन-परापवादा-दीनां बहूनामकार्याणां निषेधाः, वृद्धसेवा-गुर्वभिवादनतदाज्ञा-पालनादिकर्तव्यविषयका बहवो विधयः, क्षौरे वर्ज्यानि नक्षत्राणि दिङ्नियमश्च

[2]परदारा न गन्तव्याः सर्ववर्णेषु कर्हिचित्।
न हीदृशमनायुष्यं लोके किंचन विद्यते।
यादृशं पुरुषस्येह परदारोपसेवनम्॥
[3]अभिवादयेत वृद्धांश्च आसनं चैव दापयेत्।
कृताञ्जलिरुपासीत गच्छन्तं पृष्ठतोऽन्वियात्॥
[4]त्रीन्कृशान्नावजानीयाद्दीर्घमायुर्जिजीविषुः।
ब्राह्मणं क्षत्रियं सर्पं सर्वे ह्याशीविषास्त्रयः॥
दहत्याशीविषः क्रुद्धो यावत्पश्यति चक्षुषा।
क्षत्रियोऽपि दहेत्क्रुद्धो यावत्स्पृशति तेजसा॥
ब्राह्मणस्तु कुलं हन्याद्ध्यानेनावेक्षितेन च।
तस्मादेतत्त्रयं यत्नादुपसेवेत पण्डितः॥
[5]गुरुणा वैरनिर्बन्धो न कर्तव्यः कदाचन।
अनुमान्यः प्रसाद्यश्च गुरुः क्रुद्धो युधिष्ठिर॥
[6]सम्यङ्मिथ्याप्रवृत्तेऽपि वर्तितव्यं गुराविह।
गुरुनिन्दा दहत्यायुर्मनुष्याणां न संशयः॥
मिथ्याप्रवृत्तेऽपि सम्यग्वर्तितव्यम्। नीटी.

(१) भा. १३।९९।३२-३३.

(२) भा. १३।१०७।२०; भामु. १३।१०४।२०-२१ गन्तव्याः (गन्तव्या).

(३) भा. १३।१०७।३३; भामु. १३।१०४।६५-६६ दयेत (दयीत) द्वितीयचरणे (दद्याच्चैवाऽऽसनं स्वयम्).

(४) भा. १३।१०७।४३-४५; भामु. १३।१०४।७७-७९.

(५) भा. १३।१०७।४६; भामु. १३।१०४।८० वैर (चैव).

(६) भा. १३।१०७।४७; भामु. १३।१०४।८१.

[1]नारुंतुदः स्यान्न नृशंसवादी
न हीनतः परमभ्याददीत।
ययाऽस्य वाचा पर उद्विजेत
न तां वदेदुशतीं पापलोक्याम्॥
[2]वाक्सायका वदनान्निष्पतन्ति
यैराहतः शोचति रात्र्यहानि।
परस्य नामर्मसु ते पतन्ति
तान्पण्डितो नावसृजेत्परेषु॥
[3]रोहते सायकैर्विद्धं वनं परशुना हतम्।
वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतम्॥
[4]हीनाङ्गानतिरिक्ताङ्गान्विद्याहीनान्वयोधिकान्।
रूपद्रविणहीनांश्च सत्त्वहीनांश्च नाऽऽक्षिपेत्॥
[5]नास्तिक्यं वेदनिन्दां च देवतानां च कुत्सनम्।
द्वेषस्तम्भाभिमानांश्च तैक्ष्ण्यं च परिवर्जयेत्॥
[6]परस्य दण्डं नोद्यच्छेत्क्रुद्धो नैनं निपातयेत्।
अन्यत्र पुत्राच्छिष्याद्वा शिक्षार्थं ताडनं स्मृतम्॥
[7]न ब्राह्मणान्परिवदेन्नक्षत्राणि न निर्दिशेत्।
तिथिं पक्षस्य न ब्रूयात्तथाऽस्याऽऽयुर्न रिष्यते॥
न रिष्यते न हिंस्यते। नीटी.
[8]मातापितरमुत्थाय पूर्वमेवाभिवादयेत्।
आचार्यमथ वाऽप्येनं तथाऽऽयुर्विन्दते महत्॥
[9]अकृत्वा देवतापूजां नान्यं गच्छेत्कदाचन।
अन्यत्र तु गुरुं वृद्धं धार्मिकं वा विचक्षणम्॥
नाभिगच्छेत् राजादीन्प्रति। नीटी.

(१) भा. १३।१०७।५६; भामु. १३।१०४।३१.
(२) भा. १३।१०७।५७; भामु. १३।१०४।३२ नामर्मसु ते (वा मर्मसु ये).
(३) भा. १३।१०७।५८; भामु. १३।१०४।३३.
(४) भा. १३।१०७।५९; भामु. १३।१०४।३५ वयोधिकान् (विगर्हितान्) सत्त्व (सत्य).
(५) भा. १३।१०७।६०; भामु. १३।१०४।३६ स्तम्भाभि (स्तम्भोऽभि).
(६) भा. १३।१०७।६१; भामु. १३।१०४।३७ ष्याद्वा (ष्याच्च).
(७) भा. १३।१०७।६२; भामु. १३।१०४।३८.
(८) भा. १३।१०७।६७; भामु. १३।१०४।४३-४४ वाऽप्येनं (वाऽप्यन्यं).
(९) भा. १३।१०७।७०; भामु. १३।१०४।४६ देवतापूजां नान्यं (देवपूजां च नाभि).

[1]अवलोक्यो न चाऽऽदर्शो मलिनो बुद्धिमत्तरैः।
न चाज्ञातां स्त्रियं गच्छेद्गर्भिणीं वा कदाचन॥
अज्ञाताम् ऋतुमतीत्वेन कामुकत्वेन वा। नीटी.
[2]रक्तमाल्यं न धार्यं स्याच्छुक्लं धार्यं तु पण्डितैः।
वर्जयित्वा तु कमलं तथा कुवलयं विभो॥
[3]रक्तं शिरसि धार्यं तु तथा वानेयमित्यपि।
काञ्चनी चैव या माला न सा दुष्यति कर्हिचित्॥
[4]उपवासं च कुर्वीत स्नातः शुचिरलंकृतः।
पर्वकालेषु सर्वेषु ब्रह्मचारी सदा भवेत्॥
उपवासं ब्रह्मचर्यम्। नीटी.
[5]परापवादं न ब्रूयान्नाप्रियं च कदाचन।
न मन्युः कश्चिदुत्पाद्यः पुरुषेण भवार्थिना॥
[6]पतितैस्तु कथां नेच्छेद्दर्शनं चापि वर्जयेत्।
संसर्गं च न गच्छेत तथाऽऽयुर्विन्दते महत्॥
[7]न दिवा मैथुनं गच्छेन्न कन्यां न च बन्धकीम्।
न चास्नातां स्त्रियं गच्छेत्तथाऽऽयुर्विन्दते महत्॥
[8]महात्मनां च गुह्यानि न वक्तव्यानि कर्हिचित्॥
[9]अगम्याश्च न गच्छेत राजपत्नीः सखीस्तथा।
वैद्यानां बालवृद्धानां भृत्यानां च युधिष्ठिर॥
[10]बन्धूनां ब्राह्मणानां च तथा शारणिकस्य च।
संबन्धिनां च राजेन्द्र तथाऽऽयुर्विन्दते महत्॥
शारणिकस्य रक्षणार्थिनः। नीटी.

(१) भा. १३।१०७।७१; भामु. १३।१०४।४७.
(२) भा. १३।१०७।७६; भामु. १३।१०४।८३ विभो (प्रभो).
(३) भा. १३।१०७।७७; भामु. १३।१०४।८४ चैव या माला (याऽपि माला या).
(४) भा. १३।१०७।८१; भामु. १३।१०४।८८-८९.
(५) भा. १३।१०७।९८; भामु. १३।१०४।१०६.
(६) भा. १३।१०७।९९; भामु. १३।१०४।१०७ चापि (च वि).
(७) भा. १३।१०७।१००; भामु. १३।१०४।१०८.
(८) भा. १३।१०७।१०८; भामु. १३।१०४।११६ नां च गु (नोऽतिगु).
(९) भा. १३।१०७।१०९; भामु. १३।१०४।११६-११७ राजपत्नीः (राज्ञः पत्नीं).
(१०) भा. १३।१०७।११०-१११; भामु. १३।१०४।११७, ११९.

**ब्राह्मणस्थपतिभ्यां च निर्मितं यन्निवेशनम्।**
**तदावसेत्सदा प्राज्ञो भवार्थी मनुजेश्वर॥**
**+[1]नक्षत्रे न च कुर्वीत यस्मिञ्जातो भवेन्नरः।**
**न प्रोष्ठपदयोः कार्यं तथाऽऽग्नेये च भारत॥**

आग्नेयं कृत्तिका। αविपा. ३।२।७५७

**+[2]दारुणेषु च सर्वेषु प्रत्यहं च विवर्जयेत्।**
**ज्योतिषे यानि चोक्तानि तानि सर्वाणि वर्जयेत्॥**

(१) दारुणानि आर्द्राश्लेषाज्येष्ठामूलानि। जन्मर्क्षात् पञ्चमं चतुर्दशं त्रयोविंशं च दुष्टतारा। विपा. ३।२।७५७

(२) प्रत्यरिं स्वनक्षत्राद्दिननक्षत्रं यावद्गणयित्वा नवभिर्भागे हृते पञ्चमी तारा प्रत्यरिः। नीटी.

**[3]प्राङ्मुखः श्मश्रुकर्माणि कारयेत समाहितः।**
**उदङ्मुखो वा राजेन्द्र तथाऽऽयुर्विन्दते महत्॥**
**[4]परिवादं न च ब्रूयात्परेषामात्मनस्तथा।**
**परिवादो न धर्माय प्रोच्यते भरतर्षभ॥**
**[5]अग्नीनुत्पाद्य यत्नेन क्रियाः सुविहिताश्च याः।**
**वेदेषु ब्राह्मणैः प्रोक्तास्ताश्च सर्वाः समाचरेत्॥**
**[6]न चेर्ष्या स्त्रीषु कर्तव्या दारा रक्ष्याश्च सर्वशः।**
**अनायुष्या भवेदीर्ष्या तस्मादीर्ष्यां विवर्जयेत्॥**

---

+ विपाग्रन्थानुसारं क्षौरविषयकं वचनम्।

α नीटी. विपावत्।

(१) **भा.** १३।१०७।११९; **भामु.** १३।१०४।१२७; **विपा.** ३।२।७५६-७५७ न च कुर्वीत (तु न कर्तव्यं) तथाऽऽग्नेये च (न चाऽऽग्नेये तु) (-); **पुम.** ४५६ प्रोष्ठ (प्रौष्ठ) उत्त. व्यासः.

(२) **भा.** १३।१०७।१२०; **भामु.** १३।१०४।१२८ प्रत्यहं (प्रत्यरिं); **विपा.** ३।२।७५७ च (तु) प्रत्यहं च विव (दुष्टतारां च व) (-); **पुम.** ४५६ प्रत्यहं च विव (दुष्टतारां च व) पू. व्यासः.

(३) **भा.** १३।१०७।१२१; **भामु.** १३।१०४।१२९ येत स (येत्सुस); **संग.** ६२२ येत स (यीत स) खो वा राजेन्द्र (खोऽथ चा भूत्वा) गदाधरभाष्ये.

(४) **भा.** १३।१०७।१२२; **भामु.** १३।१०४।१३० न धर्माय (ह्यधर्माय).

(५) **भा.** १३।१०७।१२९; **भामु.** १३।१०४।१३६ वेदेषु (वेदे च).

(६) **भा.** १३।१०७।१३०; **भामु.** १३।१०४।१३७ दारा रक्ष्याश्च (रक्ष्या दाराश्च).

**[1]अनायुष्यो दिवास्वप्नस्तथाऽभ्युदितशायिता।**
**प्रातर्निशायां च तथा ये चोच्छिष्टाः स्वपन्ति वै॥**

प्रगे संध्यायाम्। नीटी.

**[2]पारदार्यमनायुष्यं नापितोच्छिष्टता तथा।**
**यत्नतो वै न कर्तव्यमभ्यासश्चैव भारत॥**

नापितोच्छिष्टता श्मश्रुकर्मोत्तरमस्नातता। अभ्यासः अध्ययनं च। नीटी.

**[3]संध्यां न भुञ्जेन्न स्नायान्न पुरीषं समुत्सृजेत्।**
**प्रयतश्च भवेत्तस्यां न च किंचित्समाचरेत्॥**
**[4]ब्राह्मणान्पूजयेच्चापि तथा स्नात्वा नराधिप।**
**देवांश्च प्रणमेत्स्नातो गुरूंश्चाप्यभिवादयेत्॥**
**[5]अनिमन्त्रितो न गच्छेत यज्ञं गच्छेत्तु दर्शकः।**
**अनिमन्त्रिते ह्यनायुष्यं गमनं तत्र भारत॥**

दर्शकः द्रष्टा। नीटी.

**[6]न चैकेन परिव्राज्यं न गन्तव्यं तथा निशि।**
**अनागतायां संध्यायां पश्चिमायां गृहे वसेत्॥**

परिव्रज्यं देशान्तरे गन्तव्यम्। नीटी.

**[7]मातुः पितुर्गुरूणां च कार्यमेवानुशासनम्।**
**हितं वाऽप्यहितं वाऽपि न विचार्यं नरर्षभ॥**
**[8]परस्त्रियो नाभिलषेद्वाचाऽथ मनसाऽपि वा।**
**अनृतं च न भाषेत मातापित्रोः कृतेऽपि वा॥**

अहिंसाया विधिः प्रशंसा च

**[9]न भक्षयति यो मांसं न हन्यान्न च घातयेत्।**
**तं मित्रं सर्वभूतानां मनुः स्वायंभुवोऽब्रवीत्॥**

---

(१) **भा.** १३।१०७।१३१; **भामु.** १३।१०४।१३८ प्रथमचरणे (अनायुष्यं दिवा स्वप्नं) उत्तरार्धे (प्रगे निशामाशु तथा नैवोच्छिष्टाः स्वपन्ति वै॥).

(२) **भा.** १३।१०७।१३२; **भामु.** १३।१०४।१४०.

(३) **भा.** १३।१०७।१३३; **भामु.** १३।१०४।१४१ पूर्वार्धे (संध्यायां च न भुञ्जीत न स्नायेन्न तथा पठेत्।).

(४) **भा.** १३।१०७।१३४; **भामु.** १३।१०४।१४२.

(५) **भा.** १३।१०७।१३५; **भामु.** १३।१०४।१४३ गच्छेत्तु (गच्छेत) अनिमन्त्रिते (अनर्चिते).

(६) **भा.** १३।१०७।१३६; **भामु.** १३।१०४।१४४ व्राज्यं (व्रज्यं).

(७) **भा.** १३।१०७।१३७; **भामु.** १३।१०४।१४५ वाऽप्यहितं वाऽपि (चाप्यहितं चापि).

(८) **भा.** १३।११०।४६; **भामु.** १३।१०७।५० स्त्रियो (स्त्रियं).

(९) **भा.** १३।११६।१२; **भामु.** १३।११५।१२ हन्यान्न च (च हन्यान्न).

[1]अहिंसा परमो धर्मस्तथाऽहिंसा परं तपः।
अहिंसा परमं सत्यं ततो धर्मः प्रवर्तते॥
[2]तदेतदुत्तमं धर्ममहिंसालक्षणं शुभम्।
ये चरन्ति महात्मानो नाकपृष्ठे वसन्ति ते॥
[3]अहिंसालक्षणो धर्म इति वेदविदो विदुः।
यदहिंस्रं भवेत्कर्म तत्कुर्यादात्मवान्नरः॥
[4]नाऽऽत्मनोऽस्ति प्रियतरः पृथिव्यामनुसृत्य ह।
तस्मात्प्राणिषु सर्वेषु दयावानात्मवान्भवेत्॥
[5]अहिंसा परमो धर्मस्तथाऽहिंसा परो दमः।
अहिंसा परमं दानमहिंसा परमं तपः॥
[6]अहिंसा परमो यज्ञस्तथाऽहिंसा परं बलम्।
अहिंसा परमं मित्रमहिंसा परमं सुखम्।
अहिंसा परमं सत्यमहिंसा परमं श्रुतम्॥
[7]सर्वयज्ञेषु वा दानं सर्वतीर्थेषु चाऽऽप्लुतम्।
सर्वदानफलं वाऽपि नैतत्तुल्यमहिंसया॥
[8]अहिंस्रस्य तपोऽक्षय्यमहिंस्रो यजते सदा।
अहिंस्रः सर्वभूतानां यथा माता यथा पिता॥

अद्रोहदानसत्यवचनानामुत्तमव्रतत्वेन प्रशंसा

[9]त्रीण्येव तु पदान्याहुः पुरुषस्योत्तमं व्रतम्।
न दुह्येच्चैव दद्याच्च सत्यं चैव परं वदेत्॥
[10]इति वेदोक्तमृषिभिः पुरस्तात्परिकल्पितम्।
इदानीं चैव नः कृत्यं पुरस्ताच्च परं स्मृतम्॥

(१) भा. १३।११६।२५; भामु. १३।११५।२५ ततो (यतो).
(२) भा. १३।११६।७२; भामु. १३।११५।७८ लक्षणं शुभम् (धर्मलक्षणम्).
(३) भा. १३।११७।१३; भामु. १३।११६।२१-२२ वेदविदो (धर्मविदो) हिंस्रं भवेत्क (हिंसात्मकं क).
(४) भा. १३।११७।३१; भामु. १३।११६।३२ व्यामनु (वीमनु).
(५) भा. १३।११७।३७; भामु. १३।११६।३८.
(६) भा. १३।११७।३८; भामु. १३।११६।३९ बलम् (फलम्) तृतीयार्धं नास्ति.
(७) भा. १३।११७।३९; भामु. १३।११६।४० चाऽऽप्लु (वाऽऽप्लु); यसं. ३२ वा दानं (यद्दानं) चाऽऽप्लुतम् (यत्फलम्) नैतत्तु (तन्न तु) यतिधर्मसमुच्चये.
(८) भा. १३।११७।४०; भामु. १३।११६।४१.
(९) भा. १३।१२१।१०; भामु. १३।१२०।१०.
(१०) भा. १३।१२१।१० उत्त.; भामु. १३।१२०।११ परं स्मृतम् (परिश्रुतम्).

पदानि पदनीयानि। एतदेव त्रयमुत्तमं व्रतम्। *नः अस्माभिरपि कृत्यम् अवश्यकर्तव्यम्।
नीटी.

तपोदानविद्याप्रशंसा

[1]यानीहाऽऽगमशास्त्राणि याश्च काश्चित्प्रवृत्तयः।
तानि वेदं पुरस्कृत्य प्रवृत्तानि यथाक्रमम्॥
अहं दानं प्रशंसामि भवानपि तपःश्रुते।
तपः पवित्रं वेदस्य तपः स्वर्गस्य साधनम्॥
तपसा महदाप्नोति विद्यया चेति नः श्रुतम्।
तपसैव चापनुदेद्यच्चान्यदपि दुष्कृतम्॥
[2]यद्यद्धि किंचित्संधाय पुरुषस्तप्यते तपः।
सर्वमेतदवाप्नोति ब्राह्मणो वेदपारगः॥
[3]दुरन्वयं दुष्प्रधृष्यं दुरापं दुरतिक्रमम्।
सर्वं वै तपसाऽभ्येति तपो हि बलवत्तरम्॥
[4]सुरापोऽसंमतादायी भ्रूणहा गुरुतल्पगः।
तपसा तरते सर्वमेनसश्च प्रमुच्यते॥
असंमतादायी 'यथा च परप्रतिग्रहमभिमन्यते स्तेनो भवति' (आध. १।२८।१) इति स्मृतेः स्तेनः।
नीटी.

[5]सर्वविद्यस्तु चक्षुष्मानपि यादृशतादृशः।
तपस्विनौ च तावाहुस्ताभ्यां कार्यं सदा नमः॥
यः सर्ववित्स चक्षुष्मान्। यादृशतादृशमपि तपस्विनं तथैव चक्षुष्मन्तमेवाऽऽहुः। ताभ्यां सर्ववित्तपस्विभ्याम्।
नीटी.

[6]सर्वे पूज्याः श्रुतधनास्तथैव च तपस्विनः।
दानप्रदाः सुखं प्रेत्य प्राप्नुवन्तीह च श्रियम्॥

* अत्र 'नः' इत्यस्य षष्ठ्यन्तत्वेऽपि तृतीयान्तेन व्याख्यानं 'कृत्यानां कर्तरि वा' (पासू. २।३।७१) इति कृत्यविषये षष्ठीतृतीययोर्विकल्पाभिप्रायेणेति बोध्यम्।
(१) भा. १३।१२३।३-५; भामु. १३।१२२।४-६.
(२) भा. १३।१२३।६; भामु. १३।१२२।७ चतुर्थचरणे (विद्यया चेति नः श्रुतम्).
(३) भा. १३।१२३।७; भामु. १३।१२२।८ दुष्प्रधृष्यं (दुष्प्रधर्षं).
(४) भा. १३।१२३।८; भामु. १३।१२२।९.
(५) भा. १३।१२३।९; भामु. १३।१२२।१० तादृशः (तादृशम्) स्विनौ च तावा (स्विनं तथैवा).
(६) भा. १३।१२३।१०; भामु. १३।१२२।११.

गोब्राह्मणाग्निकर्मकपादस्पर्शनिषेधः

**अग्निरुवाच—**

**[1]पादमुद्यम्य यो मर्त्यः स्पृशेद्गाश्च सुदुर्मतिः।**
**ब्राह्मणं वा महाभागं दीप्यमानं तथाऽनलम्॥**
**तस्य दोषान्प्रवक्ष्यामि तच्छृणुध्वं समाहिताः।**
**दिवं स्पृशत्यशब्दोऽस्य त्रस्यन्ति पितरश्च वै॥**
**वैमनस्यं च देवानां कृतं भवति पुष्कलम्।**
**पावकश्च महातेजा हव्यं न प्रतिगृह्णति॥**
**आजन्मनां शतं चैव नरके पच्यते तु सः।**
**निष्कृतिं च न तस्यापि अनुमन्यन्ति कर्हिचित्॥**
**तस्माद्गावो न पादेन स्प्रष्टव्या वै कदाचन।**
**ब्राह्मणश्च महातेजा दीप्यमानस्तथाऽनलः॥**
**श्रद्दधानेन मर्त्येन आत्मनो हितमिच्छता।**
**एते दोषा मया प्रोक्तास्त्रिषु यः पादमुत्सृजेत्॥**

परदारगमन-वन्ध्यागमन-ब्रह्मस्वहरणानां
निषेधाः, गुरुवचनस्य
श्रद्धेयत्वम्

**लोमश उवाच —**

**[2]परदारेषु ये सक्ता अकृत्वा दारसंग्रहम्।**
**निराशाः पितरस्तेषां श्राद्धकाले भवन्ति वै॥**
**परदाररतिर्यश्च यश्च वन्ध्यामुपासते।**
**ब्रह्मस्वं हरते यश्च समदोषा भवन्ति ते॥**
**असंभाष्या भवन्त्येते पितृणां नात्र संशयः।**
**देवताः पितरश्चैषां नाभिनन्दन्ति तद्धविः॥**
**तस्मात्परस्य वै दारांस्त्यजेद्वन्ध्यां च योषितम्।**
**ब्रह्मस्वं हि न हर्तव्यमात्मनो हितमिच्छता॥**
**श्रूयतां चापरं गुह्यं रहस्यं धर्मसंहितम्।**
**श्रद्दधानेन कर्तव्यं गुरूणां वचनं सदा॥**

विप्रस्य क्षत्रियवैश्यकर्मानुज्ञा
शूद्रकर्मनिषेधश्च

**[3]स्वाध्यायनिरता विप्रास्तथा स्वस्त्ययने नृणाम्।**
**रक्षणे क्षत्रियं प्राहुर्वैश्यं पुष्ट्यर्थमेव च॥**
**करोति कर्म यद्वैश्यस्तद्गत्वा ह्युपजीवति।**
**कृषिगोरक्ष्यवाणिज्यमकुत्सा वैश्यकर्मणि॥**
**शूद्रकर्म तु यः कुर्यादवहाय स्वकर्म च।**
**स विज्ञेयो यथा शूद्रो न च भोज्यः कदाचन॥**

(१) भामु. १३।१२६।२९-३४.
(२) भामु. १३।१२९।१-५.
(३) भामु. १३।१३५।८-१०.

अहिंसासत्यवचनादयो
दश धर्माः

**महेश्वर उवाच —**

**[1]अहिंसा सत्यवचनं सर्वभूतानुकम्पनम्।**
**शमो दानं यथाशक्ति गार्हस्थ्यो धर्म उत्तमः॥**
**[2]परदारेष्वसंकल्पो न्यासस्त्रीपरिरक्षणम्।**
**अदत्तादानविरमो मधुमांसस्य वर्जनम्॥**
**[3]एष पञ्चविधो धर्मो बहुशाखः सुखोदयः।**
**देहिभिर्धर्मपरमैः कर्तव्यो धर्मसंचयः॥**

पञ्चविधः अहिंसादिविशिष्टो गार्हस्थ्यधर्मादिः। धर्मस्य पुण्यस्य संभवः योनिः। नीटी.

ब्राह्मणादिवर्णानां क्रमेण
धर्माः

**उमोवाच —**

**[4]भगवन्संशयं पृष्टस्तं मे व्याख्यातुमर्हसि।**
**चातुर्वर्ण्यस्य यो धर्मः स्वे स्वे वर्णे गुणावहः॥**
**[5]ब्राह्मणे कीदृशो धर्मः क्षत्रिये कीदृशो भवेत्।**
**वैश्ये किंलक्षणो धर्मः शूद्रे किंलक्षणो भवेत्॥**

**महेश्वर उवाच —**

**[6]न्यायतस्ते महाभागे संशयः समुदीरितः।**
**भूमिदेवा महाभागाः सदा लोके द्विजातयः॥**
**[7]उपवासः सदा धर्मो ब्राह्मणस्य न संशयः।**
**स हि धर्मार्थमुत्पन्नो ब्रह्मभूयाय कल्पते॥**

उपवासः इन्द्रियजयः। नीटी.

(१) भा. १३।१२८।२५; भामु. १३।१४१।२५.
(२) भा. १३।१२८।२६; भामु. १३।१४१।२६ संकल्पो (संसर्गो).
(३) भा. १३।१२८।२७; भामु. १३।१४१।२७ चतुर्थचरणे (चर्तव्यो धर्मसंभवः).
(४) भा. १३।१२८।२८; भामु. १३।१४१।२८ पूर्वार्धे (भगवन्संशयः पृष्टस्तन्मे शंसितुमर्हसि।).
(५) भा. १३।१२८।२९; भामु. १३।१४१।२९ शो भवेत् (शोऽभवत्).
(६) भा. १३।१२८।३०; भामु. १३।१४१।३० संशयः (सर्वशः).
(७) भा. १३।१२८।३१; भामु. १३।१४१।३१ मुत्पन्नो (संपन्नो).

[१]तस्य धर्मक्रिया देवि व्रतचर्या च न्यायतः।
तथोपनयनं चैव द्विजायैवोपपद्यते॥
[२]गुरुदैवतपूजार्थं स्वाध्यायाभ्यसनात्मकः।
देहिभिर्धर्मपरमैश्चर्तव्यो धर्मसंभवः॥
उमोवाच –
[३]भगवन्संशयो मेऽत्र तं मे व्याख्यातुमर्हसि।
चातुर्वर्ण्यस्य धर्मं हि नैपुण्येन प्रकीर्तय॥
महेश्वर उवाच –
[४]रहस्यश्रवणं धर्मो वेदव्रतनिषेवणम्।
व्रतचर्यापरो धर्मो गुरुपादप्रसादनम्॥
[५]भैक्षचर्यापरो धर्मो धर्मो नित्योपवासिता।
नित्यस्वाध्यायिता धर्मो ब्रह्मचर्याश्रमस्तथा॥
[६]गुरुणा त्वभ्यनुज्ञातः समावर्तेत वै द्विजः।
विन्देतानन्तरं भार्यामनुरूपां यथाविधि॥
[७]शूद्रान्नवर्जनं धर्मस्तथा सत्पथसेवनम्।
धर्मो नित्योपवासित्वं ब्रह्मचर्यं तथैव च॥
आहिताग्निरधीयानो जुह्वानः संयतेन्द्रियः।
विघसाशी यताहारो गृहस्थः सत्यवाक्शुचिः॥
अतिथिव्रतता धर्मो धर्मस्त्रेताग्निधारणम्।
इष्टीश्च पशुबन्धांश्च विधिपूर्वं समाचरेत्॥
यज्ञश्च परमो धर्मस्तथाऽहिंसा च देहिषु।
अपूर्वभोजनं धर्मो विघसाशित्वमेव च॥

अपूर्वभोजनं पूर्वभोजनं प्राग्भोजनं तदभावः सकृद्भोजनमित्यर्थः। नीटी.

[८]भुक्ते परिजने पश्चाद्भोजनं धर्म उच्यते।
ब्राह्मणस्य गृहस्थस्य श्रोत्रियस्य विशेषतः॥

[१]दंपत्योः समशीलत्वं धर्मश्च गृहमेधिनाम्।
गृह्याणां चैव देवानां नित्यं पुष्पबलिक्रिया॥
[२]नित्योपलेपनं धर्मस्तथा नित्योपवासिता।
सुसंमृष्टोपलिप्ते च साज्यधूमोद्गमे गृहे॥
[३]एष द्विजजने धर्मो गार्हस्थ्यो लोकधारणः।
द्विजातीनां सतां नित्यं सदैवैष प्रवर्तते॥
[४]यस्तु क्षत्रगतो देवि त्वया धर्म उदीरितः।
तमहं ते प्रवक्ष्यामि तं मे शृणु समाहिता॥
[५]क्षत्रियस्य स्मृतो धर्मः प्रजापालनमादितः।
निर्दिष्टफलभोक्ता हि राजा धर्मेण युज्यते॥

निर्दिष्टः षड्भागः। नीटी.

प्रजाः पालयते यो हि धर्मेण मनुजाधिपः।
तस्य धर्मार्जिता लोकाः प्रजापालनसंचिताः॥
[६]तत्र राज्ञः परो धर्मो दमः स्वाध्याय एव च।
अग्निहोत्रपरिस्पन्दो दानाध्ययनमेव च॥
[७]यज्ञोपवीतधरणं यज्ञो धर्मक्रियास्तथा।
भृत्यानां भरणं धर्मः कृते कर्मण्यमोघता॥
सम्यग्दण्डे स्थितिर्धर्मो धर्मो वेदक्रतुक्रियाः।
व्यवहारस्थितिर्धर्मः सत्यवाक्यरतिस्तथा॥
[८]आर्तहस्तप्रदो राजा प्रेत्य चेह महीयते।
गोब्राह्मणार्थे विक्रान्तः संग्रामे निधनं गतः।
अश्वमेधजिताँल्लोकान्प्राप्नोति त्रिदिवालये॥

आर्तहस्तेति आर्तप्रिय इत्यर्थः। आर्द्रेति पाठे सजलेन हस्तेन ददाति। नीटी.

---

(१) भा. १३।१२८।३२; भामु. १३।१४१।३२ व्रतचर्या (ब्रह्मचर्या) तथो (व्रतो) द्विजायैवोप (द्विजो येनोप).

(२) भा. १३।१२८।३३; भामु. १३।१४१।३३.

(३) भा. १३।१२८।३४; भामु. १३।१४१।३४ मेऽत्र तं मे (मेऽस्ति तन्मे) हि (वै).

(४) भा. १३।१२८।३५; भामु. १३।१४१।३५ उत्तरार्धे (अग्निकार्यं तथा धर्मो गुरुकार्यप्रसाधनम्॥).

(५) भा. १३।१२८।३६; भामु. १३।१४१।३६ चर्यापरो (चर्या परो) द्वितीयचरणे (नित्ययज्ञोपवीतिता) नित्यस्वा (नित्यं स्वा).

(६) भा. १३।१२८।३७; भामु. १३।१४१।३७ त्वभ्यनु (चाभ्यनु).

(७) भा. १३।१२८।३८-४१; भामु. १३।१४१।३८-४१.

(८) भा. १३।१२८।४२; भामु. १३।१४१।४२.

(१) भा. १३।१२८।४३; भामु. १३।१४१।४३ द्वितीयचरणे (धर्मः स्याद्गृहमेधिनः) नित्यं पु (नित्यपु).

(२) भा. १३।१२८।४४; भामु. १३।१४१।४४ द्गमे गृहे (भवेद्गृहे).

(३) भा. १३।१२८।४५; भामु. १३।१४१।४५ गार्हस्थ्यो (गार्हस्थो) द्विजातीनां (द्विजानां च).

(४) भा. १३।१२८।४६; भामु. १३।१४१।४६ त्वया (मया) तं मे (तन्मे).

(५) भा. १३।१२८।४७-४८; भामु. १३।१४१।४७-४८.

(६) भा. १३।१२८।४९; भामु. १३।१४१।४९ तत्र (तस्य).

(७) भा. १३।१२८।५०-५१; भामु. १३।१४१।५०-५१.

(८) भा. १३।१२८।५२; भामु. १३।१४१।५२-५३ कान्प्राप्नो (कानाप्नो).

**[1]वैश्यस्य सततं धर्मः पाशुपाल्यं कृषिस्तथा।**
**अग्निहोत्रपरिस्पन्दो दानाध्ययनमेव च॥**
**वाणिज्यं सत्पथस्थानमातिथ्यं प्रशमो दमः।**
**विप्राणां स्वागतं त्यागो वैश्यधर्मः सनातनः॥**
**[2]तिलान्गन्धान्रसांश्चैव न विक्रीणीत वै क्वचित्।**
**वणिक्पथमुपासीनो वैश्यः सत्पथमाश्रितः॥**
**[3]सर्वातिथ्यं त्रिवर्गस्य यथाशक्ति यथार्हतः।**
**शूद्रधर्मः परो नित्यं शुश्रूषा च द्विजातिषु॥**
सर्वप्रकारेणाऽऽतिथ्यं सर्वातिथ्यम्। नीटी.
**[4]स शूद्रः संशिततपाः सत्यसंधो जितेन्द्रियः।**
**शुश्रूषन्नतिथिं प्राप्तं तपः संचिनुते महत्॥**
**[5]त्यक्तहिंसः शुभाचारो देवताद्विजपूजकः।**
**शूद्रो धर्मफलैरिष्टैः संप्रयुज्येत बुद्धिमान्॥**

ब्राह्मणतद्धर्मप्रशंसा, ब्राह्मणधर्माः,
शूद्रधर्माः

**उमोवाच –**
**[6]उक्तास्त्वया पृथग्धर्माश्चातुर्वर्ण्यहिताः शुभाः।**
**सर्वव्यापी तु यो धर्मो भगवंस्तं ब्रवीहि मे॥**
**महेश्वर उवाच-**
**[7]ब्राह्मणा लोकसारेण सृष्टा धात्रा गुणार्थिना।**
**लोकांस्तारयितुं कृत्स्नान्मर्त्येषु क्षितिदेवताः॥**
**[8]तेषामिमं प्रवक्ष्यामि धर्मकर्मफलोदयम्।**
**ब्राह्मणेषु हि यो धर्मः स धर्मः परमो मतः॥**

(१) **भा.** १३।१२८।५३-५४; **भामु.** १३।१४१।५४-५५.
(२) **भा.** १३।१२८।५५; **भामु.** १३।१४१।५६ द्वितीयचरणे (विक्रीणीयान्न चैव हि).
(३) **भा.** १३।१२८।५६; **भामु.** १३।१४१।५७.
(४) **भा.** १३।१२८।५७; **भामु.** १३।१४१।५८ संधो (वादी) षन्नति (षुरति).
(५) **भा.** १३।१२८।५८; **भामु.** १३।१४१।५९ त्यक्तहिंसः (नित्यं स हि); **पमा.** १।४२० त्यक्तहिंसः (अहिंसकः) चतुर्थचरणे (स्वधर्मेणैव युज्यते); **स्मृकौ.** ९० देवताद्वि (देववद्वि) शेषं पमावत्; **शुशि.** ६३-६४ युज्येत (पूज्यते) शेषं पमावत्; **शूक.** ६५ पमावत्; **सस्मृ.** १७२ त्यक्तहिंसः शु (अपि कश्चिच्छु) चतुर्थचरणे (स्वयं धर्मेण युज्यते).
(६) **भा.** १३।१२९।१; **भामु.** १३।१४१।६१ पूर्वार्धे (उक्तस्त्वया पृथग्धर्मश्चातुर्वर्ण्यहितः शुभः।) वंस्तं ब्र (वंस्तद्ब्र).
(७) **भा.** १३।१२९।२; **भामु.** १३।१४१।६२.
(८) **भा.** १३।१२९।३; **भामु.** १३।१४१।६३ मिमं (मपि).

**[1]इमे तु लोकधर्मार्थं त्रयः सृष्टाः स्वयंभुवा।**
**पृथिव्याः सर्जने नित्यं सृष्टास्तानपि मे शृणु॥**
त्रयः धर्माः। सर्जने सर्जनकाले।
नीटी.
**[2]वेदोक्तः परमो धर्मः स्मृतिशास्त्रगतोऽपरः।**
**शिष्टाचीर्णः परः प्रोक्तस्त्रयो धर्माः सनातनाः॥**
**[3]त्रैविद्यो ब्राह्मणो विद्वान्न चाध्ययनजीवनः।**
**त्रिकर्मा त्रिपरिक्रान्तो मैत्र एष स्मृतो द्विजः॥**
त्रिकर्मा दानाध्ययनयजनकर्मा। त्रीन् कामक्रोधलोभान् परिक्रान्तः परित्यज्य गतः। नीटी.
**[4]षडिमानि तु कर्माणि प्रोवाच भुवनेश्वरः।**
**वृत्त्यर्थं ब्राह्मणानां वै शृणु तानि समाहिता॥**
**[5]यजनं याजनं चैव तथा दानप्रतिग्रहौ।**
**अध्यापनमधीतं च षट्कर्मा धर्मभाग्द्विजः॥**
**[6]नित्यस्वाध्यायता धर्मो धर्मो यज्ञः सनातनः।**
**दानं प्रशस्यते चास्य यथाशक्ति यथाविधि॥**
**[7]शूद्रकर्माणि सर्वाणि यथान्यायं यथाविधि।**
**शुश्रूषां परिचर्यां च ज्येष्ठे वर्णे प्रयत्नतः।**
**कुर्यादविमनाः शूद्रः सततं सत्पथे स्थितः॥**
**[8]ब्राह्मण्यमेव संप्राप्य रक्षितव्यं यतात्मभिः।**
**योनिप्रतिग्रहादानैः कर्मभिश्च शुचिस्मिते॥**
कुयोनिसंबन्धात्, कुप्रतिग्रहात्, आदानाच्च ब्राह्मण्यं नश्यतीति भावः।
नीटी.

(१) **भा.** १३।१२९।४; **भामु.** १३।१४१।६४ तु (ते) पृथिव्याः (पृथिव्यां).
(२) **भा.** १३।१२९।५; **भामु.** १३।१४१।६५.
(३) **भा.** १३।१२९।६; **भामु.** १३।१४१।६६ जीवनः (जीवकः).
(४) **भा.** १३।१२९।७; **भामु.** १३।१४१।६७ तानि समाहिता (धर्मान् सनातनान्).
(५) **भा.** १३।१२९।८; **भामु.** १३।१४१।६८ पनमधीतं च (पनं चाध्ययनं).
(६) **भा.** १३।१२९।९; **भामु.** १३।१४१।६९ नित्य-स्वाध्यायता (नित्यः स्वाध्यायिता).
(७) **भा.** १३।१३१।२७; **भामु.** १३।१४३। २७-२८.
(८) **भा.** १३।१३१।५७; **भामु.** १३।१४३।५८ ण्यमेव (ण्यं देवि) यतात्मभिः (यतात्मना).

अहिंसासत्याक्रोधदानानि ब्राह्मणपूजनं च क्षत्रियधर्मः, क्षौरादौ मङ्गलवचनादिविधिः

[1]अहिंसा सत्यमक्रोधो दानमेतच्चतुष्टयम्।
अजातशत्रो सेवस्व धर्म एष सनातनः॥

[2]ब्राह्मणेषु च वृत्तिर्या पितृपैतामहोचिता।
तामन्वेहि महाबाहो स्वर्गस्यैते हि देशिकाः॥

[3]ब्राह्मणानेव सेवस्व सत्कृत्य बहुमन्य च।
एतेष्वेव त्विमे लोकाः कृत्स्ना इति निबोध तान्॥

[4]श्मश्रुकर्मणि मङ्गल्यं क्षुतानामभिनन्दनम्।
व्याधितानां च सर्वेषामायुषः प्रतिनन्दनम्॥

मङ्गल्यं मङ्गलवचनम्, अभिनन्दनम् 'शतं जीव' इति वचनेन सुखोत्पादनं च। कुर्यादिति शेषः।
नीटी.

[5]सत्ये प्रयतितव्यं वः सत्यं हि परमं बलम्।
आनृशंस्यपरैर्भाव्यं सदैव नियतात्मभिः।
ब्राह्मण्यैर्धर्मशीलैश्च तपोनित्यैश्च भारत॥

[6]पुनरेवाब्रवीद्धीमान् युधिष्ठिरमिदं वचः।
ब्राह्मणाश्चैव ते नित्यं प्राज्ञाश्चैव विशेषतः।
आचार्या ऋत्विजश्चैव पूजनीया नराधिप॥

ब्राह्मणस्य यजनादिकर्मषट्कम्

[7]त्रीणि कर्माणि यानीह ब्राह्मणानां तु जीविका।
याजनाध्यापने चोभे शुद्धाच्चापि प्रतिग्रहः॥

[8]अवशेषाणि चान्यानि त्रीणि कर्माणि यानि तु।
दानमध्ययनं यज्ञो धर्मयुक्तानि तानि तु॥

(१) भा. १३।१४७।२२; भामु. १३।१६२।२३.
(२) भा. १३।१४७।२३; भामु. १३।१६२।२४ स्वर्ग (धर्म).
(३) भा. १३।१४७।२५; भामु. १३।१६२।२६.
(४) भा. १३।१४८।२६; भामु. १३।१६२।५२ षः प्रति (षामभि).
(५) भा. १३।१५३।४७-४८; भामु. १३।१६७।४९-५० सत्ये प्रय (सत्येषु य) भारत (भारताः).
(६) भा. १३।१५३।४९-५०; भामु. १३।१६७।५१-५२ नराधिप (जनाधिप).
(७) भा. १४।४५।२२; भामु. १४।४५।२२ यानीह (जानीत).
(८) भा. १४।४५।२३; भामु. १४।४५।२३ अवशे (अथ शे).

संग्रामनिधनं क्षत्रियधर्मः

[1]अवश्यमेव संग्रामे क्षत्रियेण विशेषतः।
कर्तव्यं निधनं लोके शस्त्रेण क्षत्रबन्धुना॥

सर्वभूतविषयका निर्वैरत्वसत्यद्रोहाभावाः श्रेष्ठो धर्मः

[2]एतद्धि त्रितयं श्रेष्ठं सर्वभूतेषु भारत।
निर्वैरता महाराज सत्यमद्रोह एव च॥

यतिपूजाविधिः

[3]सुवृत्तो वा प्रवृत्तो वा अध्वगः श्रान्त एव वा।
काषायदण्डमात्रेण यतिः पूज्यो युधिष्ठिर॥

सत्यदमादयो द्वादश सनातनधर्माः तेषां लक्षणानि च

[4]सत्यं दमस्तपः शौचं संतोषो ह्रीः क्षमाऽऽर्जवम्।
ज्ञानं शमो दया ध्यानमेष धर्मः सनातनः॥

सनातनः कालमात्राधिकारकः, न ब्राह्मणत्वाद्यधिकारान्तरापेक्ष इत्यर्थः। पप्र. ३२

[5]सत्यं भूतहितं प्रोक्तं मनसो दमनं दमः।
तपः स्वधर्मवर्तित्वं शौचं संकरवर्जनम्॥

[6]संतोषो विषयत्यागो ह्रीरकार्यनिवर्तनम्।
क्षमा द्वन्द्वसहिष्णुत्वमार्जवं समचित्तता॥

[7]ज्ञानं तत्त्वार्थसंबोधः शमश्चित्तप्रशान्तता।
दया भूतहितैषित्वं ध्यानं निर्विषयं मनः॥

दानयज्ञादयो दश श्रेष्ठाः सामान्यधर्माः

[8]दानं यज्ञः सतां पूजा वेदधारणमार्जवम्।
एष धर्मः परो ज्ञेयः फलवान् प्रेत्य चेह च॥

(१) भा. १५।१६।६; भामु. १५।१०।३२-३३ लोके शस्त्रेण (काले मर्तव्यं).
(२) भा. १५।३५।१; भामु. १५।२८।९ मद्रोह (मक्रोध).
(३) समु. १३१.
(४) ब्रक. ११ ध्यान (दान); स्मृच. ११४ व्यासः; कृर. १४ ह्रीः क्षमा (ह्रीस्तथा); पप्र. ३२ मेष (मेवं).
(५) ब्रक. १२; स्मृच. ११४ व्यासः; कृर. १६ स्वधर्म (सुकर्म).
(६) ब्रक. १२; स्मृच. ११४ व्यासः; कृर. १६.
(७) ब्रक. १२-१३; स्मृच. ११४ व्यासः; कृर. १६ शान्तता (सन्नता).
(८) स्मृच. ११५ व्यासः; मुक्ता. ३ बृहस्पतिः.

[1]**भोगेष्वसक्तिः सततं तथैवाऽऽत्मावलोकनम्।**
**श्रेयः परं मनुष्याणां कपिलः प्राह पार्थिव॥**
[2]**सर्वत्र समदर्शित्वं निर्ममत्वमसङ्गिता।**
**श्रेयः परं मनुष्याणां प्राह पञ्चशिखो मुनिः॥**

रागद्वेषादीनां पञ्चदशानां स्वाभाविकानां
तामसानां शूद्रदोषाणां
द्विजशुश्रूषया नाशः
श्रेयःप्राप्तिश्च

[3]**रागो द्वेषश्च मोहश्च पारुष्यं च नृशंसता।**
**शाठ्यं च दीर्घवैरत्वमतिमानमनार्जवम्॥**
[4]**अनृतं चातिवादश्च पैशुन्यमतिलोभता।**
**निकृतिश्चाप्यविज्ञानं जनने शूद्रमाविशत्॥**
[5]**दृष्ट्वा पितामहः शूद्रमभिभूतं तु तामसैः।**
**द्विजशुश्रूषणं धर्मं शूद्राणां च प्रयुक्तवान्॥**
[6]**नश्यन्ति तामसा भावाः शूद्रस्य द्विजभक्तितः।**
**द्विजशुश्रूषया शूद्रः परं श्रेयोऽधिगच्छति॥**

परमिति विशेषणादन्येऽपि केचन धर्माः सन्तीति गम्यते।

पमा. १।४१९

क्षमादिगुणाष्टकं ब्राह्मण-
लक्षणम्

[7]**क्षमा दया च विज्ञानं सत्यं चैव दमः शमः।**
**अध्यात्मनिरतिर्ज्ञानमेतद्ब्राह्मणलक्षणम्॥**

---

(१) **स्मृच.** १।१५ ष्वसक्तिः सततं (ष्वासक्तिरहितं) व्यासः; **मुक्ता.** ३ चतुर्थचरणे (प्राह पञ्चशिखो मुनिः) बृहस्पतिः.

(२) **स्मृच.** १।१५ व्यासः.

(३) **पमा.** १।४१९; **स्मृकौ.** ९०; **शूशि.** ६३; **सस्मृ.** १७२ दीर्घवैरत्व (वैरदीर्घत्व) अशुद्धो ग्रन्थः.

(४) **पमा.** १।४१९ अनृतं (अमतं); **स्मृकौ.** ९० वादश्च (वादं च) विज्ञानं (वज्ञानं); **शूशि.** ६३ निकृति (विकृति) विशत् (विशेत्) शेषं स्मृकौवत्; **सस्मृ.** १७२ विशत् (विशेत्) शेषं स्मृकौवत्.

(५) **पमा.** १।४१९; **स्मृकौ.** ९० च (तु); **शूक.** ६५ च (तु); **सस्मृ.** १७२.

(६) **पमा.** १।४१९; **स्मृकौ.** ९०; **शूशि.** ६३; **शूक.** ६५; **सस्मृ.** १७२ योऽधि (योऽव).

(७) **पमा.** १।२०४.

यतिपूजनम्

[1]**एकदण्डी त्रिदण्डी वा शिखी मुण्डित एव वा।**
**काषायमात्रसारोऽपि यतिः पूज्यो युधिष्ठिर॥**

वणिक्कर्तृकदेवब्राह्मणपूजनसाधुवञ्चन-
योर्विधिनिषेधौ

[2]**वणिग्धर्ममुञ्चन्वै देवब्राह्मणपूजकः।**
**स वणिक्स्वर्गमाप्नोति पूज्यमानोऽप्सरोगणैः॥**
[3]**यः करोति जनान् साधून् वणिक्कर्मणि वञ्चनम्।**
**स याति नरकं घोरं धनं तस्यापि हीयते॥**

साधून् जनान्प्राप्येत्यर्थः। संम. ७९

सत्यवदनप्रशंसा, गोब्राह्मणार्थमसत्यमपि
सत्यमेव

[4]**सत्यं वदत माऽसत्यं सत्यं धर्मः सनातनः।**
**हरिश्चन्द्रश्चरति वै दिवि सत्येन चन्द्रवत्॥**
[5]**न यज्ञफलदानादिनियमास्तारयन्ति हि।**
**यथा सत्यं परं लोके पुरुषं पुरुषर्षभ॥**
**असत्यमपि वक्तव्यं गोब्राह्मणहिताय वै।**
**सत्यादपि हि तत्सत्यं न सत्यं सत्यमुच्यते॥**

यूकादिहिंसावर्जनप्रशंसा

[6]**यूकमत्कुणदंशादीन् खादतश्चाऽऽत्मनस्तनुम्।**
**पुत्रवत्परिरक्षन्ति ते नराः स्वर्गगामिनः॥**

प्रत्यहं कृतयोर्धर्माधर्मयोश्चिन्तनीयत्वम्

[7]**उत्थायोत्थाय बोद्धव्यं किमद्य सुकृतं कृतम्।**
**दत्तं वा दापितं वाऽऽपि वाक् सत्याऽपि च जल्पिता॥**

---

(१) **पमा.** १।५५२; **सिन्धु.** २१३८; **विपा.** ५।४९७ त्रिदण्डी वा (त्रिदण्डी च); **यसं.** १२७ मुण्डित एव वा (मुण्डी तथैव च) सारो (धारो) भगवद्वचनम्; **यप्र.** १०६ मुण्डित एव वा (मुण्डस्तथैव च) सारो (धारो) पुराणान्तरे; **बाल.** ३।६० पृ. ९९.

(२) **पमा.** १।४१८ ममुञ्च (र्मं च मु) आश्वमेधिके; **संम.** ७९; **बाल.** १।१२१ पृ. ३८४ आश्वमेधिके.

(३) **पमा.** १।४१८ वणिक्क (बलिक) शान्तिपर्वणि; **संम.** ७९; **बाल.**१।१२१ पृ. ३८४ चतुर्थचरणे (धनैश्चापि विहीयते) शान्तिपर्वणि.

(४) **निक.** ३२५.

(५) **यसं.** ३१.

(६) **अप.** १।१५४ पृ. २२५ यूक (यूका) तश्चा (तः स्वा) व्यासः; **गृक.** ३०४; **गृर.** ५०७ तश्चा (तस्त्वा); **निप्र.** २।४२६ मत्कुण (मशक) देवलः.

(७) **गृर.** ४९२.

**प्रत्यहं प्रत्यवेक्षेत मन(?नर)श्चरितमात्मनः।**
**किं नु मे पशुभिस्तुल्यं किं नु सत्पुरुषैरितम्॥**

ग्रहणनिमित्तकस्नानश्राद्धदानानां
विधिः

[1]**गङ्गास्नानं प्रकुर्वीत ग्रहणे चन्द्रसूर्ययोः।**
**महानदीषु चान्यासु स्नानं कुर्याद्यथाविधि॥**

(१)महानदीष्वपि मासविशेषे काश्चिच्छ्रेष्ठाः — 'प्रयागं देविका रेवा संनिहत्या च वारणम्। सरस्वती चन्द्रभागा कौशिकी तापिका तथा। सिन्धुर्गण्डकिका चैव शरयूः कार्तिकादितः॥'। मूलं हेमाद्रौ स्पष्टम्।

सिन्धु. २८९

(२)गङ्गाया अलाभेऽन्यासु स्नानादि कुर्यादित्यर्थः। महानद्यो ब्राह्मे — 'गोदावरी भीमरथी तुङ्गभद्रा च वेणिका। तापी पयोष्णी विन्ध्यस्य दक्षिणे तु प्रकीर्तिताः। भागीरथी नर्मदा च यमुना च सरस्वती। विशोका च वितस्ता च विन्ध्यस्योत्तरतः स्मृताः॥'।

सम. ७७

[2]**सर्वस्वेनापि कर्तव्यं श्राद्धं वै राहुदर्शने।**
**अकुर्वाणस्तु नास्तिक्यात् पङ्के गौरिव सीदति॥**

(१)पङ्कः कर्दम इत्यर्थः। इत्याद्यकरणे दोषः। तच्चाऽऽमेन कार्यम्, 'आपद्यनग्नौ तीर्थे च चन्द्रसूर्यग्रहे तथा। आमश्राद्धं ततः कुर्याच्छूद्रः कुर्यात्सदैव हि॥' इति शातातपोक्तेः।

सम. ७८

(२)अत्र स्नानोत्तरं तर्पणश्राद्धे अपि कार्ये। तदाह ऋष्यशृङ्गः — सर्वस्वेनापीति।

विपा. ३।२।४६६

[3]**भूमिर्गावः सुवर्णं वा धान्यं वा यद्यदीप्सितम्।**
**तत्सर्वं ग्रहणे देयमात्मनः श्रेय इच्छता॥**

(१) **मुक्ता.** २७१; **आर.** ५६; **सिन्धु.** २८९ चान्या (वाऽन्या); **सम.** ७७ प्रकु (तु कु).

(२) **सिन्धु.** २९२; **सम.** ७८; **विपा.** ३।२।४६६ ऋष्यशृङ्गः.

(३) **सम.** ७९.

शूद्रस्य द्विजशुश्रूषाविरुद्धधर्मेण वेदश्रवणादिना
च नरकप्राप्तिः

[1]**शूद्रस्तु द्विजशुश्रूषाविरुद्धं धर्ममाचरन्।**
**नरके पच्यते तद्वद्वेदश्रवणकीर्तनात्॥**

## हरिवंशः

कुत्सितानां मित्रदेशादीनां षण्णां वर्जनीयत्वं
तत्र निमित्तानि च

[2]**कुमित्रं च कुदेशं च कुराजानं कुसौहृदम्।**
**कुपुत्रं च कुभार्यां च दूरतः परिवर्जयेत्॥**
**कुमित्रे सौहृदं नास्ति कुभार्यायां कुतो रतिः।**
**कुतः पिण्डः कुपुत्रे वै नास्ति सत्यं कुराजनि॥**
**कुसौहृदे क्व विश्वासः कुदेशे न तु जीव्यते।**
**कुराजनि भयं नित्यं कुपुत्रे सर्वतोऽसुखम्॥**
**अपकारिणि विस्रम्भं यः करोति नराधमः।**
**अनाथो दुर्बलो यद्वन्न चिरं स तु जीवति॥**

विस्रम्भं विश्वासम्। नीटी.

विश्वासानर्हास्तद्विषयक-
विश्वासनिषेधश्च

**न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत्।**
**विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति॥**
**राजसेविषु विश्वासं गर्भसंकरितेषु च।**
**यः करोति नरो मूढो न चिरं स तु जीवति॥**

गर्भसंकरितेषु संकीर्णजातिषु। नीटी.

शत्रुऋणाग्नीनां शेषा न शेषणीयाः

[3]**शत्रुशेषमृणाच्छेषं शेषमग्नेश्च भूमिप।**
**पुनर्वर्धेत संभूय तस्माच्छेषं न शेषयेत्॥**

गोपूजनम्

[4]**गावो हि पूज्याः सततं सर्वेषां नात्र संशयः॥**

अप्रियमपि हितं वक्तव्यम्, अनृतवादिनि अधार्मिके
अशुश्रूषौ अप्रिये च प्रियहिते न वाच्ये

[5]**वक्तव्यं सर्वथा सद्भिरप्रियं चापि यद्धितम्।**
**आनृण्यमेतत्स्नेहस्य सद्भिरेवाऽऽदृतं सदा॥**

(१) **कूभ.** १४६.

(२) **हरिमु.** १।२०।११९-१२४.

(३) **हरिमु.** १।२०।१३१.

(४) **हरि.** ५९।६१; **हरिमु.** २।१६।४५.

(५) **हरिमु.** २।७१।६-७.

अप्रियम् अतिकटुकमपि हितं परिणामसुखम्। नीटी.

**अनृते धर्मभग्ने च न शुश्रूषति चाप्रिये।**
**न प्रियं न हितं वाच्यं सद्भिरेवेति निन्दिताः॥**

ब्राह्मणस्य पूज्यत्वमहिंसनीयत्वं च

**[1]ब्राह्मणः सर्वथा पूज्यो जन्तुभिर्धर्मकाङ्क्षिभिः।**
**पिशाचा घोरकर्माणो यतन्ते ब्रह्महिंसने॥**
**न हन्तव्याः सदा विप्रास्तद्धिंसा नरकावहा॥**

## वाल्मीकिरामायणम्

सत्यवचनस्य प्रशंसा

**[2]आहुः सत्यं हि परमं धर्मं धर्मविदो जनाः॥**
**[3]सत्यमेकपदं ब्रह्म सत्ये धर्मः प्रतिष्ठितः।**
**सत्यमेवाक्षया वेदाः सत्येनैवाऽऽप्यते परम्॥**

सत्यमेव एकपदं ब्रह्म। एकं मुख्यम्। 'एके मुख्यान्यकेवलाः' इत्यमरः (३।३।१६)। पद्यते इति पदं परमप्राप्यं ब्रह्मेऽत्यर्थः। यद्वा, एकं पदं प्रणवरूपं वाचकं यस्य तत्तथा, 'ओमित्येकाक्षरं ब्रह्म' (भगी. ८।१३) इति स्मृतेः। सत्ये धर्मः प्रतिष्ठितः सत्यमेव धर्मस्य परा काष्ठेत्यर्थः। अक्षया वेदाश्च सत्यमेव प्राधान्येन प्रतिपादयन्तीत्यर्थः। परं प्रयोजनं सत्येनैवाऽऽप्यते। राभू.

**[4]ऋषयश्चैव देवाश्च सत्यमेव हि मेनिरे।**
**सत्यवादी हि लोकेऽस्मिन्परमं गच्छति क्षयम्॥**

मेनिरे, उत्कृष्टमिति शेषः। परमं क्षयं परमं धाम। 'धिष्ण्यं धाम निकेतनं च सदनं वस्त्यं च वास्तु क्षयः' इति वैजयन्ती। राभू.

**उद्विजन्ते यथा सर्पान्नरादनृतवादिनः।**
**धर्मः सत्यं परो लोके मूलं स्वर्गस्य चोच्यते॥**

उद्विजन्ते, जना इति शेषः। राभू.

**[5]सत्यमेवेश्वरो लोके सत्यं पद्मा समाश्रिता।**
**सत्यमूलानि सर्वाणि सत्यान्नास्ति परं पदम्॥**

(१) **हरिमु.** ३।८३।११-१२.
(२) **वारा.** २।१२।३; **वाराकु.** २।१४।३.
(३) **वाराकु.** २।१४।७.
(४) **वारा.** २।१०१।११-१२; **वाराकु.** २।१०९।११-१२.
(५) **वारा.** २।१०१।१३; **वाराकु.** २।१०९।१३ समाश्रिता (श्रिता सदा).

ईश्वरः नियन्ता व्यवस्थापक इति यावत्। राभू.

**[1]दत्तमिष्टं हुतं चैव तप्तानि च तपांसि च।**
**वेदाः सत्यप्रतिष्ठानास्तस्मात्सत्यपरो भवेत्॥**

सत्यप्रतिष्ठानाः सत्याधाराः। सत्यप्रतिष्ठानानीति विपरिणम्य पूर्वार्धेन योज्यम्। राभू.

क्रोधजयप्रशंसा

**[2]धन्यास्ते पुरुषश्रेष्ठा ये बुद्ध्या कोपमुत्थितम्।**
**निरुन्धन्ति महात्मानो दीप्तमग्निमिवाम्भसा॥**
**[3]यः समुत्पतितं क्रोधं क्षमयैव निरस्यति।**
**यथोरगस्त्वचं जीर्णां स वै पुरुष उच्यते॥**

शरणागतरक्षणम्

**[4]ऋषेः कण्वस्य पुत्रेण कण्डुना परमर्षिणा।**
**शृणु गाथां पुरा गीतां धर्मिष्ठां सत्यवादिना॥**
**[5]बद्धाञ्जलिपुटं दीनं याचन्तं शरणागतम्।**
**न हन्यादानृशंस्यार्थमपि शत्रुं परंतप॥**

अथ कण्डुगाथायां चतुःश्लोक्यामाद्यश्लोकेन पूर्णप्रपत्त्यसिद्धावपि गत्यन्तरशून्यतया आत्मनिक्षेपाभिप्रायव्यञ्जकशरणागतिशकलतुल्याञ्जलिबन्धादिमात्रविधामपि हानिं न नयेत्, तत्करणमनुग्रहावहमित्याह — बद्धाञ्जलिपुटमिति। अनुकूलबुद्धिवाग्वृत्त्यभावेऽपि अञ्जलिमात्रमेवालम्। 'अञ्जलिः परमा मुद्रा क्षिप्रं देवप्रसादिनी' इति स्वतन्त्रस्यापि आशु दयाजननी मुद्रा खल्वियम्। दीनम् एवमञ्जलिबन्धमात्रं विनाऽपि कार्पण्यद्योतनावस्थानमेवालम्। याचन्तम् अञ्जल्याद्यभावेऽपि कार्पण्यद्योतनेऽप्यहृदयप्रार्थनैवालम्। शरणागतम् अञ्जलिबन्धादित्रयेऽप्यविद्यमाने रक्षकनिवासस्थलाभिगमनमेवालम्। पूर्वं स्वरक्षाभरनिक्षेपरूपशरणागतिशकलान्युक्त्वा शरणागतमिति पूर्णप्रपत्तिरुक्तेति वा स्यात्। अपि शत्रुं साक्षाच्छत्रुमपि न हन्यात्। अयं शास्त्रार्थ

(१) **वारा.** २।१०१।१४; **वाराकु.** २।१०९।१४.
(२) **वारा.** ५।५३।३; **वाराकु.** ५।५५।४; **मोक.** ८३ श्रेष्ठा (व्याघ्र).
(३) **वाराकु.** ५।५५।७.
(४) **वारा.** ६।१२।१३; **वाराकु.** ६।१८।२६ वादिना (वादिनीम्).
(५) **वारा.** ६।१२।१४; **वाराकु.** ६।१८।२७.

ऐहिकाभ्युदयार्थो वा परलोकार्थो वा प्रत्यवायपरिहार्थो वेत्युक्ते सति तेभ्यः प्राक्प्रयोजनान्तरमाह – आनृशंस्यार्थमिति। अघातुकत्वसिद्ध्यर्थमित्यर्थः। नृशंसोऽयमिति लोकापवादपरिहारार्थमिति यावत्। यद्वा, आनृशंस्यं सकलधर्मसारभूतो दयागुणः, तद्रक्षणार्थं वा। यथोक्तं सीतया – 'आनृशंस्यं परो धर्मस्त्वत्त एव मया श्रुतः' इति। परंतपेति कण्डुरपि कंचिद्राजानं प्रत्युक्तवानिति गम्यते। परंतप। शरणागते किं रोषप्रकटनेन? प्रत्यर्थिषु खलु तत्कर्तव्यमिति भावः। राभू.

**[1]आर्तो वा यदि वा दृप्तः परेषां शरणं गतः।**
**अरिः प्राणान् परित्यज्य रक्षितव्यः कृतात्मना॥**

पूर्वं न हन्यादिति स्वेन क्रियमाणं हननमात्रं प्रतिषिद्धम्। अत्र स्वेतरक्रियमाणशरणागतपीडायामपि शरणागते आर्तत्वदृप्तत्वविभागालोचनेन प्राणान्हित्वा तद्रक्षणं कार्यमित्याह – आर्तो वेति। आर्तः स्वाभिमतसंभवे विलम्बाक्षमतीव्रसंवेगवान्वा शरणागमनवेलायामपि स्वापराधनिमित्तभयादिमान्वेत्यर्थः। दृप्तस्तु विलम्बाविलम्बावनादृत्य फलसिद्धिमात्रसक्तः, अस्यां वेलायां विनयस्वापराधभयशून्यो वा। मुमुक्षुपक्षे संसारजुगुप्सानुसंधानेन सद्य एव देहनिवृत्तिकाम आर्तः, दृप्तः शरीरावसाने मुक्तिकामः। यद्वा आकिंचन्यानन्यगतित्वपुरःसरं प्रपन्न आर्तः, स्तोभहेलनादिरूपेण शरणागतोऽस्मीति ब्रुवन् दृप्तः। परेषां शरणागतः स्वव्यतिरिक्तशरणागतः। यद्वा, परेषामिति निर्धारणे षष्ठी। परेषां मध्ये शरणागतोऽरिः वैरे हृदि विद्यमानेऽपि शरणागतिशब्दमात्रमभिदधानः पुरुषः कृतात्मना निश्चितमनस्केन, धर्मशास्त्रविश्वासशालिनेत्यर्थः, प्राणान्परित्यज्य रक्षितव्यः। अस्थिरान्प्राणान्परित्यज्य स्थिरं शरणागतरक्षणं कर्तव्यम्। कृतात्मनेति विशेषणेन विदुषोऽतिक्रमे दण्डभूयस्त्वमुक्तम् (गौध. ९।३५) शरणागतरक्षणशास्त्रस्य निरवकाशत्वात् सर्वथैवाऽऽत्मानं गोपायेत् इति शास्त्रस्य सावकाशत्वात्तद्व्यतिरिक्तविषयेऽप्य(?येष्व)वस्थाप्यमिति भावः। राभू.

(१) **वारा.** ६।१२।१५; **वाराकु.** ६।१८।२८ णं गतः (णागतः).

**[1]स चेद्भयाद्वा मोहाद्वा कामाद्वाऽपि न रक्षति।**
**स्वया शक्त्या यथासत्त्वं तत्पापं लोकगर्हितम्॥**

एवं शरणागतरक्षणधर्मे चोदनामभिधाय तदरक्षणे प्रत्यवायमाह – स चेदिति। भयात् तद्रक्षणे तच्छत्रुसकाशात् तस्माद्वा किरातन्यायेन स्वस्यापि भयमुत्प्रेक्ष्य ततो हेतोः। मोहात् शास्त्रार्थापरिज्ञानात्। कामात् स्वच्छन्दवृत्तिस्वाभाव्यात् तच्छत्रुसकाशात्किंचिल्लाभापेक्षणाद्वा। स्वया शक्त्या स्वकीयेन केनचित्सामर्थ्यप्रकारेण। स्वसहायसंपादनस्वकीयद्रव्यदानादिना शरीरत्यागपर्यन्तेनोपायकलापेनेत्यर्थः। यथासत्त्वं सत्त्वमनमितक्रम्य शक्तौ सत्यामपि येन केनचिच्छलेन शक्तिवञ्चनामकृत्वा। तत् अरक्षणं पापं प्रत्यवायहेतुः। अनेन निरयहेतुत्वमुक्तम् न केवलं परलोकबाधकम्, इह लोकेऽपि सर्वजनगर्हितमित्याह – लोकगर्हितमिति। राभू.

**[2]विनष्टः पश्यतस्तस्य रक्षिणः शरणागतः।**
**आदाय सुकृतं तस्य सर्वं गच्छेदरक्षितः॥**

न केवलमैहिकानर्थहेतुत्वमात्रम्, पूर्वसंचितसकलसुकृतविनाशक(?कत्व)मपीत्याह – विनष्ट इति। यः कश्चिद्यं कंचिच्छरणमागतः तमरक्षिणस्तस्य पश्यतः रक्षकत्वेन वृते समर्थे च तस्मिन्पश्यति तेनारक्षणेनैव स्वशत्रुसकाशाद्विनष्टश्चेत् तस्य अरक्षकस्य संबन्धि अनादिकालसंचितं सर्वं सुकृतमादाय गच्छति। अरक्षकस्य समार्जितसकलसुकृतक्षयो भवतीत्यर्थः। राभू.

**[3]एवं दोषो महानत्र प्रपन्नानामरक्षणे।**
**अस्वर्ग्यं चायशस्यं च बलवीर्यविनाशनम्॥**

कण्डुवचनचतुःश्लोकीतात्पर्यं संग्रहेणाऽऽह – 'एवं दोषो महानत्र प्रपन्नानामरक्षणे' इत्यर्धेन। विस्तरेणाऽऽह – अस्वर्ग्यमित्यादिना। अस्वर्ग्यं स्वर्गविरुद्धं नरकहेतुभूतमित्यर्थः। अयशस्यं अकीर्तिकरम्। बलवीर्यविनाशनं ययोः शारीरबलवीर्ययोः सतोरेव शरणागतो न रक्षितः

(१) **वारा.** ६।१२।१६; **वाराकु.** ६।१८।२९.
(२) **वारा.** ६।१२।१७; **वाराकु.** ६।१८।३० स्य रक्षिणः (स्यारक्षिणः).
(३) **वारा.** ६।१२।१८; **वाराकु.** ६।१८।३१.

तयोर्विनाशकमित्यर्थः। अत्र अरक्षणमिति विशेष्यमनुषज्यते। राभू.

## मनुः

संक्षेपेणाध्ययनादय-
श्चातुर्वर्ण्यधर्माः

***[1]अध्यापनमध्ययनं यजनं याजनं तथा।**
**दानं प्रतिग्रहं चैव ब्राह्मणानामकल्पयत्॥**
**प्रजानां रक्षणं दानमिज्याऽध्ययनमेव च।**
**विषयेष्वप्रसक्तिश्च क्षत्रियस्य समासतः॥**
**पशूनां रक्षणं दानमिज्याऽध्ययनमेव च।**
**वणिक्पथं कुसीदं च वैश्यस्य कृषिमेव च॥**
**एकमेव तु शूद्रस्य प्रभुः कर्म समादिशत्।**
**एतेषामेव वर्णानां शुश्रूषामनसूयया॥**

ब्राह्मणस्य जपधर्मः श्रेयान्,
सर्वभूतमैत्री ब्राह्मणगुणः

**[2]जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः।**
**कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते॥**

(१) जप्येनैव सिद्धिं काम्यफलावाप्तिं ब्रह्मप्राप्तिं वा प्राप्नुयात्। नात्र हृदि शङ्का कर्तव्या यत् 'ज्योतिष्टोमादिभ्यो महाप्रयासेभ्यो भावनाभ्यश्च यल्लब्धव्यं तज्जपेन कथं सिध्यति?' इति। सिध्यत्येव। कुर्यात् अन्यत्। अनित्यं ज्योतिष्टोमादि, अथवा तदपि न कुर्यात् यतो मैत्रो ब्राह्मण उच्यते। मित्रमेव मैत्रम्(?त्रः)। सर्वभूतमैत्रीरतेन ब्राह्मणेन भवितव्यम्। अग्नीषोमीयपशुहिंसायां च कुतो मैत्री? अयमर्थवाद एव, न पुनः पश्वङ्गकर्मप्रतिषेधः, पूर्वशेषत्वावगतेः, प्रत्यक्षश्रुतिविहितत्वाच्च तेषाम्। अतिक्रान्तो जपविधिः। मेधा.

(२)जप्येनैव ब्राह्मणो मोक्षं प्राप्नुयात्। अत्र संशय एव नास्ति..., द्रव्यत्यागादप्यन्तःसंयमस्य दुष्करत्वात्। एवं श्रौतस्मार्तकर्मानुष्ठानाशक्तो जप्यपरः पुरुषः संसिध्यति। *गोरा.

(३)संसिध्येत् मोक्षं लभेत। तद्वि(?तदवि)रोधेनान्यन्न(?न्यत्) कुर्यात् इत्युपक्रम्य स्वसिद्धान्तमाह – न (वा) कुर्यादिति। मैत्रः अहिंस्रः। विधियज्ञानां बीजपश्वादिहिंसयैवाऽऽवृत्तिरित्यर्थः। मवि.

(४)ब्राह्मणः ब्रह्मणः संबन्धी। 'ब्रह्मणि लीयते' इत्यागमेषूच्यते। मित्रमेव मैत्रः। स्वार्थेऽण्। ×ममु.

(५)जप्येन मन्त्राणां जपेन संसिध्येत् अन्तःकरणशुद्धिं लभेत, 'धर्मेण पापमपनुदति' इति, 'महतोऽप्येनसो मासात् त्वचेवाहिर्विमुच्यते' इति, 'जपतो नास्ति पातकम्' इति श्रुतेः। स्मृतिः याम् (?)। अन्यत् यागादिकम्। मैत्रः, मित्रः सूर्यः, तद्दैवत्यः गायत्र्युपासकः। अथवा प्राणिमात्रप्रियः। अण् स्वार्थिकः। ब्राह्मणः ब्रह्मनिष्ठः कृतसाक्षात्कार उच्यते 'खमूर्तिमान्' (मस्मृ. २।८२) इत्युक्तम्, 'स ब्राह्मणः केन स्याद्येन स्यात्' (बृउ. ३।५।१) इत्यादिश्रुतेः। मच.

(६)सर्वानुकूल्यं मैत्री, तस्मात् मैत्रत्वेन हिंसानुबन्धिनो विधियज्ञाज्जपयज्ञो ब्राह्मणस्य विशिष्टतर इत्यर्थः। मुक्ता. ३५२

(७)ब्राह्मणस्य विशेषेण जपः परमो धर्म इत्याह – जप्येनेति। संसिध्येत् मुक्तो भवति। अन्यत्कर्म कुर्यान्न वा कुर्यात्। अत्र हेतुर्मैत्रो ब्राह्मण इति। σनन्द.

(८)ब्राह्मणः गायत्र्या जाप्येनैव संसिध्येत्। अन्यज्जपादिकं कुर्याद्वा न वा कुर्यात्। ब्राह्मणः मैत्रः अहिंस्रः उच्यते। भाच.

सर्वसिद्धिमूलस्येन्द्रियनिग्रहस्य विधिः
लक्षणं च

**[1]इन्द्रियाणां विचरतां विषयेष्वपहारिषु।**
**संयमे यत्नमातिष्ठेद्विद्वान्यन्तेव वाजिनाम्॥**

---

* अस्य श्लोकचतुष्टयस्य व्याख्यानानि 'वर्णाः तद्वृत्तयश्च' इत्यस्मिन् प्रकरणे (वका. पृ. ११५४-११५५) द्रष्टव्यानि।

(१) **मस्मृ.** १।८८-९१ शेषाः स्थलादिनिर्देशाः 'वर्णाः तद्वृत्तयश्च' इत्यस्मिन् प्रकरणे (वका. पृ. ११५४) द्रष्टव्याः.

(२) **मस्मृ.** २।८७; **मभा.** १०।१ पू.; **स्मृच.** २।४९७ पू.; **निप्र.** २।६० मनुर्यमो वसिष्ठो हारीतश्च; **मुक्ता.** ३५२; **भाच.** जप्ये (जाप्ये).

* शेषं मेधावत्।

× शेषं गोरावत्।

σ शेषं मुक्तावत्।

(१) **मस्मृ.** २।८८; **मपा.** ३९; **मुक्ता.** १२२ विच (हि च); **आन.** ४८८-४८९ विच (हि च) द्विद्वान् (न्नित्यं).

(१)इन्द्रियाणां संयमे यत्नमातिष्ठेदित्येतावाञ्छास्त्रार्थः, परिशिष्टोऽर्थवादः आ संध्योपासनविधेः। संयमः प्रतिषिद्धेषु विषयेषु प्रवृत्तिपरिहारः, अप्रतिषिद्धेष्वप्यतिसक्तिवर्जनम्। तत्र प्रतिषिद्धपरिहारस्तैरेव प्रतिषेधैः सिद्धः। अप्रतिषिद्धेष्वप्यतिसक्तिनिषेधार्थोऽयं श्लोकसंघातः। एतदेवाऽऽह — विचरतां विषयेषु स्वातन्त्र्येण वस्तुशक्त्या प्रवर्तमानानाम् अपहारिषु विषयेषु अपहरन्ति आकर्षन्ति आत्मसात्कुर्वन्ति पारतन्त्र्यमापादयन्ति पुरुषं ते अपहारिणो विषयाः, मनोहरा य उच्यन्ते। तत्र विचरतां विविधं विशेषेण चरताम्। यदीन्द्रियाणिं विशेषेण न चरेयुरपहारिणोऽपि तदा विषयाः किं कुर्युः? भवन्तु वा निरङ्कुशानीन्द्रियाणि, यदि विषयाः प्रत्याख्यायकास्तथाऽपि सुसंयमः पुरुषेणाऽऽत्मा। यतस्तूभयं सापराधमतो यत्न आस्थेयः, दुर्नियमानि ह्येतानि। यन्तेव वाजिनाम्। यन्ता सारथिः अश्वानां यथा रथयुक्तानां स्वभावतो विचलनशीलानां संयमे नियमे यत्नं करोति, ते न 8तदाऽनिच्छया उन्मार्गेण वहन्ति, विधेयतां तस्य भजन्ते, एवमिन्द्रियाणि विधेयीकर्तव्यानि। मेधा.

(२)इन्द्रियाणां चक्षुरादीनां विषयेषु रूपादिषु अपहारिषु च उपभोगार्थमाकर्षणशीलेषु यथेच्छं प्रवर्तमानानां नियमने प्रयत्नं कुर्यात्। यथा शिक्षितः सारथिः रथ्यारब्धानाम्(?) अश्वानां नियमने यत्नं करोति। # गोरा.

(३)जप्ये अवश्योपसंहार्यमङ्गं दर्शयति — इन्द्रियाणामित्यादिना। अपहारिषु इन्द्रियावकर्षकेषु। यन्तेवेत्येकाग्रतार्थं दृष्टान्तः। मवि.

(४)इदानीं सर्ववर्णानुष्ठेयं सकलपुरुषार्थोपयुक्तमिन्द्रियसंयममाह — इन्द्रियाणामिति। *ममु.

(५)'इन्द्रियाणां विचरताम्' इत्यारभ्याभिहिता धर्मा न केवलं ब्रह्मचारिणाम्, अपि तु इतरेषामपि संभवन्ति। मपा. ४०

(६)अनुपसंहृतेन्द्रियाणां जपोऽपि न फलायेति तदर्थं प्रत्याहारमाह — इन्द्रियाणामिति। *मच.

**[1]इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम्।**
**संनियम्य तु तान्येव ततः सिद्धिं नियच्छति॥**

(१)प्रसङ्गः तत्परता। तेन हेतुभूतेन दोषं दृष्टमदृष्टं च ऋच्छति प्राप्नोति। नात्र संशयः, निश्चितमेतत्। संनियम्य तानि इन्द्रियाणि ततः सिद्धिम् अभिप्रेतार्थावाप्तिं श्रौतस्मार्तकर्मणामनुष्ठानफलं निःशेषं गच्छति प्राप्नोति। मेधा.

(२)दृष्टादृष्टपुरुषार्थसिद्धिम्। ×गोरा.

(३)दोषं पापम्। सिद्धिं मोक्षम्। ×मवि.

(४)मनोधर्मसंकल्पमूलत्वादिन्द्रियाणां प्रायेण प्रवृत्तेः किमर्थमिन्द्रियनिग्रहः कर्तव्य इत्यत आह — इन्द्रियाणामिति। यस्मादिन्द्रियाणां विषयेषु प्रसक्त्या दृष्टादृष्टं च दोषं निःसंदेहं प्राप्नोति। तान्येव पुनरिन्द्रियाणि सम्यङ्नियम्य सिद्धिं मोक्षादिपुरुषार्थयोग्यतारूपां लभते। तस्मादिन्द्रियसंयमं कुर्यादिति शेषः। σ ममु.

(५)दोषं संसाराख्यम्। सिद्धिं मनःशुद्धिद्वारा मोक्षाख्याम्। तथा च गीता — 'सिद्धिं प्राप्तो यथा ब्रह्म तथाऽऽप्नोति निबोध मे' (भगी. १८।५०) इति। 8मच.

**न जातु कामः कामानामुपभोगेन शाम्यति।**
**हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते॥**

(१)तिष्ठतु तावद्विषयाभिलाषः शास्त्रोपदेशान्न क्रियते, किंतु दृष्टमेव सुखं तावन्निवृत्तेर्भवति। तथाहि — सेव्यमाना विषया अपि अधिकं गर्धमुत्पादयन्ति। उदरपूरं भुक्तवतस्तृप्तस्यातिसौहित्यमपि गतवतो भवति हृदयसमीहा किमिति न शक्नोमि अन्यद्भोक्तुम्?, अशक्त्या तु न प्रवर्तते। ततो नैषा भोगेन शक्या निवृत्तिः, न कदाचित् कामः अभिलाषः कामानां काम्यमानानां स्पृहणीयानामर्थानाम् उपभोगेन सेवया

8 'तदिच्छया' इति, 'तदा स्वेच्छया' इति वा पाठो भवितुं युक्तः। प्रथमपाठे तच्छब्देन वाजिनां परामर्शः।

# नन्द. गोरागतम्।

* शेषं गोरागतम्।

* शेषं गोरागतम्।

× शेषं मेधागतम्।

σ नन्द., भाच. ममुगतम्।

8 शेषं ममुगतम्।

(१) **मस्मृ.** २।९३-९४.

शाम्यति निवर्तते, भूयः अधिकतरं वर्धते। हविषा घृतेन कृष्णवर्त्मा अग्निः इव। दुःखरूपश्चाभिलाषः। अनुपभुक्तरसस्य त्वभिलाषानुत्पत्तिः। तत्त्वप्रसंख्यानमेतत्। उक्तं च – 'यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः। नालमेकस्य तत्सर्वमिति मत्वा शमं व्रजेत्॥' (भा.५।३९।६९)। *मेधा.

(२)कामानां भोगानाम्। कृष्णवर्त्मेत्युचितपदन्यासः। # मवि.

**[1]वेदास्त्यागश्च यज्ञाश्च नियमाश्च तपांसि च।**
**न विप्रदुष्टभावस्य सिद्धिं गच्छन्ति कर्हिचित्॥**

(१)अयमत्र विधिरेव। वेदाः तद्विषयमध्ययनजपादि। त्यागः दानं लक्षणया। अथवाऽप्रतिषिद्धस्यापि मधुमांसभक्षणादेर्निवृत्तिः फलदेत्यनेन वर्जनम्। विप्रदुष्टः भावः चित्तं यस्य तस्य सिद्धिं न गच्छन्ति फलसाधकानि न भवन्ति, कस्मिंश्चिदपि काले। अतोऽनुष्ठानकाले नाभिप्रेतादिगतमानसेन भवितव्यम्। शक्यं-(?कथं) तर्हि? सर्वेतरविकल्पतिरस्कारेण कर्मणि मन आधेयम्। अङ्गं हि कर्मसु विषयचिन्तात्यागोऽनेन वाक्येन विहितः। तदभावे कर्मनैष्फल्यं स्यात्। एष हि भावदोषो यत्कर्मानुष्ठाने प्रवृत्तस्य तत्परतात्यागेन व्यसनेषु मनोवधानम्।

σ मेधा.

(२)नियमाः स्नातकव्रतादीनि। तपांसि कृच्छ्रादीनि। δ मवि.

(३)अत एवाऽऽत्मानात्मविवेकशून्यस्य न केऽपि शोधका इत्याह – वेदा इति। वेदाः अभ्यस्यमानाः, त्यागाः संन्यासाः दानं वा, नियमाः शौचसंतोषादयः, तपांसि कृच्छ्रादीनि, एते अनुष्ठीयमाना अपि। विप्रदुष्टभावस्य स्त्र्यादिष्वत्यासक्तस्य।

मच.

(४)न केवलब्रह्मचारिणामेवायमिन्द्रियासंयमो दोषावहः, किंतु सर्वाश्रमिणामित्यभिप्रायेणाऽऽह – वेदा इति। विप्रदुष्टभावस्य कामक्रोधादिदूषितचित्तस्य। भावदोषाणामिन्द्रियासंयमहेतुत्वादिन्द्रियसंयमः कर्तव्य इति भावः। ×नन्द.

**[1]श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा च यो नरः।**
**न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रियः॥**

(१)श्रुत्वा वंशगीतादिध्वनिम्, 'त्वं बृहस्पतिः' इत्यादिवचनं श्रुत्वा न हृष्यति। रूक्षपरुषाक्रोशवाचः श्रुत्वा न ग्लायति न मनो दुःखं भजते। ग्लानिः खेदः। स्पृष्ट्वा राङ्कवकौशेयादिवस्त्रम् अजलोमकृतं च समत्वेनानुभवति। एवं सुवेषतरुणीजननटप्रेक्षासु शत्रुदर्शने च समः। बहुघृतं क्षी(?घृतक्षी)रषष्टिकां-(?कान्) कोद्रवांश्च समं(?) भोजने। देवदारुतैलं कर्पूरादि च तुल्यं जिघ्रतः। तथा कर्तव्यं यथा केवलैर्मानसैः सुखदुःखैर्न स्पृश्यते। एवं तेन जितानीन्द्रियाणि भवन्ति, न त्वप्रवृत्त्यैव। इयत्पर्यन्तः संयमः आश्रयणीयः। +मेधा.

(२)तर्हि विषयाभोगे मृतिरेव, तत्राऽऽह – श्रुत्वेति। भोगो न प्रतिबन्धकः, किं त्वासक्तिः। तदुक्तम् – 'पश्यन् शृण्वन् स्पृशन्' इत्यादि 'इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन्' (भगी. ५।८, ९) इत्यन्तं भगवता कृष्णेन। मच.

(३)इदानीमिन्द्रियसंयमं स्वरूपतो विविनक्ति – श्रुत्वेति। मनोविकारराहित्यमिन्द्रियसंयम इत्यभिप्रायः। नन्द.

(४)(ग्लायति) 'ग्लै हर्षे (? हर्षक्षये)' इत्यस्य धातो रूपम्। *भाच.

**[2]इन्द्रियाणां तु सर्वेषां यद्येकं क्षरतीन्द्रियम्।**
**तेनास्य क्षरति प्रज्ञा दृतेः पादादिवोदकम्॥**

(१)ननु च ब्रह्मचारिणा स्त्रीसंबन्धो यत्नेन वर्ज्यः, संस्कृतभिक्षालाभ(?लोभ)स्तु किमिति निषिध्यते? अत

---

* गोरा., ममु., मच., नन्द., भाच. मेधागतम्।
\# शेषं मेधागतम्।
σ गोरा., ममु., भाच. मेधागतम्।
δ शेषं मेधागतम्।
(१) मस्मृ. २।९७; मवि. स्त्याग (स्त्यागा); मच. मविवत्; नन्द. मविवत्.

× शेषं मचवत्।
+ गोरा., मवि., ममु. मेधागतम्।
* शेषं मेधागतम्।
(१) मस्मृ. २।९८.
(२) मस्मृ. २।९९; मेधा. तेनास्य (ततोऽस्य); मोक. ९७; स्मृच. ११।२२; ममु. मेधावत्; मपा. ४०; संप्र. ४९३; संग. ७०१.

आह — इन्द्रियेति। निर्धारणे षष्ठी। एकमेव यदीन्द्रियं क्षरति स्वातन्त्र्येण स्वविषये वर्तमानं न निवार्यते, ततोऽस्य क्षरति प्रज्ञा धैर्यम् इन्द्रियान्तरविषयमपि। दृतिः छागादिचर्म उदकाद्याहरणभाजनम्, तस्य संवृतेष्वपीतरेषु यद्येकस्मादुदकं पादात्स्रवति, सर्वं रिच्यते। ज्ञानाभ्याससंभृतं धैर्यं सम्यग्ज्ञानमेव वा। विषयगृध्नुतया तद्गतमानसस्य न तत्त्वतो युक्तिशास्त्रगम्या अर्थाः सम्यक् प्रतिभासन्ते।

*मेधा.

(२)सकलेन्द्रियविषयस्य संयमे यत्नः कार्यः। यस्मात् — इन्द्रियाणामिति। # गोरा.

(३)क्षरति विषये सज्य(? ज्ज)ते क्षरति प्रज्ञा सर्वा बहिः संबध्यते। दृतेः जलसेकार्थं कृतस्य चर्मभाण्डस्य जलनिर्गमार्थं कृते (?तस्य) अनेकसच्छिद्रधारा-रूपपादवतः एकेनापि पादेन यथा सर्वजलसेको भवतीत्यर्थः। मवि.

(४)संयतेन्द्रियस्य सिद्धिहेतुतोक्ता। तत्र सर्वेषाम् अप्रवृत्तावप्येकस्य प्रवृत्तौ को दोषस्तत्राऽऽह — इन्द्रियाणां त्विति। तथा च विषयेन्द्रियसंयोगान्मनः क्षुभ्यति नान्यथा। अत्र गीता — 'इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते। तदस्य हरति प्रज्ञां वायुर्नाव-मिवाम्भसि॥' (भगी. २।६७) इति। मनःसहकृतं यदिन्द्रियं चक्षुरादि तद्धरतीति गीतार्थः। एवं प्रसक्तम् इन्द्रियमात्रं प्रज्ञां हरतीति भावः। $मच.

**[१]वशे कृत्वेन्द्रियग्रामं संयम्य च मनस्तथा।**
**सर्वान्संसाधयेदर्थानक्षिण्वन् योगतस्तनुम्॥**

(१)उपसंहरति — वश इति। सत्यपीन्द्रियत्वे मनसः प्राधान्यात्पृथगुपादानम्। ग्रामः संघातः। विधेयी-कृत्येन्द्रियाणि तथा मनः सर्वानर्थान् श्रौत-स्मार्तकर्मसाध्यान् संसाधयेत् निष्पादयेत्। तनुं शरीरम् अक्षिण्वन् अपीडयन् योगतः युक्त्या। सहसा कस्य-चित्कठिनासनकृष्णाजिनादिप्रावरणात् पीडा भवति सुकुमारप्रकृतेः, तदर्थमिदमुच्यते। येषां सुशीलितं सुसंस्कृतं भोजनं मृदुशय्यादि, न तैः सहसा तत्त्यक्तव्यम् अपि तु क्रमेण सात्म्यतामानेतव्यं तद्विपरीतम्। योगः क्रमेण प्रवृत्तिरुच्यते। तत्र च योगतो वशे कृत्वेति संबन्धः, यथास्थानमेव वा योगत इति योजनीयम्। युक्त्या औचित्यतः शरीरं नापन(? न पीड)येत्, त(?य)दुचितं शरीरस्य न तज्झटिति निवर्तयेत्। तात्पर्यं वा योगः। तृतीयार्थे तसिः। तात्पर्येण शरीरं रक्षेत्। मेधा.

(२)यत एवमसंजितेन्द्रियमनस्कस्य न वेदादिसिद्धिः तस्मात् — वश इति। शक्त्या शरीरमपीडयन्। ...सर्वान् वेदाधिगमादीनर्थान्। $गोरा.

(३)सर्वान् अर्थान् स्वर्गादीनपि। योगतः अपेक्षितदेवतादिध्यानतः, न चेन्द्रियसंयममात्रात्।

$मवि.

(४)इन्द्रियसंयमस्य सर्वपुरुषार्थहेतुतां दर्शयति — वशे कृत्वेति। योगतः उपायेन। $ममु.

(५)प्रकरणार्थं निगमयन् तस्य पुमर्थपर्यव-सायितामाह — वशीति। योगतः योगोपायेन। अवर्जनीयविषयसेवयेति यावत्। $मच.

(६)अर्थान् श्रवणादीन्। मुक्ता.१८७

(७)इन्द्रियसंयमफलमाह — वश इति। योगतः योगेन समाधिलक्षणेन अर्थान् पुरुषार्थान् संसाधयेत् सम्यक्साधयितुं शक्नुयात्। तनुमक्षिण्वन् तपोभिः शरीरमपीडयन्। नन्द.

(८)योगतः योगाभ्यासतः। ϕ भाच.

सर्वार्थसाधिका वाङ्मनःशुद्धिः

**[१]यस्य वाङ्मनसी शुद्धे सम्यग्गुप्ते च सर्वदा।**
**स वै सर्वमवाप्नोति वेदान्तोपगतं फलम्॥**

(१)यस्य अध्यापयितुरन्यस्य वा संक्षोभहेतौ सति वाङ्मनसी शुद्धे, न कालुष्यं गच्छतः, सम्यग्गुप्ते च।

* मोक., ममु., संप्र., भाच., संग. मेधागतम्।
# शेषं मेधागतम्।
$ शेषं मेधागतम्। नन्द. गोरावत् मविगतं मचगतं च।
(१) मस्मृ. २।१००; मपा. ४० वशे कृत्वे (वशीकृत्ये); मच. मपावत्; मुक्ता. १८७.

$ शेषं मेधागतम्।
ϕ शेषं मेधागतम्।
(१) मस्मृ. २।१६०; गोरा. मनसी (मनसे); ब्रक. २३३; मुक्ता. ११४ सम्यग्गुप्ते (सत्ये गुप्ते) : १८७ मनसी (मनसे); यसं. ४०; भाच. गोरावत्.

उत्पन्नेऽपि कालुष्ये न परद्रोहव्यवसायः, न च तत्पीडार्थः कर्मारम्भः, एतत्सम्यग्गोपनं वाङ्मनसयोः। सर्वदाग्रहणं पुरुषमात्रधर्मार्थम्, नाध्यापयितुरेव अध्यापनकाले। स वै सर्वमवाप्नोति। वेदान्ताः वेदसिद्धान्ताः। सिद्धशब्दस्यात्यन्तं सिद्ध इति 'सिद्धे शब्दार्थसंबन्धे' इत्यत्रात्यन्तशब्दस्येव लोपः। वैदिकेषु वाक्येषु यः सिद्धान्तः व्यवस्थितार्थः 'अस्य कर्मण इदं फलम्' इति, उपगतः अभ्युपगतः वेदविद्भिः, तत्फलं सर्वं प्राप्नोति। एवं च वदता वाङ्मनससंयमस्यानेन वाक्येन क्रतुपुरुषोभयधर्मतोक्ता भवति। केवलपुरुषधर्मातिक्रमे ह्यसति क्रतुवैगुण्येऽसंयतोऽपि वाङ्मनसाभ्यां किमिति कृत्स्नं फलं न प्राप्नोति? येनोच्यते 'संयमी सर्वमाप्नोति' इति।

अन्ये तु वेदान्तान् रहस्यब्राह्मणन्(? णानि) व्याचक्षते। तेषु यदभ्युपगतं फलं, नित्यानां कर्मणां निष्फलानां यमनियमानां च तत्फलं ब्रह्मप्राप्तिलक्षणं सर्वमाप्नोति। कथं पुनर्नित्यानि ब्रह्मप्राप्त्यर्थानि? इति चेत्, अस्ति केषांचिद्दर्शनम्। अथवा वेदस्यान्तः अध्यापन(? ध्ययन)समाप्तिः, ततो यत्फलम् आचार्यकरणविधिः, तत्प्राप्नोति। एवं तु व्याख्यानेऽध्यापनविध्यर्थतैव स्यात्। मेधा.

(२)सर्वदा यावज्जीवम्, उपनिषदुक्तं मोक्षाख्यं फलमखिलं प्राप्नोति। §गोरा.

(३)शुद्धे निर्दोषे। सम्यग्गुप्ते, दोषफलरहिते। सर्वं सायुज्यादि वेदान्तोपगतम् उपनिषत्प्रतिपादितम्। ब्रक.२३३

(४)वक्ष्यमाणपूर्वोक्तवाङ्माधुर्यादिस्तुतिः – यस्येति। वाक्शुद्धिः माधुर्यादि। मनःशुद्धिः अक्रोधादि। वाचो गुप्तता रक्षा अनृतादिनिवर्तनात्, मनसः अनिष्टध्यानादिनिवर्तनात्। वेदान्तादुपगतम् अधिगतं मोक्षाख्यम्। मवि.

(५)इदानीं पुरुषमात्रस्य (स)फलं धर्मं वाङ्मनःसंयममाह – यस्येति। नाध्यापयितुरेव। यस्य वाङ्मनश्चोभयं शुद्धं भवति, वागनृतादिभिरदुष्टा मनश्च रागद्वेषादिभिरदूषितं भवति, एते वाङ्मनसी निषिद्धविषयप्रकरणे सर्वदा यस्य पुंसः सुरक्षिते भवतः, स वेदान्तेऽवगतं सर्वं फलं सर्वज्ञत्वं सर्वेशाना-(?ज्ञत्वसर्वेशानत्वा)दिरूपं मोक्षलाभादवाप्नोति। ममु.

(६)'यन्मनसा ध्यायति तद्वाचा विलपति' इति श्रुतेः तत्कारणस्य मनसोऽपि शुद्धिः कार्येत्याह – यस्येति। यस्य गुरोः। संक्षोभहेतौ सति क्रोधरागद्वेषानभिभवत्वं मनसः शुद्धिः। वाचः शुद्धिरुक्ता। गुप्ते असत्यादितो रक्षिते प्रकर्षेण। सर्वात्मकं वेदान्तोपगतं ब्रह्म। वागिति दृष्टान्ततया। वाच इव मनसः शुद्धिः कार्येति भावः। मच.

(७)सर्वदा आश्रमान्तरेऽपि। मुक्ता.११४

(८)वाचः शुद्धिः असत्यादिवर्जनम्, मनसो रागादिवर्जनम्। सम्यग्गुप्तिः तत्राप्रमत्तत्वम्। सर्वदा आश्रमान्तरेऽपि। वेदान्तः वेदाध्ययनसमाप्तिः, तेनोपगतं परिपूर्णवेदाध्ययनोपलभ्यमित्यर्थः। नन्द.

(९)यस्य पुंसः वाङ्मनसे शुद्धे भवतः। च पुनः सम्यक् गुप्ते रक्षिते व्यर्थालापरहिते इत्यर्थः। सः वेदान्तोपगतं फलं वेदे उक्तं फलं सर्वमाप्नोति। भाच.

**[1]नारुन्तुदः स्यादार्तोऽपि न परद्रोहकर्मधीः।**
**ययाऽस्योद्विजते वाचा नालोक्यां तामुदीरयेत्॥**

(१)अयमपरः पुरुषमात्रधर्मः। अरूंषि मर्माणि तुदति व्यथयति इत्यरुन्तुदः मर्मस्पर्शिनीर्वाचोऽत्यन्तोद्वेजनकरीराक्रोशवाचो यो वदति, आर्तः पीडितोऽपि परेण, न तादृशमप्रियं भाषेत। तथा परद्रोहः परापकारः, तदर्थं कर्म तद्धीश्च न कर्तव्या। अथवा, परद्रोहश्चासौ कर्म च, तत्र धीः बुद्धिरपि न कर्तव्या। यया वाचा नर्मप्रयुक्तयाऽपि पर उद्विजते अथ च तां वाचं नोदीरयेत्। वाक्यैकदेशमपि तादृशं नोच्चारयेद्यत एकदेशादर्थप्रकरणादिनाऽर्थान्तरसूचनं प्रतीयते। यतः सा वाक् अलोक्या स्वर्गादिलोकप्राप्तिप्रतिबन्धिनी। *मेधा.

§ शेषं मेधावत्।

* गोरा., ममु., मुक्ता., नन्द. मेधागतम्।

(१) **मस्मृ.** २।१६१; **ब्रक.** २३३; **मुक्ता.** ११४ ययाऽस्यो (यया चो) : १८७ ययाऽस्यो (यथा चो).

(२)अलोक्या असाध्वी। σब्रक.२३३

(३)वाङ्मनसयोः शुद्धतां विवृणोति — नारुन्तुद इति। अरुन्तुदः दोषस्वरूपव्रणस्य वाचा प्रकाशनेन तोदकः। परद्रोहः हिंसा, तत्कर्म मनसा ध्यायतीति परद्रोहकर्मधीः। दोषप्रकाशकत्वाभावेऽपि यत् श्रुत्वा परस्योद्वेगः, यथा 'वर्षशतान्ते अवश्यं भवतो मृत्यादि-(? मृतिः' इत्यादि) तथा अलोक्याम् अलोकहितां तां वाचं नोदीरयेत्। मवि.

(४)तत्रैव हेतुतया व्यतिरेकमाह — नारुन्तुद इति। आर्तः रोगादिना शिष्यकृतापराधेन वा। # मच.

(५)अलोक्यां लोककर्मरहिताम्। # भाच.

ब्राह्मणावमानो ब्राह्मणस्य श्रेयस्करः

अवमन्तुरनर्थकरः

**[१]संमानाद्ब्राह्मणो नित्यमुद्विजेत विषादिव।**
**अमृतस्येव चाऽऽकाङ्क्षेदवमानस्य सर्वदा॥**

(१)भिक्षमाणस्य ब्रह्मचारिणो गृहे वोपाध्यायस्य जीविकयाऽध्यापयतो यत्र संमानं न स्यान्न तेन चित्तसंक्षोभमाददीत, अपि तु संमानादेवोद्विजेत पूजयैव दीयमानं न बहु मन्येत। अमृतमिव आकाङ्क्षेत् अभिलषेत् अवमानम् अवज्ञां सर्वदा। उत्कण्ठा-सामान्यात् अधीगार्थत्व(?*गर्थत्व)माकाङ्क्षेरारोप्य षष्ठी कृता। ननु चानर्चितमभोज्यम्, सत्यम्, चित्तसंक्षोभ-प्रतिषेधार्थमेतत्, न तु तादृशस्य भोज्यतोच्यते। संमाना-वमानयोः समेन भवितव्यम्, न पुनरवमानं प्रार्थनीयम्। ब्रह्मचारिणस्त्ववमतमपि भिक्षादानम्। न चायं प्रतिग्रहः, 'योऽर्चितं प्रतिगृह्णाति' (मस्मृ. ४।२३।२३५) इत्येतस्य येन विषयः स्यात्। +मेधा.

(२)एतच्च सर्वमत्यन्तावमतेनापि न कार्यमित्याह—संमानादिति। अवमानस्य अमृतस्येवाल्पमप्यंशमित्यर्थः। मवि.

(३)दैवाद्गुरोर्वाङ्मनसस्खलने शिष्यं शिक्षयति — संमानादिति। विषादिव विषवदुद्वेगहेतुत्वाल्लोकावर्ज-(?ल्लोकार्च)नस्य। अमृतं यथा अमरत्वहेतुत्वादा-काङ्क्षितम् अवमानोऽपि श्रेयोहेतुत्वात्तथा। अनेन गुरोस्त्यागे दोषोऽनध्ययनाद्यनर्थः। मच.

(४)सर्वदा आश्रमान्तरेऽपि। नन्द.

**[१]सुखं ह्यवमतः शेते सुखं च प्रतिबुध्यते।**
**सुखं चरति लोकेऽस्मिन्नवमन्ता विनश्यति॥**

(१)पूर्वस्य विधेरर्थवादोऽयं फलदर्शनार्थः। योऽवमानान्न क्षुभ्यति स सुखं शेते। अन्यथा द्वेषेण दह्यमानो न कथंचिन्निद्रां लभते, प्रतिबुद्धश्च तच्चिन्तापरो न सुखं विन्दति। उत्थितश्च शयनात्कार्येषु सुखं चरति। यस्त्ववमानस्य कर्ता स तेन पापेन विनश्यति। # मेधा. १५७

(२)यो वाऽवज्ञातः स सुखं स्वपिति न यथाऽवमन्तुः 'अयुक्तं मया कृतम्' इति चित्तसंक्षोभो भवति। एवं स च सुखं निद्रां जहाति। सुखं लोके व्यवहरति। यः पुनरवमानकृत् सः 'असाधु मया कृतम्' इतीहलोके परलोके चापुण्याद्विनश्यति। गोरा.

(३)सुखं शेते, तत्कृतसंमानज्ञानाहितप्रत्युपकार-चिन्ताविधुरत्वात्। न त्वेवं स्वयमपि परस्याभ्युदया-दिसंबन्धिना अवमानं कुर्यादित्याह — अवमन्तेति। मवि.

---

σ शेषं मेधावत्।

# शेषं मेधागतम्।

* अत्र कर्मप्रातिपदिकात् षष्ठ्याः प्रयोजकेषु धातुषु अधीगर्थ एव धातुः संभवतीति एतच्छुद्धिकल्पने हेतुः। अत्र व्याख्यातुरेवमभिप्रायः कल्प्यते — आकाङ्क्षा इच्छा। उत्कण्ठा इष्टप्राप्तौ विलम्बासहत्वम्। अधीगर्थः स्मरणम्। स्मरणं च ज्ञानत्वरूपेणेच्छाप्रयोजकम्। तथा च इच्छाया अव्यवहितोत्तरत्वसंबन्धेनोत्कण्ठावत्त्वमित्युभयोरुत्कण्ठा सामान्यगुणः। तेन गुणेनाऽऽकाङ्क्षेः स्मरणे गौणी लक्षणा। तेनात्र 'अधीगर्थदयेशां कर्मणि' (पासू. २।३।५२) इत्यनेन षष्ठीति। यद्यपि न सर्वत्रेच्छाया उत्कण्ठावत्त्वमस्ति, क्वचित्प्रतिबन्धकाभावेऽपि इच्छोत्तरं विलम्बेन प्रवृत्तेर्दर्शनात्, तथाऽप्यत्र सोत्कण्ठैवेच्छा विवक्षिता। इदं तु चिन्त्यम् — विवक्षितवाक्यार्थघटकपदार्थे पदस्याभिधया तात्पर्यानुपपत्तौ लक्षणाऽऽश्रीयते। न चात्राऽऽकाङ्क्षे-रिच्छारूपाभिधेयार्थे तात्पर्यानुपपत्तिरस्ति। तथा च षष्ठ्युपपादनार्थं कथं लक्षणासंभव इति। 'षष्ठी शेषे' (पासू. २।३।५०) इत्यनेन तु शेषत्वविवक्षायां षष्ठी सुवचा।

(१) मस्मृ. २।१६२; ब्रक. २३३; मुक्ता. १८७ : ४६५ विषा (भया) सर्वदा (सर्वतः) स्मृत्यर्णवे; आन. ६५३ मुक्तावत् (-).

+ गोरा., ममु., भाच. मेधागतम्।

# ममु., भाच. मेधागतम्।

(१) मस्मृ. २।१६३; ब्रक. २३३; मुक्ता. १८७.

(४) देवादपि तदुत्पत्तौ गुणमेवाऽऽह — सुखं ह्यवमत इति। अवमतः तिरस्कृतः संमाननाभावाज्जननादिरहितः। अथवा अवमतः खण्डितमानः। स्वविवेकबुद्ध्या स सुखं शेते निद्राति। अन्यथा अवमानदुःखैर्दन्दह्यमानो न निद्राति। अत एव सुखं न प्रतिबुध्यते, सम्यगनिद्रितत्वात्। सुखं चरति स्वेष्टसाधनेषु प्रवर्तते। अवमतस्त्ववमानासहिष्णुः किंचित्कर्तुं न क्षमत इत्यनुभवसिद्धम्। मच.

(५) अत्र हेतुमाह — सुखमिति। क्षममाणोऽवमतो दृष्टादृष्टभयाभावात्सुखं शेते। अवमन्ता विनश्यति राजदण्डेन यमदण्डेन वा। नन्द.

शूद्रविषयका मत्यादिदानधर्माद्युपदेशनिषेधाः
तत्र विषयविशेषविषयका
व्याख्यातृमतभेदाश्च

**[१]न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविष्कृतम्।**
**न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत्॥**

(१) शूद्रस्य दृष्टादृष्टविषये हिताहितोपदेशो न कर्तव्यः। शूद्रस्य मन्त्रित्वं(? मतिमत्त्वं) न कर्तव्यमिति यावत्। वृत्त्यर्थश्चायं निषेधः। सौहार्दादिना तु न दोषः। भवन्ति हि शूद्राः कुलमित्राणि। मैत्र्या चावश्यं हितमुपदिश्यते। अनुज्ञाता च सर्ववर्णे ब्राह्मणस्य मैत्री 'मैत्रो ब्राह्मण उच्यते' (मस्मृ. २।८७)। ये तु व्याचक्षते — 'अपृच्छतो न ब्रूयात्' इत्युपन्यस्य "युक्तम्, शास्त्रान्तरसिद्धत्वात् 'नापृष्टः कस्यचिद्ब्रूयात्' (मस्मृ. २।११०) इति" (इति), तदयुक्तम्। तत्र हि स्वाध्यायविषयं स्वरवर्णगतमन्यद्वाऽसंगतं कुर्वतः 'विनाशितं त्वया' इत्यादावपृष्टेन न वक्तव्यम्। तथा चामी नाध्याप्या इत्यस्मिन्प्रसङ्गे इदमुक्तं 'नापृष्टो ब्रूयात्' इति। अशिष्यस्यापृच्छतो विस्वरं व्यक्षरं वा पठतो न किंचिद्वक्तव्यमिति तस्यार्थः।

नोच्छिष्टमिति। उच्छिष्टशब्दोऽयं भुजिनिमित्तेऽप्राशस्त्ये वर्तते। कृतमूत्रपुरीषोऽप्यनाचान्तः उच्छिष्ट उच्यते। यथा वक्ष्यामः(? वक्ष्यमाणः) 'न स्पृशेत्पाणिनोच्छिष्टः' (मस्मृ. ४।१४२) बाहुल्येनोच्छिष्टप्रयोगो भुजिसंबन्धेन। भुञ्जानस्य ह्यन्तरास्यसंस्पर्शेन बहिरन्तःस्थितस्योच्छिष्टत्वं भवति। तथा च 'न श्मश्रूणि गतान्यास्यम्' (मस्मृ. ५।१४१) इति श्मश्रुभ्योऽन्यदास्यानुप्रविष्टमुच्छिष्टं करोतीति ज्ञापयति। अतश्च भोक्तुर्भुज्यमानस्य पात्रादेरधिकरणस्य चोच्छिष्टव्यवहारः। क्वचिच्चायम् उपयुक्तेतरवचनोऽपि 'हविरुच्छिष्टं दक्षिणा' इति। तत्र समाचारात्पात्रगृहीतमुच्छिष्टपुरुषसंबद्धमीषद्भुक्तमुच्छिष्टमुच्यते। यदपि विशदमोदनादि पात्रस्थमस्पृष्टमपि भोक्त्रा तदपि संबद्धसंबन्धात्समाचारतः परिह्रियते। तत्र 'उच्छिष्टमन्नं दातव्यम्' (मस्मृ. १०।१२५), 'नोच्छिष्टम्' इति विधिप्रतिषेधावेकविषयावृतानृतशूद्रव्यवस्थया हविःशेषभेदेन वा विकल्प्येत। अथवा स्थालीस्थमतिथ्यादिभुक्तशिष्टं पर्युषितप्रायमुच्छिष्टम्, तन्न(? तच्च) शूद्राय दातव्यम्। तत्रोच्यते — जीर्णवसनसाहचर्याच्चैतदेव प्रतिपत्तुं युक्तम्। उपयुक्तेतरवचनत्वाच्च शिषेरुपसर्गस्य तदर्थानुगुण्येन वर्तनात् हविरुच्छिष्टं दक्षिणा इतिवत्प्रयोगोऽप्यविरुद्धः। एवमनयोः स्मृत्योरविरोधो भविष्यति। (यद्यपि रूढ्याऽऽचमनार्हाः प्रायोऽत्र वचने दृश्यन्ते। यत्तु 'वैश्यवच्छौचकल्पश्च' (मस्मृ. ५।१४०) इति, तद्दासशूद्रविषयम्। भुक्तोज्झितमेव प्रतीयत इति दर्शयिष्यामः।?)

न हविष्कृतम्। हविषे कृतं हविरर्थं कल्पितम्। बाहुल्यात् बहुवचनः समासः (?), तादर्थ्येनोपकल्पितप्रतिषेधात्। दण्डापूपिकया यत्र हविर्गन्धोऽस्ति तत्सर्वं प्रतिषिध्यते। तेन हविरर्थि(? रर्थ)तया संकल्पितस्य हविषः प्रवृत्तस्य हविःशेषस्याभुक्तोज्झितस्य हविषः प्रतिषेधः सिद्धो भवेत्। तथा च कृतमिति करोतिः क्रियासामान्यवचनः प्रयुक्तः। हविरर्थं यत्कृतं संकल्पितमिति वचनम्। तेनोच्छिष्टस्यापि यावत्प्राक्कृतेन संकल्पेन हविष्कृतव्यपदेशः, न यथावत्सर्वावस्थस्य प्रतिषेधो विज्ञायते। अन्यैस्तु हविर्मिश्रं हविष्कृतमिति व्याख्यातम्। संसृष्टप्रतिषेधाच्च

(१) मस्मृ. ४।८०; अप. १।१५४ पृ. २२० द्धर्मं (द्धर्मान्); गृक. ३८० चास्य व्र (चान्यव्र) मनुः यमवसिष्ठौ च; गृर. ५६३; दीक. १।१२१; निप्र. २।४८६ व्रतमा (प्रतिमा); चमव्या. ७६; मुक्ता. ६८ : ६९ प्रथमतृतीयपादौ : ४५९; शूक. १४ हविष्कृ(हविः प्लु) पाद्ये : ६६ हविष्कृ(हविःप्लु) पू., पाद्ये; संम. ४७; संकौ. १७१ (–); आन. ४०२ प्रथमतृतीयपादौ : ६४५; संर. ३८७ (–); सस्मृ. ११० प्रथमचरणमात्रम्, स्मृतिः.

केवलस्यापि प्रतिषेधः विप्रसंसृष्टप्रतिषेधे विप्रस्येवेत्युक्तम्। कथं पुनः संसृष्टप्रतिषेधे केवलप्रतिषेधः? केवलप्रतिषेधेनाप्रधानः कदाचित्संसृष्टप्रतिषेधः शक्यते वक्तुम्, यत्र संसृष्टावपि पृथक्त्वेन प्रतिभासेते। यत्र वा चक्षुषाऽप्रतिभासमाने रूपे रसादिना तत्प्रयोगो-(?त्प्रत्ययो) भवति तत्रापि भवत्येव तदाश्रयो व्यवहारः। यथा सुरादिसंपृक्तासु सक्तुपिण्डीष्वन्तर्हितेऽपि सुरादिरूपे रसे तत्प्रत्ययादस्त्येव सुरापानप्रायश्चित्तम्। ननु चैवमप्यद्रवरूपत्वात्पिण्डीभिरेकतापन्नायाः सुराया न पानोपपत्तिः। नैष दोषः। प्रायिकेणौचित्यानुवादेन पानमुपादीयते, अभ्यव्यवहार एव तु निषिध्यते। यथा च भक्ष्याभक्ष्यप्रकरणमेतत्। भक्षणं चाभ्यवहारमात्रम्। तस्य विशेषाः पानखादनचर्वणादयः। गन्धस्य पुनरनाश्रयस्याप्युपलब्धेर्न ततो द्रव्यसद्भावावगमः। दूरस्थेऽपि कर्पूरादौ गन्ध उपलभ्यते। सूक्ष्मद्रव्यावयवावगमकल्पनायां द्रव्यस्य परिमाणावचयः स्यात्। यत्र तु संसृष्टयोरेकीभावः, न चान्य(त)स्तत्प्रत्ययः, न तत्र केवलाश्रयौ विधिप्रतिषेधौ प्रवर्तितुमर्हतः, यथा 'क्षीरं पातव्यम्' ('उदकं न पातव्यम्') इति। संमिश्रितयोः क्षीरोदकयोः पीतयोर्न क्षीरं (पीतं) भवति, नोदकम्, द्रव्यान्तरत्वात्। अन्यद्धि तत्र रूपमन्यश्च रससंस्थानादितत्प्रत्ययहेतुरस्तीति द्रव्यान्तरं तत्। यद्येवम्, मद्योदके सह पीते यदि भवेतां तदा मद्यपानप्रायश्चित्तं न प्राप्नोति, द्रव्यान्तरत्वात्। नैष दोषः। अभिभवति रसान्तराणि मद्यं तिक्तरसवत्। ततो रसप्रत्यभिज्ञानाद्भवत्येव तत्प्रायश्चित्तम्। यत्र तु बहूदकं स्वल्पं मद्यादि तत्र संसर्गप्रायश्चित्तमपि निपुणमेकादशे निरूपयिष्यामः। तस्मात्केवलाश्रयः प्रतिषेध आस्कन्देदपि संसर्गम्, यथा 'माषा न भोक्तव्याः' इति मिश्रा अपि न भुज्यन्ते, संसर्गाश्रयस्तु केन हेतुनाऽसंसृष्टे वर्तेत? 'गङ्गायमुनयोः संगमाज्जलमानय' इत्युक्ते न केवलाया गङ्गाया आनयति, न यमुनायाः। समाचार एवेति चेत् समाचार एवोदाहर्तव्यः।

न चास्योपदिशेद्धर्मम्। ननु च 'न शूद्राय' इत्यविशेषेण दृष्टादृष्टविषयमतिदानप्रतिषेधाद्धर्मोपदेशनिषेधोऽपि सिद्ध एव। सत्यम्। पुनर्वचनं शेषार्थम्। ततः प्रायश्चित्तोपदेशोऽनुज्ञातो भवति। 'शरणागतं परित्यज्य' (मस्मृ. ११।१९८) इत्यत्र चैतद्दर्शयिष्यामः। अन्ये तु पार्वणश्राद्धपाकयज्ञादिष्वितिकर्तव्यतां न शिक्षयेत् याजकत्वादिरूपेणेत्याहुः। अत्र चोदयन्ति — यदि धर्मोपदेशः शूद्रस्य निषिध्यते, कुतस्तर्हि धर्मवित्त्वम् ? अविदुषश्च नानुष्ठानसंभवः, ततः शूद्रानुष्ठातृकधर्मशास्त्रानर्थक्यम्। अचोद्यमेतत्। अतिक्रान्तनिषेधस्य लिप्सया ब्राह्मणस्य चोपदेष्टृत्वसंभवात्। न हि ब्रह्महत्या सर्वस्वदानचोदनाप्रतिग्रहं प्रयुङ्क्ते। संभवति लिप्सा प्रयोक्त्री। ननु चास्ति वचनं 'प्रब्रूयादितरेभ्यश्च' (मस्मृ. १०।२) इति वृत्त्युपायप्राप्तौ। अत एवं प्रकृतं 'सर्वेषां ब्राह्मणो विद्याद्वृत्त्युपायान्यथाविधि। प्रब्रूयादितरेभ्यश्च' (मस्मृ. १०।२) इति। यस्त्वाश्रितशूद्रस्तस्यावश्यमुपदेशः कर्तव्यः। अविदुषा विधिप्रतिषेधातिक्रमात्संवासो निषिद्धः 'न मूर्खैर्नावलिप्तैश्च' (मस्मृ. ४।७९) इति।

यत्तु व्याचक्षते — धर्मशास्त्रोपदेशस्तदर्थव्याख्यानं वाऽ(? चा)नेन निषिध्यते शास्त्रद्वयेन ('न शूद्राय मतिम्') 'न चास्योपदिशेत्' इति। एकेन शास्त्राध्ययनमपरेणार्थव्याख्यानम्। अग्रन्थकस्तूपदेशो न केनचिन्निषिद्धः। तेषामेवंवदतां 'तस्य शास्त्रेऽधिकारः' (मस्मृ. २।१६) इति सिद्धत्वात्पुनरुक्तम्। इह वदन्ति — व्याकरणादौ धर्मावबोधार्थशास्त्रे धर्मशब्दः। तद्धि न धर्मशास्त्रम्, अतीन्द्रियार्थमिति(?विधि)प्रतिषेधानुपदेशात्। भवति तु धर्मशास्त्रावबोधार्थम्। शक्नोति हि वैयाकरणः पदार्थानुसरणेन गहनं वाक्यार्थमुन्नेतुम्। (अ)धर्मशास्त्रत्वाच्च 'तस्य शास्त्रे' इत्यनेनागतत्वात्पृथगुच्यते। युक्तमेतत् यदि कश्चिन्न ब्रूयात् 'प्रधानेऽनधिकृतस्य कुतोऽङ्गेषु प्राप्तिः?' इति। वेदः स्मृतिशास्त्रे च(? स्त्रेभ्यः) प्रधानम्। न च तत्र शूद्रस्याधिकारः।

न चास्य व्रतमादिशेत्। व्रतशब्देन कृच्छ्राण्युच्यन्ते, 'एतैर्व्रतैः' (मस्मृ. ११।१०२) इतिप्रयोगदर्शनात्। तान्यभ्युदयकामस्य नोपदिशेत्। प्रायश्चित्तार्थतया त्विष्यत एवोपदेशः। स्नातकव्रतानां प्राप्तिरेव नास्ति, अस्नातकत्वात्। एवं सावित्रादीनामपि, अध्ययनाभावात्, अध्ययनं(?नाभावः) चोपनयनाभावात्,

उपनयनं(?नाभावः) च तद्विधौ जातित्रयश्रवणात्।

मेधा.

(२) मतिरत्र(?तिमत्र) धर्मस्य पृथगुपदेशात् दृष्टोपकारकोच्छिष्टहविष्कृतसाहचर्याद्वा दृष्टार्थहितोपदेशं शूद्रस्य न कुर्यात्। उच्छिष्टं वाऽदासशूद्राय न देयम्, यतो दासविषये 'उच्छिष्टमन्नं दातव्यम्' (मस्मृ. १०।१२५) इति वक्ष्यति। यत्तु 'द्विजोच्छिष्टं तु भोजनम्' (मस्मृ. ५।१४०) इति, स भोक्तुरुपदेशः, न दातुः। तथा हविरर्थं यच्च पुरोडाशादि तस्य 'देवान्नानि हवींषि च' (मस्मृ. ५।७) इति प्रतिषेधमुक्त्वा तच्छेषस्य 'हविःशेषं च यद्भवेत्' (मस्मृ. ५।२४) (इति) द्विजातीनां भक्ष्यतां वक्ष्यति, अतश्च तद्धविःशेषीभूतं शूद्राय न देयम्। तथा 'इदमिदमदृष्टार्थं त्वया कर्तव्यम्' इति शूद्रस्य धर्मं नोपदिशेत्। व्रतं चास्य प्रायश्चित्तं साक्षान्नोपदिशेत्। तथा चात्यन्तधार्मिकशूद्रविषयेऽप्यङ्गिराः — 'तथा शूद्रं समासाद्य सदा धर्मपुरःसरम्। अन्तरा ब्राह्मणं कृत्वा प्रायश्चित्तं समादिशेत्॥' इति ब्राह्मणोपदेशप्रणालिकया प्रायश्चित्तदानमाह, न साक्षादिति॥

*गोरा.

(३) मतिः अदृष्टार्थकार्याकार्यविषया। उच्छिष्टं भोजनपात्रस्थं भक्तशिष्टम्। हविष्कृतं हविष्ट्वेन कल्पितं पुरोडाशादि। धर्मं पञ्चयज्ञादि। अयं चोच्छिष्टदाननिषेधोऽनाश्रितशूद्रविषयः, आश्रितं प्रति 'उच्छिष्टमन्नं दातव्यं जीर्णानि वसनानि च' (मस्मृ. १०।१२५) इति मनुनैवोदाहृतत्वात्। इतरे तु प्रतिषेधाः सर्वशूद्रविषयाः, वर्णधर्मस्य तु लोभादिना अतिक्रान्तप्रतिषेधेनैवोपपत्तेः न तद्विधानापेक्षा। गृक. ३८०

(४) मतिं दण्डनीतिशास्त्रादिविषयाम्। उच्छिष्टं भाण्डत्यक्तम्। हविष्कृतं यत आकृष्य हुतं हविस्तं पुरोडाशादिहविःशेषम्। धर्मं धर्मसाधनम्। व्रतं प्रायश्चित्तम्। मवि.

(५) मतिं देवविषयाम्। अदृष्टार्थकार्यविषयामिति कल्पतरुः। # गृर. ५६३

(६) यत्तु 'न शूद्राय मतिं....॥' इति मनुना निषिद्धं तदसच्छूद्रविषयम्, 'उच्छिष्टमन्नं दातव्यम्' (मस्मृ. १०।१२५) इति विधानात्।

दीक. १।१२१

(७) हविःपुरोडाशादि, देवनैवेद्यश्राद्धदत्तानि (च), तत्रापि हविःशब्दप्रयोगात्।

*निप्र. २।४८६

(८) एतत् ब्राह्मणमन्तरावधिं कृत्वोपदिशेत्, 'श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः' (भा. १२।३१४।४५) इत्युक्तेः। अन्यथा तेषां धर्माद्यननुष्ठानापत्तिः। Δ मच.

(९) 'न शूद्राय मतिं दद्यात्' 'न चास्योपदिशेद्धर्मम्' इत्यादिनिषेधः शूद्रानुपयोगिवैदिकाग्निहोत्रादिधर्मज्ञानविषयः, 'श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः' (भा.१२।३१४।४५) इति इतिहासपुराणादिश्रवणस्य ब्राह्मणमुखेन शूद्रस्यापि विहितत्वात्। किंच, स्मृत्युक्तशूद्रधर्माणामपि उपदेशप्रतिषेधाभावो वाच्यः। अन्यथा 'शूद्रश्चतुर्थो वर्णः। एकजातिः। तस्यापि सत्यमक्रोधः शौचम्। आचमनार्थे पाणिपादप्रक्षालनमेवैके। श्राद्धकर्म। भृत्यभरणम्। स्वदारवृत्तिः। परिचर्या चोत्तरेषाम्' (गौध.१०।४९-५६) इत्यादिगौतमादिधर्मो(?धर्मसूत्रो)क्तानां स्मृत्युक्तशौचश्राद्धादीनां चोपदेशाभावे तद्विषयतादृशधर्माणामननुष्ठानात् तद्वचनानामननुष्ठानलक्षणमप्रामाण्यमापद्यते। तस्माच्छूद्रानुष्ठानानुपयोगिधर्मविषय एव निषेधः, न तु चातुर्वर्ण्यगृहस्थसाधारणधर्माणामहिंसास्तेयादिरूपाणां प्रातिस्विकशौचामश्राद्धद्विजशुश्रूषादिधर्माणामपि। न च स्वानुष्ठानानुपयोगिधर्मश्रवणे कस्याप्यप्रसक्तेः प्रतिषेधो व्यर्थ इति वाच्यम्, 'धर्मः श्रुतो वा दृष्टो वा' इति धर्ममात्रश्रवणे फलाभिधानात्स्वधर्म इति विशेषाभावाच्छूद्रव्यतिरिक्तानां त्रैवर्णिकानां यथा सर्ववर्णधर्मश्रवणे अधिकारः, संन्यासिव्यतिरिक्तानां यथा सर्वाश्रमसाधारणधर्मे(? धर्मश्रवणे) अधिकारः, त्रैवर्णिकस्त्रीणां पुरुषधर्मे(? धर्मश्रवणे) पुरुषाणां च स्त्रीधर्मे-

* अप. व्रतपदार्थमात्रं गोरावत्। ममु. गोरावत्।
# शेषं गृकवत्।

* शेषं गृकगतम्।
Δ शेषं गोरागतम्।

(? धर्मश्रवणे) यथाऽधिकारः, तथा शूद्रस्यापि प्रसक्ते तद्विषये प्रतिषेधस्यार्थवत्त्वात्।

मुक्ता. ६९

(१०) उच्छिष्टं भुक्तावशिष्टं न दद्यात्। शूद्रस्य गौतमेन 'उच्छिष्टाशनं शिल्पवृत्तिश्च' (गौध. १०।५९) इति उच्छिष्टाशनस्याभ्यनुज्ञानान्न दोषः। दातुस्तु भवत्येव। एवं च यदि प्रत्यवायमङ्गीकृत्योच्छिष्टं ददाति तदा तेन भक्षणीयम्। यथा कुरुक्षेत्रादौ दातुरभ्युदयः प्रतिग्रहीतुर्दोषः, एवमत्रापीति केचित्। सांप्रदायिकास्तु उच्छिष्टदानप्रतिषेधो गृहस्थशूद्रविषयः, तद्भिन्नाय तु देयम्। तथा च व्याघ्रः — 'उच्छिष्टमन्नं दातव्यं शूद्रायागृहमेधिने। गृहस्थाय तु दातव्यमनुच्छिष्टं दिने दिने॥' इति। 'न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत्'। 'धर्मं धर्मशास्त्रम्। पूर्वधर्मनिषेधस्तु दण्डनीतिविषय इति' व्याख्यातारः।

संम. ४७

(११) शूद्रायोपदेशनिषेधोऽपि साक्षादुपदेशविषयः, 'श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः' इति ब्राह्मणद्वारकोपदेशस्वीकारविधानात्। न चेदं वक्तारं प्रति ब्राह्मणद्वारकवचनाभ्यनुज्ञाशास्त्रम्, 'तमध्यापयीत' 'एतयाऽन्नाद्यकामं याजयेत्' इतिवत् प्रयोजकव्यापारेण प्रयोज्यव्यापारं लक्षयित्वा शूद्रं प्रत्येव ब्राह्मणद्वारकश्रवणविध्यभ्युपगमात्।

*संकौ. १७१

(१२) मतिं परेणाविज्ञातमुपायम्। भोजनपात्रस्थमुच्छिष्टमन्नम्, न तु स्थाल्यादिस्थितम्। हविष्कृतं हविष्ट्वेन कल्पितमृत्विग्भिर्भक्षितशिष्टं पुरोडाशादिकम्। धर्मं श्रौतस्मार्तादिकम्। व्रतं स्नातकव्रतादि। 'न मतिं दद्यात्' इत्येव सिद्धे 'धर्मं नोपदिशेत्' इति पुनर्निषेधो दोषातिशयप्रकाशनार्थः।

नन्द.

(१३) उच्छिष्टम् अतिथेः भुक्तोच्छिष्टम्।

# भाच.

* शेषं संमगतम्।

# शेषं गोरागतं मविगतं च।

**[1]यो ह्यस्य धर्ममाचष्टे यश्चैवाऽऽदिशति व्रतम्।**
**सोऽसंवृतं नाम तमः सह तेनैव मज्जति॥**

(१) पूर्वस्य प्रतिषेधस्य निन्दार्थवादः। तेनैव सहेति उभयोर्दोषमाह शृण्वतः श्रावयतश्च। मज्जति अवगाहते, तत्प्राप्नोतीति यावत्। मेधा.

(२) यस्माद्यः शूद्रस्य धर्मव्रते उपदिशति स ब्राह्मणः पापोत्पत्तिनिमित्तभूतेन तेनैव शूद्रेण सहातिमहत्त्वादसंवृताख्यं तमः अन्धकारं प्रविशति। पश्चके प्रकृते द्वयोः फलकथनं प्रायश्चित्तगौरवार्थम्।

*गोरा.

(३) तमः नरकं सह तेनैव गच्छति यदि शूद्रोऽपि पापान्तरेण तल्लोकगामी। अन्यथा तूपदेष्टैव याति।

मवि.

(४) विपक्षे दण्डमाह — य इति। असंवृतं नाम तमः नरकं तेन शूद्रेण सह मज्जत्येवेत्यन्वयः।

मच.

वैरिप्रभृतीनां पञ्चानामुपसेवननिषेधः
तत्र परदारोपसेवनस्य विशेषतो
निन्दा च

**[2]वैरिणं नोपसेवेत सहायं चैव वैरिणः।**
**अधार्मिकं तस्करं च परस्यैव च योषितम्॥**

(१) वैरी शत्रुः, तस्य सदैव उपायनप्रेषणान्येकत्र स्थानासने गृहगमनादिकथाप्रवृत्तिरित्येवमादि न कार्यम्। अधार्मिकः पातकी, यश्च कुसृत्या वर्तते। तस्करः चौरः। अस्मादेव च भेदोपादानादधार्मिको न सर्वः, किं तर्हि? यथा व्याख्यातम्। परस्य योषितं स्त्रियम्। योषिद्ग्रहणान्न पत्न्येव, किं तर्हि? अवरुद्धाऽपि,

* ममु. गोरावत्। नन्द., भाच. गोरागतम्।

(१) **मस्मृ.** ४।८१; **अप.** १।१५४ पृ. २२० मज्जति (गच्छति); **गृक.** ३८० दिशति (दिशते) शेषमपवत्; **गृर.** ५६३ ह्यस्य (ह्यस्य हि) चतुर्थचरणे (तेनैव सह गच्छति); **मुक्ता.** ६८ यो ह्यस्य धर्ममा (यस्तस्य धर्म व्या) यश्चै (योऽस्यै) चतुर्थचरणे (तेनैव सह गच्छति) : ४५९ यो ह्यस्य (यस्तस्य) मज्जति (गच्छति).

(२) **मस्मृ.** ४।१३३; **अप.** १।१५२ पृ. १९४ यं चैव (यांश्चैव); **गृक.** ३७३; **गृर.** ५५७ नोपसे (नैव से) चैव (नैव); **पमा.** १।५२२ च यो (तु यो); **मपा.** १२१; **मर.** ५८; **निप्र.** २।५४०; **मुक्ता.** ४५९; **संप्र.** ५७६ चैव (नैव); **आन.** ६४५; **संग.** ७५६ वैरिणं (वैरिणो) सहायं चैव (साहाय्यं नैव).

वैरकरणत्वादुभयोः, दृष्टदोषनिमित्तैश्च प्रतिषेधः साह-(?धसाह)चर्यात्। उत्तरत्र च दारग्रहणमदृष्टदोषातिशय-दर्शनार्थम्। न पुनरेवं वक्तव्यम् योषितमिति सामान्य-निर्देशे दारशब्दार्थवादाद्विशेषावगतिः। नायमस्यार्थ-वादः। भिन्नमेवैतद्वाक्यम्। मेधा.

(२) शत्रुतन्मित्राधर्मशीलचौरपरदारान्नोपसेवेत। चौर-स्यात्यन्तकुत्सितत्वादधार्मिकात्पृथग्ग्रहणम्। शत्रुसेवनादौ च यद्यपि दृष्ट एव दोषः तथापि शास्त्रनिषेध-सामर्थ्याददृष्टोऽपि भवतीत्यवसीयते। एवम् अन्यत्रापि विज्ञेयम्। *गोरा.

(३) अरिं न सेवेत चिरं न तत्समीपे तिष्ठेत्। मवि.

(४) शत्रुं (सहायं) तन्मन्त्रिणम्। Ωममु.

[1]**न हीदृशमनायुष्यं लोके किंचन विद्यते।**
**यादृशं पुरुषस्येह परदारोपसेवनम्॥**

(१) अजीर्णकारकभोजनादि सुवर्णापहरणादि च न हीदृशम् अनायुष्यम् आयुष्यक्षयकरं यादृशं परदार-गमनम्। अदृष्टेन दृष्टने च दोषः। ♣मेधा.

(२) अनायुष्यं लोके इहलोके। मवि.

(३) तेषु परस्त्रीगमनमत्यर्थं निराकर्तव्यमित्याह— नहीति। सेवनं संभोगः। मच.

क्षत्रिय-सर्प-बहुश्रुतब्राह्मणावमाननिषेधः

[2]**क्षत्रियं चैव सर्पं च ब्राह्मणं च बहुश्रुतम्।**
**नावमन्येत वै भूष्णुः कृशानपि कदाचन॥**

(१) अवमानः अनादरो गौरवाभावस्तिरस्कारश्च। कृशानपि तदात्वे प्रीतिं(?प्रति)कर्तुमसमर्थानपि। मेधा.

(२) यो भवनशीलः क्षत्रियसर्पविद्वद्ब्राह्मणांस्तदानीं दुर्बलानपि कदाचिन्नावजानीयात्। गोरा.

(३) नावमन्येत अधिक्षेपादिनाऽवमतान् (न) कुर्यात्। भूष्णुः भूतिशील इति भूतिकामिताऽभिप्रेता। मवि.

(४) वृद्ध्यर्थे भूधातुः। भूष्णुः वर्धिष्णुः धनगवादिना वर्धनशीलः क्षत्रियं सर्पं बहुश्रुतं च ब्राह्मणं नावजानीयात्। कृशानपि तत्काले प्रतीकाराक्षमान्। *ममु.

(५) क्षत्रियम् अभिषिक्तम्। नन्द.

(६) अवमानः निर्भयत्वेन अन्तिकगमनमित्यर्थः। आन.६४५

[1]**एतत्त्रयं हि पुरुषं निर्दहेदवमानितम्।**
**तस्मादेतत्त्रयं नित्यं नावमन्येत बुद्धिमान्॥**

(१) निर्दहेत् अवमन्तारं पुरुषम्। त्रयमवमानितम्। क्षत्रियः सर्पो दृष्ट्या शक्त्या, ब्राह्मणो जपहोमैः अदृष्टेन च दोषेण। तस्मादेतत् त्रयं नित्यमित्युपसंहारः। विधाय दोषदर्शनं पुनरुपसंहारो यत्नेन परिहारार्थः। यत्नाति-शयाच्च प्रायश्चित्ते गौरवमप्यनुमीयते। Δमेधा.

सत्यप्रियवचनविधिः प्रियानृतवचननिषेधश्च

[2]**सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम्।**
**प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः॥**

(१) अर्थप्रयुक्तवचनं सत्ये नियम्यते। यथा दृष्टं श्रुतं च सत्यम्। प्रियं ब्रूयात्। द्वितीयोऽयं विधिः। औदार्यादिगुणानुकथनं परस्यादृष्टेनापि केनचिदवसरेण। तथा पुत्रजन्मादि 'ब्राह्मण, पुत्रस्ते जातः' इत्यसत्यपि

* मच., नन्द., भाच. गोरागतम्।
Ω शेषं गोरावत्।
♣ गोरा., ममु., भाच. मेधागतम्।

(१) **मस्मृ.** ४।१३४; **गृक.** ४१२; गृर. ५८६ रोपसेवनम् (राभिमर्षणम्); **बौवि.** २।१६।३ (-).

(२) **मस्मृ.** ४।१३५; **अप.** १।१५३ पृ. १९४; **गृक.** ३९७ भूष्णुः (दृष्टं); **गृर.** ५७६ सर्पं (वैश्यं) भूष्णुः कृशानपि (दृष्टं मनसाऽपि); **पमा.** १।५२२ सर्पं (सर्वं); **मर.** ५८; **निप्र.**२।४१८ वै भूष्णुः (वैकृताङ्गान्) कदाचन (विशेषतः); **मुक्ता.** ४५९; **वीमि.** १।१५३; **आन.** ६४५.

* मच., भाच. ममुगतम्।
Δ गोरा., मवि., ममु., मच., भाच. मेधागतम्।

(१) **मस्मृ.** ४।१३६; **अप.** १।१५३ पृ. १९४ षं निर्दहेदव (षान्निर्दहत्यव); **गृक.** ३९७ निर्दहेद (निर्दहत्य) तत्त्रयं नित्यं (तत्प्रयत्नेन); **गृर.** ५७६ गृकवत्; **निप्र.** २।४१८ निर्दहेद (निर्दहत्य) पू.; **मुक्ता.** ४५९ पू.; **वीमि.** १।१५३ अपवत्, पू.; **आन.** ६४५ पू.

(२) **मस्मृ.** ४।१३८; **अप.** १।१२२ पृ. १६३; **गृक.** ३०५-३०६ मनुयमौ; **स्मृच.** १।१४; **गृर.** ५०७; **पमा.** १।५२२; **मर.** ५८; **निप्र.** २।४९७ मनुयमौ; **मुक्ता.** ४५९; **यसं.** ३३ यतिधर्मसमुच्चये; **आन.** ६४६; **बाल.** १।१३२.

स्वप्रयोजने यदि सत्यं तद्वक्तव्यं यदि तस्य तन्न विदितम्। सत्यं प्रियमप्रियम् वाऽस्ति। प्रियं दर्शितम् 'ब्राह्मण, पुत्र॰' इत्यादि। अप्रियं यथा – 'ब्राह्मण कन्या ते गर्भिणी'। तदस(?तत्स)त्यं न ब्रूयात्। सत्यमपि कन्यागर्भग्रहणमप्रियत्वादप्रकाश्यम्। सत्यां गतौ तूष्णीमासितव्यम्। ननु गर्भिण्यामगर्भिणीति वक्तव्यम्, प्रियत्वात् अत आह – प्रियं च नानृतं ब्रूयादिति। एवं च यस्य प्रथमः साक्षात्कारस्तेन तत्र तूष्णीमासितुं लभ्यते। एष सनातनो धर्मः। सनातनः नित्यो वेदः, तेन विहितत्वाद्धर्मोऽपि सनातनः। ♣मेधा.

(२)केनचित्पृष्टः सन् सत्यमेव ब्रूयात्। सत्यं प्रियं चाप्यपृष्टोऽपि पुत्रजन्मादि कथयेत्। अप्रियं पुनः सत्यमपि बन्धुवियोगादि न वदेत्, अपि तु सत्यां गतौ तूष्णीमासीत। प्रियमपि चासत्यं नाभिब्रूयात्। इत्येष नित्यो धर्मः। गोरा.

(३)एतेन प्रियं सत्यं च मिलितं द्वयं वक्तव्यमित्युक्तं भवति। +गृक.३०६

(४)सत्यं ब्रूयात्प्रियं ब्रूयादिति समुच्चितं वाक्यमिति। स्फुटयितुं न ब्रूयादिति व्यतिरेकोपदर्शनम्। मवि.

(५) विप्रं क्षत्रियं वैश्यं वा न 'भो भो क्षत्रियदायाद', न 'क्षत्रियाधम' इति। क्षत्रियं ब्राह्मणं न ब्रूयात्। मच.

परोक्तशुभाशुभविषयेषु शुभार्थकशब्दः भद्रशब्दो वा प्रयोक्तव्यः

**'भद्रं भद्रमिति ब्रूयाद्भद्रमित्येव वा वदेत्।**
**शुष्कवैरं विवादं च न कुर्यात्केनचित्सह॥**

(१)अत्र प्रथमस्य भद्रशब्दस्य नञ्लोपं व्याचक्षते। यदभद्रं तद्भद्रमिति ब्रूयात्। इतिकरणः प्रदर्शनार्थः। 'कल्याणम्, मङ्गलम्, सिद्धम्, श्रेयः' इत्यादयः सिद्धाः शब्दाः प्रयोक्तव्याः। पूर्वपदस्यापि प्रदर्शनार्थत्वे अन्धे 'चक्षुष्मान्', मूर्खे 'प्राज्ञः' इत्यादिवचनं लभ्यते। अथवा भद्रमित्येष एव शब्दः एवमादिषु वक्तव्यः। शुष्कवैरम् असत्यर्थादिप्रयोजने आहोपुरुषिकं वाक्यं न कर्तव्यम्। एवं राजाधिकरणे विवादम्। शुष्कमेवेत्यादि संपद्यते-(? बध्यते)। केनचित् असमर्थेनापि। Σमेधा.

(२)भद्रं वस्तुतो यच्छोभनम्। भद्रमित्येव वाऽभद्रमपि। शुष्कं वैरं निर्निमित्तं द्वेषम्। विवादं विरुद्धवादम्। मवि.

(३)भद्रं भद्रमिति वीप्सा। शुष्कं वैरमिति फलरहितवैरम्। मच.

(४)शुभाशुभेषु सर्वत्र भद्रं भद्रमितीरयेत्। मुक्ता. ४५९

(५)भद्रमित्येव वा वदेत् सकृत् भद्रमित्येव वा ब्रूयात्। शुष्कं निरर्थकम्। ×नन्द.

(६)अभद्रमपि वस्तु भद्रं भद्रमिति ब्रूयात्। शुष्कवैरं निष्प्रयोजनं वैरं न कुर्यात्। भाच.

(७)शुष्कं फलशून्यम्। एवं विवादोऽपि वर्जनीयः। संर. ३८७

यमानुष्ठानस्य नित्यत्वम्

**'यमान्सेवेत सततं न नित्यं नियमान्बुधः।**
**यमान्पतत्यकुर्वाणो नियमान्केवलान्भजन्॥**

(१)प्रतिषेधरूपा यमाः 'ब्राह्मणो न हन्तव्यः' 'सुरा न पेया' इत्यादयः। अनुष्ठेयरूपा नियमाः 'वेदमेव जपेन्नित्यम्' (मस्मृ. ४।१४७) इत्यादयः। न नित्यं नियमान्। नानेन नियमानामसेवोच्यते, किंतु यमानां नियमेभ्यो नित्यत्वम्। तथा चाऽऽह – यमान्पतत्यकुर्वाणः। ब्रह्महत्यादिभिः यमलोपे सति पतितत्वात्संध्योपासनादिभिर्नाधिक्रियते, न तु तथा नियमलोपे। तथा च शिष्टस्मरणम् – 'पतति नियमवान्यमेष्वसक्तो न तु यमवान्नियमालसोऽवसीदेत्। न नियमानसमीक्ष्य

♣ ममु., भाच. मेधागतम्।

+ गृर., निप्र. गृकवत्। ममु. मेधागतं गृकगतं च।

(१) **मस्मृ.** ४।१३९; **मेधा.** 'शुष्कं वैरम्' इति पाठो व्याखानात् प्रतीयते; **गृक.** ३४३; **मवि.** शुष्कवैरं (शुष्कं वैरं); **ममु.** मविवत्; **गृर.** ५३५; **मपा.** ११७; **निप्र.** २।५०१ पू.: २।५०४ मविवत्, उत्त.; **मच.** मविवत्; **चमव्या.** ७६; **मुक्ता.** ४५९ वा वदेत् (वादयेत्); **संम.** ४८ मुक्तावत्; **संप्र.** ५७३; **आन.** ६४६; **संर.** ३८७ मुक्तावत्, बृहन्नारदीये.

Σ गोरा., गृक., ममु., गृर., निप्र., संम. मेधागतम्।

× शेषं मुक्तावत्।

(१) **मस्मृ.** ४।२०४; **अप.** १।१५४ पू. २३०; **गृक.** ३०२; **गृर.** ५०६ न नित्यं (नित्यं च) केवलान् (केवलं); **चमव्या.** ७७ पू.; **संम.** ४८ सततं न नित्यं (नियतं नित्यं च) पू.

 

बुद्ध्या यमबहुलेष्वतिसंदधीत बुद्धिम्॥' इति। येषामपि पारिभाषिका यमनियमाः – 'अहिंसा सत्यवचनं ब्रह्मचर्यमकल्कता। अस्तेयमपि पञ्चैते यमाश्चैव व्रतानि च॥ अक्रोधो गुरुशुश्रूषा शौचमाचारलाघवम्। अप्रमादश्च नियमाः पञ्चैवोपव्रतानि च॥', तेषामपि गुरुलाघवमनेन श्लोकेन प्रतिपाद्यते। अतो नानेन यमानां सेवोच्यते, नापि नियमानामसेवा, उभयेषां तैः शास्त्रैर्विहितत्वात्। ♣ मेधा.

(२)इदं च यमनियमयोर्युगपदुपनिपाते विहितत्वाविशेषाद्विकल्पप्रसङ्गे बोद्धव्यम्। सततम् आपद्यपि। गृक. ३०२

(३)यमान् नित्यकर्माणि। नियमान् कामनानियतानि काम्यकर्माणि नित्यं न सेवेतेति, किंतु कामनोदय एव। केवलान् कृत्स्नानपि भजन्। अहिंसासत्यास्तेयापरिग्रहेन्द्रियनिग्रहादयः शरीरमात्रापेक्षा नियतकर्तव्या यमाः, तपःस्वाध्यायादयोऽधिकसाधनापेक्षा नियमा अत्रेत्येके। मवि.

(४)नियमापेक्षया यमानुष्ठानगौरवज्ञापनार्थमिदम्, न तु नियमनिषेधार्थम्, द्वयोरेव शास्त्रार्थत्वात्। यमनियमविवेकश्च मुनिभिरेवं कृतः। तदाह याज्ञवल्क्यः – 'ब्रह्मचर्यं दया क्षान्तिर्ध्यानं सत्यमकल्कता। अहिंसाऽस्तेयमाधुर्ये दमश्चेति यमाः स्मृताः॥ स्नानं मौनोपवासेज्यास्वाध्यायोपस्थनिग्रहाः। नियमा गुरुशुश्रूषा शौचाक्रोधाप्रमादता॥' (यास्मृ. ३।३१२-३१३)। यमनियमस्वरूपज्ञः समस्तस्नानादिनियमत्यागेनाप्यहिंसादिरूपं यममनुतिष्ठेत्। नियमाननुतिष्ठन्नपि यमानुष्ठानरहितः पततीत्ययं यमस्तुत्यर्थ आरम्भ इति। मेधातिथिगोविन्दराजौ – 'हिंसादिप्रतिषेधार्थका यमाः, 'वेदमेव जपेन्नित्यम्' (मस्मृ. ४।१४७) इत्यादयोऽनुष्ठेयरूपा नियमाः इति व्याचक्ष(? क्षा)ते। 8'अहिंसा सत्यवचनं ब्रह्मचर्यमकल्कता। अस्तेयमिति पञ्चैते यमा वै परिकीर्तिताः॥ अक्रोधो गुरुशुश्रूषा शौचमाहारलाघवम्। अप्रमादश्च सततं पञ्चैते नियमाः स्मृताः॥'। ममु.

♣ गोरा., नन्द. मेधागतम्।

8अत्रत्यमुत्तरश्लोकयोर्मतान्तरत्वादिबोधकमवतरणमुच्छिन्नमिति भाति।

(५)केवलान् नियमान् कुर्वाणः पततीति (न) युज्यते। ततो यमसहिता एव नियमाः कार्या इत्यर्थः। सततम् आपद्यपि। गृर. ५०६

(६)स्नातकस्यापि नित्यं यमस्याऽऽवश्यकत्वमाह– यमानिति। अत्र 'ब्रह्मचर्यं... शौचाक्रोधाप्रमादिता॥' (यास्मृ. ३।३१२-३१३) इति याज्ञवल्क्योक्त – यमनियमग्रह इति केचित्। 'यः स्वशाखां परित्यज्य' इति न्यायात् अत्रैवोक्ता हिंसानिषेधकोपायसाध्याः 'वेदमेव जपेन्नित्यम्' इत्यादिरूपनियमा ग्राह्या इति तु मेधातिथिगोविन्दराजमतम्। यमानां नित्यत्वे पततीत्येव हेतुः। मच.

यमनियमपरिगणनम्

**[1]आनृशंस्यं क्षमा सत्यमहिंसा दममस्पृहा।**
**ध्यानं प्रसादो माधुर्यमार्जवं च यमा दश॥**
**[2]अहिंसा सत्यवचनं ब्रह्मचर्यमकल्कता।**
**अस्तेयमिति पञ्चैते यमाश्चोपव्रतानि च॥**
**[3]शौचमिज्या तपो दानं स्वाध्यायोपस्थनिग्रहौ।**
**व्रतोपवासौ मौनं च स्नानं च नियमा दश॥**
**[4]अक्रोधो गुरुशुश्रूषा शौचमाहारलाघवम्।**
**अप्रमादश्च नियमाः पञ्चैवोपव्रतानि च॥**

(१)ब्रह्मचर्यमत्र प्रसिद्धं परदारादिवर्जनं स्वदारेषु पर्वादिवर्जनं च। निप्र. २।४१४

(२)यमनियममाह चतुर्भिः। प्रसादः ईश्वरप्रसन्नता। व्रतं स्नातकव्रतादि। उपवासः मासोपवासादिः। भाच.

(१) **अप.** १।१५४ पृ. २३० दममस्पृहा (दम आर्जवम्) र्यमार्जवं (र्यं मार्दवं); **चमव्या.** ७७-७८ स्पृहा (स्पृहम्); **संम.** ४८; **भाच.** ४।२०५ इति संख्यातः.

(२) **मेधा.** ४।२०४ मिति (मपि) यमाश्चोप (यमाश्चैव) (=); **ममु.** ४।२०४ चतुर्थचरणे (यमा वै परिकीर्तिताः) (=); **निप्र.** २।४१४ कल्कता (कल्पता) श्चोप (श्चैते) व्यासो मनुश्च; **भाच.** ४।२०६ इति संख्यातः.

(३) **अप.** १।१५४ पृ. २३०; **निप्र.** २।४१५ निग्रहौ (निगहः ?) वासौ मौ (वासमौ) मा दश (माः स्मृताः) व्यासो मनुश्च; **चमव्या.** ७८; **संम.** ४८ निग्रहौ (निग्रहः); **भाच.** ४।२०७ इति संख्यातः.

(४) **मेधा.** ४।२०४ माहार (माचार) (=); **ममु.** ४।२०४ नियमाः ... तानि च (सततं पञ्चैते नियमाः स्मृताः) (=); **निप्र.** २।४१४ लाघवं (मानवम्) व्यासो मनुश्च; **भाच.** ४।२०८ इति संख्यातः.

ग्रहणे भोजननिषेधः

**'चन्द्रसूर्यग्रहे नाद्यादद्यात्स्नात्वा विमुक्तयोः।**
**अमुक्तयोरस्तगयोर्दृष्ट्वा स्नात्वा परेऽहनि॥**

(१)अत्र चन्द्रसूर्यग्रहशब्देन तद्युक्तमहोरात्रं लक्ष्यते। एवं च चन्द्रसूर्यग्रहणयुक्तेऽहोरात्रे तद्विमोचनात्पूर्वं न भुञ्जीतेत्युक्तं भवति। उक्तं च मार्कण्डेयेन – 'चन्द्रस्य यदि वा भानोर्यस्मिन्नहनि भार्गव। ग्रहणं तु भवेत्तत्र न पूर्वं भोजनक्रिया॥ नाऽऽचरेत्सग्रहे तस्मिंस्तथैवास्तमुपागते। यावत्स्यान्नोदयस्तत्र नाश्नीयात्तावदेव तु॥' इति। स्मृच. २।६२०

(२)यदिदं भोजनं निरूपितम्, तद्ग्रहणकाले प्रतिषिद्धम्। तदाह मनुः – 'चन्द्रसूर्यग्रहे... स्नात्वा परेऽहनि॥' इति। ग्रहे ग्रहणकाले। स्पर्शमारभ्य मोक्षणपर्यन्तो ग्रहकालः। तस्मिन् काले न भुञ्जीत, किंतु राहुणा चन्द्रसूर्ययोः मुक्तयोः सतोः पश्चात् स्नात्वा भुञ्जीत। यदा तु ग्रस्तास्तमयस्तदा परेद्युः विमुक्तौ तौ दृष्ट्वा भुञ्जीत।

×पमा.१।३८१-३८२

शूद्राणां मासिकं वपनं वैश्यवच्छौचं
द्विजोच्छिष्टभोजनं च

**'शूद्राणां मासिकं कार्यं वपनं न्यायवर्तिनाम्।**
**वैश्यवच्छौचकल्पश्च द्विजोच्छिष्टं च भोजनम्॥**

(१)सामान्योक्तः सच्छूद्राणां प्रसङ्गेनायं धर्म उच्यते। न्यायवर्तिनः द्विजशुश्रूषवः महायज्ञानुष्ठायिनश्च। तैर्वपनं मुण्डनं मासिकं कर्तव्यम्। तृतीयार्थे षष्ठी। अथवा ब्राह्मणाश्रितास्तत्परतन्त्राः, ब्राह्मणैः कार्यम्। अनेकार्थत्वात्करोतेरुपदेष्टव्यमिति प्रतिपत्तिः। वैश्यवत् शौचकल्पविशेषाः सूतकादावाचमने च। द्विजोच्छिष्टं च भोजनम् एतत्प्राग्व्याख्यातम्। *मेधा.

(२)शास्त्रमर्यादानुवर्तिनां द्विजात्याश्रितानां शूद्राणाम् (आश्रयभूतद्विजातीनाम्?) मासि मासि मुण्डनम्, वैश्यवच्च 'एका लिङ्गे' (मस्मृ. ५।१३६) इत्याद्याचमनपर्यन्तशौचविधिः कार्यः। द्विजोच्छिष्टभोजनं प्रकृतत्वादात्मसंबन्धे दातव्यम्। गोरा.

(३)तत्र पञ्चदशरात्रात्मक एव वैश्यस्य आशौचकल्पोऽतिदिश्यते, स्वशास्त्रे तस्यैवोक्तत्वात्। न्यायवृत्तिश्च शूद्रस्य द्विजातिशुश्रूषणपञ्चयज्ञनिर्वपणभृत्यभरणभार्यारतत्वादिः।

अप. ३।२२ पृ. ९०६

(४)न्यायवर्तिनां स्ववर्णधर्माच्युतानां शूद्राणां मासिकं मासि मासि मुण्डनं कार्यम्। भोजनं च द्विजोच्छिष्टं द्विजपाकभाण्डावशिष्टम्। एवंविधवृत्तवतां शूद्राणां वैश्यवच्छौचकल्पम्(?कल्पः) आशौचादिशुद्धिः। तेन पञ्चदशाहान्ते सूतकमृतकशुद्धिः। आचमनं च वैश्यवदेव। तत्र 'अद्भिः प्रायश्चित्ता(?प्राशिता)भिः' (मस्मृ. २।६२) इत्यादि ग्राह्यम्।

मवि.

(५)द्विजोच्छिष्टं च भोजनम्। भुज्यते इति भोजनं कार्यमिति। α ममु.

(६)यत्तु 'स्त्री शूद्रस्तु सकृत्सकृत्' (मस्मृ. ५।१३९) इति सकृत्तालुगताभिरद्भिराचमनं शूद्रस्य विहितम्, न तथा, किंतु सच्छूद्रस्य त्रिवारमुदकप्राशनम्, तत्रापि तालुगताभिरद्भिरित्येव। द्विजोच्छिष्टं नाम भुक्तशेषं भाण्डावशिष्टं न तु भोजनपात्रावशिष्टम्। θ स्मृकौ. ९२-९३

(७)'कृत्यानां कर्तरि॰' (पासू. २।३।७१) इति तृतीयार्थे षष्ठी। वपनं मुण्डनरूपं मासिकमिति

---

× सम., भाच. पमागतम्।

(१) **स्मृच.** २।६१९; **पमा.** १।३८१; **सम.** ७९ स्नात्वा प (स्नानं प.); **भाच.** मस्मृ. ४।२२३ इत्यस्यानन्तरमधिकः, विमु (तु मु) उत्तरार्धे (अमुक्तयोरगतयोरद्याच्चैव परेऽहनि॥) इति भाचपुस्तकमुद्रितपाठः.

(२) **मस्मृ.** ५।१४०; **मेधा.** ४।८० तृतीयपादमात्रम्; **गोरा.** ४।८० च (तु) चतुर्थपादमात्रम; **अप.** ३।२२-२३ पृ. ९०६; **गृक.** २६९ च (तु); **ममु.** ४।८० चतुर्थपादमात्रम्; **गृर.** ४७८ कल्पश्च (कल्पस्तु); **स्मृकौ.** ९२; **दीक.** ३।२२; **मर.** १४ ष्टं च भो (ष्टान्नभो); **उत.** १११ ष्टं च (ष्टस्य); **शूशि.** ३८ : ९० तृतीयपादमात्रम्; **मुक्ता.** ६९ च (तु) नारदः; **शूक.** ६६; **विपा.** ३।२।३१८ वैश्य (अर्य) ष्टं च (ष्टस्य); **आप्र.** ९० पूर्वार्धे (मासिकं वपनं कार्यं शूद्राणां न्यायवर्तिनाम्।) च (तु); **बाल.** १।८९ पृ. २४५ विपावत् : १।१२१ पृ. ३७७ आप्रवत्; **सस्मृ.** १०२ पू. (=) : ११७-११८ च (तु).

* गृक., गृर., बाल. मेधागतम्।

α शेषं मेधागतम्।

θ शेषं मेधागतम् अपगतं च। शूशि., शूक. स्मृकौगतम्।

प्रासङ्गिकम्। 'नोच्छिष्टं न हविष्कृतम्' (मस्मृ. ४।८०) इति सेवकेतराणां प्रतिषेधः। मच.

(८) अर्यः वैश्यः।

§विपा.३।२।३१८

(९) न्यायवर्तिनां शूद्राणामितरेभ्यो विशेषं प्रसङ्गादाह — शूद्राणामिति। मासिकं मासि श्राद्धं कार्यं प्रतिमासं वपनं कार्यमिति वा। शौचाचमनादिकल्पः।

नन्द.

(१०) न्यायवर्तिनां शूद्राणां मासिकं माससंबन्धि श्राद्धं कार्यम्। न्यायवर्तिनां शूद्राणां वपनं क्षौरं कार्यम्। वैश्यवच्छौचकल्पः पञ्चदशदिनपर्यन्तः। द्विजपाकभाण्डावशिष्टं द्विजोच्छिष्टं भोजनं द्विजैर्दत्तं कार्यम् 'शूद्रस्तु द्विजसेवया' इति वाक्येन।

भाच.

सर्वाश्रमिसाधारणानि दश धर्मलक्षणानि
तदध्ययनानुष्ठानफलं च

**[1]चतुर्भिरपि चैवैतैर्नित्यमाश्रमिभिर्द्विजैः।**
**दशलक्षणको धर्मः सेवितव्यः प्रयत्नतः॥**

(१) वक्ष्यमाणोपन्यासार्थः श्लोकः। दश लक्षणानि यस्येति बहुव्रीहिः। लक्षणं स्वरूपम्। सेवितव्यः सर्वकालमनुष्ठेयः। उक्तानामप्येतेषां प्रधानत्वाय पुनर्वचनम्। ज्ञानकर्मसमुच्चयपक्षश्चानेन पुनर्वचनेन दृढीकृतः। मेधा.

(२) एतैश्चतुर्भिः ब्रह्मचर्यादिभिराश्रमिभिर्द्विजैर्वक्ष्यमाणदशकारणको धर्मो यत्नेनाभ्यसनीयः।

*गोरा.

(३) वेदसंन्यासिकधर्मं प्रक्रम्य प्रसङ्गादन्येष्वप्युपदिशति — चतुर्भिरिति। मवि.

(४) चतुर्णां साधारणधर्मानाह — चतुर्भिरिति।

मच.

(५) एतैः वेदसंन्यासिकैः। नन्द.

**[1]धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।**
**धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्॥**

(१) धृत्यादयः आत्मगुणाः। तत्र धृतिर्नाम धनादिसंक्षये सत्त्वाश्रयः। यदि क्षीणं ततः किम्? शक्यमर्जयितुमिति। एवमिष्टवियोगादौ 'संसारगतिरियमीदृशी' इति प्रचलतश्चित्तस्य यथापूर्वमवस्थापनम्। क्षमा अपराधमर्षणं कस्मिंश्चिदपराद्धरि प्रत्युद्वेजनानारम्भः। दमः अनौद्धत्यं विद्यामदादित्यागः। अस्तेयं प्रसिद्धम्। शौचम् आहारादिशुद्धिः। इन्द्रियसंयमः अप्रतिषिद्धेष्वपि विषयेष्वप्रसङ्गः। धीः सम्यग्ज्ञानं प्रतिपक्षसंशयादिनिराकरणम्। विद्या आत्मज्ञानम्। कर्माध्यात्मज्ञानभेदेन धीविद्ययोर्भेदः। 8एतत्पौनरुक्त्यतया 'धीविद्या(ह्रीर्विद्या)' इति पठन्ति। तन्न सम्यक्, भेदस्य दर्शितत्वात्। अन्यत् प्रसिद्धम्। अक्रोधः उत्पत्स्यमानस्यानुत्पत्तिः। क्षमा कृतेऽप्यपकारेऽपकारानारम्भः।

मेधा.

(२) संतोषः अपराधसहनं शीतातपादिद्वन्द्वसहिष्णुता परद्रव्याग्रहणं मृद्वार्यादिशुद्धिर्जितेन्द्रियताऽनुपहता बुद्धिः आत्मज्ञानं यथोपलब्धाभिधानं क्रोधानुत्पत्तिरित्येतत् दशपरिमाणं धर्मलक्षणम्। सर्वमेतदिह शास्त्रविक्षिप्तमुक्तमपि प्रायश एतावन्मात्रत्वाद्धर्मस्येह पुनरुच्यते संक्षेपतोऽसंमोहेनावबोधार्थम्। ×गोरा.

(३) धृतिः प्रारब्धकर्मणि दुःखे सत्यनुद्वेगः। क्षमा क्रोधहेतूत्पत्तावपि तदनुत्पादः। दमः तपःक्लेशसहता। अस्तेयं परपरिगृहीतेष्वस्पृहा। शौचं मृदादिभिः। इन्द्रियाणां निग्रहो विषयेष्वप्रवर्तनम्। ह्रीः अकार्यान्निवर्तकं ज्ञानम्। विद्या आत्मोपासना। सत्यं मिथ्याहितात्मकवाक्यानुक्तिः। अक्रोधः दैवादुत्पन्ने क्रोधे तन्निवर्तनप्रयत्नः। धर्मलक्षणं धर्मकारणम्।

मवि.

---

§ शेषं स्मृकौगतम्।

* ममु. गोरावत्।

(१) मस्मृ. ६।९१; मोक. ६५ चैवैतै (चाप्येतै); कृर. १७; यप्र. ३२ रपि चैवैतै (रेवमप्येतै); बाल. ३।५६-५७.

8 पुनरुक्तमेव पौनरुक्त्यम्। स्वार्थे ष्यञ्। तस्य भावस्तत्ता, तया।

× ममु. गोरावत्।

(१) मस्मृ. ६।९२; मेधा. धीर्वि (ह्रीर्वि) इत्यपि पाठान्तरं गम्यते; मोक. ६५ धी (ह्री); मवि. मोकवत्; कृर. १७ मोकवत्; यप्र. ३२ दमो (तपो); नन्द. मोकवत्, 'धी' इत्यपि पाठान्तरम्; भाच. मोकवत्; बाल. ३।५६-५७.

(४) धृतिः स्वस्वधर्मास्खलनम्। क्षमा द्वन्द्वसहिष्णुता। विद्या आत्मज्ञानं सगुणोपासना वा।

§मच.

(५) ह्रीः निषिद्धकरणे लज्जा। धीरिति पाठे अध्यवसायः। विद्या बाहुश्रुत्यम्। अक्रोधः वाञ्छितार्थप्रतिघातिषु चित्तस्याविकारः। §नन्द.

**[1]दश लक्षणानि धर्मस्य ये विप्राः समधीयते।**
**अधीत्य चानुवर्तन्ते ते यान्ति परमां गतिम्॥**

(१) पूर्वस्य विधेः फलकथनम्। अध्ययनात् फलश्रुतिरनुष्ठानश्रुत्यर्था। मेधा.

(२) ये ब्राह्मणाः एतानि दश लक्षणानि पठन्ति, पठित्वा चानुतिष्ठन्ति, ते उत्कृष्टं स्थानं ब्रह्मलोकं वा ज्ञाने सति मोक्षं प्राप्नुवन्ति। गोरा.

(३) समधीयते जानन्ति। अनुवर्तन्ते अनुतिष्ठन्ति। अज्ञात्वाऽनुष्ठानस्याफलत्वात् ज्ञानेऽपि फलोक्तिः।

मवि.

(४) अनुवर्तन्ते शब्दतोऽर्थतश्चाभ्यस्यन्ति। परमाम् अनुपमाम्। मच.

प्रजापालनं क्षत्रियस्य
प्रकृष्टो धर्मः

**[2]क्षत्रियस्य परो धर्मः प्रजानामेव पालनम्॥**

क्षत्रियस्य धर्मान्तरेभ्यः प्रजापालनमेव प्रकृष्टो धर्मः।

*गोरा.

धनदारत्यागेनाप्यात्मनो
रक्षणीयत्वम्

**[3]आपदर्थं धनं रक्षेद्दारान्रक्षेद्धनैरपि।**
**आत्मानं सततं रक्षेद्दारैरपि धनैरपि॥**

(१) कृच्छ्रप्रकारसाध्योऽयं नियमो भवति। आपदर्थे, यथा मशकार्थे धूमो मशकानपनेतुमिति ज्ञायते, तन्निमित्तं धनं रक्षेत्। नान्यत्र धनरक्षायाः कार्यमस्ति दत्तभुक्तफलं हि धनमिति। तथा हि – 'तेन प्रतीक्ष्य यानमासनं दण्डं बिभर्ति, उपजप्यानुपगृह्णाति' इति। धनेनापि दारा रक्ष्याः। दारग्रहणं प्रणिधिसंबन्धिप्रत्युपलक्षणार्थम्। आत्मा तु रक्ष्यः। अन्येन प्रकारेण आत्मानं रक्षितुमसमर्थः सर्वस्वं दत्त्वा दारानपि काले परित्यज्य वाग्यतः स्थितो दारधनानि वर्जयित्वा धर्मं करिष्यति। ये तु धनदारानुरोधेन विनश्यन्ति न तेषां धनदारादि दृष्टम्, नाप्यदृष्टम्, धर्माधर्मानाचरणात्। न च कौमारदारत्यागित्वम्। न त्यागप्रतिषेधस्यायं च वा जयति(?)। राजधर्मप्रकरणे चायमुक्तो(ऽपि) दृष्टार्थत्वादन्यस्यापि द्रष्टव्यः। ननु च राजा राज्यं प्राप्य महाधनोऽश्वमेधादि करिष्यति अतुलं च सुखमनुकरिष्यति, अतस्तु लोकः सं(?लोकसं)क्रुष्टं किं करिष्यति? नैष दोषः। अल्पस्यापि(?) पावनानि कर्माणि सन्ति, अधनस्यापि जपादयः। विशेषनिमित्तानि धनान्येव। न चेदमस्यामवस्थायां लोकसंक्रुष्टमिति। न च सहसैतत्कार्यम्। मेधा.

(२) यतः सकलपुरुषविषयोऽयं धर्मः स्मर्यते – आपदर्थ इति। आपन्निवृत्त्यर्थं धनं रक्षणीयम्। धनपरित्यागेनापि दाराः संरक्षणीयाः। आत्मा पुनर्धनदारादिपरित्यागेनापि संरक्ष्यः। यत्तु राजव्यतिरेकेणान्यस्य दारार्थ आत्मत्यागो न्याय्य इत्याहुस्तदसत्, 'सर्वत आत्मानं गोपायेत्' इति अशास्त्रीयमरणस्य निषिद्धत्वात्। न च सहसैव धनदारपरित्यागः कार्यः।

$गोरा

(३) आपदः प्रकृतिकोपबलक्षयरोगादयः। धनैः भूम्यादिभिः। मवि.

(४) 'आत्मना चेज्जीवति प्रधिनाऽगात्' (बृउ. १।५।१५) इतिश्रुतिसंमतमर्थवादमाह – आपदर्थमिति। आत्मना देहेन चेज्जीवति अगात् प्रधिना धनेनेति श्रुतेरर्थः। *मच.

(५) गुणवद्भूमिपरित्यागेनाप्यात्मा रक्षितुं दुःशक्य(?क)श्चेत् दारपरित्यागेनाऽऽत्मा रक्षितव्य इत्याह– आपदर्थमिति। आपदर्थम् आपन्निवृत्त्यर्थम्।

नन्द.

§ शेषं पूर्वव्याख्यानेषु गतम्।
* ममु. गोरावत्।
(१) **मस्मृ.** ६।९३; **मोक.** ६५; **यप्र.** ३२ पूर्वार्धे (दशलक्षणको धर्मो यैर्विप्रैः समधीयते।); **बाल.** ३।५६-५७.
(२) **मस्मृ.** ७।१४४; **स्मृच.** २।४५० नामेव (नां परि).
(३) **मस्मृ.** ७।२१३; **मेधा.** आपदर्थं (आपदर्थे); **गोरा.** मेधावत्; व्याख्यानात्तु आदर्शपाठ एवेति प्रतिभाति.

$ ममु. गोरावत्।
* शेषं मेधागतम्।

धर्मोपरोधादिनिमित्तैर्द्विजातीनां शस्त्रधारणानुमतिः, आततायिवधे दोषाभावः

**[1]शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते।**
**द्विजातीनां च वर्णानां विप्लवे कालकारिते॥**
**[2]आत्मनश्च परित्राणे दक्षिणानां च संगरे।**
**स्त्रीविप्राभ्युपपत्तौ च घ्नन् धर्मेण न दुष्यति॥**

(१)'वैणवीं धारयेद्यष्टिम्' (मस्मृ. ४।३६) इति विधानादनुमितशस्त्रग्रहणाः श्रोत्रियाः। स्वबलाविष्टं भवति च साहसिके बलातिशयधायि च शस्त्रम्, अतः साहसिकत्वाशङ्कया शस्त्रग्रहणमप्राप्तं विधीयते — शस्त्रं द्विजातिभिर्ग्राह्यमिति। एतावता वाक्यं विच्छिद्यते, अवशिष्टं तु 'घ्नन् धर्मेण' इत्यनेनाभिसंबध्यते, इत्यतो द्वे एते वाक्ये। ये त्वेतेष्वेव निमित्तेषु ग्रहणमिच्छन्ति, नान्यदेति, तेषामतर्कितोपनताततायिमुखपतितस्याशस्त्रस्य का गतिः? न हि ते शस्त्रग्रहणं तस्य प्रतिपालयन्ति। अथैवं व्याख्यायते — धर्मो यत्रोपरुध्यते, विप्लवे कालकारिते राजनि व्यतिक्रान्तेऽसंस्थायां प्रवृत्तायां शस्त्रं ग्राह्यम्, अन्यदा तु सौराज्ये राजैव रक्षतीति। न हि प्रसार्य हस्तौ राजा प्रतिपुरुषमासितुं शक्नोति। भवन्ति केचित् दुरात्मानो ये राजपुरुषानपि शूरतमाभियुक्तान् बाधन्ते, शस्त्रवतस्तु बिभ्यति, इति सार्वकालिकं शस्त्रधारणं युक्तम्। किं पुनर्ग्रहणमत्र बिभीषिकाजननमात्रम्? नेत्याह — घ्नन्धर्मेण न दुष्यतीति। हिंसापर्यन्तोऽयमुपदेशः। यत्त्वापस्तम्बेनोक्तम् — 'न ब्राह्मणः परीक्षार्थमपि शस्त्रमाददीत' (आध. १।२९।६) इति, (सः) असति यथाभिहिते निमित्ते आकर्षणस्य प्रतिषेधः, न ग्रहणस्य। विकोशा हि परीक्ष्यन्ते।

धर्मस्योपरोधो यदा यज्ञादीनां विनाशः कैश्चित्क्रियते। वर्णानां विप्लवः अव्यवस्थानं वर्णसंकरादि। कालकारिते राजमरणादौ। तत्र स्वधनकुटुम्बरक्षार्थं शस्त्रं ग्राह्यम्। अन्ये तु परार्थमप्यस्मिन्नवसरे। तथा च गौतमः — 'दुर्बलहिंसायां चाविमोचने शक्तश्चेत्' (गौध. २१।१९) इति। उक्तं यज्ञविनाशसंकरनिवृत्त्यर्थं शस्त्रग्रहणम्, निमित्तान्तरमाह — आत्मनश्च परित्राणे। परिः सर्वतोभावे। शरीरभार्याधनपुत्ररक्षार्थं घ्नन्धर्मेण न दुष्यति। दक्षिणानां च संगरः अवरोधः। यदि यज्ञार्थं कल्पिता दक्षिणाः कैश्चिदपह्रियेरंस्तदा तन्निमित्तं योद्धव्यम्। अन्ये तु एवमभिसंबध्नन्ति — दक्षिणानां हेतोः संगरे। यदुपरोधः प्रवृत्ते धर्मे, अप्रवृत्ते दक्षिणासंगर इति। स्त्रीविप्राणाम् अभ्यवपत्तिः परिभवः। यत्र स्त्रियः साध्व्यो हठात्केनचिदुपगम्यन्ते हन्यन्ते वा, एवं ब्राह्मणाः केनचिद्धन्यन्ते, तत्र घ्नन् खड्गादिना न दुष्यति, हिंसाप्रतिषेधातिक्रमो न कृतो भवतीत्यर्थः। असति प्रतिषेधे कामचारप्राप्तौ विध्यन्तरपर्यालोचनया गौतमवचनमनुध्यायमानेन 'दुर्बलहिंसायां चाविमोचने शक्तश्चेत्' (गौध. २१।१९) इति, अवश्यं हनने प्रवर्तितव्यम्। अथ प्रति(प्र)हारशङ्का भवति तदा 'सर्वत एवाऽऽत्मानं गोपायेत्' (गौध. ९।३५) इत्युपेक्षा। मेधा.

(२)ब्राह्मणादिभिश्च खड्गाद्यायुधं ग्रहीतव्यम्। यस्मिन् काले वर्णाश्रमिणां चौरादिभिः धर्मः कर्तुं न दीयते तत्र, तथा द्विजानां ब्राह्मणादीनां राजाभावपरचक्राक्षेपकारादिभिः कालजनिते वर्णानां संकरे, तथा आत्मनश्च शरीरदारादिरक्षायाम्, दक्षिणासंबन्धिनि संगरे अपहारनिमित्ते संग्रामे, स्त्रीब्राह्मणरक्षायां च धर्मेण अकूटयुद्धेन तेन शस्त्रेण अनन्यगतिकः परान् हिंसन्न प्रत्यवैति। एवं चात्र साहसदण्डो न कार्यः। ×गोरा.

(३)द्विजातिभिस्त्रिभिरपि ग्राह्यम्, किमुत राज्ञेत्यर्थः। धर्मस्योपरोधे बलात्साहसिकैरधर्मप्रवर्तने। द्विजातीनां विप्लवे उत्तमायाः स्त्रियाः अधमेन योगात्संकरे कालकारिते, न तु देशकृते, तेषां तत्प्रायत्वेन निवर्तनासंभवात्। आत्मनः परित्राणे प्राणरक्षणे। दक्षिणानां दक्षिणार्थं तदपहारे केनचित्क्रियमाणे संगरे युद्धे। स्त्रीविप्रयोरभ्युपपत्तौ प्राणरक्षणे। धर्मेण विषदिग्धशराद्यधार्मिकप्रकारत्यागेन। मवि.

(१) **मस्मृ.** ८।३४८; **समु.** ९८; **उ.** १।२९।७; **स्मृतिकौ.** ४७५ पू.

(२) **मस्मृ.** ८।३४९; **समु.** ९८-९९ प्राभ्युप (प्राभ्यवि) च घ्नन् (विघ्नन्) (न०); **मेधा.** ८।३५० प्रथमचरणमात्रम्; **उ.** १।२९।७ भ्युपप (भ्यवप); **ममु.** ८।३५० उत्त.; **मच.** ८।३५१ उत्त.; **स्मृतिकौ.** ४७५ उवत्.

× ममु., मच. गोरावत्।

(४) धर्मेण हेतुना घ्नन्, नार्थार्थम्, न दुष्यति न साहसिको भवति। $नन्द.

**'गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम्।**
**आततायिनमायान्तं हन्यादेवाविचारयन्॥**

(१) आत्मपरित्राणार्थमविचारेण योद्धव्यम्। तदनुदर्शयति — गुरुमिति। आततायुच्यते यः शरीरधनदारपुत्रनाशे सर्वप्रकारमुद्यतः। तमविचारयन् न विचारयन् हन्यात्। गुर्वादिग्रहणमर्थवादः — एतेऽपि हन्तव्याः, किमुतान्ये? इति। एतेषां त्वाततायित्वेऽपि वधो नास्ति। 'आचार्यं च प्रवक्तारम्' (मस्मृ. ४।१६२) इत्यनेनापकारिणामपि वधो निषिद्धः। 'गुरुमाततायिनम्' इति शक्यः संबन्धस्तथा सत्याततायिविशेषणमेतत्ततो गुर्वादिव्यतिरिक्तस्य आततायिनः प्रतिषेधः(? प्रतिबोधः) कुतः स्यात्, वाक्यान्तराभावात्। अथ 'नाऽऽततायिवधे दोषः' इत्येतद्वाक्यान्तरं सामान्येनाभ्यनुज्ञापकमिति, तदपि न, विधेरश्रवणात्, पूर्वशेषतया चार्थवादत्वे प्रकृतवचनत्वात्। इहभवन्तस्त्वाहुः — यद्यपि आततायिनमित्येव विधिरवशिष्टोऽर्थवादस्तथापि गुर्वादीनां वधानुज्ञानम्। यतोऽन्यदपकारित्वम्, अन्यदाततायित्वम् यो ह्यन्यां कांचन पीडां करोति, न सर्वेण शरीरादिना, सोऽपकारी, ततस्त्वन्य आततायी। तथा च पठ्यते — 'उद्यतासिर्विषाग्निभ्यां शापोद्यतकरस्तथा। आथर्वणेन हन्ता च पिशुनश्चापि राजतः॥ भार्यातिक्रमकारी च रन्ध्रान्वेषणतत्परः। एवमाद्यान्विजानीयात्सर्वानिवाऽऽततायिनः॥'। आयान्तमिति वचनादात्तशस्त्रो हन्तुमभिधावन्, दारान् वा जिहीर्षन् हन्तव्यः। कृते तु दोषे किमन्यत्करिष्यतीति उपेक्षा इति ब्रुवते। तदयुक्तम्। यतः 'प्रकाशमप्रकाशं च' (मस्मृ. ८।३५१) इति वक्ष्यति। समानौ ह्येतौ करिष्यन् कृतवांश्च दुष्टौ चेति। तस्मादायान्तमित्यनुवादः कर्तुमागतं कृत्वा वा गतमिति। आततायित्वाच्चासौ हन्यते। न च कृतवत आततायित्वमपैति। नास्याऽऽत्मनो रक्षार्थ एव वधः 'आत्मनश्च परित्राणे' इत्यनेनोक्तः। ×मेधा.

(२) आततायिनं हननप्रवृत्तं हन्यादेवाङ्गच्छेदादिरूपघातेन, न त्वत्यन्तम्, 'अन्यत्र गोब्राह्मणात्' इति गौतमस्मृतेः। आततायी तु 'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः। क्षेत्रदारापहारी च षडेते आततायिनः॥' इत्यादिना स्मृत्यन्तरे उक्तः। शस्त्रपाणिः शस्त्रेण घातयितुमायातः। यदभावे वृत्त्युच्छेदस्तयोः हिरण्यादिधनधान्याद्युत्पत्तिभूम्योर्धनक्षेत्रपदाभ्यां ग्रहणम्। मवि.

(३) गुरुबालवृद्धबहुश्रुतब्राह्मणानामन्यतमं वधोद्यतमागच्छन्तं विद्यावित्तादिभिरुत्कृष्टं पलायनादिभिरपि स्वनिस्तरणाशक्तौ निर्विचारं हन्यात्। अत एवोशना- 'गृहीतशस्त्रमाततायिनं हत्वा न दोषः। कात्यायनश्च भृगुशब्दोल्लेखेन मनूक्तश्लोकमेव व्यक्तं व्याख्यातवान् — 'आततायिनि चोत्कृष्टे, तपःस्वाध्यायजन्मतः। वधस्तत्र तु नैव स्यात्पापं हीने वधो भृगुः॥' मेधातिथिगोविन्दराजौ तु 'स्त्रीविप्राभ्युपपत्तौ च घ्नन्धर्मेण न दुष्यति' इति पूर्वस्यायमनुवादः, गुर्वादिकमपि हन्यात्, किमुतान्यमपीति व्याचक्षाते। ममु..

(४) अविचारयन् गुर्वादीन् हन्यात्, त्यागं कुर्यात्, न तु हिंसां कुर्यात्। 'हन हिंसागत्योः' इत्यस्य धातोर्गत्यर्थता, न हिंसार्थ(त्व)म्। भाच.

**'नाऽऽततायिवधे दोषो हन्तुर्भवति कश्चन।**
**प्रकाशं वाऽप्रकाशं वा मन्युस्तं मन्युमृच्छति॥**

(१) न कश्चन इति नाधर्मो न दण्डो न प्रायश्चित्तमिति। प्रकाशं जनसमक्षम्, अप्रकाशं विषादिदानेन येन केनचिदुपायेन। मन्युः क्रोधाभिमानिनी देवताऽसौ मन्युमृच्छति। नात्र हन्तृहन्तव्यभावोऽस्ति पुरुषयोः, अयम् आततायिक्रोध इतरेण हन्यत इत्यर्थवादोऽयम्। यथा प्रतिग्रहकामः 'को मह्यं ददातु, नाहं प्रतिग्रहीता, न त्वं दाता, ततश्च कुतः प्रतिग्रहदोषो मम? एवमत्रापि। *मेधा.

---

$ शेषं गोरागतम्।

(१) **मस्मृ.** ८।३५०; **मेधा.** ४।१६२ प्रथमचरणमात्रम्; **ममु.** ४।१६२ मेधावत्; **चमव्या.** ५२ (ब्राह्मणं ... हन्यादेव) एतावदेव (=); **सम.** १०७ उत्त. (=); **स्मृतिकौ.** ४७५ ब्राह्मणं (श्रोत्रियं); **कृभ.** १२९४ वृद्धौ (वृद्धं) (=).

× गोरा., स्मृतिकौ. मेधागतम्।

* नन्द., भाच. मेधागतम्।

(१) **मस्मृ.** ८।३५१; **मेधा.** ८।३५० शं वा ऽ (शम) प्रथमतृतीयचरणद्वयमात्रं व्याख्यानव्यहितम्.

(२) हन्तृकृतो मन्युः क्रोधाभिमानिनी देवता तं मन्युं हन्यमानगतं क्रोधं निवर्तयति इति पूर्वार्थवादः 'कामः कामाय स्यात्' इतिवत्। *गोरा.

(३) हन्तुः वधकर्तुः न कश्चन दोषो भवतीति ब्रह्महत्यादिकृतमपि पापं न तादृशं भवति। तथाहि प्रायश्चित्तमपि तत्राल्पमेव स्मृतिकारैर्निबद्धम्। मन्युः क्रोधः, तज्जन्या हिंसोपलक्ष्यते। हन्तुर्हिंसा आततायिनो हिंसां प्रति ऋच्छति तत्प्रतिरुद्धा न फलं प्रसूते। तन्न कर्तरि पापं जनयति हिंसितेन हिंसाकरणादिति तात्पर्यम्। wमवि.

विप्रादिशुश्रूषा शूद्रधर्मः, शौचशुश्रूषादिधर्मैः शूद्रस्य जात्युत्कर्षः

**θ¹विप्राणां वेदविदुषां गृहस्थानां यशस्विनाम्।**
**शुश्रूषैव तु शूद्रस्य धर्मो नैःश्रेयसः परः॥**
**²शुचिरुत्कृष्टशुश्रूषुर्मृदुवागनहंकृतः।**
**ब्राह्मणापाश्रयो नित्यमुत्कृष्टां जातिमश्नुते॥**

(१) शुचिः मृद्वारिशुद्ध्येन्द्रियसंयमनेन च, उत्कृष्टान् त्रैवर्णिकान् शुश्रूषुः, मृदुवाक् न तर्कादिशास्त्रगन्धितया परुषभाषी उत्कृष्टां ब्राह्मणादिजातिमाप्नोतीत्यर्थः। स्पष्टमुक्तं प्रयोजनम्। पुनर्ब्राह्मणापाश्रयग्रहणात् अन्यानप्याश्रितस्यान्यशुश्रूषकस्यैतदविरोधेन धर्म एव। मेधा.

(२) 8उत्कृष्टावत्र क्षत्रियवैश्यौ। ब्राह्मणापाश्रयः वृत्त्यर्थं क्षत्रियादिशुश्रूषापरोऽपि ब्राह्मणे निवेदितात्मा। जातित उत्कृष्टिः जात्युत्कर्षः। *गृक. २६५

(३) शुचिः आन्तरबाह्यशौचवान्। उत्कृष्टस्य ब्राह्मणस्य शुश्रूषुः। ब्राह्मणापाश्रयः कंचिदेकं ब्राह्मणमाश्रित्य स्थितः। जातिमुच्छ्रितां जन्मान्तरे वैश्यादिजातिताम्। 'उत्कर्षं जातितः' इति क्वचित्पाठः। मवि.

(४) निरहंकारः प्राधान्येन ब्राह्मणाश्रयस्तदभावे क्षत्रियवैश्याश्रयोऽपि स्वजातित उत्कृष्टां जातिं प्राप्नोति। §ममु.

(५) जातित उत्कृष्टिः जातित उत्कृष्टः। 'उत्सृष्टम्' इति क्वचित्पाठः। उत्सृष्टम् उत्कृष्टम्। +गृर. ४७५

(६) उत्सृतिः उत्सृष्टिः उत्कर्षः। शूद्रेषु सच्छूद्रो भवति। जातित उत्कृष्टो भवतीति तात्पर्यार्थः। ×स्मृकौ. ८७

(७) उत्कृष्टशुश्रूषा पूर्वपूर्ववर्णपूजनम्। नन्द.

(८) 'उत्कृष्टां जातिमश्नुते' इति क्वचित्पाठः। δ बाल. १।१२० पृ. ३७५

गोब्राह्मणार्थे देहत्यागः प्रतिलोमानामभ्युदयकारणम्

**¹ब्राह्मणार्थे गवार्थे वा देहत्यागोऽनुपस्कृतः।**
**स्त्रीबालाभ्युपपत्तौ च बाह्यानां सिद्धिकारणम्॥**

(१) अनुपस्कृतः धनमगृहीत्वा। अभ्यवपत्तिः अनुग्रहः। बाह्यानां प्रतिलोमानाम्। सिद्धिकारणम् उत्कृष्टजातौ जन्मसिद्धेः सिद्धिहेतुत्वादेवमुच्यते। तादृशं जन्म लभन्ते यथाधिकृता भवन्ति। स्वर्गादिप्राप्तिर्वा सिद्धिः। मेधा.

---

* शेषं मेधावत्। ममु., मच. गोरावत्।

w शेषं मेधागतम्।

θ अस्य व्याख्यानानि 'वर्णाः तद्वृत्तयश्च' इत्यस्मिन् प्रकरणे (वका. पृ. १२०६) इत्यत्र द्रष्टव्यानि।

(१) **मस्मृ.** ९।३३४, शेषस्थलादिनिर्देशाः 'वर्णाः तद्वृत्तयश्च' इत्यस्मिन्प्रकरणे (वका. पृ. १२०६) द्रष्टव्याः.

(२) **मस्मृ.** ९।३३५; **गृक.** २६५ शुश्रूषुर्म (वर्णेषु मृ) मुत्कृष्टां (मुत्कृष्टिं) मश्नुते (तोऽश्नुते); **मवि.** मुत्कृष्टां (मुच्छ्रितां) 'उत्कर्षं जातितः' इत्यपि पाठः; **गृर.** ४७५ ष्टां जाति (ष्टिं जाति) शेषं गृकवत्, 'उत्सृष्टम्' इत्यपि पाठः; **पमा.** १।४१८ दुवागन (दुः शान्तोऽन) णापा (णोपा); **स्मृकौ.** ८७ मुत्कृष्टां (मुत्सृतिं) 'उत्कृष्टाम्' इत्यपि पाठः, तथा 'उत्सृष्टिम्' इत्यपि; **मर.** ११ कृतः (कृता) शेषं गृकवत्; **मच.** मुत्कृष्टां (मुच्छ्रितिं); **शुशि.** ३३ जाति (गति) क्वचित्तु 'उत्कृष्टिं जातितोऽश्नुते' इति पाठः; **मुक्ता.** ६७ णापा (णाद्या); **शूक.** ६९ णापा (णोपा) मनुपराशरौ; **बाल.** १।१२० पृ. ३७५ षुर्म (षा मृ) णापा (णाद्या) व्याख्यानात्तु 'णापा' इत्येव पाठः, जाति (गति) 'उत्कृष्टां जातिमश्नुते' इति क्वचित्पाठः; **संस्मृ.** ११८ शुश्रूषुः (कर्माणः ?).

8 गृकपाठे मूले वर्णेष्विति बहुवचनं व्यक्तिपरमित्यभिप्रायो ग्राह्यः।

* मर., शुशि. गृकवत्।

§ शेषं मेधागतम्।

+ शेषं गृकगतम्।

× शेषं मेधागतं गृकगतं च। मच. मेधागतं स्मृकौगतं च।

δ शेषं गृकगतम्।

(१) **मस्मृ.** १०।६२; **मेधा.** भ्युपप (भ्यवप); **अप.** १।९४ पृ. ११९ स्कृतः (स्कृतेः) भ्युपप (भ्यवप); **मभा.** ११।३१; **स्मृकौ.** २२ मेधावत्; **मच.** भ्युपप (द्युपप); **शूक.** २६७ भ्युपप (भ्यवप) बाह्यानां (बलिनां).

(२) गोब्राह्मणस्त्रीबालपरित्राणार्थं दृष्टप्रयोजनानपेक्षः प्राणत्यागः प्रतिलोमार्थं स्वर्गप्राप्तिकारणम्।

§गोरा.

(३) उपस्कारः मूल्यग्रहणम्। अभ्यवपत्तिः अनुग्रहः।

अप. ११९४ पृ. ११९

(४) अनुपस्कृतः स्वकीयदृष्टकार्याभिसंधिरूपोपस्कारशून्यः। स्त्रीबालाभ्युपपत्तौ ब्राह्मणेतरवर्णयोरपि स्त्रीबालयोरुपरक्षार्थं देहत्यागः। बाह्यानां प्रागुक्तानां सूतादीनाम्। सिद्धिः स्वर्गगमनम्। मवि.

(५) अनुपस्कृतः क्लैब्यादिरहितः। देहत्यागशब्दस्य विशेषणमनुपस्कृत इति। ×स्मृकौ. २२

(६) देहत्यागः अनुपस्कृतः लाभख्यातिपूजाद्यनाक्रान्तः स्त्रीबालाद्युपपत्तौ तेषां मारणादिभ्यो रक्षणं च बाह्यानां वर्णधर्मबहिष्कृतानां सिद्धिकारणं स्वर्गगमनहेतुः किल्बिषनाशहेतुर्वा। मच.

(७) सिद्धिः श्रेयः। *शूक. २६७

(८) अनुपस्कृतः अर्थकामानुबन्धरहितः। बाह्यवर्णाः धर्मेष्व(न)धिकृताः प्रतिलोमजाः। नन्द.

(९) ब्राह्मणेष्वपि स्त्रीबालयोः। बाह्यानाम् आयोगवादीनाम्। σभाच.

चातुर्वर्ण्यसामान्यधर्माः अहिंसादयः

**[1]अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः।**
**एतं सामासिकं धर्मं चातुर्वर्ण्येऽब्रवीन्मनुः॥**

(१) सत्यमिति चात्र व्याहृत्युपलक्षितो ब्रह्मयज्ञः परिगृह्यते, सत्यवचनस्येन्द्रियनिग्रहादेव लब्धत्वात्। तथा च वक्ष्यत्येतत् – 'पञ्चयज्ञान् न हापयेत्' (यास्मृ. १।१२१) इति। विश्व. ११८

(२) शौचं मृज्जलादिबाह्यगतम्। सामासिकं समस्तस्य सर्वमनुष्यभेदजातेरुक्तम्, न ब्राह्मणादिजातिविभागेन। व्याख्यातमन्यत्। यद्यहिंसा प्रतिलोमानां धर्मः स्यात्, कथं तर्हि तदुक्तम्? – 'मत्स्यघातो निषादानाम्' (मस्मृ. १०।४८) 'बिलौकोवधबन्धनम्' (मस्मृ. १०।४९) क्षत्रादीनाम्, आरण्यपशुहिंसनम् (मस्मृ. १०।४८) एवं च केचिदाहुः – ये जीविकाहेतुतया वध्यत्वेनोक्तास्ततोऽन्यत्राहिंसा। अन्ये मन्यन्ते – अहिंसा तेषामभ्युदय – *साधनहेतुत्वेन धर्मः, न तु प्रतिषेधो हिंसायाः संमत इति। यथा 'न मांसभक्षणे दोषः' (मस्मृ. ५।५६) इति(वत्?)। यद्यहिंसा धर्मस्तेषाम्, कथं तर्हि तैर्जीवितव्यम्? यथा कुतश्चिदवगमात्(?) तेषामनुपपन्ना हिंसानिवृत्तिर्धर्मायेति चेत्तदा को जीवनोपायः? अन्याश्च वृत्तयः प्रतिवर्णनियताः। अध्यापनादयस्तावदत्यन्तासंभवादप्राप्ताः। कृष्यादयोऽपि वैश्यनियताः। शूद्रस्य सेवाऽन्या वा साधारणी वृत्तिरस्ति। यथा वर्तेरन् 'विद्याशिल्पम्' (मस्मृ. १०।११६) इत्यत्र दर्शयिष्यामः। यदपीदमुच्यते 'ते निन्दितैर्वर्तयेयुर्द्विजानामेव कर्मभिः' (मस्मृ. १०।४६) इति तत्र किमस्ति निन्दिततरमन्यदतो हिंसायाः? न च मत्स्यघातो द्विजानामुपयुज्यते। श्राद्धेऽतिथिभोजनादौ च कादाचित्क उपयोगः, न सार्वकालिको जीविकाभावः। तस्मान्न घातादि स्वतन्त्रम्। मेधा.

(३) हिंसावर्जनं यथोपलब्धाभिधानं परस्वाग्रहणं मृद्वारिशुद्धिरिन्द्रियसंयम इत्येतं सांक्षेपिकं धर्मं चातुर्वर्ण्यानुष्ठेयं मनुराह। प्रकरणसामर्थ्याच्च चातुर्वर्ण्यग्रहणस्यान्तरप्रभवदर्शनार्थत्वे सत्यन्तरप्रभवविषयमपीदं वाक्यम्। αगोरा.

(४) अहिंसा हिंसानिवृत्तिः। अस्तेयं परद्रव्यानभिलाषः। शौचं मनःकायशौचम्। इन्द्रियनिग्रहः कामार्थं तदप्रवर्तनम्। सामासिकं साधारणं बाह्यैः सह (चातुर्वर्ण्यं?) चतुर्वर्णानाम्। बाह्यानामप्येतद्धर्मसाधनमित्यर्थः। अत एव याज्ञवल्क्यः – 'सर्वेषां धर्मसाधनम्' (यास्मृ. १।१२२) इत्याह। मवि.

(५) असाधारणं धर्ममुक्त्वा साधारणं धर्ममाह– अहिंसेति। सत्यं यथोपलब्धाभिधानम्। चातुर्वर्ण्य इति

§ ममु. गोरावत्।

× शेषः विसंगतः मेधातिथ्यनुवादः।

* शेषं मेधागतम्।

σ शेषं मविगतम्।

(१) **मस्मृ.** १०।६३; **विश्व.** ११८ मस्तेयं (मक्रोधः) उत्तरार्धे (एष साधारणो धर्मश्चातुर्वर्ण्ये प्रकीर्तितः॥) (=); **मभा.** २।१ प्रथमः पादः (=) : १०।५१ मस्तेयं (मक्रोधः) निग्रहः (संयमः) एतं (एतान्) चतुर्थः पादो नास्ति; **ममु.** १०।१२६ निर्देशमात्रम्; **मच.** १०।१२६ निर्देशमात्रम्.

* साधनशब्दोऽत्र भावसाधितः।

α ममु., भाच. गोरागतम्।

दृष्टान्तार्थः, अन्यथा प्रकरणबाधः। यथाऽयं धर्मश्चातुर्वर्ण्ये साधारणस्तथाऽपसदानामपीति भावः। अत एव बौद्धा अपि तत्स्वीकुर्वते। सामासिकं समासवदनेकोपसंग्राहकत्वादिति। मेधातिथिः — यद्यपि वध्यघातनं बिलौक्या(?कआ)दिहिंसनं न युक्तं तथापि प्रकारान्तरेण जीवितुं शक्तानां ततो निवृत्तिः सिद्धेः कारणं तदतिरिक्ताहिंसनं चेति भावः। मच.

**[1]श्राद्धकर्माऽऽतिथेयं च दानमस्तेयमार्जवम्।**
**प्रजनं स्वेषु दारेषु तथा चैवानसूयता॥**

विप्रशुश्रूषा शूद्रस्य मुख्यो धर्मः

**[2]विप्रसेवैव शूद्रस्य विशिष्टं कर्म कीर्त्यते।**
**यदतोऽन्यद्धि कुरुते तद्भवत्यस्य निष्फलम्॥**

(१)ब्राह्मणशुश्रूषैव मुख्यः शूद्रस्य धर्मः। ततो यदन्यत् व्रतोपवासादि कुरुते तदस्य निष्फलम्। न तु दानपाकयज्ञादीनामस्य प्रतिषेधः, प्रत्यक्षविधानात्। इतरप्रतिषेधो ब्राह्मणशुश्रूषास्तुत्यर्थः। *मेधा.

(२)विशिष्टम् उत्कृष्टम्, धर्मवृत्तिहेतुत्वात्। निष्फलं धर्मरहितमित्यर्थः। ततश्च क्षत्रियवैश्यसेवा शूद्रस्य वृत्त्यर्थैव। अप. १।१२० पृ. १६१

(३)यदतोऽन्यत् एतद्विना कुरुते। मवि.

(४)निष्फलं दृष्टधनादिसंपत्तिरपि न परलोकफलहेतुः। मच.

(५)तेनैतदुक्तं भवति — विप्रसेवातत्पर एव शूद्रः पञ्चमहायज्ञादि कुर्यात्, तदपि तत्सेवाविरोधेन। तत्सेवावैमुख्येन तु तत् क्रियमाणमप्यकृतप्रायमेव भवति, तथाभूतस्य तत्राधिकारप्रतिषेधनात्। 8 शूशि. ६३

(६)विशिष्टम् उत्कृष्टम्, धर्मवृत्त्युभयहेतुत्वात्। निष्फलं विशिष्टफलाजनकम्, वृत्तिमात्रहेतुत्वात्। पप्र. ४६

शूद्रे पातकसंस्कारधर्माधिकाराभावाः,
ते च पातकादिविशेषविषयाः

**[1]न शूद्रे पातकं किंचिन्न च संस्कारमर्हति।**
**नास्याधिकारो धर्मेऽस्ति न धर्मात्प्रतिषेधनम्॥**

(१)सर्वोऽयमनुवादश्लोकः। 8यदस्य आहत्य शुद्धग्राहिकया न प्रतिषिद्धम्, यथा हिंसास्तेयादि अनादृतवर्णविशेषं सामान्यशास्त्रप्रतिषिद्धम्, न तद्व्यतिक्रमादस्य पापमुत्पद्यते। श्रुतमेवास्य शब्देन यथा हिंसास्तेयादिस्तत्रास्य भवत्येव दोषः। न च संस्कारम् उपनयनलक्षणमर्हति, तदुक्तं 'त्रयो वर्णा द्विजातयः' (मस्मृ. १०।४) इति। एवं नास्याधिकारो धर्मेऽस्ति स्नानोपवासदेवतार्चनादौ नास्य नित्योऽधिकारोऽस्ति। अकरणे न प्रत्यवैति। न धर्मात्प्रतिषेधनम्। येषु स्नानोपवासव्रतादिषु नित्याधिकारो नास्ति, अकरणे प्रत्यवायाभावः, अथ निषेधो नास्ति, तादृशेभ्यो

---

* गोरा., ममु., गृर. मेधागतम्।

8 शूक. शूशिगतम्।

(१) मण्डलिकमुद्रितपुस्तके 'अहिंसा सत्यमस्तेयं' (मस्मृ. १०।६३) इति पूर्वश्लोकपूर्वार्धानन्तरमेतदर्धद्वयमधिकम्.

(२) **मस्मृ.** १०।१२३; **मिता.** १।१२० पू.; **अप.** १।१२० वत्यस्य (वेत्तस्य); **स्मृच.** २।४५५ पू.; **गृर.** ४७६ यदतो (यत्ततो) निष्फलम् (शक्तितः); **पमा.** १।४२१ कीर्त्यते (कथ्यते) शेषमपवत्; **स्मृकौ.** ८७-८८ न्यद्धि कु(न्यद्विकु); **मर.** १२; **शूशि.** ६३ अपवत्; **मुक्ता.** ६७ न्यद्धि (न्यत्र); **शूक.** ७० मनुपराशरौ; **संम.** ७९ कीर्त्यते (कथ्यते) पू.; **पप्र.** ४६ अपवत्; **सस्मृ.** १०३ ष्टं कर्म (ष्टा धर्म) पू. : ११८ कर्म कीर्त्यते (कीर्त्यते परम्) उत्तरार्धे (यत्ततोऽन्यस्य कुरुते यद्भवेत्तस्य निष्फलम्॥).

8 ग्रन्थोऽयं दुर्बोधः। तथाहि — 'विधिनिषेधौ यदधिकारिकौ तेनाधिकारिणा कृतस्तदतिक्रमस्तस्य प्रत्यवाये प्रयोजकः, तत्र अधिकारितावच्छेदकस्य सामान्यरूपत्वं विशेषरूपत्वं वा अकिंचित्करम्' इत्येष न्याय इति प्रतिपद्यामहे। तथा च 'न हिंस्यात्सर्वा भूतानि' इत्यादिषु शाब्देषु, 'अहिंसा सत्यमस्तेयम्' (मस्मृ. १०।६३) इत्यादिविधिसिद्धेष्वार्थिकेषु च हिंसास्तेयादिनिषेधेषु शूद्रस्य सामान्यधर्मावच्छेदेनाधिकारित्वेऽपि, तदतिक्रमस्तस्य पातकं प्रयोजयत्येवेति 'यदस्य आहत्य' इत्यादिर्ग्रन्थो न्यायविरुद्धमर्थं बोधयतीति प्रतीमः। अत एव कुल्लूकादिभिः सामान्यशास्त्रबलेनैव शूद्रस्यापि हिंसादिजन्यं पातकमस्तीत्युक्तम्। अत एव कमलाकरो निर्णयसिन्धौ शूद्रकमलाकरे च मेधातिथिव्याख्यानं केवलमर्थतोऽनूद्य तूष्णींभूतः सन् मेधातिथ्युक्तेऽर्थे स्वसंप्रतिपत्तिं द्योतयतीति चित्रम्। तस्मात् शूद्रभिन्नाधिकारिकनिषेधविषयैर्लशुनभक्षणादिभिः शूद्रे पातकं नास्तीत्ययमेवार्थो न्याय्यः प्रतिभाति। न चैवमप्राप्तप्रतिषेधत्वात् 'न शूद्रे पातकम्' इति प्रकृतनिषेधस्य वैयर्थ्यमिति वाच्यम्, सर्वसंमतेनानुवादत्वेनास्यापूर्वनिषेधत्वाभावात्। 'श्रुतमेवास्य' इत्याद्यग्रिमवाक्यस्य प्राथमिकोऽर्थोऽपि दुर्बोधः, आपाततो हिंसास्तेयादौ दोषोक्तेः पूर्ववाक्यविरोधप्रतिभासश्च भवति।

(१) **मस्मृ.** १०।१२६; **गृक.** २७१; **गृर.** ४८०; **स्मृकौ.** ५२:१८२ निर्देशमात्रम्; **मच.** १०।७२ पू.; **शूशि.** ६४ नास्या (न चास्या); **मुक्ता.** ६७; **सिन्धु.** ११७४ पू.; **शूक.** ४९ पू.

धर्मेभ्यो न प्रतिषेधः। न चेदृशादस्य प्रतिषेधः, अतः शिष्टाप्रतिषिद्धत्वादभ्युदयकामस्य तदनुष्ठानं युज्यते। एवं लशुनादिभक्षणनिवृत्तिरप्यभ्युदयायास्य वेदितव्या। सामान्यशास्त्रे विहितं 'निवृत्तिस्तु महाफला' (मस्मृ. ५।५६) इति, अतो 'न धर्मात्प्रतिषेधनम्' इति यत्रा-(?अत्रा)ऽऽरम्भः *मेधा.

(२) पञ्चयज्ञादिकरणरूपाद्धर्मात्प्रतिषेधनम्। मवि.

(३) लशुनादिभक्षणेन शूद्रे न किंचित्पातकं भवति, न तु ब्रह्मवधादावपि, 'अहिंसा सत्यम्' इत्यादेश्चातुर्वर्ण्यसाधारणत्वेन विहितत्वात्। न चाप्युपनयनादिसंस्कारमर्हति। नास्याग्निहोत्रादिधर्मेऽधिकारोऽस्ति, अविहितत्वात्। न च शूद्रविहितत्वात्पाकयज्ञादिधर्मादस्य निषेधः। एवं चास्य सर्वस्य सिद्धार्थत्वादयं श्लोक उत्तरार्थोऽनुवादः। +ममु.

(४) धर्मे श्रौते। धर्मात् श्रौतात्। गृर. ४८१

(५) यथा द्विजातीनां पातकमुत्पद्यते तथा नास्तीति 'न शूद्रे पातकं किंचित्' इत्यस्यार्थः। न च संस्कारमर्हति उपनयनलक्षणं संस्कारं नार्हति। तथा चोक्तम् — 'त्रयो वर्णा द्विजातयः' (मस्मृ. १०।४) इति। तथा वचनान्तरप्राप्तनामकरणादिव्यतिरिक्तं संस्कारमपि नार्हति। × संकौ. ५२

(६) शूद्रस्य विप्रसेवेति पुनःपुनः द्रढयन् प्राप्तमर्थवादतया अनुवदति — नेति चतुर्भिः। पातकं सूनादिकृतम्, न तु विप्रवधादिकृतम्, 'अहिंसा सत्यमस्तेयम्' इत्यादि चातुर्वर्ण्यसाधारणस्योक्तत्वात्। न धर्मात् पञ्चयज्ञादेः। मच.

(७) पातकं विहितकर्माननुष्ठानप्राप्तः प्रत्यवायः शूद्रे नास्ति, तस्याविहितधर्मत्वात्(?)। संस्कारं निषेकादिकम्। श्रौते धर्मे अधिकारी नास्ति। धर्मात् पाकयज्ञादेः। नन्द.

* स्मृकौ., शूशि., सिन्धु., शूक. मेधागतम्।

+ भाच. ममुगतम्। अशुद्धप्रायत्वान्ममुव्याख्याने तात्पर्यार्थस्य प्रमीयमानत्वाच्चात्रत्यं गोराव्याख्यानं न गृहीतम्।

× शेषं मेधागतम्।

**[1]धर्मेप्सवस्तु धर्मज्ञाः सतां धर्ममनुष्ठिताः।**
**मन्त्रवर्जं न दुष्यन्ति प्रशंसां प्राप्नुवन्ति च॥**

(१) एतदेवाऽऽह। धर्ममाप्तुमिच्छन्तः अभ्युदयकामाः। सतां साधूनां धर्मम् अनुष्ठिताः समाश्रिताः। मन्त्रवर्जं न दुष्यन्ति। अतस्ते अनेकाहोपवासदेवतार्चनगुरुब्राह्मणनमस्कारादि सतां वृत्तमाचरन्तो न दुष्यन्ति, प्रशंसां फलं च प्राप्नुवन्ति। न पुनरेतन्मन्तव्यम् 'यानि समन्त्रकाणि ब्राह्मणादीनां कर्माणि दर्शपौर्णमासादीनि तानि मन्त्रवर्जं शूद्रस्य न दुष्यन्ति' इति। यतः समन्त्रेषूत्पन्नेषु मन्त्ररहितेनानुष्ठानमशाब्दं स्यात्। मन्त्रवर्जमित्येतस्य दर्शितो विषयः। तथा च भगवान् व्यासः — 'न चेह शूद्रः पततीति निश्चयो न चापि संस्कारमिहार्हतीति। स्मृति(? श्रुति)प्रयुक्तं तु न धर्ममश्नुते न चास्य धर्मे प्रतिषेधनं स्मृतम्॥' इति। एतदपि यथाविहितानुवाद्येव। लशुनसुरापानादेर्न पतति। संस्कारनर्हतोक्तैव। उक्तं चानुपनीतत्वात् श्रुतिविहितधर्माभावे स्मृतिविषये सामान्यविहिता धर्मा यथोक्तप्रकारास्ते नास्य प्रतिषिध्यन्ते। तथा च स्मृत्यन्तरम् — 'पाकयज्ञैः स्वयं यजेत। अनुज्ञातोऽस्य नमस्कारो मन्त्रः' (गौध. १०।६३-६४) इति।

ये पुनराहुः — 'आवसथ्याधानपार्वणवैश्वदेवान्नपाकयज्ञादिषु शूद्राणां पाक्षिकोऽधिकारः' तेषामभिप्रायं न विद्मः। आवसथ्याधानं तावद्गृह्यकारैराम्नातं त्रैवर्णिकोद्देशेनैव, मन्वादिभिश्च नैवमा(? नैवाऽऽ)म्नातम्। तथा केवलं 'वैवाहिकाग्नौ कुर्वीत गृह्यं कर्म' (मस्मृ. ३।६७) इति, तत्र नैवाऽऽम्नातम्। कुतः शूद्रस्याऽऽधानम्? अथ पाकयज्ञविधानादग्न्याधानाक्षेपस्तदपि न, लौकिकाग्नौ वैश्वदेवो भविष्यति। यावद्वचनं वाचनिकं नान्यदाक्षेप्तुमलम्। 'विवाहाग्नौ' इत्यत्रैव प्रदर्शित्। पार्वणशब्देन च यद्यामावास्यं श्राद्धमुच्यते तदभ्यनुजानीमः, अष्टकापार्वणश्राद्धवैश्वदेवानां विहितत्वात्। अथ दर्शपौर्णमासौ, तदपाकृतम्। * मेधा

* स्मृकौ. मेधावत्।

(१) **मस्मृ.** १०।१२७; **मभा.** १०।६६ धर्मम (वृत्तिम); **गृक.** २७१; **गृर.** ४८०; **स्मृकौ.** ५३; **मच.** प्सव(च्छव); **शूशि.** ६६ ष्ठिताः (ष्ठितम्); **मुक्ता.** ६७; **शूक.** ४४ ष्ठिताः (व्रताः); **सस्मृ.** ११९.

(२)तथा च दर्शयति – धर्मेप्सव इति। ये पुनः शूद्राः स्वधर्मवेदिनो धर्मप्राप्तिकामास्त्रैवर्णिकानां संबन्धिनमनिषिद्धमाचारमाश्रितास्तेऽमन्त्रकमन्नप्राशनपाकयज्ञादि कुर्वाणा न प्रत्यवयन्ति न तूपनयनम्, 'चतुर्थ एकजातिस्तु' (मस्मृ. १०।४) इत्युक्तत्वात्। ख्यातिं च लोके प्राप्नुवन्ति। ⇧गोरा.

(३) मन्त्रवर्जं वैदिकमन्त्रवर्जम्। +गृक. २७१

(४)तदेवाऽऽह – धर्मेप्सव इति। मन्त्रवर्जं न सोमयागादिकर्म इह कामयज्ञकरणे(?) प्रशंसां प्राप्नुवन्ति। धर्मं च लभन्त इत्यपि द्रष्टव्यम्। पञ्चमहायज्ञकरणे न दोष इत्युक्तम्। सतां वृत्तमनुष्ठिताः सतां वृत्तं लक्षीकृत्योद्युक्ताः। प्रशंसां सच्छूद्रताम्। मवि.

(५)अत एवाऽऽह – धर्मेति। धर्मेच्छवः धर्मं कर्तुकामाः। धर्मज्ञाः पुराणादिद्वारा धर्मानुष्ठानज्ञाः। सतां धर्मं ब्राह्मणाद्यनुष्ठितं पञ्चयज्ञादिरूपम्। मन्त्रवर्जं नमोतिरिक्तमन्त्रवर्जम्। मच.

(६)यत्तु मेधातिथिनोक्तम् – 'यानि मन्त्ररहितानि व्रतोपवासादीनि तान्यनुतिष्ठन्तः शूद्रा न दुष्यन्ति, न पुनः समन्त्राण्यपि मन्त्रवर्जमनुतिष्ठन्तो न दुष्यन्तीति, समन्त्रकविधौ शूद्रान्प्रत्यप्रवृत्तत्वेन मन्त्रवर्जानुष्ठानेऽशाब्दानुष्ठानं स्यादिति, तन्न, स्थपतीष्टिवच्छूद्रग्राहिकया विधाने मन्त्रवर्जताविधानात्। अन्यथा मन्त्रहीने व्रतोपवासादावनधिकारप्रसक्त्या विधिवैयर्थ्यात्। तस्मात्संनिधानार्थकमेवैतत्। शूक. ४४-४५

(७)यद्यप्येवं तथापि धर्मेप्सवः धर्मज्ञाः सतां वृत्तिं निषेकादिसंस्कारं मन्त्रवर्जितम् अनुष्ठिताः अनुष्ठितवन्तः शूद्रा न दुष्यन्ति। नन्द.

(८)मन्त्रवर्जं अध्ययनवर्जम्। # भाच.

**[1]यथा यथा हि सद्वृत्तमातिष्ठत्यनसूयकः।**
**तथा तथेमं चामुं च लोकं प्राप्नोत्यनिन्दितः॥**

⇧ ममु. गोरावत्।
+ गृर. गृकवत्।
# शेषं गोरावत्।
(१) **मस्मृ.** १०।१२८; **गृक.** २७१ लोकं प्रा (लोकमा); गृर. ४८० सद्वृ (यद्वृ) तथेमं (तथैनं) शेषं गृकवत्; **स्मृकौ.** ५५; **सस्मृ.** ११९ सद्वृ (तद्वृ) न्दितः (न्दितम्).

(१)उक्तार्थः श्लोकः। मेधा.

(२)यस्मादनिन्दकः शूद्रो यथावत् (यथा यथा) द्विजात्याचारमनिषिद्धमनुतिष्ठति तथा तथा अगर्हितः सन्निहलोके कीर्तिं परलोके स्वर्गं प्राप्नोति। $ गोरा.

(३) सद्वृत्तानुष्ठानस्य फलमाह – यथेति। नन्द.

ब्राह्मणेन स्वमन्त्रवीर्येण क्षत्रियेण
बाहुवीर्येण वैश्येन धनेन
शत्रुर्विजेतव्यः

**[1]न ब्राह्मणो वेदयेत किंचिद्राजनि धर्मवित्।**
**स्ववीर्येणैव ताञ्छिष्यान्मानवानपकारिणः॥**

(१)निमित्तेऽभिचारो न दोषायेति श्लोकार्थः। न त्वभिचारो विधीयते, न च राजनि वेदनं प्रतिषिध्यते। केवले सति निमित्तेऽभिचरितुं प्रवृत्तो राज्ञा न किंचिद्वक्तव्यः। तथा वक्ष्यति 'विधाता शासिता वक्ता।' इति, 'तस्मै नाकुशलं ब्रूयात्' (मस्मृ. ११।३५) इति। राजेति प्रतीयते। शिष्यादिति। सत्यपि विधौ राजनि निवेदयेत्। न च प्रतिषेध उपसंहारश्लोकपर्यालोचनया तत्परमवतिष्ठते। निमित्तानि चोक्तानि 'भार्यातिक्रमकारी च' इत्यादीनि। किंचित्पीडानिमित्तमनेन मे कृतमिति राज्ञे निवेदयेत्। धर्मवित् अभिचारविधिज्ञः। स्ववीर्येण मन्त्राभिशापाभ्याम्। तत्रैवोत्तरश्लोकार्थः। * मेधा.

(२)अत्र प्रसङ्गात् प्रायश्चित्तस्य वक्ष्यमाणस्य ब्राह्मणेन स्वशत्रावभिचारेण मार्यमाणे भाव्यो राज्ञ इवास्य शत्रुवध इत्याह – न ब्राह्मण इति। वेदयेत निवेदयेत्। मवि.

(३)अदृष्टभये ब्राह्मणस्य तप एव साधनम्, दृष्टभये तु किं स्यात्? तत्राऽऽह – नेति पञ्चभिः। स्ववीर्येण तपआदिना। + मच.

(४)अथ शत्रुपीडापदि ब्राह्मणस्य कर्तव्यमाह – न ब्राह्मणो वेदयेतेति। किंचित् अपह(? क)रणम्। नन्द.

$ ममु., भाच. गोरावत्।
* गोरा., ममु. मेधागतम्।
+ शेषं मेधागतम्।
(१) **मस्मृ.** ११।३१.

**[1]स्ववीर्याद्राजवीर्याच्च स्ववीर्यं बलवत्तरम्।**
**तस्मात्स्वेनैव वीर्येण निगृह्णीयादरीन्द्विजः॥**

(१) राजा कदाचिदनिपुणतया न निग्रहेण प्रवर्तेत स्वतस्तु न कदाचिदुपेक्षेति स्ववीर्यं बलीयः। मेधा.

(२) कस्मात्पुनरेवमुच्यते? यस्मात् – स्ववीर्यादिति। यस्माद्राजशक्तितः स्वशक्तिः प्रकृष्टा, स्वाधीनत्वात्। तस्माद्ब्राह्मणः शत्रून्निगृह्णीयात्। *गोरा.

(३) बलवत्तरम् अधिकम् प्रयत्नाधिक्यसंभवात्। मवि.

(४) तत्र हेतुः – स्ववीर्यादिति। राजवीर्यस्य धनाद्युपाधिदर्शनात्। मच.

(५) द्विजः द्विजोत्तमः। नन्द.

**[2]श्रुतीरथर्वाङ्गिरसीः कुर्यादित्यविचारयन्।**
**वाक्शस्त्रं वै ब्राह्मणस्य तेन हन्यादरीन्द्विजः॥**

(१) किं तत्स्ववीर्यमिति शङ्कानिवृत्त्यर्थोऽयं श्लोकः। श्रूयन्ते इति श्रुतयः। अथर्वणवेदे येऽभिचारप्रकाराः श्रुतास्ते कर्तव्या इत्यर्थः। बाहुल्येन तत्राभिचाराणां विधानात् अथर्वाङ्गिरसग्रहणम्, न पुनरन्येषु वेदेष्वननुज्ञानतम्। अथवा अभिचारश्रुतयोऽथर्वाङ्गिरसशब्देनोच्यन्ते। अथवा अथर्वणशब्दा एवंविधे एवार्थे प्रयुज्यन्ते 'यज्ञोऽथर्वणवित्काम्यः' इति। मेधा.

(२) अथर्वाङ्गिरेभ्यः(? रोभ्यां) प्रोक्ता अभिचारश्रुतीर्निर्विकल्पमनुतिष्ठेत्, यस्मादभिचारमन्त्रोच्चारणात्मिका ब्राह्मणस्य वागेव कार्यकरणाच्छस्त्रम्, तेन ब्राह्मणः शत्रून्निगृह्णीयात्। ✡गोरा.

(३) श्रुतीरथर्वाङ्गिरसीः तच्छ्रुत्युक्तानि कर्माणि कुर्यात् इति अनेन हेतुनेत्यर्थः। अभिचारयन् अभिचारं प्रवर्तयन्। मवि.

(४) अथर्ववेदस्य आङ्गिरसीः दुष्टाभिचारश्रुतीः अविचारयन्कुर्यात्। तदर्थमभिचारमनुतिष्ठेदित्यर्थः। ब्राह्मणः शत्रून् हन्यात्, न तु शत्रुनियमाय राजा वाच्यः। $ममु.

(५) अथर्वाङ्गिरसीः अथर्ववेदे अङ्गिरसा दृष्टाः। अरीन् अपकारिणः। +मच.

(६) हेत्वन्तरमप्याह – श्रुतीरथर्वाङ्गिरसीरिति। 'अभिचारितमभिचारं कुर्यात्' इत्यथर्वशिरसि श्रुतिवाक्यमस्ति। तेन युक्तं तदाश्रयणमिति। 'तच्चाङ्गं सर्वशा(? श)स्त्राणाम्' इति तच्चाभिचारितं 8मातृरूपं शस्त्रम्। वाक् मन्त्रः। तेन वाङ्मयेन शस्त्रेण। नन्द.

**[1]तदस्त्रं सर्ववर्णानामनिवार्यं च शक्तितः।**
**तपोवीर्यप्रभावेण अवध्यानपि बाधते॥**
**[2]क्षत्रियो बाहुवीर्येण तरेदापदमात्मनः।**
**धनेन वैश्यशूद्रौ तु जपहोमैर्द्विजोत्तमः॥**

(१) पूर्वशेष एव। मेधा.

(२) क्षत्रियः पौरुषेण शत्रुपराभवलक्षणामापदमतिक्रामेत्। वैश्यशूद्रौ तु पुनः राज्ञे धनं दत्त्वा व्यवहारलेखनेन। ब्राह्मणस्त्वभिचारात्मकैर्हो(? र्जपहो)मैरित्युक्तम्। +गोरा.

(३) धनेन राज्ञे धनं दत्त्वा तेन स्ववैरिमारणेन। मवि.

(४) वैश्यशूद्रौ पुनः प्रतिकर्त्रे धनदानेन। ✡ममु.

(५) अत्रार्थे दृष्टान्तः – क्षत्रियइत्यादि। प्रासङ्गिकमुपायपरं वा। जपहोमैः अभिचारात्मकैः। विकल्पस्त्वरिगतगुणवत्त्वाद्यपेक्षया। एतेन क्षत्रियादीनां न वाक्शस्त्राव(? च)रणमित्युक्तम्। मच.

(६)(न ?) इयं वर्णानामापदि प्रतिकारोपायव्यवस्थेत्याह – क्षत्रियो बाहुवीर्येणेति। नन्द.

---

* ममु. गोरावत्।
✡ भाच. मेधागतं गोरागतं च।
(१) **मस्मृ.** ११।३२; **अप.** १।१५६ पृ. २३२.
(२) **मस्मृ.** ११।३३; **मवि.** दित्यवि (दित्यभि); **मच.** मविवत्; **नन्द.** त्यविचारयन् (त्यभिचारितम्) तृतीयचरणे (तच्चाङ्गं सर्वशा(? श)स्त्राणां); **भाच.** मविवत्.

$ शेषं गोरावत्।
\+ शेषं मेधागतम्।
8 मन्त्रमूलभूतमूलाक्षररूपमातृकारूपमित्यर्थोऽभिप्रेतः स्यात्?
\+ भाच. गोरावत्।
✡ शेषं गोरावत्।
(१) **मस्मृ.** ११।३३ इत्यस्यानन्तरं प्रक्षिप्तश्लोकोऽयम्.
(२) **मस्मृ.** ११।३४; **अप.** १।५६ पृ. २३२.

ब्राह्मणो विधातृत्वादिगुणसंपन्नत्वान्नावमन्तव्यः

***[1]विधाता शासिता वक्ता मैत्रो ब्राह्मण उच्यते।
तस्मै नाकुशलं ब्रूयान्न शुष्कां गिरमीरयेत्॥**

(१) प्राग्व्याख्यातोऽयम्। तस्मै ब्राह्मणायाभिचरते 'निगृह्यतामयम्' इत्यकुशलं न ब्रूयात्। न शुष्कां गिरमीरयेत्। वाग्दण्डधिग्दण्डयोरपि प्रतिषेधः। अथवा सर्वेषां वर्णानां न ब्राह्मणः क्षोभयितव्यो यस्त्रयीविद्याप्रभावेण शक्तः स्वयं निग्रहीतुम्। विधाता स्रष्टा। अन्यस्य राज्ञः शासिता निग्रहीता। वक्ता +हितान्। अतो मैत्रः। तस्मात्सर्व(प्र?)शक्तियुक्तत्वान्न दुर्बलोऽयमित्यवमन्तव्यः। मेधा.

(२) विधाता यज्ञादिद्वारेण जगतः स्रष्टा। शासिता अधर्मस्य। वक्ता अध्यापकः। मैत्रः अहिंस्रः। अतो बहूपकारकत्वादकुशलम् अयुक्तं हिंसादि न कुर्यात्। शुष्कां पर्युषिताम्। मवि.

(३) विहितकर्मणामनुष्ठाता, पुत्रशिष्यादीनां शास्ता, प्रायश्चित्तादिधर्माणां वक्ता सर्वभूतमैत्रीप्रधानो ब्राह्मण उच्यते। तस्मै 'निगृह्यतामयम्' इत्येवमनिष्टं न ब्रूयात्, नापि साक्रोशां वाचं वाग्दण्डधिग्दण्डरूपां तस्योच्चारयेत्। ममु.

(४) अन्येषां विप्रापेक्षत्वं विप्रात् भीतिं च व्यञ्जयंस्तस्य त्वन्यत्र नैरपेक्ष्यमाह — विधातेति। विधाता कर्तुमकर्तुमन्यथाकर्तुं समर्थः। शासिता वाक्शस्त्राद्यैः। वक्ता धमदिः। मैत्रः हितानुसंधाता। अकुशलं बीभत्सम्। शुष्कां शोकजननीम्। आक्रोशवाचकमिति यावत्। मच.

(५) तस्माद्ब्राह्मणो नावमन्तव्य इति प्रसङ्गादाह — विधाता शासिता वक्तेति। शुक्तं(?क्तां) विरस(?सा)म्। # नन्द.

(६) न शुष्कां निष्ठुरां गिरमीरयेत्। $भाच.

द्विजानां सुरापाननिषेधः सुरालक्षणं च, ब्राह्मणस्य मद्यमांसनिषेधः

**[1]सुरा वै मलमन्नानां पाप्मा च मलमुच्यते।
तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत्॥**

(१) अन्नशब्दो यद्यप्यदनक्रियाकर्मणि व्युत्पाद्यते, तथापि व्रीह्यादिप्रभृता(? प्रकृता)वेव भक्तसक्त्वपूपादौ प्रसिद्धतरप्रयोगः। तथा च 'अन्नेन व्यञ्जनम्' (पासू. २।१।३४) इति भेदोपपत्तिः। अतः पिष्टविकारत्वात् सुराया अन्नव्यपदेशे लब्धेऽन्नानां मलमिति निवारणोपपत्तौ पैष्ट्याः सुरायाः प्रतिषेधे लिङ्गमिदम्। लिङ्गं त्रयाणां वर्णानां संपद्यते। ब्राह्मणक्षत्रियवैश्यैरपि वर्णैः पैष्टी न पातव्या। किंच, सैव सुरा मुख्या गौडीमाध्व्योः। एवं यथा सीधुमाध्वीकयोर्गुरु प्रायश्चित्तं न तथाऽन्येषामरिष्टादीनां मद्यानाम्। मलशब्दः पाप्मेति व्याख्यातो निन्दातिशयदर्शनार्थः। सत्यपि प्रायश्चित्तप्रकरणे वाक्यात् सुरापाननिषेधोऽयम्। भिन्नवाक्यत्वाच्च नार्थवादः। 8मेधा.

(२) यस्मात्तण्डुलपिष्टादपि संपाद्यत्वात् सुराऽन्नमलम्, मलशब्देन च पापमुच्यते, (तस्मात्) ब्राह्मणक्षत्रियवैश्याः पैष्टीं सुरां न पिबेयुरित्यनेनैव प्रतिषेधे सति एतदतिक्रमे 'सुरां पीत्वा' (मस्मृ. ११।९०) इत्यादि प्रायश्चित्तम्। सुरा(शब्दस्य) चान्नमलार्थवा(चित्वात्) लोकप्रसिद्धश्च(?द्धेश्च) पैष्ट्ये मुख्या, गौडीमाध्व्योस्तूपचारात्सुराशब्दः। गोरा.

(३) अन्नमलत्वं च व्रीह्यादिपिष्टमय्याः। एवं च न संभवति गौडीमाध्व्योः। न हि गुडमधुनी अन्नम्। अन्नं तु व्रीह्याद्येव। ततश्च पैष्टीपानं द्विजानां प्रतिषिद्धम्, पैष्ट्या इतरयोश्च ब्राह्मणस्येति मन्तव्यम्।

+अप. ३।२२७ पृ. १०४४

---

* गोराव्याख्यानमशुद्धिबहुलत्वान्न संगृहीतम्।

+ हितकारकानर्थानित्यर्थः। द्वितीयाविभक्त्या वक्तृशब्दस्य तृन्नन्तत्वम्, अत एव च वचनविषये वक्तुस्तच्छीलत्वं तद्धर्मत्वं तत्साधुकारित्वं च ध्वनितम्, तेष्वर्थेषु तृनो विधानात् तद्योगे षष्ठीनिषेधाच्च।

# शेषं मचगतम्।

(१) **मस्मृ.** ११।३५; **मेधा.** ११।३१ प्रथमतृतीयचरणावेव; **नन्द.** शुष्कां (शुक्तं).

$ शेषं मविगतम्।

8 भाच. मेधागतम्।

+ शेषं मेधागतम्।

(१) **मस्मृ.** ११।९३; **अप.** ३।२२७ पृ. १०४४; **निक.** ३३० मनुहारीतयमाः; **गृर.** ३९३; **शुशि.** ५५ उत्त. (=); **गप.** ४०७ मनुहारीतयमाः; **आप्र.** ५४८ मनुहारीतौ; **आन.** १३४, १३६ (न सुरां पिबेत्) एतावदेव (=); **बाल.** १।३३ पृ. १६२; **कृभ.** १२९१ : १३०१ उत्त. (=).

(४)अन्नानां मलम् अन्नानामशुद्धभागः। यच्च मलम् अशुद्धभागः स पाप्मा पापहेतुः। शूद्रस्तु स्वत एव पापत्वात्पिबन्नपि नाधिकपापवान्भवतीत्यर्थः। अन्नानामित्युक्तत्वादन्नपिष्टप्रभवत्वात्पैष्ट्येव त्रयाणां वर्णानां निषिद्धा। मवि.

(५)अन्नमलानुवादाच्च पैष्टीनिषेध एव स्फुटस्त्रैवर्णिकस्य मनुनैवोक्तः। *ममु

(६)त्रयाणां पैष्टीभक्षणाभावं सार्थवादं निगमयति — सुरेति। मलपाप्मनोरेकपर्यायत्वेन तद्भुक् मलभुगेव। मच.

(७) सुरायाः पैष्ट्याः पाने त्रैवर्णिकैरेतत्प्रायश्चित्तं कर्तव्यमित्यभिप्रायेणाऽऽह — सुरेति। ✡नन्द.

**[१]गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा।**
**यथैवैका तथा सर्वा न पातव्या द्विजोत्तमैः॥**

(१)गुडविकारः गौडी। येषामपीक्षुरसमेव मद्यतामापद्यते तेषामपि कारणे कार्योपचारेण गौडीव्यपदेशो न विरुद्धः। मधुनो विकारः माध्वी। मधु माध्वीकं विकारवृत्त्या। न सद्यो जातस्य मृद्वीकारसस्य प्रतिषेधो यावन्मद्यावस्थामप्राप्तस्येति दर्शयति। अविकृतं हि मधुमाध्वीकमिच्छन्तीति स्मरति। यत्रापि मद्यशब्देन प्रतिषेधस्तत्राप्यनासादितमद्यपानशक्तियोगस्य नैव प्रतिषेधः, तस्य मद्यशब्देनानभिधानात्। यथा शुक्तशब्दोऽवस्थाविशेषवति प्रवर्तते, नाविशेषेण। न हि तदेवाम्लतामनापन्नं शुक्तमित्युच्यते। यथा स एव गौः वत्सावस्थायां न बलिवर्दः। एवं च पिष्टोदकादिसंघातसंम(? सृ)ष्ट्या न सुरा यावत्कालपरिवासेन न मदशक्तिमापन्ना। एवमिक्षुरसमृद्वीकारसयोर्द्रष्टव्यम्। अल्पायास्तर्हि पानं प्राप्नोति, यावत्या मात्रया पीता न मदयति, प्रतिबन्धकद्रव्ययोगेन च। नैष दोषः। नायं मदोत्पत्तिप्रतिषेधः 'तथा कर्तव्यं यथा मत्तः क्षीबो न भवति' इति। किं तर्हि? 'यन्मदजननसमर्थशक्तियुक्तं तन्न पातव्यम्' इति। अल्पाया अपि सा शक्तिर्विद्यते। यावता रूक्षमल्पप्राणं स्वल्पमपि मद्यं मदयति, स्निग्धं महाप्राणं बह्वपि नेति। नैतावता मदशक्त्यभावः शक्यो वक्तुम्। कार्याभावेन कारणभावात् (? कारणाभावो) मद्यानामपि नैव निश्चीयते। न हि महत्काष्ठं दग्धुमसमर्थस्याग्नेरदाहकत्वमनुमीयते, शुष्कतृणे तादृशस्यैव दाहकत्वोपलम्भात्। यदप्युक्तं द्रव्यान्तरेण शक्तिप्रतिबन्धकत्वे(? बन्धे) पानप्राप्तिरिति, तदप्यचोद्यम्। न हि (तृणेन तादृशस्यैव दाहे?) तदानीं सा तस्य शक्तिर्नास्ति, किंतु विद्यमानाऽपि कार्यारम्भं प्रत्यसमर्था। शक्तिसंभवश्च प्रतिहेतुर्न ते नित्यकार्यम् (?)। न च द्रव्यान्तराणि शक्तिं विनाशयन्ति, अपि तु कार्यारम्भं प्रतिबध्नन्ति। तथा च तत्परिमाणारम्भकद्रव्ययोगेऽपि पैत्तिको माद्यति, न श्लैष्मिकः। अतोऽनुमीयते न तस्य विनाशः। तस्मान्न भाविमद्यावस्थस्य प्रतिषेधो नापि प्राप्तावस्थाविशेषस्य प्रतिबन्धकाभावादिवत्तत्प्रतिषेधः। यथा चौरः स वर्जनीय इति। नोदश्वितोऽप्राप्ताम्लभावस्य प्रतिषेधः। माध्वीति कथम्? यावता गुणेन माधवीति भवितव्यम्। 'संज्ञापूर्वको विधिरनित्यः' (व्या. परिभाषा ९४) इति परिहारः। ज्ञापकं चास्याः परिभाषायाः 'ओरोत्' इति वक्तव्ये 'ओर्गुणः' (पासू. ६।४।१४६) इति गुणग्रहणम्। अत्र द्विजोत्तमग्रहणं च क्षत्रियवैश्ययोर्मद्यानुज्ञानार्थम्। तथा च महाभारते 'भारतानां यादवानां मद्यपानं तु वर्ण्यते। उभौ मध्वासवक्षीबौ दृष्टौ मे केशवार्जुनौ॥' इति। उत्तरश्लोकादर्थवाद एव। ननु च 'तथा सर्वा इति बहुवचनं कथम्? यावता एकमुपमानम्, द्वे उपमेये। अन्नमलत्वं चात्र हेतुमन्निगदोऽर्थवादः, मलं हेतुः यथा 'शूर्पेण जुहोति, तेन अन्नं क्रियते' इति। मेधा.

(२)गौडीति। गुडेन तत्कारणेनेक्षुरसेन कृता। इत्येवं (त्रि)प्रकारा सुरा। पैष्टी पूर्ववाक्यनिषिद्धा, तद्वत्सर्वा अपि सुरा ब्राह्मणैर्न पातव्या, द्विजोत्तमग्रहणात्, उत्तरश्लोकेषु ब्राह्मणग्रहणात्। गौडीमाध्व्योः सुराया (? असुरयोः) सुरात्वोपचारः। गोरा.

* शेषं गोरावत्।

✡ शेषं ममुगतम्।

(१) **मस्मृ.** ११।९४; **अप.** ३।२२७ पृ. १०४४ यथैवैका (यथा चैका); **मभा.** २।२६ पैष्टी च माध्वी (माध्वी च पैष्टी); **निक.** ३३० मनुहारीतौ; उ. ११७।२१, १।२१।८ उत्तरार्धे (यथैवैका न पातव्या तथा सर्वा द्विजोत्तमैः॥); **गृर.** ३९३ मभावत्; **पमा.** २।४११ उवत्; **गप.** ४०७ मनुहारीतयमाः; **आप्र.** ५४८ प्रथमचरणे (गौडी माध्वी तथा पैष्टी) मनुहारीतौ; **बाल.** १।३३ पृ. १६२ आप्रवत्; **आभू.** २९३ उत्तरार्धे (यथैव ता न पातव्यास्तथा सर्वा द्विजोत्तमैः॥) शेषं मभावत्.

(३)एकां पैष्टीं दृष्टान्तीकृत्य सर्वस्या ब्राह्मणं प्रति पाननिषेधं कुर्वन्नेका मुख्या, गौणीतरेति दर्शयति। एवं च ब्राह्मणस्य तिस्रोऽप्यपेयाः, क्षत्रियवैश्ययोस्तु पैष्ट्येव। अप. ३।२२७ पृ. १०४४

(४)पैष्टी पिष्टकार्यम्। सुरा मुख्या पैष्टी। यथैवैका इति। यथा एका पैष्टी त्रिभिरपि द्विजातिभिर्न पातव्या तथा द्विजोत्तमैः ब्राह्मणैः सर्वा एव न पातव्या। +निक. ३३१

(५)ब्राह्मणं प्रति विशेषमाह – गौडीति। माध्वी द्राक्षारसकृतेति केचित्। मधूकपुष्पेण मधुना वा कृता वाच्या त्रिविधा सुरा। ✡मवि.

(६)मुख्यसुरासाम्यनिबोधनमितरसुरापेक्षया ब्राह्मणस्य गौडीमाध्वीपाने प्रायश्चित्तगौरवार्थम्। *ममु.

(७)ब्राह्मण(?ण्य)मित्युपसंहारात् विप्रस्य तु सुरात्रयमभक्ष्यमित्याह – गौडीति। ⇧मच.

(८)तथा पैष्टी मुख्यसुरा, तत्पाने महापातकत्वादकामतो द्वादशवार्षिकम्। गौडी(माध्वी)मद्यपाने कृच्छ्रातिकृच्छ्रे घृतप्राशनं पुनःसंस्कारश्च, मद्यत्वेनैव निषेधात्। त्रिविधा सुरेति तयोरपि ब्राह्मणं प्रति सुरापानसमानदोषत्वेन सुराशब्दस्य गौणत्वात्। गौणत्वं च गौडीमाध्वीप्रभृत्येकादशमद्यगणनोत्तरं 'द्वादशं तु सुरामद्यं सर्वेषामधमं स्मृतम्' इति पौलस्त्येन पैष्ट्यामेव सुराशब्दप्रयोगात्। +गप. ४०७-४०८

(९)ब्राह्मणस्य गौडीमाध्व्योरपि पाने प्रायश्चित्तमेतत्कर्तव्यमित्यभिप्रायेणाऽऽह – गौडी माध्वी च पैष्टी चेति। *नन्द.

(१०) यथैवैका तथा सर्वा सुरा प्रकृतिद्रव्यं मदहेतुः। ⌘भाच.

+ शेषं मेधागतम्, बाल. निकवत्। गृर. मेधागतं निकवच्च। आप्र. निकवत्।

✡ शेषं मेधागतं निकवच्च।

* शेषं मेधागतं निकवत् मविवच्च।

⇧ शेषं निकगतम्।

+ शेषं निकगतम्।

* शेषं गोरावत्।

⌘ शेषं मेधागतं मविगतं च।

**[१]यक्षरक्षःपिशाचान्नं मद्यं मांसं सुरासवम्।**
**तद्ब्राह्मणेन नात्तव्यं देवानामश्नता हविः॥**

(१)यक्षादयो निन्द्याः प्राणिनो भक्ष्याभक्ष्यविवेकशून्याः। मांसम् अभक्ष्यम्। सुरा चाऽऽसवश्च सुरासवम्। 'जातिरप्राणिनाम्' (पासू. २।४।६) इत्येकवद्भावः। आसवोऽत्र मद्यविशेष एव ईषन्मद्याद्भिन्नम्(?न्नः)। गोबलीवर्दवदिहोपादानम्। देवानामश्नता। देवदेयानि हवींषि चरुपुरोडाशादीनि दर्शपूर्णमासोदितानि ब्राह्मणस्याशितुं युक्तानि, न पिशाचाद्यन्नं मद्यमांसादीनि। × मेधा.

(२)मद्यं सुराव्यतिरिक्तम्। मांसं यदभक्ष्यम्। सुरा त्रिविधा अन्या। आसवम् अरिष्टापवादि (?)। यक्षरक्षःपिशाचान्नम् एतत्संबन्धि अन्नम्। अतस्तद्ब्राह्मणेन देवोद्देशन हविर्भक्षयता नाशयि(?नाशि)तव्यम्। देवानामश्नता हविरिति लिङ्गात् पुंस एव ब्राह्मणस्य मद्यप्रतिषेधः, न स्त्रियः(?याः) इत्याहुः, तदसत्। सुरालशुनपलाण्डुगृञ्जनकानि अभक्ष्याणि स्युः। 'या ब्राह्मणी सुरापी भवति नैनां देवाः पतिलोकं नयन्ति इहैव सा दुर्मतिः क्षीणपुण्याप्सुजलोद्भवेति (?) शुक्तिका वा।' (वाध. २१।११) 'पतिलोकं न सा याति ब्राह्मणी या सुरां पिबेत्। इहैव सा शुनी गृध्री शूकरी चापि जायते॥' (यास्मृ. ३।२५६) इति शङ्खवसिष्ठयाज्ञवल्क्यैः ब्राह्मण्या अपि निषेधस्मरणात्। # गोरा.

(३)न केवलं सुरा ब्राह्मणानामपेया, किंतु सुरावन्मद्यासवमांसानि क्षत्रियादिभक्ष्याण्यपि ब्राह्मणस्याभक्षणीयान्याह – यक्षेति। यक्षाः कुबेरानुचराः। राक्षसाः रावणाद्याः। पै(?पि)शाचाः वेतालाद्याः। एतेन मद्यादीनां रजस्तमःप्रधानतोक्ता। तेन तदाहारता सत्त्वप्रधानस्य विप्रस्यायुक्तेत्यर्थः। मद्यं त्रिविधसुरातोऽ-

× मवि. मेधागतम्।

# निक., गृर., भाच. गोरागतम्।

(१) **मस्मृ.** ११।९५; **निक.** ३३०-३३१ मनुहारीतौ; **मवि.** ५।३१; **गृर.** ३९३ तृतीयचरणे (ब्राह्मणेन न चात्तव्यं) : ३९४ मूलपाठमपि लक्ष्मीधरोद्धृतवचनत्वेन निर्दिशति; **गप.** ४०७ चान्नं (चानां) मनुहारीतयमाः; **आप्र.** ५४८ मनुहारीतौ; **बाल.** १।३३ पृ. १६२.

न्यन्मदहेतुः। आसवः मद्यसुराप्रकृतिद्रव्यजो मद(?-जोऽमद)हेतुः। देवानां सात्त्विकानां हविः भक्ष्यम् अश्नता अशितुं योग्येन। मवि.

(४)मद्यमत्र निषिद्धं पैष्टीगौडीमाध्वीव्यतिरिक्तं नवविधं बोद्धव्यम्। तान्याह पुलस्त्यः – 'पानसद्राक्ष-माध्वीकं(? माधूकं) खार्जूरं तालमैक्षवम्। माध्वीकं टाङ्कमार्द्वीकमैरेयं नालिकेरजम्॥ सामान्यानि द्विजातीनां मद्यान्येकादशैव च। द्वादशं तु सुरामद्यं सर्वेषामधमं स्मृतम्॥'। मांसं च प्रतिषिद्धम्। सुरा च त्रिप्रकारा प्रोक्ता। असूयत इत्यासवः मद्यानामवस्थाविशेषः सद्यः-कृतसंसाधनोऽसंजातमद्यस्वभावः। यमधिकृत्येदं पुल-स्त्योक्तप्रायश्चित्तम् 'द्राक्षेक्षुटङ्कखर्जुरपनसादेश्च यो रसः। सद्योजातं च पीत्वा तु त्र्यहाच्छुध्येद्द्विजोत्तमः॥'। एवं मद्यादिचतुष्टयम्। निषिद्धायाः सुराया इहोपादानं यक्षरक्षःपिशाचान्नतया निन्दार्थम्।

✿ममु.

(५)आसवं सद्यःकृतसंधानेन प्रा(?नाप्रा)प्तमद्य-भावम्। एतत्सर्वं विप्राभक्ष्यम्। अनदने हेतुः – देवानां हविः यज्ञावशिष्टमन्नम् अश्नन्ति ते। मांसमत्र आमम्, 'यक्षरक्षः' इति लिङ्गात्। मच.

(६) मांसम् अविहितं प्रतिषिद्धम् आमं च, तस्यैव यक्षरक्षःपिशाचान्नत्वात्। प्रोक्षितादिमांसानां तु देवाद्य-र्थत्वेन भक्ष्यत्वमेव। अत एव देवानां हविरश्नतेत्युक्तम्। अत एव – 'असंस्कृतान् पशून् मन्त्रैर्नाद्याद्विप्रः कथंचन। मन्त्रैस्तु संस्कृतानद्यात्' (मस्मृ. ४।३६) इत्यादिना ब्राह्मणस्य प्रोक्षितादिमांसभक्षणं विहितम्। ब्राह्मणग्रहणं तु दोषाधिक्यार्थम्। $आप्र. ५४९

(७)ब्राह्मणस्य मद्यवर्जने युक्त(?क्ति)माह – यक्षरक्ष इति। मद्यं मदकरं द्रव्यम्। मांसमित्यन(शि)-तव्यप्रसङ्गादुक्तम्। सुरा पैष्टी। आसवः माध्वी गौडी च। हविः हविःशेषम्। नन्द.

(८) मांसम् आमं निषिद्धं च। सुरा पैष्टी। आसवः मद्यभेदः। ब्राह्मणवसिष्ठन्यायेन पृथगुक्तिः।

बाल. १।३३ पृ. १६२

✿ शेषं गोरावत्।

$ शेषं मेधागतं गोरागतं च।

**[१]अमेध्ये वा पतेन्मत्तो वैदिकं वाऽप्युदाहरेत्।**
**अकार्यमन्यत्कुर्याद्वा ब्राह्मणो मदमोहितः॥**

(१)अमेध्ये पतनं देवान्नाशनवदर्थवादः। ननु च वैदिकोदाहरणं कथमकार्यम्? अत्रोच्यते – 8तदपेक्ष-याऽन्यदकार्यं कुर्यादिति। कथमकार्यम्। अशुचेर्वेदाक्षरो-च्चारणप्रतिषेधात्। मेधा.

(२)ब्राह्मणः क्षीबः सन् अशुचौ वा निपतेत् वेदवाक्यं वोच्चारयेत्, ब्रह्महत्याद्यकार्यं वा मदव्यामूढः कुर्यात्, अतस्तेन मद्यं न पातव्यमित्यपरोऽर्थवादः।

+गोरा.

(३)मद्ये ब्राह्मणस्य दृष्टप्रत्यवायमप्याह – अमेध्य इति। वैदिकमुपा(? दा)हरेत् उच्छिष्टादिकाले।

मवि.

(४)तत्रैव दृष्टार्थतामाह – अमेध्य इति द्वाभ्याम्। अवैदिकं म्लेच्छभाषितम्। अकार्यं स्वकन्यागमनादि। तत्र हेतुः – मदमोहितः मद्येन कृतवैचित्त्यः। मच.

(५)इतश्चापि ब्राह्मणस्य मद्यं वर्ज्यमिति श्लोकद्वयेनाऽऽह – अमेध्ये वा पतेन्मत्त इति। अमेध्ये अगम्यागमनादौ। वैदिकं वेदरहस्यम् उदाहरेत्। श्रवणानर्हेषु। नन्द.

(६)मत्तः द्विजः अमेध्ये पुरीषादौ वा पतेत्, पक्षान्तरे वैदिकं वोदाहरेत्। भाच.

**[२]यस्य कायगतं ब्रह्म मद्येनाऽऽप्लाव्यते सकृत्।**
**तस्य व्यपैति ब्राह्मण्यं शूद्रत्वं च स गच्छति॥**

(१)अधीते वेदे संस्काररूपेणावस्थितं हृदयं ब्रह्मशब्देनोच्यते। अतो हृदये मद्येनाऽऽप्लाविते। स शूद्रतां गच्छति। ब्राह्मण्यवचनं सर्वप्रकारमद्यनिषेधार्थं ब्राह्मणस्य, क्षत्रियवैश्ययोः पैष्ट्या एव निषेध इति दर्शयति। मेधा.

8 विप्लुतोऽयं ग्रन्थः। 'अशुचे .... प्रतिषेधात्। तदपेक्षया... कुर्यादिति।' इत्येवमत्र ग्रन्थेन भाव्यम्। तदपेक्षयेत्यादि तृतीयचरण-व्याख्यानम्। तत्र तच्छब्देन वेदोदाहरणपरामर्शः। 'कथमकार्यम्' इति पदद्वयं विप्लवेन पुनरुक्तम्।

+ ममु. गोरावत्।

(१) **मस्मृ.** ११।९६; **निक.** ३३१ मनुयमौ; **गृर.** ३९३ द्वा ब्रा (द्वै ब्रा); **मच.** त्तो वैदि (त्तोऽवैदि); **गप.** ४०७ द्वा ब्रा (च्च ब्रा) मद (मद्य) मनुहारीतयमाः; **आप्र.** ५४८ मनुहारीतौ.

(२) **मस्मृ.** ११।९७; **गोरा.** चतुर्थचरणे (अवगच्छति शूद्रताम्); **निक.** ३३१ मनुहारीतौ; **गृर.** ३९३; **गप.** ४०७ स ग (निय) मनुहारीतयमाः; **आप्र.** ५४८ मनुहारीतौ.

(२)यस्य ब्राह्मणस्य शरीरे संस्काररूपेणावस्थितो वेदः सकृदपि मद्येन पूर्यते तस्य ब्राह्मण्यं व्यपगच्छति, शूद्रत्वं चासौ व्रजतीत्यपि पूर्वार्थ(? पूर्ववदर्थवाद) एव।
*गोरा.

(३)ब्रह्म वेदः। शूद्रत्वं वर्णत्रयबाह्यत्वम्।
मवि.

(४)यस्य ब्राह्मणस्य कायगतं ब्रह्म वेदः संस्काररूपेणावस्थितः। एकदेहत्वात् जीवात्मा एकवारमपि मद्येनाऽऽप्लव्यते तथा चैकवारमपि यो ब्राह्मणो मद्यं पिबति तस्य ब्राह्मण्यं व्यपैति स शूद्रतां समाप्नोति। तस्मान्मद्यं सर्वथैव न पातव्यम्।
ममु.

(५)ब्रह्म वेदः। शूद्रत्वं शूद्रवद्वेदाभ्यासादेर्बहिष्कृतत्वम्। पतितत्वादस्य शूद्रस्यापकृष्टत्वात् संभाषणादित्यागोऽपि।
मच.

मतभेदेन यज्ञादिकर्माणि त्यक्त्वा तान्यनुतिष्ठता वा आत्मज्ञानशमवेदाभ्यासेषु यत्नः कर्तव्यः, आत्मज्ञानादिप्रशंसा

**'यथोक्तान्यपि कर्माणि परिहाय द्विजोत्तमः।**
**आत्मज्ञाने शमे च स्याद्वेदाभ्यासे च यत्नवान्॥**

(१)यथोक्तान्यपि कर्माणीति। नानेनाग्निहोत्रादीनां कर्मणां परिहानिर्विधीयते, अपि त्वात्मज्ञाने यत्नवान् स्यादित्यात्मज्ञानाभ्यासो विधीयते। कर्माणि परिहायेत्यस्याऽऽलम्बनं प्रशस्तदेवतायतनप्रदक्षिणमन्त्रगुरुगमनादीनि मुक्त्वाऽप्यात्मज्ञानमभ्यस्येत्। न हि नित्यानां कर्मणां स्वेच्छया परित्यागोऽस्ति। पुरुषधर्मादिषु विहिते नास्ति त्यागेन विना (?)।
मेधा.

(२)शास्त्रनोदितान्यपि अग्निहोत्रादीनि परित्यज्य 'यावद्वै पुरुषो भाषते' (कौउ. २।४) इत्यादिना 8चतुर्थाध्यायदर्शितश्रुतिप्रकारेण तान्यनुतिष्ठन्नात्मज्ञानेन्द्रियजयवेदाभ्यासेषु ब्राह्मणो यत्नं कुर्यात्।
गोरा.

(३) अत्र वेदाभ्यासः प्रणवाभ्यासः, तत्र यत्नवान्।
✿मिता. ३।५८

(४)पूर्वा(?र्वमा)त्मज्ञानार्थं यज्ञादीनामप्यनुष्ठेयत्वमुक्तम्, अधुना त्वशक्तौ ध्यानजपेन्द्रियनिग्रहमात्रेऽपि तत्सिद्धिरित्याह — यथोक्तान्यपीति। परिहाप्य परिहाय।
मवि.

(५)एतच्चैषां मोक्षोपायान्तरङ्गोपायत्वप्रदर्शनार्थम्।
+ममु.

(६)स्वाराज्यसाधनज्ञानस्य शमादिसहितं श्रवणमनननिदिध्यासनमेवासाधारणसाधनमित्याह — यथेति। परिहाय असाधनत्वेन त्यक्त्वा, 'शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्येत्'-(बृउ. ४।४।२३) इति, तथा 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' (नाउ. १२।३), 'किमहं साधु नाकरवं किमहं पापमकरवमिति' (तैउ. २।९), 'त्यज धर्ममधर्मं च उभे सत्यानृते त्यज' (सासंउ. २।१७) इत्यादिश्रुतेः। आत्मध्याने मनननिदिध्यासनयोः, मननं विना निदिध्यासनानुपपत्तेः। शमे शमदमोपरतितितिक्षासु। वेदाभ्यासे उपक्रमादिनोपनिषदर्थनिर्धारणे श्रवणार्थापरपर्याये विचारे, 'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यः' (बृउ. २।४।५) इति श्रुतेः उपक्रमादिभिरात्मज्ञानफलकतया श्रवणादेर्विधानात्। यत्नवान् आदरनैरन्तर्यदीर्घकालादियुक्तः स्यात्। आत्मज्ञाने इति क्वचित्पाठे(?ठः,) तदाऽऽत्मज्ञाने जनयितव्ये शमादौ यत्नवान्स्यादित्यन्वयः।
मच.

(७)ब्रह्मज्ञानं च गृहस्थस्यापि कार्यम्। तथा च मनुः — यथोक्तान्यपीति।
गप. ४५९

(८)'अत ऊर्ध्वममन्त्रवदाचरेत्' (आरुउ.२) इति श्रुतिवचनं तु प्रणवव्यतिरिक्तप्रतिषेधार्थमित्यविरोधः।
* यसं. ६९

(९)अथ निःश्रेयसफलानां कर्मणामन्योन्यविप्रतिषेधे कर्तव्यमाह — यथोक्तान्यपीति। यथोक्तानि श्रेयस्करत्वेनोक्तानि। शमे रागोपशमे, तपसीति यावत्।
नन्द.

---

* भाच. गोरागतम्।

8 मस्मृ. ४।२३ इत्यत्र।

(१) **मस्मृ.** १२।९२; **मिता.** ३।५८; **मोक.** १४७; **मवि.** हाय (हाप्य) ज्ञाने (ध्याने); **ममु.** ज्ञाने (ध्याने); **मच.** ज्ञाने (ध्याने) आदर्शपाठमपि पाठान्तरत्वेन निर्दिशति; **गप.** ४५९ हाय (हार्य) शमे च (च सक्तः); **मुक्ता.** १९८ उत्त.; **यसं.** २६ यत्न (आत्म) : ६९ उत्त.; **यप्र.** ९३ यथो (तथो); **भाच.** भ्यासे च (भ्यासेन).

✿ यप्र., मुक्ता. मितावत्।

\+ शेषं मेधागतं गोरागतं च।

* शेषं मितावत्।

(१०) द्विजोत्तमः आत्मज्ञाने शमे शान्तौ मनः समावेश्य च पुनः वेदाभ्यासेन(? भ्यासे) यत्नवान् भवेत्। भाच.

**[1]एतद्धि जन्मसाफल्यं ब्राह्मणस्य विशेषतः।**
**प्राप्यैतत्कृतकृत्यो हि द्विजो भवति नान्यथा॥**

(१)द्विजो भवतीति क्षत्रियवैश्ययोरप्यात्मज्ञानेऽधिकारं दर्शयति। यथा चाऽऽरण्यकश्रुतिः। ब्राह्मणस्य विशेषत इतिं। वेदाभ्यास इति संबन्धनीयम्। आत्मज्ञेन समत्वे(?आत्मज्ञानशमावेते)नाभ्यासितेनैव संभवतः। यत्(?एतत्) आत्मज्ञानं प्राप्य कृतकृत्यो द्विजो भवति, पुरुषार्थ एतावता समाप्यते। न हि मोक्षदप(?क्षात् प)रः पुरुषार्थोऽस्तीति। मेधा.

(२)एतत् वेदाभ्यासादि द्विजातीनां जन्मनः सफलत्वोत्पादकत्वात् जन्मनः साफल्यम्, विशेषेण ब्राह्मणस्य। यस्मादेतत् संपाद्य द्विजातिः कृतकरणीयो भवति, न तु कर्मान्तरकरणेन। *गोरा.

(३)एतत्त्रयं जन्मसामग्र्यं जन्मनो वेदग्रहस्य संपूर्णप्रयोजनत्वम्। प्राप्य एतत् त्रयम्। मवि.

(४)यस्मिन् जन्मनि श्रवणादिसंपत्तिस्तज्जन्म महीकरोति – एतदिति। अत्र हेतुः – प्राप्येति। कृतकृत्यः कृतम् आवश्यकं संसारनाशनं कृत्यं येन सः, 'आत्मानं चेत्'(बृउ. ४।४।१२) इति श्रुतेः, 'एतद्धि' इति स्मृतेश्च। नान्यथेति उपायशतेनापि, 'तमेव विदित्वा'(श्वेउ. ३।८) इति श्रुतेः। ब्राह्मणस्येति विशेषणात् संन्यासादात्मज्ञानादेव मुक्तिरिति(? त्यत्र) मनोः संमतिः। अत एव 'ब्राह्मणा विविदिषन्ति'(बृउ. ४।४।२२) इत्यादिना विप्रदेह एव मुक्तिहेतुः, अन्यत्र परंपरयेति। मच.

(५)एतत् आत्मज्ञानादित्रयम्। नन्द.

(६)द्विजन्मनां विप्रक्षत्रियविशां एतद्वेदाभ्यासादि अग्र्यं मुख्यम्, विशेषतो ब्राह्मणस्य। भाच.

स्नानहोमभोजनेषु मौनविधिः, आहारमैथुननिद्रास्वाध्यायानां संध्यायां निषेधः तदतिक्रमे फलानि च

**[2]स्नातस्य वरुणस्तेजो जुह्वतोऽग्निः श्रियं हरेत्।**
**भुञ्जानस्य यमस्त्वायुस्तस्मान्न व्याहरेत्त्रिषु॥**
**[3]चत्वारीमानि कर्माणि संध्यायां परिवर्जयेत्।**
**आहारं मैथुनं निद्रां स्वाध्यायं च चतुर्थकम्॥**
**[3]आहाराज्जायते व्याधिर्गर्भद्रावश्च मैथुनात्।**
**निद्रातो जायतेऽलक्ष्मीः स्वाध्यायादायुषः क्षयः॥**

## वृद्धमनुः

जीवत्पितृकजीवदग्रजयोः पादुकादिधारणनिषेधः

**[4]पादुके चोत्तरीयं च तर्जन्यां रौप्यधारणम्।**
**न जीवत्पितृकः कुर्याज्ज्येष्ठे भ्रातरि जीवति॥**

पादुके काष्ठनिर्मिते, निरुपपदपादुकाशब्दस्य तत्रैव शक्तेः। उत्तरीयम् उपरिवासोमात्रं न, किंतु 'सग्रन्थि परिमण्डलं वस्त्रमुत्तरीयं कुर्यात्। वस्त्रोत्तरीयाभावे त्वेकाङ्गुलं द्व्यङ्गुलं त्र्यङ्गुलं चतुरङ्गुलं वा सूत्रैरेव कृतं परिमण्डलमुत्तरीयं कुर्यात्' इति जातूकर्ण्योक्तमुत्तरीयं निषिद्धम्। एतेनैव 'यज्ञोपवीते द्वे धार्ये श्रौते स्मार्ते च कर्मणि। तृतीयमुत्तरीयार्थे वस्त्राभावे तदिष्यते॥' इति प्रयोगपारिजाते विश्वामित्रोक्तमुत्तरीयस्थानीयं तृतीयमुपवीतमपि निषिद्धम्। उपरिवस्त्रमात्रं तु तस्यापि भवत्येव, 'एकवस्त्रो न भुञ्जीयान्न कुर्यद्देवतार्चनम्। न चार्चयेद्द्विजान्नान्यः(? न्यत्) कुर्यदेवंविधो नरः॥' इति गोभिलेन सामान्यतो निषिद्धत्वात्। एवं रूप्यस्यापि मुद्रिकारूपस्य तर्जन्यां धारणं निषिद्धम्, न रूप्यमात्रस्य, अन्यथा 8रूप्यमयमणिबन्धालंकारादेरपि वर्जनप्रसङ्गात्। विपा. ५।३३१

---

* ममु. गोरावत्।

(१) **मस्मृ.** १२।९३; **मोक.** १४७ प्रथमचरणे (एतद्द्विजस्य सामग्र्यं); **मवि.** साफल्यं (सामग्र्यं); **भाच.** प्रथमचरणे (एतद्द्विजन्मनामग्र्यं).

8 'यावद्वचनं वाचनिकम्' इति न्याये जाग्रति प्रसङ्गोऽयं चिन्त्यः।

(१) **संदी.** ४७.

(२) **सम.** १०५; **पुम.** ४५८.

(३) **सम.** १०५.

(४) **विपा.** ५।३३१; **बाल.** १।८९ पृ. २६९ रौप्य (रूप्य); **कृभ.** ९५७ स्मृतिः; **इन्दु.** ६१ चतुर्थचरणे (ज्येष्ठो वा विद्यते यदि).

आहारमैथुनादीनां संध्यायां वर्जनम्
अवर्जने फलानि च

**[१]आहारं मैथुनं निद्रां संध्याकाले विवर्जयेत्।**
**कर्म चाध्ययनं वाऽपि तथा दानप्रतिग्रहौ॥**
**[२]आहाराज्जायते व्याधिर्गर्भो रौद्रश्च मैथुनात्।**
**स्वपनात्स्यादलक्ष्मीकः कर्म चैवात्र निष्फलम्॥**
**[३]अध्येता नरकं याति दाता नाऽऽप्नोति तत्फलम्।**
**प्रतिग्राही भवेत्पापी तस्मात्संध्यां विवर्जयेत्।**
**दाता वै नरकं याति ग्रहीताऽधो निमज्जति॥**

ग्रहणदोषरहिताः पदार्थाः

**[४]आरनालं च तक्रं च पाथेयं घृतपाचितम्।**
**उदकं च कुशच्छन्नं न दूष्येद्राहुसूतके॥**

## याज्ञवल्क्यः

यजनाध्ययनादयो द्विजधर्माः द्विजशुश्रूषा-
श्राद्धपञ्चयज्ञादयः शूद्रधर्माश्च

***[५]इज्याध्ययनदानानि वैश्यस्य क्षत्रियस्य च।**
**प्रतिग्रहोऽधिको विप्रे याजनाध्यापने तथा॥**
**प्रधानं क्षत्रिये कर्म प्रजानां परिपालनम्।**
**कुसीदकृषिवाणिज्यपाशुपाल्यं विशः स्मृतम्॥**
**शूद्रस्य द्विजशुश्रूषा तयाऽजीवन्वणिग्भवेत्।**
**शिल्पैर्वा विविधैर्जीवेद्द्विजातिहितमाचरन्॥**
**[६]भार्यारतिः शुचिर्भृत्यभर्ता श्राद्धक्रियारतः।**
**नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत्॥**

(१)अयं चान्यः शूद्रस्यैव धर्मः — भार्यारतिरिति। पारदार्यप्रसक्तेः स्वदार एव यथाकामी स्यात्। शुचिः स्नानाद्यनुष्ठाता। भृत्यमात्रभर्ता। श्राद्धकर्म चामन्त्रकं यथाकालं कुर्यात्। अन्वहं पञ्च महायज्ञान्। इयांस्तु विशेषः — नमस्कारमात्रमेव प्रयुञ्जीत, न देवताभिधानानि। मन्त्रतया च प्रतिषेधात् देवतोद्देशेन त्यागः कर्तव्य एव। श्राद्धे तु देवतापदान्यपि मन्त्रमात्रा(?त्र) निषेधात् प्रवर्तन्ते। +विश्व.

(२)किंच, भार्यायामेव, न साधारणस्त्रीषु परस्त्रीषु वा, रतिः अभिगमनं यस्य स तथोक्तः। शुचिः बाह्याभ्यन्तरशौचयुक्तः। द्विजवत् भृत्यादिभर्ता। श्राद्धक्रियारतः श्राद्धानि नित्यनैमित्तिककाम्यानि, क्रियाः स्नातकव्रतान्यविरुद्धानि, तेषु रतः। 'नमः' इत्यनेन मन्त्रेण पूर्वोक्तान्पञ्चमहायज्ञानहरहर्न हापयेत् अनुतिष्ठेत्। नमस्कारमन्त्रं च केचित् — 'देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च। नमः स्वाहायै स्वधायै नित्यमेव नमो नमः॥' इति वर्णयन्ति। 'नमः' इत्यन्ये। तत्र वैश्वदेवं लौकिकेऽग्नौ कर्तव्यम्, न वैवाहिकेऽग्नावित्याचार्याः। # मिता.

(३)शूद्रवृत्तीरभिधाय धर्ममाह — भार्येति। भार्यायामेव रतिर्यस्य स तथोक्तः। अनेन च भार्याव्यभिचारपरिहारो धर्मत्वेनास्य विधीयते। शुचिः शास्त्रीयशौचकर्ता स्यात्। भृत्यभर्ता भृत्यानां पुत्रकलत्रादीनां पोषकः। श्राद्धक्रियापरः श्राद्धानुष्ठाननिष्ठः। उक्तान् पञ्च यज्ञान्नमस्कारात्मकेन मन्त्रेण कुर्यात्, न पुनरनधीतमन्त्रत्वेन तान् हापयेत् त्यजेत्। मन्त्रशब्दोऽत्र सकलमन्त्रकार्य(? र्ये)नमस्कारविनियोगार्थः। अन्यथा समानार्थतया स्वाहाकारस्वधाकारयोरेव कार्ये स्यात्। ननु च

* एतेषां त्रयाणां श्लोकानां व्याख्यानानि 'वर्णाः तद्वृत्तयश्च' इत्यस्मिन् प्रकरणे (वका. पृ. १२४८-१२५०) द्रष्टव्यानि।

(१) **पुम.** ४५८.

(२) **पुम.** ४५८.

(३) **पुम.** ४५८.

(४) **मुक्ता.** ४५० दूष्ये (दुष्ये); **आन.** ३८५ (=); **कृभ.** २८५ पाथेयं (ह्यादेयं) दूष्ये (दुष्ये) (=).

(५) **यास्मृ.** १।११८-१२० एतेषां त्रयाणां श्लोकानामन्ये स्थलादिनिर्देशाः 'वर्णाः तद्वृत्तयश्च' इत्यस्मिन् प्रकरणे (वका. पृ. १२४८-१२५०) द्रष्टव्याः.

(६) **यास्मृ.** १।१२१; **विश्व.** १।१२०; **अप.** रतः (परः); **गृक.** २६९; **निक.** २१८; **ममु.** १०।१२७ उत्त.; **गृर.** ३०९ अपवत् : ४७८-४७९ रतिः (रुचिः); **पमा.** १।४१९ रतिः (रतः) शेषम् अपवत्; **मपा.** २३१; **स्मृकौ.** ५६ पमावत्, पू., (=) : ५९ उत्त.: ८९ पमावत् : १९५ उत्त. : २२३ रतिः (रतः); **मर.** १४; **मच.** १०।१२७ उत्त.; **आत.** ३६५, ४२५ अपवत्; **शूत.** ६३५ (=); **शूशि** ४३ उत्त., स्मृतिः; ४८ उत्त., (=): ६८ पमावत्, (=) : ११२ उत्त. : १५७ पमावत्; **चमव्या.** ८२; **मुक्ता.** ६७; **आर.** ६० रतिः (रतः); **शूक.** २१ उत्त. : २३, १५३ तृतीयचरणमात्रम्, (=) : ५३ आरवत्; **संम.** ८० उत्त.; **विपा.** ३।३१७ अपवत्; **वीमि.** अपवत्; **पप्र.** ४६ उत्त.; **आप्र.** ४०१ अपवत्; **आन.** ६४० भर्ता (भक्तः); **संग.** ८६० भृत्यभर्ता (भृत्यो भर्ता?) शेषम् अपवत्; **बाल.** १।८९ पृ. २४५, १।१६६ पृ. ४३० निर्देशमात्रम्; **सस्मृ.** १२७, १७१ उभयत्राप्यशुद्धो ग्रन्थः.

\+ मपा. विश्वगतम्।

\# विपा. मितावत् शूशिवच्च।

शूद्रोऽनग्निः कथमग्निसाध्यकर्माधिकारी स्यात्? न चास्य विवाहाग्निरस्तीति वाच्यम्, शूद्रस्य विवाहहोमाभावात्। न ह्यमन्त्रकोऽस्ति होमः। न च शूद्रो मन्त्रवान्। नमस्कारश्च पञ्चयज्ञेष्वेव मन्त्रकार्ये विधीयते, न विवाहेऽपि। तस्मादग्निसाध्येषु कार्येषु वक्तव्योऽस्याधिकारहेतुः। उच्यते – अनग्नेरपि शूद्रस्य वैश्वदेवादिकर्माणि लौकिकेऽग्नौ कार्याणि, तं प्रत्येवेह विहितत्वात्। यथा निषादस्थपतीष्टिः। किंचित्-(? किंच,) द्विजातीनामपि वैश्वदेवकर्म न विवाहाग्निनियतम्, किं पुनः शूद्रस्य? यत्तु गौतमेन शूद्रमधिकृत्योक्तम् – 'पाकयज्ञैः स्वयं यजेतेत्येके' (गौध. १०।६४) इति, तल्लौकिकाग्निविषयम्। अप.

(४)श्राद्धकरणं नमस्कारेण मन्त्रेण नम इत्यनेन मन्त्रेण चतुर्थ्यन्तदेवता(पद)सहितेन। *गृक. २६९

(५)भार्यारतत्वं नाम ऋतुकालगामित्वम्, ऋतुकालमन्तरेण गर्भाधानाभावात्। स्मृकौ. ५६

(६)नमस्कारेणेति 'देवेभ्यो नमः' 'पितृभ्यो नमः' इति नमस्कारान्तो नाममन्त्र एव मन्त्रः 'नमः' इत्येव वा सर्वकर्मसु शूद्रेण पठनीयः, न वैदिकः स्मार्तः पौराणो वा। शूशि. ४८-४९

(७)अत्र श्राद्धानि क्रियाश्चेति द्वन्द्वः। क्रियाः स्नातकव्रतानि इति विज्ञानेश्वरः। एतेन गोतमे दशमेऽध्याये 'शूद्रश्चतुर्थो वर्णः' (गौध. १०।४९) इत्युपक्रम्य 'श्राद्धकर्म। भृत्यभरणम्। स्वदारतुष्टिः' (गौध. १०।५३-५५) इति यदुक्तं तत्रत्यं श्राद्धकर्मपदमपि समाहारद्वन्द्वरूपम्, कर्मपदं च स्नातकव्रतोपसंग्राहकमिति विज्ञानेश्वरेण ध्वनितम्। हरदत्तस्त्वाह – श्राद्धक्रियेति श्राद्धकर्मेति च श्राद्धमेवोच्यते। न तु द्वन्द्वः, स्नातकधर्माणामप्रकृतानां क्रियाशब्दमात्रेणालाभात्। प्रत्युत स्मृतिविरोधः, 'स्नातकव्रतलोपेषु प्रायश्चित्तं विधीयते। राजब्राह्मणयोरेव नेतरेषां कथंचन॥' इति वचनात्। चमव्या. ८३

(८)सर्वत्र महा(? मन्त्र)कार्ये नमस्कारविध्यर्थो मन्त्रशब्द इत्यपरार्कः। नमस्कारमन्त्रः 'देवताभ्यः पितृभ्यश्च' इति मिताक्षरा। त्रिरावर्तितो नमःशब्द इति पृथ्वीचन्द्रः। आर. ६०

* शेषं मितागतम्। गृर. गृकवत्।

(९)शूद्रस्य पञ्चमहायज्ञमन्त्रमाह – नमस्कारेणेति। स्वाहास्थाने नमःशब्दः प्रयोक्तव्य इत्यर्थः। भारते तु 'स्वाहाकारो नमस्कारो मन्त्रः शूद्रे विधीयते' इति स्वाहाशब्दस्यापि विधानाद्विकल्पः। संम. ८१

(१०) श्राद्धक्रियापरः श्राद्धानुष्ठानपरः। यद्वा श्राद्धं क्रिया चेति द्वन्द्वः। तत्र चोक्तक्रियातिरिक्तशूद्राधिकारिकावश्यक्रियापरं क्रियापदम्। एते धर्माः साधारणा अपि द्विजातिहिताचरणोपयोगित्वेनात्रोक्ताः, अनीदृशां द्विजातिहिताचरणायोग्यत्वादित्यवधेयम्। नमस्कारेण नमःशब्दात्मकेन मन्त्रेण, न तु स्वधास्वाहाशब्देन। न हापयेत्, अवश्यं कुर्यात्। वीमि.

धर्मसाधनभूता अहिंसादयः सामान्यधर्माः

**[1]अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः।**
**दानं दमो दया क्षान्तिः सर्वेषां धर्मसाधनम्॥**

(१)एवं तावद्द्विजातीनां शूद्रस्य च धर्मसाधनमुक्तम्। इदं पुनः चतुर्णामपि वर्णानामित्यर्थः। तथा चोक्तम् – अहिंसा सत्यमस्तेयमिति। यद्वा, प्रतिलोमार्थः सर्वशब्दः। पूर्वेषां तु दण्डापूपिकयैव स्यात्। एवं च सति 8दानवचनमप्यपुनरुक्तं स्यात्। शूद्रमात्रपरत्वे तु सर्वशब्दानुपपत्तिः। उभयार्थत्वेऽविरोधः। विश्व.

(२)इदानीं साधारणधर्मानाह – अहिंसेति। हिंसा प्राणिपीडा, तस्या अकरणम् अहिंसा। सत्यम् अप्राणिपीडाकरं यथार्थवचनम्। अस्तेयम् अदत्तानुपादानम्। शौचं बाह्यमाभ्यन्तरं च। बुद्धिकर्मेन्द्रियाणां नियतविषयवृत्तिता इन्द्रियनिग्रहः। यथाशक्ति प्राणिनामन्नोदकादिदानेनाऽऽर्तिपरिहारः दानम्। अन्तःकरणसंयमः दमः। आपन्नरक्षणं दया। अपकारेऽपि चित्तस्याविकारः क्षान्तिः। एते सर्वेषां पुरुषाणां ब्राह्मणाद्याचण्डालं धर्मसाधनम्। मिता.

8'इज्याध्ययनदानानि' (यास्मृ. १।११८) इतिपूर्वोक्तद्विजसाधारणधर्मरूपदानापेक्षयेत्यर्थः।

(१) **यास्मृ.** १।१२२; **विश्व.** १।१२१ निग्रहः (संयमः) तृतीयचरणे (दमः क्षमाऽऽर्जवं दानम्); **अप.** तृतीयचरणे (दमः क्षमाऽऽर्जवं दानम्) इत्यपि पाठः; **मपा.** १६ क्रमेण सारसंग्रहे; **शूक.** २९२ क्षान्तिः (शान्तिः); **संम.** ८२ (=); **वीमि.** दमो दया (दया दमः) व्याख्यानात्तु आदर्शानुसार्येव पाठः प्रतिभाति; **बाल.** १।१२१ पृ. ३८२ शूकवत्; **सस्मृ.** १७१.

(३) अधुना सर्ववर्णसाधारणं धर्ममाह – अहिंसेति। अहिंसा अविहितवधवर्जनम्। सत्यं यथार्थवचनम्। तच्च भूतहितमेव योज्यम्, 'सत्यं भूतहितं प्रोक्तम्' इति व्यासवचनात्। सत्यमपि प्रियमेव वाच्यम्, 'सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम्। प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः॥' (मस्मृ. ४।१३८) इति मनुवचनात्। अस्तेयम् अदत्तास्वीकारः। शौचम् अभक्ष्यपरिहारादि। तथा – 'शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा। मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथाऽऽन्तरम्॥'। इन्द्रियनिग्रहः निषिद्धेभ्यो विषयेभ्य इन्द्रियाणां निवारणम्। दानं प्रत्युपकारानपेक्षया पात्रे स्वधनप्रतिपादनम्। दमः निषिद्धान्मनोव्यापारोपरमः। दया भूतहितैषित्वम्। क्षान्तिः क्षमा कोपवर्जनम्। 'क्षमा द्वन्द्वसहिष्णुत्वम्' इति स्मृत्यन्तरम्। 'दमः क्षमाऽऽर्जवं दानम्' इति तु पाठे आर्जवम् अकौटिल्यम्। समचित्तता वा, 'आर्जवं समचित्तता' इति वचनान्तरात्। सर्वेषामेव वर्णानामहिंसादि प्रत्येकं धर्मसाधनं भवति, तेषामेवात्र प्रकृतत्वात्। धर्मोऽत्र अपूर्वात्मकोऽभिमतः। अप.

(४) सत्यं ब्राह्मणप्राणरक्षणाद्यनुपयोग्यनृतवचनाभावः। अस्तेयं शास्त्राननुमतचौर्याभावः। इन्द्रियनिग्रहः शास्त्रानिषिद्धबहिरिन्द्रियव्यापारवर्जनम्। क्षान्तिः अपकारिण्यपि कोपाभावः तत्कार्याभावो वा।

*वीमि.

वयोबुद्ध्याद्यनुगुणस्य जैह्म्यशाठ्यरहितस्य वर्तनस्य विधिः

**[1]वयोबुद्ध्यर्थवाग्वेषश्रुताभिजनकर्मणाम्।**
**आचरेत्सदृशीं वृत्तिमजिह्मामशठां तथा॥**

(१) इदं चान्यद्यथायोगं सर्वसाधारणमुत्तराधिकारार्थमाह – वय इति। अजिह्माम् अकुटिलाम्। अशठां परानुपद्रवकारिणीम्। विश्व.

(२) वयः बाल्ययौवनादि। बुद्धिः नैसर्गिकी लौकिकवैदिकव्यवहारेषु। अर्थः वित्तं गृहक्षेत्रादि। वाक् कथनम्। वेषः वस्त्रमाल्यादिविन्यासः। श्रुतं पुरुषार्थशास्त्रश्रवणम्। अभिजनः कुलम्। कर्म वृत्त्यर्थं प्रतिग्रहादि। एतेषां वयःप्रभृतीनां सदृशीम् उचितां वृत्तिम् आचरणम् आचरेत् स्वीकुर्यात्। यथा वृद्धः स्वोचिताम्, न यौवनोचिताम्। एवं बुद्ध्यादिष्वपि योज्यम्। अजिह्माम् अवक्राम्। अशठाम् अमत्सराम्।

मिता.

(३) श्रुतं गुरुतः पुराणादिविद्याधिगमः। कर्म योगादि। एषां वृत्तिं स्थितिं सदृशीं परस्परानुरूपाम् अमत्सराम् अजिह्माम् अकुटिलाम् अशठां वा आचरेत्। एतदुक्तं भवति – वयःकर्मार्थश्रुताभिजनानां प्रत्येकमनुरूपवेशभाषणबुद्धिवृत्तिः कार्येति।

+अप.

(४) बालः पांसुक्रीडाम्, युवा स्रग्गन्धादिसेवनम्, वृद्धः धर्मार्थसाधनम्, बुद्धिमान् मीमांसादिश्रवणम्, अर्थवान् वसुदानम्, वाग्मी दूत्यम्, सुवेशो राजसंनिधिम्, श्रुतेन व्याकरणादिना अर्थवेत्ता वेदार्थनिरूपणम्, विशुद्धकुलजन्मवान् तथाविधकुलोद्वाहनम्, यागवान् पशुहिंसनम्, एवं वयःप्रभृतीनामुचितानां चेष्टामाचरेत्। अजिह्माम् अकुटिलाम्। अशठां मिथ्याविषयरहिताम्। आत. ३५०

(५) बुद्धिप्रकर्षवान् महाभाष्यन्यायशास्त्राध्ययनम् अल्पबुद्धिः काव्यपुराणाध्ययनम्। अर्थाधिक्यवान् महादानम्, अल्पवित्तवानल्पान्नादिदानम्, वाग्मी वाददौत्यादि, अवाग्मी तद्वैमुख्यम्, सुवेषो राजसंनिधिम् मलिनवेषः शोकाद्यभिभूतानुसरणम्, श्रुतमीमांसादिर्वेदार्थनिर्वचनम्, श्रुतालंकारशास्त्रः काव्यविवेचनमित्यादि। अजिह्माम् अवक्रामव्याजामिति यावत्। अशठां दम्भशून्याम्। **वीमि.

परशय्यादीनामदत्तानां वर्जनम्

**[1]परशय्यासनोद्यानगृहयानानि वर्जयेत्।**
**अदत्तानि......॥**

(१) मान्यप्रसङ्गादन्यदप्याह – परेति। 8अदत्तानीति च्छेदः। परशब्दः प्रकृष्टार्थः। तदीयान्यसाधारणानि

* शेषं मितावत् अपवच्च।

(१) **यास्मृ.** १।१२३; **विश्व.** १।१२२; **अप.** वेष (वेश); **आत.** ३५० अपवत्; **मुक्ता.** ४६५; **पप्र.** ३६.

+ शेषं मितागतम्।

**शेषं मितागतम् आतगतं च। पप्र. वीमिगतम्।

8 अदत्तानीति पदं प्रक्रान्तवाक्यशेष इत्यर्थः।

(१) **यास्मृ.** १।१६०; **विश्व.** १।१५९; **गृक.** ४१३; **गृर.** ५८६; **चमव्या.** ६८; **मुक्ता.** ४६१; **वीमि.** यानानि (पानानि); **सस्मृ.** २११ अशुद्धो ग्रन्थः.

शय्यासनक्रीडोद्यानवासगृहादीनि नाधितिष्ठेत्। अदत्तानीति वचनादनुज्ञातोऽधितिष्ठेदिति गम्यते। विश्व.

(२) शय्या कशिपुः। आसनं पीठादि। उद्यानम् आम्रादिवनम्। गृहं प्रसिद्धम्। यानं रथादि। परसंबन्धीन्येतान्यदत्तानि अननुज्ञातानि वर्जयेत् नोपभुञ्जीत। +मिता.

(३) वर्जयेत् तदुपजीवनं वर्जयेदित्यर्थः। Ψअप.

(४) अदत्तानीति स्वाम्यभावोऽनुमत्यभावश्च विवक्षितः। दीक.

(५) अदत्तानि स्वामिना स्वस्वत्वानास्पदीकृतानीति यावत्। परोपभुक्तानि शय्यादीनि नोपभुञ्जीत। वीमि.

## बृहद्योगियाज्ञवल्क्यः

संध्यावन्दनगायत्रीजपादीनि कानिचित् ब्राह्मणस्य नित्यकर्माणि

**[1]ओंकारो व्याहृतयश्च गायत्री सशिरास्तथा।**
**वैदिकं च तथा कर्म अब्लिङ्गं चाघमर्षणम्॥**
**प्राणायामस्तथा संध्या मार्जनान्तर्जलं जपः।**
**सर्वमेव हि कर्तव्यं ब्राह्मणैर्ब्रह्मचिन्तकैः॥**

उदकताडनादेः परपीडायाः अभिषेककालीनकर्मान्तराचरणस्य च निषेधः

**[2]पादने पाणिना वाऽपि यष्ट्या वस्त्रेण वोदकम्।**
**न हन्यान्नैव रुन्धीत न च प्रक्षोभयेद्द्विजः॥**
**न कुर्यात् कस्यचित्पीडां मनोवाक्कायकर्मभिः।**
**आचरन्नभिषेकं च कर्माण्यन्यानि नाऽऽचरेत्॥**

अहिंसादयो धर्माः, यमनियमदमानां प्रशंसा

**[3]अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः।**
**दमः शमार्जवं दानं सर्वेषां धर्मसाधनम्॥**
**गृहीत्वा यमधनुर्वै नियमज्याततं दृढम्।**
**संदधीत दमशरे(? रं) स्वर्गलक्ष्ये प्रयत्नतः॥**
**यस्येदमायुधं नास्ति स्वर्गसाधनमुत्तमम्।**
**अपि जन्मसहस्रेण न साधयति तत् परम्॥**

ग्रहणादिनिमित्तकं स्नानं रात्रावपि कर्तव्यम्

**[1]ग्रहणोद्वाहसंक्रान्तियात्रार्तिप्रसवेषु च।**
**स्नानं नैमित्तिकं ज्ञेयं रात्रावपि तदिष्यते॥**

(१) आर्तिः मरणम्। *स्मृच. २।३१६

(२) एवं ग्रहणादिस्नानमपि नैमित्तिकमेव। तदपि रात्रावपि प्राप्तं चेत्कर्तव्यमेव। तदुक्तं भट्टोजीदीक्षितीये त्रिस्थलीसेतौ — "तदाह वृद्धयाज्ञवल्क्यः — 'ग्रहणोद्वाह ..... तदिष्यते॥'। एतच्चाऽऽद्यान्त्यप्रहरद्वयविषयम्, 'महानिशा तु विज्ञेया मध्यमं प्रहरद्वयम्। प्रदोषपश्चिमौ यामौ दिनवत्स्नानमाचरेत्॥' इति पराशरोक्तेरिति केचित्।" इति। आभू. १५२

## नारदः

सत्यप्रशंसा अनृतनिन्दा च

**[2]एकमेवाद्वितीयं तत् प्राहुः पावनमात्मनः।**
**सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव॥**

इत आरभ्य सत्यप्रशंसा यावदनृतनिन्देति। एकमेवाद्वितीयं तथाभूतमन्यन्नास्तीति प्राहुः। शोधनमात्मनः। अन्यदप्यस्ति, तत् सशेषं शोधयति यज्ञादि, इदं त्वद्वितीयं निरपेक्षमशेषं शोधयतीत्यर्थः। किं पुनस्तत्? सत्यमेव। अत एव स्वर्गस्य सोपानम्। यथा हर्म्यतलस्य सोपानं तथा स्वर्गमारोढुं मार्गः। पारावारस्य समुद्रस्येति केचित्, महानद्याः गङ्गादेः परकूलस्येत्यन्ये, यथा नौरिति। नाभा.

**[3]अश्वमेधसहस्रं च सत्यं च तुलया धृतम्।**
**अश्वमेधसहस्रात् तु सत्यमेव विशिष्यते॥**

---

+ गृक., गृर. मितागतम्।
Ψ शेषं मितागतम्।
(१) **बृयास्मृ.** १।२५-२६.
(२) **बृयास्मृ.** ७।३६-३७.
(३) **बृयास्मृ.** ७।१५९-१६०.

---

* आपा., मुक्ता., आप्र. स्मृचवत्।
(१) **स्मृच.** २।३१६ योगयाज्ञवल्क्यः; **आपा.** ४५ याज्ञवल्क्यः; **मुक्ता.** २७० योगयाज्ञवल्क्यः; **संम.** ७२ वृद्धयाज्ञवल्क्यः; **विपा.** ३।२।७६४ वृद्धयाज्ञवल्क्यः; **आप्र.** १६६ योगियाज्ञवल्क्यः; **आभू.** १५२ वृद्धयाज्ञवल्क्यः.
(२) **नासं.** २।१८८; **नास्मृ.** ४।२१०; **नाभा.** पावन (शोधन).
(३) **नासं.** २।१८९; **नास्मृ.** ४।२११.

'ब्रह्महत्याश्वमेधाभ्यां न परं पुण्यपापयोः' इत्यश्वमेधः पुण्यानामुत्कृष्टः। ततोऽपि भूतोक्तिः सत्यम्। न तयोः समत्ववैषम्यचिन्तया प्रयोजनम्, फलद्वारेणोत्कर्षापकर्षचिन्ता। उत्कर्षश्चापकर्षश्च तत्फलयोरेव वा। ते तुलया समधारयत्। तथाभूतप्रकृष्टपुण्यसाधनाश्वमेधसहस्रादपि सत्यं व्यतिरिच्यते। यस्यावभृथस्नानादपि ब्रह्महत्यायाः पूयते, किं ततः परम्? तत्सहस्रादपि सत्यमतिरिच्यते। तस्मात् सत्यसमं नास्तीति सत्यस्तुतिः। जन्मप्रभृत्या मरणात् सत्यवचनस्यैषा स्तुतिः, आहोस्विदेकैकस्य? इति। यदि जन्मप्रभृत्युक्ता, इह साक्ष्यश्रवणे फलं मन्दम्, अन्यथाक्रान्तत्वादिह सत्यवचने फलाभावात्। अथ एकैकस्य, इह सत्यवचने इयत् फलमवाप्नोति, तस्मात् सत्यं ब्रूहि इत्युपपद्यते स्तुतिः। नाभा.

[1]**परं कूपशताद्वापी परं वापीशतात् क्रतुः।**
**परं क्रतुशतात् पुत्रः सत्यं पुत्रशतात् परम्॥**

परत्वं भूयःफलत्वम्। कूपशतात् वापी भूयःफला, सर्वप्राण्यनुग्रहभूयस्त्वात्, भूतानुग्रहस्य च दुःखनिवृत्तिहेतुत्वात्। वापीशतफलात्(?शतात्) भूयःफलत्वं क्रतोः, श्रुतिविहितफलत्वात्, 'त्रयः प्राञ्चस्त्रयः प्रत्यञ्च आत्मा सप्तम एतावन्त एवैनममुष्मिँल्लोक उपजीवन्ति' (तैसं. ५।५।२।३) इति श्रुतेः। तच्छतादपि भूयःफलः पुत्रः। 'पुत्रेण लोकाञ्जयति पौत्रेणाऽऽनन्त्यमश्नुते। अथ पौत्रस्य पुत्रेण ब्रध्नस्याऽऽप्नोति विष्टपम्॥' (मस्मृ. ९।१३७), 'नापुत्रस्य लोकोऽस्ति' (ऐब्रा. ३३।२) इति च स्मृतेः (?), क्रतोरदृष्टफलत्वात् दृष्टादृष्टफलत्वाच्च पुत्रस्य। ततोऽपि भूयःफलं सत्यम्, सर्वप्रकृष्टाश्वमेधसहस्रातिरिक्तफलत्वात्। तस्मात् सत्ये स्थिरो भव, अनृतं मा वादीरिति। नाभा.

[2]**भूर्धारयति सत्येन सत्येनोदयते रविः।**
**सत्येन वायुः पवते सत्येनाऽऽपः स्रवन्ति च॥**

पृथिव्यादीनां सत्येन संबन्धात् धारणादिप्रतिज्ञाया अपरित्यागादेतान्यचेतनान्यपि स्वकार्यमुत्पत्तिप्रभृत्यव्यभिचारेण सत्येन कुर्वन्ति, किमुत चेतनावान्? इति सत्यस्तुतिः। नाभा.

[1]**सत्यमेव परं दानं सत्यमेव परं तपः।**
**सत्यमेव परो धर्मो लोकानामिति वै श्रुतिः॥**

दानफलमपि सत्यफलेऽन्तर्भूतम्। प्रकृष्टं च तपः सत्यमेव। सत्यमेव प्रकृष्टो धर्मो लोकानामित्यागमः। नाभा.

[2]**सत्यं देवाः समासेन मनुष्यास्त्वनृतं स्मृताः।**
**इहैव तस्य देवत्वं यस्य सत्ये स्थिता मतिः॥**

सत्यफलं देवाः संक्षेपेण, दुःखाननुषक्तनित्यसुखत्वात्। अनृतफलं मनुष्याः, दुःखभूयस्त्वात्। इहैव शरीरे तस्य देवत्वं यस्य सत्ये स्थिता मतिः। भाविनि देवत्वे भूतवन्निर्देशः। हस्तप्राप्तं(? प्यं) देवत्वं तस्य न दूरे, 'प्रविष्टं धान्यम्' इति यथा। नाभा.

[3]**सत्यं ब्रूह्यनृतं त्यक्त्वा सत्येन स्वर्गमेष्यसि।**
**उक्त्वाऽनृतं महाघोरं नरकं प्रतिपत्स्यसे॥**

सत्यं ब्रूहि, स्वर्गसाधनत्वात्। (ततश्च सत्येनैव शरीरे तस्य देवत्वं यस्य सत्ये स्थिता मतिः?) अनृतं त्यक्त्वा, नरकसाधनत्वात्। ततश्च सत्येन स्वर्गमेष्यसि। अतोऽपि त्वमनृतं नरकसाधनमुक्त्वा घोरं नरकं प्रतिपत्स्यसे। नाभा.

[4]**निरयेषु च ते शश्वज्जिह्वामुत्कृत्य दारुणाः।**
**असिभिः शातयिष्यन्ति बलिनो यमकिंकराः॥**

अनृतवचनान्निरयं गतस्य तव निरयेषु नित्यं जिह्वां छित्त्वा दारुणा बलवन्तो यमकिंकराः यमस्याऽऽज्ञाकराः छित्त्वा भित्त्वा शातयिष्यन्ति। तस्मान्मा वादीरनृतमिति। नाभा.

[5]**शूले मत्स्यानिवाऽऽक्षिप्य क्रोशन्तमपरायणम्।**
**अवाक्छिरसमुत्क्षिप्य क्षेप्स्यन्त्यग्निह(?ग्नौ ह)देषु च॥**

---

(१) **नासं.** २।१९०; **नास्मृ.** ४।२१२ परं (वरं).
(२) **नासं.** २।१९१; **नास्मृ.** ४।२१३ दयते रविः (देति भास्करः) पव (प्लव).

(१) **नासं.** २।१९२; **नास्मृ.** ४।२१४ वै श्रुतिः (नः श्रुतम्).
(२) **नासं.** २।१९३; **नास्मृ.** ४।२१५ स्मृताः (स्मृतम्).
(३) **नासं.** २।१९४ प्रतिपत्स्यसे (संप्रपत्स्यते); **नास्मृ.** ४।२१६.
(४) **नासं.** २।१९५; **नास्मृ.** ४।२१७ निरये (नरके).
(५) **नासं.** २।१९६; **नास्मृ.** ४।२१८ (शूलैर्भेत्स्यन्ति चाऽऽक्रम्य क्रोशन्तमपरायणम्। अवस्थितं समुत्कृत्य क्षेप्स्यन्ति त्वां हुताशने॥).

मत्स्यानिव शूले प्रोत्य क्रोशन्तं रोरुद्यमानम् अगतिं पुनः शूलादुद्धृत्याग्निप्रदेशे क्षेप्स्यन्ति ततश्च ह्रदेषु।

नाभा.

**[1]अनुभूय च दुःखास्ताश्चिरं नरकवेदनाः।**
**इहाऽऽयास्यस्यभव्यासु गृध्रकाकादियोनिषु॥**

अनुभूय तत्र नरकेषु चिरं दुःखाः दुरनुभवाः नरकवेदनाः शूलाग्निह्रदासिपत्रवनकुम्भीपाकतप्तवालुक-(?का)कूटशल्मल्याद्याः, पुनरिह आयास्यसि उत्पत्स्यसे अभव्यासु पापासु गृध्रवायसकृम्यादियोनिषु।

नाभा.

**[2]ज्ञात्वैताननृते दोषाञ् ज्ञात्वा सत्ये च सद्गुणान्।**
**सत्यं वदोद्धराऽऽत्मानं माऽऽत्मानं पीपतश्चिरम्॥**

तस्मात् — ज्ञात्वैतानिति। एवं ज्ञात्वा अनृते दोषान् सत्ये च शोभनान् गुणान् सत्यं वद, उद्धराऽऽत्मानं देवत्वं प्रापय। अनृतमुक्त्वा माऽऽत्मानं नरके पीपतः।

नाभा.

**[3]न बान्धवा न सुहृदो न धनानि महान्त्यपि।**
**अलं धारयितुं शक्तास्तमस्युग्रे निमज्जतः॥**

बान्धवाः स्वजनाः सुहृदः मित्राणि धनानि गवाश्वहिरण्यादीनि महान्त्यपि भूयांस्यपि न शक्ता न पर्याप्ताः धारयितुं तमस्युग्रे महति नरके निमज्जतः, सत्यमेवैकं समर्थम्। तस्मात् स्वार्थं तदेवैकमवलम्बस्व, अनृतं परार्थं मा वादीरिति। नाभा.

**[4]पितरस्त्ववलम्बन्ते त्वयि साक्षित्वमागते।**
**तारयिष्यति किं न्वस्मानात्मानं पातयिष्यति॥**

पितरस्त्ववलम्बन्ते यथाल्ब(? यथोलपमव) लम्बमानास्तथा 'पतेम, न पतेम' इति संशयावस्थायां त्वयि साक्षित्वमागते साक्षित्वेन नियुक्ते। किम् इति संशये। नु इति वितर्के। 'किं नु तारयिष्यति नरकादस्मान् आत्मानं च? किं नु पातयिष्यति अनृतवचनेन नरकेऽस्मानात्मानं च?' इति। तस्मात्तान् भूतवचनेनोद्धर्तुमर्हसि।

नाभा.

**[1]सत्यमात्मा मनुष्यस्य सर्वं सत्ये प्रतिष्ठितम्।**
**सर्वथैवाऽऽत्मनाऽऽत्मानं श्रेयसा योजयिष्यसि॥**

सत्यम् आत्मा मनुष्यस्य। यथाऽऽत्मानं श्रेयसा योजयिष्यति तथा सत्यमिति सत्यमात्मेत्युच्यते। सत्ये सर्वं प्रतिष्ठितम् आ ब्रह्मणः स्थानात् सत्यं निमित्तम्, तदभावे आकीटपतङ्गेभ्यः सर्वनारकाणीति। सर्वथाऽऽत्मानमात्मना श्रेयसा योजयिष्यसि, सत्यवचनमपि (? नं न) पितॄणामेव हितार्थम् आत्मार्थमपीति।

नाभा.

**[2]नास्ति सत्यात् परो धर्मो नानृतात् पातकं परम्॥**

नास्ति सत्यात् परो धर्मः, नानृतात् पातकमपि। 'ब्रह्महत्याश्वमेधाभ्यां न परं पुण्यपापयोः' इत्युक्तम्, 'अश्वमेधात् परं पुण्यं नास्ति' 'अश्वमेधसहस्रात्तु सत्यमेव विशिष्यते' (नासं. २।१८९) इति।

नाभा.

ब्राह्मणस्य यजनादिषु त्रयो धर्माः
तिस्रो वृत्तयश्च

**[3]दानमध्ययनं यज्ञः कर्मास्योक्तं त्रिलक्षणम्।**
**याजनाध्यापने वृत्तिस्तृतीयस्तु प्रतिग्रहः॥**

त्रीण्यदृष्टार्थानि कर्तव्यानि। त्रीणीच्छातो जीवनानि।

नाभा.

ब्राह्मणादिमङ्गलाष्टकं तत्पूजनादि-
विधिश्च

**[4]लोकेऽस्मिन् मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः।**
**हिरण्यं सर्पिरादित्य आपो राजा तथाऽष्टमः॥**
**[5]एतानि सततं पश्येन्नमस्येदर्चयेच्च तान्।**
**प्रदक्षिणं च कुर्वीत तथा ह्यायुर्न हीयते॥**

---

(१) **नासं.** २।१९७; **नास्मृ.** ४।२१९ दुःखास्ता (तास्तीव्रा) तृतीयचरणे (इह यास्यसि पापासु).

(२) **नासं.** २।१९८; **नास्मृ.** ४।२२० चतुर्थचरणे (नाऽऽत्मानं पातय स्वयम्).

(३) **नासं.** २।१९९; **नास्मृ.** ४।२२१.

(४) **नासं.** २।२००; **नास्मृ.** ४।२२२ किं न्वस्मानात्मानं (किं त्वस्मान्किं चायं).

(१) **नासं.** २।२०१; **नास्मृ.** ४।२२३ सर्वं सत्ये (सत्ये सर्वं) सर्वथैवा (सत्यमुक्त्वा) योजयिष्यसि (संनियोजय).

(२) **नासं.** २।२०३; **नास्मृ.** ४।२२६.

(३) **नासं.** १९।४७; **नास्मृ.** २०।५० यस्तु (यश्च).

(४) **नासं.** १९।५१; **नास्मृ.** २०।५४; **स्मृच.** २।४४६; **पमा.** १।२९५; **निप्र.** २।५१६.

(५) **नासं.** १९।५२; **नास्मृ.** २०।५५ च्च तान् (त्स्वयम्) चतुर्थचरणे (यथाऽस्याऽऽयुः प्रवर्धते); **स्मृच.** २।४४६ तान् (यः) था ह्यायु (थाऽस्याऽऽयु); **पमा.** १।२९५ तान् (यः); **निप्र.** २।५१६ च (तु) था ह्यायु (थाऽस्याऽऽयु) उत्त.

इष्टं द्विजधर्मः पूर्तं सर्ववर्णधर्मः
इष्टापूर्तशब्दार्थौ च

**[1]इष्टापूर्तं द्विजातीनां धर्मः सामान्य उच्यते।**
**अधिकारी भवेच्छूद्रः पूर्ते धर्मे न वैदिके॥**

वैदिके ज्योतिष्टोमादौ। ** कृर.११

**[2]यतीनां पादयोः सम्यग्विष्णुसूक्तेन सिञ्चति।**
**ते नरा विष्णुसायुज्यं प्राप्नुवन्ति न संशयः॥**
**[3]आतिथ्यं वैश्वदेवं च इष्टमित्यभिधीयते॥**
**[4]ग्रहोपरागे यद्दानं सूर्यसंक्रमणे तथा।**
**द्वादश्यादौ च यद्दानं तत्तत्पूर्तमिहोच्यते॥**

क्षौरमुहूर्तापवादः

**8[5]नृपविप्राज्ञया यज्ञे मरणे बन्धमोक्षणे।**
**उद्वाहेऽखिलवारर्क्षे तिथिषु क्षौरमिष्टदम्॥**

क्षौरे वर्जनीयः कालः

**[6]क्रूरवारं निशां रिक्तां षष्ठीं संध्यां च जन्मभम्॥**

वर्जयेदिति शेषः। आभू. १४८

## बृहस्पतिः

अहिंसाप्रशंसा भूमिहरणगोवीथ्यादिपीडननिन्दा च

**[7]यो न हिंस्यादनिन्द्यात्मा भूतग्रामं चतुर्विधम्।**
**तस्य देहाद्वियुक्तस्य भयं नास्ति कदाचन॥**
**अन्यायेन हृता भूमिर्यैर्नरैरपहारिता।**
**हरन्तो हारयन्तश्च हन्युस्ते सप्तमं कुलम्॥**
**गोवीथिं ग्रामरथ्यां च श्मशानं गोपितं तथा।**
**संपीड्य नरकं याति यावदाभूतसंप्लवम्॥**

**पप्र. कृरवत्।

8 'क्षौरं नैमित्तिकं' इत्यनिर्दिष्टकर्तृकवचने व्याख्यानं द्रष्टव्यम्।

(१) **कृर.** ११; **पप्र.** ४५.

(२) **यसं.** १३०.

(३) **कृर.** ११; **पप्र.** ४५.

(४) **कृर.** ११ परागे (पवासे); **शूक.** ४३ णे तथा (णेषु च) चतुर्थचरणे (तदेतत्पूर्तमुच्यते); **पप्र.** ४५ चतुर्थचरणे (तदेतत्पूर्तमुच्यते).

(५) **विपा.** ३।२।७५८.

(६) **आभू.** १४८.

(७) **बृस्मृ.** ३४, ३५, ४१, ४३-४५.

कन्यानृतादेरनृतषट्कस्योत्तरोत्तरं दूषकत्वातिशयः

**पञ्च कन्यानृते हन्ति दश हन्ति गवानृते।**
**शतमश्वानृते हन्ति सहस्रं पुरुषानृते।**
**हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन्।**
**सर्वं भूम्यनृते हन्ति मा स्म भूम्यनृतं वदीः॥**

ब्रह्मस्वहरणब्रह्महत्यादीनां ब्राह्मणकोपनस्य च निषेधः

**ब्रह्मस्वे मा रतिं कुर्यात्प्राणैः कण्ठगतैरपि।**
**अनौषधमभैषज्यं विषमेतद्धलाहलम्॥**
**[1]न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते।**
**विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम्॥**
**[2]मन्युप्रहरणा विप्रा राजानः शस्त्रपाणयः।**
**शस्त्रमेकाकिनं हन्ति विप्रमन्युः कुलत्रयम्॥**
**मन्युप्रहरणा विप्राश्चक्रप्रहरणो हरिः।**
**चक्रात्तीव्रतरो मन्युस्तस्माद्विप्रं न कोपयेत्॥**
**ब्रह्मस्वं ब्रह्महत्या च दरिद्रस्य च यद्धनम्।**
**गुरुमित्रहिरण्यं च स्वर्गस्थमपि पीडयेत्॥**

नित्यस्नानसंध्याजपादीनां फलानि

**नित्यस्नायी भवेदर्कः संध्ये द्वे च जपन्द्विजः।**
**नवं साधयते राज्यं नाकपृष्ठमनाशके॥**
**अग्निप्रवेशे नियतं ब्रह्मलोके महीयते।**
**रसानां प्रतिसंहारे पशून्पुत्रांश्च विन्दति॥**
**नाके चिरं स वसते उपवासी च यो भवेत्।**
**सततं चैकशायी यः स लभेदीप्सितां गतिम्॥**

शूद्रस्य शौचादयो धर्माः नमस्कारमन्त्रश्च

**[3]शौचं ब्राह्मणशुश्रूषा सत्यमक्रोध एव च।**
**शूद्रकर्म तथा मन्त्रो नमस्कारोऽस्य चोदितः॥**

(१) **बृस्मृ.** ४६; **गप.** १९८ पौत्रकम् (पौत्रिकम्) (=); **संग.** ३९६ सूर्यारुणसंवादे.

(२) **बृस्मृ.** ४८, ४९, ५३, ७४-७६.

(३) **गृक.** २६५ सत्य (नित्य) स्य चोदितः (त्र वेदितः); **गृर.** ४७५ स्य चोदितः (त्र देशितः); **पमा.** १।७७; **मपा.** २३०; **मर.** १२; **शूक.** ६५.

दयाक्षमादयोऽष्टौ सामान्यधर्माः
तेषां लक्षणानि च

**[1]दया क्षमाऽनसूया च शौचानायासमङ्गलम्।**
**अकार्पण्यमस्पृहत्वं सर्वसाधारणानि च॥**

(१)सः (धर्मः) द्विविधः – चतुर्णां वर्णानां साधारणोऽसाधारणश्च। तत्र साधारणो बृहस्पतिना निरूपितः दयेति। ×पमा.१।७६

(२)सर्वेषां विप्रराजन्यविट्शूद्राणां धर्मलक्षणानीत्यर्थः। *आर्क.२

**[2]परे वा बन्धुवर्गे वा मित्रे द्वेष्टरि वा सदा।**
**आपन्ने रक्षितव्यं तु दयैषा परिकीर्तिता॥**

**[3]आत्मवत्सर्वभूतेषु यद्धिताय शिवाय च।**
**वर्तते सततं हृष्टः कृत्स्ना ह्येषा दया स्मृता॥**

हितम् आयत्यां श्रेयस्करम्। शिवं शुभम्।
संप्र. १३९

**[4]बाह्ये चाऽऽभ्यन्तरे चैव दुःखे चोत्पादिते परैः।**
**न कुप्यति न वा हन्ति सा क्षमा परिकीर्तिता॥**

**[5]न गुणान् गुणिनो हन्ति स्तौति मन्दगुणानपि।**
**नान्यदोषेषु रमते साऽनसूया प्रकीर्तिता॥**

दुर्गुणान् द्यूतचौर्यादीन्। गुणैः श्रोत्रियत्वादिभिः। मन्दगुणान् अल्पगुणान् स्तौति बहुगुणत्वेन ख्यापयति।
संप्र. १३९

**[1]यो धर्ममर्थं कामं वा लभते मोक्षमेव वा।**
**न द्वेष्यात्तं सदा प्राज्ञः साऽनसूया स्मृता बुधैः॥**

**[2]अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिन्दितैः।**
**स्वधर्मे च व्यवस्थानं शौचमेतत्प्रकीर्तितम्॥**

**[3]शरीरं पीड्यते येन सुशुभेनापि कर्मणा।**
**अत्यन्तं तन्न कर्तव्यमनायासः स उच्यते॥**

(१) शरीरमत्यन्तं पीड्यते येन तन्न कर्तव्यमित्यर्थः।
अप. १।१२२ पृ. १६५

(२)शुभेन विहितेन धनार्जनादिना। पीड्यते शरीरमत्यन्तं क्लेशवद्भवति। संप्र.१३९

**[4]यदारम्भे भवेत्पीडा नित्यमत्यन्तमात्मनः।**
**तद्वर्जयेद्धर्ममपि सोऽनायासः प्रकीर्तितः॥**

**[5]प्रशस्ताचरणं नित्यमप्रशस्तविवर्जनम्।**
**एतद्धि मङ्गलं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः॥**

प्रशस्ताचरणं गन्धमाल्यादिधारणम्। अप्रशस्तम् आत्मनिन्दादि। संप्र. १३९

**[6]स्तोकादपि हि दातव्यमदीनेनान्तरात्मना।**
**अहन्यहनि यत्किंचिदकार्पण्यं हि तत्स्मृतम्॥**

अदीनेन अननुशायिना। संप्र. १३९

---

× पप्र. पमावत्।

* इन्दु. आर्कवत्।

(१) **अप.** १।१२२ पृ. १६४ नि च (नि तु); **ब्रक.** ११; **चव्र.** ८; **कृर.** १४ ण्यमस्पृहत्वं (ण्यास्पृहत्वं च); **पमा.** १।७६ ण्यमस्पृहत्वं (ण्यास्पृहत्वे च) नि च (इमे); **दीक.** ३।१८५; **वीमि.** ३।१८५ च शौचा...लम् (ऽऽशौचोऽनायासो मङ्गलम्); **पप्र.** ३२; **आर्क.** २; **इन्दु.**२.

(२) **अप.** १।१२२ पृ. १६४; **ब्रक.** ११-१२; **स्मृच.** १।३३ प्रथमचरणे (यदा तु बन्धुवर्गेषु) आपन्ने (आपन्नो) व्यं तु (व्यस्तु); **चव्र.** ८; **कृर.**१५; **मुक्ता.** ७३ प्रथमचरणे (आपदो रक्षणं यत्तु); **पप्र.** ३३; **आर्क.** २; **इन्दु.** २.

(३) **मभा.** ८।२१ यद्धिता (यः शिवा) शिवा (हिता) पुराणे; **संप्र.** १३८.

(४) **अप.** १।१२२ पृ. १६४ चाऽऽभ्यन्तरे (चाऽऽध्यात्मिके) परैः (क्वचित्); **ब्रक.** १२ चाऽऽभ्यन्तरे (वाऽऽध्यात्मिके) परैः (क्वचित्); **स्मृच.** १।३३ दुःखे चो (दुःख उ) वा ह (चाह); **चव्र.** ८ चोत्पादिते (चौत्पातिके) शेषं ब्रकवत्; **कृर.** १५ अपवत्; **मुक्ता.** ७३ दुःखे चो (दुःख उ) तृतीयचरणे (न प्रकुर्वन्ति नो हन्ति); **पप्र.** ३३ चोत्पादिते (चौत्पातिके) शेषम् अपवत्; **संप्र.** १३८ दुःखे चो (दुःख उ); **आर्क.** २ चाऽऽभ्य (वाऽऽभ्य) चैव (वाऽपि) शेषं संप्रवत्; **इन्दु.** २ आर्कवत्.

(५) **अप.** १।१२२ पृ. १६४; **ब्रक.** १२; **स्मृच.** १।३३; **चव्र.** ८; **कृर.** १५; **पप्र.** ३३; **संप्र.** १३८ गुणान् गुणिनो (दुर्गुणान् गुणैः); **आर्क.** २ न गुणान् (गुणान्न); **इन्दु.** २.

(१) **मुक्ता.** ७३.

(२) **अप.** १।१२२ पृ. १६४; **ब्रक.** १२; **स्मृच.** १।३३ रश्च (रस्तु) द्वितीयचरणे (दुष्टसंसर्गवर्जनम्); **चव्र.** ८-९; **कृर.** १५; **मुक्ता.** ७३; **पप्र.** ३३ अभक्ष्य (अधर्म); **संप्र.** १३८ धर्मे च (धर्मेषु); **आर्क.** २; **इन्दु.** ३.

(३) **अप.** १।१२२ पृ. १६५; **ब्रक.** १२; **स्मृच.** १।३३; **चव्र.** ९ कर्तव्यम (कुर्वीत अ); **कृर.** १५; **पप्र.** ३३; **संप्र.** १३८ सुशुभेनापि (शुभेनापि च) उत्तरार्धे (अत्यन्तं वर्जयेत्तु सोऽनायासः प्रकीर्तितः॥); **आर्क.**२ चव्रवत्; **इन्दु.** ३ चव्रवत्.

(४) **मुक्ता.** ७३.

(५) **अप.** १।१२२ पृ. १६५ द्वितीयचरणे (नाप्रशस्तप्रवर्तनम्); **ब्रक.** १२ विवर्ज (विसर्ज); **स्मृच.** १।३३; **चव्र.**९; **कृर.**१५ विवर्ज (स्य च व); **मुक्ता.** ७३; **पप्र.** ३३ क्तमृषि (क्तं मुनि); **संप्र.** १३८; **आर्क.** २; **इन्दु.**३.

(६) **अप.** १।१२२ पृ. १६५ हि दा (प्रदा) हि तत्स्मृतम् (तदुच्यते); **ब्रक.** १२; **स्मृच.** १।३३ व्यमदीनेना (व्यं मुदितेना); **चव्र.** ९ दपि हि दातव्य (दप्युपकर्तव्य); **कृर.** १६ हि दा (प्रदा); **मुक्ता.** ७३ स्मृचवत्; **पप्र.** ३४ हि दा (च दा); **संप्र.** १३८ चतुर्थचरणे (तदकार्पण्यमुच्यते); **आर्क.** २ कृरवत्; **इन्दु.** ३ कृरवत्.

**[1]यथोत्पन्नेन संतोषः कर्तव्यो ह्यथ वस्तुना।**
**परस्याचिन्तयित्वाऽर्थं साऽस्पृहा परिकीर्तिता॥**
**[2]विवर्जयेदसंतोषं विषयेषु सदा नरः।**
**परद्रव्याभिलाषं च साऽस्पृहा कथ्यते बुधैः॥**

असंतोषम् अतृप्तिम्। संप्र. १३८

ब्रह्मस्वहरणात् न्यासहरणे दोषातिशयः
तत्रापि परस्त्रीहरणेऽधिकः

**[3]शोध्यं शुध्यति मृत्तोयैः प्रायश्चित्तैश्च पातकम्।**
**ब्रह्मस्वन्यासहर्तारौ तमदत्त्वा न शुध्यतः॥**
**[4]ब्रह्महा वित्तहा चोभौ समौ स्यातां न वा समौ।**
**कल्पान्ते ब्रह्महा शुध्येद्वित्तहा न कदाचन॥**
**[5]एवं ज्ञात्वा परस्वानि मनसाऽपि न चिन्तयेत्।**
**परस्त्रियो विशेषेण धर्मसारमिदं स्मृतम्॥**
**[6]जात्यन्धो बधिरश्चैव मूकः संकुचिताङ्गुलिः।**
**परदारापवादेषु परच्छिद्रानुहिंसने॥**
**[7]एवंवृत्तस्तु पितरौ त्रायते महतो भयात्।**
**वितत्येह यशो दीप्तं ब्रह्मलोके महीयते॥**

विद्याकर्माद्यनुगुणवर्तनविधिः

**[8]यथा विद्या यथा कर्म यथा वित्तं यथा वयः।**
**जानंस्तथैव वर्तेत वेशादिभिरनुद्धतः॥**

(१) **अप.** १।१२२ पृ. १६५ ह्यथ वस्तुना (ह्यन्ववत्तु वा); **ब्रक.** १२; **स्मृच.** १।३३-३४ (यथोपपन्नैः संतोषः कर्तव्यः स्वागतैर्द्विजैः। परार्थं नाभिलाषेत साऽस्पृहा परिकीर्तिता॥); **चव्र.**९ (यथोपपन्ने संतोषः कर्तव्योऽत्यल्पवस्तुनि। परस्य चिन्तयन्नर्थं साऽस्पृहा परिकीर्तिता॥); **कृर.** १६ व्यो ह्यथ (व्योऽप्यथ); **मुक्ता.** ७३ (यथोत्पन्नैस्तु संतोषः कर्तव्यः स्वार्जितैर्धनैः। परार्थं नाभिलाषेत साऽस्पृहा परिकीर्तिता॥); **पप्र.** ३४ ह्यथ व (ह्यर्थव); **आर्क.** २ ह्यथ वस्तुना (ह्यल्पवस्तुनि) तृतीयचरणे (परस्य चिन्तयेन्नार्थं); **इन्दु.** ३ ह्यथ वस्तुना (ह्यल्पवस्तुनि) यित्वाऽर्थं (यन्नर्थं).

(२) **संप्र.** १३८.

(३) **गृक.** ३१६; गृर. ५१६ उत्तरार्धे (ब्रह्मस्वन्यासहर्ता वा दमं कृत्वा न शुध्यति॥).

(४) **गृक.** ३१६ वा समौ (वाऽसमौ); गृर. ५१६ वित्त (वृत्ति) द्वित्त (द्वृत्ति).

(५) **गृक.** ३१६; गृर. ५१६.

(६) **गृक.** ३१६; **गृर.** ५१६ जात्यन्धो (जातान्धो).

(७) **गृक.** ३१६; गृर. ५१६ प्रथमचरणे (नैवंविधस्तु स्वपितॄन्).

(८) **अप.** १।१२३ पृ. १६५ जानंस्त (जनस्त); **मुक्ता.** ४६५ उत्तरार्धे (जानंस्तथैव कुर्वीत न वेषादिभिरुद्धतः॥); **पप्र.** ३६ वेशा (वेषा); **आन.** ६५२ मुक्तावत्.

महतामपि लौकिकाचारलङ्घनस्य
निषेधः

**[1]यद्यपि स्यात्त्रिलोकज्ञस्त्रैलोक्याकर्षणक्षमः।**
**तथाऽपि लौकिकाचारं मनसाऽपि न लङ्घयेत्।**

गोब्राह्मणोपकारस्य ब्रह्मचर्यस्य
च प्रशंसा

**[2]उपकाराय यो ब्रूयाद्ब्राह्मणार्थे गवामपि।**
**ब्रह्मयोनिशतं प्राप्य देवत्वमधिगच्छति॥**
**[3]आत्यन्तिकं ब्रह्मचर्यमाश्रमत्रयवासिनाम्।**
**स्वदारनियमात्सम्यग्ब्रह्मचारी गृहाश्रमी॥**

आततायिवधापवादः

**[4]स्वाध्यायिनां कुले जातं न हन्यादाततायिनम्।**
**तं हत्वा भ्रूणहा स स्यादहत्वाऽभ्रूणहा भवेत्॥**

इति बृहस्पतिवचनं स्ववधानुद्यताततायिपरमिति। कृभ. १२९४-१२९५

सौत्रामण्यां मद्यपाने न दोषः

**[5]सौत्रामण्यां तथा मद्यं श्रुतौ भक्ष्यमुदाहृतम्॥**

'मैत्रारण्यां(? सौत्रामण्यां)..... मुदाहृतम्' इति बृहस्पतिवचनमपि क्षत्रियवैश्यविषयम्। गप. ४०९

मुण्डननिषेधे कर्तनविधिः

**+ [6]मुण्डनस्य निषेधेऽपि कर्तनं तु विधीयते॥**

क्षौरे कालविधिः तदपवादश्च

**[7]राजकार्यनियुक्तानां नटानां रूपजीविनाम्।**
**श्मश्रुरोमनखच्छेदे नास्ति कालविशोधनम्॥**
**[8]पापग्रहाणां वारादौ विप्राणां शुभदं रवेः।**
**क्षत्रियाणां क्षमासूनोर्विट्शूद्राणां शनेः शुभम्॥**

+ अस्य संदीव्याख्यानं दक्षस्य 'मुण्डनं पिण्ड०' इति वचने (वका. पृ. १७७९) द्रष्टव्यम्।

(१) **मुक्ता.** ४६५; **आन.** ६५३.

(२) **मुक्ता.** ४६५.

(३) **यसं.** २७.

(४) **कृभ.** १२९४.

(५) **निक.** ३३२; **मवि.** ५।५६; **गृर.** ३९५; **गप.** ४०९ सौत्रामण्यां (मैत्रारण्यां); **आप्र.** ५४९.

(६) **संग.** ६२२; **संदी.** २।६१ स्मृत्यन्तरम्.

(७) **संग.** ६२४; **पुम.** ४५६ रोम (लोम) विशोधनम् (विधिर्नृणाम्).

(८) **आभू.** १४८.

**सोमवारः सिते शस्तः कृष्णपक्षे तु गर्हितः।**
**बुधवारः शुभः प्रोक्तः पापग्रहयुतोऽपि सन्॥**
**[1]क्षौरं नैमित्तिकं कार्यं निषेधे सत्यपि ध्रुवम्।**
**पित्रादिमृतिदीक्षासु प्रायश्चित्तेऽथ तीर्थके॥**
**[2]विना तीर्थं विना यज्ञं मातापित्रोर्मृतिं विना।**
**यो वापयति लोमानि स पुत्रः पितृघातकः॥**

जीवत्पितृकेणापि तीर्थमुण्डनं कार्यम्, 'विना तीर्थम् ... पितृघातकः॥' इति बृहस्पतिस्मृतेः। अत्र पुत्रग्रहणाज्जीवत्पितृकविषयता। इतरथा स पितृघातक इत्येव आख्यत्।

विपा. ३।२।७६०

## भृगुः

ग्रस्तास्तमये स्नानभोजनकालः

**[3]ग्रस्तावेवास्तमानं तु रवीन्दू प्राप्नुतो यदि।**
**ततः परेद्युरुदये स्नात्वाऽभ्यवहरेन्नरः॥**

तत्र भोजनस्नानमाह भृगुः — ग्रस्तावेवेति।

मुक्ता. २७३

## कात्यायनः

ग्रहणादिस्नाने नदीरजोदोषाभावः, सर्वाणि जलानि ग्रहण-निमित्तकस्नानार्हाणि

**[4]उपाकर्मणि चोत्सर्गे प्रेतस्नाने तथैव च।**
**चन्द्रसूर्यग्रहे चैव रजोदोषो न विद्यते॥**

**[1]स्वर्धुन्यम्भःसमानि स्युः सर्वाण्यम्भांसि भूतले।**
**कूपस्थान्यपि सोमार्कग्रहणे नात्र संशयः॥**

(१) एवमुक्तरजोदोषस्य क्वचिदपवादमाह स एव — 'उपाकर्मणि.....नात्र संशयः॥' इति। अतः कथं रजोदोष इति भावः। स्वर्धुनी गङ्गा।

+स्मृच. २।३४४

(२) चन्द्रग्रहादिनिमित्तकं तु स्नानं निशि जलं प्रविश्यापि न विरुद्धम्। अत एव 'स्वर्धुन्यम्भः ..... नात्र संशयः॥' इति छन्दोगपरिशिष्टवाक्ये भूतलस्थजलप्रशंसा। कूपे तु प्रविश्य स्नानं सर्वथैव निषिद्धमिति तत्स्थजलप्रशंसा तस्मिन्नेव काले तदुद्धरणमित्येतदर्थम्। अतो दिवोद्धृतैर्जलैर्निशि स्नानं चन्द्रग्रहादन्यत्र निषिद्धमिति श्रीदत्तादयः। गङ्गायां तु रात्रावपि तन्न निषिद्धम्। यथा ब्रह्माण्डपुराणम् — 'दिवा रात्रौ च संध्यायां गङ्गायां च विशेषतः। स्नात्वाऽश्वमेधजं पुण्यं गृहेषूद्धृततज्जलैः॥' इति।

१६४-१६५

चन्द्रसूर्यग्रहे रजोदोषाभावे हेतुमाह — स्वर्धुन्यम्भ इत्यादिना। भूतल इत्यनेनोद्धृतोदकव्यावृत्तिः।

आप्र. १८९

## व्यासः

शूद्रस्य स्मार्तधर्मेऽधिकारस्तत्र वेदमन्त्रादिवर्जनं च

**[2]शूद्रो वर्णश्चतुर्थोऽपि वर्णत्वाद्धर्ममर्हति।**
**वेदमन्त्रस्वधास्वाहावषट्कारादिभिर्विना॥**

तृष्णात्यागविधिः

**[3]संतुष्टः को न शक्नोति फलैर्मूलैश्च वर्तितुम्।**
**सर्वस्त्विन्द्रियलौल्येन संकटान्यवगाहते॥**
**[4]दरिद्रोऽर्थं ततो राज्यं तथेन्द्रत्वं ततोऽक्षयम्।**
**पदं वाञ्छति नान्तोऽस्ति तस्मात्तृष्णां परित्यजेत्॥**

---

(१) **सिन्धु.** १७८२; **विपा.** ३।२।७५८ स्मृतिः; **संकौ.** ३४ कार्यं नि (कुर्यान्नि) उत्तरार्धे (पित्रोः प्रेतविधानं च गर्भिणीपतिराचरेत्॥) स्मृत्यन्तरे; **पुम.** ४५६ कार्यं (कुर्यात्) पू. (=); **कृभ.** १३५, १७८१ त्तेऽथ (त्ते च) (=); **संदी.** २।६२ सर्वं संकौवत्.

(२) **सिन्धु.** १७८३ स्मृतिः; **संग.** ६२१ लोमानि (रोमाणि) स्मृत्यन्तरे; **विपा.** ३।२।७६०.

(३) **पमा.** १।३८३ ततः (तयोः) : १।३८४ ततः (तयोः) उत्त.; **चमव्याआ.** ६१ ततः (तयोः); **मुक्ता.** २७३ : ४५० ततः (तयोः); **सम.** ७९ ततः (तदा); **आन.** २४१ ततः प (ततोऽप).

(४) **कास्मृ.** ११।४३; **अप.** १।१०० पृ. १३५; **स्मृच.** २।३४४; **गृर.** १९८; **आपा.** ३१ मार्कण्डेयः; **आत.** ३६७; **आप्र.** १८८ स्नाने (श्राद्धे).

+ आपा. स्मृचगतम्।

(१) **कास्मृ.** ११।५०; **अप.** १।१०० पृ. १३५; **स्मृच.** २।३४४; **कृर.** ६२९ स्वर्धु (स्वर्धू) सोमा (चन्द्रा); **आपा.** ३१ मार्कण्डेयः; **आप्र.** १६४, १८८.

(२) **व्यास्मृ.** १।६; **सिन्धु.** ११६, ११७४; **शूक.** १८.

(३) **स्मृच.** २।४५९; **आपा.** ११३.

(४) **स्मृच.** २।४५९; **आपा.** ११३ ततोऽक्ष (तथाऽक्ष).

ततो धर्मसंचय एवाऽऽवश्यकः, न धनसंचय इत्यभिप्रायः। स्मृच. २।४५९

बहुभिः सह ब्राह्मणैश्च सह विरोधः, आत्मप्रतिकूलस्य परेष्वाचरणम्, आत्मप्रशंसेत्यादीनां बहूनां वर्जनीयानामनुक्रमणम्

**[1]न कुर्याद्बहुभिः सार्धं विरोधं ब्राह्मणैस्तथा।**
**आत्मनः प्रतिकूलानि परेषां न समाचरेत्॥**
**[2]तिथिपक्षांश्च ते ब्रूयान्न नक्षत्राणि निर्दिशेत्।**
**न चाऽऽत्मानं प्रशंसेत परनिन्दां च वर्जयेत्॥**
**[3]यस्तु देवानृषीन्विप्रान्वेदान्वा निन्दति द्विजः।**
**न तस्य निष्कृतिर्दृष्टा शास्त्रेषु च मुनीश्वरैः॥**
**निन्दयेद्यो गुरुं देवान्न वेदांश्चोपबृंहयेत्।**
**कल्पकोटिशतं साग्रं रौरवे पच्यते नरः॥**
**[4]तूष्णीमासीत निन्दायां न ब्रूयात्किंचिदुत्तरम्।**
**कर्णौ पिधाय वस्तव्यं न चैतानवलोकयेत्॥**
**[5]विवादं स्वजनैः सार्धं न कुर्याद्वै कथंचन।**
**[6]वर्जयेद्वा रहस्यानि परेषां गूहयेद्द्विजः॥**
**[7]न पापं पापिनं ब्रूयादपापं वा द्विजोत्तमः।**
**सत्येन तुल्यदोषः स्यान्मिथ्या द्विर्दोषवान्भवेत्॥**

विधिनिषेधपालनविधिः परकर्मपरस्त्रीसेवननिषेधश्च

**[8]विहितं वा निषिद्धं वा पालयंस्त्रिदिवं व्रजेत्।**
**अपालयन्पुनर्मोहादपवित्रं पदं व्रजेत्॥**
**[9]स्वकर्मनिरतो नित्यं स्वदारनिरतो भवेत्।**
**सेवनात्परकीयाणां नरको दारकर्मणाम्॥**

(१) **मुक्ता.** ४६१; **आन.** ६४८ णैस्तथा (णैः सह) पू.
(२) **मुक्ता.** ४६१; **आन.** ६४८ उत्त.
(३) **मुक्ता.** ४६१.
(४) **मुक्ता.** ४६१; **आन.** ६४८.
(५) **मुक्ता.** ४६१.
(६) **आन.** ६४८.
(७) **मुक्ता.** ४६१; **आन.** ६४८-६४९.
(८) **कृभ.** ९६३.
(९) **गृक.** ४१२; **गृर.** ५८६ नरको (नरकं).

शूद्रे पातित्याभावः संस्कारानर्हत्वं धर्मविशेषेषु अधिकारानधिकारौ च

***[1]न चेह शूद्रः पततीति निश्चयो**
**न चापि संस्कारमिहार्हतीति।**
**स्मृति(?श्रुति)प्रयुक्तं तु न धर्ममश्नुते**
**न चास्य धर्मे प्रतिषेधनं स्मृतम्॥**

शूद्रस्य पूर्तेऽधिकारः वैदिकेऽनधिकारश्च

**[2]अधिकारी भवेच्छूद्रः पूर्ते धर्मे न वैदिके॥**

एवं पूर्तेऽपि जलाशयोत्सर्गप्रासादप्रतिष्ठामहादानादिष्वपि शूद्रस्याधिकारः, 'अधिकारी०' इति व्यासजातूकर्ण्योक्तेः। शूक. ४३

यमनियमाः

**[3]अहिंसा सत्यवचनं ब्रह्मचर्यमकल्कता।**
**अस्तेयमिति पञ्चैते यमाश्चैव व्रतानि च॥**

ब्रह्मचर्यम् अत्र प्रतिनिषिद्धमैथुनवर्जनम्। अकल्कता दम्भरहितत्वम्। +गृक. ३०२

**[4]अक्रोधो गुरुशुश्रूषा शौचमाहारलाघवम्।**
**अप्रमादश्च नियमाः पञ्चैवोपव्रतानि च॥**

अनिर्णिक्तपादेनाप्रवेश्यानि

**[5]जलं देवगृहं चैव शयनं च द्विजालयम्।**
**निर्णिक्तपादः प्रविशेन्नानिर्णिक्तः कथंचन॥**

ग्रहणपुण्यकालः

**[6]प्राक्पश्चात्संक्रमेषूक्तः पुण्यकालो विभागशः।**
**चन्द्रसूर्योपरागे तु यावद्दर्शनगोचरः॥**

* अस्य मेधाव्याख्यानं 'धर्मेप्सवस्तु' (मस्मृ. १०।१२७) इति मनुवचने (वका. पृ. १७४९) द्रष्टव्यम्।
+ गृर., निप्र. गृकवत्।
(१) **मेधा.** १०।१२७.
(२) **शूक.** ४३ व्यासजातुकर्ण्यौ.
(३) **मेधा.** ४।२०४ मिति (मपि) (=); **गृक.** ३०२; **गृर.** ५०६; **निप्र.** २।४१४ कल्क (कल्प) श्चैव (श्चैते) व्यासो मनुश्च; **नन्द.** ४।२०४.
(४) **मेधा.** ४।२०४ हार (चार) (=); **गृक.** ३०२; **गृर.** ५०६ दश्च (दो हि); **निप्र.** २।४१४ लाघवम् (मानवम्) व्यासो मनुश्च; **नन्द.** ४।२०४.
(५) **आर.** २९.
(६) **मुक्ता.** २७३; **आन.** २४०-२४१ लो विभा (लोऽपि भा).

ग्रहणे तोयद्विजदेयवस्तुविशेषानादरः

**[1]सर्वं गङ्गासमं तोयं सर्वे ब्रह्मसमा द्विजाः।**
**सर्वं भूमिसमं दानं ग्रहणे चन्द्रसूर्ययोः॥**

यद्यपि पूर्वं 'सर्वे व्याससमा द्विजाः' इत्युक्तम्, तथापि तद्ब्राह्मणस्तुत्यर्थं दानस्याऽऽवश्यकत्वार्थं च, न तु पात्रत्यागेन यस्मै कस्मैचिद्दानप्रतिपादनार्थम्।

सम. ७८-७९

ग्रहणे गङ्गास्नानप्राशस्त्यं चन्द्रसूर्य-ग्रहणयोः फलतारतम्यं च

**[2]इन्दोर्लक्षगुणं पुण्यं रवेर्दशगुणं ततः।**
**गङ्गातोये तु संप्राप्ते इन्दोः कोटी रवेर्दश॥**

अन्यस्नानम् इन्दुग्रहे लक्षगुणम्, सूर्यग्रहे तु दशगुणम्। निप्र. २।६८७

**[3]इन्दोः कोटिसहस्रस्य यत्फलं लभते नरः।**
**तत्फलं जाह्नवीस्नाने राहुग्रस्ते दिवाकरे॥**
**[4]चन्द्रसूर्यग्रहे चैव योऽवगाहेत जाह्नवीम्।**
**स स्नातः सर्वतीर्थेषु किमर्थमटते महीम्॥**

चूडामणिग्रहणस्य लक्षणं प्राशस्त्यं च

**[5]रविग्रहः सूर्यवारे सोमे सोमग्रहस्तथा।**
**चूडामणिरिति ख्यातस्तत्रानन्तफलं भवेत्॥**

वारविशेषयोगे फलातिशयमाह व्यासः — रविग्रहे इति। +मुक्ता. २७३

+ सम., आन. मुक्तावत्।

(१) **स्मृच.** २।६२१ प्रथमतृतीयचरणौ व्यत्यासेन पठितौ चतुर्थचरणे (राहुग्रस्ते दिवाकरे); **आपा.** ३१ चतुर्थचरणे (सर्वग्रस्ते दिवाकरे) शेषं स्मृचवत्; **निप्र.** २।६८६ ब्रह्म (व्यास) शेषं स्मृचवत्, स्मृतिसमुच्चये; **मुक्ता.** २७१; **सम.** ७७ ब्रह्म (व्यास): ७८ ब्रह्म (व्यास) द्वितीयचरणमात्रम्; **आन.** २४२ पराशरव्यासौ; **कृभ.** २९० स्मृचवत् (=).

(२) **स्मृच.** २।६२१ पुण्यं रवेर्दश (पुण्यं रवेश्शत); **निप्र.** २।६८७ पुण्यं (प्रोक्तं) ततः (स्मृतम्) तोये (तीरे) कोटी र (कोटि र) स्मृतिसमुच्चये; **सिन्धु.** २९०; **विपा.** ३।२।४६४.

(३) **स्मृच.** २।६२१; **सिन्धु.**२९० इन्दोः (गवां) उत्तरार्धे (तत्फलं लभते मर्त्यो ग्रहणे चन्द्रसूर्ययोः॥).

(४) **स्मृच.** २।६२१.

(५) **स्मृच.** २।६२१ प्रथमचरणे (सूर्यवारे रविग्रासः); **निप्र.** २।६८८ रवि (सूर्य) भवेत् (स्मृतम्) स्मृतिसमुच्चये; **मुक्ता.** २७३ ग्रहः (ग्रहे) हस्तथा (हे तथा); **सिन्धु.** २८७ स्तत्रानन्तफलं भवेत् (स्तत्र दत्तमनन्तकम्); **सम.** ७८ स्तत्रा (स्तदा); **आन.** २४१ स्तत्रानन्तफलं भवेत् (स्तत्राऽऽनन्त्यं भवेत्) शेषं मुक्तावत्.

**[1]वारेष्वन्येषु यत्पुण्यं ग्रहणे चन्द्रसूर्ययोः।**
**तत्पुण्यं कोटिगुणितं ग्रासे चूडामणौ स्मृतम्॥**

ग्रहणदानस्य प्रशंसा नैमित्तिकत्वं रात्रावपि कर्तव्यता च

**[2]गवां कोटिसहस्रस्य यत्फलं लभते नरः।**
**तत्फलं समवाप्नोति ग्रहणे चन्द्रसूर्ययोः॥**
**[3]ग्रहणोद्वाहसंक्रान्तियात्रार्थे प्रसवेषु च।**
**दानं नैमित्तिकं ज्ञेयं रात्रावपि न दुष्यति॥**

तथा ग्रहणे रात्रावपि श्राद्धादि कार्यम्, 'ग्रहणोद्वाह ..... वपि तदिष्यते॥' इत्यपरार्के व्यासोक्तेः।

*सिन्धु. २९५

ग्रहणे स्नानस्य नैमित्तिकत्वम् आमलकरहितत्वं च

**[4]उच्छिष्टाद्युपघातादौ स्नानं नैमित्तिकं स्मृतम्।**
**चन्द्रसूर्योपरागे च तथैव ग्रहसूतके॥**

ग्रहसूतकं राहुदर्शनम्।

अप. १।१५४ पृ. १९७

**[5]तथा दर्शे च सप्तम्यां संक्रान्तौ च रवेर्दिने।**
**चन्द्रसूर्योपरागे च स्नानमामलकैस्त्यजेत्॥**

ग्रहणे वेधे ग्रस्तास्तमने च भोजननिषेधः

**[6]नाद्यात्सूर्यग्रहात्पूर्वमह्नि सायं शशिग्रहात्।**
**ग्रहकाले च नाश्नीयात्स्नात्वाऽश्नीयाच्च मुक्तयोः॥**

(१)न केवलं ग्रहणकाले भोजनाभावः किंतु ग्रहणात् प्रागपि। तदाह व्यासः — नाद्यादिति।

**पमा. १।३८२

* विपा. सिन्धुवत्।

** मुक्ता. पमागतम्।

(१) **स्मृच.** २।६२२; **मुक्ता.** २७३; **सिन्धु.** २८७-२८८ ग्रासे (योगे); **सम.** ७८; **आन.** २४१.

(२) **विपा.** ३।२।४६४-४६५.

(३) **अप.** १।१५४ पृ. १९७; **सिन्धु.** २९५ यात्रार्थे प्र (यात्रार्तिप्र) न दुष्यति (तदिष्यते); **विपा.** ३।२।४६८ सिन्धुवत्; **कृभ.** ८४३-८४४ यात्रार्थे प्र (यात्रार्तिप्र) दानं (स्नानं).

(४) **अप.** १।१५४ पृ. १९७.

(५) **मपा.** २७०; **मर.** १३४ रवेर्दि (रवौ दि); **विपा.** ३।२।१८०.

(६) **पमा.** १।३८२; **मुक्ता.** ४५०; **सम.** ७९ याच्च मु (याद्विमु).

(२) वेधमाह व्यासः — नाद्यादिति।

सम. ७९

[1]**मुक्ते शशिनि भुञ्जीत यदि न स्यान्महानिशा।**
**अमुक्तयोरस्तगयोरद्यादृष्ट्वा परेऽहनि॥**

द्वयोर्ग्रस्तास्ते तु माधवीये व्यासः — अमुक्तयोरिति।

सिन्धु. २८२

[2]**सूर्यग्रहे तु नाश्नीयात्पूर्वं यामचतुष्टयम्।**
**चन्द्रग्रहे तु यामांस्त्रीन्बालवृद्धातुरैर्विना॥**

चन्द्रग्रहणे तत्पूर्वं यामत्रयं सूर्यग्रहणे यामचतुष्टयं च न भोक्तव्यम्। तथा च कालादर्शे — चन्द्रेति।

आन. २४२

[3]**अपराह्णे न मध्याह्ने मध्याह्ने न तु संगवे।**
**भुञ्जीत संगवे चेत्स्यान्न पूर्वं भुजिमाचरेत्॥**

बालादिविषये स एवाऽऽह — अपराह्ण इति।

मुक्ता. ४५०

क्षौरे वर्ज्या वारादयः

[4]**क्षौरे शनैश्चरादित्यभौमाहोरात्रमेव च।**
**तथा प्रतिपदं रिक्तां तिथिं च परिवर्जयेत्॥**

अहोरात्रग्रहणम् 'न वारदोषाः प्रभवन्ति रात्रौ' इति वचनबाधार्थम्। सम. १०६

[5]**चतुर्थीं चैव षष्ठीं च अष्टमीं च चतुर्दशीम्।**
**तथा पञ्चदशीं चैव ब्रह्मचारी भवेत्सदा।**
**श्मश्रुकर्म शिरोऽभ्यङ्गं दन्तधावनमञ्जनम्॥**

वर्जयेदिति शेषः। संग. ६२२

[6]**तिथिं प्रतिपदां रिक्तां विष्टिं चैव विवर्जयेत्।**
**वारं शनैश्चरादित्यभौमानां रात्रिमेव च॥**

काञ्चनताम्बूलाभयदानापवादाः

[7]**यतीनां काञ्चनं दत्त्वा ताम्बूलं ब्रह्मचारिणाम्।**
**चौराणामभयं दत्त्वा दाताऽपि नरकं व्रजेत्॥**

दाताऽपीत्यपिना प्रतिग्रहीता समुच्चीयते।

यप्र. १०१

वन्ध्यदिवसलक्षणम्

[1]**यस्यां रात्र्यां व्यतीतायां न किंचिच्छुभमाचरेत्।**
**तमेव वन्ध्यं दिवसमिति विद्याद्विचक्षणः॥**

गवाग्निब्राह्मणेभ्यो ग्रासाहुतिदक्षिणा-
दिदानस्य प्रत्याख्याने
प्रत्यवायः

[2]**मा ददस्वेति यो ब्रूयाद्गव्यग्नौ ब्राह्मणेषु च।**
**श्वानयोनिशतं गत्वा चाण्डालेष्वपि जायते॥**

देवद्रव्यविनाशनब्राह्मणस्वहरण-
ब्राह्मणातिक्रमैः
कुलनाशः

[3]**देवद्रव्यविनाशेन ब्रह्मस्वहरणेन च।**
**कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च॥**

देवद्रव्यं देवतोद्देशेन यत् त्यक्तं वस्तु।

गृक. ३३४

## लघुव्यासः

अधीतं श्रुतं च सर्वमनुष्ठेयम्

[4]**अधीतं विधिवद्यच्च श्रुतं यच्च विशेषतः।**
**अनुष्ठेयं तु तत्सर्वं मनुः स्वायंभुवोऽब्रवीत्॥**

## देवलः

क्षत्रियवैश्यशूद्रधर्माणां बहूनामनुक्रमणम्

[5]**क्षत्रधर्मोऽध्ययनेज्यादानैर्देवपितृपूजनं ब्राह्मणशुश्रूषणं वैश्यशूद्रपरिपालनं बलिकरशुल्कषड्भागोप-**

(१) पमा. १।३८२ रद्यादृ (रथ दृ); मुक्ता. ४५०; सिन्धु.२८२ उत्त.; सम. ७९ पू.; विपा. ३।२।४७१ उत्त.

(२) मुक्ता. ४५०; आन. २४२ (चन्द्रग्रहादयो यामत्रये यामचतुष्टये। सूर्यग्रहे तु नाश्नीयात्) एतावदेव, कालादर्शे.

(३) मुक्ता. ४५०.

(४) सम. १०६.

(५) संग. ६२२.

(६) आभू. १४८.

(७) यसं. १०३; यप्र. १०१.

(१) अप. १।११५ पृ. १५८; आपा. ३ यस्यां (यश्व) तमे (ममै) स्मृतिदीपिकायाम्; मुक्ता. २१० स्मृतिप्रदीपिकायाम्.

(२) यसं. १०३.

(३) गृक. ३३४ यमशातातपदानव्यासाः.

(४) निप्र. २।५४.

(५) गृक. २५४-२५५ वर्णाश्रमव्यवहारसं (वर्णाश्रमसं) शस्त्रोपा (शास्त्रोपा)दुष्टामात्या…शक्रध्वजावनमिति (दूष्यमान्याप्तकुलीनाध्यक्षप्रतिषेधलब्धशूरनिजैश्वर्यधैर्यमुत्साहशौर्यं शक्तत्वमयाचनमिति); गृर. ४७० नेज्या (नेषु) बलिकरशुल्कषड्भागो (वणिक्शुल्को) हारवर्जनं (हारार्जनं) चारित्रा (चरिता) कोश (कोष) दुष्टामात्या..शक्रध्वजावनमिति (दह्यमानाप्तकुलीनाध्यक्षप्रतिषेधलब्धशूरनिजैश्वरदण्डप्रणयनं धर्मविशुद्ध्यै चाधैर्यमुत्साहः शौर्यं शक्तत्वमयाचनमिति); मर. १० पूजनं (यजनं) (बलिकरशुल्क…त्रानुपालनं०) शस्त्रोपा (सर्वोपा) प्रतिषेध…शूर (प्रतिषेधेनुच्चशूर).

**जीवनं वर्णाश्रमव्यवहारसंस्थापनं पापनिग्रहो गुणवत्परिग्रहो व्यवहारवर्जनं धर्मचारित्रानुपालनं हस्त्यश्वरथप्रहरणशिक्षाभ्यासः शस्त्रोपायाश्रयत्वं कोशदण्डावेक्षणं परचक्रापणाटवीतस्करदुष्टामात्याप्तकुलीनाध्यक्षप्रतिषेधलब्ध(?)शूरजनैश्च दण्डप्रणयनं धर्मयुद्धैश्च धैर्यमुत्साहः शक्रध्वजावनमिति॥**

(१) बलिः उपायनम्। करः कारुकृषीवलेभ्यो नियतधनादानम्। शुल्कः तरादिपण्यम्। षड्भागोपजीवनम्, धान्यादीनामिति शेषः। संस्था मर्यादा। शिक्षा शास्त्रम्। उपायाः सामादयः। गृक. २५५

(२) करः आकरोपजीविभ्यो नियतधनादानम्। शुल्कः घट्टादौ द्रव्योदयः। प्रहरणम् आयुधम्।

*मर. १०

[१]**वैश्यधर्मोऽध्ययनयजनप्रदानैर्धर्मानुष्ठानं ब्राह्मणक्षत्रियशुश्रूषा पापवर्जनं कलत्रपोषणं कर्षणं पशुपालनं भारोद्वहनपण्यव्यवहारनर्तनगायनतालावतरणरङ्गोपजीवनं चेति॥**

गायनमत्र गीतम्। तालावतरणमत्र वादनम्। रङ्गः मल्लयुद्धभूमिः। इह तु मल्लविद्योपलक्ष्यते।

**गृक. २५५

[२]**शूद्रधर्मो द्विजातिशुश्रूषा पापवर्जनं कलत्रादिपोषणं कर्षणपशुपालनभारोद्वहनपण्यव्यवहारचित्रकर्मनृत्यगीतवेणुवीणामुरजमृदङ्गवादनादीनि॥**

[१]**यागाध्ययनदानास्त्रप्रजारक्षाभयादि च।**
**दण्डनीतिर्धनुर्वेदः क्षत्रियस्यानुवृत्तये॥**
**शौर्यं तेजो धृतिर्धार्ष्ट्यं युद्धे चाप्यपलायनम्।**
**दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम्॥**
**स्वाध्यायादीनि कर्माणि कुसीदं पशुपालनम्।**
**कृषिक्रिया च वाणिज्यं वैश्यकर्माण्यमूनि च॥**

वर्जनीयानां हिंसानृतस्तेयानाम–
वान्तरभेदाः, अनृतहेतवः,
अनृतस्तेयापवादाः

$[२]**तत्र दशविधा हिंसा – उद्वेगजननं संतापजननं रुजाकरणं शोणितोत्पादनं पैशुन्यकरणं सुखापाकरणमतिक्रमः संरोधो हितप्रतिषेधो वध इति॥**

(१) उद्वेगः मनसोऽस्वास्थ्यम्। संतापः यस्मिन् दुःखे उत्पन्ने आकुलितमिवाऽऽत्मानं मन्यते। रुजा शरीरदुःखम्। अतिक्रमः मान्यावमाननम्। संरोधः स्वेच्छाचारनिषेधः। हितप्रतिषेधः दुःखापनायकभेषजनिषेधः।

गृक. ३०४

(२) हितप्रतिषेधः। हितं तर्कशुद्धमभिमतम्।

*गृर. ५०७

(३) उद्वेगः मनोदुःखम्। संतापः तदेवाधिकतरम्। वधः मारणम्। *निप्र. २।४१७

[३]**तत्र श्लोकः –**

**कायक्लेशं मनोदुःखं वधं वा प्राणिनां पुनः।**
**यत्र वर्धयति द्वेषात्सा हिंसेति समासतः॥**

[४]**अनृतं द्विविधम् – असत्यं विसंवादश्चेति॥**

[५]**तत्र दृष्टश्रुतकृतानामन्यथावचनमसत्यम्।**
**प्रागभ्युपगतानामसंप्रवर्तनं विसंवाद इति॥**

---

* शेषं गृकवत्।

** मर. गृकवत्।

(१) **गृक.** २५५; **गृर.** ४७० शुश्रूषा (शुश्रूषणं); **मर.** १०: १९३ ऽध्ययनयजन (यजनाध्ययन) कर्षणं... पण्य (कर्षणपशुपालनभारोद्वहन) शेषं गृरवत्; **बाल.** १।११९ पृ. ३६७ कर्षणं पशुपालनं (कर्षणपशुपालन) तरण....चेति (तरणमिति).

(२) **मिता.** १।१२०; **अप.** १।१२० पृ. १६२ नृत्य (नृत्त) नादीनि (नानि); **स्मृच.** २।४५६ णपशुपालन (णं पशुपालनं) पण्य (पण्यापण्य) नृत्य (नृत्त) नादीनि (नानि); **पमा.** १।४१९ धर्मो द्विजाति (धर्मस्त्रिवर्ण) (पापवर्जनं०) नादीनि (नानि); **स्मृकौ.** ८९ पोषणं (पोषणं च) (कर्षण....नादीनि०) : ९४ धर्मो द्विजाति (धर्मस्त्रिवर्ण) (पापवर्जनं०); **मर.** १९७-१९८ (शूद्रधर्मो द्विजातिशुश्रूषा पापवर्जनं कलत्रादिपोषणं०) नादीनि (नानि); **शुशि.** ४० मुरज (मुस्त्र) शेषं पमावत् : ६२-६३ (शूद्रधर्मो द्विजातिजातिशुश्रूषा पापवर्जनं कुटुम्बपोषणं च) एतावदेव; **मुक्ता.** ६७ शूद्रधर्मो (शौद्रोऽयं धर्मो) वर्जनं (वर्ज्यं) णपशुपालन (णं पशुपालनं) (वेणु०) (मुरज०) नादीनि (नानि); **शूक.** ७१ धर्मो द्विजाति (धर्मस्त्रिवर्ण) (पापवर्जनं०) (वीणामुरज०) नादीनि (नानि); **वीमि.** १।१२०-१२१ पशुपालन (पशुपाल्य) मुरजमृदङ्ग (मृदङ्गमुरज) नादीनि (नानि).

$ अहिंसास्तेयादीनां सम्यक् बोधार्थं हिंसास्तेयादिबोधकवचनानामपि अत्र संग्रहः कृतः।

* शेषं गृकवत्।

(१) **मुक्ता.** ६०.

(२) **गृक.** ३०४ सुखापा (सुखाप); **गृर.** ५०७; **निप्र.** २।४१७ (तत्र०) सुखापाकरणं (सुखापहरणं) हितप्र (हितविप्र).

(३) **गृक.** ३०४; **गृर.** ५०७.

(४) **अप.** १।१३२ पृ. १७५; **गृक.** ३०९; **गृर.** ५१०.

(५) **अप.** १।१३२ पृ. १७५ श्रुतकृता (श्रुतानुमिता); **गृक.** ३०९ मसंप्रवर्तनं (मसंकीर्तनं); **गृर.** ५१० वचन (चरण).

**[1]रागाद्द्वेषाद्भयाल्लोभाद्दाक्षिण्याच्छङ्कया ह्रिया।**
**दम्भात्प्रमादतश्चापि नरस्योत्पद्यतेऽनृतम्॥**
**[2]परप्राणोपघाताच्च परद्रव्यापहारतः।**
**विशिष्टोऽनृतवादस्तु न वृथाकथनादिषु॥**
**[3]तस्मादनृतहेतूंस्तान्नाऽऽत्मन्युत्पादयेत्क्वचित्।**
**उत्पन्नान्वा प्रशमयेत्कारणैस्तद्विघातिभिः॥**
**[4]विवाहे ब्राह्मणस्यार्थे प्राणिनां जीविताय च।**
**आत्मनः प्राणहेतोर्वा न सीदेदनृतं वदन्॥**

(१) विहारे मैथुने। ब्रह्महासार्थं ब्राह्मणार्थं हासार्थं च। +गृक. ३११

(२) विवाहे मैथुने। गृर. ५१२

**[5]ततः स्थूलमध्यक्षुद्राणां त्रिविधानां पदार्थानां प्रसह्य तूष्णीं वा प्रच्छन्नं वा हरणं स्तेयम्॥**

**[6]रत्नक्षेत्रवेश्महेमरूप्याभरणादीनि स्थूलानि। चतुष्पद्द्विपदान्नधान्यलोहवस्त्रकार्षापणोपकरणादीनि मध्यानि। दन्तशृङ्गदारुचर्मपाषाणमृन्मयादीनि क्षुद्राणि॥**

(१) प्रसह्य बलात्कारेण। तूष्णीं हरणं स्वामिनाऽदृश्यमानस्य बलात्कारं विना यद्धरणम्।
गृक. ३१२

(२) प्रच्छन्नं समक्षं वञ्चयित्वा हरणम्।
8गृर. ५१२

**[7]अस्तेयमग्नये काष्ठमस्तेयं पशवे तृणम्।**
**अस्तेयं फलमारण्यमस्तेयं पार्थिवं जलम्॥**

पार्थिवं पृथिवीस्थं परकूपादिस्थितम्, तेनानुत्सृष्टमपि। गृर. ५१९

क्षुतनिमित्तकवचनप्रतिवचने

**[1]जीवेति क्षुवतो ब्रूयाज्जीवेत्युक्तः सहेति च॥**

(१) सहेति चेति एकवचनप्रयोगाज्जनितक्रोधप्रतिषेधः। गृक. ३४६

(२) सहेत्येकवचनजनितक्रोधप्रतिषेधः। गृर. ५३७

(३) क्षुवतः क्षुतं कुर्वतः 'जीव' इति वक्तव्यम्। क्षुत्कर्ता च 'त्वया सह' इति वदेत्।
निप्र. २।५०२

पररहस्यश्रवणपररन्ध्रप्रकाशनयोर्निषेधः

**[2]गृहे पररहस्यानि नैवोपशृणुयाद्बुधः।**
**न ब्रूयात्पररन्ध्राणि प्रकाशं जनसंसदि॥**

तृष्णानिषेधः, अशुद्धस्य शयनस्नानादिनिषेधः, संध्यामध्याह्नयोः शयनादिनिषेधः

**[3]नास्ति तृष्णासमं दुःखं नास्ति त्यागसमं सुखम्।**
**तस्माच्च लोभसंज्ञातां तृष्णां विद्वान्परित्यजेत्॥**
**[4]अशुद्धः शयनं स्नानं स्वाध्यायं यानवाहनम्।**
**बहिर्निष्क्रमणं चैव न कुर्वीत कथंचन॥**

अशुद्धः अशुचिः। स्नानं वैधम्। यानवाहनम् अश्वादिवाहनम्। गृर. ५८१

**[5]स्वप्नमध्ययनं स्नानमध्वानं भोजनं गतिम्।**
**उभयोः संध्ययोर्नित्यं मध्याह्ने च विवर्जयेत्॥**

अगम्यागमननिषेधः अगम्यापरिगणनं च

**[6]अगम्यागमनमपचारः॥**

---

+ निप्र. गृकवत्।
8 शेषं गृकवत्।

(१) **अप.** १।१३२ पृ. १७५; **गृक.** ३०९ ह्रिया (क्रिया); **गृर.** ५१० श्चापि (श्चैव).

(२) **अप.** १।१३२ पृ. १७५; **गृक.** ३०९ घाताच्च (घातार्थे) ष्टोऽनृ (ष्येऽनृ); **गृर.** ५१० घाताच्च (घातार्थं) हारतः (हारकः); **निप्र.** २।५०० घाताच्च (घातार्थं) (=).

(३) **अप.** १।१३२ पृ.१७५; **गृक.** ३०९ अशुद्धः पाठः; **गृर.** ५१० न्नान्वा (न्नार्थान्).

(४) **गृक.** ३११ प्रथमचरणे (विहारे ब्रह्महासार्थं) च (वा); **गृर.** ५१२; **निप्र.** २।४९९ सीदेद (स्यादेवा) शेषं गृकवत्.

(५) **गृक.** ३१२; **गृर.** ५१२ (त्रिविधानां॰) तूष्णीं वा (तूष्णीं).

(६) **गृक.** ३१२; **गृर.** ५१२ चतुष्पद...करणादीनि(चतुष्पादान्नवस्त्रलोहकार्षापणोपकरणानि).

(७) **गृक.** ३२२; **गृर.** ५१९.

(१) **गृक.** ३४६; **गृर.** ५३७; **निप्र.** २।५०१ यमः.

(२) **अप.** १।१३२ पृ. १७६ याद्बुधः (यात्क्वचित्) प्रकाशं (प्रकाशे); **गृक.** ३५०-३५१ रन्ध्राणि (तन्त्राणि); **गृर.** ५४२ क्रमेण यमः; **निप्र.** २।५८४ याद्बुधः (यान्नरः) पू.

(३) **गृक.** ३९०; **मोक.** ८७ तस्माच्च (तस्मात्तु) संज्ञातां (संजातां); **गृर.** ५७० क्रमेण हारीतः.

(४) **गृक.** ४०४; **गृर.** ५८१; **निप्र.** २।५२३ (अशुद्धः यानवाहनं बहिर्निष्क्रमणं च न कुर्वीत) एतावदेव.

(५) **गृक.** ४०४; **गृर.** ५८१ मध्वानं (मुच्चारं).

(६) **गृक.** ४१२; **गृर.** ५८६.

[१]**परभार्या वर्णोत्तमा स्वसा दुहिता सगोत्रा चाण्डाली**
**पतिता प्रव्रजिता तिर्यग्योन्यश्चागम्याः॥**

वर्णोत्तमाः स्वस्ववर्णोत्तमाः। गृर. ५८६

मातापित्रादीनामष्टानां पतितानामपि त्यागनिषेधः

[२]**पितरं भ्रातरं पुत्रं पुत्रिकां भगिनीं स्नुषाम्।**
**न त्यजेद्द्वेषलोभाभ्यां स्वदारान् पतितानपि॥**
[३]**मातृत्यागो हि शास्त्रेषु नोपदिष्टः कथंचन।**
**पतिता वाऽभिशस्ता वा माता न त्यागमर्हति॥**

(१) अपतितान् इति सर्वत्र विशेषणम्। गृक. ४१८

(२) पतितानिति पित्रादिभिः पूर्वनिर्दिष्टैः सर्वैः सहान्वीयते। गृर. ५९०

कुलज्ञानवयःशीलवृद्धानां पूजनीयत्वम्

[४]**कुलवृद्धा ज्ञानवृद्धा वयोवृद्धाश्च मानवाः।**
**शीलवृद्धाश्च संपूज्या यथा स्वगुणगौरवात्॥**

तदेतेषां मातृ(पितृ?)व्यतिरिक्तानां पञ्चमहापातकित्वे-(ऽपि न ?) त्याज्यत्वमित्येवंपरम्। मातुस्तु महापातकित्वेऽपि अत्याज्यत्वम्। निप्र. २।४८८

सर्वतः समादेयाः पदार्थाः

[५]**रत्नान्यापः स्त्रियो विद्या धर्मः शौचं सुभाषितम्।**
**विविधानि च शिल्पानि समादेयानि सर्वतः॥**

संध्यानुपासनास्नातभोजनाशुचित्वानि शूद्रसमीकरणानि

[६]**अनुपासितसंध्या ये नित्यमस्नातभोजनाः।**
**नष्टशौचाः पतन्त्येते शूद्रतुल्याश्च धर्मतः॥**

सामान्यधर्माणां श्रद्धाक्षमादयाविज्ञान-विनयानां लक्षणानि

[१]**प्रत्ययो धर्मकार्येषु तथा श्रद्धाऽभ्युदाहृता।**
**नास्ति ह्यश्रद्दधानस्य धर्मकार्यप्रयोजनम्॥**
[२]**विगर्हातिक्रमाक्षेपहिंसाबाधवधात्मनाम्।**
**अन्यमन्युसमुत्थानदोषाणां मर्षणं क्षमा॥**

क्षेपः गलहस्तादिना प्रेरणम्। वधोऽत्र ताडनमात्रम्, हिंसायाः पृथगुपादानात्। साऽपि शोणितोत्पादादिमात्रपरा, न प्राणवियोगपर्यन्ता, अन्यथा मर्षणासंभवात्। पप्र. ३५

[३]**स्वदुःखेष्विव कारुण्यं परदुःखेषु सौहृदात्।**
**दयेति मुनयः प्राहुरनुक्रोशं च जन्तुषु॥**
[४]**यत्पुनर्वैदिकीनां च लौकिकीनां च सर्वशः।**
**धारणा सर्वविद्यानां विज्ञानमिति कीर्त्यते॥**
[५]**विनयं द्विविधं प्राहुः शश्वद्दमशमावपि।**
**शरीरोपरतिः शान्तिर्ज्ञानं प्रज्ञाप्रसादजम्॥**

शरीरोपरतिः शरीरस्य वृथाचेष्टाराहित्यम्। पप्र. ३५

देवोत्सवे प्रवर्तमाने मनुष्योत्सवनिषेधः

[६]**देवोत्सवे प्रवृत्ते तु न मनुष्योत्सवो मतः।**
**तस्मिन् ग्रामे न कुर्वीत कुर्याच्चेत्स विनश्यति॥**

ब्राह्मणं प्रति सुरारिष्टादिपाननिषेधः

[७]**सुरामरिष्टं मैरेयं मधु माध्वीकमासवम्।**
**धान्याम्बु शुक्तं वर्जं (?) तु न पेयं ब्राह्मणैर्विदुः॥**

अरिष्टं मद्याकारादिकद्रव्यं खादिराभिर्विनिर्मितम्। आसवं संधानकम्। धान्याम्बु शुक्तं धान्याम्बु शुक्तं जातम्। निक. ३३३

---

(१) **गृक.** ४१२; **गृर.** ५८६ स्वसा दु (स्वदु) चाण्डाली (चाण्डालानी).

(२) **गृक.** ४१८ स्वदारान् पति (दारानपति); **गृर.** ५९० द्वेष (दोष); **निप्र.** २।४८८ उत्तरार्धे (न त्यजेद्देशभोगार्थं दारानपि कदाचन॥

(३) **गृक.** ४१८; **गृर.** ५९० शस्ता वा माता न (शप्ता वा न माता); **निप्र.** २।४८८ कथं (कदा) वाऽभिशस्ता वा माता न (चाभिशस्ता च न माता).

(४) **गृक.** ४१८ यथा (तथा); **गृर.** ५९० ज्ञानवृद्धा वयो (वयोवृद्धा ज्ञान); **निप्र.** २।४८८ गुरवत्.

(५) **स्मृच.** १।१४४; **संप्र.** ५१४ रत्नान्यापः (रत्नं नाम).

(६) **प्रभा.** १९२.

(१) **ब्रक.** १३; **कृर.** १६ श्रद्धाऽभ्यु (श्रद्धेत्यु) कार्यप्र (कृत्ये प्र).

(२) **ब्रक.** १३; **कृर.** १७ बाध (बन्ध) त्थानदो (त्थानां दो); **पप्र.** ३५ बाध (बन्ध) त्थानदो (त्थाने दो).

(३) **ब्रक.** १३ सौहृदात् (सौहृदम्); **कृर.** १७; **पप्र.** ३५.

(४) **ब्रक.** १४; **कृर.** १७ दिकीनां (दिकानां) लौकिकी (लौकिका) धारणा (धारणं); **पप्र.** ३५.

(५) **ब्रक.** १४; **कृर.** १७ द्विविधं (विविधं) वपि (विति) र्ज्ञानं (र्दानं); **पप्र.** ३५ वपि (विति).

(६) **आन.** ५३४.

(७) **निक.** ३३३; **गृर.** ३९५ ष्टं मैरे (ष्टमैरे) क्तं वर्जं तु (क्लवर्णं च) णैर्विदुः (णैर्द्विज).

ग्रहणनिमित्तकस्नानादेः रात्रावपि कर्तव्यता

**[1]राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु।**
**स्नानदानादिकं कुर्यान्निशि काम्यव्रतेषु च॥**

अत्ययः मरणम्। वृद्धिः जननम्।

*स्मृच. २।३१६

**[2]यथा स्नानं च दानं च सूर्यस्य ग्रहणे दिवा।**
**सोमस्यापि तथा रात्रौ स्नानं दानं विधीयते॥**

अत्र रात्रावपि स्नानाद्याह देवलः – यथेति।

सम. ७८

**[3]राहुदर्शनसंक्रान्तियात्रादौ प्रसवेषु च।**
**दानं नैमित्तिकं ज्ञेयं रात्रावपि तदिष्यते॥**

अत्र संक्रान्तिशब्दो मकरकर्कटकविषयः,स्मृत्यन्तरे संक्रान्तिषु रात्रिदानादिनिषेधं प्रक्रम्य 'मुक्त्वा मकरकर्कटौ' इति पर्युदासात्। पमा.१।१८१-१८२

## उशना

वैदिककर्माकरणे पातित्यम्, ब्राह्मणं प्रत्यापदुत्पादनस्य निषेधः

**[4]वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः।**
**अकुर्वाणः पतत्याशु निरयानतिभीषणान्॥**

**[5]न ब्राह्मणस्याऽऽपदं कुर्यात्॥**

मद्यदानादानपानानां निषेधः

**[6]मद्यमदेयमपेयमनिर्ग्राह्यम्॥**

अनिर्ग्राह्यम् अस्वीकार्यम्। σनिक. ३३२

---

* आद., आप्र., आन. स्मृचवत्।

σ गृर., आप्र. निकवत्।

(१) **अप.** १।१०० पृ. १३५ कुर्यान्नि (कुर्युर्नि); **स्मृच.** २।३१६, ६२२; **कृर.** ६२५; **गृर.** १९१ कुर्यान्नि (कार्यं नि) स्मृत्यन्तरम्; **स्मृसा.** ४२ व्रतेषु च (व्रते तथा); **आद.** २४; **मपा.** २४७; **मुक्ता.** २७० मनुः : २७६ गृरवत्, मनुः; **सिन्धु.** २२ अपवत्, विष्णुगोभिलादयः; **वीमि.** १।१०० पृ. १९५; **आप्र.** १६६; **आन.** २३७ मनुः, २४७ गृरवत्, मनुः.

(२) **मुक्ता.** २७२; **सिन्धु.** २९५ सोमस्यापि (चन्द्रग्रहे) विधीयते (प्रशस्यते) उत्त.; **सम.** ७८; **विपा.** ३।२।४६८ सर्वं सिन्धुवत्; **आन.** २३९-२४०.

(३) **पमा.** १।१८१.

(४) **औसं.** ३।८७.

(५) **गृक.** ३९५; **गृर.** ५७४; **निप्र.** २।५१४.

(६) **निक.** ३३२ (मद्यमपेयमदेयमनिर्ग्राह्यम्।); **गृर.** ३९४; **आप्र.** ५४९ (मद्यमपेयमनिर्ग्राह्यम्).

ग्रस्तास्तचन्द्रग्रहणे मुक्तौ धर्मकृत्यमुदये भोजनं च

**[1]ग्रस्ते चास्तंगते त्विन्दौ ज्ञात्वा मुक्त्यवधारणम्।**
**स्नानहोमादिकं कार्यं भुञ्जीतेन्दूदये पुनः॥**

चन्द्रग्रस्तास्ते उत्तरदिने संध्याहोमादौ न दोषः। तदाहोशना – 'ग्रस्ते चास्तंगते ... न्दूदये पुनः॥'। एतदनाहिताग्निविषयम्, 'अपराह्णे व्रतोपायनीयमश्रौतः' (काश्रौ. २।१।१०) इति कात्यायनोक्तेर्व्रतस्य श्रौतत्वेन विहितत्वेन च प्रबलत्वात्। अद्भिर्व्रतं कुर्यादिति निर्णयदीपः। रागप्राप्तभोजने कालनियमोऽयम्, तेन ज्वरादाविव न भोजनमिति कर्कानुसारिणः।

सिन्धु. २८४

## प्रजापतिः

चन्द्रसूर्यग्रहणयोर्दानफलतारतम्यम्

**[2]चन्द्रग्रहे लक्षगुणं प्रदत्तं**
**विवर्धते कोटिगुणं रविग्रहे॥**

प्राणिमात्रे दया कर्तव्या

**कारुण्यं प्राणिषु प्रायः कर्तव्यं पुण्यहेतवे।**
**अहिंसा परमो धर्मस्तस्मादात्मवदाचरेत्॥**

## यमः

ब्राह्मणस्य इष्टापूर्तविधिः

**[3]इष्टापूर्तं तु कर्तव्यं ब्राह्मणेन प्रयत्नतः।**
**इष्टेन लभते स्वर्गं पूर्ते मोक्षं समश्नुते॥**

पतितप्रत्यादेशनिषेधः

**[4]प्रत्यक्षं वा परोक्षं वा पतितं यदि पश्यति।**
**प्रत्यादेशो न कर्तव्यो रक्षेदात्मानमात्मना॥**

केनापि प्रमाणेन विदितं पतितं न प्रत्यादिशेत् न कथयेदित्यर्थः। तत्संयोगादात्मानं रक्षेत्।

अप. १।१३२ पृ.१७५

---

(१) **सिन्धु.** २८४.

(२) **प्रस्मृ.** २८, १४८.

(३) **यमस्मृ.** ६८.

(४) **अप.** १।१३२ पृ. १७५; **गृक.** ३५६; **गृर.** ५४६; **निप्र.** २।५०८.

सर्वेषां विशेषतो ब्राह्मणानां च प्रत्यक्षं परोक्षं वा निन्दापरीवादयोर्निषेधः

**[1]परोक्षाणि परेषां च परीवादं च वर्जयेत्॥**

परोक्षाणि दुष्टवाक्यानीति शेषः। गृक. ३५१

**[2]नैव ब्रूयान्न शृणुयाद्दुष्टवाक्यं कथंचन।**
**ब्राह्मणानां विशेषेण कदाचिदपि केनचित्॥**

दुष्टवाक्यं परदोषाभिधायिवाक्यम्।

निप्र. २१५८४

**[3]दुष्टवाक्यं न वक्तव्यं ब्राह्मणानां कथंचन।**
**तूष्णीमासीत निन्दायां न ब्रूयात्किंचिदुत्तरम्॥**
**[4]ब्राह्मणानां परीवादं नैव कुर्यान्न कारयेत्।**
**यद्ब्राह्मणेषु कुशलं तदेवाऽऽशु समाचरेत्॥**
**[5]ब्राह्मणानां परीवादो निन्दा यत्र प्रवर्तते।**
**कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः॥**
**[6]स्याद्रासभः परीवादाच्छ्वा स्यात्सूकर एव च।**
**परिभूय कृमिश्चैव कीटः स्यादपि मत्सरी॥**

ब्राह्मणेन शौचाध्ययनादौ प्रयतितव्यम्

**[7]शौचमध्ययनं दानं नित्यं विषयसंयमः।**
**अत्र यत्नेन संभाव्यं ब्राह्मण्यं प्राप्य दुर्लभम्॥**

अत्र शौचादौ (यत्नेन) यत्नवता भवितव्यमित्यर्थः।

गृर. ४९७

सत्यप्रियवचनस्य विधिः

**[8]सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम्।**
**प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः॥**

एतेन प्रियं सत्यं च मिलितं द्वयं वक्तव्यमित्युक्तं भवति। *गृक. ३०६

पश्चानृतवदनापवादाः

**[1]न नर्मयुक्तं वचनं हिनस्ति**
**न स्त्रीषु राजन्न विवाहकाले।**
**प्राणात्यये सर्वधनापहारे**
**पञ्चानृतान्याहुरपातकानि॥**

स्तेयापवादाः

**[2]अस्तेयमग्नये काष्ठमस्तेयं च गवे तृणम्।**
**कन्याहरणमस्तेयं यो हरत्यनलंकृताम्॥**

यो हरति, वरो गुणवानिति शेषः। अनलंकृताम् अन्यस्मै विवाहयितुमलंकृता या तदन्याम्।

गृर. ५१९

**[3]पुष्पे शाकोदके काष्ठे तथा मूलफले तृणे।**
**अदत्तादानमेतेषामस्तेयं तु यमोऽब्रवीत्॥**
**[4]तृणं काष्ठं फलं पुष्पं प्रकाशं वै हरेद्द्विजः।**
**गोब्राह्मणार्थे गृह्णन्वै न स पापेन लिप्यते॥**

अशुचिकृतमिष्टादिसप्तकं रक्षोहार्यम्

**[5]इष्टं निवेदितं दत्तं भुक्तं जप्तं तपः श्रुतम्।**
**यातुधानाः प्रलुम्पन्ति शौचभ्रष्टाद्द्विजन्मनः॥**

निवेदितं नैवेद्यं कृतम्। गृर. ५२३

क्षमाप्रशंसा

**[6]आक्रुष्टस्ताडितः क्षिप्तः क्षमते यो न कुप्यति।**
**स तस्य दुष्कृतं दत्त्वा सुकृतं सर्वमाप्नुयात्॥**

तस्य आक्रोशनादिकर्तुः। गृर. ५२५

**[7]यत्क्रोधनो जपति यज्जुहोति यद्वा तपस्तप्यति यद्ददाति वैरोचनिस्तद्धरतेऽस्य सर्वं मोघश्रमो भवति॥**

---

(१) **गृक.** ३५१ परी (परि); **गृर.** ५४१.

(२) **अप.** ११।१३२ पृ. १७६; **गृक.** ३५१; **गृर.** ५४१; **निप्र.** २१५८४ पू.

(३) **अप.** ११।१३२ पृ. १७६; **गृक.** ३५१; **गृर.** ५४१ कथंचन (कदाचन); **निप्र.** २१४३१; **मुक्ता.** ४६५ वक्तव्यं (च ब्रूयात्) कथंचन (विशेषतः).

(४) **अप.** ११।१३२ पृ. १७६; **गृक.** ३५१ नैव कुर्यान्न (न कुर्यान्नैव) चतुर्थचरणे (तदेव शुभमाचरन्); **गृर.** ५४१ नैव कुर्यान्न (न कुर्यान्नैव).

(५) **अप.** ११।१३२ पृ. १७६; **गृक.** ३५१; **गृर.** ५४१-५४२; **निप्र.** २१५८४ यत्र (वाऽपि).

(६) **गृक.** ३५१; **गृर.** ५४२ सूकर एव च (सूचक एव सः).

(७) **गृक.** २९२ संयमः (संज्ञकः); **गृर.** ४९७.

(८) **गृक.** ३०५-३०६ मनुयमौ; **निप्र.** २१४९७ मनुयमौ.

* निप्र. गृकवत्।

(१) **गृक.** ३११; **गृर.** ५११-५१२ राजन्न (नित्यं न).

(२) **गृक.** ३२१ गवे तृणम् (तृणं गवे); **गृर.** ५१९.

(३) **गृक.** ३२१; **गृर.** ५१९ प्रथमचरणे (पुष्पकाष्ठोदके शाके) तु (च).

(४) **गृक.** ३२१; **गृर.** ५१९ तृणं काष्ठं (तृणकाष्ठं) हरेद्द्विजः (हरन् वरः).

(५) **गृक.** ३२६ लुम्पन्ति (लुप्यन्ति); **गृर.** ५२३ क्रमेण हारीतः.

(६) **गृक.** ३२९ यमहारीतौ; **गृर.** ५२५ हारीतः; **निप्र.** ४२६ न कुप्यति (ऽनुलिम्पति) माप्नुयात् (मश्नुते) हारीतो यमश्च.

(७) **गृक.** ३२९ यत्क्रोध(अक्रोध) जपति यज्जु (यजति जु) (यद्ददानि॰) चनि (चने); **गृर.** ५२५.

अस्य क्रोधनस्य। वैरोचनिः बलिः।

×गृक. ३२९

देवद्रव्यविनाशनब्राह्मणस्वहरण-
ब्राह्मणातिक्रमैः कुलनाशः

**[1]देवद्रव्यविनाशेन ब्रह्मस्वहरणेन च।**
**कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च॥**

देवद्रव्यं देवतोद्देशेन यत् त्यक्तं वस्तु।

गृक. ३३४

**[2]गोभिः पशुभिरश्वैश्च कृष्या वसुसमृद्धया।**
**कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च॥**

अनिन्द्या गोब्राह्मणादयः षट्

**[3]अनिन्द्या ब्राह्मणा गावः काञ्चनं सलिलं स्त्रियः।**
**पृथिवी च षडेतानि यो निन्दति स निन्दितः॥**
**[4]परदारान्न सेवेत॥**

दुर्लभं ब्राह्मण्यं तद्विरोधियोनिसंकरादि-
परिहारेण रक्षणीयम्

**[5]ब्राह्मण्यं परिरक्षेत नानायोनिनिषेवणात्।**
**दुष्टेभ्यो व्यवहाराच्च तथा दुष्टप्रतिग्रहात्॥**
**[6]अशुभेभ्यश्च कर्मभ्यः संसर्गादशुभैः सह।**
**संसर्गगामिनो ह्येते हेतवः सद्भिरीरिताः॥**
**[7]संबन्धाद्गात्रसंस्पर्शाच्छयनात्सहभोजनात्।**
**संलापाच्चापि संवासात्पापं संक्रमते नृणाम्॥**

(१) दुष्टाः पतितादयः। व्यवहारः परस्पर-गृहगमनादि। अशुभेभ्यः चौरादिभ्यः। अशुभैः अपवित्रैः नीलरक्तादिभिः। संसर्गगामिनः संसर्गेण चरमाणस्य पापस्य वेक्ष्यमाणाः। संबन्धः यौनादि।

गृक. ४१५

(२) नानायोनिनिषेवणात् विजातीयानेकयोन्यभिगम-नात्। दुष्टप्रतिग्रहात् पतितादिप्रतिग्रहात्।

*गृर. ५८७

**[1]भाण्डसंकरसंकीर्णा योनिसंकरदूषिताः।**
**अन्नसंकरसंकीर्णा वियोनिं यान्ति वै द्विजाः॥**
**[2]दुर्लभा ब्रह्मयोनिस्तु संकरेण तु नान्यथा।**
**ब्रह्मभावो न सुलभस्तस्माद्बुध्येत ब्राह्मणः॥**

पररहस्यश्रवणपररन्ध्रप्रकाशन-
योर्निषेधः

**[3]गृहे पररहस्यानि नैवोपशृणुयाद्बुधः।**
**न ब्रूयात्पररन्ध्राणि प्रकाशं जनसंसदि॥**

पश्वादिविषयभेदेनानृतवचनदोषतारतम्यम्,
अनृतवचननिषेधोऽनृतावचन-
प्रशंसा च

**[4]पञ्च पश्वनृते हन्ति दश हन्ति गवानृते।**
**शतमश्वानृते हन्ति सहस्रं पुरुषानृते॥**

पञ्च पश्वनृते हन्ति इति पश्वादिविषयमनृतं वदन् पञ्चादिसंख्याकान् बान्धवान् हन्ति नरके पातयति। उत्तरोत्तरं निन्दातिशयदर्शनं दोषभूयस्त्वख्यापनार्थम्।

+गृक. ३०८

**[5]हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन्।**
**सर्वं भूम्यनृते हन्ति मा स्म भूम्यनृतं वदेत्॥**

हन्ति जातानजातांश्चेत्यादिना हिरण्यानृते ततोऽप्य-धिकं पापं दर्शितम्। एवं सर्वं भूम्यनृतं8 हन्तीत्यनेन ततोऽप्यधिकं दर्शितमिति ने(? ज्ञे)यम्।

गृर. ५१०

× गृर. गृकवत्।

(१) **गृक.** ३३४ यमशातातपदानव्यासाः; **गृर.** ५२९ ब्रह्मस्व (परस्व) यमादयः.

(२) **गृक.** ३३४.

(३) **गृक.** ३४८ यमपैठीनसी; **गृर.** ५३९ तृतीयचरणे (पृथिवीं यतिनामानि); **निप्र.** २।५०६ अनिन्द्या (न निन्द्या) यमपैठीनसी.

(४) **गृक.** ४१२.

(५) **गृक.** ४१४; **गृर.** ५८७ ब्राह्मण्यं (ब्राह्मणं).

(६) **गृक.** ४१५; **गृर.** ५८७.

(७) **गृक.** ४१५; **गृर.** ५८७ (संबन्धाद्गात्रसंस्पर्शाच्छ-यनासनभोजनात्। श्वपचालापसंवासान्नग्नस्य च विलोकनात्॥ अनृतभाषणाद्वादात्कूटसाक्ष्यप्रवादनात्। परद्रव्यापहाराच्च पापं संक्रमते नृणाम्॥).

* शेषं गृकवत्।

+ गृर., निप्र. गृकगतम्।

8 'अनृतम्' इति प्रथमान्तपाठो लेखकप्रमादादशुद्धः, मूलवचने सप्तम्यन्तस्यैव पठितत्वात्, अनृतस्य कर्तृत्वे भग्नप्रक्रमतादोषाच्च। एवं निप्रग्रन्थेऽपि।

(१) **गृक.** ४१५ भाण्डसंकर (भाण्डसंसर्ग); **गृर.** ५८७.

(२) **गृक.** ४१५.

(३) **गृर.** ५४२; **मुक्ता.** ४६५ (परकीयरहस्यानि नैवोपशृणुयात्क्वचित्।) पू.; **आन.** ६५३ मुक्तावत्, पू.

(४) **गृक.** ३०८; **गृर.** ५०९ नारदः; **निप्र.** २।४९७.

(५) **गृक.** ३०८; **गृर.** ५०९ वदेत् (वदेः) नारदः; **निप्र.** २।४९७ प्रथमचरणे (हन्ति तानसंख्यातान्) नृते (नृतं).

[1]अप्सु भूमिवदित्याहुः स्त्रीणां भोगे च मैथुने।
अब्जेषु चैव रत्नेषु सर्वेष्वश्ममयेषु च॥
भोगे च मैथुने मिथुनसंपाद्ये भोग इत्यर्थः।

#गृक. ३०८

[2]पशुवत्क्षौद्रघृतयोः सर्वं च पशुसंभवम् §।
गोवद्वस्त्रेषु सर्वेषु शयनेऽथाऽऽसनेषु च।
अश्ववत्सर्वयानेषु खरोष्ट्राश्वतरेषु च॥
(१)सर्वं च पशुसंभवं क्षीरदध्यादि। सर्वेषु आविकादिषु।

गृक. ३०८

(२)शयनीयेषु(? शयनेषु) कम्बलादिषु।

*गृर. ५१०

[3]आदित्यचन्द्रावनलानिलौ च
द्यौर्भूमिरापो हृदयं यमश्च।
पश्यन्ति नित्यं पुरुषस्य वृत्तं
तस्मान्न वाच्यं त्वनृतं कदाचित्॥
[4]यस्य वाङ्मनसी शुद्धे सम्यग्गुप्ते च सर्वदा।
तपो वेदाः स्मृतिस्त्यागः स तेभ्यः सर्वमश्नुते॥

श्रुतिस्मृत्योः शूद्रानधिकारः

[5]तस्मादस्याधिकारोऽस्ति न वेदेषु न तु स्मृतौ॥
शूद्राधिकारं प्रकृत्य यमः — तस्मादिति।

⇧स्मृच. १।१०

द्विजान् प्रति सुरायाः ब्राह्मणं प्रति मद्यस्य च पानदानादानानां निषेधः

[1]कामादपि हि राजन्यो वैश्यो वा सुसमाहितः।
पिबेतां मधु तावत्तु न दोषं कंचिदृच्छतः॥
'न मांसभक्षणे दोषो न मद्ये' (मस्मृ. ५।५६) इति क्षत्रियवैश्यविषयम्, 'कामादपि०' इति यमवचनात्। किंतु तयोः शूद्रस्यापि(च) पैष्टी सुरा निषिद्धैव।

गप. ४०९

[2]मांसं शमलमन्नानां मांसानां च मलं सुरा।
मलं हि सर्वपापानां सुरा धर्मेषु कथ्यते॥
तस्माद्द्विजैर्न पेयैषा नैव ग्राह्या कथंचन॥
समलं मलम्। धर्मेषु धर्मशास्त्रेषु।

✡निक. ३३०

[3]मद्यं पीत्वा तु यो विप्रो ब्रह्म व्याहरते क्वचित्।
घृताहुतिसहस्रेण न स किंचिदुपाश्नुते॥
[4]ब्राह्मण्यमीहते यस्तु यजमानः पुनः पुनः।
न तेन मद्यं पातव्यं दातव्यं न च कस्यचित्॥
+[5]सुरा वै मलमन्नानां पाप्मा च मलमुच्यते।
तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत्॥
गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा।
यथैवैका तथा सर्वा न पातव्या द्विजोत्तमैः॥

---

# गृर. गृकवत्।

§ पूर्वोत्तरग्रन्थयोरर्थसिद्धमनृतवक्तृनिष्ठं बान्धवहन्तृत्वमत्र अनृतवदनविषये पशुसंभवक्षीरादावारोपितमिति बोध्यम्।

* शेषं गृकगतम्।

⇧मुक्ता. स्मृचवत्।

(१) **गृक.** ३०८ पू.; **गृर.** ५०९ नारदः; **निप्र.** २।४९७ पू.

(२) **गृक.** ३०८ योः सर्वं च प (योर्यच्चान्यप) व्याख्यानपाठस्तु आदर्शपाठानुसारी; **गृर.** ५०९ प्रथमचरणे (पशुवच्च क्षीरघृतं) द्वस्त्रेषु (द्वस्तुषु) नेऽथाऽऽस (नेष्वास) यानेषु (दानेषु); **निप्र.** २।४९७-४९८ योः सर्वं च पशुसं (योर्यच्चापि तासु सं) द्वस्त्रेषु (धस्तेषु) नेऽथाऽऽस (नेष्वास) यानेषु (पापेषु) तरेषु (तरीषु).

(३) **गृक.** ३०८; **गृर.** ५०९ नलानिलौ च (निलोऽनलश्च) कदाचित् (कदाऽपि).

(४) **गृक.** ३०८; **गृर.** ५१०.

(५) **स्मृच.** १।१०; **मुक्ता.** ६.

✡ गृर., आप्र. निकवत्। बाल. निकगतम्।

+ एषां पञ्चानां वचनानां व्याख्यानसंग्रहः मनोः एतत्सदृशवचनेषु (वका. पृ. १७५२-१७५४) द्रष्टव्यः।

(१) **निक.** ३३१; **गृर.** ३९४ वैश्यो वा (वैश्यश्च); **पमा.** २।४१० (कामादपि हि राजन्यो वैश्यो वाऽपि कथंचन। मद्यमेव सुरां पीत्वा न दोषं प्रतिपद्यते॥) बृहद्याज्ञवल्क्यः; **गप.** ४०९ वा सुस (वाऽपि स) तावत्तु (वा तत्र) कंचि (किंचि); **कृभ.** १२९१ सर्वं पमावत्.

(२) **निक.** ३३० शमल (समल) नैव (नैषा); **गृर.** ३९३ मांसं शमल (सुरा समल) पापानां (भूतानां) नैव (न च) ; **आप्र.** ५४८; **बाल.** १।३३ पृ.१६१ नैव (नैषा) प्रथमार्धं नास्ति.

(३) **निक.** ३३१; **गृर.** ३९५ न स (न च); **आप्र.** ५४९ गृरवत्.

(४) **निक.** ३३१-३३२; **गृर.** ३९५ यज (जाय) न च (च न); **आप्र.** ५४९.

(५) एतदादीनां पञ्चानां वचनानां स्थलादिनिर्देशः एतादृशहारीतमनुवचनेषु (वका. पृ. १६२८, १७५२-१७५४) द्रष्टव्यः.

**यक्षरक्षःपिशाचानां मद्यं मांसं सुरासवम्।**
**तद्ब्राह्मणेन नात्तव्यं देवानामश्नता हविः॥**
**अमेध्ये वा पतेन्मत्तो वैदिकं वाऽप्युदाहरेत्।**
**अकार्यमन्यत्कुर्याच्च ब्राह्मणो मद्यमोहितः॥**
**यस्य कायगतं ब्रह्म मद्येनाऽऽप्लाव्यते सकृत्।**
**तस्य व्यपैति ब्राह्मण्यं शूद्रत्वं च नियच्छति॥**

ग्रहणे उष्णवारिस्नाननिषेधः

[1]**संक्रान्त्यां भानुवारे च सप्तम्यां राहुदर्शने।**
**आरोग्यमित्रपुत्रार्थी न स्नायादुष्णवारिणा॥**

संक्रान्त्या(दा)वुष्णोदकेन स्नानमनातुरेण न कर्तव्यम्। तथा च यमः — संक्रान्त्यामिति।

⇩मर. ११४

[2]**मृते जन्मनि संक्रान्तौ ग्रहणे चन्द्रसूर्ययोः।**
**अस्पृश्यस्पर्शने चैव न स्नायादुष्णवारिणा॥**
[3]**अमावास्यां रवेर्वारे संक्रान्तौ राहुदर्शने।**
**उष्णोदकेन चेत्स्नायाद्बन्धुमित्रकुलक्षयम्॥**

ग्रहणे स्नानदानादीनां
फलाधिक्यम्

8[4]**स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने॥**
[5]**राहुदर्शनदत्तं हि श्राद्धमाचन्द्रतारकम्।**
**गुणवत्सर्वकामीयं पितॄणामुपतिष्ठते॥**

अत्र राहुदर्शनस्य भूयोभिर्वाक्यैर्निमित्तत्वबोधनात् कल्पनालाघवेन कर्तृत्वसमानाधिकरणस्य च तस्याऽऽदेयत्वात् स्नानादिकर्तुरुपरागदर्शनं निमित्तम्, 'चन्द्रसूर्योपरागे तु यावद्दर्शनगोचरः' इति पुण्यवेलानियामकवचनाच्च यावद्दर्शनयोग्य उपरागो वर्तते तावद्दर्शनानन्तरं स्नानादिक्रियेति व्यवस्था। कल्पतरुकारस्तु — चन्द्रसूर्योपरागस्य निमित्तत्वप्रतिपादनात् ज्ञातस्यैव च निमित्तत्वात् ज्ञानमात्रे प्राप्ते 'यावद्दर्शनगोचरः' इति, 'राहुदर्शने' इत्यादिवचनाच्चाक्षुषज्ञानविषयस्यैव निमित्तता, चाक्षुष एव ज्ञाने दर्शनपदस्य मुख्यत्वादित्याह। अत्र च फलतो न विशेषः। यत्तु पारिजातनिबन्धे दूषितम् — 'न तावद्दृष्ट उपरागो निमित्तम्, तथा हि चाण्डालादिस्पर्श इव येनैव दृष्टस्तं प्रत्येव निमित्तं स्यात्' इति, तदिष्टापादनमेवेति मन्दम्। पक्षान्तरदूषणं पारिजातोद्भावितं यत् तदनभ्युपगमेनैव निराकृतम्। यत्तु येन केनापि दृष्ट उपरागे अन्यः स्नानादि करोति(? तु), अलं सामानाधिकरण्येनेति, तन्मन्दम्, उक्तयुक्तेः।

कृर. ६२५-६२६

अन्तरा व्याहरणगमनयोर्निषेधः

[1]**संनिकृष्टमधीयानं योऽन्तरा व्याहरेद्द्विजः।**
**श्वभासरासभानां च योनिं व्रजति पापकृत्॥**

संनिकृष्टः एकस्यां सभायामिति तात्पर्यार्थः।

गृक. ३६१

[2]**संनिकृष्टाधीयानयोरन्तरा गतिनिषेधः॥**

## मरीचिः

शूद्रकर्मसु मन्त्रा विप्रपाठ्याः

[3]**अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेषु गृह्यते॥**

इयं परिभाषा सर्वार्था, तेन शूद्रधर्मेषु सर्वत्र विप्रेण मन्त्रः पठनीयः। सोऽपि पौराण एवेति शूलपाणिः।

सिन्धु. ११७४

ग्रहणे सामलकस्नाननिषेधः

[4]**अमायां चैव सप्तम्यां संक्रान्तौ च रवेर्दिने।**
**चन्द्रसूर्योपरागे च स्नानमामलकैस्त्यजेत्॥**

---

⇩ आप्र. मरवत्।

8 इदमर्धम् 'चन्द्रसूर्योपरागे तु यावद्दर्शनगोचरः' इति जाबालिवचनार्धं च सिन्धुविपाग्रन्थादर्शपुस्तकयोस्तत्संपादकैरव्यवहितत्वमूलकभ्रमेण एकश्लोकीकृत्य मुद्रिते। वस्तुतः श्लोकैक्ये 'चन्द्रसूर्योपरागे' इत्यस्यार्थतः पौनरुक्त्यापत्तेः तुशब्दस्य वैयर्थ्यापाताच्च कृत्यरत्नाकरे उभयोर्भिन्नर्षिकत्वदर्शनाच्च भिन्नश्लोकीये इमे अर्धे उक्तनिबन्धयोर्दर्शनशब्दप्रयोगाभिप्रायेण संगृहीते इति निर्णीय 'चन्द्रसूर्योपरागे तु' इत्यर्धस्य स्थलादिनिर्देशोऽस्माभिः 'संक्रान्तौ पुण्य॰' इति जाबालिवचने कृतः।

(१) **मर**. ११४; **आप्र**. १७७.
(२) **मर**. ११४.
(३) **आपा**. ३९.
(४) **कृर**. ६२५; **सिन्धु**. ३०६ जाबाल्यादयः; **विपा**. ३।२।४७६ जाबालस्मृतिः.
(५) **कृर**. ६२५.

(१) **अप**. १।१३२ पृ. १७४ ष्टमधीयानं (ष्टावधीयानौ) व्याहरेद्द्वि (व्रजतिद्वि) श्वभास (स भास); **गृक**. ३६१.
(२) **निप्र**. २।५२२.
(३) **सिन्धु**. ११७४.
(४) **पुम**. ४५७.

क्षौरवर्जननिमित्तानि

**[1]निरासनस्य सुप्तस्य तिष्ठतश्च तथैव च।**
**सायं भुक्तवतश्चैव स्नातस्य रुषितस्य च।**
**यात्रायुद्धोद्यतस्यापि श्मश्रुकर्म विवर्जयेत्॥**
**[2]षष्ठ्यां पर्वसु पक्षादौ रिक्ताभद्रातिथिष्वपि।**
**पाते श्राद्धे व्रताहे च क्षौरं वर्ज्यं निशासु च॥**

केचिन्निमन्त्रणात्पूर्वं शुद्ध्यर्थं पूर्वेऽह्नि क्षौरं कुर्वन्ति, तत्र मूलं मृग्यम्। सिन्धु. १४५६

## दक्षः

ब्राह्मणधर्मः

**[3]सर्वत्र मध्यमौ यामौ हुतशेषं हविश्च यत्।**
**भुञ्जानश्च शयानश्च ब्राह्मणो नावसीदति॥**

पारलौकिकस्य दानस्य च कर्तव्यता

**[4]न्यायागतेन द्रव्येण कर्तव्यं पारलौकिकम्।**
**दानं च विधिना देयं काले पात्रे गुणान्विते॥**

शूद्रकर्मणो वाजसनेयिकल्पानुसारित्वम्

**[5]आर्षक्रमेण सर्वत्र शूद्रा वाजसनेयिनः।**
**अस्माच्छूद्रः स्वयं कर्म यजुर्वेदीव कारयेत्॥**

आर्षक्रमेण मुन्युक्तक्रमेण यजुर्वेदिसंबन्धिगृह्यादिना। शूत. ६३४

ग्रहणदिनोपवासः पापक्षयहेतुः

**[6]अयने विषुवे चैव चन्द्रसूर्यग्रहे तथा।**
**अहोरात्रोषितः स्नात्वा सर्वपापैः प्रमुच्यते॥**

(१) अहोरात्रोषितः पूर्वदिने कृतोपवासः। कृर. ६२६

(२) पापक्षयकामो ग्रहणदिनमुपवसेत्। तदाह दक्षः – अयने इति। पुत्री तु नोपवसेत्। तदाह नारदः – 'संक्रान्त्यामुपवासं च कृष्णैकादशिवासरे। चन्द्रसूर्यग्रहे चैव न कुर्यात् पुत्रवान् गृही॥' इति। ग्रस्तास्तमये तु पुत्रिणोऽप्युपवास एव, 'अहोरात्रं न भोक्तव्यम्' इति भोजनप्रतिषेधात्। ×पमा. १।३८४-३८५

(३) अपरेऽहनि '(राहोर्) विमुक्तिं विज्ञाय स्नात्वा कुर्वीत भोजनम्' इति। Ψआभू. ३९६

जीवत्पितृकस्य निषिद्धानि कर्माणि

**[1]मुण्डनं पिण्डदानं च प्रेतकर्म च सर्वतः।**
**न जीवत्पितृकः कुर्याद्गुर्विणीपतिरेव च॥**

केशवपनं तु समावर्तनोत्तरं जीवत्पितृकस्य निषिद्धम्, 'मुण्डनं ... रेव च॥' इति दक्षवचनात्। 'मुण्डनस्य निषेधेऽपि कर्तनं तु विधीयते।' इति स्मृत्यन्तरात् कर्तनमात्रं तस्यानुष्ठेयम्। गर्भिणीपतेस्तु तदपि निषिद्धम्, 'नोदन्वतोऽम्भसि स्नायान्न च श्मश्र्वादि कर्तयेत्। अन्तर्वत्न्याः पतिः कुर्वन्नप्रजा भवति ध्रुवम्॥' इति क्रतुस्मरणात्। सर्वकेशवपनस्यैव मुण्डनपदार्थत्वमभिप्रेत्य कतिपयकेशान् परिशेष्य जीवत्पितृका अपि केषुचिद्देशेषु केशवपनं कारयन्ति। संदी. २।६१-६२

## भरद्वाजः

स्नाने वर्ज्या देशकालास्तदपवादश्च

**[2]सौरारवारयोरब्धौ पर्वणोरुभयोरपि।**
**संतानकामी न स्नायात्कुर्यात्तु ग्रहणे तयोः॥**

आरवारः मङ्गलवारः। आन. २०७

क्षौरे निषिद्धवारादयः निषेधातिक्रमे फलं च

**[3]रव्यारसौरिवारेषु रात्रौ पाते व्रताहनि।**
**श्राद्धाहःप्रतिपद्रिक्ताभद्राः क्षौरेषु वर्जयेत्॥**

---

(१) **सम.** १०६.

(२) **सिन्धु.** १४५६; **संग.** ६२२ भद्रा (मन्दा) पाते (कृते) व्रताहे (विवाहे).

(३) **दस्मृ.** २।७४.

(४) **दस्मृ.** ३।२६.

(५) **शूत.** ६३४ स्मृतिः; **शूक.** ५३, १३४ द्वितीयपादमात्रम्, 'शूद्रा वाजसनेयिनः' इतिदक्षोक्त्यनुसारेण संपूर्णं वचनं दक्षमध्ये संगृहीतम्.

(६) **अप.** १।१५४ पृ. २०८ तृतीयचरणे (कृतोपवासः स्नातस्तु) यमः; **स्मृच.** २।६२३ स्नात्वा (स्नातः) शातातपः; **कृर.** ६२६ सर्वं स्मृचवत्; **पमा.** १।३८४; **चमव्याआ.** ६२; **मुक्ता.** ४५०; **सम.** ८० द्वितीयचरणे (ग्रहणे चन्द्रसूर्ययोः); **आभू.** ३९६ समवत्.

× चमव्याआ., मुक्ता., सम. पमागतम्।

Ψ शेषं पमावत्।

(१) **सिन्धु.** १७८३ प्रथमचरणमात्रम्; **विपा.** ३।२।७६१ सर्वतः (सर्वशः) द्गर्भि (दुगुर्वि); **संदी.** २।६१.

(२) **मुक्ता.** २५७; **आन.** २०७.

(३) **विपा.** ३।२।७५६.

आरः मङ्गलः। सौरिः शनिवासरः (?शनिः)। व्रताहम् एकादश्यादि। रिक्ताः चतुर्थीनवमीचतुर्दश्यः। भद्राः द्वितीयासप्तमीद्वादश्यः। शेषं स्पष्टम्।

विपा. ३।२।७५६

[1]**निषिद्धतिथिवारादौ भोजनानन्तरं च यः।**
**क्षौरं करोति तद्गेहे नाश्नन्ति पितरः सुराः॥**

नैमित्तिके क्षौरे नायं निषेधः, 'क्षौरं नैमित्तिकं कुर्यान्निषेधे सत्यपि ध्रुवम्' इति।

पुम. ४५६

## संवर्तः

तपोयज्ञायुर्दानानां विनाशकानि विस्मयादीनि

[2]**न विस्मयीत तपसा न यज्ञेनानृतं वदेत्।**
**अपवदेन्न विप्रस्य न दानं परिकीर्तयेत्॥**
**यज्ञोऽनृतेन क्षरति तपः क्षरति विस्मयात्।**
**आयुर्विप्रापवादेन दानं च परिकीर्तनात्॥**

द्विजानां सुरापाननिषेधः

**गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा।**
**यथैवैका तथा सर्वा न पातव्या द्विजोत्तमैः॥**

ग्रहणादौ दाने फलाधिक्यम्

**अयने विषुवे चैव व्यतीपाते दिनक्षये।**
**चन्द्रसूर्यग्रहे चैव दत्तं भवति चाक्षयम्॥**

सत्यस्य प्रशंसा अपवादश्च

[3]**न सत्यात्परमं तपः॥**
**असत्यं चापि वक्तव्यं गोब्राह्मणहिताय वै।**
**असत्यमपि सत्यं स्यादनृतं तु न विद्यते॥**

## शातातपः

शौचादयः पञ्च नित्यधर्माः

[4]**भवेच्छौचपरो नित्यं तथा चेह जितेन्द्रियः।**
**अक्रोधः सर्वभूतेषु साधुकारी प्रियंवदः॥**

(१) **पुम.** ४५६.
(२) **संस्मृ.** ९४-९५, ११७, २०८.
(३) **समु.** ११९.
(४) **गृक.** २९२ चेह (देहे); **गृर.** ४९७.

तपोदमाद्येकादशगणो ब्राह्मणलक्षणम्

[1]**तपो दमो दया दानं सत्यं धर्मं श्रुतं घृणा।**
**विद्या विज्ञानमास्तिक्यमेतद्ब्राह्मणलक्षणम्॥**

शूद्रस्य द्विजसेवाविरोधितीर्थ-यात्रादिनिषेधः

[2]**निरन्तरं तीर्थसेवा संन्यासो मन्त्रसाधनम्।**
**देवताराधनं ध्यानं तेषां पापावहं परम्॥**

विप्रसेवाविरोधेन निरन्तरं च तीर्थयात्रादौ शूद्रस्य नाधिकारः। एवं सति अनधिकारिस्त्रीशूद्रकृततीर्थसेवायां पातित्यं मनुना बोध्यते। शातातपवाक्ये च 'तेषाम्' इतिशब्देन शूद्राः प्रतिलोमजाश्च परामृश्यन्ते। तेन प्रतिलोमा यथा धर्महीनास्तथा निरन्तरं तीर्थयात्रापराः शूद्रा इत्यर्थः। १४७

तेषां शूद्राणाम्। अत्रापि विप्रसेवोच्छेदे तात्पर्यं बोध्यम्। कृभ. १७७१

ग्रहणे स्नानादेरावश्यकत्वम्, उपवासः, मोक्षोत्तरभोजनस्य महानिशायां निषेधश्च

[3]**स्नानं दानं जपः श्राद्धमनन्तं राहुदर्शने।**
**आसुरी रात्रिरन्यत्र तस्मात्तां परिवर्जयेत्॥**

अत्र हिरण्येनाऽऽमेन वा श्राद्धं कुर्यात् तदाह बोधायनः – 'अन्नाभावे द्विजाभावे प्रवासे पुत्रजन्मनि। हेमश्राद्धं संक्रमे च कुर्याच्छूद्रः सदैव हि॥' व्यासः – 'आपद्यनग्नौ तीर्थे च ग्रहणे चन्द्रसूर्ययोः। आमश्राद्धं द्विजो दद्याच्छूद्रो दद्यात्सदैव हि॥' इति।

✡मुक्ता. २७२

[4]**सर्वस्वेनापि कर्तव्यं श्राद्धं वै राहुदर्शने।**
**अकुर्वाणस्तु तच्छ्राद्धं पङ्के गौरिव सीदति॥**

इदं श्राद्धमामश्राद्धमेव, 'आमश्राद्धं सग्रहे च' इति वचनात्। हेमश्राद्धमपि क्वचित् श्रूयते – 'हेम्ना

✡ आन. मुक्तावत्।
(१) **मुक्ता.** १८.
(२) **कृभ.** १४६, १७७१.
(३) **आत.** ४१९; **मुक्ता.** २७२ जपः (तथा) पू.; **आन.** २३९ सर्वं मुक्तावत्.
(४) **स्मृच.** २।६२२ वै राहुदर्शने (राहुसमागमे); **कृर.** ६२५; **निप्र.** २।६८९ सीदति (मज्जति).

वाऽऽमेन सग्रहे' इति। द्वयोर्विकल्पः। आमश्राद्धे च पिण्डनिषेधः। मार्कण्डेयः — 'ग्रहणे च व्यतीपाते नवशस्यसमागमे। नित्यश्राद्धे च संक्रान्तावपिण्डं श्राद्धमिष्यते॥'। निप्र. २।६८९

**[1]अयनादौ सदा देयं द्रव्यमिष्टं गृहे तु यत्।**
**षडशीतिमुखे चैव विमोक्षे चन्द्रसूर्ययोः॥**

(१) दानं तु मुक्तिकाले, 'विमोक्षे चन्द्रसूर्ययोः' इति शातातपवचनात्। निप्र. २।६८९

(२) दानं चात्यावश्यकम्। 'अयनादौ सदा..... चन्द्रसूर्ययोः॥' इति शातातपोक्तसदाशब्दात्। अत एव मलमासेऽपि कार्यमित्युक्तम्। कृभ. २८८

**[2]अहोरात्रं तु नाश्नीयाच्चन्द्रसूर्यग्रहो यदा।**
**मुक्तं दृष्ट्वा तु भुञ्जीत स्नानं कृत्वा विधानतः॥**
**[3]सूर्याचन्द्रमसोर्लोकानक्षयान् याति मानवः।**
**धौतपाप्मा विशुद्धात्मा मोदते तत्र देववत्॥**

अत्र 'अहोरात्रं तु नाश्नीयात्' इत्यादिना विहितमभोजनं काम्यम्, 'सूर्याचन्द्रमसोः' इत्यादिना फलोपस्थितेः। कृर. ६२७

**[4]मुक्ते शशिनि भुञ्जीत यदि न स्यान्महानिशा॥**

मुक्तावपि भोजनं महानिशातः प्रागेव, 'मुक्ते शशिनि ...महानिशा॥' इति शातातपोक्तेः। महानिशा च घटीद्वयम्, 'महानिशा द्वे घटिके रात्रिमध्यमयामयोः' इति मार्कण्डेयोक्तेः। घटिकाचतुष्टयं तु युक्तम्, तथा कल्पतरूक्तेः। चन्द्रग्रस्तास्ते यावत्तदुदयमभोजनेन स्थातुमशक्तानां शास्त्रावगतमुक्तिकालभूताहर्भागानन्तरं भागद्वयमेकभागं वा हित्वा भोजनं भवतीत्युक्तं विवेचने। कृभ. २८३

देवद्रव्यविनाशनब्राह्मणस्वहरणब्राह्मणातिक्रमैः कुलनाशः

**[5]देवद्रव्यविनाशेन ब्रह्मस्वहरणेन च।**
**कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च॥**

(१) पमा. १।१७९; निप्र. २।६८९ चतुर्थचरणमात्रम्; कृभ. २८८ गृहे तु (गृहेषु).

(२) स्मृच. २।६२०; कृर. ६२६ मुक्तं (मुक्तिं); सिन्धु. ३८७ (अहोरात्रं न भोक्तव्यं) एतावदेव.

(३) कृर. ६२६; सिन्धु. २८७ पू.

(४) कृभ. २८३.

(५) गृक. ३३४ यमशातातपदानव्यासाः.

देवद्रव्यं देवतोद्देशेन यत् त्यक्तं वस्तु।
गृक. ३३४

## लघुशातातपः

शूद्रेण सहान्नासनादिव्यवहारस्य निषेधः

**[1]शूद्रान्नं शूद्रसंकल्पः( ?संपर्कः) शूद्रेण सह वाऽऽसनम्।**
**शूद्राह्वा( ? ज्ज्ञा)नागमः कश्चिज्ज्वलन्तमपि पातयेत्॥**

देवब्राह्मणधनहरणनिषेधः, पादुकावर्जनस्थलनिमित्तानि

**देवद्रव्यविनाशेन ब्रह्मस्वहरणेन च।**
**कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च॥**
**अग्न्यगारे गवां गोष्ठे देवतानां च संनिधौ।**
**आहारे जपकाले च पादुकां च विवर्जयेत्॥**

स्नानविण्मूत्रोत्सर्जनयोर्निषेधनिमित्तानि, शुष्कवैरविवादनिषेधः

**नाश्नीयादेकवस्त्रेण न नग्नः स्नानमाचरेत्।**
**न विण्मूत्रं पथि कुर्यान्न भस्मनि न गोमये॥**
**भद्रं भद्रमिति ब्रूयाद्भद्रमित्येव वा पुनः।**
**शुष्कवैरं विवादं च न कुर्यात्केनचित्सह॥**

ग्रहणादौ दानविधिर्दानकालनियमश्च

**अयने दानमादौ स्याद्विषुवे मध्यवर्तिनि।**
**षडशीतिमुखेऽतीते समन्ताच्चन्द्रसूर्ययोः॥**
**अयनादौ तदा दद्याद्द्रव्यमिष्टं गृहे वसन्।**
**षडशीतिमुखे चैव विमुक्ते चन्द्रसूर्ययोः॥**
**अयनेषु च यद्दत्तं षडशीतिमुखे तथा।**
**चन्द्रसूर्योपरागे च दत्तं भवति चाक्षयम्॥**

ग्रहणे भोजनस्य निषेधः ग्रस्तास्तमने भोजनकालश्च

**चन्द्रसूर्यग्रहे नाद्यादद्यात्तु प्रतिमुक्तयोः।**
**अमुक्तयोरस्तगयोः स्नात्वा दृष्ट्वा परेऽहनि॥**

(१) लशास्मृ. ६७, ७९, १२६, १३९-१४०, १४२, १४५, १५१-१५२.

## पराशरः

आचारो धर्ममूलम्

**8 [1]चतुर्णामपि वर्णानामाचारो धर्मपालकः।**
**आचारभ्रष्टदेहानां भवेद्धर्मः पराङ्मुखः॥**

षट् कर्माणि देवतातिथिपूजनं हुतशेष-भोजनं च ब्राह्मणस्य

नित्या धर्माः

**[2]षट्कर्माभिरतो नित्यं देवतातिथिपूजकः।**
**हुतशेषं तु भुञ्जानो ब्राह्मणो नावसीदति॥**

(१) इदानीं ब्राह्मणस्यासाधारणं धर्मं दर्शयति – षट्कर्मेति। यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहाः षट् कर्माणि। तदाह मनुः – 'अध्यापनं चाध्ययनं यजनं याजनं तथा। दानं प्रतिग्रहश्चापि षट् कर्माण्यग्रजन्मनः॥' (मस्मृ. १०।७५) इति। १।१३५-१३६

श्रुतिराह – 'अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत' इति। अत्र प्रभाकरो मन्यते – 'उपनयीत' इति नयतेरात्मनेपदस्य आचार्यकरणे पाणिनिना सूत्रितत्वात् उपनयनाध्यापनयोश्चाङ्गाङ्गिभावत्वेनैककर्तृकत्वात् आचार्यत्वकामोऽध्यापनेऽधिकारी। अत एव मनुना स्मर्यते – 'उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः। सकल्पं सरहस्यं च तमाचार्यं प्रवक्षते॥' (मस्मृ. २।१४०) इति। एवं चाध्यापनविधौ सुस्थिते सत्यध्ययनस्य पृथग्विधिर्न कल्पनीयो भविष्यति, विहितस्याध्यापनस्याध्ययनमन्तरेणानुपपत्तेरध्ययनस्यार्थसिद्धत्वात्। ननु नाध्ययनविधौ कल्पनादोषोऽस्ति, क्लृप्तस्यैव विधेः सत्त्वात्, 'स्वाध्यायोऽध्येतव्यः' इति श्रुतेः। मैवम्, अधिकार्यश्रवणेनास्य विधेरनुष्ठापकत्वायोगात्। अथोच्येत – विश्वजिन्न्यायेन रात्रिसत्रन्यायेन वाऽधिकारी परिकल्प्यताम्। 'विश्वजिता यजेत' इत्यत्र 'एतत्कामः' – इति नियोज्यविशेषणस्याश्रवणदनुष्ठानाप्राप्तौ स्वर्गस्य सर्वैरिष्यमाणत्वात् स एव तद्विशेषणत्वेन परिकल्पितः, एवमत्र स्वर्गकामो माणवको नियोज्योऽस्तु। रात्रिसत्रे 'प्रतितिष्ठन्ति ह वै य एता रात्रीरुपयन्ति' इत्यर्थवादश्रुतायाः प्रतिष्ठायाः अत्यन्तमश्रुतात् स्वर्गतः प्रत्यासन्नतया, प्रतिष्ठाकामोऽधिकारी कल्पितः, एवमत्र पयःकुल्यादिकामोऽधिकारी स्यात्, 'यदृचोऽधीते पयसः कुल्याः अस्य पितॄन् स्वधा अभिवहन्ति, यद्यजूंषि घृतस्य कुल्याः, यत्सामानि सोम एभ्यः पवते' इत्यर्थवादात् इति। मैवम्, पयःकुल्यादेर्ब्रह्मयज्ञविधिशेषत्वात्, माणवकस्याप्रबुद्धत्वेन स्वर्गकामत्वासंभवाच्च। कथंचित् संभवेऽप्यन्योन्याश्रयत्वं दुर्वारम्, अधीते स्वाध्याये पश्चादध्ययनविध्यवगमः, तदवगमे चाध्ययनम् इति। तस्मात् अध्ययनस्याध्यापनप्रयुक्तत्वादध्यापनमेव विधीयते, नाध्ययनम् इति। तदेतद्गुरुमतमन्ये वादिनो न क्षमन्ते, अनित्येनाध्यापनेन नित्यस्याध्ययनस्य प्रयोक्तुमशक्यत्वात्। अनित्यं चाध्यापनम्, जीवनकामस्य तत्राधिकारात्। तदाह मनुः – 'षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका। याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः॥' (मस्मृ. १०।७६) इति। अध्ययनं तु नित्यम्, अकरणे प्रत्यवायस्य मनुना स्मृतत्वात् – 'योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम्। स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः॥' (मस्मृ. २।१६८) इति। अतः स्वविधिप्रयुक्तमेवाध्ययनम्। न चान्योन्याश्रयः, अध्ययनात् प्रागेव संध्यावन्दनादाविव पित्रादिमुखेन विध्यर्थावगमात्। पित्रादिभिर्नियमितत्वादेव माणवकस्य न अप्रबुद्धत्वदोषोऽस्ति। यद्यपि तैत्तिरीयशाखायाम् 'स्वाध्यायोऽध्येतव्यः' इति वाक्यस्य पञ्चमहायज्ञप्रकरणे पठितत्वात् ब्रह्मयज्ञविधिरूपता, तथाप्यशेषस्मृतिषूपनयनपूर्वकस्याध्ययनस्य प्रपञ्च्यमानत्वान्मूलभूतश्रुतिरनुमातव्या। विवरणकारस्तु 'अध्यापयीत' इत्यत्र णिजर्थस्य जीवनार्थत्वेन रागतः प्राप्तत्वात् प्रकृतस्याध्ययनस्य विधेयतामभिप्रेत्य 'अष्टवर्षो ब्राह्मण उपगच्छेत्सोऽधीयीत' इति वाक्यं विपरिणमय्य उपपादयामास। सर्वथाऽप्यस्ति नित्यः स्वाध्यायाध्ययनस्य विधिः 'स्वाध्यायोऽध्येतव्यः' इत्येवमात्मकः श्रौतः। तथा स्मृतिरपि – 'तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः। वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना॥' (मस्मृ. २।१६५) इति। अधिगतिः अर्थविचारपर्यन्तमध्ययनम्।

१।१३७-१४१

8 अस्य व्याख्याने (वका. पृ. ६५५) इत्यत्र द्रष्टव्ये।

(१) पस्मृ. १।३७. शेषः स्थलादिनिर्देशः (वका. पृ. ६५५) इत्यत्र द्रष्टव्यः।

(२) पस्मृ. १।३८; निक. २१८; गृर. ३०९.

पूर्वमध्ययनाध्यापने सेतिकर्तव्यते निरूपिते, अथ यजनयाजने निरूपयामः। तत्र यजनस्य सृष्टिं प्रयोजनं चाऽऽह भगवान् – 'सह यज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः। अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्॥ देवान् भावयताऽनेन ते देवा भावयन्तु वः। परस्परं भावयन्तः श्रेयः परमवाप्स्यथ॥ इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः। तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः॥' (भगी. ३।१०-१२) इति। तस्य च यजनस्य सात्त्विकराजसतामसभेदेन त्रैविध्यं स एवाऽऽह – 'अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते। यष्टव्यमेवेति मनः समाधाय स सात्त्विकः॥ अभिसंधाय तु फलं दम्भार्थमपि चैव यत्। इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम्॥ विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम्। श्रद्धाविरहितं यज्ञं तामसं परिचक्षते॥' (भगी. १७।११-१३) इति। आश्वमेधिके पर्वणि द्विजादिसृष्टेर्यज्ञार्थत्वप्रतिपादनेन यज्ञः प्रशस्यते – 'यजनार्थं द्विजाः सृष्टास्तारका दिवि देवताः। गावो यज्ञार्थमुत्पन्ना दक्षिणार्थं तथैव च॥ सुवर्णं रजतं चैव पात्री कुम्भार्थमेव च। इध्मार्थमथ यूपार्थं ब्रह्मा चक्रे वनस्पतिम्। ग्राम्यारण्याश्च पशवो जायन्ते यज्ञकारणात्॥' इति। हारीतोऽपि अन्वयव्यतिरेकाभ्यां यज्ञमहिमानं दर्शयति – 'यज्ञेन लोका विमला विभान्ति यज्ञेन देवा अमृतत्वमाप्नुवन्। यज्ञेन पापैर्बहुभिर्विमुक्तः प्राप्नोति लोकानमरस्य विष्णोः॥ नास्त्ययज्ञस्य लोको वै नायज्ञो विन्दते शुभम्। अनिष्टयज्ञोऽपूतात्मा भ्रश्यति छिन्नपर्णवत्॥' इति । यज्ञविशेषास्त्वग्निहोत्रादयः।

१।१४९-१५१

एते सर्वे यज्ञाः यथायोगं नित्यनैमित्तिककाम्यभेदेन त्रिविधाः, 'नित्यं नैमित्तिकं काम्यं त्रिविधं कर्म पौरुषम्' इति मदालसोक्तेः। तत्र यज्ञानां नित्यत्वम् आथर्वणशाखायां श्रूयते – 'मन्त्रेषु कर्माणि कवयो यान्यपश्यंस्तानि त्रेतायां बहुधा संततानि। तान्याचरथ नियतम्' इति। वाजसनेयिशाखायामपि – 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' इति, 'एतद्वै जरामर्यमग्निहोत्रं जरसा वा ह्येवास्मान्मुच्यते मृत्युना च' इति च। विधिवाक्येषु च जीवनाद्युपबन्धस्तु नित्यत्वलक्षकम्(?कः) त(?य)था 'यावज्जीवमग्निहोत्रं जुहुयात्', 'यावज्जीवं दर्शपौर्णमासाभ्यां यजेत' इति। अकरणे प्रत्यवायश्च नित्यत्वगमकः। तथा चाऽऽथर्वणे श्रूयते – 'यस्यानग्निहोत्रमदर्शपौर्णमासमनाग्रयणमतिथिवर्जितं वा हुतमवैश्वदेवमविधिना हुतमासप्तमांस्तस्य लोकान् हिनस्ति' इति। तथा च श्रुत्यन्तरम्, – 'यस्य पिता पितामहो वा सोमं न पिबेत् स व्रात्यः' इति। जीवनकामनाव्यतिरिक्तगृहदाहाद्यनियतनिमित्तमुपजीव्य प्रवृत्तं नैमित्तिकम्। तथा च श्रुतिः – 'यस्य गृहं दहत्यग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत्' इति। कामनया प्रवृत्तं काम्यम्। तद्यथा 'वायव्यं श्वेतमालभेत भूतिकामः, वायुर्वै क्षेपिष्ठा देवता' इत्याद्याः काम्यपशवः, 'ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः' इत्याद्याः काम्येष्टयः। तत्र काम्यानां कामितार्थसिद्धिः फलम्, नित्यनैमित्तिकयोस्तु यथाविध्यनुष्ठितयोरिन्द्रलोकप्रापकत्वमाथर्वणे श्रूयते।

१।१५४-१५५

संपूर्णानुष्ठानशक्तौ सत्यामेव काम्यं कर्तव्यम् इति षष्ठाध्याये मीमांसितम्। तथाहि – 'ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः' इत्यत्र 'किं यथाशक्ति प्रयोगेणाप्यधिकारः, उत सर्वाङ्गोपसंहारेण?' इति संशयः। नित्येषु यथाशक्ति प्रयोगस्य पूर्वाधिकरणे निर्णीतत्वात् काम्येष्वपि तथा इति प्राप्ते ब्रूमः – नित्यानामसमर्थेनाप्यपरित्याज्यत्वात् तत्र यथाशक्ति प्रयोगः। अपरित्याज्यानि हि नित्यानि, जीवनादिनिमित्तवशेन तत्प्रवृत्तेः। नैमित्तिकं प्रत्यप्रवर्तकत्वे निमित्तत्वमेव हीयेत। कामना तु न निमित्तम्, येनावश्यमिष्टिं प्रवर्तयेत्। अतो न काम्यस्यापरित्याज्यत्वम्। तथा सति फलसिद्ध्यर्थमेव काम्यस्यानुष्ठेयत्वात् फलस्य च कृत्स्नाङ्गोपकृतप्रधानमन्तरेणानिष्पत्तेः यदा कृत्स्नाङ्गानुष्ठानशक्तिस्तदैव काम्यमनुष्ठेयम् इति सिद्धान्तः।

१।१५८-१५९

इत्थं यजनं निरूपितम्। याजने तु विधिः श्रूयते– 'द्रव्यमर्जयन् ब्राह्मणः प्रतिगृह्णीयाद्याजयेदध्यापयेद्वा'। न चायं नित्यविधिः, अकरणे प्रत्यवायादिनित्यलक्षणाभावात्। अपि तु काम्यविधिः, द्रव्यार्जनकामस्य तत्रा-

धिकारात्। तत्रापि नापूर्वविधिः, जीवनोपायत्वेन याजनस्य प्राप्तत्वात्। तद्धेतुत्वं च मार्कण्डेयपुराणे दर्शितम् — 'याजनाध्यापने शुद्धे तथा शुद्धः प्रतिग्रहः। एषा सम्यक् समाख्याता त्रितयं तस्य जीविका'॥ इति। नापि परिसंख्या, नित्यप्राप्तेरभावात्। तस्मात् पक्षे प्राप्तत्वान्नियमविधिरयम्। स चायं नियमः पुरुषार्थ एव, न तु क्रत्वर्थः, द्रव्यार्जनविधानस्य पुरुषार्थत्वेन लिप्सासूत्रे विचारितत्वात्। तथाहि — 'द्रव्यप्राप्तिः क्रत्वर्था वा पुरुषार्था वा?' इति संशयः। तत्र पूर्वः पक्षः — क्रत्वर्थेयम्, तथा सति नियमस्यार्थवत्त्वात्। ब्राह्मणस्य याजनादिना, क्षत्रियस्य जयादिना, वैश्यस्य कृष्यादिना इति नियमः। स च पुरुषार्थपक्षेऽनर्थकः स्यात्, उपायान्तरेणार्जिस्यापि द्रव्यस्य क्षुत्प्रतिघातादिपुरुषार्थसंपादकत्वात्। क्रतुस्तु नान्यथा सिध्यति। अतस्तत्र नियमोऽर्थवान्। इति प्राप्ते ब्रूमः — द्रव्यं हि संपादितं सत् पुरुषं प्रीणयति। अतस्तस्य पुरुषार्थत्वं प्रत्यक्षं दृष्टम्। क्रत्वर्थता तु नियमान्यथाऽनुपपत्त्या कल्प्यते। क्लृप्तं च कल्प्याद्बलीयः। सति च पुरुषार्थत्वे क्रतोरपि भोजनादिवत् पुरुषकार्यतया तदर्थताऽप्यर्थात् संपद्यते। नियमस्तु पुरुषार्थेऽप्यर्जनविधौ किंचिददृष्टं जनयिष्यति। क्रत्वर्थत्ववादिनो जीवनलोपेन क्रतुरपि न सिध्येत्। तस्मात् पुरुषार्थो याजनादिः इति सिद्धम्।

१।१५९-१६१

ननु क्वचित् याजनस्य क्वचित् प्रतिग्रहस्य च निन्दितत्वात् तदनुष्ठानवतः स्वाध्यायगायत्र्योर्जप आम्नायते — 'रिच्यत इव वा एष प्रेव रिच्यते यो याजयति प्रति वा गृह्णाति, याजयित्वा प्रतिगृह्य वाऽनश्नन् त्रिः स्वाध्यायं वेदमधीयीत, त्रिरात्रं वा सावित्रीं गायत्रीमन्वातिरेचयति' इति। तथाऽन्यत्रापि — 'दुहोह वा एष च्छन्दांसि यो याजयति, स येन यज्ञक्रतुना याजयेत्, सोऽरण्यं परेत्य शुचौ देशे स्वाध्यायमेवैनमधीयन्नासीत। तस्यानशनं दीक्षा, स्थानमुपसदः, आसनस्य(?नमस्य) सुत्या, वाग्जुहूः, मन उपभृत्, धृतिर्ध्रुवा, प्राणो हविः, सामाध्वर्युः स वा एष यज्ञः प्राणदक्षिणोऽनन्तदक्षिणः समृद्धतरः'। इति चेत्, नायं दोषः, अयाज्ययाजनविषयत्वात्। जीवितात्ययमापन्नस्य प्राणरक्षार्थमयाज्ययाजनमपि संभाव्यते।

१।१६२-१६३

अथ प्रतिग्रहो निरूप्यते। तत्र श्रौतो विधिः पूर्वमुदाहृतः — 'द्रव्यमर्जयन् ब्राह्मणः प्रतिगृह्णीयात्' इति। तत्र याजने येयं चर्चा पूर्वमनुक्रान्ता, सेयं प्रतिग्रहेऽपि यथासंभवमनुसंधातव्या। ननु प्रतिग्रहो मनुना निन्दितः — 'प्रतिग्रहः प्रत्यवरः स तु विप्रस्य गर्हितः' (मस्मृ. १०।१०९) इति। मैवम्, अस्या निन्दाया असत्प्रतिग्रहविषयत्वात्। तच्चोपरितने वचने स्पष्टीकृतम् — 'प्रतिग्रहो गर्हितः स्यात् शूद्रादप्यन्त्यजन्मनः' (मस्मृ. १०।११०) इति। यः प्रतिग्रहो नीचात् क्रियते, स गर्हित इत्यर्थः। सत्प्रतिग्रहस्तु तेनैवाभ्यनुज्ञातः, 'नाध्यापनाद्याजनाद्वाऽगर्हिताद्वा प्रतिग्रहात्। दोषो भवति विप्राणां ज्वलनार्कसमा हि ते॥' (मस्मृ. १०।१०३) इति। अगर्हितादिति छेदः। अगर्हितप्रतिग्रहादप्यप्रतिग्रहः श्रेयान्। तथा च याज्ञवल्क्यः — 'प्रतिग्रहसमर्थोऽपि नाऽऽदत्ते यः प्रतिग्रहम्। ये लोका दानशीलानां स तानाप्नोति पुष्कलान्॥' (यास्मृ. १।२१३) इति। ननु यमः प्रतिग्रहं प्रशंसति — 'प्रतिग्रहाध्यापनयाजनानां प्रतिग्रहं श्रेष्ठतमं वदन्ति। प्रतिग्रहात् शुध्यति जप्यहोमैर्याज्यं तु पापं न पुनन्ति वेदाः॥' इति। मनुस्तु तद्विपर्ययमाह — 'जपहोमैरपैत्येनो याजनाध्यापनैः कृतम्। प्रतिग्रहनिमित्तं तु त्यागेन तपसैव च॥' (मस्मृ. १०।१११) इति। नायं दोषः, द्विजातिभ्यः प्रतिग्रहः प्रशस्तः, शूद्रात् प्रतिग्रहो निन्दितः इति व्यवस्थायाः सुवचत्वात्। ननु सत्प्रतिग्रहेऽपि कियानपि प्रत्यवायः प्रतीयते, 'प्रतिग्रहात् शुध्यति इत्युक्तेः'। बाढम्, अस्त्येव वेदपारगत्वादिसामर्थ्यरहितस्य प्रतिग्रहे प्रत्यवायः। एतदेवाभिप्रेत्य स्कान्दे वेदपारगस्य प्रत्यवायो निवारितः — 'षडङ्गवेदविद्विप्रो यदि कुर्यात् प्रतिग्रहम्। न स पापेन लिप्येत पद्मपत्रमिवाम्भसा॥' इति एष एव न्यायो याजनाध्यापनयोर्योजनीयः। अयाज्ययाजनभृतकाध्यापनदुष्टप्रतिग्रहेष्वेनोबाहुल्यम्; स्वस्मिन्नीषदधिकारवैकल्येन प्रवर्तमानस्य स्वल्पः प्रत्यवायः मुख्याधिकारिणो विहितयाजनादिप्रवृत्तौ न किंचिदप्येनः इति विवेकः।

१।१८२-१८४

विदुषस्तु न कोऽपि प्रतिग्रहो दोषावह इति वाजसनेयिब्राह्मणे गायत्रीविद्यायां श्रूयते – 'यदि ह वा अप्येवं विद्वान् द्विजः प्रतिगृह्णाति स हैतद्गायत्र्या एकं पदं प्रतिसंधाय इमांस्त्रीन् लोकान् पूर्णान् प्रतिगृह्णीयात् योऽस्या एतत्प्रथमं पदमाप्नुयादथ यावतीयं त्रयी विद्याऽथ तावत् प्रतिगृह्णीयात् योऽस्या एतद्द्वितीयं पदमाप्नुयादथ यावदिदं प्राणियुस्तावत् प्रतिगृह्णीयात् योऽस्या एतत् तृतीयं पदमाप्नुयादथास्या एतदेव तुरीयं दर्शितं पदं परो रजो य एष तपति नैव केन जाप्यं कुत एतावत् प्रतिगृह्णीयात्' इति।

१।१९०-१९१

एवं निरूपितानामध्यापनादीनां प्रतिग्रहान्तानां शब्दान्तराधिकरणन्यायेन (जैसू. २।२।१) कर्मभेदमभिप्रेत्य 'षट्कर्माभिरतः' इत्युक्तम्। स च न्याय इत्थं प्रवर्तते – यजति, ददाति, जुहोतीत्युदाहरणम्। तत्र संशयः – 'किं सर्वधात्वर्थानुरक्तैका भावना, उत प्रतिधात्वर्थं नाना? तत्र भावनावाचकस्याऽऽख्यातस्यैकत्वाद्भिन्नानामपि धात्वर्थानामुपसर्जनत्वेन प्रधानभेदकत्वासंभवाच्चैकैव भावनेति पूर्वपक्षः। धात्वर्थानुरञ्जनमन्तरेण केवलाख्यातेन भावनाया अप्रतीतेः उत्पत्तिशिष्टधात्वर्थेनैकेनानुरक्ते आख्यातार्थे धात्वर्थान्तराणामननुप्रवेशात् प्रतिधात्वर्थं भावनाभेदः इति सिद्धान्तः। एवं चाध्यापनादिभिः षड्भिर्धात्वर्थैः षोढा भावना भिद्यन्ते इति भवन्त्येतानि षट्कर्माणि। तेषु अभिरतिः श्रद्धापूर्वकमनुष्ठानम्। अश्रद्धालुनाऽनुष्ठितमप्यफलं स्यात्। तदाह भगवान् – 'अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत्। असदित्युच्यते पार्थ न च तत् प्रेत्य नो इह॥' (भगी. १७।२८) इति। 'नित्यम्' इत्युत्तरत्रान्वेति, न पूर्वत्र, अध्यापनादीनां त्रयाणामनित्यत्वात्। देवता च अतिथिश्च देवतातिथी, तयोः प्रतिदिनं पूजको भवेत्। देवतास्वरूपं च वाजसनेयिब्राह्मणे शाकल्ययाज्ञवल्क्यसंवादे विचार्य निर्णीतम्।

१।१९१-१९२

तत्र प्राणशब्दवाच्यः परमात्मैवैको मुख्यो देवः। तत्स्वरूपं च श्वेताश्वतरा विस्पष्टमामनन्ति – 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा। कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च॥' (श्वेउ. ६।११) इति। एतमेव देवं शास्त्रकुशलास्तैस्तैः शब्दविशेषैर्बहुधा व्यवहरन्ति। तथा च मन्त्रवर्णः – 'सुपर्णं विप्राः कवयो वचोभिरेकं सन्तं बहुधा कल्पयन्ति' (ऋसं. १०।११४।५) इति। ते च शब्दविशेषा विस्पष्टमन्यस्मिन्मन्त्रे श्रूयन्ते – 'इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्। एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः॥' (ऋसं. १।१६४।४६) इति। ननु इन्द्रमित्रवरुणादयः शब्दा भिन्नदेववाचिनः, न त्वेकं देवमभिदधति, अन्यथा वारुणयागे ऐन्द्रो मन्त्रः प्रयुज्येत। नायं दोषः, एकत्वेऽपि देवस्य मूर्तिभेदेन मन्त्रव्यवस्थोपपत्तेः। यथा शैवागमेषु शिवस्यैकत्वेऽपि प्रतिमाभेदेन दक्षिणामूर्तिचिन्तामणिमृत्युंजयादयो मन्त्रा मूर्तिविशेषेषु व्यवस्थिताः, यथा वा वैष्णवागमेषु गोपालवामनादयो मन्त्राः, तथा वेदेऽपि किं न स्यात्? ननु द्रव्यदेवते यागस्य स्वरूपम्, स्वरूपभेदाच्च कर्मभेदः प्रतिपादितः। 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनम्' इत्यत्र यथाऽऽमिक्षावाजिनयोर्द्रव्ययोर्भेदस्तथा विश्वेषां देवानां वाजिभ्यो देवेभ्यो भेदोऽभ्युपगन्तव्य इति। बाढम्, अभ्युपगम्यते ह्येकस्यैव वास(?वास्त)वस्य देवस्य कर्मानुष्ठानदशायामौपाधिको भेदः। अत एव वाजसनेयिब्राह्मणे इष्टिप्रकरणे कर्मानुष्ठातृप्रसिद्धं देवभेदमनूद्य तदपवादेन वास्तवं देवैकत्वमवधारितम् – 'तद्यदिदमाहुरमुं यजामुं यजेत्येकैकं देवमेतस्यैव सा विसृष्टिरेष उ ह्येव सर्वे देवाः' (बृउ. १।४।६) इति। न चैकस्माद्देवात् फलभेदो दुःसंपाद इति शङ्कनीयम्, उपास्तिप्रकारभेदेन तदुपपत्तेः, 'तं यथा यथोपासते तदेव भवति' (शब्रा. १०।५।२।२०) इति श्रुतेः। यथैकोऽपि राजा छत्रचामरादिसेवाप्रकारभेदेन फलभेदे हेतुस्तद्वत्। ननु देवः फलं ददातीत्येतन्मीमांसको न सहते। तथा हि नवमाध्याये विचारितम् – किं यागेनाऽऽराधिताया देवतायाः फलम्, उतापूर्वद्वारकं यागस्य फलसाधनत्वम्? इति संशयः। तत्र भङ्गुरस्य यागस्य कालान्तरभाविफलं प्रति साधनत्वायोगदवश्यं द्वारं किंचित् कल्पनीयम्। देवताप्रसादश्च श्रुतियुक्तिभ्यस्तद्द्वारं स्यात्। 'तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति' इति श्रुतिः।

युक्तिरप्युच्यते — क्रियया प्राप्तुमिष्टतमत्वात् कर्म कारकं प्रधानम्। तेन कर्मणा व्याप्तत्वात् संप्रदानं ततोऽपि प्रधानम्। इन्द्रादिदेवताश्च संप्रदानत्वेन प्राधान्यात् पूजामर्हन्ति। यागश्च पूजारूपत्वादतिथेर्भोजनमिव देवताया अङ्गं स्यात्। तस्माद्राजादिवद्देवः फलं ददातीति पूर्वः पक्षः। अत्रोच्यते — यागदेवतयोर्योऽयमङ्गाङ्गिभाव उपन्यस्तः स तु शब्दाकाङ्क्षानुसारेण विपर्येति। तथाहि — यजेतेत्याख्यातेन भावनाऽभिधीयते। सा च 'किम् केन, कथम्' इति भाव्यकरणेतिकर्तव्यतालक्षणमंशत्रयं क्रमेणाऽऽकाङ्क्षति। तत्र यागस्य समानपदोपनीतत्वेऽप्ययोग्यत्वान्न भाव्यता । स्वर्गस्य तु वाक्यादुपनीतस्यापि पुरुषार्थत्वेन योग्यत्वात् भाव्यता स्यात्। तस्य च स्वर्गस्य साधनाकाङ्क्षायां यागः करणत्वेनान्वेति। तच्च करणं साध्यस्वरूपत्वात् स्वनिष्पादकं सिद्धं द्रव्यदैवतमितिकर्तव्यत्वेन गृह्णाति, इति। ततो यागोऽङ्गी, देवता च तदङ्गम्। एवं च सति नातिथिवद्देवता यागेनाऽऽराध्यते। या तु श्रुतिः 'तृप्त एवैनम्' इति, नासौ स्वार्थे तात्पर्यवती, प्रत्यक्षादिविरोधात्। न हि काचिद्विग्रहवती देवता हविर्भुक्त्वा तृप्ता फलं प्रयच्छतीति प्रत्यक्षेणोपलभ्यते, प्रत्युत तदभावः प्रत्यक्षेण योग्यानुपलब्ध्या वा प्रमीयते। किंच, अश्वमेधे '8गां दंष्ट्राभ्यां मण्डूकान् दन्तैः' इत्याद्यवयवानां दंष्ट्रादिद्रव्याणां हविषां भोक्तृत्वेन गोमण्डूकादयस्तिर्यञ्चोऽपि देवताविशेषाः श्रूयन्ते। न च तेषां फलप्रदातृत्वं संभाव्यते। 'ओषधीभ्यः स्वाहा, वनस्पतिभ्यः स्वाहा, मूलेभ्यः स्वाहा' इत्यादावचेतनानामोषधिवनस्पतितदवयवानां देवतात्वं श्रूयते। तत्र कुतो हविर्भोक्तृत्वम्?, कुतस्तरां तृप्तिः?, कुतस्तमां फलदानम्? तस्माद्विग्रहादिमतां देवानामभावन्न देवताप्रसादो यागस्य फलद्वारम्, किंतु, श्रूयमाणफलसाधनत्वान्यथानुपपत्तिकल्प्यमपूर्व तद्द्वारम्। अभ्युपगतेष्वपि देवेष्वपूर्वस्यैव फलद्वारत्वमवश्यं वक्तव्यम्, मन्त्रार्थवादेतिहासपुराणेषु देवानामपि तपश्चरणक्रत्वनुष्ठानब्रह्मास्त्रादिमन्त्रप्रयोगेभ्यः समीहितसिद्ध्यनुकीर्तनात्। तस्मान्न देवः फलप्रदः इति सिद्धम्। औपनिषदास्त्वीश्वरस्य फलदातृत्वं मन्यन्ते। तथाहि — तदीये शास्त्रे तृतीयाध्याये विचारितम् — किं धर्मः फलं ददाति, आहोस्विदीश्वरः? इति संशयः। तत्र मीमांसकोक्तन्यायेन धर्मः फलप्रदः इति पूर्वः पक्षः। सिद्धान्तस्तु — किं धर्मोऽन्यानधिष्ठित एव फलप्रदः, किं वा केनचिच्चेतनेनाधिष्ठितः? नाऽऽद्यः, अचेतनस्य तारतम्यानभिज्ञस्य यथोचितफलदातृत्वायोगात्। द्वितीये तु येनाधिष्ठितः स एव फलदाताऽस्तु। न चैवं धर्मस्य वैयर्थ्यमिति शङ्कनीयम्, वैषम्यनैर्घृण्यपरिहाराय धर्मापेक्षणात्। असति तु धर्मे कांश्चिदुत्तमं सुखं कांश्चिन्मध्यमं कांश्चिदधमं प्रापयन्नीश्वरः कथं विषमो न भवेत्? कथं वा विविधं दुःखं प्रापयन्निर्घृणो न भवेत्? धर्माधर्मानुसारेण तत्प्रापणे गुरुपितृराजादीनामिव न वैषम्यनैर्घृण्ये प्राप्नुतः। न हि दुष्टशिक्षां शिष्टपरिपालनं च कुर्वतां गुर्वादीनां वैषम्यनैर्घृण्ये विद्येते। यदुक्तं गोमण्डूकादीनां तिरश्चामोषधिवनस्पत्यादीनां च स्थावराणां फलप्रदत्वमयुक्तम् इति, तत् तथैवास्तु, ईश्वरस्य फलदातृत्वे कः प्रत्यूहः? यदपि 'तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति' इति, तत्रापीन्द्रदेवतायामवस्थितोऽन्तर्यामी फलप्रदत्वेन विवक्षितः, 'अन्तः प्रविष्टः शास्ता जनानाम्' (तैआ. ३।११।१) इति श्रुतेः। तस्मादीश्वरस्य प्रसाद एव फलद्वारम्। न च जैमिनेयवैयासिकयोर्मतयोः परस्परं विरोधः विवक्षाविशेषेण तत्समाधानात्। यथा देवदत्तस्यैव पक्तृत्वेऽपि सम्यगभिज्वलनं विवक्षित्वा 'काष्ठानि पचन्ति' इति व्यवहारः, तथा परमेश्वरस्यैव फलप्रदत्वेऽपि तारतम्यापाद(क)निमित्ततया प्राधान्यं विवक्षित्वा 'धर्मः फलप्रदः' इति व्यवहारः किं न स्यात्? तस्मादविरोधात् फलप्रदो जगदीश्वर एक एव सर्वत्र पूजनीयो देवः इत्यलमतिप्रसङ्गेन।

१।१९६-२०१

अतिथेर्लक्षणं स्वयमेव वक्ष्यति। उभयोः पूजनप्रकारमुपरितनश्लोके निरूपयामः। 'देवतातिथिपूजको नावसीदति' इत्युक्तेरपूजायामवसीदति इत्यवगम्यते।

१।२०१

वैश्वदेवाद्यर्थमोदनं पाचयित्वा तेन होमे कृते सति योऽवशिष्ट ओदनः स हुतशेषः। तमेव भुञ्जीत, न तु

---

8'स्तेगान्दंष्ट्राभ्यां मण्डूकाञ्जम्भ्येभिः' इति तैत्तिरीयसंहिताब्राह्मणादिषु पाठः।

स्वभोजनार्थं पाचयेत्। यदाह भगवान् – 'यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः। भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात्॥' (भगी.३।१३) इति। 'हुतशेषम्' इत्यत्र हुतशब्दो महाभारते व्याख्यातः – 'वैश्वदेवादयो होमा हुतमित्युच्यते बुधैः' इति। तस्य शेषो हुतशेषः। स च हुतशेषशब्दो देवर्षिमनुष्यादिपूजोपयुक्तावशिष्टमुपलक्षयति। तदाह मनुः – 'देवानृषीन्मनुष्यांश्च पितॄन् गृह्याश्च देवताः। पूजयित्वा ततः पश्चाद्गृहस्थः शेषभुग्भवेत्॥ अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात्। यज्ञशिष्टाशनं ह्येतत् सतामन्नं विधीयते॥' (मस्मृ. ३।११७-११८) इति। 'ब्राह्मणो नावसीदति' इत्यत्र विवक्षितस्य ब्राह्मणस्य लक्षणं महाभारते दर्शितम्, – 'सत्यं दानं तपः शौचमानृशंस्यं दमो घृणा। दृश्यन्ते यत्र विप्रेन्द्र स ब्राह्मण इति स्मृतः॥ जितेन्द्रियो धर्मपरः स्वाध्यायनिरतः शुचिः। कामक्रोधौ वशौ यस्य तं देवा ब्राह्मणं विदुः॥ यस्य चाऽऽत्मसमो लोको धर्मज्ञस्य मनस्विनः। स्वयं धर्मेण चरति तं देवा ब्राह्मणं विदुः॥ योऽध्यापयेदधीते वा याजयेद्वा यजेत वा। दद्याद्वाऽपि यथाशक्ति तं देवा ब्राह्मणं विदुः॥ क्षमा दया च विज्ञानं सत्यं चैव दमः शमः। अध्यात्मनिरतिर्ज्ञानमेतद्ब्राह्मणलक्षणम्॥' इति। तथा च अनाहिताग्नितायामपि उक्तलक्षणलक्षितो ब्राह्मणो नावसीदतीति वाक्यार्थः पर्यवसितो भवति। 'चतुर्णामपि वर्णानाम्' इति, 'षट्कर्माभिरतः' इति वचनद्वयेन साधारणासाधारणधर्मौ संक्षिप्योपदर्शितौ। यद्यप्यध्यापनादित्रयमेव विप्रस्यासाधारणम्, नाध्ययनादित्रयम्, तस्य वर्णत्रयसाधारणत्वात्, तथापि षट्कर्माभिरतत्वं विप्रस्यैवेति न कोऽपि विरोधः।

पमा. १।२०३-२०४

(२) यत्प्रतिज्ञातम् 'चातुर्वर्ण्यसमाचारं ब्रवीमि' इति, तदेवाऽऽह – षडिति। 8षट् च तानि कर्माणि षट्कर्माणि। तानि च संध्यास्नानादीनि, तेषामेव वक्ष्यमाणत्वात्। बृहत्पराशरेणापि 'षट्कर्माभिरतः' (बृपसं. २।३) इत्यत्र 'कर्मणि कानि?' इत्यपेक्षायां 'कर्मषट्कं प्रवक्ष्यामि' (बृपसं. २।५) इति प्रतिज्ञाय 'संध्या स्नानं जपश्चैव देवतानां च पूजनम्। वैश्वदेवं तथाऽऽतिथ्यं षट् कर्माणि दिने दिने॥' (बृपसं. २।७) इत्यभिधानाच्च। न त्वध्यापनादीनि 'अध्यापनमध्ययनं यजनं याजनं तथा। दानं प्रतिग्रहश्चैव षट्कर्माण्यग्रजन्मनः॥' (मस्मृ. १०।७५) इति मनूक्तानि, तेषामग्रे विधानात्, चातुर्वर्ण्यसाधारण्याभावेन प्रतिज्ञाविरोधाच्च, प्रकृतानां तु भूम्ना साधारण्यात्। तेषु नित्यम् अभिरतः तदनुष्ठाने निरतः। देवता विष्ण्वादिः, अतिथिः वक्ष्यमाणः, तयोर्नित्यं पूजकः। हुतशेषं वैश्वदेवावशिष्टं च भुञ्जानो ब्राह्मणः चातुर्वर्णिकः, चातुर्वर्ण्योपक्रमेण 'वेदो वा प्रायदर्शनात्' (जैसू. ३।३।२) इति न्यायेन ब्राह्मणपदस्य चातुर्वर्ण्यपरत्वात्। नावसीदति न प्रत्यवायी स्यात्। नित्यानेकाह्निकाननुष्ठानकृतः प्रत्यवायस्त्वेतावन्मात्रानुष्ठानेऽपि न स्यादित्यर्थः। देवपूजादीनां षट्कर्मान्तर्गतत्वेऽपि पुनर्वचनं सायंसंध्योत्तरकालमप्येषां पुनरनुष्ठानप्रतिपादनाय। तथा च शौनकः – 'प्रातर्मध्यंदिने सायं विष्णुपूजां समाचरेत्।' इति। 'अप्रणोद्योऽतिथिः सायमपि वाग्भूतृणोदकैः' (यास्मृ. १।१०७) इति योगीश्वरोऽपि। आश्वलायनोऽपि 'अथ सायं प्रातः सिद्धस्य हविष्यस्य जुहुयात्' (आगृ. १।२।१) इति। मनुरपि 'सायं प्रातर्द्विजातीनामशनं श्रुतिचोदितम्।' इति। एतेन अहोरात्रकर्तव्यमनेनोक्तम्। आह्निकमात्रं त्वग्रेतनेनेति न पौनरुक्त्याशङ्केति साधीयसीयं व्याख्या। विम.

**§[1]संध्या स्नानं जपो होमो देवतानां च पूजनम्।**
**आतिथ्यं वैश्वदेवं च षट्कर्माणि दिने दिने॥**

व्रताध्ययनरहिता भैक्षचरा ब्राह्मणा
राज्ञा दण्ड्याः, प्रजापरिपालनं
क्षत्रियधर्मः

**[2]अव्रता ह्यनधीयाना यत्र भैक्षचरा द्विजाः।**
**तं ग्रामं दण्डयेद्राजा चौरभक्तप्रदो हि सः॥**

8 इदं षट्कर्मशब्दस्य कर्मधारयेण व्युत्पादनं न साधु, द्विगुविषयत्वात्। द्विगुत्वेऽपि 'अनो नलोपश्च वा द्विगुः स्त्रियाम्' इति वार्तिकेन स्त्रीत्वस्य वैकल्पिकत्वान्पुंसकत्वं साध्वेव। तेन 'षण्णां कर्मणां समाहारः षट्कर्म' इति व्युत्पादनमेव साधु।

§ अस्य व्याख्यानानि आह्निकभागे द्रष्टव्यानि।

(१) **पस्मृ.** १।३९. शेषः स्थलादिनिर्देशः आह्निकभागे द्रष्टव्यः.

(२) **पस्मृ.** १।६०; **मुक्ता.** ६६ चौर (चोर).

**[1]क्षत्रियो हि प्रजा रक्षञ्शस्त्रपाणिः प्रदण्डवान्।**
**निर्जित्य परसैन्यानि क्षितिं धर्मेण पालयेत्॥**
**[2]पुष्पं पुष्पं विचिनुयान्मूलच्छेदं न कारयेत्।**
**मालाकार इवाऽऽरामे न यथाऽङ्गारकारकः॥**

(१) प्रचण्डवान् वीरपुरुषोपेतः। *गृक. २५२

(२) इत्थं च 'स्व(?षट्) कर्माभिरतः' इत्यनेन ब्राह्मणस्य साधारणधर्मान्निरूप्य तत्राध्ययनादिसाधारणधर्मप्रसङ्गागतमाह्निकं परिसमाप्येदानीं प्रकृतानेव क्रमप्राप्तमनभिषिक्तस्य क्षत्रियस्य साधारणधर्मानाह — अव्रता इति। द्विविधो हि राजधर्मः — दुष्टशिक्षा शिष्टपरिपालनं च। तत्राऽऽद्येन श्लोकेन दुष्टशिक्षा प्रतिपाद्यते। व्रतशब्देनात्र ब्रह्मचारिकर्तृकं मध्वादिवर्जनमभिप्रेतम्। तथा च याज्ञवल्क्यः 'व्रतमपीडयन्' (यास्मृ. १।३२) इत्युक्त्वा विवक्षितं तद्व्रतं स्पष्टीचकार — 'मधुमांसाञ्जनोच्छिष्टशुक्तस्त्रीप्राणिहिंसनम्। भास्करालोकनाश्लीलपरिवादांश्च वर्जयेत्॥' (यास्मृ. १।३३) इति। यद्वा, स्वगृह्यप्रसिद्धानि प्राजापत्यादीनि चत्वार्यत्र व्रतशब्दाभिधेयानि। तदुभयविधव्रतरहिताः स्वाध्यायमप्यनधीयाना ब्रह्मचारिणो यत्र ग्रामे भैक्ष्यमाचरन्ति, तं ग्रामं दण्डयेत्। यतः स ग्रामः चौरसद्दशेभ्यो भक्तम् अन्नं प्रयच्छति। अनेन वचनेन विहितमननुतिष्ठतां प्रतिषिद्धमनुतिष्ठतां सर्वेषां राज्ञा दण्डनीयत्वमुपलक्ष्यते। अत एव नारदः — 'यो यो वर्णोऽवहीयेत यश्चोद्रेकमनुव्रजेत्। तं तं दृष्ट्वा स्वतो मार्गात्प्रच्युतं स्थापयेत्पथि॥' इति।

१।३८९-३९०

ननु 'दण्डयेद्राजा' इति भूपालस्यापि दण्डयितृत्वमुक्तम्, तत्कथं क्षत्रियस्यासाधारणधर्मः? मैवम्, राजशब्दस्य क्षत्रियविषयत्वेनावेष्ट्यधिकरणे निर्णीतत्वात्। तथा हि द्वितीयाध्याये अवेष्ट्यधिकरणे8 (जैसू. २।३।२) श्रूयते — 'आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणा' इत्यादिना राजकर्तृके राजसूये अवेष्टिनामकेष्टिं प्रकृत्य 'यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये विधायाऽऽहुतिं हुत्वा, तमभिधारयेत्, यदि राजन्य ऐन्द्रम्, यदि वैश्यो वैश्वदेवम्' इति। तत्र संशयः — किं ब्राह्मणादीनामवेष्टौ प्राप्तानां वर्णानां राजसूये अधिकारः, उत क्षत्रियस्यैव? इति। तदर्थं च किं राजशब्दः त्रयाणामपि वर्णानां वाचकः, किंवा क्षत्रियस्यैव? इति। ततोऽपि पुनर्विचारयितव्यम् — किं राजशब्दो राज्ययोगनिमित्तः, क्षत्रियत्वनिमित्तो वा? इति। तत्र, राजशब्दो राज्ययोगनिमित्त एव, आर्यप्रसिद्धेः सर्वलोकप्रसिद्धत्वादविगानाच्च; न तु क्षत्रियत्वनिमित्तः, अनार्यप्रसिद्धेरार्यप्रसिद्ध्यपेक्षया दुर्बलत्वात् द्रविडेषु विगानात् तदन्येष्वप्रसिद्धेश्च। तत्र स्यात् - राज्ययोगात् राजानस्त्रयोऽपि भवन्ति। राज्यपदं तु रूढ्या जनपदरक्षणे वर्तते, न राजयोगमपेक्षते। ननु 'कर्मणि' इत्यधिकृत्य 'पत्यन्तपुरोहितादिभ्यो यक्' (पासू. ५।१।१८८) इति वचनात् राजशब्दस्य तत्र पाठादाचाराच्च स्मृतेर्बलीयस्त्वात् राजयोग एव राज्यपदप्रवृत्तिनिमित्तमिति चेत्, लोकप्रयोगस्यैव शब्दार्थावधारणे प्रमाणत्वात् स्मृतेरपि स एव मूलम्, नान्यत्। प्रयोगाच्च राज्यशब्दस्यैव स्वातन्त्र्यं तन्निमित्तत्वं च राजशब्दस्यावगम्यते। ततस्तदनुसारेण स्मरणं शब्दापशब्दविभागमात्रपरं व्याख्येयम्। अतस्त्रयाणामपि राजपदाभिधेयत्वेन राजसूये प्राप्तानां निमित्तार्थानि श्रवणानि। यदिशब्दोऽपि राजशब्दस्य राज्ययोगनिमित्तत्वे प्रमाणम्। अन्यथा प्राप्त्यभावात् यदिशब्दोऽनुपपन्नः स्यात्। वैदिकश्च निर्देशः स्मृतेरपि बलीयान्। तस्मात् निमित्तार्थानि श्रवणानि, इति प्राप्ते ब्रूमः — न तावद्वैदिकनिर्देशादत्र निर्णयः शक्यते, अन्यथाऽपि तत्सद्भावात्। 'राजानमभिषेचयेत्' इति ह्यभिषेकविधौ प्रागेव राज्ययोगाद्राजशब्दः क्षत्रियमात्र एव प्रयुक्तः। तेन रूढमेव राजपदं निर्णीयते। यदिशब्दस्तु निपातत्वात् यथाकथंचिदपि नियमे न दुष्यति इति। स्मरणाच्च स्वतन्त्रमेव राजपदम्। न च तस्य निर्मूलत्वम्, द्रविडप्रयोगस्यैव मूलस्य संभवात्। अतो न यथा(?नायथा)र्थत्वे स्मरणस्य प्रमाणमस्तीति

---

* गृर. गृकवत्।

8 सप्तम्यर्थस्यान्तिमेनेतिकारेण परामृष्टे संपूर्णाधिकरणार्थेऽन्वयः, न तु 'श्रूयते' इत्यत्र।

(१) **पस्मृ.** १।६१; **गृक.** २५१-२५२ प्रथमचरणे (क्षत्रियेण प्रजाः पाल्याः) प्रदण्ड (प्रचण्ड); **गृर.** ४६९ गृकवत्; **मुक्ता.**६६ पालयेत् (पालयन्); **बाल.** १।११९ पृ. ३६६ गृकवत्; **सस्मृ.** ९८-९९ यो हि (योऽपि).

(२) **पस्मृ.** १।६२; **पमा.** ३९० पुष्पं पुष्पं (पुष्पमात्रं); **मुक्ता.** ६६.

तेनैवाभियुक्तप्रणीतेनाऽऽचारस्य संभवात् गौणभ्रान्त्यादिप्रयोगप्रसूतस्य बाधात् राजयोगेन राज्यशब्दः, स्वतन्त्रस्तु राजशब्दः क्षत्रियवचन इति ब्राह्मणादेरवेष्टौ प्राप्त्यभावात् प्रापकाणि वचनानि इति। एवमत्रापि राजशब्दः क्षत्रियपरः।

ननु जनरञ्जनाद्राजत्वं महाभारतेऽभिहितम् — 'रञ्जनात् खलु राजत्वं प्रजानां पालनादपि' इति। बाढम् संभवत्येवं(?व) क्षत्रियस्यापि रञ्जकत्वम्। 'क्षत्रियो हि' इत्यनेन द्वितीयश्लोकेन शिष्टपालनरूपो धर्मो विधीयते। राजधर्मेषु प्रजारक्षणस्य प्राधान्येन विवक्षितत्वात् प्रथमं प्रजारक्षणमित्युक्तम्। अत एव याज्ञवल्क्यः — 'प्रधानः क्षत्रिये धर्मः प्रजानां परिपालनम्' (यास्मृ. १।११९) इति। १।३९३-३९५

रक्षणीयाश्च प्रजाः भयमापन्नाः। भयं च तासां द्वेधा संपद्यते — चोरव्याघ्रादिभ्यः परसैन्येभ्यो वा। अतस्तदुभयनिवारणाय 'प्रदण्डवान्' इति 'परसैन्यानि निर्जित्य' इति चोक्तम्। एतच्च निवारणं क्षत्रियस्यैव कुतोऽसाधारणमित्याशङ्क्य तद्धेतुत्वेन शस्त्रपाणित्वं वर्णितम्। तच्च क्षत्रियस्यैव। तथा च मनुः — 'शस्त्रास्त्रभृत्त्वं क्षत्रस्य वणिक्पशुकृषिर्विशः। आजीवनार्थं धर्मस्तु दानमध्ययनं जगुः॥' (मस्मृ. १०।७९) इति। १।३९७

'प्रदण्डवान्' इत्यनेन चौरादिशिक्षा विवक्षिता। यद्यप्येषा पूर्ववचने एवोक्ता, तथापि तत्र प्राधान्येन प्रतिपादिता, अत्र तु प्रजारक्षणसाधनत्वेनेति न पौनरुक्त्यम्। १।३९८

उक्तप्रकारेण परसैन्यानि निर्जित्य जितामेतां पूर्वां च स्वकीयां भुवं राजध(? जा ध)र्मेण पालयेत्। तदेव धर्मेण पालनम् 'पुष्पमात्रं...' इति तृतीयश्लोकेन विशदीक्रियते। यथा मालाकारः आरामे यदा यदा यद्यत्पुष्पं विकसति तदा तदा तद्विचिनोति, न तु पुष्पलतामुन्मूलयति, तथा प्रजाभ्यः करमाददानो राजा यथोदयं षष्ठं भागं गृह्णीयात्। अङ्गारकारकस्तु वृक्षमुन्मूल्य सर्वात्मना दहति, न तु तथा प्रजाः पीडयेत्। पमा. १।४०३-४०४

(३) ननु एतेनाव्रतादिभ्योऽन्नदानं निषिद्धमिति गम्यते। तच्चानुपपन्नम्, पापादीनामप्यन्नदानविधानात्। सत्यम्, यत्र भिक्षासौकर्यमदेन द्विजा नाधीयते, न च व्रतमनुतिष्ठन्ति, तस्य तादृशेभ्यो भिक्षादानं निवार्य भिक्षादानं त्वपूर्वेभ्यस्तादृशेभ्योऽपि विधीयते इति न विरोधः। 'विद्वद्भोज्यान्यविद्वांसो येषु राज्येषु भुञ्जते। तान्यनावृष्टिमृच्छन्ति महद्वा जायते भयम्॥' (वाध. ३।१२) इति वसिष्ठेन तादृशानामदण्डने राजानिष्टप्रतिपादनात्।

चौरादिभयापनयनोपायमाह — प्रदण्डवानिति। ततश्च देशकालानुबन्धापराधपरीक्षणरूपेण प्रकर्षेण चौराद्यष्टादशव्यवहारपदपराजितेषु धिग्वाग्धनवधान्यतमं दण्डं कुर्यादित्यर्थः। शत्रुभयापनयनोपायमाह — निर्जित्येति। पार्ष्णिग्राहादिभिर्निजप्रजा रक्षित्वा परेषामरितन्मित्रादीनां सैन्यानि हस्त्यश्वरथपदातिसहितानि सामादिप्रयोगासंभवे सेनाप्रयोगेण नितरां तद्राष्ट्रापपीडनादिभिर्जित्वा स्ववशमानयेदित्यर्थः। एतैश्चतुर्भिर्विशेषणैः सकलव्यवहाराध्यायप्रतिपाद्योऽर्थ उपलक्षितः, तस्य सर्वयुगसाधारणत्वात्। अन्यथाऽऽचारप्रायश्चित्तवत्सोऽप्युच्छिद्येतेति।

* विम.

## द्विजशुश्रूषा शूद्रधर्मः

**[१]शूद्रस्य द्विजशुश्रूषा परमो धर्म उच्यते।**
**अन्यथा कुरुते किंचित्तद्भवेत्तस्य निष्फलम्॥**

क्रमप्राप्तान् शूद्रस्यासाधारणधर्मानाह — शूद्रस्येति। अत्र द्विजशब्दो ब्राह्मणपरः। तच्छुश्रूषायाः परमत्वं निःश्रेयसहेतुत्वात्। तदाह मनुः — 'विप्राणां वेदविदुषां गृहस्थानां यशस्विनाम्। शुश्रूषैव तु शूद्रस्य धर्मो नैश्रेयसः परः॥ शुचिरुत्कृष्टशुश्रूषुर्मृदुः शान्तोऽनहंकृतः। ब्राह्मणोपाश्रयो नित्यमुत्कृष्टां जातिमश्नुते॥' (मस्मृ. ९।३३४-३३५) इति। विष्णुपुराणेऽपि — 'द्विजशुश्रूषयैवैष पाकयज्ञाधिकारवान्। निजाञ्जयति वै लोकाञ्शूद्रो धन्यतरः स्मृतः॥' इति। १।४१८-४१९

* शेषं पमागतम्।

(१) **पस्मृ.** १।६४; **गृक.** २६६ परमो धर्म उच्यते (प्रथमं धर्मलक्षणम्) अन्यथा (यदन्यत्); **स्मृकौ.** ८९-९०; **मर.** १२ कुरुते (क्रियते) शेषं गृकवत्; **शूशि.** ३३ तृतीयचरणे (यदन्यत्कुरुते कर्म); **मुक्ता.** ६६; **शूक.** ७० (विप्रसेवैव शूद्रस्य विशिष्टं कर्म कीर्त्यते। यदतोऽन्यद्धि कुरुते तद्भवत्यस्य निष्फलम्॥) मनुपराशरौ; **सस्मृ.** ९९ शूद्रस्य (शूद्राणां) द्वितीयचरणे (परो धर्मः प्रकीर्तितः) तद्भवेत्तस्य (विभवस्तस्य).

अन्यथा द्विजशुश्रूषामन्तरेण यदि किंचित् पाकयज्ञादिकं कुर्यात् तत्सर्वं निष्फलं भवेत्। तदुक्तं मनुना – 'विप्रसेवैव शूद्रस्य विशिष्टं कर्म कथ्यते। यदतोऽन्यद्धि कुरुते तद्भवेत्तस्य निष्फलम्॥' (मस्मृ. १०।१२३) इति। तस्मात् द्विजशुश्रूषैव तस्य परमो धर्मः, क्षत्रियवैश्यशुश्रूषा तु केवलवृत्त्यर्थत्वादपरमो धर्मः। अत एव मनुना विप्रशुश्रूषाया उभयार्थत्वमितरशुश्रूषायाः केवलवृत्त्यर्थत्वं च दर्शितम् – 'शूद्रस्तु वृत्तिमाकाङ्क्षन् क्षत्रमाराधयेद्यदि। धनिनं वाऽप्युपाराध्य वैश्यं शूद्रो जिजीविषेत्॥ स्वर्गार्थमुभयार्थं वै विप्रानाराधयेत्तु सः। जातब्राह्मणशब्दः स्यात्सा ह्यस्य कृतकृत्यता॥' (मस्मृ. १०।१२१-१२२) इति।

*पमा.१।४२०-२१

शूद्रस्य मद्यविक्रयादीनि
पातित्यनिमित्तानि

[१]**विक्रीणन्मद्यमांसानि ह्यभक्ष्यस्य च भक्षणम्।**
**कुर्वन्नगम्यागमनं शूद्रः पतति तत्क्षणात्॥**

(१)शूद्रस्यापि वर्ज्यानाह – विक्रीणन्निति। मद्यं च बहुविधं तालपानसद्राक्षमाधूकखार्जूरादिकम्। अभक्ष्यं गोमांसादि। अगम्याः भगिन्यादयः। स्पष्टमन्यत्।

पमा. १।४२३

(२)मद्यं गौड्यादि सर्वम्। मांसं भक्ष्यमभक्ष्यं च। अयं च निषेधोऽनापदि। आपदि तु न दोष इत्युक्तं प्राक्। अभक्ष्यं गोमांसादि, तद्भक्षणात्(?) कलौ गोपशुनिषेधात्। अगम्यागमनं मातृभगिन्यादिगमनम्। अत्र च सुरामद्यादिनिषेधेषु विशिष्य त्रैवर्णिकानामेवोपादानाच्छूद्रस्य सुरापानमनिषिद्धमेव, 'पतत्यर्धं शरीरस्य यस्य भार्या सुरां पिबेत्। पतितार्धशरीरस्य निष्कृतिर्न विधीयते॥' (वाध. २१।१५, पस्मृ. १०।२६) इति मनु(?)वचनात्। त्रैवर्णिकस्त्रीमात्रपरत्वे त्वेतदनर्थकम्, 'तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत्' (मस्मृ. ११।९३) इत्येव निषेधसिद्धेः, उद्देश्यगतत्वेन पुंस्त्वस्याविवक्षितत्वात्। अत एव निषेधस्य जातिमात्रनिबन्धनत्वादनुपनीतानां ब्राह्मण्यादीनां च तन्निषेधः सिध्यति। एवं सुरापशूद्रसंसर्गे संसर्गप्रायश्चित्तमपि न भवति। यस्य हि सुरादिमद्यपानं निषिद्धं तस्य तत्सेवने पातित्यम्। पतितसंसर्गश्च पातित्यहेतुः, 'तत्संसर्गी च पञ्चमः' इति स्मृतेश्च। तथा च शूद्रस्य सुराया अप्रतिषिद्धत्वात् न तत्संसर्गेऽन्येषां प्रायश्चित्तम्। त्रैवर्णिकानां तु मद्यपानं निषिद्धमिति तत्संसर्गे शूद्रस्य प्रायश्चित्तमस्त्येव। किंतु यादृशसुरापसंसर्गे यत्प्रायश्चित्तमुक्तं तच्छूद्रस्य चतुर्थांशन्यूनं कल्प्यमित्याहुः। ब्रह्महत्यादि तु शूद्रस्यापि निषिद्धम्, अहिंसायाः सर्ववर्णसाधारणधर्मत्वात्। तदाह विष्णुः – 'क्षमा सत्यं दमः शौचं दानमिन्द्रियसंयमः। अहिंसा गुरुशुश्रूषा तीर्थानुसरणं दया। आर्जवं लोभशून्यत्वं देवब्राह्मणपूजनम्। अनभ्यसूया च तथा धर्मः सामान्य उच्यते॥' (विस्मृ. २।१६-१७)

शूशि. ५५-५६

(३)मद्यं पानसादि द्वादशविधम्। ....मांसं भक्ष्यमभक्ष्यं च। बहुवचनाच्चार्मलाक्षयोर्ग्रहणम्। ....एतानि विक्रीणन्, अभक्ष्यं गोमांसादि तस्य भक्षणम्, अगम्याः मातृभगिन्यादयस्तासां गमनं च कुर्वन् शूद्रस्तत्क्षणात् सद्यः सकृद्विक्रयभक्षणगमनैरपि पतति द्विजातिपरिचर्यानर्हो भवति।

....ननु मध्वादिविक्रयस्य अभक्ष्यभक्षणादीनां च साधारणनिषेधेनैव सिद्धौ पुनर्निषेधो व्यर्थ इति चेत्, न, सद्यःपातित्यप्रतिपादनार्थत्वात्। नन्वेवमपि अगम्यागमननिषेधो न कार्यः, तस्य सद्य एव पातित्यहेतुत्वात्, इति चेत्, मैवम्, मात्राद्यतिरिक्तपरदारमात्रगमनेऽपि तस्य पातित्याभिधायकत्वात्। विम.

[१]**कपिलाक्षीरपानेन ब्राह्मणीगमनेन च।**
**वेदाक्षरविचारेण शूद्रश्चाण्डालतां व्रजेत्॥**

(१)वेदाक्षराणां विचारो ज्ञानम्, चरतेर्गत्यर्थत्वात् 'ये गत्यर्थाः ते ज्ञानार्थाः' इति न्यायाच्च। ज्ञानं श्रवणेन

* शूक., विम. पमागतम्।

(१) **पस्मृ.** १।६६; **शूशि.** ५५ 'भक्षणम्' इति पाठे 'भक्षणात्' इति तु व्याख्यानपाठः; **आन.** ४०३ उत्त., (=).

(१) **पस्मृ.** १।६७; **स्मृकौ.** ४४; **आत.** ३५३ स्मृतिः; **शूशि.** ४१; **मुक्ता.** ६७; **शूक.** १३ : ६१ लघुपराशरः; **संम.** ८० बृहत्पराशरः; **आन.** ४०३ श्चाण्डा (श्वण्डा) तां व्रजेत् (तामियात्) (=) : ६३९ श्चाण्डा (श्वण्डा); **बाल.** १।९५ पृ. ३१४ : १।१२१ पृ. ३७९ (=); **सस्मृ.** ९९ चतुर्थचरणे (शूद्रः पतति तत्क्षणात्).

अध्ययनेन तदर्थचिन्तनेन भवतीति तत् त्रयं प्रतिषिध्यते।.... एतेन वेदार्थविचारात्मकं यच्च यावच्च तत् सर्वं प्रतिषिध्यते। शूशि. ४१-४२

(२) वेदार्थज्ञाननिषेधात् मीमांसाद्यध्ययनमपि निषिद्धम्। तथा वेदमूलत्वात् स्मृतिपुराणाद्यध्ययनं निषिद्धम्, 'पुराणं पञ्चमो वेदः पुराणं वेदसंमितम्।' इति स्मृतेः। शूक. १४

(३) कपिलायाः गोः क्षीरस्य पानेन। यद्यप्येतद्धुतशेषाभावे ब्राह्मणस्य, क्षत्रियवैश्ययोश्च जात्यैव निषिद्धम्, 'क्षत्रियश्चैव वृत्तस्थो वैश्यः शूद्रोऽपि वा पुनः। यः पिबेत्कपिलाक्षीरं न ततोऽन्योऽस्त्यपुण्यकृत्॥' इत्यापस्तम्बस्मरणात्, 'कपिलायाः पिबेच्छूद्रो नरके स विपच्यते। हुतशेषं पिबेद्विप्रः सोऽपि स्यादन्यथा पशुः॥' इति भविष्यवचनाच्च, तथापि शूद्रचाण्डालतापादककर्म(त्व)सामान्येनात्राभिहितम्। एवमुत्तरत्रापि जातिमात्रेण ब्राह्मणीगमनेन। न चागम्यागमननिषेधेनास्य पौनरुक्त्यं शङ्क्यम्, प्रत्यवायभेदात्। तथाहि — पूर्वं पातित्यमात्रं प्रायश्चित्तापनोद्यमगम्यागमनेन जन्यत इत्युक्तम्, अत्र तु चाण्डालत्वरूप8जात्यन्तरत्वं प्रायश्चित्तानपनोद्यं ब्राह्मणीगमनेन जन्यते इत्युच्यते इति न पौनरुक्त्यम्। चकाराच्छालग्रामपूजनेन। तदाह आपस्तम्बः — 'प्रणवोच्चारणाच्चैव शालग्रामशिलार्चनात्। ब्राह्मणीगमनाच्चापि शूद्रश्चाण्डालतामियात्॥' इति। विशेषस्त्वत्रोपपादितोऽधस्तात्। वेदाक्षराणां विचारेण। विचारो नाम अत्र ज्ञानम्, चरधातोर्गत्यर्थत्वात्तदर्थानां च ज्ञानार्थत्वात्। ज्ञानं च श्रवणोच्चारणार्थजिज्ञासाभिर्जायते इति श्रवणादीनां निषेधः। ....अर्थजिज्ञासा तु स्वाध्यायाध्ययनविधेरर्थज्ञानफलकत्वादध्ययननिषेधेनैव निषिद्धा। अर्थज्ञाननिषेधे च तत्साधनानां पुराणन्यायमीमांसाधर्मशास्त्राङ्गानामपि निषेधः।.... एवं वेदज्ञानसाधनानां श्रवणादीनां निषेधेऽपि पुराणश्रवणे प्रतिप्रसवो महाभारते — 'श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः।' इति। अत्र श्रावणस्य वृत्त्यर्थत्वेनाविधेयत्वाच्चतुर्णामपि वर्णानां श्रवणं विधीयते, 'एतया निषादस्थपतिं याजयेत्' इतिवत्।

8 जातिशब्दोऽयं जातिमत्परः, अन्यथा त्वप्रत्ययो न युज्येतेति, त्वप्रत्ययो वा प्रामादिक इति बोध्यम्।

....एतैः प्रत्येकमनुष्ठितैः शूद्रश्चाण्डालतां व्रजेत् शूद्रजातिं परित्यज्य चाण्डालजातिं सर्वधर्मबहिष्कृतां प्राप्नोति। ननु नित्यामूर्ताया जातेरुपगमापगमौ न स्त इति चेत्, मैवम्, येषां प्रत्यक्षजातिस्तेषामस्तु तथा, येषां तु शास्त्रैकसमधिगम्या तेषां यथाशास्त्रमुपगमापगमयोरपि स्वीकारत्। अन्यथा 'जात्युत्कर्षो युगे ज्ञेयः सप्तमे पञ्चमेऽपि वा। व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम्॥' (यास्मृ. १।९६) इत्याद्यनेकवाक्योपप्लवः स्यादित्यादिविशेषमष्टमे वक्ष्यामः। विम.

ग्रहणे स्नानदानादीनां रात्रावपि कर्तव्यता,
चन्द्रग्रहणे दानस्य प्रशंसा, ग्रहणे
सर्वं जलं गङ्गासमम्

**+[1]भास्करस्य करैः पूतं दिवास्नानं प्रशस्यते।**
**अप्रशस्तं निशि स्नानं राहोरन्यत्र दर्शनात्॥**

(१) राहुदर्शनग्रहणं संक्रान्त्यादेरपि प्रदर्शनार्थम्। अत एव देवलः — 'राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु। स्नानदानादिकं कुर्यान्निशि काम्यव्रतेषु च॥' *स्मृच. २।३१६

(२) ग्रहणस्नाने रात्रिस्नानस्य प्रतिप्रसवं विवक्षित्वा राहोरन्यत्र दर्शनादित्युक्तम्। पमा. २।३७४

(३) नन्वेवं चन्द्रग्रहणेऽपि रात्रौ स्नानं न स्यादित्यत आह — राहोरन्यत्र दर्शनादिति। तदाह **वृद्धयाज्ञवल्क्यः** —'ग्रहणोद्वाहसंक्रान्तियात्रार्तिप्रसवेषु च। स्नानं नैमित्तिकं ज्ञेयं रात्रावपि तदिष्यते॥' इति आर्तिः मरणम्। विम.

**[2]स्नानं दानं जपो होमः कर्तव्यो राहुदर्शने।**
**अन्यदा त्वशुची रात्रिस्तस्मात्तां परिवर्जयेत्॥**

स्नानदृष्टान्तेन दानादीनामपि प्रतिप्रसवमाह — स्नानमिति। यद्यपि रात्रौ दानादिप्रतिषेधो न मूलवचने

+ एतत्संपूर्णवचनव्याख्यानसंग्रहः आह्निकविभागे संग्रहीष्यते।
* गृर., आप्र. स्मृचवत्।
(१) **पस्मृ.** १२।२२; **निक.** ३७ भास्करस्य क (दिवाकरक); **स्मृच.** २।३१६ निशि स्ना (निशास्ना) शेषं निकवत्; **गृर.** १९१ निकवत्; **पमा.** १२।२१; **मुक्ता.** २७०; **आप्र.** १६६ निकवत्, पाराशरः.
(२) **पस्मृ.** १२।२२ इत्यस्मादनन्तरमादर्शान्तरे अधिकः; **मुक्ता.** २७० कर्तव्यो (कर्तव्यं).

प्रस्तुतः, तथापि शास्त्रान्तरसिद्धं प्रतिषेधं हृदि निधायायं प्रतिप्रसव इति द्रष्टव्यम्। अन्यदा राहुदर्शनरहिते काले रात्रिः स्नानादिष्वशुचिः। तस्मात् स्नानादिकं चिकीर्षुस्तां रात्रिं परिवर्जयेत्। पमा. २।३७५

**[१]मरुतो वसवो रुद्रा आदित्याश्चाथ देवताः।**
**सर्वे सोमे प्रलीयन्ते तस्माद्दानं तु संग्रहे॥**

(१) सोमग्रहणकालस्य दानाद्यर्हत्वमुपपादयति — मरुत इति। पमा. २।३७५

(२) ग्रहणस्नानप्रसङ्गाद्ग्रहणदानेऽप्यर्थवादेन पुरस्तात् प्रतिप्रसवमाह — मरुत इति। संग्रहे सम्यक् राहुणा ग्रस्यमाने चन्द्रे मरुद्वसुरुद्रादित्यादयः सर्वेऽपि देवा नश्यन्ति, तस्माद्दानं कृत्वा ते रक्षणीया इति। यद्यपि रात्रिदानप्रतिषेधो न मूलवचने प्रस्तुतस्तथापि वक्ष्यमाणं तमादायायं प्रतिप्रसव इति ज्ञेयम्। विम.

**खलयज्ञे विवाहे च संक्रान्तौ ग्रहणे तथा।**
**शर्वर्यां दानमस्त्येव नान्यत्र तु विधीयते॥**

(१) राहुदर्शन इव खलयज्ञादावपि रात्रिदानमभ्यनुजानाति — खलयज्ञे इति। पमा. २।३७५

(२) यथा ग्रहणे रात्रौ दानं प्रतिप्रसूतं तथा खलयज्ञविवाहरविसंक्रान्तिष्वपि रात्रौ दानं भवतीति ज्ञेयम्। खलयज्ञो द्वितीयाध्याये वर्णितः। *विम.

**[२]पुत्रजन्मनि यज्ञे च तथा चात्ययकर्मणि।**
**राहोश्च दर्शने दानं प्रशस्तं नान्यदा निशि॥**

(१) यज्ञे अवभृथे। +स्मृच. २।३१६

(२) पुनरपि राहुदर्शनं दृष्टान्तेनोदाहृत्य पुत्रजन्मादौ रात्रिदानमभ्यनुजानाति — पुत्रजन्मनीति। पमा. २।३७५

(३) यज्ञे ज्योतिष्टोमादौ। ⇩विम.

(४) यज्ञ इति 'महारात्रे बुद्ध्वा' (आपश्रौ. १२।१।१) इत्यादाववभृथे च। आन. २३७

**[१]सर्वं गङ्गासमं तोयं राहुग्रस्ते दिवाकरे।**
**सोमग्रहे तथैवोक्तं स्नानदानादिकर्मसु॥**

(१) ननु सोमग्रहणे रात्रावपि स्नातव्यमित्युक्तम्, तदयुक्तम्, उदकस्य शुद्ध्यभावात्। तदाह पैठीनसिः— 'अपेयं तु तथा तोयं रात्रौ मध्यमयामयोः। स्नानं चैव न कर्तव्यं तथैवाऽऽचमनक्रिया॥' इति। तस्माद्रात्रौ स्नानं कथमभ्युपगम्यते? इत्याशङ्क्य, सोमग्रहादिव्यतिरिक्तविषयेयमशुद्धिरित्याह — सर्वमिति। सोमग्रहस्योपलक्षणत्वात् संक्रान्त्यादिष्वपि नास्त्यशुद्धिदोषः। पमा. २।३७७

(२) रविग्रहदृष्टान्तो निर्विवादताबोधनार्थः। तथा च भरद्वाजः — 'चन्द्रसूर्योपरागे तु यत्कर्तव्यं तदुच्यते। सर्वं हेमसमं दानं सर्वे ब्रह्मसमा द्विजाः। सर्वं गङ्गासमं तोयं राहुग्रस्ते दिवाकरे॥' इति। ×विम.

### शूद्रेण सहान्नग्रहणसहासनादिव्यवहारा द्विजपातित्यहेतवः, पशुवन्मुखेन जलपानं ब्राह्मणस्य निषिद्धम्

**[२]शूद्रान्नं शूद्रसंपर्कः शूद्रेण तु सहासनम्।**
**शूद्राज्ज्ञानागमश्चापि ज्वलन्तमपि पातयेत्॥**

शूद्रान्नं दृष्टान्तीकृत्य तद्वच्छूद्रसंपर्कादीन् प्रतिषेधति — शूद्रान्नमिति। एकस्मिन् गृहे शूद्रेण सह वासः शूद्रसंपर्कः। कृष्यादिकं कारयतां कृषीवलैः शूद्रैः सह कदाचिदेकस्मिन् शकटादावुपवेशनं सहासनम्। पुराणादिश्रवणादिजातधर्माधर्मविवेकात् प्राज्ञात् शूद्राद्धर्माधर्मप्राप्तिः ज्ञानागमः। एते शूद्रान्नादयः ज्वलन्तं ब्रह्मवर्चसेन विख्यातमपि पुरुषं नरके पातयन्ति, तस्मात्ते वर्जनीयाः। +पमा २।३७९-३८०.

---

* शेषं पमावत्।

\+ मुक्ता., आप्र. स्मृचवत्।

⇩ शेषं पमावत्।

(१) **पस्मृ.** १२।२३-२४.

(२) **पस्मृ.** १२।२५; **स्मृच.** २।३१६ चात्ययकर्मणि (संक्रमणे रवेः) दानं (स्नानं) नान्यदा (नान्यथा); **मपा.** २६२ स्मृचवत्; **मुक्ता.** २७१ स्मृचवत्; **आप्र.** १६६ स्मृचवत्; **आन.** २३७ स्मृचवत्.

× शेषं पमागतम्।

\+ विम. पमागतम्।

(१) **पस्मृ.** १२।२९; **समु.** ६३ तथैवो (तथा चो); **मुक्ता.** २७१.

(२) **पस्मृ.** १२।३४; **मर.** ३३८-३३९ संपर्कः (संकल्पः) तु (च); **मुक्ता.** ६९ संपर्कः (संपर्कं) तु (च) : ४४५; **संप्र.** ५१३ तु (च) श्चापि (श्चैव); **आन.** ३७६-३७७ संपर्कः (संपर्कं) (=).

[१]**यः शूद्रया पाचयेन्नित्यं शूद्री च गृहमेधिनी।**
**वर्जितः पितृदेवेभ्यो रौरवं याति स द्विजः॥**

वर्ज्यान्तरमाह – य इति। यो विप्रः केनचिन्निमित्तेन परस्थलादौ निवसन् स्वकीयमेवान्नं शूद्रस्त्रिया पाचयेत्। यस्य च ग्रामे निवसतोऽपि ऊढाऽनूढा वा शूद्रा गृहिणी भवति। द्विविधोऽपि स विप्रो हव्यकव्यानुष्ठानायोग्यः सन् नरकमाप्नोति। +पमा. २।३८०

[२]**दक्षिणार्थं तु यो विप्रः शूद्रस्य जुहुयाद्धविः।**
**ब्राह्मणस्तु भवेच्छूद्रः शूद्रस्तु ब्राह्मणो भवेत्॥**

(१) शूद्रार्थे होमानुष्ठानं प्रतिषेधति – दक्षिणार्थमिति। यो विप्रः शूद्राद्दक्षिणामादाय तदीयं हविः शान्तिपुष्ट्यादिसिद्धये वैदिकैर्मन्त्रैर्जुहोति, तस्य ब्राह्मणस्यैव तत्र प्रत्यवायः शूद्रस्तु होमफलं लभेदिति। *पमा.

(२) नन्वेवं शूद्रान्नं मा नाम भुञ्जताम्, यागाद्यर्थं तद्ग्रहणे को दोषः? इत्यत आह – दक्षिणार्थमिति। यो विप्रः शूद्रस्य दक्षिणार्थं शूद्रात् यागार्थं गृहीताया दक्षिणाया निर्वाहाय हविर्जुहोति ज्योतिष्टोमादिभिर्यजते स जीवन् शूद्रो ब्रह्मकर्मानर्हः प्रेत्य चण्डालश्च भवति। तथा च मनुः – 'न यज्ञार्थं धनं शूद्राद्विप्रो भिक्षेत धर्मवित्। यजमानोऽपि भिक्षित्वा चण्डालः प्रेत्य जायते॥' (मस्मृ. ११।२४) इति। न चैतावता शूद्रस्य यज्ञार्थद्रव्यदानप्रतिषेध इत्याह – शूद्रस्तु ब्राह्मणो भवेदिति। यः शूद्रो यज्ञफलकामनया यज्ञपर्याप्तं द्रव्यं दत्त्वा ब्राह्मणद्वारा यज्ञं कारयति स जात्या शूद्रोऽपि ब्राह्मणवद्यज्ञफलभाग्भवति। विम.

(३) 'दक्षिणार्थं तु ....' इति पराशरवचनं तु अनिष्पन्नस्वत्वकहविष्परमित्याहुः। बाल. १।१२१ पृ. ३८२

[३]**विद्यमानेषु हस्तेषु ब्राह्मणो ज्ञानदुर्बलः।**
**तोयं पिबति वक्त्रेण श्वयोनौ जायते ध्रुवम्॥**

(१) अथ तटाकादौ पशुवन्मुखेन जलपानं निषेधति – विद्यमानेष्विति। पमा. ३८८

(२) इदानीमनन्तराध्यायोक्तनिषिद्धजलपानप्रायश्चित्तविधिशेषमाह – विद्यमानेषु इति। 'जलं पिबेन्नाञ्जलिना' (यास्मृ. १।१३८) इति निषेधस्य सार्वकालिकत्वभ्रमेण विशेषज्ञानहीनो यो ब्राह्मणो विद्यमानेष्वपि हस्तेषु गवादिवत् वक्त्रेणैव तोयं पिबेत् स जन्मान्तरे श्वयोनौ अभिजायते। हस्तसद्भावकीर्तनं पात्राभावे तेनापि जलपानाभ्यनुज्ञानार्थम्। बहुवचनं स्वपरहस्ताभिप्रायेण तेन स्वहस्ताभावे परहस्तेनापि पेयमिति। विम.

चन्द्रग्रहणे रात्रावपि स्नानदानविधिः

[१]**यथा स्नानं च दानं च सूर्यस्य ग्रहणे दिवा।**
**सोमस्यापि तथा रात्रौ स्नानं दानं विधीयते॥**

राहुदर्शनं संक्रान्त्यादेरप्युपलक्षणम्। आप्र. १६६

द्विजत्वोपाधयः

[२]**यावज्जुहोत्यधीते च ददात्यध्यापयत्यपि।**
**जपत्यर्चति देवांश्च तावत्तु द्विज उच्यते॥**

शुश्रूषादयः शूद्रधर्माः

[३]**शुश्रूषैव तु शूद्रस्य धर्मो 8निःश्रेयसः परः॥**
**शुचिरुत्कृष्टशुश्रूषुर्मृदुवागनहंकृतः।**
**ब्राह्मणोपाश्रयो नित्यमुत्कृष्टां जातिमश्नुते॥**

ग्रहणे सर्वतोयद्विजदेयवस्तूनि क्रमेण गङ्गाब्रह्मभूमिसमानि

[४]**सर्वं गङ्गासमं तोयं सर्वे ब्रह्मसमा द्विजाः।**
**सर्वं भूमिसमं दानं ग्रहणे चन्द्रसूर्ययोः॥**

---

+ विम. पमागतम्।
* गभा., शूक., सिन्धु. पमावत्।
(१) पस्मृ. १२।३५.
(२) पस्मृ. १२।३८; गभा. १९४; सिन्धु. ८७१; शूक. ४६; बाल. १।१२१ पृ. ३८२.
(३) पस्मृ. १२।५५.

8 निःश्रेयसमस्यास्तीत्यर्शआद्यजन्तं ग्राह्यम्।
(१) निक. ३७; गृर. १९१ पूर्वार्धे (स्नानं दानं च सूर्यस्य ग्रहणे शस्यते दिवा।); आप्र. १६६ णे दिवा (णेऽपि वा) पाराशरः.
(२) गृक. २९०; गृर. ४९६ तृतीयचरणे (यजत्यतिथिदेवांश्च).
(३) शूक. ६९ मनुपराशरौ.
(४) आन. २४२ पराशरव्यासौ.

शूद्रान्नभक्षणेन ब्राह्मणस्य दुर्गतिः

[1]शूद्रान्नेनोदरस्थेन ब्राह्मणो म्रियते यदि।
त्रिकालज्ञो वेदवेदी धर्मज्ञोऽथ षडङ्गवित्।
चतुर्वेद्यपि यो विप्रः स प्रेतो जायते नरः॥

## बृहत्पराशरः

स्नानसंध्याजपदेवतापूजनवैश्वदेवातिथ्यानि ब्राह्मणस्य नित्यकर्तव्यानि

[2]षट्कर्माभिरतो नित्यं देवतातिथिपूजकः।
हुतशेषं च भुञ्जानो ब्राह्मणो नावसीदति॥
संध्या स्नानं जपश्चैव देवतानां च पूजनम्।
वैश्वदेवं तथाऽऽतिथ्यं षट्कर्माणि दिने दिने॥

स्नानजपदानभोगांनां वैयर्थ्यनिमित्तानि

वृथा ह्युष्णोदकस्नानं वृथा जप्यमवैदिकम्।
वृथा चाश्रोत्रिये दानं वृथा भुक्तमसाक्षिकम्॥

ग्रहणादिषु उष्णवारिस्नानस्य निषेधः

रविसंक्रान्तिवारेषु ग्रहणेषु शशिक्षये।
व्रतेषु चैव षष्ठीषु न स्नायादुष्णवारिणा॥

गोब्राह्मणादीनां पूज्यत्वम्

[3]ग्रहा गावो नृपा विप्राः सद्भिः पूज्याः सदा नरैः।
पूजिताः पूजयन्त्येते निर्दहन्त्यपमानिताः॥
यो हितः सर्वसत्त्वेषु नृपगोब्राह्मणेषु च।
इहामुत्र च पूज्योऽसौ विष्णुलोकमवाप्नुयात्॥

ब्राह्मणक्षत्रियवैश्यानां प्रत्येकं षट् कर्माणि

यजनं याजनं विप्रे तथा दानप्रतिग्रहौ।
अध्यापनमध्ययनं कर्माण्येतानि षट् तथा॥
प्रजानां रक्षणं दानमरीणां निग्रहस्तथा।
यजनाध्ययने राज्ञि विषयासक्तिवर्जनम्॥
यजनाध्ययने दानं पाशुपाल्यं तथा निशि।
वाणिज्यं च कुसीदं च कर्मषट्कं प्रकीर्तितम्॥

शूद्रस्य द्विजशुश्रूषादयो धर्माः कपिलाक्षीरपानादयः अधर्माश्च

शुश्रूषा ब्राह्मणादीनां तदाज्ञापालनं तथा।
एष धर्मः स्मृतः शूद्रे वाणिज्येन च जीवनम्॥
शूद्रस्य द्विजशुश्रूषा परो धर्मः प्रकीर्तितः।
अन्यथा कुरुते यत्तु तद्भवेत्तस्य निष्फलम्॥
कपिलाक्षीरपानेन ब्राह्मणीगमनेन च।
वेदाक्षरविचारेण शूद्रस्य नरको ध्रुवम्॥

गवां गोपूजादानादीनां च प्रशंसा गोपालनेतिकर्तव्यता च

[1]अनादेयतृणान्यत्त्वा स्रवन्त्यनुदिनं पयः।
तुष्टिदा देवतादीनां पूज्या गावः कथं न ताः॥
स्पृष्टाश्च गावः शमयन्ति पापं
संसेविताश्चोपनयन्ति वित्तम्।
ता एव दत्तास्त्रिदिवं नयन्ति
गोभिर्न तुल्यं धनमस्ति किंचित्॥
यस्याः शिरसि ब्रह्माऽऽस्ते स्कन्धदेशे शिवः स्थितः।
पृष्ठे नारायणस्तस्थौ श्रुतयश्चरणेषु च॥
या अन्या देवताः काश्चित्तस्या लोमसु ताः स्थिताः।
सर्वदेवमया गावस्तुष्येत्तद्भक्तितो हरिः॥
हरन्ति स्पर्शनात् पापं पयसा पोषयन्ति याः।
प्रापयन्ति दिवं दत्ताः पूज्या गावः कथं न ताः॥
यत्खुराहतभूमेर्ये उत्पद्यन्ते रजःकणाः।
प्रलीनं पातकं तैस्तु पूज्या गावः कथं न ताः॥
शकृन्मूत्रं हि यस्यास्तु पीतं दहति पातकम्।
किमपूज्यं हि तस्या गोरिति पाराशरोऽब्रवीत्॥
गौरवत्सा न दोग्धव्या न चैवं गर्भसंधिनी।
प्रसूता च दशाहार्वाग्दोग्धि चेन्नरकं व्रजेत्॥
[2]दुर्बला व्याधिसंयुक्ता पुष्पिता या द्विवत्सका।
साधुभिर्न च दोग्धव्या धार्मिकैर्धनमीप्सुभिः॥

---

(१) प्रपा. २४१; विपा. २।४९६ थ षडङ्गवित् (प्यषडन्वितः) नरः (ततः); संग. ६९० थ षडङ्गवित् (प्यषडान्वितः) नरः (ततः).

(२) बृपसं. २।३,७, १०८-१०९, ११२-११३.

(३) बृपसं. ४।१५५-१५६, २१७-२२०, २२६, २२९.

(१) बृपसं. ५।९-१६.

(२) बृपसं. ५।१७; इन्दु. २९३ वत्सका (वत्ससूः) उत्तरार्धे (सा साधुभिर्न दोग्धव्या वणिग्भिः सुखमीप्सुभिः॥) पराशरः.

[1]कुलान्ते पुष्पिता गावः कुलान्ते बहवस्तिलाः।
कुलान्ते चलचित्ता स्त्री कुलान्ते बन्धुविग्रहः॥
एकत्र पृथिवी सर्वा सशैलवनकानना।
तस्या गौर्ज्यायसी साक्षादेकत्रोभयतोमुखी॥
यथोक्तविधिना चैता वर्णैः पाल्याः सुपूजिताः।
पालयन् पूजयन्नेताः स प्रेत्येह च मोदते॥
दक्षिणाभिमुखा गाव उत्तराभिमुखा अपि।
बन्धनीयास्तथैताः स्युर्न प्राक्पश्चिमतोमुखाः॥
वाजिगोवृषशालायां सुतीक्ष्णं लोहदात्रकम्।
स्थाप्यं तु सर्वदा तत् स्यादवलुप्तविमोक्षकृत्॥
गावो देयाः सदा रक्ष्याः पाल्याः पोष्याश्च सर्वदा॥
ताडयन्ति च ये पापा ये चाऽऽक्रोशन्ति ता नराः।
नरकाग्नौ प्रपच्यन्ते गोनिःश्वासप्रपीडिताः॥
सपलाशेन शुष्केण ता दण्डेन निवर्तयेत्।
गच्छ गच्छेति तां ब्रूयान्मा मा भैरिति वारयेत्॥
संस्पृशन् गां नमस्कृत्य कुर्यात्तां च प्रदक्षिणम्।
प्रदक्षिणीकृता तेन सप्तद्वीपा वसुंधरा॥
तृणोदकादिसंयुक्तं यः प्रदद्याद्गवाह्निकम्।
सोऽश्वमेधसमं पुण्यं लभते नात्र संशयः॥
गवां कण्डूयनं स्नानं गवां दानसमं भवेत्।
तुल्यं गोशतदानस्य भयतो गां प्रपाति यः॥
पृथिव्यां यानि तीर्थानि आसमुद्रं सरांसि च।
गवां शृङ्गोदकस्नानकलां नार्हन्ति षोडशीम्॥
पातकानि कुतस्तेषां येषां गृहमलंकृतम्।
सततं बालवत्साभिर्गोभिः श्रीभिरिव स्वयम्॥
ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम्।
तिष्ठन्त्येकत्र मन्त्रास्तु हविरेकत्र तिष्ठति॥
गोभिर्यज्ञाः प्रवर्तन्ते गोभिर्देवाः प्रतिष्ठिताः।
गोभिर्वेदाः समुद्गीर्णाः षडङ्गाः सपदक्रमाः॥
सौरभेयास्तु यस्याग्रे पृष्ठतो यस्य ताः स्थिताः।
वसन्ति हृदये नित्यं तासां मध्ये वसन्ति ये॥
ते पुण्यपुरुषाः क्षोण्यां नाकेऽपि दुर्लभाश्च ते।
ये गोभक्तिकरा नित्यं भवन्ते ये च गोप्रदाः॥
शृङ्गमूले स्थितो ब्रह्मा शृङ्गमध्ये तु केशवः।
शृङ्गाग्रे शंकरं विद्यात् त्रयो देवाः प्रतिष्ठिताः॥
शृङ्गाग्रे सर्वतीर्थानि स्थावराणि चराणि च।
सर्वे देवाः स्थिता देहे सर्वदेवमयी हि गौः॥
ललाटाग्रे स्थिता देवी नासामध्ये तु षण्मुखः।
कम्बलाश्वतरौ नागौ तत्कर्णाभ्यां व्यवस्थितौ॥
स्थितौ तस्याश्च सौरभ्याश्चक्षुषोः शशिभास्करौ।
दन्तेषु वसवश्चाष्टौ जिह्वायां वरुणः स्थितः॥
सरस्वती च हुंकारे यमयक्षौ च गण्डयोः।
ऋषयो रोमकूपेषु प्रस्त्रावे जाह्नवीजलम्॥
कालिन्दी गोमये तस्या अपरा देवतास्तथा।
अष्टाविंशतिदेवानां कोट्यो लोमसु ताः स्थिताः॥
उदरे गार्हपत्योऽग्निर्हृदये दक्षिणस्तथा।
मुखे चाऽऽहवनीयस्तु सभ्यावसथ्यौ च कुक्षिषु॥
एवं यो वर्तते गोषु ताडनक्रोधवर्जितः।
महतीं श्रियमाप्नोति स्वर्गलोके महीयते॥
कुलं तस्या न शङ्केत पूतिगन्धं न वर्जयेत्।
यावत् पिबति तद्दुग्धं तावत् पुण्यं प्रवर्धते॥
यो गां पयस्विनीं दद्यात्तरुणां वत्ससंयुताम्।
शिवस्याऽऽयतने दत्त्वा दत्तं तेन तु विश्वकम्॥

वृषभस्य वृषभपूजादानादेश्च
प्रशंसा

उक्षाणो वेधसा सृष्टाः सस्यस्योत्पादनाय च।
तैरुत्पादितसस्येन सर्वमेतद्विधार्यते॥
यश्चैतान् पालयेद्यत्नाद्वर्धयेच्चैव यत्नतः।
जगन्ति तेन सर्वाणि साक्षात् स्युः पालितानि च॥
यावद्गोपालने पुण्यमुक्तं पूर्वमनीषिभिः।
उक्ष्णोऽपि पालने तेषां फलं दशगुणं भवेत्॥
जगदेतद्धृतं सर्वमनडुद्भिश्चराचरम्।
वृष एव ततो रक्ष्यः पालनीयश्च सर्वदा॥
धर्मोऽयं भूतले साक्षाद्ब्रह्मणा ह्यवतारितः।
त्रैलोक्यधारणायालमन्नानां च प्रसूतये॥
अनादेयानि घासानि विघसन्ति स्वकामतः।
भ्रमित्वा भूतलं दूरमुक्षाणं को न पूजयेत्॥
उत्पादयन्ति सस्यानि मर्दयन्ति वहन्ति च।
आनयन्ति दधीय(?)स्तदुक्षतः कोऽधिको भुवि॥
स्कन्धेन दूराच्च वहन्ति भार-
माख्याति पत्युर्न च भारयुक्ताः।

(१) बृपसं. ५।१८-५४, १७८.

स्वीयेन देहेन परस्य जीवान्
पुष्यन्ति रक्षन्ति च वर्धयन्ति॥
पुण्यास्तु गावो वसुधातले या
बिभ्रत्यमुं गोवृषगर्भभारम्।
भारः पृथिव्या दशताडिताया
एकस्य चोक्ष्णो ह्यपि साधुवाचः॥
एकेन दत्तेन वृषेण येन
भवन्ति दत्ता दश सौरभेय्यः।
माहेय्यपीयं धरणीसमाना
तस्माद्वृषात् पूज्यतमोऽस्ति नान्यः॥
उत्पाद्य सस्यानि तृणं चरन्ति
तदेव भूयः सततं वहन्ति।
न भारखिन्नाः प्रवदन्ति किंचि-
दहो वृषैर्जीवति जीवलोकः॥

ग्रहणनिमित्तकस्य दानसामान्यस्य कर्तव्यता

विवाहे खलयज्ञे च संक्रान्तौ ग्रहणेषु च।
पुत्रे जाते व्यतीपाते दत्तं भवति चाक्षयम्॥

मातापित्रादिपूजनं दमः दानं दया चेति नित्य-कर्तव्यानि

[1]मातृ(? तृः)पितृनुपाध्यायान् गुरून्विप्रान्सदाऽर्चयेत्।
एताञ्छ्रेष्ठांस्तथा चान्यान्नित्यं विप्राभिवन्दनम्॥
दमं सेवेत सततं दानं दद्याच्च सर्वदा।
दयां च सर्वदा कुर्यात्तद्विना नरकाश्रयः॥

पित्राद्यैः सह संवादस्य पतिताद्यैः सह संवेशनस्य शूद्रादिभ्यो मत्यादिदानस्य च निषेधः

न संवदेच्च पित्राद्यैः पतिताद्यैर्न संविशेत्।
न मतिं नीचवर्णाय दद्यादुच्छिष्टमेव च॥
मतिं शूद्रस्य यो दद्याद्यश्चैनं पर्युपासते।
न किंचित्तस्य चाऽऽख्येयं व्रतादि नियमादिकम्।
आचक्षाणस्तु तद्धर्मं नरकाग्नौ प्रपच्यते॥

(१) बृपसं. ६।२५१-२५२, २६१-२६३, ३७४-३७५.

नृपविप्रोरगाद्यवज्ञानस्य परमर्मस्पर्शस्य च निषेधः, धर्मार्थार्जनविधिः, परताडननिषेधः तदपवादश्च

नावज्ञेयाः कदाऽपि स्युर्नृपविप्रोरगादयः।
श्रियं कामं समाकाङ्क्षेन्न स्पृशेन्मर्म कस्यचित्॥
नित्यं वर्तेत चाजस्त्रं धर्मार्थौ च सदाऽर्जयेत्।
न कंचित्ताडयेद्धीमान्सुतं शिष्यं च ताडयेत्।
ताडयेन्नाभितोऽधस्तान्न तानन्यत्र ताडयेत्॥

ग्रहणे श्राद्धकर्तव्यता

[1]श्राद्धं वृद्धावचन्द्रेभच्छायाग्रहणसंक्रमे॥

युद्धे मरणस्य क्षतस्य च युद्धादनिवृत्तेश्च प्रशंसा

[2]हतः शूरो विपद्येत शत्रुभिर्यत्र कुत्रचित्।
स मुक्तो यतिवत्सद्यः प्रविशेत्परवेधसि॥
पराङ्मुखे हते सैन्ये यो युद्धान्न निवर्तते।
तत्पदानीष्टितुल्यानि स्युरित्याह पराशरः॥
वदने प्रविशेद्येषां लोहितं शिरसः पतत्।
सोमपानेन ते तुल्या बिन्दवो रुधिरस्य वै॥

सत्यवचनविधिः

सत्येन पूयते वाणी धर्मः सत्येन वर्धते।
तस्मात्सत्यं हि वक्तव्यमात्मशुद्ध्यै द्विजातिभिः॥

ग्रहणे कृष्णाजिनस्य रथस्य च दानम्

[3]कृष्णाजिनस्य दानस्य प्रवक्ष्यामि शुभं विधिम्॥
वैशाख्यां पूर्णिमायां च कार्तिक्यामथ वाऽपि च।
उभयोस्तत्प्रदातव्यं रविसोमग्रहेऽपि च॥
यो रथं हयसंयुक्तं हेमपुष्पैरलंकृतम्॥
रविसोमग्रहे दद्याच्छुभे वाऽन्यत्र पर्वणि।
अयनयोर्द्विजाग्र्याय स प्राप्नोत्यर्कलोकताम्॥

ग्रहणकृत्यस्याक्षय्यत्वम्

चन्द्रे वा यदि वा सूर्ये दृष्टे राहौ महाग्रहे।
अक्षय्यं कथितं सर्वं तदप्यर्के विशिष्यते॥

(१) बृपसं. ७।१.
(२) बृपसं. ८।३०-३२,३३६.
(३) बृपसं. १०।१२२, १२३, १५१, १५५, ३५०.

## अत्रिः

यजनयाजनादयश्चातुर्वर्ण्यधर्माः

**[1]कर्म विप्रस्य यजनं दानमध्ययनं तपः।**
**प्रतिग्रहोऽध्यापनं च याजनं चेति वृत्तयः॥**
**[2]क्षत्रियस्यापि यजनं दानमध्ययनं तपः।**
**शस्त्रोपजीवनं भूतरक्षणं चेति वृत्तयः॥**
**[3]दानमध्ययनं वार्ता यजनं चेति वै विशः।**
**शूद्रस्य वार्ता शुश्रूषा द्विजानां कारुकर्म च॥**
**[4]मयैष धर्मोऽभिहितः संस्थिता यत्र वर्णिनः।**
**बहुमानमिह प्राप्य प्रयान्ति परमां गतिम्॥**

वार्ता कृष्यादिकर्म। वर्णिनः वर्णाः।

मर. ९

शौचादीनि विप्रलक्षणानि

**[5]शौचं मङ्गलमायासश्चानसूयाऽस्पृहा दमः।**
**लक्षणानि च विप्रस्य तथा दानं दयाऽपि च॥**

इष्टापूर्तशब्दार्थः, इष्टापूर्तयोर्द्विजाति-
सामान्यधर्मत्वम्, शूद्रस्य
पूर्तेऽधिकारः

**[6]अग्निहोत्रं तपः सत्यं वेदानां चैव पालनम्।**
**आतिथ्यं वैश्वदेवश्च इष्टमित्यभिधीयते॥**
**वापीकूपतडागादि देवतायतनानि च।**
**अन्नप्रदानमारामः पूर्तमित्यभिधीयते॥**
**इष्टं पूर्तं प्रकर्तव्यं ब्राह्मणेन प्रयत्नतः।**
**इष्टेन लभते स्वर्गं पूर्तेन मोक्षमाप्नुयात्॥**
**इष्टापूर्तौ द्विजातीनां सामान्यौ धर्मसाधनौ।**
**अधिकारी भवेच्छूद्रः पूर्ते धर्मे न वैदिके॥**

यमनियमयोर्यमानां नित्यत्वम्,
यमनियमपरिगणनम्

**यमान्सेवेत सततं न नित्यं नियमान्बुधः।**
**यमान्पतत्यकुर्वाणो नियमान्केवलान्भजन्॥**
**आनृशंस्यं क्षमा सत्यमहिंसा दानमार्जवम्।**
**प्रीतिः प्रसादो माधुर्यं मार्दवं च यमा दश॥**
**शौचमिज्या तपो दानं स्वाध्यायोपस्थनिग्रहः।**
**व्रतमौनोपवासाश्च स्नानं च नियमा दश॥**

स्त्रीशूद्रपातित्यनिमित्तानि

**[1]जपस्तपस्तीर्थयात्रा प्रव्रज्या मन्त्रसाधनम्।**
**देवताराधनं चैव स्त्रीशूद्रपतनानि षट्॥**

(१) यत्तु स्मर्यते 'जप.....॥' इति, तद्वैदिकार्चनाभिप्रायम्, 'वैदिकं ब्राह्मणानां स्याद्राज्ञां वैदिकतान्त्रिकम्। तान्त्रिकं वैश्यशूद्राणां स्त्रीणामपि च तान्त्रिकम्॥' इति स्त्रीशूद्रयोस्तान्त्रिकत्वा(?न्त्रिका)भ्यनुज्ञानात्। *मुक्ता. ३९०

(२) यत्तु 'जप....॥' इति, तत् शालग्रामादिविषयमिति सर्वमनवद्यम्।

विपा. ३।२।२८३

**[2]पञ्चगव्यं पिबेच्छूद्रो ब्राह्मणस्तु सुरां पिबेत्।**
**उभौ तौ तुल्यदोषौ च वसतो नरके चिरम्॥**

(१) यत्त्वत्रिः – 'पञ्चगव्यं...नरके वसेत्॥' इति तत्प्रायश्चित्तं विना ज्ञेयम्। शूक. ४३

(२) यत्त्वत्रिणोक्तम् – 'पञ्चगव्यं... वसेत्॥' इति तद्विकल्पार्थमिति केचित्। प्रायश्चित्ताङ्गं पञ्चगव्यं प्राश्यमनङ्गं तु नेति व्यवस्थेति धर्मप्रकाशे।

संम. ८०

अष्टौ मौननिमित्तानि

**[3]पुरीषे मैथुने होमे प्रस्रावे दन्तधावने।**
**स्नानभोजनजप्येषु सदा मौनं समाचरेत्॥**

प्रौढपादत्वनिषेधविषयभूतानि
कर्माणि

**स्नानं दानं जपं होमं भोजनं देवतार्चनम्।**
**प्रौढपादो न कुर्वीत स्वाध्यायं पितृतर्पणम्॥**

---

(१) **अत्रिसं.** १३; **मर.** ८.
(२) **अत्रिसं.** १४; **मर.** ९ जीवनं भूत (जीव्यं भूतानां).
(३) **अत्रिसं.** १५; **मर.** ९ वार्ता (तूक्ता).
(४) **अत्रिसं.**१६; **मर.**९ प्रथमचरणे (तदेष धर्मो विहितः) यान्ति परमां (यान्त्यनुपमां).
(५) **अत्रिसं.** ३३.
(६) **अत्रिसं.** ४३-४९.

* आन. मुक्तागतम्।
(१) **अत्रिसं.** १३६-१३७; **शूशि.** २३ चैव (चेति) जातिविवेके : ७७ चैव (चेति) (=); **मुक्ता.** ३९० यात्रा (सेवा) स्मर्यते; **सिन्धु.** १४५ चतुर्थचरणमात्रम्, मानवीये; **विपा.** ३।२।२८३ (=); **आन.** २८५ सर्वं मुक्तावत्; **कृभ.** १४५ (=).
(२) **अत्रिसं.** ३००; **शूक.** ४३ उत्तरार्धे (उभौ तौ तुल्यकर्माणौ पुमाख्ये नरके वसेत्॥); **संम.** ८० उत्तरार्धे (उभौ तौ पापकर्माणौ पूयाख्ये नरके वसेत्॥); **कृभ.** १४५ संमवत्.
(३) **अत्रिसं.** ३२३, ३२५, ३२७.

ग्रहणादिनिमित्तकदानस्य रात्रावपि
कर्तव्यता

**ग्रहणोद्वाहसंक्रान्तौ स्त्रीणां च प्रसवे तथा।**
**दानं नैमित्तिकं ज्ञेयं रात्रौ चापि प्रशस्यते॥**

वर्णानामापन्निवारणसाधनानि

**[1]क्षत्रियो बाहुवीर्येण तरेदापदमात्मनः।**
**धनेन वैश्यशूद्रौ तु जपहोमैर्द्विजोत्तमः॥**

वेदाध्ययनं कामकृतपापस्या-
निवर्तकम्

**[2]न वेदबलमाश्रित्य पापकर्मरतिर्भवेत्।**
**न हि कामकृतं पापं वेदेन प्रतिहन्यते॥**

यतेर्नमस्कार्यता

**[3]साक्षाद्विष्ण्वाकृतिर्विप्रो नमस्योऽयं सुरासुरैः।**
**वर्णाश्रमैः समस्तैश्च परहंसो द्विजोत्तमः॥**
**देवताप्रतिमां दृष्ट्वा यतिं दृष्ट्वैकदण्डिनम्।**
**नमस्कारमकुर्वाणो नरकं रौरवं व्रजेत्॥**
**विष्णुलिङ्गाश्रितं विप्रं दृष्ट्वा चैव नराधमाः।**
**स्थिताः शय्यासने याने न त्यजन्ति विमोहिताः॥**
**अभ्युत्थानं नमस्कारः प्रसन्नवदनादिकम्।**
**कर्मणा मनसा वाचा ये न कुर्वन्ति सत्क्रियाम्।**
**सदाचारपरिभ्रष्टास्ते पापा यान्त्यधोगतिम्॥**

## वृद्धात्रिः

ग्रहणे भोजनस्य निषेधः ग्रस्तास्त-
मने भोजनकालः

**[4]चन्द्रसूर्यग्रहे नाद्यात् स्नात्वा मुक्ते तु भुञ्जते।**
**अमुक्तयोरस्तगयोरद्याद्दृष्ट्वा परेऽहनि॥**

ग्रहणे सर्वं जलं गङ्गासमं तीर्थ-
स्नानस्य प्रशंसा च

**सर्वं गङ्गासमं तोयं राहुग्रस्ते दिवाकरे।**
**यो नरः स्नाति तत्तीर्थे समुद्रे सेतुबन्धने॥**
**उपोष्य रजनीमेकां राहुग्रस्ते दिवाकरे।**
**सप्तजन्म कृतं पापं तत्क्षणादेव नश्यति॥**
**सोमेऽप्येवं सूर्यतुल्यं तस्मात् सर्वं समाचरेत्॥**

(१) **अत्रिस्मृ.** २।१०.
(२) **अत्रिस्मृ.** ३।५.
(३) **यसं.** १२७, १२८.
(४) **वृद्धात्रिसं.** ४५–४६.

## सुमन्तुः

विधिनिषेधातिक्रमेन्द्रिय-
वश्यतावर्जनम्

**[1]विहितस्याननुष्ठानमिन्द्रियाणामनिग्रहः।**
**निषिद्धसेवनं नित्यं वर्जनीयं प्रयत्नतः॥**

आततायिवधे दोषाभावः सापवादः

**8[2]नाऽऽततायिवधे दोषोऽन्यत्र गोब्राह्मणेभ्यः॥**

संक्रान्तिविशेषेषु क्षौरनिषेधः

**[3]कुम्भे पादं धनुष्यर्धं कर्के पादत्रयं तथा।**
**सर्वां कन्यां परित्यज्य क्षौरकर्म विधीयते॥**

संक्रान्तिविशेषेण निषेधो ज्योतिषे निर्णयसिन्धौ जीवत्पितृकनिर्णये च सुमन्तुः – कुम्भ इति।

आभू. १४८

## जाबालिः

इन्द्रियचापल्यादयो द्वादश
त्याज्या आचाराः

**[4]त्यजेदिन्द्रियचापल्यं ब्रह्मनिन्दां तथैव च।**
**मायामात्सर्यलोभांश्च क्रोधवेगान् बलाय ते॥**
**[5]परापवादमोहांश्च आत्मार्थे याचनां तथा।**
**वृथा कलहमालस्यं दिवामैथुनमेव च॥**

वयोवस्थाविशेषप्रयुक्तानि
बुद्धिधनादिप्रयुक्तानि
च कर्तव्यानि

**[6]बालः पांशुक्रीडां (युवा) सुगन्ध्यादिकं वृद्धो धर्मानुसरणं बुद्धिमान् महाभाष्यादिश्रवणमर्थवान् बहुदानं वाग्मी राजदौत्यं सुवेशो राजसंनिधिं**

8 इदं वचनं समव्याख्यानानुसारं कलिविषयम्, किंतु स्मृतिकौव्याख्यानानुसारं तथा न, इति कृत्वा सामान्यधर्मेषु संगृहीतम्। पूर्वोक्तव्याख्यानद्वयं 'युगधर्माः' इति प्रकरणे (वका. पृ. ९४६) आदित्यपुराणस्य 'कन्यानामसवर्णानाम्' इति श्लोके द्रष्टव्यम्।

(१) **सम.** ५; **कृभ.** १२८ : २२५ मनि (मनु).
(२) **सम.** १०७; **स्मृतिकौ.** ४७५; **कृभ.** १२९४.
(३) **आभू.** १४८.
(४) **गृक.** ३८५-३८६; **गृर.** ५६७.
(५) **गृक.** ३८६ दिवा (तथा); **गृर.** ५६७.
(६) **दीक.** १।१२३.

**श्रुतशास्त्रो वेदार्थनिर्वचनं विशुद्धाभिजनः कुलीनकन्यावरणं यागकर्मावृतः पशुहिंसनम्॥**

एवं वयःप्रभृतीनामुचितां चेष्टामाचरेत्।

दीक. १।१२३

यतिसंमाननाभावे प्रत्यवायः

**[1]आसनं शयनं यानं यतिं दृष्ट्वा न यस्त्यजेत्।**
**स मृतोऽपि हि दुष्टात्मा श्वयोनावेव जायते॥**
**दुर्वृत्ते वा सुवृत्ते वा यतौ निन्दां न कारयेत्।**
**यतीन् वै दूषमाणस्तु नरकं याति दारुणम्॥**

ग्रहणपुण्यकालः

**[2]संक्रान्तौ पुण्यकालस्तु षोडशोभयतः कलाः।**
**चन्द्रसूर्योपरागे तु यावद्दर्शनगोचरः॥**

(१)ग्रस्तास्तमये अस्तमयपर्यन्तं दर्शनगोचरत्वात् तावत्पुण्यकालो भवति। मुक्ता. २७३

(२)अत्र केचित् — "8राहुदर्शने स्नायाद्दानं च कुर्यात्।' इत्यादिभिर्वाक्यैर्दर्शने स्नानादि विधीयते। दर्शनं चाक्षुषम्। तच्च स्वकीयमेव निमित्तम्, परकीयदर्शनस्य परं प्रति निमित्तत्वाभावात्। एवं चायमर्थः संपद्यते — स्वयं ग्रहणे दृष्टे स्नानादि कर्तव्यम्, न मेघावृते" इत्याहुः। तदयुक्तम्। एवमन्धस्य स्नानादि न स्यात्। तथा 'नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदाचन। नोपरक्तं न वारिस्थं न मध्यं नभसो गतम्॥' (मस्मृ. ४।३७) इति वाक्येन स्नातकानां ग्रहणदर्शने प्रतिषिद्धे तेषां स्नानादि न स्यात्। यदि परं तत्रेष्टापत्तिः क्रियते, तथा सति 'सूर्यग्रहो यदा रात्रौ दिवा चन्द्रग्रहस्तथा। तत्र स्नानं न कुर्वीत दद्याद्दानं न च क्वचित्॥' इति निषेधोऽनुपपन्नः स्यात्, रात्रौ सूर्यग्रहस्य दिवा चन्द्रग्रहणस्य च दर्शनाभावेन स्नानादेरप्राप्तत्वात्। किंच, यदि दृष्टं ग्रहणं स्नानादेर्निमित्तं तथा सत्युद्देश्यस्य ग्रहणस्य विशेषणं दर्शनं न विवक्षितं स्यात्, 'यस्योभयं हविरार्तिमार्च्छेत्' इत्यत्रेव हविष उभयत्वम्। अतः केवलं ग्रहणमेव निमित्तमिति वक्तव्यम्। तच्च ज्ञातमेव, सर्वनिमित्तानां ज्ञातानामेव नैमित्तिकप्रयोजकत्वमिति विज्ञानेश्वरादिभिस्तत्र तत्र निरूपितत्वात्। तच्च ज्ञानं शास्त्रीयमेव, न लौकिकम्। न चैवं द्वीपान्तरे जातं द्वीपान्तरेऽपि प्रयोजकं स्यादिति वाच्यम्, द्वीपान्तरे जातस्य द्वीपान्तरे रात्रिदिनजातत्वेनाप्रयोजकत्वात्। क्वचिद्देशे दृष्टं देशान्तरे च मेघच्छन्नं तु भवत्येव प्रयोजकम्। न च 'राहुदर्शने' इत्यनेन चाक्षुषमेव दर्शनं ग्राह्यमिति वाच्यम्, 'अष्टमी रोहिणीयुक्ता निश्यर्धे दृश्यते यदि' इत्यादिषु शास्त्रदृष्टेऽपि दृशिप्रयोगदर्शनात्। तेन प्रत्यक्षदर्शनमेव स्नाननिमित्तमिति केषांचित्प्रलापः शास्त्रन्यायविरुद्ध उपेक्षणीयः।

सम. ७९

## पैठीनसिः

अध्ययनादयः षट् क्षत्रियधर्माः

**[1]अध्ययनं यजनं दानं तेजः संग्रामे चापलायनमीश्वरभावश्च धर्मः क्षत्रियस्य॥**

तेजः प्रतापित्वम्। ईश्वरभावः अपरवशत्वम्।

गृक. २५३

स्वस्वकर्माभिरतानां वर्णानां गम्या लोकाः

**[2]ब्राह्मं प्राजापत्यं वा स्थानं ब्राह्मणस्य,**
**ऐन्द्रं राजन्यस्य, मारुतं वैश्यस्य, गान्धर्वं शूद्रस्य॥**
**[3]स्वे स्वे कर्मण्यभिरताः स्वं स्वं स्थानं व्रजन्ति ते॥**

अनिन्द्या गोब्राह्मणादयः षट्

**[4]अनिन्द्या ब्राह्मणा गावः काञ्चनं सलिलं स्त्रियः।**
**पृथिवी च षडेतानि यो निन्दति स निन्दितः॥**

---

8 नेदं वचनम्, अपि तु अर्थसिद्धविधिवाक्यानुवाद इत्यस्माकं प्रतिपत्तिः।

(१) **यसं.** १२८ जाबालः.

(२) **कृर.** ६२५ उत्त. जाबालः; **निप.** ११७ गोचरः (गोचरे) उत्त. (=); **मुक्ता.** २७३ गोचरः (मोचनम्); **सिन्धु.** ३०६ गोचरः (गोचरे) उत्त. जाबाल्यादिः : ३१२ गोचरः (गोचरे) चतुर्थचरणमात्रम् (=); **सम.** ७९ तु (च); **विपा.** ३।२।४७६ उत्त. जाबालः.

(१) **गृक.** २५३.

(२) **गृक.** २७३ वा(च); **गृर.** ४८१; **स्मृकौ.** ९६; **शूक.** ७१ (गान्धर्वं शूद्रस्य) एतावदेव.

(३) **गृक.** २७३; **गृर.** ४८१; **स्मृकौ.** ९६ व्रजन्ति (जनयन्ति).

(४) **गृक.** ३४८ यमपैठीनसी; **निप्र.** २।५०६ अनिन्द्या (न निन्द्या) यमपैठीनसी.

## अङ्गिराः

शूद्रेण सहान्नग्रहणादयो व्यवहारास्त्याज्याः

[1]**शूद्रान्नं शूद्रसंपर्कः शूद्रेणैव सहासनम्।**
**शूद्राज्ज्ञानागमः कश्चिज्ज्वलन्तमपि पातयेत्॥**
**अग्निहोत्री तु यो विप्रः शूद्रान्नान्न निवर्तते।**
**पञ्च तस्य प्रणश्यन्ति आत्मा ब्रह्म त्रयोऽग्नयः॥**

वेदाध्ययनेन कामकृतपापानाम-निवर्तनम्

**न देव(?वेद)बलमाश्रित्य पापकर्मरतिर्भवेत्।**
**अज्ञानाद्वा प्रमादाद्वा दहते कर्म नेतरत्॥**

पादुकाविसर्जनस्य देशाः कर्माणि च

**अग्न्यगारे गवां गोष्ठे देवब्राह्मणसंनिधौ।**
**भोजने जपकाले च पादुकानां विसर्जनम्॥**

कर्मसु देशकालानुकूल्यमवेक्षणीयम्

**देशं कालं तथाऽऽत्मानं द्रव्यं द्रव्यप्रयोजनम्।**
**उपपत्तिमवस्थां च ज्ञात्वा कर्म समाचरेत्॥**

वैदिककर्मसु वैदिकमन्त्रनियमः पौराणिकमन्त्रविनियोगे कर्मनाशः

[2]**न वैदिकः पुराणोक्तैः कर्माणि मनुभिश्चरेत्।**
**वेदोक्तैरेव तैर्मन्त्रैर्निखिलानि समाचरेत्॥**
**कर्ममध्ये पुराणोक्तमन्त्रोच्चारणमात्रतः।**
**नश्येत्तु वैदिकं कर्म तस्मात्तु न तथाऽऽचरेत्॥**
**पुराणोक्तेष्वेषु सत्सु लौकिकेषु तथाऽऽचरेत्॥**

शुचित्वं वैदिककर्माधिकारनिमित्तम्

**शुद्धः सन्नेव कुर्वीत वैदिकं कर्म नाशुचिः।**
**आशौचादशुचित्वं हि ब्राह्मणानां भविष्यति॥**

कलावपि अन्यायद्रोहक्रौर्यादी-नामतिशयितानां निषेधः

**अत्यन्यायमतिद्रोहमतिक्रौर्यं कलावपि।**
**अत्यक्रमं चात्यशास्त्रं न कुर्यान्न च कारयेत्॥**
**यदि कुर्वीत मोहेन सद्यो विलयमेष्यति।**
**कर्ता कारयिता चापि प्रेरकश्च निरोधकः॥**
**तत्सहायश्च सर्वे ते लयमेष्यन्ति सत्वरम्।**
**गृहक्षेत्रादिकं सर्वं न नित्यं शुभकारिणः॥**
**तन्निमित्तमिदं रूपं पापं मर्त्यो न चाऽऽचरेत्॥**

ग्रहणनिमित्तकश्राद्धविधिः

**ग्रहणादिषु शक्तश्चेद्धिरस्सया तानि चाऽऽचरेत्।**
**न चेदामादिना शुद्धस्तद्धर्मैरखिलैर्वृतः॥**
**ग्रहे मुहूर्तद्वितये गतेऽन्नश्राद्धमाचरेत्।**
**अपि शक्तोऽपि तन्न्यूने तादृक्छ्राद्धं न चाऽऽचरेत्॥**

चाक्रिकायनग्रहणाभ्यां पूर्वो भोजने वर्ज्यः कालः सापवादः

**चाक्रिकं ग्रहणं मुख्यमायनं तदमुख्यकम्।**
**पुष्पवन्मण्डलसममध्यभागप्रपीडितम्॥**
**यन्नीललक्ष्मपृथुलं वर्तुलं तत्त्रियामगम्।**
**तच्चाक्रिकमिति प्रोक्तं ग्रहणं पितृतृप्तिदम्॥**
**तच्च पञ्चशताब्दानामेकदा वै भविष्यति॥**
**ग्रहस्य चाक्रिकस्यास्य पूर्वं यामत्रयं नरैः॥**
**भोजनं नैव कर्तव्यं वृद्धबालातुरान्विना।**
**अपराह्णे न मध्याह्ने मध्याह्ने न तु संगवे॥**
**संगवे तु न तु प्रातः पृथुकानां तु केवलम्।**
**स्तन्यपाने न दोषोऽस्ति तत्काले केवलेऽपि वा॥**
**यवाग्वाः पयसो वाऽपि पानीयस्याशरत्समम्।**
**नियमोऽयं प्रकथितो न तदूर्ध्वं तु तच्चरेत्॥**
**अयनग्रहणे मुख्ये पौनःपुन्यगते सकृत्।**
**कोणैकदेशसंस्पृष्टे तन्न्यूनसमयस्थिते॥**
**यामद्वयं सार्धयामद्वयं यामत्रयं तथा।**
**सार्धयामत्रयं यामचतुष्टयमिति क्रमात्॥**
**अधिकारप्रभेदेन भोजनस्य निरूपणम्।**
**यदेतत्तस्य सर्वस्य प्रवदामि विनिर्णयम्॥**
**तत्कालाजीर्णराहित्ये हृदयं तन्निबोधत।**
**एवं स्थिते पुनर्वच्मि यामतः सार्धयामतः॥**
**जीर्णशक्तिमतो भुञ्जेत्तत्काले क्षुद्भवेद्यदि।**
**न दोषः कथितः सद्भिः कदाचिद्दैवयोगतः॥**
**अजीर्णः स्यात्तदा दोषः सुमहान् प्रभवेदपि।**
**तस्माद्यामद्वयं सर्वैर्भुक्तिस्त्याज्या विचक्षणैः॥**

(१) **अङ्गिस्मृ.** ७३, ७५.
(२) **पूर्वाङ्गिस्मृ.** ५-७, ४४, ९८-१०१, २७८-३००, ४८६-४८७.

**विशेषः कोऽपि भूयश्च प्रोच्यते सुमहान् परः।**
**रोगिणोऽप्यतिमात्रस्य चौषधातिक्षुदश्रतः॥**
**क्रूरग्रहातितप्तस्य पिशाचावेशिनस्तथा।**
**वश्याकर्षणविद्वेषस्तम्भनोच्चाटनादिभिः॥**
**पीडितस्य विशेषेण मूर्च्छितस्यातिताडनैः।**
**तत्कालभक्षणमपि न दुष्यति कदाचन॥**
**अत्युत्क्रान्तिप्रवृत्तस्य चिरत्यक्तान्धसस्तथा।**
**अप्राशनोत्पन्नमृतिसंशयस्य विशेषतः॥**
**तत्कालभक्षणावृत्तिर्न दोषाय भवेदयम्।**
**सर्वेषामपि वर्णानां सर्वाश्रमनिवासिनाम्॥**
**मुख्यो( ?ख्यः) साधारणो धर्मस्तत्कालाजीर्णशून्यता।**
**यामत्रयादिकाः कालास्तत्र तत्र प्रचोदिताः॥**
**तैस्तैस्ते निखिला ज्ञेया नृभेदेन विवक्षिताः॥**

ग्रस्तास्तमनोत्तरभोजनकालनिर्णयः

**सोमं ग्रस्तास्तगं सूर्यमपि वा शास्त्रदृष्टितः॥**
**मुक्तं ज्ञात्वा ततः स्नात्वा निष्कामो भोजनं चरेत्।**
**शुभ्रांशुचण्डांशुलोककामी चेन्न तु भोजनम्॥**
**चरेदेव न संदेहस्तल्लोकाकामिनः परम्।**
**दोषाय भोजनत्याग एवमाह प्रजापतिः॥**

ग्रहणश्राद्धपदार्थः

**ग्रहस्पर्शादथ यतन् सद्यः पत्न्यादिभिर्वृतः।**
**तदाऽन्नेनैव यच्छ्राद्धं करोति पितृतृप्तये।**
**स्नात्वा तेनैव विधिना तद्ग्रहश्राद्धमुच्यते॥**

सूतकमृतकयोरपि ग्रहणश्राद्धकर्तव्यता

[1]**सर्वे वर्णाः सूतकेऽपि मृतके राहुदर्शने।**
**स्नात्वा श्राद्धं प्रकुर्वीरन्दानं शाठ्यविवर्जितम्॥**

कालादर्शे अङ्गिराः – 'सर्वे...विवर्जितम्' इति। मदनपारिजातेऽप्येवम्। तेन 'स्नानमात्रं प्रकुर्वीत दानश्राद्धविवर्जितम्' इति वदन्तो गौडाः परास्ताः।

सिन्धु. २९४

ग्रहणे कर्तव्याकर्तव्यानि

[2]**सूर्येन्दुग्रहणं यावत्तावत्कुर्याज्जपादिकम्।**
**न स्वपेन्न च भुञ्जीत स्नात्वा भुञ्जीत मुक्तयोः॥**

(१) **मुक्ता.** २७२; **सिन्धु.** २९४.
(२) **मुक्ता.** २७२ ग्रहणं (ग्रहणे); **आन.** २४० पू.; **कृभ.** २८३.

(१) ग्रहणकाले च स्वापादि निषिद्धम्, 'सूर्येन्दुग्रहणम्...' इत्युक्तेः, 'निद्रायां जायते रोगो मूत्रे दारिद्र्यमाप्नुयात्। पुरीषे कृमियोनिः स्यान्मैथुने ग्रामसूकरः॥ अभ्यङ्गे च भवेत्कुष्ठी भोजने स्यादधोगतिः। वचने च भवेत् सर्पो वधे च नरकं व्रजेत्॥' इति निन्दोक्तेश्च।

कृभ. २८३

(२) आदिशब्देन श्राद्धं दानं च गृह्यते।

आन. २४०

यत्यादिदुराचारदर्शनजन्यदोषपरिहारकम्

[1]**क्षेत्रं गावो हिरण्यं च यतेर्यस्य परिग्रहः।**
**तादृशं कश्मलं दृष्ट्वा सचैलो जलमाविशेत्॥**
**विधवां कञ्चुकोपेतां सधवां कञ्चुकं विना।**
**यतिं च कञ्चुकोपेतं दृष्ट्वा चक्षुर्निमीलयेत्॥**

## व्याघ्रः

ग्रहणे उष्णवारिस्नाननिषेधस्यापवादः

[2]**आदित्यकिरणैः पूतं पुनः पूतं च वह्निना।**
**अतो व्याध्यातुरः स्नायाद्ग्रहणेऽप्युष्णवारिणा॥**

अपिनाऽस्पृश्यस्पर्शनादीनां (सं)ग्रहः। उष्णोदकायोग्यरोगिणस्तु( ?णा तु) – 'आतुरे स्नान उत्पन्ने दशकृत्वो ह्यनातुरः।' इत्यादि अ( ? त्याद्य)ग्रिमक्रमेण स्नातव्यम्, गोरजःस्नानादिकमपि वा कार्यम्।

कृभ. २९१-२९२

ग्रहणे सूतकिनोऽपि श्राद्धादावधिकारः

[3]**स्मार्तकर्मपरित्यागो राहोरन्यत्र सूतके॥**

ग्रहणे श्राद्धादावप्याशौचापवादमाह व्याघ्रः – स्मार्तकर्मेति।

सिन्धु. १९०४

## ऋष्यशृङ्गः

ग्रहणे श्राद्धादीनां विधिः रात्रावपि कार्यता च

[4]**चन्द्रसूर्यग्रहे यस्तु श्राद्धं विधिवदाचरेत्।**
**तेनैव सकला पृथ्वी दत्ता विप्रस्य वै करे॥**

(१) **यसं.** १११.
(२) **मुक्ता.** २७१ अतो (आर्तो); **सम.** ७७ णेऽप्युष्ण (णेषूष्ण); **आन.** २४२ उत्त.; **कृभ.** २९१.
(३) **सिन्धु.** १९०४.
(४) **स्मृच.** २।६२२ पूर्वार्धे (राहुग्रस्ते तु वै सूर्ये यस्तु श्राद्धं प्रकल्पयेत्।); **सिन्धु.** २९२; **विपा.** ३।२।४६६ श्राद्धं (स्नानं).

अत्र श्राद्धमाह ऋष्यशृङ्गः — चन्द्रसूर्यग्रहे इति।

सिन्धु. २९२

[श्राद्धमिति। श्राद्धं तर्पणं च स्पर्शे कार्यम्, 'त्रिदशाः स्पर्शसमये तृप्यन्ति पितरस्तथा। मनुष्या मध्यकाले तु मोक्षकाले तु राक्षसाः॥' इति वासिष्ठात्।

कृभ. २९२]

**[1]स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने।**
**आसुरी रात्रिरन्यत्र तस्मात्तां परिवर्जयेत्॥**

राहुदर्शनग्रहणं संक्रान्त्यादेरपि प्रदर्शनार्थम्, 'राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु। स्नानदानादिकं कुर्यान्निशि काम्यव्रतेषु च॥' इति देवलस्मरणात्। अत्ययः मरणम्। श्राद्धद्रव्यं च शातातपोक्तम् — 'आपद्यनग्नौ तीर्थे च चन्द्रसूर्यग्रहे तथा। आमश्राद्धं द्विजः कुर्याच्छूद्रो दद्यात्सदैव हि॥'। बोधायनोऽपि — 'अन्नाभावे द्विजाभावे प्रवासे पुत्रजन्मनि। हेमश्राद्धं सग्रहे च शूद्रः कुर्यात्सदैव हि॥' इति। स्मृच. २।६२२-६२३

## गर्गः

क्षौरे तिथ्यादिविषयका विधिनिषेधाः
निषिद्धकालकरणे दोषशान्तिश्च

**[2]षष्ठ्यमा पूर्णिमा पातश्चतुर्दश्यष्टमी तथा।**
**आसु संनिहितं पापं तिले मांसे क्षुरे भगे॥**

अत्र अमापूर्णिमानिषेधस्त्वनाहिताग्निपरः, आहिताग्नेस्तत्र स्यादेव, कात्यायनादिश्रौतसूत्रे तस्य वपननिषेधात्, 'मासि मासि गृहस्थस्य पक्षे पक्षे च यज्वनः।' इति स्मृतेश्च। विपा. ३।२।७५६

**[3]न देवपितृकार्यान्ते न पक्षादौ वपेन्नरः।**
**उपोषितोऽथ जन्मर्क्षे पक्षान्ते च विशेषतः॥**

उपोषितः व्रतादौ। संग. ६२३

**क्षौरकर्म महीशानां पञ्चमे पञ्चमेऽहनि।**
**कर्तव्यं क्षौरनक्षत्रेऽप्यथवा तन्मुहूर्तके॥**
**[4]भानुरायुः क्षपयति मासं सप्त शनैश्चरः।**
**भौमो मासाष्टकं चेति ज्ञो यच्छेन्मासपञ्चकम्॥**
**सप्तमासान् ददातीन्दुः सुरेज्यो दशमासकम्।**
**एकादश कविर्दद्यात्कृते क्षौरे तु कर्मणि॥**
**निषिद्धेषु च कालेषु क्षौरकर्म यदा भवेत्।**
**तद्दोषशान्तये क्षिप्रं कुर्यात्तच्च शुभे दिने॥**

## गार्ग्यः

ग्रस्तास्तमये भोजने निषिद्धः कालः

**[1]संध्याकाले यदा राहुर्ग्रसते शशिभास्करौ।**
**तदहर्नैव भोक्तव्यं रात्रावपि कदाचन॥**

सायंसंध्यायां सूर्यग्रस्तास्ते पूर्वेऽह्नि रात्रौ च न भोक्तव्यम्। प्रातःसंध्यायां चन्द्रस्य ग्रस्तास्ते पूर्वरात्रावुत्तरेऽह्नि च न भोक्तव्यमित्यर्थः।

सिन्धु. २८४

क्षौरे निषिद्धं वारादि

**[2]रव्यारसौरिवारेषु रात्रौ पाते व्रतेऽहनि।**
**श्राद्धाहं प्रतिपद्रिक्ताभद्राः क्षौरेषु वर्जयेत्॥**

## वृद्धगार्ग्यः

जीवत्पितृकस्य मुण्डननिषेधः
क्षौरे वर्ज्याः सौरराशयश्च

**+[3]न कुर्वीतापि मुण्डनम्॥**
**[4]मीने धनुषि सिंहे च स्थिते सप्ततुरङ्गमे।**
**क्षौरमत्र न कर्तव्यं विवाहं गृहकर्म च॥**

## आश्वलायनः

चातुर्वर्ण्यस्य संध्यामहायज्ञयजन-
याजनादीनि नित्यानि
कर्माणि

**[5]महायज्ञानि संध्या च होमकर्म च कालयोः।**
**सामान्यानि द्विजातीनां नित्यान्यभ्युदितानि वै॥**

---

(१) **स्मृच.** २।६२२; **कृभ.** ८४ तपः (जपः) (=), २८८ (=).

(२) **विपा.** ३।२।७५६ चतुर्थचरणे (त्रिषु तैले भगे क्षुरे) (=); **संग.** ६२३ आसु (आशु).

(३) **संग.** ६२३, ६२४.

(४) **पुम.** ४५६.

+ जीवत्पितृक इति प्रकृतम्।

(१) **पमा.** १।३८३ भोक्तव्यं (भुञ्जीत) वृद्धगार्ग्यः; **सिन्धु.** २८३-२८४.

(२) **संग.** ६२३ प्रथमचरणे (शन्याररविवारेषु) उत्तरार्धे (श्राद्धाहे प्रतिपद्रिक्तां भद्रां क्षौरे विवर्जयेत्॥) वीरमित्रोदये; **पुम.** ४५६.

(३) **आर.** ६२.

(४) **सम.** १०० कर्तव्यं विवाहं (कुर्वीत विवाहे), १०६.

(५) **आश्वस्मृ.** ६.

यजनं याजनं विप्रे तथा दानप्रतिग्रहौ।
अध्यापनं चाध्ययनं नित्यान्येतानि षट् तपः॥
यजनाध्ययने दानं प्रजानां परिपालनम्।
राज्ञां विशेषनित्यानि सर्वसिद्धिकराणि च॥
त्रीणि वैश्यो वणिग्वृत्त्या सहैतानि यथातथम्।
नित्या हि शूद्रे शुश्रूषा द्विजातीनां च सर्वदा॥

स्नानादीनि मौननिमित्तानि

[1]स्नाने दाने जपे होमे व्यवाये भोजने बुधः।
विण्मूत्रोत्सर्जनेऽर्चायां मौनी स्याद्दन्तधावने॥

आत्मरक्षणप्रशंसा

[2]आपदर्थे धनं रक्षेद्दारान्रक्षेद्धनैरपि।
आत्मानं सर्वदा रक्षेद्दारैरपि धनैरपि॥

वैश्यधर्मानुक्रमणम्

[3]वणिग्वृत्त्या च कृषिभिर्जीवेद्वैश्यः सुयन्त्रितः।
तत्र धर्मरतो नित्यं यज्ञाध्ययनतत्परः॥
जपदानरतश्चैव विप्रशुश्रूषुरात्मवान्।
समश्च बालवृद्धेषु जडान्धनिपुणेषु च॥
[4]कृषिगोरक्षवाणिज्यं सहजं कर्म वै विशाम्।
दानाध्ययनयज्ञेषु जपहोमेषु चोद्यतः॥
नित्यकर्मसु वैश्योऽपि स्नानादिषु सदोद्यतः।
भवेद्ब्राह्मणशुश्रूषारतो वा स्यात्सदैव हि॥
एवं सत्यपरो वैश्यो वर्तमानः स्वकर्मसु।
यशः पुण्यं धनं स्वर्गं सुखं वाऽऽप्नोति
च श्रियम्॥

द्विजशुश्रूषापाकयज्ञदानादीनां बहूनां
शूद्रधर्माणामनुक्रमणम्

[5]शूद्रस्य नित्या शुश्रूषा द्विजादीनां स्मृता सदा।
तया सद्दशतां याति कीर्तिं चेह मृतो दिवि॥
नित्यं विप्रस्य शुश्रूषा कार्या तस्य विशेषतः।
पाकयज्ञश्च कर्तव्यो दानानि निर्धने द्विजे॥
वासेद्वा( ?स्याद्वा)सांसि जीर्णानि दत्तान्येव द्विजातिभिः।
चतुर्थ्याश्चापि (?) जीर्णानि तल्पानि विविधानि च॥

(१) आश्वस्मृ. २६.
(२) आश्वस्मृ. ४३.
(३) आश्वस्मृ. ५३.
(४) आश्वस्मृ. ५४.
(५) आश्वस्मृ. ५४-५५.

जपश्चाप्रणवस्तस्यावैदिकस्तु विधीयते।
न जातु शृणुयाद्ब्रह्म पठ्यमानमपि द्विजैः॥
[1]ब्राह्मणानुज्ञया शूद्रः कुर्याद्व्रतजपादिकान्।
तीर्थसेवां तथा श्राद्धं पित्रोर्दम्भविवर्जितः॥
न संचयस्य शूद्रोऽर्हो नित्यदेयधनस्तु सः।
विप्रादिभिस्तु द्रव्येण जीवेत सगणः सुधीः॥
येन केनाप्युपायेन विप्रादीनामनुज्ञया।
यदस्ति संचयं तस्य स दद्यात्तद्द्विजोत्तमे॥
गृहमागत्य संप्रार्थ्य दद्याद्दानानि च द्विजे।
ब्राह्मणेभ्यः कुटुम्बं च बिभृयादेव नित्यदा॥
नोल्लङ्घ्या ब्राह्मणानुज्ञा सदा शूद्रेण धीमता।
तदुच्छिष्टं च भुञ्जीयादजुगुप्सन्विमत्सरः॥
चान्द्रायणात्परं पुण्यं विप्रोच्छिष्टमघापहम्।
शूद्राणां परिचर्या च द्विजश्रेष्ठस्य नित्यदा॥
यथाऽश्वमेधावभृथमखिलाघहरं नृणाम्।
तथाऽऽज्ञाकरणं तस्य विप्राणामप्यलीकतः॥
उत्तिष्ठेदागते विप्रे चा( ?ना)भियायात्स्थिते स्वयम्।
नीचैरासीत चाऽऽसीने गमनेऽनुव्रजेच्च सः॥
ब्राह्मणार्थे गवामर्थे राष्ट्रस्य च विमर्दने।
स्त्रीबालसंकटे शूद्रः स्वदेहमपि संत्यजेत्॥
एवं संत्यजतो देहं स्वर्गवासश्चिरं भवेत्।
द्विजत्वमि( ?मृ)च्छत्युत्कृष्टं पुनर्जन्मनि दुर्लभम्॥

विप्रादिम्लेच्छान्तानां सर्वमानवानां
साधारणा धर्माः

[2]मातापित्रोस्तु शुश्रूषा दम्भानृतविवर्जनम्।
स्वदारद्रव्यतुष्टिश्च परस्त्रीद्रव्यवर्जनम्॥
दानं चैवोपवासश्च सर्वसाधारणं मतम्।
म्लेच्छानामपि व्रात्यानां विप्रादीनां च सर्वदा॥
कार्याण्येतानि धर्माणि समानि सुशुभानि च।
कारवो ध्वजिनः सूदाः स्तेना व्रात्याः पटच्चराः॥
कृत्वैतानि गतिं यान्ति पाला अपि मृता दिवि।
एतान्यकृत्वा विप्रोऽपि नारकीं गतिमृच्छति॥
वेदवेदाङ्गवित्प्राज्ञः सर्वधर्मरतोऽपि सन्।
पितरो ब्राह्मणा गावो जलमग्निर्मही तथा॥

(१) आश्वस्मृ. ५५.
(२) आश्वस्मृ. ५६-५७.

**प्रत्यक्षदेवतास्त्वेताः सूर्येन्दू च नृणामिह।**
**एतानि नावमन्येत कदाचिदपि मानवः।**
**ब्राह्मणो वा श्वपाको वा नित्यमेतान्समर्चयेत्।।**
**एष साधारणो धर्मः सर्ववर्णस्य कीर्तितः।।**

वपननिमित्तानि तदपवादश्च

[1]**गङ्गायां भास्करक्षेत्रे गोकर्णे सेतुबन्धने।**
**महेन्द्रे नैमिषारण्ये प्रयागे वपनं भवेत्।।**
**आधाने सोमयागे च वृषोत्सर्गे हरेर्बलौ।**
**चातुर्मास्ये च निष्कृत्यो (?) विप्रस्य वपनं भवेत्।।**
**राज्ञो विनाशे सर्वेषां तस्य राष्ट्रद्विजानृते।**
**शिरसो वपनं कार्यं स्वपित्रोर्निखिलस्य च।।**
**दीक्षितस्यावनीशस्य वैश्यस्य ब्रह्मचारिणः।**
**स्त्रीणां च कारणेनैव वपनं न प्रशस्यते।।**

ग्रहणे रात्र्यपराह्णयोः समुद्रस्नानानुमतिः

+[2]**उपरागे तु रात्र्यां वा त्वपराह्णे च शस्यते।।**

स्वाध्यायाग्निहोत्रादयः सदा सेव्या धर्माः

[3]**स्वाध्यायेष्वप्रमत्तः स्यादग्निहोत्रे च नित्यदा।**
**सत्ये प्रजनने श्राद्धे दाने धर्मे महामखे।।**
**स्नानेऽर्चायां च गुरुषु पित्रोरात्मावलोकने।**
**पुण्यकर्मसु शास्त्रेषु सदोद्युक्तो भवेन्नरः।।**

चक्राद्यङ्कनं गीतनृत्यादिकं च द्विजभिन्नानां धर्मः

[4]**शङ्खचक्राद्यङ्कनं च गीतनृत्यादिकं तथा।**
**एकजातेरयं धर्मो न जातु स्याद्द्विजन्मनः।।**

## लघ्वाश्वलायनः

क्षौरनिमित्तानि

[5]**मौञ्जीबन्धनकाले च व्रताचरणकर्मसु।**
**यज्ञे च मरणे पित्रोर्गयायां क्षौरमिष्यते।।**

+ समुद्रे स्नानम् इति ग॰नृ॰तम्।
(१) **आश्वस्मृ.** ५९.
(२) **आश्वस्मृ.** ६४.
(३) **आश्वस्मृ.** ६५.
(४) **शूक.** ६० विष्ण्वाश्वलायनौ.
(५) **लघ्वाश्वस्मृ.** २०।२३.

ब्राह्मणक्षत्रियशूद्रधर्मा यजनपालनद्विजसेवादयः, परधर्माचरणनिषेधः

[1]**सर्वेषां चैव वर्णानामुत्तमो ब्राह्मणो यतः।**
**क्षत्रस्तु पालयेद्विप्रं विप्राज्ञाप्रतिपालकः।।**
**सेवां चैव तु विप्रस्य शूद्रः कुर्याद्यथोदितम्।**
**सर्वेषां चापि वै मान्यो वेदविद्द्विज एव हि।।**
**यजनादीनि कर्माणि कुर्यादहरहर्द्विजः।**
**धर्मोऽयं द्विजवर्यस्य परमानन्ददायकः।।**
**रणे धीरो भवेत्क्षत्री(?त्रो) जेयाद्राज्यं च वैरिणः।**
**पालयेद्ब्राह्मणान्सम्यक्परं तेनैव जेष्यति।।**
**शूद्रः कुर्याद्द्विजस्यैव सेवामेव कृषिं तथा।**
**सुखं तेन लभेन्नूनं प्रवदन्ति महर्षयः।।**
**ब्राह्मणः क्षत्रियो वाऽपि स्वधर्मेणानुवर्तयेत्।**
**नाऽऽचरेत्परधर्मं च धर्मनाशाय चाऽऽत्मनः।।**

कर्मत्यागेन पराधीनत्वेन च द्विजस्य शूद्रसाम्यम्

[2]**यश्च कर्मपरित्यागी पराधीनस्तथैव च।**
**अधीतोऽपि द्विजश्चैव स च शूद्रसमो भवेत्।।**
**संतुष्टो येन केना(पि) सदाचारपरायणः।**
**पराधीनो द्विजो न स्यात्स तरेद्भवसागरम्।।**

## बुधः

स्वधर्मानुष्ठानविधिः, विधिनिषेधोल्लङ्घने नरकप्राप्तिः

[3]**स्वधर्मानुष्ठानं वर्णानामाश्रमाणां च।।**
**विहिताकरणे प्रतिषिद्धसेवने यावत्तदकुर्वतो नरकप्राप्तिः।।**

## जातूकर्ण्यः

इष्टापूर्ते द्विजसामान्यधर्मौ, पूर्तं शूद्रधर्मः

[4]**इष्टापूर्तौ द्विजातीनां धर्मौ सामासिकौ मतौ।**
**अधिकारी भवेच्छूद्रः पूर्तधर्मे न वैदिके।।**

(१) **लघ्वाश्वस्मृ.** २२।१-६.
(२) **लघ्वाश्वस्मृ.** २२।२२, २४.
(३) **बुस्मृ.** ३६-३७.
(४) **अप.** १।१० पृ. २४ धर्मे न (धर्मेण); **शूक.** ४३ पूर्तधर्मे (पूर्ते धर्मे) उत्त., व्यासजातुकर्ण्यौ २३९ उत्त.

## क्रतुः

स्वधर्मत्यागपरधर्माचरणनिन्दा

**[१]यः स्वधर्मं परित्यज्य यदन्यत्कुरुते द्विजः।**
**न तस्य निष्कृतिः कार्या स्वधर्मात्प्रच्युतो हि सः॥**
**[२]स्वधर्मात्प्रच्युता ये वै पुरुषा योषितोऽपि वा।**
**अवीरास्ते सदा ज्ञेया नित्यं सद्भिर्विगर्हिताः॥**

## पुलस्त्यः

चातुर्वर्ण्यधर्मा यजनादयो भूतरक्षणादयश्च

**[३]इज्याध्ययनदानानि यथाशास्त्रं सनातनम्।**
**ब्रह्मक्षत्रियवैश्यानां सामान्यो धर्म उच्यते॥**
**याजनाध्यापने राज्ञो भूतानां चाभिरक्षणम्।**
**पाशुपाल्यं कृषिश्चैव वैश्यस्याऽऽजीवनं स्मृतम्॥**
**शूद्रस्य द्विजशुश्रूषा द्विजानामनुपूर्वशः।**
**शुद्धा च वृत्तिस्तत्सेवा कारुतारणकर्म च॥**

अहिंसादयो वर्णिनां लिङ्गिनां च सामान्यधर्माः

**अहिंसा सत्यवादश्च सत्यं शौचं दया क्षमा।**
**वर्णिनां लिङ्गिनां चैव सामान्यो धर्म उच्यते॥**
**स्वज्ञानं हृदि सर्वेषां धर्मोऽयं वर्णिलिङ्गिनाम्॥**

एकादश समानार्घाणि मद्यानि, सुरा तेभ्योऽधमा

**[४]पानसं द्राक्षमाधूकं खार्जूरं तालमैक्षवम्।**
**मधूत्थं सैरमारिष्टं मैरेयं नालिकेरजम्॥**
**[५]समानानि विजानीयान्मद्यान्येकादशैव तु।**
**द्वादशं तु सुरा मद्यं सर्वेषामधमं स्मृतम्॥**

एतेषां जात्यैव मद्यत्वादल्पमप्यभक्ष्यम्।

+गप. ४०९

+ शेषव्याख्यानं मनोः 'गौडी. पैष्टि०' (मस्मृ. ११।९४) इति श्लोके (वका. पृ. १७५४) द्रष्टव्यम्।

(१) **यसं.** १११.

(२) **यसं.** ११४.

(३) **पुलस्मृ.** ९-११, २२-२३.

(४) **गप.** ४०८ सैर (सौर) नालिकेर (नारिकेल) पौलस्त्यः; **बाल.** १।३३ पृ. १६१.

(५) **गप.** ४०८ सुरा म (सुराम) उत्त. पौलस्त्यः : ४०९ सुरा म (सुराम) पौलस्त्यः; **बाल.** १।३३ पृ. १६१.

## मार्कण्डेयः

ग्रहणे गङ्गादितीर्थस्नानस्य प्रशंसा

**[१]गवां कोटिसहस्रस्य सम्यग्दत्तस्य यत्फलम्।**
**तत्फलं जाह्नवीस्नाने राहुग्रस्ते दिवाकरे॥**
**[२]स्मृत्वा शतक्रतुफलं दृष्ट्वा सर्वाघनाशनम्।**
**स्पृष्ट्वा गोमेधपुण्यं तु पीत्वा सौत्रामणेर्लभेत्॥**
**स्नात्वा वाजिमखं पुण्यं प्राप्नुयादविचारतः।**
**रविचन्द्रोपरागे च अयने चोत्तरे तथा॥**

स्नानासंभवे +स्मरणं कार्यम्, 'स्मृत्वा....', 'स्नात्वा...' इति मार्कण्डेयोक्तेः।

सिन्धु. २९१-२९२

ग्रहणात् पूर्वः उत्तरश्च भोजने वर्ज्यः कालः

**[३]चन्द्रस्य यदि वा भानोर्यस्मिन्नहनि भार्गव।**
**ग्रहणं तु भवेत्तत्र न पूर्वं भोजनक्रिया॥**

तत्र तस्मिन्नहोरात्र इत्यर्थः। स्मृच. २।६२०

**[४]नाऽऽचरेत् सग्रहे तस्मिंस्तथैवास्तमुपागते।**
**यावत्स्यान्नोदयस्तत्र नाश्नीयात्तावदेव तु॥**

अत्रोदयग्रहणं कथंचिन्मुक्तादर्शनेऽप्युदये सति भोजनं यथा स्यादित्येवं कैश्चिद्व्याख्यातम्। अनेनैवाभिप्रायेण शातातपोऽपि – 'अहोरात्रं तु नाश्नीयाच्चन्द्रसूर्यग्रहो यदा। मुक्तं दृष्ट्वा तु भुञ्जीत स्नानं कृत्वा विधानतः॥' इति। स्मृच. २।६२०

**[५]मुक्तिं दृष्ट्वा तु भुञ्जीत स्नानं कृत्वा ततः परम्॥**
**[६]ग्रहणं तु भवेदिन्दोः प्रथमादधि यामतः।**
**भुञ्जीताऽऽवर्तनात्पूर्वं प्रथमे प्रथमादधः॥**

(१) चन्द्रग्रहे तु विशेषमाह मार्कण्डेयः – ग्रहणमिति। प्रथमादधि प्रथमयामादूर्ध्वमित्यर्थः।

+ गङ्गादिपुण्यतीर्थानामिति शेषः।

(१) **स्मृच.** २।३२१; **मपा.** २६४.

(२) **सिन्धु.** २९१-२९२.

(३) **स्मृच.** २।६२०; **मुक्ता.** ४५० उत्तरार्धे (ग्रहणं तु भवेत्तस्मिंस्तत्पूर्वं भोजनं नरः॥).

(४) **स्मृच.** २।६२०; **मुक्ता.** ४५० सग्रहे तस्मिंस्त (संग्रहं चैव त) तृतीयचरणे (यावत्तयोर्नोदयः स्यात्).

(५) **मुक्ता.** ४५०.

(६) **स्मृच.** २।६२०; **मुक्ता.** ४५०; **सिन्धु.** २८२; **विपा.** ३।२।४७१ प्रथमे (पश्चिमे); **कभ.** २८२ प्रतीकमात्रम्.

आवर्तनं मध्यंदिनम्। अनेन यस्मिन्यामे ग्रहणं ततः पूर्वं यामत्रयं परिहाय भुञ्जीतेत्युक्तं भवति।

+स्मृच. २।६२०

(२) रात्रौ प्रथमयामे ग्रहणे दिवा प्रथमयामे भुञ्जीत। अन्यत्राऽऽवर्तनादध इत्यर्थः। मुक्ता. ४५०

(३) प्रथमाद्यामतोऽधि रात्रिद्वितीयप्रहरे ग्रहणं चेन्मध्याह्नात् पूर्वं भुञ्जीत, रात्रिप्रथमयामे चेत्तदा प्रथमादधः प्रथमयाममध्ये। कृभ. २८२

**[1]रवेरावर्तनादूर्ध्वमर्वागेव निशीथतः।**
**चतुर्थे प्रहरे चेत्स्याच्चतुर्थप्रहरादधः॥**
**[2]सायाह्ने ग्रहणं चेत्स्यादपराह्ने न भोजनम्।**
**अपराह्ने न मध्याह्ने मध्याह्ने न तु संगवे॥**
**[3]भुञ्जीत संगवे चेत्स्यान्न पूर्वं भोजनक्रिया॥**

बालवृद्धातुराणां तु ग्रहणयामात्पूर्वमेकयामो निषिद्धः, 'सायाह्ने' इति मार्कण्डेयोक्तेः।

*सिन्धु. २८४

क्षौरे वर्ज्यास्तिथयः

**[4]अष्टमी च तथा षष्ठी नवमी च चतुर्दशी।**
**क्षुरकर्मणि वर्ज्याः स्युः पर्वसंधिस्तथैव च॥**

## गालवः

आततायिभ्रूणवधे न दोषः

**[5]उद्यम्य शस्त्रमायान्तं भ्रूणमप्याततायिनम्।**
**निहत्य भ्रूणहा न स्यादहत्वा भ्रूणहा भवेत्॥**

## गोभिलः

ग्रहणे स्नानादौ रात्रिः शुभा

**[6]तथोपरागपातादौ स्नाने दाने निशा शुभा॥**

+ सिन्धु., विपा. स्मृचगतम्।

* विपा. सिन्धुवत्।

(१) **मुक्ता.** ४५०; **विपा.** ३।२।४७१ रवेरा (रवेस्त्वा) तुर्थे प्र (तुर्थप्र); **कृभ.** २८२ विपावत् (=).

(२) **समु.** ९५ दपराह्ने (दपराह्ने); **स्मृच.** २।६२१; **सिन्धु.** २८४ : २८७ प्रथमचरणमात्रम्; **सम.** ८० समुवत्; **विपा.** ३।२।४७२.

(३) **समु.** ९५; **स्मृच.** २।६२१; **सिन्धु.** २८४; **विपा.** ३।२।४७२.

(४) **स्मृच.** २।३३१; **सम.** १०६ वर्ज्याः स्युः (वर्ज्या च); **पुम.** ४५६.

(५) **कृभ.** १२९४.

(६) **सिन्धु.** २२ विष्णुगोभिलादयः.

## चतुर्विंशतिमतम्

शूद्रसंपर्कस्य शूद्रात् ज्ञानग्रहणस्य च निषेधः, ज्ञानावलिप्तशूद्रस्य नरकप्राप्तिर्ब्राह्मणावमानेन

**[1]शूद्रान्नं शूद्रसंपर्के(?र्कः) शूद्रेण च समासनम्।**
**शूद्राज्ज्ञानागमः कश्चिज्ज्वलन्तमपि पातयेत्॥**
**या शूद्रा पत्नी तु(?शूद्रा पत्नी तु या)**
**नित्यं सा चैव गृहाधि(?हमेधि)नी।**
**वर्जितः पितृदेवैश्च रौरवं यात्यसौ द्विजः॥**
**शूद्रान्नरसपुष्टाङ्गो द्विजः शूद्रान्नभोजनः।**
**तं होचुर्ब्राह्मणाः सन्तो यां यां योनिं गमिष्यति॥**
**गृध्रो द्वादश जन्मानि दश जन्मानि सूकरः।**
**श्वा चैव सप्त जन्मानि अङ्गिरा मुनिरब्रवीत्॥**
**[2]श्वचर्मणि यथा क्षीरमपेयं ब्राह्मणादिभिः।**
**तद्वच्छूद्रमुखाद्वाक्यं न श्रोतव्यं कथंचन॥**
**[3]पण्डितस्यापि शूद्रस्य शास्त्रज्ञानरतस्य च।**
**वचनं तस्य न ग्राह्यं शुनोच्छिष्टं हविर्यथा॥**
**[4]शूद्रो ज्ञानबलोपेतो ब्राह्मणान् द्विषते यदि।**
**स याति नरकं घोरं यावदाभूतसंप्लवम्॥**

अप्रणतशूद्रे स्वस्तिकरणनिषेधः

**[5]अप्रणामकृते शूद्रे स्वस्ति कुर्वन्ति ये द्विजाः।**
**शूद्रोऽपि नरकं याति ब्राह्मणस्य(?स्तु) विशेषतः॥**

शूद्राज्ञाधारकविप्राणां दुर्गतिः

**शूद्रशिष्यास्तु ये विप्राः शूद्रप्रेष्यास्तथैव च।**
**इह जन्मनि शूद्रास्ते मृताः श्वानोऽपि जायते(?)॥**

वर्जनीया दुष्टव्यक्तयः

**[6]कृष्णसर्पं द्विजं नष्टं शूद्रं चैवातिवादिनम्।**
**गर्दभं जारजातं च दूरतः परिवर्जयेत्॥**

(१) **चम.** २२४-२२७.

(२) **चम.** २२८ ब्राह्मणा (ब्रह्मवा) कथं (कदा); **पमा.** २।१७५; **शूशि.** ६१.

(३) **चम.** २२९; **पमा.** २।१७५-१७६; **शूशि.** ६१ हविर्यथा (यथा हविः).

(४) **चम.** २३०; **पमा.** २।१७६ नबलोपेतो (नावलेपात्तु) द्विष (भाष) दाभूत (दाहूत); **शूशि.** ६१ नबलोपेतो (नावलेपेन) द्विष (भाष).

(५) **चम.** २३१-२३२.

(६) **चम.** २३३; **पमा.** २।१७६; नष्टं (दुष्टं) चतुर्थचरणे (शूद्रं च प्रतिपादकम्) **मुक्ता.** ४६४ नष्टं ... दिनम् (दुष्टं शूद्रं च प्रतिवादकम्)

सत्यप्रशंसा, तत्स्वरूपम्

**[1]न सत्येन समं तपः॥**

**असत्यमपि वक्तव्यं गोब्राह्मणहिताय वै।**

**सत्यादपि हि तत्सत्यं न सत्यं सत्यमुच्यते॥**

क्रियाप्रशंसा, क्रियाहीननिन्दा

**तक्रेणापि समं न स्यात्काञ्जिकं हि सुसंस्कृतम्।**

**ब्राह्मणोऽपि क्रियाहीनः पतितादभिधी(?पि ही)यते॥**

**पतिते निःकृ(?निष्कृ)तिर्दृष्टा क्रियाहीने न निःकृ(निष्कृ)तिः।**

**तस्मात्सर्वप्रयत्नेन क्रियायुक्तो भवेन्नरः॥**

**क्रियया सिध्यते धर्मः स्वर्गमोक्षादिकं तथा।**

**क्रियया मुच्यते पापैर्ब्रह्महत्यादिदुस्तरैः॥**

**क्रियाहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु।**

**तस्मात्सर्वप्रयत्नेन क्रियाहीनं परित्यजेत्॥**

ब्राह्मणस्य कर्माणि, तद्रहितस्य निन्दा

**ब्राह्मणस्य क्रिया मुख्या स्नानहोमजपादिकम्।**

**श्रौतस्मार्तादिकर्माणि पूर्ताणि(?नि) च तपांसि च॥**

**स्नानं होमजपातिथ्यं नाऽऽचरेच्छक्तिमान्द्विजः।**

**वृथा तज्जीवितं तस्य परत्र च न (? स) हीयते॥**

मनुष्याणां पावनानि कर्माणि

**स्नानं दानं तपो ध्यानं पितृदेवार्चनं तथा।**

**पावनानि मनुष्याणां दुःकृ(?दुष्कृ)तस्येह कर्मणः॥**

सत्यादिरूपः सनातनधर्मः, तत्पराणां सुगतिः, तद्विहीनानां दुर्गतिः

**सत्यं दमस्तपः शौचं संतोषो भैक्ष्यमार्जवम्।**

**दानं दमो दया ध्यानमेष धर्मः सनातनः॥**

**शक्तिमानप्यशक्तोऽसौ धनवानपि निर्धनः।**

**श्रुतवानपि मूर्खस्तु यो धर्मविमुखो नरः॥**

**धर्मं चिन्तयमानोऽपि यस्तु प्राणैर्विमुच्यते।**

**मृतः स्वर्गमवाप्नोति धर्मस्यैतत्फलं विदुः॥**

**धर्मो नास्तीति मन्वानाः शुचीनपि हनन्ति चेत्।**

**अश्रद्दधाना धर्मज्ञा(? घ्ना)स्ते वै निरयगामिनः॥**

(१) चम. ३९५-३९६, ४००-४१०, ४५६-४५७.

धर्मकर्मानुसारिब्राह्मणानां प्रशंसा, विपरीतानां निन्दा

**ये केचिद्ब्राह्मणाः सम्यक् श्रौतस्मार्तानुसारिणः।**

**कुलधर्मानुगाः सर्वे पूज्याः सर्वेषु कर्मसु॥**

**मार्गातिवर्तिनः सर्वे ये चान्ये द्विजनिन्दकाः।**

**आत्मानमुत्तमंमा(? म)न्यास्ते सर्वेऽब्राह्मणा मताः॥**

**तान्सर्वान् वर्जयेत्पतितान्सर्वकार्येषु (? द्विप्रान्पतितान् सर्वकर्मसु)॥**

उद्यानादावकालावस्थाननिषेधः

**[1]नोद्यानादावकालेषु प्राज्ञस्तिष्ठेत्कदाचन॥**

ग्रहणमुक्तिस्नानस्य कर्तव्यता

**[2]मुक्तौ यस्तु न कुर्वीत स्नानं ग्रहणसूतके।**

**स सूतकी भवेत्तावद्यावत्स्यादपरो ग्रहः॥**

इदं च स्नानममन्त्रकं कार्यमिति स्मृतिरत्नावल्याम्।

सिन्धु. २८९

## षट्त्रिंशन्मतम्

ग्रहणे अशुचित्वं शुद्धिस्नानेन कर्माधिकारश्च, ग्रहणपूर्वशृतान्नत्यागः

**[3]सर्वेषामेव वर्णानां सूतकं राहुदर्शने।**

**स्नात्वा कर्माणि कुर्वीत शृतमन्नं विवर्जयेत्॥**

(१) सूतकग्रहणं सचेलस्नानप्राप्त्यर्थम्। अत एव वृद्धवसिष्ठः — 'सर्वेषामेव वर्णानां सूतकं राहुसूतके। सचेलं तद्भवेत् स्नानं सूतकान्नं च वर्जयेत्॥'।

*स्मृच. २।६२२

(२) वेधकाले ग्रहणे वा पक्वमन्नं त्याज्यम्, 'सर्वेषामेव...' इति हेमाद्रौ षट्त्रिंशन्मतात्। शृतमिति तदन्तरितस्योपलक्षणम्, 'नवश्राद्धेषु यच्छिष्टं ग्रहपर्युषितं च यत्।' इति मिताक्षरायां वचनात्।

सिन्धु. २८५

(३) पक्वमन्नं त्याज्यम्। ग्रहणोत्तरमपि न भुञ्जीतेत्यर्थः। क्वचित्पयआद्येषु प्रतिप्रसवः — 'आरनालं

* यप्र. स्मृचगतम्।

(१) मुक्ता. ४६४.

(२) सिन्धु. २८९; विपा. ३।२।४६४.

(३) स्मृच. २।६२२; निप. १२५ उत्त. (=); सिन्धु. २८५; सम. ६६ उत्त. (=) : ७८; यप्र. ६९ शृत (श्रित); सस्मृ. १४०.

तथा क्षीरं किलाटं घृतसक्तवः। स्नेहपक्वं च तैलं च न कदाचित्प्रदुष्यति॥', तथा 'आरनालं पयस्तक्रं दधि तैलाज्यपाचितम्। मणिकस्थोदकं चैव न दुष्येद्राहुदर्शने॥' इयं च सूतकोक्तिः स्नानार्था, नान्यकर्मपरित्यागार्था। तदुक्तं व्याघ्रपादेन – 'स्मार्तकर्मपरित्यागो राहोरन्यत्र सूतके' इति। सम.७८

ग्रहणस्नाने तिलामलकनिषेधः

[1]**सप्तम्यामप्यमायां च संक्रान्तिग्रहसूतिषु।**
**धनपुत्रकलत्रार्थी तिलकल्कं न संस्पृशेत्॥**

ग्रहः ग्रहणम्। सूतिः जन्मदिनम्।

मर. १३३

[2]**सप्तम्यां च नवम्यां च संक्रान्तौ रविवासरे।**
**चन्द्रसूर्योपरागे च स्नानमामलकैस्त्यजेत्॥**

रात्रौ सूर्यग्रहणं दिवा चन्द्रग्रहणं
च न स्नानदानादिनिमित्तम्

[3]**सूर्यग्रहो यदा रात्रौ दिवा चन्द्रग्रहस्तथा।**
**तत्र स्नानं न कुर्वीत दद्याद्दानं न च क्वचित्॥**

(१) एवं च यदुक्तं षट्त्रिंशन्मते – 'सूर्यग्रहो...' इति, तद्यद्भूभागावस्थितानामुपरागो न दृश्यते तद्विषयमित्यवगन्तव्यम्। स्मृच. २।६२४

(२) क्वचित्तु ग्रहणविशेषे स्नानादिकं न कर्तव्यम्। तदुक्तं षट्त्रिंशन्मते – सूर्यग्रह इति।

⇩पमा. १।३८५

(३)इदमेव ज्ञापकम् उपरागज्ञानमात्रं स्नानादिप्रयोजकम्, न तु चाक्षुषत्वापेक्षेति। तेन मेघावरणेऽपि स्नानं भवत्येवेति।

चमव्याआ. ६२

(४)अह्नि सूर्यग्रहणं रात्रौ चन्द्रग्रहणं चेत्येवं प्रसिद्धिः सार्वजनीना, तादृशे ग्रहणे स्नानादिकमुक्तम्। यत्तु कालविपर्ययेण प्राप्यमाणं ज्योतिःशास्त्रमात्रप्रसिद्धं ग्रहणं तत्र स्नानादिकं न कर्तव्यम्। तदुक्तं कालनिर्णये – 'सूर्यग्रहो...' इति। मुक्ता. २७३

मुण्डनोत्तरं शिरःप्रक्षालनम्

[1]**शिरसो मुण्डनं कृत्वा पुनः प्रक्षालयेत्तु तत्॥**

## वायुपुराणं ब्रह्माण्डपुराणं च

यजनाध्ययनदानानि द्विजसामान्यधर्माः

[2]**सामान्यानि तु कर्माणि ब्रह्मक्षत्रविशां पुनः।**
**यजनाध्ययनं दानं सामान्यानि तु तेषु च॥**

वर्णानां क्रमेण जपादयः प्रधानधर्माः,
अवरेणोत्तमवर्णानुवृत्तिः

[3]**आरम्भयज्ञाः क्षत्रस्य हविर्यज्ञा विशांपतेः।**
**परिचारयज्ञाः शूद्रास्तु जपयज्ञा द्विजोत्तमाः॥**
[4]**ब्राह्मणाननुवर्तन्ते क्षत्रियाः क्षत्रियान्विशः।**
**वैश्यानुवर्तिनः शूद्राः परस्परमनुव्रताः॥**

धर्ममूलमद्रोहादिदशकम्

[5]**अद्रोहश्चाप्यलोभश्च दमो भूतदया तपः।**
**ब्रह्मचर्यं तथा सत्यमनुक्रोशः क्षमा धृतिः।**
**सनातनस्य धर्मस्य मूलमेतद्दुरासदम्॥**

ग्रहणश्राद्धस्य रात्रावपि कर्तव्यता
प्रशंसा च

[6]**नक्तं तु वर्जयेच्छ्राद्धं राहोरन्यत्र दर्शनात्।**
**सर्वस्वेनापि कर्तव्यं क्षिप्रं वै राहुदर्शने॥**
**उपरागे न कुर्याद्यः पङ्के गौरिव सीदति।**
**कुर्वाणस्तूद्धरेत्पापान्मग्नान्नौरिव सागरे॥**

---

⇩ शेषं स्मृचवत्।

(१) **मर.** १३३ मायां च (मावास्यां) कल्कं (पिष्टं); **आर.** ५८ पूर्वार्धे (तथा सप्तम्यमावास्यासंक्रान्तिग्रहसूतिषु।) कल्कं (पिष्टं); **सिन्धु.** १२८२ सूतिषु (जन्मसु) शेषम् आरवत्; **विपा.** ३।२।८५३.

(२) **मर.** १३४; **विपा.** ३।२।८५३.

(३) **स्मृच.** २।६२४; **पमा.** १।३८५; **चमव्याआ.** ६२; **मुक्ता.** २७३ कालनिर्णये; **सिन्धु.** २९५ : ३०६ (=); **सम.** ७९ (=); **विपा.** ३।२।४६८ दिवा (दिने) : ३।२।४७६ न च (च न) (=); **आन.** २४१ स्तथा (स्तदा) कालनिर्णये.

(१) **अप.** १।१५४ पृ. २२९.

(२) **वायु.** १।८।१६४; **ब्रह्माण्ड.** १।७।१६३-१६४ तु क (च क) ध्ययनं (ध्यापने) नि तु तेषु (नीतरेषु).

(३) **वायु.** १।५७।५०; **ब्रह्माण्ड.** १।२९।५५ क्षत्रस्य (क्षत्राश्च) विशांपतेः (विशस्तथा).

(४) **वायु.** १।५७।५२; **ब्रह्माण्ड.** १।२९।५७.

(५) **वायु.** १।५७।११६; **ब्रह्माण्ड.** १।३०।३७-३८ दमो (तपो) तपः (दमः).

(६) **वायु.** २।१६।३-४.

क्षुधितविप्रायान्नदानस्य प्रशंसा

[1]न वक्तव्यः सदा विप्रः क्षुधितो नास्ति किंचन।
तस्मै सत्कृत्य यो दद्यादयूपो यज्ञ उच्यते॥

शूद्रस्य वेदानधिकारः पुराणाधिकारश्च

[2]न हि वेदेष्वधीकारः कश्चिच्छूद्रस्य विद्यते।
पुराणेष्वधिकारो मे दर्शितो ब्राह्मणैरिह॥

यत्तु वायुपुराणे सूतः – 'न हि वेदे....ब्राह्मणैरिह॥' तन्न शूद्राधिकारप्रतिपादकम्, सूतस्य संकरजातित्वेन (अ)शूद्रत्वात्, 'ब्राह्मण्यां क्षत्रियात्सूतः' (यास्मृ. १।९३) इति योगिवचनात्। यद्वा, ब्राह्मणद्वारा तदुपसर्जनत्वेनाधिकार इति व्याख्येयम्।

शूशि. ४८

गजच्छायासंज्ञकसूर्यग्रहणे श्राद्धविधिः

[3]सैंहिकेयो यदा सूर्यं ग्रसते पर्वसंधिषु।
गजच्छाया तु सा प्रोक्ता तस्यां श्राद्धं प्रकल्पयेत्॥

ग्रहणस्नाने आमलकनिषेधः

[4]नवम्यां दर्शसप्तम्यां संक्रान्तौ रविवासरे।
चन्द्रसूर्योपरागे च स्नानमामलकैस्त्यजेत्॥

एकस्यार्थे स्वपरहिंसा पातकम्, बहूनामर्थे सा न पातकम्

[5]एकस्यार्थाय यो हन्यादात्मनो वा परस्य वा।
एकं प्राणं बहून्वाऽपि कामं तस्यापि पातकम्॥
[6]यस्मिंस्तु निहतेऽभद्रे एधन्ते बहवः सुखम्।
तस्मिन्हतेऽशुभे नास्ति पातकं चोपपातकम्॥

जलवायुदीक्षितयोगिनिन्दाया निषेधः

[7]न चैताः परिचक्षीत वहन्त्यो वाऽथवा स्थिताः॥

अप इत्यनुवृत्तौ वायुपुराणे – नैता इति। परिचक्षीत परिवदेत्। ×गृक ३५२

[1]तस्मान्नैतं परिवदेद्वायुं तं वायुमीश्वरम्।
आदत्ते सुकृतं तेषां ये वै परिवदन्ति तम्॥
[2]तावत्कालं स्मृतो विप्र उग्रो देवस्तु दीक्षितः।
तस्मान्नैनं परिवदेदश्लीलं नास्य कीर्तयेत्॥

तावत्कालं यावद्दीक्षाकालम्। उग्रः रुद्रः।

⇩गृक. ३५२

[3]योगं परिवदेद्यस्तु ध्यानिनं मोक्षकाङ्क्षिणम्।
स गच्छेन्नरकं घोरं श्रोतारश्च न संशयः॥

द्वेषस्य ब्रह्मचर्यनाशकत्वं ब्रह्मचर्यप्रशंसा च

[4]द्वेषमूलं भयं यस्माद्द्वेषाभावे भयं कुतः।
द्वेषश्च रागमूलः स्याद्ब्रह्मचर्यं च नाशयेत्॥
ब्रह्मचर्याद्ब्राह्मणस्य ब्राह्मणत्वं विधीयते।
एवमाहुः परे लोके ब्रह्मचर्यविदो जनाः॥
ब्रह्मचर्ये स्थितं धैर्यं ब्रह्मचर्ये स्थितं तपः।
ये स्थिता ब्रह्मचर्येण ब्राह्मणास्ते दिवि स्थिताः॥

## ब्रह्माण्डपुराणम्

ग्रहणश्राद्धस्य रात्रावपि कर्तव्यता अकरणे प्रत्यवायश्च

[5]नक्तं तु वर्जयेच्छ्राद्धं राहोरन्यत्र दर्शनात्।
सर्वस्वेनापि कर्तव्यं क्षिप्रं वै राहुदर्शने॥
उपरागे न कुर्याद्यः पङ्के गौरिव सीदति।
कुर्वाणस्तत्तरेत्पापं सती नौरिव सागरे॥

---

(१) वायु. २।१७।४७-४८; ब्रह्माण्ड. ३।१५।२० (न वक्तव्यं सदा विप्र क्षुधिते नास्ति किंचन। तस्मै सत्कृत्य दातव्यं सदाऽपचितिरेव सः॥).

(२) शूशि. ४८; शूक. २३ प्रथमचरणे (न वेदेष्वधिकारो हि) पाद्योक्तिः; विपा. ५।३६६ ष्वधी (ष्वधि) रिह (रिति) पाद्योक्तिः.

(३) सिन्धु. २९३.

(४) निप्र. २।५१० (–); गप. २३२ (–); आप्र. १८०.

(५) गृक. ३००; गृर. ५०४ तस्यापि (तस्यास्ति).

(६) गृक. ३००; गृर. ५०४.

(७) गृक. ३५२ न चैताः (नैताः) न्त्यो वाऽथ (न्त्योऽथवाऽथ); गृर. ५४२ प्रथमचरणे (परिचक्षीत सर्वत्र); निप्र. २।५०५ प्रथमचरणमात्रम्.

× गृर., निप्र. गृकवत्।

⇩ गृर. गृकवत्।

(१) गृक. ३५२; निप्र. २।५०५ (न चायुः परिवदेत्) एतावदेव.

(२) गृक. ३५२ विप्र (देव) क्रमेण वायुपुराणम्; गृर. ५४२ क्रमेण वायुपुराणम्; निप्र. २।५०६ पूर्वार्धे (तावत्कालं दीक्षितो भुवस्तनं परिवदेत्।) पू. क्रमेण वायुपुराणम्.

(३) गृक. ३५२ क्रमेण वायुपुराणम्; गृर. ५४२ काङ्क्षिणम् (कारिणम्) क्रमेण वायुपुराणम्; निप्र. २।५०६ काङ्क्षिणम् (कामिनम्), २।५८५.

(४) यसं. ३३.

(५) ब्रह्माण्ड. २।१४।३-४.

ग्रहणनिमित्तकमाशौचम्, स्नानेन कर्माधिकारः, पक्वान्न-वर्जनम्

**[1]आशौचं जायते नृणां ग्रहणे चन्द्रसूर्ययोः।**
**राहुस्पर्शे तथा स्नात्वा दानादौ कल्पते नरः॥**

यद्ग्रहणनिमित्ताशौचं तत्स्नानेन निवर्त्यमित्युक्तं ब्रह्माण्डपुराणे – आशौचमिति।

*मुक्ता. २७२

**[2]सर्वेषामेव वर्णानां सूतकं राहुदर्शने।**
**स्नात्वा कर्माणि कुर्वीत पक्वमन्नं विवर्जयेत्॥**

(१) ग्रहणनिमित्तमशौचं यत्तदपि स्नानापनोद्यमेव केवलं मुक्तिपर्यन्तं पाकस्पर्शादिनिषेधपरम्।

निप्र. २।६८९

(२) ग्रहणकाले ततः पूर्वं वा यत्पक्वमन्नं तत् पश्चादपि न भुञ्जीतेत्यर्थः। मुक्ता. २७२

## मार्कण्डेयपुराणम्

आनृशंस्यं क्षत्रियस्य प्रधानधर्मः

**[3]आनृशंस्यं परो धर्मः क्षत्रियाणां विशेषतः॥**

सत्यस्य प्रशंसा

**[4]श्मशानवद्वर्जनीयो नरः सत्यबहिष्कृतः।**
**नातः परतरं धर्मं वदन्ति पुरुषस्य तु।**
**यादृशं पुरुषव्याघ्र स्वसत्यपरिपालनम्॥**
**अग्निहोत्रमधीतं वा दानाद्याश्चाखिलाः क्रियाः।**
**भजन्ते तस्य वैफल्यं यस्य वाक्यमकारणम्॥**
**सत्यमत्यन्तमुदितं धर्मशास्त्रेषु धीमताम्।**
**तारणायानृतं तद्वत्पातनायाकृतात्मनाम्॥**
**सप्ताश्वमेधानाहृत्य राजसूयं च पार्थिवः।**
**कृतिर्नाम च्युतः स्वर्गादसत्यवचनात्सकृत्॥**

* आन. मुक्तावत्।

(१) **मुक्ता.** २७२ आशौचं (अशौचं); आन. २४० तथा (तयोः) कल्पते (शुध्यते) (=).

(२) **निप्र.** २।६८९ सूतकं (सुतकं) पक्व (श्रुत) (=); **मुक्ता.** २७२; **सिन्धु.** ४४५ पू. (=) : ७९६ पक्व (शृत) (=); **आन.** २४० चतुर्थचरणवर्जम्; **कृभ.** ३१५ पू. (=).

(३) **मार्क.** ७।५३.

(४) **मार्क.** ८।१७-२१.

दानाध्ययनयजनानि द्विजसामान्यधर्माः, शूद्रधर्मः द्विजशुश्रूषा, स्वधर्म-त्यागपरधर्मस्वीकार-योर्निन्दा

**मदालसोवाच –**

**[1]दानमध्ययनं यज्ञो ब्राह्मणस्य त्रिधोदितः।**
**धर्मो नान्यश्चतुर्थोऽस्ति धर्मस्तस्याऽऽपदं विना॥**
**दानमध्ययनं यज्ञः क्षत्रियस्याप्ययं त्रिधा।**
**धर्मः प्रोक्तः क्षिते रक्षा शस्त्राजीवश्च जीविका॥**
**दानमध्ययनं यज्ञो वैश्यस्यापि त्रिधैव सः॥**
**दानं यज्ञोऽथ शुश्रूषा द्विजातीनां त्रिधा मया।**
**व्याख्यातः शूद्रधर्मोऽपि जीविका कारुकर्मजा॥**
**तद्वद्द्विजातिशुश्रूषा पोषणं क्रयविक्रयैः।**
**वर्णधर्मास्त्विमे प्रोक्ताः श्रूयतामाश्रमाश्रयाः॥**
**स्ववर्णधर्मात्संसिद्धिं नरः प्राप्नोति न च्युतः।**
**प्राप्नोति नरकं प्रेत्य प्रतिषिद्धनिषेवणात्॥**

सत्यशौचादयोऽष्टौ नित्यसामान्यधर्माः

**सत्यं शौचमहिंसा च अनसूया तथा क्षमा।**
**आनृशंस्यमकार्पण्यं संतोषश्चाष्टमो गुणः॥**
**एते संक्षेपतः प्रोक्ता धर्मा वर्णाश्रमेषु च।**
**एतेषु नित्यधर्मेषु नित्यं तिष्ठेत्समन्ततः॥**
**स याति ब्रह्मलोकं हि यावदिन्द्राश्चतुर्दश॥**

ग्रहणनिमित्तकश्राद्धविधिः

**[2]कार्यं श्राद्धम् ... सूर्येन्दुग्रहणेऽयने॥**

ग्रहणे रात्रावपि स्नानम्

**[3]उपरागे परं स्नानमृते दिनमुदाहृतम्॥**

परोपतापककर्मजन्तुपीडनयोर्निषेधः

**परोपतापकं कर्म जन्तुपीडां च वर्जयेत्॥**

मैत्रीसहवासयोर्निषेधस्य विषया उद्धतादयः विधेर्विषयाः साधुप्रभृतयश्च

**नोद्धतोन्मत्तमूढैश्च नाविनीतैश्च पण्डितः।**
**गच्छेन्मैत्रीं न चाशीलैर्न च चौर्यादिदूषितैः॥**

(१) **मार्क.** २५।३, ५,६, ७-९, ३२-३४.

(२) **मार्क.** २८।२०, २१.

(३) **मार्क.** ३१।५३, ८०, ९०-९४.

**न चातिव्ययशीलैश्च न लुब्धैर्नापि वैरिभिः।**
**नानृतकैस्तथा क्रूरैः सहाऽऽसीत कदाचन।**
**न बन्धकीभिर्न न्यूनैर्बन्धकीपतिभिस्तथा।।**
**सार्धं न बलिभिः कुर्यान्न च न्यूनैर्न निन्दितैः।**
**न सर्वशङ्किभिर्नित्यं न च दैवपरैर्नरैः।।**
**कुर्वीत साधुभिर्मैत्रीं सदाचारावलम्बिभिः।**
**प्राज्ञैरपिशुनैः शक्तैः कर्मण्युद्योगभागिभिः।।**
**वेदविद्याव्रतस्नातैः सहाऽऽसीत सदा बुधः।।**

क्षत्रियं प्रति याच्ञाया अधर्मत्वम्

[1]**सुबाहुरपि नो याच्ञां चकार मतिमांस्तदा।**
**न धर्मः क्षत्रियस्येति याच्ञा वीर्यधनो हि सः।।**

शक्तं प्रति सर्वविषयकसङ्गकामयोर्निषेधः अशक्तं प्रति सद्भिः सह सङ्गस्य मुमुक्षाविषयककामस्य चानुमतिश्च

**सङ्गः सर्वात्मना त्याज्यः स चेत्यक्तुं न शक्यते।**
**स सद्भिः सह कर्तव्यः सतां सङ्गो हि भेषजम्।।**
[2]**कामः सर्वात्मना हेयो हातुं चेच्छक्यते न सः।**
**मुमुक्षां प्रति कार्यः स सैव तस्यापि भेषजम्।।**

पादन्यासजलपानवाक्प्रयोगचिन्तनानि क्रमेण चक्षुर्वस्त्रसत्य-बुद्धिभिर्विशोध्य कर्तव्यानि

[3]**चक्षुःपूतं न्यसेत्पादं वस्त्रपूतं जलं पिबेत्।**
**सत्यपूतां वदेद्वाणीं बुद्धिपूतं च चिन्तयेत्।।**

क्षौरे दिङ्नियमः

[4]**प्राङ्मुखोदङ्मुखो वाऽपि श्मश्रुकर्म च कारयेत्।।**

## मत्स्यपुराणम्

ग्रहणश्राद्धविधिः

[5]**वैशाख्यामुपरागेषु तथोत्सवमहालये।**
**तीर्थायतनगोष्ठेषु दीपोद्यानगृहेषु च।**
**विविक्तेषूपलिप्तेषु श्राद्धं देयं विजानता।।**

दानं शूद्रस्य प्रधानधर्मः

[1]**दानप्रधानः शूद्रः स्यादित्याह भगवान्प्रभुः।**
**दानेन सर्वकामाप्तिरस्य संजायते यतः।।**

कचवञ्चितस्य शुक्रस्य अद्यप्रभृति ब्राह्मणानां सुरापानात् महान् प्रत्यवाय इति शापोक्तिः

**शुक्र उवाच –**
[2]**यो ब्राह्मणोऽद्यप्रभृतीह कश्चि-**
**न्मोहात्सुरां पास्यति मन्दबुद्धिः।**
**अपेतधर्मा ब्रह्महा चैव स स्या-**
**दस्मिँल्लोके गर्हितः स्यात्परे च।।**
**मया चेमां विप्रधर्मोक्तसीमां**
**मर्यादां वै स्थापितां सर्वलोके।**
**सन्तो विप्राः शुश्रुवांसो गुरूणां**
**देवा दैत्याश्चोपशृण्वन्तु सर्वे।।**

जपादयश्चत्वारो वर्णानां क्रमेण प्रधानधर्माः, अवरवर्णैरुत्तम-वर्णानामनुवर्तनम्

[3]**आरम्भयज्ञः क्षत्रस्य हविर्यज्ञा विशः स्मृताः।**
**परिचारयज्ञाः शूद्राश्च जपयज्ञाश्च ब्राह्मणाः।।**
**ब्राह्मणैश्च विधीयन्ते क्षत्रियाः क्षत्रियैर्विशः।**
**वैश्याच्छूद्राऽनुवर्तन्ते परस्परमनुग्रहात्।।**

सर्वधर्ममूलाद्रोहादिदशकम्

[4]**अद्रोहश्चाप्यलोभश्च दमो भूतदया शमः।**
**ब्रह्मचर्यं तपः शौचमनुक्रोशं क्षमा धृतिः।**
**सनातनस्य धर्मस्य मूलमेव दुरासदम्।।**

ग्रहणे अमरकण्टकादिक्षेत्र-माहात्म्यम्

[5]**चन्द्रसूर्योपरागे तु गच्छेद्योऽमरकण्टकम्।**
**अश्वमेधाद्दशगुणं प्रवदन्ति मनीषिणः।।**

(१) **मार्क.** ३४।१३, २३.
(२) **मार्क.** ३४।२४ कार्यः स (तत्कार्यं); **मोक.** ८२ द्वितीयचरणे (हातुं चेत्स न शक्यते) सैव (स वै).
(३) **मार्क.** ३८।४.
(४) **गृर.** ५०१.
(५) **मत्स्य.** १७।११-१२.

(१) **मत्स्य.** १७।७१; **शूत.** ६३३.
(२) **मत्स्य.** २५।६२-६३.
(३) **मत्स्य.** १४२।५०, ५२.
(४) **मत्स्य.** १४३।३१-३२.
(५) **मत्स्य.** १८८।८५-८७, ९५-९६.

**स्वर्गलोकमवाप्नोति दृष्ट्वा तत्र महेश्वरम्।**
**ब्रह्महत्या गमिष्यन्ति राहुग्रस्ते दिवाकरे॥**
**ज्वालेश्वरे महाराज यस्तु प्राणान्परित्यजेत्।**
**चन्द्रसूर्योपरागेषु तस्यापि शृणु यत्फलम्॥**
**सर्वकर्मविनिर्मुक्तो ज्ञानविज्ञानसंयुतः।**
**रुद्रलोकमवाप्नोति यावदाभूतसंप्लवम्॥**
**[1]सोमग्रहे तु राजेन्द्र पापक्षयकरं नृणाम्।**
**त्रैलोक्यविश्रुतं राजन्सोमतीर्थं महाफलम्॥**
**[2]कुरुक्षेत्रं महापुण्यं राहुग्रस्ते दिवाकरे॥**
**[3]सूर्योपरागे यो दद्याद्दानं चैव यथेच्छया।**
**दीयमानं तु तद्दानमक्षयं तस्य तद्भवेत्॥**
**चन्द्रसूर्योपरागेषु यत्फलं त्वमरकण्टके।**
**तदेव निखिलं पुण्यं भृगुतीर्थे न संशयः॥**

ग्रहणनिमित्तकदानविधिः

**[4]ग्रहणे शशिसूर्ययोः ... दत्तं महाफलम्॥**

मातृपितृगुरूणामग्नेश्च शुश्रूषाया
विधिः प्रशंसा च

**[5]इमं लोकं मातृभक्त्या पितृभक्त्या तु मध्यमम्।**
**गुरुशुश्रूषया चैव ब्रह्मलोकं समश्नुते॥**
**सर्वे तस्याऽऽदृता धर्मा यस्यैते त्रय आदृताः।**
**अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः॥**
**यावत्त्रयस्ते जीवेयुस्तावन्नान्यं समाचरेत्।**
**तेषां च नित्यं शुश्रूषां कुर्यात्प्रियहिते रतः॥**
**तेषामनुपरोधेन पारतन्त्र्यं यदा चरेत्।**
**तत्तन्निवेदयेत्तेभ्यो मनोवचनकर्मभिः॥**
**त्रिष्वप्येतेषु कृत्यं हि पुरुषस्य समस्यते॥**
**[6]एतावदेव कर्तव्यं पुरुषेण विजानता।**
**मातुः पितुश्च शुश्रूषा गुरोश्च वरवर्णिनि॥**
**तपसा ब्रह्मचर्येण अग्निशुश्रूषया शुभे।**
**पुरुषाः स्वर्गमायान्ति गुरुशुश्रूषया तथा॥**

(१) मत्स्य. १९१।९५-९६.
(२) मत्स्य. १९२।१२.
(३) मत्स्य. १९३।५३-५५.
(४) मत्स्य. २०६।२,३.
(५) मत्स्य. २१०।११-१४.
(६) मत्स्य. २११।१७,१९-२१, २३-२४.

**आचार्यश्च पिता चैव माता भ्राता च पूर्वजः।**
**न चैतेऽप्यवमन्तव्या ब्राह्मणेन विशेषतः॥**
**आचार्यो ब्रह्मणो मूर्तिः पिता मूर्तिः प्रजापतेः।**
**माता पृथिव्या मूर्तिस्तु भ्राता वै मूर्तिरात्मनः॥**
**तयोर्नित्यं प्रियं कुर्यादाचार्यस्य तु सर्वदा।**
**तेष्वेव त्रिषु तुष्टेषु तपः सर्वं समाप्यते॥**
**तेषां त्रयाणां शुश्रूषा परमं तप उच्यते।**
**न च तैरननुज्ञातो धर्ममन्यं समाचरेत्॥**

ग्रहणनिमित्तकदानविधिः

**[1]युगादिषूपरागेषु तथा मन्वन्तरादिषु।....**
**महादानानि देयानि संसारभयभीरुणा॥**

अपराह्णादिभवग्रहणेषु भोजने
वर्ज्याः पूर्वकालाः

**[2]अपराह्णे न मध्याह्ने मध्याह्ने न तु संगवे।**
**भुञ्जीत संगवे चेत्स्यान्न पूर्वं भुजिमाचरेत्॥**
बालवृद्धातुरविषये मत्स्यपुराणे — अपराह्णे इति।
*पमा. १।३८३

## विष्णुपुराणम्

वर्णाश्रमविरुद्धकर्माचरण-
निषेधः

**[3]वर्णाश्रमविरुद्धं च कर्म कुर्वन्ति ये नराः।**
**कर्मणा मनसा वाचा निरयेषु पतन्ति ते॥**
वर्णाश्रमविरुद्धं नृत्यगीतादिव्यसनरूपं कर्म।
वैच.

चातुर्वर्ण्यधर्माणामनुक्रमणम्

**सगर उवाच —**
**[4]तदहं श्रोतुमिच्छामि वर्णधर्मानशेषतः।**
**तथैवाऽऽश्रमधर्मांश्च द्विजवर्य ब्रवीहि तान्॥**
तत् तर्हि तान् श्रोतुमिच्छामि। ब्रवीहि ब्रूहीत्यर्थः।
वैच.

* सम., आभू. पमागतम्।
(१) मत्स्य. २७४।२०,२३.
(२) पमा. १।३८३ न तु (चेन्न) उत्तरार्धे (संगवे ग्रहणं चेत्स्यान्न पूर्वं भोजनं चरेत्॥); सम. ८०; आभू. ३९६.
(३) विष्णु. २।६।३०.
(४) विष्णु. ३।८।२०-२२, २४-२५.

**और्व उवाच –**

**ब्राह्मणक्षत्रियविशां शूद्राणां च यथाक्रमम्।**
**त्वमेकाग्रमना भूत्वा शृणु धर्मान्मयोदितान्॥**
**दानं दद्याद्यजेद्देवान्यज्ञैः स्वाध्यायतत्परः।**
**नित्योदकी भवेद्विप्रः कुर्याच्चाग्निपरिग्रहम्॥**

तत्र ब्राह्मणस्याऽऽवश्यकान्धर्मानाह – दानमिति। दद्यात् कुर्यात्। नित्योदकी नित्यस्नानतर्पणादिकृत्। यथाधिकारमौपासनाग्नेस्त्रेतादीनां वा परिग्रहम्। वैच.

**सर्वभूतहितं कुर्यान्नाहितं कस्यचिद्द्विजः।**
**मैत्रीकर्म समस्तेषु ब्राह्मणस्योत्तमं धनम्॥**
**ग्राव्णि रत्ने च पारक्ये समबुद्धिर्भवेद्द्विजः।**
**ऋतावभिगमः पत्न्यां शस्यते चास्य पार्थिव॥**

ग्राव्णि पाषाणे पारक्ये परकीये रत्ने वा। अस्य ब्राह्मणस्येत्युपलक्षणम्। पत्न्यामृतावभिगमः शस्यते श्रुत्याऽभ्यनुज्ञायते, न तु नियम्यते। 'ऋतौ भार्यामुपेयात्' इति श्रुतौ परिसंख्याया उक्तत्वात्, परिसंख्यानियमयोर्भेदात्। तथाहि भट्टपादाः – 'विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति। तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते॥' इति। वैच.

**[1]दानानि दद्यादिच्छातो द्विजेभ्यः क्षत्रियोऽपि हि।**
**यजेच्च विविधैर्यज्ञैरधीयीत च पार्थिव॥**

क्षत्रियधर्मानाह – दानानीति। वैच.

**8[2]पाशुपाल्यं वणिज्यं च कृषिं च मनुजेश्वर।**
**वैश्याय जीविकां ब्रह्मा ददौ लोकपितामहः॥**

वैश्यधर्मानप्याह – पाशुपाल्यमिति द्वाभ्याम्। वैच.

**तस्याप्यध्ययनं यज्ञो दानं धर्मश्च शस्यते।**
**नित्यनैमित्तिकादीनामनुष्ठानं च कर्मणाम्॥**
**द्विजातिसंश्रयं कर्म तादर्थ्यं तेन पोषणम्।**
**क्रयविक्रयजैर्वाऽपि धनैः कारूद्भवेन च॥**

शूद्राणामप्याह – द्विजातीति। द्विजातिसंश्रयं त्रैवर्णिकशुश्रूषालक्षणं कर्म तादर्थ्यं तत्पारतन्त्र्यं च स्वधर्मः। तेन द्विजशुश्रूषालब्धेनाऽऽत्मपोषणं मुख्यम्। आपदि तु क्रयविक्रयजैर्वाणिज्यलब्धैस्तदसंभवे तक्षादिकारुकर्मोद्भवेन द्रव्येण पोषणम्, 'शूद्रस्य द्विजशुश्रूषा तया जीवन्न हीयते।' (यास्मृ. १।१२०) इति मनूक्तेः (? याज्ञवल्क्योक्तेः)। वैच.

**[1]दानं च दद्याच्छूद्रोऽपि पाकयज्ञैर्यजेत वा।**
**पित्र्यादिकं च वै सर्वं शूद्रः कुर्वीत तेन वै॥**

(१) पाकयज्ञैः वैश्वदेवाख्यैः 'नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत्' (यास्मृ. १।१२१) इति याज्ञवल्क्योक्तेः। पित्र्यादिकं श्राद्धादि तेन द्विजशुश्रूषालब्धेन द्रव्येण कुर्वीत। वैच.

(२) इदं कलीतरपरमिति स्मार्तगौडाः। ५७

पाकयज्ञाः पञ्चमहायज्ञाः, पाकशब्दस्य 'तं पाकेन मनसा' (ऋसं. १०।११४।४) इत्यादौ प्राशस्त्यार्थत्वात्। यद्वा, 'योऽस्मत्पाकतरः' इतिवदल्पार्थः। शूक. ६५

अर्थार्जनस्वभार्यर्तुगमनदयातितिक्षा-
दयश्चतुर्दश सामान्यधर्माः

**[2]भृत्यादिभरणार्थाय सर्वेषां च परिग्रहः।**
**ऋतुकालाभिगमनं स्वदारेषु महीपते॥**

पुनः सर्वेषां साधारणधर्मानाह – भृत्यादीति अक्षरद्वयाधिकैः सार्धैस्त्रिभिः। एते परिग्रहाद्याः सर्वेषां सामान्यलक्षणा गुणा इति चतुर्थेनान्वयः। परिग्रहः अर्थसंपादनम्। वैच.

**दया समस्तभूतेषु तितिक्षा नाभिमानिता।**
**सत्यं शौचमनायासो मङ्गलं प्रियवादिता॥**

दया परदुःखप्र(?खाप)हरणेच्छा। तितिक्षा शीतोष्णादिद्वन्द्वसहिष्णुता। अनभिमानिता आत्मनि श्रेष्ठत्वा-

---

8 केवलवृत्तिविषयकमपीदं वचनमग्रिमश्लोकीयतच्छब्दपराप्रष्टव्यबोधार्थमत्र गृहीतम्।

(१) **विष्णु.** ३।८।२६; **बाल.** १।११९ पृ. ३६६ पार्थिव (पार्थिवः).

(२) **विष्णु.** ३।८।३०-३२.

(१) **विष्णु.** ३।८।३३; **स्मृसा.** ७४ च द (प्रद) वा (च) पू.; **पमा.** १।४१९ वा (च) तेन वै (तेन वा); **स्मृकौ.** ९० वा (च) तेन वै (वै नरः); **आत.** ४२५ च दद्याच्छू (दद्याच्च शू) वा (च) पू.; **शूशि.** ६३ च वै (चैव) शेषं स्मृकौवत् : १५७ च दद्याच्छू (दद्याच्च शू) जेत वा (जेत्ततः) पू.; **शूक.** ५७ वै सर्वं (यत्सर्वं) : ६५ जेत वा (जेन्न च) तेन वै (वै नरः); **पप्र.** ४६ सर्वम् आतवत्; **आप्र.** ४०१ पप्रवत्; **सस्मृ.** १७१ स्मृकौवत्.

(२) **विष्णु.** ३।८।३४-३७.

द्यभिमानशून्यता। सत्यं यथार्थकथनम्। शौचं 'मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथाऽऽन्तरम्' इति द्विविधम्। 'शरीरं पीड्यते येन सुशुभेनापि कर्मणा। अत्यन्तं तन्न कर्तव्यमनायासः स उच्यते॥' इत्यनायासः। मङ्गलं 'शिरः सपुष्पं चरणौ सुपूजितौ' इत्याद्युक्तम्। वैच.

**मैत्र्यस्पृहा तथा तद्वदकार्पण्यं नरेश्वर।**
**अनसूया च सामान्या वर्णानां कथिता गुणाः॥**

मैत्री सर्वमित्रभावेन वर्तनम्। अस्पृहा प्राणयात्रामात्रनिमित्तादन्यत्रानभिलाषः। यदुक्तम् – 'अत्युष्णात्सघृतादन्नादच्छिद्राच्चैव वाससः। अपरप्रेष्यभावाच्च भूप इच्छन्पतत्यधः॥' इति। अकार्पण्यं यथाशक्तिदानम्। अनसूया गुणेषु दोषारोपाभावः। वैच.

**आश्रमाणां च सर्वेषामेते सामान्यलक्षणाः।**
**गुणास्तथाऽऽपद्धर्मांश्च विप्रादीनामिमाञ्शृणु॥**

असाधुभिः साधुभिश्च सह व्यवहारस्य क्रमेण निषेधो विधिश्च

**[1]नासमञ्जसशीलैस्तु सहाऽऽसीत कदाचन।**
**सद्वृत्तसंनिकर्षो हि क्षणार्धमपि शस्यते॥**

उत्तमैरधमैश्च सह विवाद-विवाहयोर्निषेधः

**[2]विरोधं नोत्तमैर्गच्छेन्नाधमैश्च सदा बुधः।**
**विवादश्च विवाहश्च तुल्यरूपैर्नृपेष्यते॥**

इष्यते यथाकथंचिदनुमन्यते, न विधीयते॥ वैच.

**[3]नाऽऽरभेत कलिं प्राज्ञः शुष्कवैरं च वर्जयेत्।**
**अप्यल्पहानिः सोढव्या वैरेणार्थागमं त्यजेत्॥**

तदेवाऽऽह – नेति। कलिं कलहम्। वैच.

(१) **विष्णु.** ३।१२।२१.

(२) **विष्णु.** ३।१२।२२ धमैश्च (वरैश्च) तुल्यरूपै (समशीलै); **अप.** ११५४ पृ. २२७; **गृक.** ३४३ उत्तरार्धे (विवाहश्च विवादश्च तुल्यरूपैः सहेष्यते॥); **गृर.** ५३६ विवाह (विषाद); **मपा.** ११८ विवाद (विवाह) विवाह (विवाद) पैर्नृपेष्यते (पे नृपेक्षते); **मर.** ५६ विवाद (विवाह) विवाह (विवाद); **मुक्ता.** ४६२ रूपैर्नृपे (शीलैस्तथे); **संप्र.** ५७२; **आन.** ६५० मरवत् मुक्तावच्च.

(३) **विष्णु.** ३।१२।२३ च वर्जयेत् (न कारयेत्); **गृक.** ३४३ शुष्कवैरं च (शुष्कं वैरं वि); **गृर.** ५३६ अप्यल्प (अप्यर्थ); **मपा.** ११८; **मर.** ५६ च वर्ज (विवर्ज) वैरेणार्थागमं (वैरार्थागमनं); **निप्र.** २।५०५ प्रथमचरणमात्रम्; **मुक्ता.** ४६२ वैरेणा (वैराद) उत्त.; **संप्र.** ५७२.

योषित्संबन्धिनामवमानविश्वासेर्ष्याधिकाराणां निषेधाः

**[1]योषितो नावमन्येत न चाऽऽसां विश्वसेद्बुधः।**
**न चैवेर्ष्युर्भवेत्ताश्च नाधिकुर्यात्कदाचन॥**

ईर्ष्युः असहिष्णुः। ताश्च योषितः नाधिकुर्यात् कुत्राप्यधिकारिणीर्न कुर्यात्। 'तासु' इति पाठे अन्तःपुराधिकारं न कुर्यादित्यर्थः। वैच.

सत्यवचनं तदपवादश्च

**[2]तस्मात्सत्यं वदेत्प्राज्ञो यत्परप्रीतिकारणम्।**
**सत्यं यत्परदुःखाय तत्र मौनपरो भवेत्॥**
**प्रियं युक्तं हितं नैतदिति मत्वा न तद्वदेत्।**
**श्रेयस्तत्र हितं वाच्यं यद्यप्यत्यन्तमप्रियम्॥**
**प्राणिनामुपकाराय वदेदिह परत्र च।**
**कर्मणा मनसा वाचा तदेव मतिमान् भजेत्॥**

उपदेशसारमाह – प्राणिनामिति। वैच.

ग्रहणश्राद्धविधिः

**[3]श्राद्धं कुर्वीत विज्ञाय व्यतीपातेऽयने तथा।**
**विषुवे चैव संप्राप्ते ग्रहणे शशिसूर्ययोः॥**

समस्तेषु राशिषु अर्के गच्छति सतीति अर्कसंक्रान्तीनां श्राद्धकालत्वस्योक्तत्वात् अयने विषुवे चेति पृथगुक्तिः फलातिरेकार्था। वैच.

**उपप्लवे चन्द्रमसो रवेश्च**
**त्रिष्वष्टकास्वप्ययनद्वये च।**
**पानीयमप्यत्र तिलैर्विमिश्रं**
**दद्यात्पितृभ्यः प्रयतो मनुष्यः॥**
**श्राद्धं कृतं तेन समासहस्रं**
**रहस्यमेतत्पितरो वदन्ति॥**

स्वधर्मत्यागे हीनकर्मपरिग्रहे च नग्नतादोषः

**[4]ब्राह्मणाद्याश्च ये वर्णाः स्वधर्मादन्यतोमुखम्।**
**यान्ति ते नग्नसंज्ञां तु हीनकर्मस्ववस्थिताः॥**

ब्राह्मणाद्याः स्वधर्मादन्यतोमुखं विमुखं यान्ति ये ते नग्नसंज्ञां यान्तीत्यन्वयः। वैच.

(१) **विष्णु.** ३।१२।३०; **मुक्ता.** ४६२ पू.

(२) **विष्णु.** ३।१२।४३-४५.

(३) **विष्णु.** ३।१४।४-५, १३-१४.

(४) **विष्णु.** ३।१८।४७-५०, ९५-९६.

मिश्रवर्णस्थितिके देशे निवासस्य निषेधः

**चतुर्णां यत्र वर्णानां मैत्रेयात्यन्तसंकरः।**
**तत्राऽऽस्या साधुवृत्तीनामुपघाताय जायते॥**

संकरः गृहादिषु। आस्या स्थितिः। वैच.

अकृतवैश्वदेवेन भोक्त्रा सह व्यवहारस्य निषेधः

**अनभ्यर्च्य ऋषीन्देवान्पितृभूतातिथींस्तथा।**
**यो भुङ्क्ते तस्य संभाषात्पतन्ति नरके नराः॥**
**तस्मादेतान्नरो नग्नांस्त्रयीसंत्यागदूषितान्।**
**सर्वदा वर्जयेत्प्राज्ञ आलापस्पर्शनादिषु॥**

पाषण्डिविकर्मस्थबैडालव्रतिकशठहैतुक-बकवृत्तिभिः सह संभाषणा-दिव्यवहाराणां निषेधः

**एष पाषण्डसंभाषदोषः प्रोक्तो मया द्विज।**
**तथाऽश्वमेधावभृथस्नानमाहात्म्यमेव च॥**
**तस्मात्पाषण्डिभिः पापैरालापस्पर्शने त्यजेत्।**
**विशेषतः क्रियाकाले यज्ञादौ चापि दीक्षितः॥**
**[1]क्रियाहानिर्गृहे यस्य मासमेकं प्रजायते।**
**तस्यावलोकनात्सूर्यं पश्येत मतिमान्नरः॥**
**[2]किं पुनर्यैस्तु संत्यक्ता त्रयी सर्वात्मना द्विज।**
**परान्नभोजिभिः पापैर्वेदवादविरोधिभिः॥**

इदानीं कैमुतिकन्यायेन पूर्वोक्तमेव प्रायश्चित्तमाह – 'क्रियाहानिरिति'। यैस्त्रयी त्यक्ता तेषां दर्शनात्सूर्यं पश्येदिति किं पुनर्वाच्यम्। परान्नभोजिभिः पाषण्डान्नभोजिभिः। वैच.

**[3]पाषण्डिनो विकर्मस्थान्बैडालव्रतिकाञ्छठान्।**
**हैतुकान्बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत्॥**

पाषण्डादयः सर्वे वेदविरुद्धा एव। यदाहुः – 'भ्रष्टः स्वधर्मात्पाषण्डो विकर्मस्थो निषिद्धकृत्। यस्य धर्मध्वजो नित्यं सुराध्वज इवोत्थितः॥ प्रच्छन्नानि च पापानि बैडालं नाम तद्व्रतम्। प्रियं वक्ति पुरोऽन्यत्र विप्रियं कुरुते भृशम्॥ त्यक्तोपरोधचेष्टश्च शठोऽयं कथितो बुधैः। संदेहकृद्धेतुभिश्च सत्कर्मसु स हैतुकः॥ अर्वाग्दृष्टिर्नैकृतिकः स्वार्थसाधनतत्परः। शठो मिथ्याविनीतश्च बकवृत्तिरुदाहृतः॥' इति। वाङ्मात्रेणापि नार्चयेत् तैः संभाषणमपि न कुर्यात्। वैच.

**[1]दूरादपास्तः संपर्कः सहाऽऽस्याऽपि च पापिभिः।**
**पाषण्डिभिर्दुराचारैस्तस्मात्तान्परिवर्जयेत्॥**

यदा चैवं तदा पूर्वोक्तैः प्राणिभिः सह संपर्कः सहभोजनादिरूपः दूरादपास्तः निषिद्धः। सहाऽऽस्याऽपि निषिद्धा। किं बहुना? सर्वात्मना तान् परिवर्जयेत्। वैच.

**[2]एते नग्नास्तवाऽऽख्याता दृष्टाः श्राद्धोपघातकाः।**
**येषां संभाषणात्पुंसां दिनपुण्यं प्रणश्यति॥**
**[3]एते पाषण्डिनः पापा न त्वेतानालपेद्बुधः।**
**पुण्यं नश्यति संभाषादेतेषां तद्दिनोद्भवम्॥**

नग्नपाषण्डिनोः पूर्वोक्तदोषमनुवदन्नुपसंहरति – एत इति द्वाभ्याम्। वैच.

**[4]पुंसां जटाधरणमौण्ड्यवतां वृथैव**
**मोघाशिनामखिलशौचनिराकृतानाम्।**
**तोयप्रदानपितृपिण्डबहिष्कृतानां**
**संभाषणादपि नरा नरकं प्रयान्ति॥**

सर्वेषां सामान्यदोषमाह – पुंसामिति। वृथैवेतिविशेषणादथर्वशिरःप्रोक्तशैवपाशुपतव्रताद्यङ्गभूतजटाधारणाद्यनुमन्यते। मोघाशिनां देवतातिथ्यादिपूजां विनाऽन्नभोक्तॄणाम्। अखिलशौचैः बाह्याभ्यन्तरशौचैः निराकृतानां वर्जितानां तोयप्रदानादिभ्यो मायामोहेन बहिष्कृतानामिति। वैच.

---

(१) **विष्णु.** ३।१८।९७; **अप.** १।१३० पृ. १७२.

(२) **विष्णु.** ३।१८।९८; **अप.** १।१३० पृ. १७२ यैस्तु संत्यक्ता त्रयी (यस्तु संत्यक्तत्रयीः) परान्नभोजिभिः (पाषण्डियोगिभिः).

(३) **विष्णु.** ३।१८।९९; **अप.** १।१३० पृ. १७२.

(१) **विष्णु.** ३।१८।१००; **अप.** १।१३० पूर्वार्धे (बुधैरालापसंसर्गसहास्याश्चातिपापिभिः।).

(२) **विष्णु.** ३।१८।१०१; **अप.** १।१३० पृ. १७२ वाऽऽख्या (था ख्या) दृष्टाः (दृष्ट्वा) पुंसां दिनपुण्यं (पुण्यं दिनमेकं).

(३) **विष्णु.** ३।१८।१०२; **अप.** १।१३० पृ. १७२ पूर्वार्धे (एतान्पाषण्डिनः पापानित्यमेव तु नाऽऽलपेत्।); **गृक.** ३५७ द्वितीयचरणे (न ह्येनात्तालयेद्बुधः) तद्दिनो (दन्तिनो).

(४) **विष्णु.** ३।१८।१०३.

अतितृष्णा त्याज्या

**[1]यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः।**
**एकस्यापि न पर्याप्तं तदित्यतितृषं त्यजेत्॥**

(१) अतितृषम् अतितृष्णामित्यर्थः।

मच. २।९४

(२) तृष्णापूर्तेरशक्यतया दुःखहेतुत्वात् दोषदृष्टिं कुर्वन् तां त्यजेदिति भावः। वैच.

स्वाधीतविद्याया एव पूज्यत्वम्

**[2]विद्यया यो यथा युक्तस्तस्य सा दैवतं महत्।**
**सैव पूज्याऽर्चनीया च सैव तस्योपकारिका॥**

पूज्या आदरणीया। अर्चनीया गन्धादिभिरर्हणीया। ततः सा तस्य पूजकस्यैव उपकारिका अभीष्टप्रदा। वैच.

दुष्करब्राह्मणधर्मापेक्षया द्विजशुश्रूषादि-
शूद्रधर्मस्य सुकरत्वात् शूद्रस्य
धन्यत्वम्

**[3]व्रतचर्योपहारैश्च ग्राह्यो वेदो द्विजातिभिः।**
**ततस्तु धर्मसंप्राप्त्यै यष्टव्यं विधिवद्धनैः॥**

शूद्राणामल्पायासेन पुरुषार्थसिद्धिं वक्तुं तत्र त्रैवर्णिकानामतिक्लेशमाह – व्रतचर्येतिचतुर्भिः। उपहरणं उपहाराः, तैः। गुरवे सर्वलाभार्पणैरित्यर्थः। 'व्रतचर्यापरैर्ग्राह्यो वेदः पूर्वम्' इति तु पाठः सुगमः। वैच.

**[4]वृथा कथा वृथा भोज्यं वृथा यात्रा द्विजन्मनाम्।**
**पतनाय तथा भाव्यं तैस्तु संयमिभिः सदा॥**

वृथा कथा श्रीकृष्णकीर्तनरहिता। वृथा भोज्यं श्रीकृष्णानिवेदितादि। वृथा यात्रा भगवत्तीर्थादियात्राव्यतिरिक्ता गतिक्रिया। पतनाय पापाय। तथा च संयमिभिः सदा भाव्यम्। वैच.

**असम्यक्करणे दोषास्तेषां सर्वेषु वस्तुषु।**
**भोज्यपेयादिकं चैषां नेच्छाप्राप्तिकरं द्विजाः॥**

न इच्छया प्राप्तिकरं स्वेच्छयोपभोग्यं न भवति, किंतु नोदनयेत्यर्थः। वैच.

**[1]पारतन्त्र्यं समस्तेषु तेषां कार्येषु वै ततः।**
**जयन्ति ते निजांल्लोकान्क्लेशेन महता द्विजाः॥**
**[2]द्विजशुश्रूषयैवैष पाकयज्ञाधिकारवान्।**
**निजं जयति वै लोकं शूद्रो धन्यतरस्ततः॥**

शूद्राणां तु नैष क्लेश इति धन्यतरत्वमित्याह – द्विजशुश्रूषयेति द्वाभ्याम्।

वैच.

**[3]भक्ष्याभक्ष्येषु नास्यास्ति पेयापेयेषु वै यतः।**
**नियमो मुनिशार्दूलास्तेनासौ साध्वितीरितम्॥**

एतच्चावश्यं संकोचनीयम्, काकादिभक्षणस्य शूद्रेऽपि शिष्टाचारात् प्रायश्चित्तोपदेशान्निषेधाच्च।

गृर. ४८०

प्रजापालनं शत्रुनाशश्च क्षत्रियधर्मः,
याच्ञा न क्षत्रियधर्मः

**[4]क्षत्रियाणामयं धर्मो यत्प्रजापरिपालनम्।**
**वधश्च धर्मयुद्धेन स्वराज्यपरिपन्थिनाम्॥**

ननु स्वधर्मसिद्धये पण्डितानामपि राज्यकाङ्क्षैव युक्तेत्युक्तम्, तत्राऽऽह – क्षत्रियाणामिति यत्प्रजापालनं यच्च स्वराज्यपरिपन्थिनां धर्मयुद्धेन वधः क्षत्रियाणां धर्मः। स च राज्याधिकृतानामेव, न तु क्षत्रियमात्रस्य। वैच.

**न याच्ञा क्षत्रबन्धूनां धर्मायैतत्सतां मतम्।**
**अतो न याचितं राज्यं....॥**

तर्हि याच्ञामात्रेण राज्याधिकाराद्धर्म एव किमिति न क्रियते? तत्राऽऽह – न याच्ञेति। वैच.

---

(१) **विष्णु.** ४।१०।१०; **मेधा.** २।९४ उत्तरार्धे (नालमेकस्य तत्सर्वमिति मत्वा शमं व्रजेत्॥) (=); **ममु.** २।९४; **मच.** २।९४.

(२) **विष्णु.** ५।१०।३०.

(३) **विष्णु.** ६।२।१९; **वैच.** र्योपहारैश्च ग्राह्यो वेदो (र्यापरैर्ग्राह्यो वेदः पूर्वं) इत्यपि पाठः.

(४) **विष्णु.** ६।२।२०-२१.

(१) **विष्णु.** ६।२।२२; **गृक.** २७२-२७३.

(२) **विष्णु.** ६।२।२३; **गृक.** २७३ निजं (निजान्) लोकं (लोकान्); **पमा.** १।४१९ रस्ततः (रः स्मृतः) शेषं गृकवत्; **स्मृकौ.** ९० पमावत्; **मर.** १५ गृकवत्; **शूशि.** ६३ तृतीयचरणे (निजान् जनयते लोकान्); **शूक.** ६५ तृतीयचरणे (निजानश्नुति वै लोकान्); **संम.** ७९ पाक (ब्रह्म) शेषं पमावत्; **सस्मृ.** १७१ उत्तरार्धमशुद्धम्.

(३) **विष्णु.** ६।२।२४; **गृक.** २७३ यतः (पुनः) लास्तेना (ल तेना); **गृर.** ४८० गृकवत्.

(४) **विष्णु.** ६।७।३,६.

परनिन्दादिनिषिद्धाचारवर्जनं सर्वत्रसमबुद्धित्वं देवद्विजगुरुशुश्रूषा रागादिराहित्यं च हरिसंतोषकारणम्

[1]**परापवादं पैशुन्यमनृतं च न भाषते।**
**अन्योद्वेगकरं वाक्यं तोष्यते तेन केशवः॥**
**परदारपरद्रव्यपरहिंसासु यो रतिम्।**
**न करोति पुमान्भूप तोष्यते तेन केशवः॥**
**यथाऽऽत्मनि च पुत्रे च सर्वभूतेषु यस्तथा।**
**हितकामो हरिस्तेन सर्वदा तोष्यते सुखम्॥**
**देवद्विजगुरूणां यः शुश्रूषासु सदोद्यतः।**
**तोष्यते तेन गोविन्दः पुरुषेण नरेश्वर॥**
**यस्य रागादिदोषेण न दुष्टं नृप मानसम्।**
**विशुद्धं च तथा विष्णुस्तोष्यते तेन सर्वदा॥**

देवपूजायामधिकारिण उक्ता विष्णुपुराणे — परापवादमित्यादि। आपा. १६६

क्षमाशौचादयश्चतुर्दश सामान्यधर्माः

[2]**क्षमा शौचं दमः सत्यं दानमिन्द्रियनिग्रहः।**
**अहिंसा गुरुशुश्रूषा तीर्थानुसरणं दया॥**
[3]**आर्जवं लोभशून्यत्वं देवब्राह्मणपूजनम्।**
**अनभ्यसूया च तथा धर्मः सामान्य उच्यते॥**

## विष्णुधर्मोत्तरपुराणम्

ग्रहणकालस्य स्नानादौ पुण्यत्वम्

[4]**स्नाने जाप्ये तथा होमे दाने श्राद्धे सुरार्चने।**
**पुण्यः स कालो भविता नित्यमेवासुरेश्वर॥**

अहिंसासत्यादिविहितधर्माचरणं मधुमांसादिनिषिद्धवर्जनं च केशवसंतोषकारणम्

**शंकर उवाच —**
[5]**अहिंसा सत्यवचनं दया भूतेष्वनुग्रहम्।**
**यस्यैतानि सदा राम तस्य तुष्यति केशवः॥**
**मातापितृगुरूणां च यः सम्यगिह वर्तते।**
**वर्जको मधुमांसस्य तस्य तुष्यति केशवः॥**
**वराहमत्स्यमांसानि यो नात्ति भृगुनन्दन।**
**विरतो मद्यपानाच्च तस्य तुष्यति केशवः॥**
**परपीडाकरं कर्म यस्य नास्ति महात्मनः।**
**संविभागी च भूतानां तस्य तुष्यति केशवः॥**
**शृणुते सर्वधर्मांश्च सर्वान्देवान्नमस्यति।**
**अनसूयुर्जितक्रोधस्तस्य तुष्यति केशवः॥**
**तीर्थोपवाससेवी च द्विजातिगणसेवकः।**
**पूजको विष्णुभक्तानां तस्य तुष्यति केशवः॥**
**मित्रस्वामिगुरुद्रोहो यस्य नास्ति महात्मनः।**
**परदारधनेच्छा न तस्य तुष्यति केशवः॥**
**स्ववर्णाश्रमधर्मस्थः पूजयन्मधुसूदनम्।**
**कालं नयति यो ब्रह्मंस्तस्य तुष्यति केशवः॥**
**सर्वभूतहिते युक्तः सर्वभूतहिते रतः।**
**सर्वभूतानुकम्पी च तस्य तुष्यति केशवः॥**
**अप्रणम्य क्रियां कांचिद्यस्तु नाऽऽरभते हरिम्।**
**असंभिन्नार्थमर्यादस्तस्य तुष्यति केशवः॥**
**नामसंकीर्तनं नित्यं क्षुतप्रस्खलनादिषु।**
**यः करोति महाभागस्तस्य तुष्यति केशवः॥**

ग्रहणश्राद्धसंबन्धीनि विधानानि

[1]**अक्षय्यं च तथा श्राद्धं विज्ञेयं राहुदर्शने॥**
**संध्ययोर्वर्जयेच्छ्राद्धं तत्र रात्रौ नरेश्वर।**
**रात्रावपि च कर्तव्यं यदा स्याद्राहुदर्शनम्॥**
**अक्षय्यं तत्समुद्दिष्टं यद्दत्तं राहुदर्शने॥**
[2]**संनिहत्यां विशेषेण राहुग्रस्ते निशाकरे।**
**राहुग्रस्ते दिनकरे सन्नीत्यां पार्थिवोत्तम॥**
**श्राद्धं कृत्वा समाप्नोति राजसूयशतं नरः॥**

ब्राह्मणस्वहरणस्य दुराचारब्राह्मणस्यापि द्वेषनिन्दावधानां च निषेधः

[3]**ब्रह्मस्वं चैव नाऽऽदद्याद्ब्रह्मस्वं पालयेत्तथा।**
**ब्रह्मस्वहरणाद्राम नरकं पश्यते नरः॥**

---

(१) **आपा.** १६६.

(२) **स्मृसा.** ५५ प्रथमपादे (क्षमा सत्यं दया शौचं) दया (दमः); **आत.** ३९९; **चमव्या.** ८३ 'सत्यं दया दमः शौचम्' एतावदेव (=).

(३) **स्मृसा.** ५५ उत्तरार्धे (अनसूया तथा धर्मः सामान्यः परिकीर्तितः॥); **आत.** ३९९.

(४) **विध.** १।४२।४४-४५.

(५) **विध.** १।५८।१-३, ७-९, १४, १८, २३-२५.

(१) **विध.** १।१४२।२६, २९-३०.

(२) **विध.** १।१४४।५-६.

(३) **विध.** २।३२।४-१४.

न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते।
विषमेकाकिनं हन्ति ब्रह्मस्वं सप्तपूरुषम्॥
ब्रह्मस्वं प्रणयाद्भुक्तं हिनस्त्यासप्तमं कुलम्।
द्रोहाद्भुक्तं तदेवेह कुलानां पातयेच्छतम्॥
सुवर्णमेकं गामेकां भूमेरप्येकमङ्गुलम्।
हरन्नरकमाप्नोति यावदाभूतसंप्लवम्॥
दृष्ट्वा विटं दुराचारं ब्राह्मणं न द्विषेत्क्वचित्।
ब्राह्मणानां परीवादान्नाशमाप्नोति मानवः॥
न जातु ब्राह्मणं हन्यात्सर्वपापेष्ववस्थितम्।
नैवास्ति ब्राह्मणवधात्पापं गुरुतरं क्वचित्॥
ब्रह्महा नरकं याति यावदाभूतसंप्लवम्।
वर्षाणामयुतं राम पच्यते स्नायुपूरिते॥
शोणितं यावतः पांशून्गृह्णातीह द्विजन्मनाम्।
कर्ता तावन्ति वर्षाणि कृतकृन्नरके वसेत्॥
उपद्रुतो द्विजो येन त्यजेज्जीवितमात्मनः।
ब्रह्महत्या भवेत्तस्य नात्र कार्या विचारणा॥
देहत्यागाच्च नरकं ब्राह्मणोऽपि प्रपद्यते।
तेन चाधिकमाप्नोति राम पापं नराधमः॥
अदैवं दैवतं कुर्युः कुर्युर्दैवमदैवतम्।
ब्राह्मणाश्च महाभागा नमस्यास्ते सदैव हि॥

मातृपितृगुरुज्येष्ठभ्रातॄणां शुश्रूषणमेव परमो धर्मः तेषामनुज्ञया धर्मान्तराचारश्च

[1]एतावदेव कर्तव्यं पुरुषस्य विजानतः।
मातुः पितुश्च शुश्रूषा गुरोश्च वरवर्णिनि॥
पुरुषाः स्वर्गमायान्ति गुरुशुश्रूषणेन च।
आचार्यश्च पिता चैव माता भ्राता च पूर्वजः।
नाऽऽर्तेनाप्यवमन्तव्या ब्राह्मणेन विशेषतः॥
आचार्यो ब्रह्मणो मूर्तिः पिता मूर्तिः प्रजापतेः।
माता पृथिव्या मूर्तिश्च भ्राता वै मूर्तिरात्मनः॥
यन्मातापितरौ क्लेशं सहेते संभवे नृणाम्।
न तस्य निष्कृतिः शक्या कर्तुं वर्षशतैरपि॥
तयोर्नित्यं प्रियं कुर्यादाचार्यस्य च सर्वदा।
तेष्वेव त्रिषु तुष्टेषु तपः सत्यं समाप्यते॥

(१) विध. २।३७।४७, ५०-५५, ५९-६२.

तेषां त्रयाणां शुश्रूषा परमं तप उच्यते।
न तैरनभ्यनुज्ञातो धर्ममन्यं समाचरेत्॥
सर्वे तस्याऽऽदृता धर्मा यस्यैते त्रय आदृताः।
अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः॥
यावत्त्रयस्ते जीवेयुस्तावन्नान्यत्समाचरेत्।
तनुं निवेदयेत्तेभ्यो मनोवचनकर्मभिः॥
त्रिष्वेतेष्वितिकृत्यं हि पुरुषस्य समाप्यते।
एष धर्मः परः साक्षादुपधर्मोऽन्य उच्यते॥

राजकर्तव्यत्वेन विस्तरेणेतिकर्तव्यतासहितं गोप्रशंसायुतं सफलं गोपालनविधानम्

पुष्कर उवाच —
[2]गवां हि पालनं राज्ञा कर्तव्यं भृगुनन्दन।
गावः पवित्राः संगत्या गोषु लोकाः प्रतिष्ठिताः॥
गावो वितन्वते यज्ञं गावो विश्वस्य मातरः।
शकृन्मूत्रं परं तासामलक्ष्मीनाशनं स्मृतम्॥
तद्धि सेव्यं प्रयत्नेन तत्र लक्ष्मीः प्रतिष्ठिता।
उद्वेगं च न गन्तव्यं शकृन्मूत्रस्य जानता॥
गवां मूत्रपुरीषेषु ष्ठीवनाद्यं न संत्यजेत्।
गोरजः परमं पुण्यमलक्ष्मीविघ्ननाशनम्॥
[2]गवां कण्डूयनं चैव सर्वकल्मषनाशनम्।
तासां शृङ्गोदकं चैव जाह्नवीजलसंनिभम्॥
[3]गोमूत्रं गोमयं क्षीरं दधि सर्पिश्च रोचनम्।
षडङ्गमेतन्माङ्गल्यं पवित्रं तु पृथक् पृथक्॥
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्।
पवित्रं परमं ज्ञेयं स्नाने पाने च भार्गव॥
रक्षोघ्नमेतन्माङ्गल्यं कलिदुःखप्रणाशनम्।
रोचना च तथा धन्या रक्षोरगगदापहा॥
यस्तु कल्ये समुत्थाय मुखमाज्ये निरीक्षते।
तस्यालक्ष्मीः क्षयं याति वर्धते न तु किल्बिषम्॥
गवां ग्रासप्रदानेन पुण्यं सुमहदश्नुते।
यावत्यः शक्नुयाद्गावः सुखं धारयितुं गृहे।
धारयेत्तावतीर्नित्यं क्षुधितास्तु न धारयेत्॥

(१) विध. २।४२।१-४.
(२) विध. २।४२।५; विपा. ४।४१६ यनं (यने) कं चैव (कं नाम).
(३) विध. २।४२।६-११.

दुःखिता धेनवो यस्य वसन्ति द्विज मन्दिरे।
नरकं समवाप्नोति नात्र कार्या विचारणा॥
[1]दत्त्वा परगवे ग्रासं पुण्यं सुमहदश्नुते॥
[2]शैशिरं सकलं कालं ग्रासं परगवे तथा।
दत्त्वा स्वर्गमवाप्नोति संवत्सरशतानि षट्॥
[3]अग्रभक्तं नरो दत्त्वा नित्यमेव तथा गवाम्।
मासषट्केन लभते नाकलोकं समायुतम्॥
नित्यम् अतन्त्रितः(? न्द्रितः)।

विपा. ४।४१६

[4]सायं प्रातर्मनुष्याणामशनं देवनिर्मितम्।
तत्रैवमशनं दत्त्वा गवां नित्यमतन्द्रितः॥
[5]द्वितीयं यः समश्नाति तेन संवत्सरान्नरः।
गवां लोकमवाप्नोति यावन्मन्वन्तरं द्विज॥
[6]गवां प्रचारे पानीयं दत्त्वा पुरुषसत्तमः।
वारुणं लोकमासाद्य क्रीडत्यब्दगणायुतम्।
परां तृप्तिमवाप्नोति यत्र यत्राभिजायते॥
गवां प्रचारभूमिं तु वाहयित्वा हलादिना।
नरकं महदाप्नोति यावदिन्द्राश्चतुर्दश॥
गवां पानप्रवृत्तानां यस्तु विघ्नं समाचरेत्।
ब्रह्महत्या कृता तेन घोरा भवति भार्गव॥
[7]सिंहव्याघ्रभयत्रस्तां पङ्कमग्नां जले गताम्।
गामुद्धृत्य नरः स्वर्गे कल्पभोगानुपाश्नुते॥
[8]गवां यवसदानेन रूपवानभिजायते॥
सौभाग्यं महदाप्नोति लावण्यं च द्विजोत्तम।
औषधं च तथा दत्त्वा विरोगस्त्वभिजायते॥
औषधं लवणं तोयमाहारं च प्रयच्छतः।
विपत्तौ पातकं नास्य भवत्युद्बन्धनादिकम्॥

(१) विध. २।४२।१२; विपा. ४।४१६ दश्नुते (दाप्नुयात्).
(२) विध. २।४२।१३; विपा. ४।४१६ शैशिरं (शिशिरं).
(३) विध. २।४२।१४; विपा. ४।४१६ दत्त्वा नि (दद्यान्नि) पू.
(४) विध. २।४२।१५.
(५) विध. २।४२।१६; विपा. ४।४१६ यः समश्नाति (स्वर्गमाप्नोति) रान्नरः (रं नरः) द्विज (द्विजः).
(६) विध. २।४२।१७-१९.
(७) विध. २।४२।१९-२०; विपा. ४।४१६ यत्रस्तां पङ्कम (यात्राणं पङ्कल) गामुद्धृ (समुद्वृ) भोगानु (भागमु).
(८) विध. २।४२।२०-२७.

वक्तव्यता दिवापाले रात्रौ स्वामी न तद्गृहे।
तत्रापि तन्नियुक्तश्च कश्चिदन्यो न चेद्भवेत्॥
तासां चेदविरुद्धानां चरन्तीनां मिथो वने।
यामुत्पत्य वृको हन्यान्न पालस्तत्र किल्बिषी॥
संरुद्धासु तथैवाऽऽसु वृकः पाले त्वनायति।
यामुत्पत्य वृको हन्यात्पाले तत्किल्बिषं भवेत्॥
गोवधेन नरो याति नरकानेकविंशतिम्।
तस्मात्सर्वप्रयत्नेन कार्यं तासां तु पालनम्॥
विक्रयाच्च गवां राम न भद्रं प्रतिपद्यते।
तासां च कीर्तनादेव नरः पापाद्विमुच्यते॥
[1]तासां संस्पर्शनं धन्यं सर्वकल्मषनाशनम्।
दानेन च तथा तासां कुलान्यपि समुद्धरेत्॥
[2]उदक्यासूतिको दोषो नैव तत्र गृहे भवेत्।
भूमिदोषास्तथाऽन्येऽपि यत्रैका वसते तु गौः॥
[3]गवां निश्वासवातेन परा शान्तिर्गृहे भवेत्।
नीराजनं तत्परमं सर्वस्थानेषु कीर्तितम्॥
गवां संस्पर्शनाद्राम क्षीयते किल्बिषं नृणाम्।
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्।
एकरात्रोपवासं च श्वपाकमपि शोधयेत्॥
[4]गोमूत्रेण चरेत्स्नानं वृत्तिं कुर्यात्तु गोरसैः।
उत्थितामुत्थितस्तिष्ठेदुपविष्टासु न स्थितः॥
अभुक्तवत्सु नाश्नीयादपीतासु च नो पिबेत्।
त्राणं तु रामाकृत्वैव तथा देवे प्रवर्षति॥
त्राणं नैवाऽऽत्मनः कार्यं भयार्ताश्च समुद्धरेत्।
आत्मानमपि संत्यज्य गोव्रतं तत्प्रकीर्तितम्॥
सर्वपापप्रशमनं मासेनैकेन भार्गव।
व्रतेनानेन चीर्णेन गोलोकं पुरुषो व्रजेत्॥
अभीष्टमथवा राम यावदिन्द्राश्चतुर्दश।
गवां निर्हारनिर्मुक्तानश्नन्प्रतिदिनं यवान्।
मासेन तदवाप्नोति यत्किंचिन्मनसेच्छति॥
गोमतीं च तथा विद्यां सायं प्रातस्तथा जपन्।
गोलोकमाप्नोति नरो नात्र कार्या विचारणा॥

(१) विध. २।४२।२८; विपा. ४।४१६ संस्पर्शनं (संप्राशनं) दानेन च (दाने जलं).
(२) विध. २।४२।२९; विपा. ४।४१६ पू.
(३) विध. २।४२।३०-३२.
(४) विध. २।४२।३८-५८.

उपर्युपरि सर्वेषां गवां लोकः प्रकीर्तितः॥
निवसन्ति सदा यत्र गावस्त्वाकाशगा दिवि।
विमानेषु विचित्रेषु वृतेष्वप्सरसां गणैः॥
किङ्किणीजालचित्रेषु वीणामुरजनादिषु।
सदा कामजला नद्यः क्षीरपायसकर्दमाः॥
शीतलामलपानीयाः सुवर्णसिकतास्तथा॥
पुष्करिण्यः शुभास्तत्र वैडूर्यकमलोत्पलाः॥
मानसी च तथा सिद्धिस्तत्र लोके भृगूत्तम।
तं च लोकं नरा यान्ति गवां भक्त्या न संशयः॥
गोमतीं कीर्तयिष्यामि सर्वपापप्रणाशिनीम्।
तां तु मे वदतो विप्र शृणुष्व सुसमाहितः॥
गावः सुरभयो नित्यं गावो गुग्गुलुगन्धिकाः।
गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं परम्॥
अन्नमेव परं गावो देवानां हविरुत्तमम्।
पावनं सर्वभूतानां रक्षन्ति च वहन्ति च॥
हविषा मन्त्रपूतेन तर्पयन्त्यमरान्दिवि।
ऋषीणामग्निहोत्रेषु गावो होमे प्रयोजिताः॥
सर्वेषामेव भूतानां गावः शरणमुत्तमम्।
गावः पवित्रं परमं गावो मङ्गलमुत्तमम्।
गावः स्वर्गस्य सोपानं गावो धन्याः सनातनाः॥
(ॐ) नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च।
नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः॥
ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा स्थितम्।
एकत्र मन्त्रास्तिष्ठन्ति हविरेकत्र तिष्ठति॥
देवब्राह्मणगोसाधुसाध्वीभिः सकलं जगत्।
धार्यते वै सदा तस्मात्सर्वे पूज्यतमाः सदा॥
यत्र तीर्थे सदा गावः पिबन्ति तृषिता जलम्।
उत्तरन्ति पथा येन स्थिता तत्र सरस्वती॥
गवां हि तीर्थे वसतीह गङ्गा
पुष्टिस्तथा तद्रजसि प्रवृद्धा।
लक्ष्मीः करीषे प्रणतौ च धर्म-
स्तासां प्रणामं सततं च कुर्यात्॥
[१]गवां वेश्मनि दीपास्तु दातव्या राम रात्रिकाः॥

(१) विध. २।४३।२७.

अहिंसासत्यवचनाद्यः पञ्चदशसामान्य-
धर्माः, यजनयाजनादि-
धर्माणां वर्णेषु
व्यवस्था

पुष्कर उवाच —
[१]अहिंसा सत्यवचनं ते स्याद्भूतेष्वनुग्रहः।
तीर्थानुसरणं दानं ब्रह्मचर्यममत्सरम्॥
देवद्विजातिशुश्रूषा गुरूणां च भृगूत्तम।
श्रवणं सर्वधर्माणां पितृणां पूजनं तथा॥
भक्तिश्च भूपतौ नित्यं तथा सच्छास्त्रनेत्रता।
आनृशंस्यं तितिक्षा च तथा चाऽऽस्तिक्यमेव हि।
धर्मसामान्यमेतत्ते कथितं भृगुसत्तम॥
यजनं याजनं दानं तथैवाध्यापनक्रिया।
प्रतिग्रहं चाध्ययनं विप्रकर्माणि निर्दिशेत्॥
दानमध्ययनं चैव यजनं च यथाविधि।
क्षत्रियस्य च वैश्यस्य कर्मेदं परिकीर्तितम्॥
क्षत्रियस्य विशेषस्तु प्रजानां परिपालनम्।
कृषिगोरक्षवाणिज्यं वैश्यस्य परिकीर्तितम्॥
शूद्रस्य द्विजशुश्रूषा सर्वशिल्पानि चाप्यथ।

क्षौरानधिकारप्रयोजकानि उपोषणादीनि,
क्षौरे शुभाशुभ-
नक्षत्रादीनि

[२]निराशनस्य सुप्तस्य शयानस्य तथैव च।
तथा भुक्तवतो राम स्नातस्य भाषितस्य च।
यात्रायुद्धोत्सुकस्यापि श्मश्रुकर्म विवर्जयेत्॥
वैष्णवं वारुणं त्वाष्ट्रं सावित्रं वासवं तथा।
वायव्यमिन्द्रिकं पौष्णं शाक्रमाश्विनमेव च॥
मैत्रादित्ये तथा पुष्यः शङ्खचक्रगणं भवेत्।
नक्षत्राणामथैतेषां मुहूर्ताश्च हितप्रदाः॥
अर्कार्किभौमवाराश्च रिक्ताश्च तिथयस्तथा।
प्रतिपच्च तथा षष्ठी वर्जयेत्क्षौरकर्मणि।
वर्जयेज्जन्मनक्षत्रं नानुकूलं तथैव च॥

(१) विध. २।८०।१-८.
(२) विध. २।८९।६४-६८.

ग्रहणदिने पूर्वं ग्रस्तास्ते पुनरुदयपर्यन्तं च भोजननिषेधः

**पुष्कर उवाच –**

**[1]चन्द्रस्य यदि वा भानोर्यस्मिन्नहनि भार्गव।**
**ग्रहणं तु भवेत्तत्र न पूर्वं भोजनक्रिया॥**
**नाऽऽचरेत्सग्रहे तस्मिंस्तथैवास्तमुपागते।**
**यावत्स्यादुदयं तस्य नाश्नीयात्तावदेव तु॥**

वर्णाश्रमधर्मत्यागे परपीडायां च नरकः

**[2]वर्णाश्रमोक्तं वर्तन्ते धर्मं त्यक्त्वा तु ये नराः।**
**बहिः शास्त्रान्महाभाग ते वै निरयगामिनः॥**
**पीडामथोत्पाद्य नरस्य राम**
**यथाकथंचिन्नरकं प्रयाति।**
**तस्मात्प्रयत्नेन विवर्जनीया**
**परस्य पीडा मनुजेन राम॥**

पापाचरणनिषेधः विष्णुभक्तिविधिश्च

**[3]तिर्यक्षु दुःखं परमं विदित्वा**
**पापानि वर्ज्यानि नरेण नित्यम्।**
**भक्तिश्च कार्या मधुसूदनस्य**
**तया स दुःखं सकलं जहाति॥**

यजनादयः षट् विप्रधर्माः, दानाध्ययनादयः पञ्च साधारणधर्माः

**[4]यजनं याजनं दानं विशिष्टश्च प्रतिग्रहः।**
**अध्यापनमध्ययनं विप्रकर्म प्रकीर्तितम्॥**
**दानमध्ययनं यज्ञः पाशुपाल्यं वणिक्क्रिया।**
**अमात्सर्यं च धर्मज्ञ धर्मः साधारणो मतः॥**

परनिन्दाया अप्रियवचनस्य क्रोधस्य पतितसंसर्गस्य च निषेधः

**[5]परापवादं न ब्रूयान्नाप्रियं च कदाचन।**
**न मन्युः कस्यचित्कार्यः कदाचिदपि वै द्विज॥**
**पतितैस्तु कथां नेच्छेद्दर्शनं चापि वर्जयेत्।**
**संसर्गं न च गच्छेत्तु तस्य आयुर्न रिष्यते॥**

इन्द्रियसंयमविधिः, कामक्रोधलोभानां निषेधः

**इन्द्रियाणां विचरतां विषयेष्वपहारिषु।**
**संयमे यत्नमातिष्ठेद्विद्वान्यन्तेव वाजिनाम्॥**
**वशीकृत्वेन्द्रियग्रामं संयम्य च मनस्तथा।**
**सर्वान्संसाधयत्यर्थानक्षिण्वन्योगतस्तनुम्॥**
**न जातु कामः कामानामुपभोगेन शाम्यति।**
**हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते॥**
**या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः।**
**याऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम्॥**
**त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः।**
**कामः क्रोधस्तथा लोभस्तस्मादेतत् त्रयं त्यजेत्॥**

अहिंसा मधुरवाणी वाङ्मनःशुद्धिश्च

**अहिंसयैव भूतानां कार्यं श्रेयोनुपालनम्।**
**वाक् चैव मधुरा ह्यस्याः प्रयोज्या धर्मकाङ्क्षिणा॥**
**यस्य वाङ्मनसी शुद्धे सम्यग्गुप्ते च सर्वदा।**
**स वै सर्वमवाप्नोति वेदान्तगमनात्फलम्॥**

वेदाध्ययनं वेदोक्तकर्माचरणं शास्त्रनिगमाध्ययनं च

**वेदमेव सदाऽभ्यस्येत्तपस्तप्तुं द्विजोत्तमाः।**
**वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते॥**
**वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः।**
**सर्वान्समुत्सृजेदर्थान्स्वाध्यायस्य विरोधिनः॥**
**बुद्धिवृद्धिकराण्याशु धन्यानि च हितानि च।**
**नित्यं शास्त्राण्यवेक्षेत निगमांश्चैव वैदिकान्॥**

पाषण्डिविकर्मस्थादिभिः षड्भिः सह व्यवहारस्य निषेधः, नृत्तगीतिभ्यो हासकेभ्यश्च दाननिषेधः

**पाषण्डिनो विकर्मस्थान्बैडालव्रतिकाञ्शठान्।**
**हैतुकान्बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत्॥**
**न दानं यशसे दद्यान्नो भयान्नोपकारिणे।**
**न नृत्तगीतशीलेभ्यो हासकेभ्यश्च धार्मिकः॥**

---

(१) **विध.** २।९३।१-२.
(२) **विध.** २।११८।७,३४.
(३) **विध.** २।१२०।२७.
(४) **विध.** ३।२२७।४-५.
(५) **विध.** ३।२३३।५१, ५४, ७४-७८, ८५-८७, १४०-१४१, १४८-१४९, १६६, १७६-१७८, १८२-१८६, १९७, २०१-२०३, २०६-२०८, २२१, २२७, २३७-२८२.

शूद्राय मत्यादिदानस्य धर्मव्रतोपदेशस्य च निषेधः

**न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविष्कृतम्।**
**न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत्॥**

धनार्जन-सत्यप्रियवचन-भद्रोक्तीनां विधिः शुष्कवैरविवाद-योर्निषेधश्च

**नाऽऽत्मानमवमन्येत पूर्वाभिरसमृद्धिभिः।**
**आ मृत्योः श्रियमन्विच्छेन्न तां मन्येत दुर्लभाम्॥**
**सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम्।**
**प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः॥**
**भद्रं भद्रमिति ब्रूयाद्भद्रमित्येव वा वदेत्।**
**शुष्कवैरं विवादं च न कुर्यात्केनचित्सह॥**

पाणिपादादिचापल्य-परद्रोहयोर्निषेधः, पूर्वजाचारोऽनुसर्तव्यः

**न पादपाणिचपलो न नेत्रचपलो द्विजः।**
**न स्याद्वाक्चपलश्चैव न परद्रोहकर्मधीः॥**
**येनास्य पितरो याता येन याताः पितामहाः।**
**तेन यायात्सतां मार्गं तेन गच्छन्न रिष्यते॥**

ऋत्विक्पुरोहितादिभिरेकविंशत्या सह विवादस्य निषेधः

**ऋत्विक्पुरोहिताचार्यमातुलातिथिसंश्रितैः।**
**बालवृद्धातुरैर्वैद्यैर्ज्ञातिसंबन्धिबान्धवैः॥**
**मातापितृभ्यां जामीभिर्भ्रात्रा पुत्रेण भार्यया।**
**दुहित्रा दासवर्गेण विवादं न समाचरेत्॥**
**एतैर्विवादं संत्यज्य सर्वांल्लोकाञ्जयेद्गृही।**
**तस्मादेतैरधिक्षिप्तः सहेतासंज्वरं सदा॥**

धर्मध्वजित्वनिषेधः

**न धर्मस्यापदेशेन पापं कृत्वा व्रतं चरेत्।**
**व्रतेन पापं प्रच्छाद्य कुर्वन्स्त्रीशूद्रदम्भनम्।**
**प्रेत्येह तादृशो विप्रो गृह्यते ब्रह्मवादिभिः(?)॥**

यमानामाचरणस्य नित्यत्वम्, यमनियमयोर्दशविधत्वम्

**यमान्सेवेत सततं न नित्यं नियमान्बुधः।**
**यमान् संत्यज्य कुर्वाणो(? पतत्यकुर्वाणो) नियमान्केवलान्भजन्॥**
**शौचमिज्या तपो दानं स्वाध्यायोपस्थनिग्रहः।**
**व्रतोपवासौ मौनं च स्नानं च नियमा दश॥**
**आनृशंस्यं क्षमा सत्यमहिंसा दमः स्पृहा।**
**ध्यानं प्रसादो माधुर्यं चाऽऽर्जवं च यमा दश॥**

धर्मसंचयविधिः, परपीडानिषेधः, उत्तमाधमैः संबन्धस्य क्रमेण विधि-निषेधौ

**धर्मं शनैः संचिनुयाद्वल्मीकमिव पुत्तिकाः।**
**परलोकसहायार्थं परपीडां विवर्जयेत्॥**
**उत्तमैरुत्तमैर्नित्यं संबन्धानाचरेत्सह।**
**निनीषुः कुलमुत्कर्षमधमानधमांस्त्यजेत्॥**

यज्ञार्थं शूद्राद्भिक्षाया निषेधः

**न यज्ञार्थे द्विजः शूद्राद्भिक्षां लिप्सेत धर्मवित्।**
**यजमानो हि भिक्षित्वा चण्डालः प्रेत्य जायते॥**

वर्णानामापत्तरणसाधनविभागः

**क्षत्रियो बाहुवीर्येण तरेदापदमात्मनः।**
**धनेन वैश्यशूद्रौ तु जपहोमैर्द्विजातयः॥**

विषमशैलारोहणादिनिषेधरूपाणां सायंप्रात-र्विद्वद्वाणीश्रवणादिविधिरूपाणां च भूयसामाचाराणामनुक्रमणम् आचारप्रशंसा च

**नाऽऽरोहेद्विषमं शैलं नावं संशयितांस्तरून्।**
**न पातयेत लोष्टेन न काष्ठेन फलं द्रुमात्॥**
**शिरःस्नातस्तु तैलेन नाङ्गं किंचिदपि स्पृशेत्।**
**वहेन्न भारं शिरसा युगपन्नाग्निवारिणी॥**
**न तोयं प्रक्षिपेद्वह्नौ वह्निं तोये तथैव च।**
**वर्जयेदतिसौहार्दं भोज्यान्नस्य च कुत्सनम्॥**
**राजद्विष्टं गणद्विष्टं लोकद्विष्टं विवर्जयेत्।**
**सायं प्रातश्च विदुषां शृणुयात्पुष्कला गिरः॥**
**संस्कृतं पायसं नित्यं यवाग्वां कृसरं वदेत्।**
**श्मश्रुकर्माणि चाऽऽयुष्यं जीवितेन तथा कृतिः॥**
**व्याधितानां तु सर्वेषामायुषः प्रतिनन्दनम्।**
**श्रान्तस्य विश्रमश्चेति चाऽऽढ्यतां सीरिणस्तथा॥**
**आसीनस्य सुखं चापि पुण्याहमपि गच्छतः।**
**देवकर्मप्रवृत्तस्य प्रसादं परिकीर्तयेत्॥**

न जातु त्वमिति ब्रूयादापन्नोऽपि महत्तरम्।
त्वंकारो वा वधो वेति विद्वत्सु न विशिष्यते।
अवराणां समानानां शिष्याणां चैतदिष्यते॥
एक एव चरेद्धर्मं न धर्मध्वजिको भवेत्।
अर्चेद्देवान्न दम्भेन सेवेतामायया गुरून्॥
निधिं विदध्यात्पारक्यं यत्रार्थः शब्दवानिति।
कर्म वै सफलं कृत्वा गुरूणां प्रतिपादयेत्॥
वृद्धान्नातिवदेज्जातु न तु संप्रेषयेत्क्वचित्।
न वेगितोऽन्यकार्यः स्यान्नादित्वाऽन्नानि कुत्सयेत्॥
मुक्तकेशो न गच्छेत्तु स्वप्नाहारसभा स्त्रियः।
पाणिनाऽऽलभ्य निष्क्रामेद्रत्नपूज्याज्यमण्डलम्।
प्रदक्षिणं तु कुर्वीत मङ्गल्यं सर्वदा यतिः॥
सूनां च बन्धनागारं नृपनृत्यगृहे तथा।
अन्तःपुरं च ऋषयो(? षभं) दूरतः परिवर्जयेत्॥
त्रिः पक्षस्य कृतश्मश्रुर्नखलोमानि कल्पयेत्।
न प्रतिस्फालयेदम्बु पाणिना चरणेन वा॥
नासंवृतमुखः कुर्यात्क्षुतमङ्गविजृम्भणम्।
नाद्वारेण सुहृद्वेश्म न द्वारेण रिपोर्विशेत्॥
न सर्पशस्त्रैः क्रीडेत्तु नदीवेगं विवर्जयेत्।
विद्यात्प्रतिक्षणं मृत्योरयथातथचेष्टितम्॥
आहरेज्ज्ञानमर्थांश्च नरो ह्यमरवत्सदा।
केशैरिव गृहीतस्तु मृत्युना धर्ममाचरेत्॥
प्रविशेज्जनसंबाधं तथाऽतिगहनं न च।
हेम नासंस्कृतं धार्यं निशि लोष्टं न च क्षिपेत्॥
आदौ पङ्क्त्यां न चाश्नीयाद्वर्जयेद्भूमिताडनम्।
वर्जयेच्छात्रशबलं दिवा निद्रां तथैव च॥
कामः क्रोधो भयो(? यं) हर्ष(? र्षो) लोभो
दर्पस्तथैव च।
रिपवः षड् विजेतव्याः पुरुषेण विपश्चिता॥
अरिषड्वर्गसंन्यासात्कुर्यादिन्द्रियनिग्रहम्।
योगक्षेमं सदोत्थानात्प्रज्ञां वृद्धोपसेवनात्॥
प्रश्रयेण जयेन्मानं दैन्यं दृष्टान्तसंश्रयात्।
अक्रोधेन जयेत्क्रोधं विनयेन त्वनार्यताम्॥
शीघ्रत्वाद्धस्तपादं च वाचमुच्चारणाज्जयेत्।
अज्ञानं ज्ञानसंयोगात्कामं कामाङ्गवर्जनात्॥
धर्मिष्ठैरागमैर्लोभं क्रोधं मैत्र्याद्विवर्जयेत्।
कारुण्येन जयेन्मानं कालं कार्योपपत्तिभिः।
आत्मानं सुखदुःखाद्यं त्व(? ना)नभिज्ञाय
योजयेत्॥
धृत्या शिश्नोदरं रक्षेत्पाणिपादं च चक्षुषा।
चक्षुःश्रोत्रे च मनसा मनो वाचं च कर्मणा॥
देशकालानुबन्धार्थं धर्माणामविरोधि यत्।
तत्तत्सुखं निषेवेत नाकस्मान्निःसुखी भवेत्॥
रूपसंदर्शन(? संस्पर्शन)श्रव्यरसगन्धान्सदा जयेत्।
वसन्नपि सदोमध्ये ह्यसक्तो मनसा भवेत्॥
परेषां तन्न संदध्यात्प्रतिकूलं यदात्मनः।
कृच्छ्रेष्वपि न तत्कुर्यात्साधूनां यदसंमतम्।
जीर्णाशी च मिताशी च हिताशी च तथा भवेत्॥
शस्यते यैर्गुणैरन्यैर्यैरन्यैरर्जितं यशः।
उञ्छवृत्तिर्भवत्येवं विपरीतमतस्त्यजेत्॥
सुकारुणिकमात्मानं ख्यापयेन्नापि निर्घृणम्।
देशकालौ च शक्तिं च जनतां चावलोकयेत्॥
न मृदुः स्यान्न च क्रूरो ह्युभावेव समाश्रयेत्।
मृदुर्भवत्यवज्ञातः तीक्ष्णादुद्विजते जनः॥
अनालक्षितचित्तः स्यान्नैकान्ते किंचिदाचरेत्।
विद्यात्परस्य रन्ध्राणि स्वरन्ध्रं छादयेत्पुनः॥
गूहेत्कूर्म इवाङ्गानि रक्षेदात्मानमात्मना।
वागादीनि सहायानि कृत्वा प्रज्ञां च मन्त्रिणम्॥
धर्मकामसमृद्ध्यर्थं दासाद्यर्थः पुमान्भवेत्।
अर्थानर्थौ समासाद्य हर्षदैन्ये विवर्जयेत्॥
दुःखे दुःखाधिकान्पश्येत्सुखे पश्येत्सुखाधिकान्।
न त्वेवं मूढवद्ध्यादात्मानं सुखदुःखयोः॥
हर्षस्थानसहस्राणि शोकस्थानशतानि च।
दिवसे दिवसे मूढमाविशन्ति न पण्डितम्।
न तत्कुर्वीत यस्यान्ते हर्षोपालम्भमाप्नुयात्॥
अज्ञानप्रभवो मोहस्तस्माद्रागः प्रवर्तते।
रागाद्द्वेषस्ततः क्रोधः क्रोधान्मानोऽभिजायते॥
मानादपार्थकं कर्म कर्मतोऽशुभलक्षणम्।
जन्ममृत्युजराव्याधिदुःखशोकप्रवर्तनम्।
अप्रमादो वृद्धसेवा तत्प्रज्ञामूलमिष्यते॥
ज्ञानाद्धर्मः सुखं धर्मान्निःश्रेयोभ्युदयात्मकम्।
इष्टेन्द्रियार्थसंयोगो भवेदुदयलक्षणम्॥

नारुन्तुदः स्याद(? स्यान्न)नृशंसवादी
न हीनतः परमभ्याददीत।
यया़ऽस्य वाचा पर उद्विजेत
न तां वदेद्रुषतीं पापलोकाम्॥
वाक्सायका वदनान्निष्पतन्ति
यैराहतः शोचति रात्र्यहानि।
परस्य नुर्मर्मसु ते पतन्ति
न तान्धीरोऽवसृजेद्वै परेषु॥
प्रियाणि लोके शृणुते प्रियंवदः
प्रियाणि चाऽऽप्नोति प्रियाणि चाश्नुते।
प्रियश्च सर्वस्य जनस्य जायते
जनानुरागप्रभवा हि संपदः॥
आचारयुक्तस्त्रिदिवं प्रयाति
आचारवानेव भवत्यरोगः।
आचारवानेव चिरं तु जीवे-
दाचारवानेव भुनक्ति लक्ष्णम्॥

द्विजानां सुरापाननिषेधः, ब्राह्मणानां मद्यपानमांसभक्षणनिषेधः

[1]सुरा वै मलमन्नानां पाप्मा च मलमुच्यते।
तस्माद्ब्राह्मणराजन्यौ वैश्यस्तु न सुरां पिबेत्॥
[2]गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा।
यथैवैका तथैवान्या न पातव्या द्विजातिभिः॥
यक्षरक्षःपिशाचान्नं मद्यं मांसं सुरासवम्।
तद्ब्राह्मणेन नात्तव्यं देवानामश्नता हविः॥
अमेध्ये वा पतेन्मत्तोऽवैदिकं वाऽप्युदाहरेत्।
अकार्यमन्यत्कुर्याद्वा ब्राह्मणो मदमोहितः॥
यस्य कायगतं ब्रह्म मद्येनाऽऽप्लाव्यते सकृत्।
तस्य व्यपैति ब्राह्मण्यं शूद्रत्वं च स गच्छति॥

पापनाशधर्मवृद्ध्यर्थं तपसोऽनुष्ठानम्

[3]पापस्य नाशस्तपसा विधेयो
धर्मस्य वृद्धिस्तपसा विधेया।
पापप्रणाशे त्वथ धर्मवृद्धौ
कामाः समृध्यन्ति नरस्य विप्राः॥

(१) विध. ३।२३४।४१; सम. ११० वैश्यस्तु (वैश्यश्च) उत्त.; कृभ. १३०१ समवत्, उत्त. (=).
(२) विध. ३।२३४।४२-४५.
(३) विध. ३।२३६।१५.

आत्महत्यानिषेधः तदपवादश्च

[1]अनार्तो व्याधिरहितो न त्यजेदात्मनस्तनुम्।
असूर्या नाम ते लोका अन्धेन तमसा वृताः।
तांस्ते प्रेत्याभिगच्छन्ति ये के चाऽऽत्महनो जनाः॥
अनिष्टैरात्मनो ज्ञात्वा मृत्युकालमुपस्थितम्।
व्याधितो भिषजा त्यक्तः पूर्णे चाऽऽयुषि वासके॥
यथागमानुसारेण संत्यजेदात्मनस्तनुम्।
तस्मिन्काले तनुत्यागाद्यथोक्तं फलमाप्नुयात्॥

सर्वदोषमूलस्याज्ञानस्य निन्दा तच्छमनोपायाश्च

[2]सर्वेषामेव दोषाणामज्ञानः(? नं) परमो मतः।
अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति॥
कामः क्रोधस्तथा लोभो हर्षो मानः सदैव च।
अज्ञानेनाऽऽवृतं जन्तुं निविशन्ते द्विजोत्तमाः॥
अज्ञानादेव पापानि विचिनोत्यविचक्षणः।
अज्ञानादुत्पथं गत्वा नरकं प्रतिपद्यते॥
अज्ञानेनाऽऽवृतो जन्तुः शुभे मार्गे न तिष्ठति।
अज्ञानशमने यत्नस्ततः कार्यो विजानता॥
शास्त्रान्ववेक्षणं तस्यं वृद्धसेवा तथैव च।
तथा च गुरुशुश्रूषा त्वज्ञानशमनी मता॥
लोकद्वये नास्ति महानुभावो
अज्ञानतुल्यः पुरुषस्य शत्रुः।
अतो हि लोकद्वितयं सुखार्थी
ज्ञाने तु कुर्यात्पुरुषः प्रयत्नम्॥

पापापचयपुण्यचययोर्विधानम्

[3]ये पापहीनाः पुरुषाः प्रधाना-
स्तेषां न दुःखं भवतीह किंचित्।
तस्मात्प्रयत्नेन विवर्जनीयं
पापं बुधैः पुण्यचयश्च कार्यः॥

धर्मार्थयुक्तस्यैव कामस्य सेव्यत्वम्

[4]कामानुसारी धर्मार्थौ न 8तिष्ठति चिरं नरः।
तस्मात्कामं न सेवेत नरो धर्मार्थवर्जितम्॥

8 तिष्ठतिरत्रान्तर्भावितणयर्थो ग्राह्यः।
(१) विध. ३।२३७।४६-४८.
(२) विध. ३।२३९।२-७.
(३) विध. ३।२४०।७.
(४) विध. ३।२४१।२, ७.

धर्मार्थयुक्तं पुरुषस्तु कामं
संसेवमानो हि न जातु कामैः।
वियोगमाप्नोति ततस्तु विद्वा-
न्धर्मार्थयुक्ते(? क्तं)सततं निषेवेत्॥

संपत्तिविपत्त्योर्हर्षविषादवर्जनविधिः

हंस उवाच –

[1]नात्यर्थहर्षः कार्यस्तु कदाचिदपि पण्डितैः।
अत्यर्थहृष्टः पुरुषः कार्यं वेत्ति न किंचन॥
संपदं चञ्चलां प्राप्य हर्षं प्राज्ञो विवर्जयेत्।
दृष्टा हि बहवो नष्टा लोके संपत्प्रलम्बिताः॥
संपत्तौ वा विपत्तौ वा स्वभावं न त्यजेद्बुधः।
चञ्चलाः संपदः सर्वाः स्वभावादेव वै द्विजाः॥
कस्तासां विश्वसेत्प्राज्ञो वेश्यास्त्रीणां यथा तथा।
संसर्गान्मोहमाप्नोति तासां प्राप्नोति मानवः॥
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः।
संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम्॥
न प्रज्ञा धनलाभाय न जाड्यमसमृद्धये।
लोकपर्यायवृत्तान्तं प्राज्ञो जानाति नेतरः॥
प्राज्ञस्तु सम्यक्चपलां विदित्वा
तां प्राप्य हर्षं परिवर्जयेत।
संपद्विनाशे न च दुःखमीया-
द्यद्भावि तद्भावि न तस्य नाशः॥

सर्वदोषमूलमानवर्जनविधिः

हंस उवाच –

[2]मानं विवर्जितं सद्भिर्वर्जनीयं सदा बुधैः।
मानेन नष्टा बहवो राजानः सपरिच्छदाः॥
ब्राह्मण्याच्च परिभ्रष्टा ब्राह्मणा बहवो द्विजाः।
सर्वदोषास्पदं मानं लोकद्वयविघातकम्॥
युक्तायुक्तं न जानाति मानेन पुरुषाधमः।
मानग्रस्तो नरो लोके गुरूनप्यवमन्यते॥
करोत्यकार्यं पुरुषो मानेन च तथा ध्रुवम्।
मानग्राहगृहीतस्य नास्ति मोक्षः कथंचन॥
कामः क्रोधश्च लोभश्च सर्वजन्तुविनाशकाः।
मानग्रस्तं तु पुरुषमाविशन्ति द्विजोत्तमाः॥
मानाभिभूतश्च तथा नरकं प्रतिपद्यते।
अप्रतिष्ठन्नरश्रेष्ठास्तस्मात्तं परिवर्जयेत्॥
शत्रुर्न मानेन समोऽस्ति पुंसो
मानेन नाशं व्रजतीह जन्तुः।
मानो हि तस्मात्परिवर्जनीयो
बुधैस्तु नित्यं नरकस्य मार्गः॥

बहुदोषहेतोर्मदस्य वर्जनीयत्वात् तद्धेतोर्मद्यपानस्य वर्जनीयत्वम्

हंस उवाच –

[1]मदो विवर्जितः सद्भिर्वर्जनीयः प्रयत्नतः।
मदे तु बहवो दोषा लोकद्वयविघातकाः॥
मत्तः कार्यं न जानाति गुरूनप्यवमन्यते।
मत्तस्य नरकद्वारं नित्यं विप्रास्त्वपावृतम्॥
मत्तो भयं न जानाति मरणेऽप्यतिकुत्सिते।
मत्तो मोहसमापन्नो न विजानाति किंचन।
मदानामपि सर्वेषां ज्ञेयः पानमदोऽधमः।
तेनाभिभूतः पुरुषो न मृतादतिरिच्यते॥
अज्ञानतुल्यं न हि दोषमस्ति
हेतुश्च तस्येह परो मदः स्यात्।
तस्मात्प्रयत्नेन मदस्य हेतु-
र्नरैण पानं परिवर्जनीयम्॥

बहुदोषमूलस्य लोभस्य वर्जनीयत्वम्

हंस उवाच –

[2]लुब्धो दोषान्न जानाति लुब्धः पापं न बुध्यते।
नरो लोभसमाविष्टो वशमेति तथाऽऽपदाम्॥
जीर्यन्ति जीर्यतः केशा नखा जीर्यन्ति जीर्यतः।
जीर्यन्ति जीर्यतो दन्तास्तृष्णा त्वेका न जीर्यते॥
तृष्णाखनिरगाधेयमपूर्वा द्विजपुंगवाः।
पूर्यमाणाऽपि सततं खन्यतेऽभ्यधिकं तया॥
न तां पूरयितुं शक्तः कदाचिदपि कश्चन।
न तां पूरयितुं शक्ताः सर्वेऽसंतोषमाश्रिताः॥
यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः।
नालमेकस्य पर्याप्तमिति मत्वा शमं व्रजेत्॥

(१) विध. ३।२४२।१-७.
(२) विध. ३।२४३।१-७.

(१) विध. ३।२४४।१-५.
(२) विध. ३।२४५।१-७.

या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः।
योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम्॥
लुब्धस्य बन्धुर्न सुतो गुरुर्वा
लुब्धस्य लोका न च लोकयात्रा।
लुब्धस्य दोषाः सकलाः प्रदिष्टा
लोकद्वये दुःखकराः सुरौघाः॥

सर्वानर्थमूलस्य क्रोधस्य त्याज्यत्वम्

हंस उवाच –
[1]क्रोध एकः परः शत्रुः क्रोध एको विनाशकृत्।
क्रोधाभिभूतः पुरुषस्त्वात्मानमपि घातयेत्॥
अर्थानर्थौ न जानाति कार्याकार्यौ(? र्ये) तथैव च।
नरः क्रोधसमाविष्टो नान्यं मित्रमपि द्विजान्॥
गुरूनाक्षिपति क्रोधान्नैनं हि नमते जनः।
अनर्थैः सह संसर्गस्तस्मात्क्रोधं विवर्जयेत्॥
क्रोधं(? धो) मूलमनर्थानां द्वारं हि नरकस्य च।
आपदामास्पदं घोरं तं(? स्तं) प्रयत्नेन वर्जयेत्॥
क्रोधेन विजितो यस्तु कथमन्यं स जेष्यति।
क्रोधे जिते जितं विद्धि त्रैलोक्यं सचराचरम्॥
अनर्थकारिणं क्रोधं यदा तेजस्विता मता।
क्रोधे दोषमतः कृत्वा जितः क्रोधो महात्मभिः॥
यज्ञश्च दानानि तपः पवित्रं
तीर्थोपसेवा च तथैव वेदाः।
क्रोधाभिभूतस्य भवन्ति मिथ्या
नरस्य तस्मात्परिवर्जयेत्तम्॥

सर्वपापमूर्धन्यस्य नास्तिक्यस्य तद्धेतोरसच्छास्त्राध्ययनस्य च वर्जनीयत्वम्

हंस उवाच –
[2]सर्वेषामेव पापानां नास्तिक्यं पातकं परम्।
नास्तिक्याद्धि परं नास्ति किंचित्पापं द्विजोत्तमाः॥
अकार्यमिति कार्याणि कृत्वा कार्यवशान्नरः।
पश्चात्तापेन संयुक्तः क्षिप्रं पापं व्यपोहति॥
कार्यबुद्ध्या त्वकार्याणि यः करोति नराधमः।
कथं निवर्तनं तेभ्यो जायते तस्य वै द्विजाः॥
नास्तिक्यस्य तथा मूलं त्वसच्छास्त्रावगाहनम्।
तस्मात्सर्वप्रयत्नेन तद्विवर्ज्यं विजानता॥
सर्वो हि मानवो लोके परलोकनिबन्धनः।
तत्रापि निरपेक्षस्य किं नु लोके निबन्धनम्।
ये तु वै नास्तिका लोके नरा लोकं प्रति द्विजाः।
नरके ते हि पच्यन्ते बहुकालं न संशयः॥
नास्तिक्यमेकं पुरुषस्य लोके
विनाशनं विप्रवराः प्रदिष्टम्।
तस्मात्प्रयत्नेन विवर्जनीयो
नास्तिक्यभावः सुखमीप्समानैः॥

अतिविनाशकस्याहंकारस्य वर्जनीयत्वम्

हंस उवाच –
[1]अहंकारात्परं नास्ति लोके किंचिद्विनाशनम्।
अहंकारेण भूपालाः शतशो निधनं गताः॥
अहंकृतास्तथा नष्टा ब्राह्मणाश्च सहस्रशः।
मान्यामान्यं न जानन्ति कार्याकार्यं त्वहंकृताः॥
अहंकृतस्तथा लोके न विद्यामधिगच्छति।
विपन्नकार्यश्च तथा न प्राज्ञान्परिपृच्छति॥
न शृणोति तथाऽन्येषां दर्पपूर्णो विचक्षणः।
पातादन्यन्न भैषज्यं दर्पान्नास्त्ये(? स्ये)ह कीर्तनम्॥
बलाधिकैस्तथा वीरैर्गुरुभिश्च तथैव च।
मरणे संनिकृष्टेऽपि मरणस्य विचक्षणः॥
हेतुभूतानि कर्माणि निन्दितानि निषेवते।
स्थिते स्थितांस्तथा प्राज्ञान्भाषमाणन्विनिन्दति॥
अहंकृतानां नरके प्रदिष्टा
गतिर्ध्रुवं लोकविनिन्दितानाम्।
प्राज्ञेन तस्मात्परिवर्जनीयो
दर्पो विनाशैककरः सदैव॥

अशौचस्य वर्जनीयत्वम्, तत्प्रतियोगिनः शौचस्य स्त्रीशौचमर्थशौचं वाक्शौचमिति त्रैविध्यमुत्तरोत्तरप्रशस्ततरत्वं च

हंस उवाच –
[2]दत्तं यच्छौचहीनेन न तद्गृह्णन्ति देवताः।
बुबुत्स(?बुभुत्सु)वश्च धर्मज्ञाः शुचिकामाश्च देवताः॥

(१) विध. ३।२४६।१-७.
(२) विध. ३।२४७।१-७.

(१) विध. ३।२४८।१-७.
(२) विध. ३।२४९।१-७.

**यक्षैश्च राक्षसैश्चैव पिशाचैश्च निशाचरैः।**
**डाकिनीभिश्च धर्मज्ञाः शौचहीनोऽभिभूयते॥**
**शौचहीनमथाभ्येति स्वयं निन्दति कं(?तं)द्विजाः।**
**व्याधिहीनो ह्यशौचश्च सर्वैरेवाभिभूयते॥**
**वर्धते(? न्ते)च तथाऽनर्थाः समर्थाश्च व्रजन्ति च।**
**शौचहीनस्य रिपवो यान्ति वृद्धिं परां द्विजाः॥**
**स्त्रीशौचमर्थशौचं च वाक्छौचमपि च द्विजाः।**
**एतानि यस्य शौचानि स शुचिः परिकीर्तितः॥**
**योऽर्थे शुचिः स हि शुचिर्न मृद्वारिशुचिः शुचिः।**
**ततश्चाप्यधिकं शौचमहिंसा परिकीर्तिता॥**
**शौचेन हीना नरकं व्रजन्ति**
**शौचेन हीना विभजन्त्यनर्थान्।**
**शौचेन हीनाश्च भवन्ति निन्द्या-**
**स्तस्मादशौचं परिवर्जनीयम्॥**

सर्वनाशकस्यानृतभाषणस्य वर्जनीयत्वं तस्य पशुगवाश्वादिविषयभेदेन नाशकत्वतारतम्यं च

**हंस उवाच –**
**[1]अनृतं वर्जयेन्नित्यमनृतं पातकं परम्।**
**अनृताद्धि परं नास्ति द्वारं नाशनमात्मनः॥**
**सर्वे निबद्धा वाच्या(?च्य)र्था वाङ्मूला वाग्विनिःसृताः।**
**तस्मान्न स्तेनयेद्वाचं य इच्छेद्धितमात्मनः॥**
**अनृतं न क्वचिद्वाच्यं तथा साक्ष्ये विशेषतः।**
**अनृतं हि वदन्साक्ष्ये पितृभिः सह मज्जति॥**
**पञ्च पश्वनृते हन्ति दश हन्ति गवानृते।**
**शतमश्वानृते हन्ति सहस्रं पुरुषानृते॥**
**हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन्।**
**सर्वं भूम्यनृतं हन्ति मा स्म भूम्यनृतं वदेत्।**
**अप्सु भूमिवदित्याहुः स्त्रीणां भोगे च मैथुने।**
**अब्जेषु चैव रत्नेषु सर्वेष्वश्ममयेषु च ॥**
**एतान्दोषानवेक्ष्यैव सर्वाननृतभाषणे।**
**यथाश्रुतं यथादृष्टं सर्वमेवाञ्जसा वदेत्॥**
**शूद्रविट्क्षत्रविप्राणां यत्रोक्ते प्राप्नुयाद्वधः।**
**तत्र वक्तव्यमनृतं तद्धि सत्याद्विशिष्यते॥**

(१) विध. ३।२५१।१-७, २६-२७, २९-३०.

**बहवः सुखमेधन्ते यस्मिन्विप्रा निपातिते।**
**वाच्यं तस्य वधे प्राप्ते यथाभूतमिति श्रुतिः॥**
**न नर्मयुक्तं वचनं हिनस्ति**
**न स्त्रीषु विप्रा न विवाहकाले।**
**प्राणात्यये सर्वधनापहारे**
**पञ्चानृतान्याहुरपातकानि॥**

सर्वपापेभ्यो हिंसा गरीयसी, आततायिहिंसा यज्ञादौ हिंसा युद्धे हिंसा च न पापम्, जितस्य हिंसायां दोषगौरवम्, स्त्रीहिंसा धनहिंसा प्राणिहिंसेति हिंसात्रैविध्यम्, सामान्यतो मांसभक्षणे दोषः, विशेषतो ब्राह्मणस्य मधुपर्कादिनिमित्ताभावे मांसभक्षणे दोषः

**हंस उवाच –**
**[1]सर्वेषामेव पापानां हिंसा परमिहोच्यते।**
**हिंसा बलमसाधूनां हिंसा लोकद्वयापहा॥**
**अपि कीटः पतङ्गो वा न हन्तव्यः कथंचन।**
**महद्दुःखमवाप्नोति पुरुषः प्राणिनाशनात्॥**
**आततायिनमायान्तं पुरुषं यदि वा पशुम्।**
**उपायहीनस्तं हत्वा न तु पापेन बाध्यते॥**
**गुरुं वा बालवृद्धौ वा मान्यं वाऽप्यथ वा जनम्।**
**आततायिनमायान्तं हन्यादेवाविचारयन्॥**
**आततायिनमायान्तमपि वेदान्तगं रणे।**
**जिघांसन्तं जिघांसीयात्तेन पापं न विद्यते॥**
**रणे प्रहाराभिहते शत्रौ नैवास्ति पातकम्।**
**जित्वा गृहीते निहते तस्मिन्नेवास्ति पातकम्॥**
**रणे जितं तु यः शक्तः पश्चात्पातयते नरः।**
**स याति नरकं घोरं बहून्यब्दशतानि च॥**
**मुक्त(? क्ता)श्च नारकाद्दुःखाद्बहून्यब्दशतानि तु।**
**आमगर्भेषु सिच्यन्ते ये नरा नरघातकाः॥**
**यावन्ति पशुरोमाणि तावत्कृत्वेह मारणम्।**
**वृथापशुघ्नः प्राप्नोति प्रेत्य चेह च(? न) निष्कृतिम्॥**
**अपि कीटं नरो हत्वा छित्त्वा तृणमथापि वा।**
**नरकं याति धर्मज्ञाः पुरुषः स्वेन कर्मणा॥**

(१) विध. ३।२५२।१-३१.

स्त्रीहिंसा धनहिंसा च प्राणिहिंसा च दारुणा।
हिंसा च त्रिविधा प्रोक्ता वर्जिता पण्डितैर्नरैः॥
अहिंसकस्तु यत्नेन वर्जयेत्तु परस्त्रियम्।
विजनेऽपि तथा न्यस्तं परद्रव्यं प्रयत्नतः॥
अतो वै नैव कर्तव्या प्राणिहिंसा भयावहा।
वियोज्य प्राणिनं प्राणैस्तथैकमपि निर्घृणः॥
नरकाद्धि विनिर्मुक्तो न किंचित्सुखमेधते।
यां रात्रिमधिविन्नां स्त्रीं(? न्ना स्त्री) यां
चैवाक्षपराजिताम्(?ता)॥
यां च राज्यच्युतो रात्रिं यां च सर्वस्वविच्युतः।
इष्टबन्धुवियुक्तश्च यां रात्रिं दुःखमश्नुते॥
व्यवहारे जितश्चैव यद्दुःखं कूटसाक्षिभिः।
तत्सर्वं दुःखमाप्नोति हत्वैकमपि तु द्विजाः॥
नास्ति पापतरं लोके मनुष्या मां(?न्मां)-
सभोजिनः।
बर्हिर्मांसं तृणात्काष्ठादुपलाद्वाऽपि जायते।
घोरात्प्राणिवधाज्जातं पुरुषः परिवर्जयेत् ॥
यदि चेत्खादको न स्यान्न भवेद्घातकस्तथा।
एतस्मात्कारणान्निन्द्यो घातकादपि खादकः॥
यावतां प्राणिनां येन मांसं भुक्तं भवेदिह।
ता एव तेन तावत्यो गन्तव्या योनयो ध्रुवम्॥
येषां तु प्राणिनां भुक्तं तेन मांसं द्विजोत्तमाः।
भोक्तव्यं तस्य तैर्मांसं ध्रुवं जन्मनि जन्मनि॥
मां स भक्षयिताऽमुत्र यस्य मांसमिहाद्म्यहम्।
एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः॥
समुत्पत्तिं च मांसस्य वधबन्धौ च देहिनाम्।
प्रसमीक्ष्य निवर्त्येत सर्वमांसस्य भक्षणात्॥
अनुमन्ता विशसिता निहन्ता क्रयविक्रयी।
संस्कर्ता चोपहर्ता च खादकाश्च विघातकाः॥
स्वमांसं परमांसेन यो वर्धयितुमिच्छति।
न पापकृत्तमो लोके तस्मादन्यो हि विद्यते॥
असंस्कृतान्पशून्मन्त्रैर्नाद्याद्विप्रः कथंचन।
मन्त्रैस्तु संस्कृतानद्याच्छाश्वतं विधिमास्थितः॥
या वेदविहिता हिंसा न सा हिंसा मता यतः॥
ओषध्यः पशवो वृक्षास्तिर्यञ्चः पक्षिणस्तथा।
यज्ञार्थं निधनं प्राप्ताः प्राप्नुवन्त्युच्छ्रिताः(?तीः) पुनः॥
मधुपर्के च यज्ञे च पितृदैवतकर्मणि।
अत्रैव पशवो हिंस्या नान्यत्रेति कदाचन॥
एष्वर्थेषु पशून्ह(? न्हा)न्ति वेदतत्त्वार्थविद्द्विजाः।
आत्मानं च पशूंश्चैव गमयन्त्युत्तमां गतिम्॥
यज्ञार्थं पशवः सृष्टाः पूर्वमेव स्वयंभुवा।
यज्ञाश्च भूतैः(? त्यै) सर्वस्य तस्माद्यज्ञे वधोऽवधः॥
वृथा तु मांसं पुरुषः समश्नन्
प्रयाति विप्रा नरकं सुघोरम्।
निबर्हणं गर्हितमेव जन्तो-
र्मांसं च तस्मात्परिवर्जनीयम्॥

परपीडावर्जनम्

[1]प्राप्नोति यादृशीं बाधां यत्कर्मणि कृते परः।
तस्यापि तादृशी बाधा ज्ञेया जन्मनि जन्मनि॥
तस्मात्सर्वप्रयत्नेन पापबाधां विवर्जयेत्।
श्रूयतां धर्मसर्वस्वं श्रुत्वा चाप्यवधार्यताम्।
आत्मनः प्रतिकूलानि परेषां न समाचरेत्॥
परोपतापक्रियया न कार्यं
धनार्जनं दोषसमूहकारि।
परोपतापप्रभवो हि दोषः
शक्यो न हन्तुं विबुधालयेऽपि॥

ज्ञानार्जनविधिः ज्ञानप्रशंसा च

[2]ज्ञानं सुखावहं लोके ज्ञानं चक्षुः परं मतम्।
ज्ञानाद्धर्ममवाप्नोति ज्ञानादर्थं च मानवः॥
ज्ञानात्काममवाप्नोति ज्ञानान्मोक्षं च गच्छति।
तस्मात्सर्वप्रयत्नेन ज्ञाने यत्नं समाचरेत्॥
ज्ञानेन सर्वमाप्नोति यत्किंचिन्मनसेच्छति।
ज्ञानैकहेतुश्च तथा नित्यं शास्त्रान्ववेक्षणम्॥
आचार्यगुरुशुश्रूषा वृद्धानां चैव सेवनम्।
अनालस्यमकार्पण्यं दिवा निद्राविवर्जनम्॥
ज्ञानमेष परो बन्धुर्ज्ञानं मार्गस्य देशकम्।
संसारबन्धनक्लेशांस्तथा ज्ञानेन मुञ्चति॥
ज्ञानेन पुरुषो वेत्ति ज्ञानाद्वैराग्यमृच्छति।
ज्ञानेन तदवाप्नोति यद्गत्वा नानुशोचति॥
एतद्विदित्वा पुरुषेण कार्यं
ज्ञाने सदा यत्नमदीनसत्त्वाः।
ज्ञानं समासाद्य महानुभावा
विमुक्तदुःखाः सुखिनो भवन्ति॥

---
(१) विध. ३।२५३।४३-४५.
(२) विध. ३।२५४।१-७.

गुरुशुश्रूषाप्रशंसा

**हंस उवाच –**

**[1]ज्ञातव्या गुरुशुश्रूषा परमं धर्मकारणम्।**
**गुरुशुश्रूषया विद्यां नरः समधिगच्छति।**
**विद्यया तदवाप्नोति यत्र गत्वा न शोचति॥**
**सुवर्णपुष्पां पृथिवीं विचिन्वन्ति नरास्त्रयः।**
**शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम्॥**
**सर्वधर्मविहीनोऽपि गुरुशुश्रूषणे रतः।**
**स्वर्गलोकमवाप्नोति पुरुषोऽपि सुदारुणः॥**
**मातरं पितरं वाऽपि ज्येष्ठं भ्रातरमेव च।**
**गुरुं विद्याप्रदं वाऽपि यश्च शुश्रूषते नरः।**
**स्वर्गलोकमवाप्नोति यावदिन्द्राश्चतुर्दश॥**
**यदेव पुण्यमाप्नोति गुरुशुश्रूषया द्विजः।**
**द्विजशुश्रूषया शूद्रस्तदेव फलमश्नुते॥**
**प्राप्नोति पुण्यं परमं च साध्वी**
**शुश्रूषते या पतिमप्रमत्ता।**
**शुश्रूषया भूमिपतेः प्रजानां**
**पुण्यं प्रदिष्टं परमं नृलोके॥**

स्वाध्यायविधिः, वेदादिस्वाध्यायैः पितॄणां सर्पिरादिभिस्तर्पणम्

**हंस उवाच –**

**[2]स्वाध्यायसेवा कर्तव्या नित्यमेव विजानता।**
**स्वाध्यायेन तदाप्नोति यत्किंचिन्मनसेच्छति॥**
**पयसा मधुना दध्ना मांसेन च यथाक्रमम्।**
**ऋचो यजूंषि सामानि तथैवाऽऽथर्वणं पठेत्॥**
**पितॄणां तर्पणं कुर्याद्वेदाङ्गेन च सर्पिषा।**
**उपवेदानपि पठंस्तर्पयत्योदनेन तान्॥**
**विना स्था(? विद्यास्था)नानि सर्वाणि**
**स्वैरेयेण(?)तथा नरः।**
**सांख्ययोगं पाञ्चरात्रं तथा पाशुपतं पठन्॥**
**क्षीरेण मधुमिश्रेण पितॄंस्तर्पयते तथा।**
**वाकोवाक्यं पुराणं च नाराशंस्योऽथ गाथिकाः॥**
**स्तोत्राणि च पठन्नित्यं दध्ना च मधुना तथा।**
**तस्मात्सर्वप्रयत्नेन द्विजः स्वाध्यायमाचरेत्॥**
**स्वाध्याय एवेह तपः पवित्रं**
**स्वाध्याय एवेह तथैव यज्ञः।**
**स्वाध्यायवानेव नरः प्रयाति**
**त्रिविष्टपं मोक्षमथाप्यभीष्टम्॥**

ब्रह्मचर्यप्रशंसा

**हंस उवाच –**

**[1]ब्रह्मचर्येऽभिसंयुक्तो द्विजः स्वर्गमुपाश्नुते।**
**ब्रह्मचर्यं परं धाम ब्रह्मचर्यं परं तपः॥**
**ब्रह्मचर्यं परं यज्ञो ब्रह्मचर्यं परं यशः।**
**ब्रह्मचर्येण संयुक्तः सर्वान्कामानवाप्नुयात्॥**
**अदैवं दैवतं कुर्याद्दैवतं चाप्यदैवतम्।**
**कुर्याल्लोकांस्तथैवान्यान्ब्रह्मचर्येण मानवः॥**
**कृतानपि तथा पूर्वान्क्षिप्रमेव प्रणाशयेत्।**
**यथाऽभीष्टमवाप्नोति ब्रह्मचर्येण मानवः॥**
**प्रजापतीनां या शक्तिः प्रजाः कर्तुं द्विजोत्तमाः।**
**सा ज्ञेया ब्रह्मचर्येण ऋषीणामपि च द्विजाः॥**
**अनेकानि सहस्राणि कुमारब्रह्मचारिणाम्।**
**दिवं गतानि विप्राणामकृत्वा कुलसंततिम्॥**
**यो ब्रह्मचर्यान्न परिच्युतः स्यात्**
**पुत्रेण हीनोऽपि दिवं स याति।**
**परिच्युता ये तनयैर्वि(? यैर)हीना-**
**स्तेषां न लोकेषु गतिः प्रदिष्टा॥**

कीर्तिप्रशंसा अकीर्तिनिन्दा च

**हंस उवाच –**

**[2]कीर्तिप्रधानः पुरुषश्चिरं स्वर्गे महीयते।**
**कीर्तिः शरीरं निर्दिष्टा मृतस्यापि शरीरिणः॥**
**कीर्तियुक्तं न(? च) जानाति परत्रेह च मानवः।**
**कीर्तियुक्ता भवन्तीह श्रेयसो भाजनं परम्॥**
**दिवं स्पृशति भूमिं च शब्दः पुण्यस्य कर्मणः।**
**यावत्स शब्दो भवति तावत्पुरुष उच्यते॥**
**तावदेव तथा लोकान्सर्वकामदुघोऽक्षयान्।**
**पुरुषः समुपाश्नाति दिवि चेह च शाश्वतम्।**
**यस्याकीर्तिर्मनुष्यस्य नरकं स तु गच्छति॥**
**यावल्लोकेषु धर्मज्ञा(? ज्ञै)स्तस्य कीर्तिस्तु गीयते।**
**तावत्समश्नुते स्वर्गे देवभोगाननुत्तमान्॥**
**कीर्तिः पुण्या पुण्यलोके नैव पापं प्रयच्छति।**
**कीर्त्यमाना मनुष्यस्य तस्मात्पुण्यं समाचरेत्॥**

---

(१) विध. ३।२५६।१-७.
(२) विध. ३।२५७।१-७.

(१) विध. ३।२५८।१-७.
(२) विध. ३।२६०।१-७.

ये कीर्तियुक्ताः पुरुषप्रधाना
स्ते नाकपृष्ठं सुचिरं प्रयान्ति।
अकीर्तियुक्ता नरकं व्रजन्ति
कीर्तिः प्रधाना पुरुषस्य तस्मात्॥

यशःप्रशंसा

**हंस उवाच –**

[1]यशसा संयुतो जन्तुः श्रेयसो भाजनं भवेत्।
यशसा संयुतो जन्तुस्त्रिदिवं प्रतिपद्यते॥
यशसा संयुतो जन्तुः संपदामेति पात्रताम्।
यशसा संयुतो जन्तुः सर्वकामानुपाश्नुते।
स एकः पुरुषो लोके यशसा यो हि संयुतः॥
येषां साधु समावापं गीयते सुमहद्यशः।
तेषां यशस्तथा पुण्यं नाकपृष्ठेऽपि गीयते।
देवता यं विजानन्ति तस्य नाके गतिर्ध्रुवा॥
कीर्त्यमानं तथा सद्भिर्यः शृणोति यशः स्वकम्।
सुखमाप्नोति धर्मज्ञाः स्वर्गादपि परं नरः॥
यशः शोभा मनुष्यस्य परमं तस्य मण्डनम्।
यशसा वर्जितस्येह मण्डनं लाञ्छनं परम्॥
यशः प्रधानं पुरुषस्य लोके
यशःप्रधानास्त्रिदिवं प्रयान्ति।
लोकद्वये चापि यशोन्वितानां
भवन्ति कामा मनसा त्वभीष्टाः॥

यज्ञस्य विधिः प्रशंसा च

**हंस उवाच –**

[2]यज्ञेन देवा जीवन्ति यज्ञेन पितरस्तथा।
देवाधीनाः प्रजाः सर्वा यज्ञाधीनाश्च देवताः॥
यज्ञो हि भगवान्विष्णुर्यत्र सर्वं प्रतिष्ठितम्।
यज्ञार्थं पशवः सृष्टा देवास्त्वोषधयस्तथा॥
यज्ञार्थं पुरुषाः सृष्टाः स्वयमेव स्वयंभुवा।
यज्ञश्च भूत्यै सर्वस्य तस्माद्यज्ञपरो भवेत्॥
यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः।
धनं यद्यज्ञशीलानां देवस्वं तद्विदुर्बुधाः॥
ओषधीनां पशूनां च यज्ञ एव परायणम्।
सयूथ्यश्च सकुल्यश्च नाकपृष्ठे महीयते॥

(१) विध. ३।२६१।१-७.
(२) विध. ३।२६२।१-७.

पशुस्तु प्रोक्षितो यज्ञे तथैवौषधयो द्विजाः।
यज्ञोपयुक्ता मोदन्ते त्रिदिवे नात्र संशयः॥
यज्ञेन सम्यक्पुरुषस्तु नाके
संपूज्यमानस्त्रिदशैर्महात्मा।
प्राप्नोति सौख्यानि महानुभावा-
स्तस्मात्प्रयत्नेन यजेत यज्ञैः॥

शीलस्य विधिः प्रशंसा च

**हंस उवाच –**

[1]शीलं प्रधानं लोकेऽस्मिंस्तस्मिन्सर्वं प्रतिष्ठितम्।
शीलेन सर्वमाप्नोति यत्किंचिन्मनसेच्छति॥
क्रियाः शीलविहीनस्य भवन्ति विफलाः कृताः।
तस्माच्छीलवता भाव्यं पुरुषेण विजानता॥
शीलेन देवराट्छक्रः सुरैश्वर्यमवाप्तवान्।
शीलेन धर्मराजोऽपि धर्मराजत्वमाप्तवान्॥
शीलेन वरुणो देवो राजराजत्वमाप्तवान्।
शीलेन च कुबेरोऽपि धनाध्यक्षत्वमाप्तवान्॥
शीलेन सुखमाप्नोति स्वर्गं च मनुजोत्तमाः।
शीलेन तदवाप्नोति यत्र गत्वा न शोचति॥
शीलं समासाद्य समस्तकामा-
न्प्राप्नोति मुख्यान्पुरुषः प्रधानः।
तस्मात्प्रयत्नेन नरेण शीलं
समर्जनीयं सुखदं सदैव॥

दमस्य विधिः प्रशंसा च

**हंस उवाच –**

[2]दमेन युक्तः पुरुषः सर्वान्कामानवाप्नुयात्।
तस्मात्सर्वप्रयत्नेन दमः कार्यो विजानता॥
इन्द्रियाणां जयो लोके दम इत्यभिधीयते।
नादान्तस्य क्रियाः काश्चिद्भवन्तीह द्विजोत्तमाः॥
नादान्तः सिद्धिमाप्नोति नादान्तो गतिमीप्सिताम्।
नादान्तः श्रियमाप्नोति नादान्तः किंचिदेव तु॥
पञ्चेन्द्रियस्य मर्त्यस्य यद्येकं छिद्रमिन्द्रियम्।
ततोऽस्य क्षरति प्रज्ञा दृतेः पात्रादिवोदकम्।
पुरुषार्थं परित्यज्य स्वार्थे च सततोत्थितः।
इन्द्रियाणां बुधस्तेषां कः स्वार्थे प्रयतेन्नरः॥

(१) विध. ३।२६३।१-६.
(२) विध. ३।२६४।१-७.

इन्द्रियाणां प्रसङ्गेन गतिं गच्छति दारुणाम्।
विजित्य तान्येव नरः सर्वान्कामानवाप्नुयात्॥
दान्तः पुमान्नाकमनुप्रयाति
दान्तः पुमान्मोक्षपथं प्रयाति।
दान्तस्य दुःखं न हि किंचिदस्ति
दान्तः समाप्नोत्यखिलान्हि कामान्॥

सत्यस्य विधिः प्रशंसा च

हंस उवाच –
[1]सत्यमेव परं ब्रह्म सत्यमेव परं तपः।
सत्यमेव परो यज्ञः सत्यमेव परं श्रुतम्।
सत्यं वेदेषु जागर्ति मुक्तिः सत्यतरोः फलम्॥
तपो यशश्च पुण्यश्च(?ण्यं च) पितृदेवर्षिपूजनम्।
आद्यो विधिश्च विद्या च सर्वं सत्ये प्रतिष्ठितम्॥
सत्यं यज्ञास्तथा वेदा मन्त्रा देवी सरस्वती।
व्रतचर्या तथा सत्यमोंकारः सत्यमेव च॥
सत्येन वायुरभ्येति सत्येनाऽऽभासते रविः।
सत्येन चाग्निर्दहति स्वर्गं सत्येन गच्छति।
सत्येन चापः क्षिपति पर्जन्यः पृथिवीतले॥
पारणं सर्ववेदानां सर्वतीर्थावगाहनम्।
सत्यं च वदतो लोके समं स्यातां न वा समम्॥
अश्वमेधसहस्रं तु सत्यं च तुलया धृतम्।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते॥
सत्येन देवाः प्रीयन्ते पितरो ब्राह्मणास्तथा।
सत्यमाहुः परं धर्मं तस्मात्सत्यं न लोपयेत्॥
मुनयः सत्यनिरताः सत्यस्थास्त्रिदशोत्तमाः।
स्वर्गे सत्यपरा नित्यं मोदन्ते देवता इव।
अप्सरोगणसंकीर्णैर्विमानैरुपयान्ति च॥
वक्तव्यं हि सदा सत्यं न सत्याद्विद्यते परम्।
अगाधे विमले शुद्धे सत्यतोये शुचिह्रदे।
स्नातव्यं मानसे तीर्थे स्नानं तत्परमं स्मृतम्॥
आत्मार्थे वा परार्थे वा पुत्रार्थे वा रिपोः कृते।
येऽनृतं नाभिभाषन्ते ते नराः स्वर्गगामिनः॥
यद्भूतहितमत्यन्तं तत्सत्यमिति धारणा।
हितं स्याद्येन भूतानां तत्तद्वाच्यं विजानता॥

(१) विध. ३।२६५।१-१५.

आदित्यचन्द्रावनिलानलौ च
द्यौर्भूमिरापो हृदयं यमश्च।
अहश्च रात्रिश्च ह्युभे च संध्ये
धर्मश्च जानाति नरस्य वृत्तम्॥
न सा सभा यत्र न सन्ति वृद्धा
वृद्धा न ते ये न वदन्ति धर्मम्।
नासौ धर्मो यत्र नो सत्यमस्ति
न तत्सत्यं यच्छलेनानुविद्धम्॥

तपसो विधिः प्रशंसा च

हंस उवाच –
[1]तपसो हि परं नास्ति तपसा विन्दते महत्।
प्रजापतीनां या शक्तिः प्रजाः कर्तुं द्विजोत्तमाः॥
तपसा संप्रदानेन ऋषीणां ज्ञानमेव च।
बहवो दिवि मोदन्ते प्रसादात्तपसो जनाः॥
तपसा प्राप्यते स्वर्गस्तपसा प्राप्यते यशः।
आयुःप्रकर्षं भोगांस्तु तपसा विन्दते महत्॥
ज्ञानं विज्ञानमास्तिक्यं सौभाग्यं रूपमुत्तमम्।
तपसा प्राप्यते सर्वं यत्किंचिन्मनसेप्सितम्॥
रसायनानि मन्त्राश्च विद्यास्त्वोषधयस्तथा।
नातप्ततपसः सिद्धिं प्रयान्ति द्विजपुंगवाः॥
यत्कार्यं किंचिदास्थाय पुरुषैस्तप्यते तपः।
सर्वं तस्मादवाप्नोति परत्रेह च मानवः॥
ब्रह्महा च सुरापश्च स्तेनश्च गुरुतल्पगः।
तपसा मुच्यते जन्तुः सर्वतश्चापि मुच्यते।
तपसैव सुतप्तेन मोक्षमाप्नोति मानवः॥
शक्रवैवस्वताम्भोपधनाधिपहुताशनैः।
स्थानं महत्तरं प्राप्तं तथा रुद्रार्करात्रिपैः॥
न चास्ति तत्सुखं लोके यद्विना तपसा भवेत्।
तपसैव सुखं सर्वमिति धर्मविदो विदुः॥
अष्टाशीतिसहस्राणां मुनीनामूर्ध्वरेतसाम्।
तपसा दिवि मोदन्ते त्रिदशैः सहिता द्विजाः॥
पुरुषस्तु समारम्भान्निष्फलान्वीक्ष्य चाऽऽत्मनः।
तपः कुर्यात्प्रयत्नेन न ह्यनुप्तं प्ररोहति॥
कीटाः पतङ्गाः पशवो वयांसि च तथा द्विजाः।
स्थावराणि च भूतानि दिवं यान्ति तपोबलात्॥

(१) विध. ३।२६६।१-२२.

यद्दुस्तरं यद्दुरापं यद्दुर्गं यच्च दुष्करम्।
सर्वं तत्तपसा साध्यं तपो हि दुरतिक्रमः(? मम्)॥
यस्मिन्कर्मण्यपि कृते मनसः स्यादलाघवम्।
तस्मिंस्तावत्तपः कुर्याद्यावत्तुष्टिकरं भवेत्॥
यत्किंचिदेनः कुर्वन्ति मनोवाक्कर्मभिर्जनाः।
तत्सर्वं विनुदन्त्याशु तपसैव तपोधनाः॥
तपसैव विशुद्धस्य ब्राह्मणस्य दिवौकसः।
सत्याच्च प्रतिगृह्णन्ति कामान्संवर्धयन्ति च॥
ब्रह्मा प्रजेश्वरो देवो महादेवस्तथा द्विजाः।
नित्यमेव तपस्यन्ति तपः परमदुस्तरम्॥
यस्येदं भुवनं सर्वं यश्च सर्वमयोऽच्युतः।
यश्च धाता जयत्यस्मिन्स विष्णुः परमेश्वरः॥
नित्यमेव महाभागस्तपश्चरति दुश्चरम्।
भगवान्वासुदेवस्तु तपः परमिहोच्यते।
अष्टौ देवगणांल्लोके प्राप्नोति तपसा नरः॥
त्रैलोक्यकरणस्यापि शक्तश्च तपसा भवेत्।
दिव्यानां च तथाऽस्त्राणां शक्तो भवति धारणात्॥
लोके सुराणां भुवि वा द्विजेन्द्रा
न विद्यते तत्पुरुषस्य किंचित्।
तपःप्रकर्षेण परेण लब्धि-
र्न विद्यते यस्य महानुभावाः॥

सर्ववर्णानामात्मरक्षणदेशविप्लवा-
दिनिमित्तेषु युद्धाधिकारः

[1]क्षत्रविट्छूद्रविप्राणां युद्धमेव परायणम्।
आत्मनश्च परित्राणे संप्राप्ते देशविप्लवे॥
दारनाशे तु संप्राप्ते दक्षिणानां च संकरे।
विप्रस्तु शस्त्रं गृह्णीयात्संकरे चाप्युपस्थिते॥
वृत्तिं तु कल्पयेद्विप्रः क्षत्रधर्मेण वा न वा।
संग्रामान्न निवर्तेत तस्य धर्मं हितं तदा॥

अहिंसा परमो धर्मः, मांस-
भक्षणनिन्दाद्वारा अहिंसा
प्रशंसा

[2]अहिंसा सर्वधर्माणां धर्मः पर इहोच्यते।
अहिंसया तदाप्नोति यत्किंचिन्मनसेप्सितम्॥
अहिंसा परमो धर्मः सत्यमेव द्विजोत्तमाः।
लोभाद्वा मोहतो वाऽपि यो मांसान्यत्ति मानवः।
निर्घृणः स तु मन्तव्यः सर्वधर्मविवर्जितः॥
स्वमांसं परमांसेन यो वर्धयितुमिच्छति।
उद्विग्नवासे वसति यत्र यत्राभिजायते॥
धनेन क्रयिको हन्ति उपभोगेन खादकः।
घातको वधबन्धाभ्यामित्येष त्रिविधो वधः॥
भक्षयित्वा तु यो मांसं पश्चादपि निवर्तते।
तस्यापि सुमहान्धर्मो यः पापाद्विनिवर्तते॥

क्षमायाः प्रशंसा

[1]क्षमा धर्मः क्षमा सत्यं क्षमा शौचं क्षमा बलम्।
क्षमा यज्ञाः क्षमा दानं क्षमा च परमं तपः॥
आक्रुष्टस्ताडितो वाऽपि परेषां यस्तितिक्षते।
तस्मात्सुकृतमादत्ते दुष्कृतं च प्रयच्छति॥
यः क्षमावान्स धर्मात्मा क्षमयैव द्विजोत्तमाः।
आक्रोष्टारं निर्दहति स्वर्गलोकं च गच्छति॥
एकः क्षमावतां दोषो द्वितीयो नोपलभ्यते।
यदेनं क्षमया युक्तं त्वशक्तं मन्यते जनः॥
विज्ञेयः सोऽपि दोषोऽस्य द्विजेन्द्राः स महान् गुणः।
तस्मात्पुण्यसमादानाद्दुष्कृतस्य समर्पणात्॥
मृतः क्षमावान्पुरुषो ब्रह्मलोकं प्रपद्यते।
विमानेनार्कवर्णेन हंसयुक्तेन भास्वता॥
प्राप्नोति कामान्दिवि चेह मुख्यान्
संवत्सराणां नियुतानि विप्राः।
सर्वंसहः क्षान्तिपरो मनुष्य-
स्त्वतः क्षमावान्सततं नरः स्यात्॥

कृतज्ञताया विधिः
प्रशंसा च

[2]आनृशंस्यं परो धर्मो लोकेऽस्मिन्द्विजसत्तमाः।
तस्मादात्मवता भाव्यं कृतज्ञेन नरेण तु॥
छायायां यस्य विश्रान्तो नरः स्यात्पादपस्य तु।
तस्मात्पत्रं न हिंसेत कृतज्ञत्वमनुस्मरन्॥
कृतज्ञो भूतिमाप्नोति कृतज्ञश्च तथा यशः।
कृतज्ञो नाकमाप्नोति ब्रह्मलोकमथापि वा॥

(१) विध. ३।२६७।४-६.
(२) विध. ३।२६८।१, १२-१६.

(१) विध. ३।२६९।१-७.
(२) विध. ३।२७०।१, १८-१९, २१.

कृतज्ञ एव यजते कृतज्ञस्तप्यते तपः।
यज्वा दाता तथा शूरः कृतज्ञश्च तथा भवेत्।
कृतज्ञस्त्यजते प्राणान्मित्रकार्ये तथा ध्रुवम्॥

तीर्थयात्राविधिः

[1]बहूपकरणा यज्ञा नानासंभारविस्तराः।
न ते शक्या दरिद्रेण प्राप्तुं धर्मभृतां वराः॥
दरिद्रैरन्यथा प्राप्तुं शक्यं यज्ञफलं द्विजाः।
तीर्थानुसरणं कृत्वा तस्मात्तीर्थपरो भवेत्॥
पापानां पापशमनं धर्मवृद्धिस्तथा सताम्।
विज्ञेयं सेवितं तीर्थं तस्मात्तीर्थपरो भवेत्॥

उपवासस्य विधिः जातिभेदप्रयुक्ताः कालमर्यादाः प्रशंसा च

[2]बहूपकरणा यज्ञा नानासंभारविस्तराः।
न ते शक्या दरिद्रेण प्राप्तुं धर्मभृतां वराः॥
दरिद्रैरप्यथावाप्तुं शक्यं यज्ञफलं द्विजाः।
सदोपवासनिरतैस्तस्मादुपवसेन्नरः॥
यावन्मासोपवासं तु तावत्तप इहोच्यते।
अनाशकमत ऊर्ध्वं द्विजातीनां प्रकीर्तितम्॥
षष्ठकालाशनं शूद्रे तपः परमिहोच्यते।
वर्णसंकरजातीनां दिनमेकं प्रकीर्तितम्॥
षष्ठकालात्परं शूद्रस्तपः कुर्याद्यथा क्वचित्।
राष्ट्रे हानिस्तदा ज्ञेया राज्ञश्चोपद्रवो महान्॥
शूद्रस्तु षष्ठकालाशी यावच्छक्त्या तपश्चरेत्।
मासोपवासादर्वाग्वा तथा शक्त्या द्विजश्चरेत्॥
पापानां पापशमनं सतामीप्सितकामदम्।
उपवासो विनिर्दिष्टो विशेषाद्देवताश्रयः॥

मनःशौचप्रशंसा

[3]सर्वाणि तस्य शौचानि यस्य शुद्धं मनः सदा।
मनःशुद्धिविहीनस्य सर्वे शौचा निरर्थकाः॥
तस्माद्धि सर्वशौचानां मनःशौचं परं स्मृतम्॥

श्रद्धाप्रशंसा

[4]श्रद्धान्वितेन मनसा यद्यत्किंचित्समाचरेत्।
तत्तद्बहुफलं तस्य जायते लोकयोर्द्वयोः।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः॥

(१) विध. ३।२७३।४-५, ७.
(२) विध. ३।२७४।१-६,११.
(३) विध. ३।२७५।११,१३.
(४) विध. ३।२७६।१-२.

जपस्य विधिः प्रशंसा च

[1]जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते॥
जप्येन सिद्धिमासाद्य ब्रह्मलोकमवाप्नुयात्।
जप्येन मुच्यते पापाज्जप्येन त्रिदिवं व्रजेत्॥
जप्येन मोक्षमाप्नोति तस्माज्जप्यपरो भवेत्॥

अग्निसेवाप्रशंसा

[2]अग्निर्मुखं देवतानां सर्वभूतपरायणम्।
तस्य शुश्रूषणादेव सर्वान्कामान्समश्नुते॥

देवार्चनस्य विधिः प्रशंसा च

[3]देवाधीनाः प्रजाः सर्वा देवायत्तमिदं जगत्।
सुखदुःखे मानुषाणां देवायत्ते तथैव च॥
देवैर्विहितमश्नन्ति मनुष्यास्तु शुभाशुभम्।
तस्मात्सर्वप्रयत्नेन देवपूजापरो भवेत्॥
देवाश्च भक्त्या तुष्यन्ति श्रद्धया परया तथा।
पूजिताः शुचिना चैव देवास्तुष्यन्ति नान्यथा॥
जातप्रभृति यं देवं भक्त्या नित्यमथार्चयेत्।
अन्तकाले तु संप्राप्ते सोऽपि त्राता भवेद्ध्रुवम्॥
किं वा पापविहीनस्य क्षिप्रं तुष्यन्ति देवताः।
तस्मात्पापं न कर्तव्यं नरेण त्रिदशाश्रयात्॥
सर्वान्समर्चयेद्देवानेकं वा देवमाश्रयेत्।
देवार्चां श्रद्धया कृत्वा ध्रुवं तल्लोकमाप्नुयात्॥
देवता नैव तुष्यन्ति दानेन बहुधा द्विजाः।
यथा भक्त्या तु तुष्यन्ति तस्माद्भक्तिं समाश्रयेत्॥

श्राद्धस्य विधिः प्रशंसा च

पितॄनुद्दिश्य यद्दानं किंचिदेव प्रयच्छति।
तस्याभ्यधिकमाप्नोति पुण्यं तेषां प्रसादतः॥
तस्माच्छ्राद्धानि कार्याणि तीर्थेष्वायतनेषु च।
दानानि चैव देयानि पितॄनुद्दिश्य शक्तितः॥
श्राद्धेषु पुष्टिं मनुजा लभन्ते
श्राद्धेन विप्रास्त्रिदिवे च वासः।
श्राद्धं प्रयत्नेन ततश्च कुर्यात्
स्वकल्पसूत्राभिहितं यथावत्॥

(१) विध. ३।२७८।२, १२-१३.
(२) विध. ३।२८७।३.
(३) विध. ३।२८८।१-३, ७-८, १०-११, ४४, ५१-५३.

वर्णानां स्त्रीब्रह्मचारिगृहस्थानां च
पूज्यभेदाः तत्पूजाविधिश्च

[1]शूद्राणां दैवतं वैश्या वैश्यानां क्षत्रियास्तथा।
ब्राह्मणाः क्षत्रियाणां च तेषामपि हुताशनः॥
गुरुदेवो ब्रह्मचारी नार्यश्च पतिदेवताः।
गृहस्थोऽतिथिदैवत्यस्तस्मात्तं पूजयेत्सदा॥
तृप्तोऽतिथिर्यत्पुरुषस्य किंचि-
द्विचिन्तयत्येव महानुभावः।
तत्सर्वमाप्नोत्यचिरेण तस्मात्
पूज्योऽतिथिर्धर्मपरेण नित्यम्॥

नानाविधगोसेवाविधिः गोप्रशंसा
गोभक्षितोत्सृष्टगोमयस्थित-
यवैर्जीवनमित्येतद्रूपं
व्रतं च

हंस उवाच —
[2]गावः पवित्रा मङ्गल्या गोषु लोकाः प्रतिष्ठिताः।
यथा देवा यथा वेदा ब्राह्मणाश्च यथा द्विजाः।
तथा गावो विनिर्दिष्टाः सर्वलोकसुखावहाः॥
एकैकं ब्राह्मणं ज्ञेयं तयोर्यज्ञः प्रतिष्ठितः।
विप्रेषु मन्त्रास्तिष्ठन्ति गोषु संतिष्ठते हविः।
गवां दानं द्विजश्रेष्ठा दुष्कृतान्यपकर्षति ॥
गोमूत्रं गोमयं क्षीरं दधि सर्पिश्च पञ्चमम्।
पवित्रमेतन्निर्दिष्टं नराणां शोधनं परम्॥
मङ्गल्याश्च पवित्राश्च रक्षोघ्ना रोचनास्तथा।
तासां शृङ्गोदकं विप्रा जाह्नवीसलिलोपमम्॥
गवां कण्डूयनान्मर्त्यः सर्वं पापं व्यपोहति।
तासां ग्रासप्रदानेन महत्पुण्यमवाप्नुयात्॥
तासां च प्रचरं कृत्वा तथैव सलिलाशयम्।
स्वर्गलोकमुपाश्नन्ति बहून्यब्दगणानि तु॥
तासां प्रचारभूमिं तु कृत्वा प्राप्नोति मानवः।
अश्वमेधस्य यज्ञस्य फलं प्राप्नोत्यसंशयम्॥
तासामावसथं कृत्वा नगराधिपतिर्भवेत्।
तथा लवणदानेन सौभाग्यं महदश्नुते॥

आतुरां पङ्कलग्नां वा चौरव्याघ्रभयार्दिताम्।
मोक्षयित्वा द्विजश्रेष्ठास्त्वश्वमेधफलं लभेत्॥
तासामौषधदानेन विरोगस्त्वभिजायते।
विप्रमोच्य भयेभ्यश्च न भयं विद्यते क्वचित्॥
क्रीत्वा चण्डालहस्ताच्च गोमेधस्य फलं लभेत्।
गोपकस्त्वस्य चान्यस्य क्रीत्वा हस्तात्तथैव च॥
कृत्वा शीतातपत्राणं तासां स्वर्गमवाप्नुयात्।
उत्थितासूत्थितस्तिष्ठेद्विष्ठितासु च विष्ठितः।
भुक्तवत्सु तु चाश्नीयाज्जले पीते पिबेत्तु च॥
गोमूत्रेणाऽऽचरेत्स्नानं गोपुरीषात्तथा यवैः।
शरीरयात्रां कुर्वीत गोरसैरथवा द्विजाः।
एतद्धि गोव्रतं मासात्सर्वकल्मषनाशनम्॥
एकां गां धारयेन्मासं दद्यात्तस्यास्तथा यवान्।
गोमयात्तान्समश्नीयान्मासमेकमतः शुचिः॥
मासान्ते तां तथा धेनुं दद्याद्विप्राय भक्तिमान्।
व्रतमेतत्समुद्दिष्टं सर्वकल्मषनाशनम्॥
राजसूयाश्वमेधाभ्यां व्रतमेतत्तथाऽधिकम्।
व्रतेनानेन चीर्णेन कामानिष्टानवाप्नुयात्॥
विमानेनार्कवर्णेन ब्रह्मलोकं च गच्छति।
विनाऽपि गोप्रदानेन व्रतमेतन्महाफलम्॥
त्रिरात्रं सप्तरात्रं वा शक्तिं ज्ञात्वा तथा स्वकाम्।
गवां निर्हारनिर्मुक्तैर्वृत्तिं कृत्वा तथा यवैः।
पापमोक्षमवाप्नोति पुण्यं च महदश्नुते॥
रजश्च गोखुरोद्भूतं सर्वकल्मषनाशनम्।
यादृशात्तादृशाद्देशान्नात्र कार्या विचारणा।
मङ्गल्यं च पवित्रं च तदलक्ष्मीविनाशनम्॥
गवां हि परिवासेन भूमिः शुद्धिमवाप्नुयात्।
तद्धि शुद्धं यदा वेश्म यत्र तिष्ठन्ति धेनवः॥
तासां निःश्वासवातेन परं नीराजनं भवेत्।
तासां संस्पर्शनं पुण्यं दुःस्वप्नाघविनाशनम्॥
ग्रीवामस्तकसंधौ तु तासां गङ्गा प्रतिष्ठिता।
सर्वदेवमया गावः सर्वतीर्थमयास्तथा॥
तासां लोमानि पुण्यानि पवित्राणि तथा द्विजाः।
गोमयेनोपलिप्तं तु शुचि स्थानं प्रकीर्तितम्॥
अग्न्यागारसुरागारान्गोमयेनोपलेपयेत्।
गोमये तु सदा लक्ष्मीः स्वयमेव व्यवस्थिता॥

---
(१) विध. ३।२८९।१-२, २१.
(२) विध. ३।२९१।१-३१.

गोमूत्रे च तथा गङ्गा दधिक्षीरघृतेषु च।
सदा व्यवस्थितं सोमं रोचनायां सरस्वती॥
विष्णुर्यज्ञः समाख्यातः स च गोषु प्रतिष्ठितः।
तस्माद्गावो विनिर्दिष्टा विष्णुरेव पुरातनैः॥
पूज्यास्तास्तु नमस्कार्याः कीर्तनीयाश्च तास्तथा।
तासामाहारदानं च कार्यं शुश्रूषणं तथा॥
शुश्रूषणेनेह गवां द्विजेन्द्राः
प्राप्नोति लोकानमलान्विशोकान्।
तस्मात्प्रयत्नेन गवां हि कार्यं
शुश्रूषणं धर्मपरैर्मनुष्यैः॥

दयाया विधिः लक्षणभूतानि कर्माणि प्रशंसा च

हंस उवाच –
[1]योऽदयावान्स पुरुषो निर्घृणो राक्षसो मतः।
राक्षसानामपि घृणा विद्यते द्विजसत्तमाः॥
निर्घृणाः प्रतिपद्यन्ते घोरं नरकमञ्जसा।
वधबन्धपरिक्लेशान्मानुष्येऽथ लभन्ति ते।
व्याध्यार्ता दुःखिता दीना दरिद्राश्च भवन्ति ते॥
दयान्विता विराजन्ते नाकमासाद्य मानवाः।
तस्माद्दयावता भाव्यं तृणेष्वपि विपश्चिता।
तृणान्यपि सजीवानि तेषां कुर्यान्न पीडनम्॥
कीटे पतङ्गे च पशौ दया कार्या तथा मृगे।
वर्णोत्तमे वर्णहीने पतिते वर्णसंकरे।
सर्वत्रैव दया कार्या सर्वकामफलप्रदा॥
व्रतानामपि सर्वेषां श्रेष्ठमेकं दयाव्रतम्।
दुःखार्तं प्राणिनं किंचिद्दुःखान्मोक्षयते द्विजाः।
वह्निष्टोमफलं प्रोक्तं नात्र कार्या विचारणा॥
परिचर्यां तथा कृत्वा सान्त्वयेत्प्राणिनो द्विजाः।
ब्रह्मलोकमवाप्नोति दयावांस्तेन कर्मणा॥
श्लेष्ममूत्रपुरीषाणां व्याधितस्याजुगुप्सकः।
सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते॥
मृतस्य वाऽप्यनाथस्य न जुगुप्सन्ति ये नराः।
कुर्वन्ति चैव संस्कारांस्ते नराः स्वर्गगामिनः॥
अग्निदाहाज्जलाच्छस्त्रात्तथाऽन्यस्मादुपद्रवात्।
प्राणिनो मोक्षणं कृत्वा स्वर्गलोके महीयते॥

(१) विध. ३।२९२।१-१५.

बन्धनात्प्राणिनः कृत्वा मोक्षणं च तथा द्विजाः।
सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते॥
यस्माद्धि प्राणिनं दुःखात्पुरुषो मोक्षयेत्क्वचित्।
न तद्दुःखमवाप्नोति यत्र यत्राभिजायते॥
सर्वभूतेषु यो दानं(?यद्दानं) चैकसत्त्वे च या दया।
सर्वसत्त्व(?भूत)प्रदानाद्धि दया श्रेष्ठा महाफला॥
दयान्वितानां त्रिदशेन्द्रलोका
दयान्वितानां च पितामहस्य।
दयान्वितानां च समस्तकामा
लोकद्वये विप्रवराः प्रदिष्टाः॥

दाक्षिण्यप्रशंसा

हंस उवाच –
[1]दाक्षिण्यं परमं लोके नृणां संवननं परम्।
दाक्षिण्ययुक्तस्य तथा परेषां प्रियकारिता॥
प्रियाण्याचरते यस्तु परेषां मनुजोत्तमः।
समाप्नोति प्रियाण्येव लोकयोरुभयोर्द्विजाः॥
प्रत्यक्षं च परोक्षं च परेषामाचरेत्प्रियम्।
प्रियेण विप्रियं हन्ति प्रियेण प्रियमाप्नुयात्॥
मृदुना दारुणं हन्ति मृदुना हन्ति मार्दवम्।
सर्वं हि मृदुना हन्ति तस्मात्तीक्ष्णतरो मृदुः॥
मृदोरिह वदान्यस्य देवा निघ्नन्ति शात्रवान्।
अभिचारः स शत्रूणां नरस्य मृदुता तथा॥
नरेण मृदुना दग्धा मार्दवेनाभितस्तु ये।
न प्ररोहन्ति ते विप्रा बीजा दग्धा यथा तथा॥
दाक्षिण्यमेकं सुभगत्वहेतु-
र्दाक्षिण्यमेकं त्रिदिवस्य हेतुः।
दाक्षिण्यमास्थाय जयेदरातीन्-
दाक्षिण्ययुक्तस्तु सदा भवेच्च॥

प्रियवादित्वस्य विधिः प्रशंसा च

हंस उवाच –
[2]संरोहतीषुणा विद्धं वनं परशुना हतम्।
वाचा दुरुक्तं बीभत्सं न संरोहति वाक्कृतम्॥
मित्राणि यान्ति शत्रुत्वं नरस्याप्रियवादिनः।
अनर्थाः स्वयमायान्ति मृतो नरकमृच्छति॥

(१) विध. ३।२९३।१-७.
(२) विध. ३।२९४।१-७.

तस्माद्वाच्यं मनुष्येण स्मितपूर्वाभिभाषिणा।
प्रत्यक्षं च परोक्षं च सर्वेषां प्रियभाषिणाम्(?णा)॥
मित्रतां यान्ति रिपवो नराणां प्रियभाषिणाम्।
रक्षांस्यपि निगृह्यन्ते पुरुषैः सान्त्ववादिभिः॥
प्रियवाक्यात्परं लोके नास्ति संवननं परम्।
प्रियो भवति लोकानां प्रियवादी तथा नरः॥
प्रियंवदानां सकलं जगदेतत्स्थितं वशे।
प्रियंवदानां शत्रुत्वे नास्ति कश्चिज्जगत्त्रये॥
प्रियंवदाः सौख्यमिहाऽऽप्नुवन्ति
प्रियंवदा नाकमथ प्रयान्ति।
प्रियंवदाः सर्वमथाऽऽप्नुवन्ति
प्रियंवदः स्यादत एव नित्यम्॥

दाक्ष्यस्य विधिः प्रशंसा च

हंस उवाच —
[1]अलसानां मनुष्याणां सदा दुःखं दरिद्रता।
आलस्यं पातकं लोके आलस्यं भूतिनाशनम्॥
नाधिगच्छन्ति भोक्तव्यमलसा ये नराधमाः।
अलसानां मनुष्याणां प्राप्तोऽप्यर्थो विनश्यति॥
तस्मान्नित्यं मनुष्येण दाक्ष्यं कार्यं विजानता।
दक्षः सर्वमवाप्नोति यत्किंचिन्मनसेच्छति॥
धर्मे चार्थे च कामे च मोक्षे च द्विजसत्तमाः।
भाजनं सर्वकालेषु दक्ष एव सदा नरः॥
आकृष्य दक्षः केशेषु विमुखामपि च श्रियम्।
स्वीकरोति महाभागा दक्षे सर्वं प्रतिष्ठितम्॥
उत्थानधीरः पुरुषो वाग्वीरानधितिष्ठति।
उत्थानधीरं वाग्धीरा रमयन्त उपासते॥
उत्थानवानेव दिवं प्रयाति
उत्थानवानेव परं पदं च।
उत्थानवानेव नरो जयी स्यात्
तस्मात्सदोत्थानपरेण भाव्यम्॥

जलाशयनिर्माण-
विधिः

[2]उदकेन विना वृत्तिर्नास्ति लोकद्वये सदा।
तदा जलाशयाः कार्याः पुरुषेण विपश्चिता॥
प्राप्नोति तृप्तिं परमां मनुष्यो
लोकांस्तथाऽग्र्यान्सलिलाधिपस्य।
जलाशयेऽल्पेऽपि कृते द्विजेन्द्रा-
स्तस्मात्तु कार्यं सलिलं नृलोके॥

वृक्षारोपणप्रशंसा

[1]वृक्षसंरोपणान्मर्त्यो महत्फलमुपाश्नुते।
गुल्मवल्लीलतानां च रोपणात्पुरुषो द्विजाः॥
एकोऽपि रोपितो वृक्षः पुत्रकार्यकरो भवेत्।
देवान्प्रसूनैः प्रीणाति छायया चातिथींस्तथा॥
फलैर्मनुष्यान्प्रीणाति नारक्यं नास्ति पादपे+।
अपि पुष्पफलैर्हीने द्रुमे पान्थस्य विश्रमः।
छायायां स्तोककालेन बहुपुण्यं प्रयच्छति॥
देवे वर्षति यद्वृक्षात्पत्रेभ्यः स्रवते जलम्।
तेन तृप्तिमवाप्नोति परलोकगतो ध्रुवम्॥
तेन नाकमवाप्नोति वृक्षरोपयिता नरः।
सेचनादपि वृक्षस्य रोपितस्य परेण तु।
महत्फलमवाप्नोति नात्र कार्या विचारणा॥
वृक्षायुर्वेदविधिना व्याधितं तु यथाक्रमम्।
नीरुजं मानवः कृत्वा स्वर्गलोकमवाप्नुयात्॥
शीतवातातपक्लेशं तथा च्छेदनभेदने।
सहन्ते परमं वृक्षास्तद्धि तेषां महत्तपः॥
पत्रपुष्पफलैर्नित्यं छायया चैव शाखिनः।
परेषामुपयुज्यन्ते तद्धि तेषां महत्तपः॥
तेषां सदा दया कार्या भक्तिः कार्या तथैव च।
यस्तेषां भक्तिमान्नित्यं तस्य सा वनदेवता॥

शास्त्र-जलाशय-वृक्षारोपण-देवमन्दिर-
निर्माणस्य विधिः प्रशंसा च

देवता स्यान्महाभागाः कृते पुण्ये जलाशये।
कृते शास्त्रे तथा सम्यग्ब्रह्मलोके तथा द्विजाः।
क्षिप्रमेव महाभागा जायन्ते शास्त्रदेवताः॥
शास्त्रं जलाशयं वृक्षं सुरवेश्म तथैव च।
मृतस्यापि मनुष्यस्य शरीरमिह कीर्तितम्॥
कीर्त्यते येन चान्येन मानवः स्वर्गमाप्नुयात्।
तत्तत्कार्यं मनुष्येण स्वर्गमक्षय्यमिच्छता॥

(१) विध. ३।२९५।१-७.
(२) विध. ३।२९६।५-६, २४.

+ रोपिते इति उपक्रमात्।
(१) विध. ३।२९७।१, १३-२१, २७-३१.

**पुत्राः प्रदिष्टाः पुरुषस्य वृक्षाः**
**स्वयंकृतास्तेषु नरेण भाव्यम्।**
**स्नेहेन नित्यं पुरुषं मृतं ते**
**कामैस्तु दिव्यैः परितर्पयन्ति॥**

पान्थपूजाया विधिः प्रशंसा च

**[1]पान्थानां हि दया कार्या कर्मणा येन केनचित्।**
**कृपास्थानं परं पान्थः स्वगृहाद्यो विनिःसृतः॥**
**लिङ्गी चाप्यथवा वर्णी पान्थं प्रति विचक्षणैः।**
**अपेक्षा नैव कर्तव्या पान्थाः पूज्यास्तु सर्वशः॥**
**पान्थस्य पूजां पुरुषस्तु कृत्वा**
**स्थानं समासाद्य पुरंदरस्य।**
**प्राप्नोति पुण्यान्दिवि देवभोगान्**
**पान्थास्ततः पूज्यतमा नृलोके॥**

अभयदक्षिणादानग्रहणयोरशुचेरप्यधिकारः, अन्यत्र शुचेरेव

**[2]शुचिर्वाऽप्यशुचिर्वाऽपि दद्यादभयदक्षिणाम्।**
**शुचिनाऽशुचिना वाऽपि ग्राह्या त्वभयदक्षिणा॥**
**कालः स एव ग्रहणे यदा भयमुपस्थितम्।**
**प्रतिग्रहाण्यथान्यानि ग्राह्याणि शुचिना सदा॥**

अन्नवस्त्रादिदानविधिः

**आनृशंस्येन सर्वस्य दद्यादन्नं विचक्षणः।**
**वासश्च दद्यात्सर्वस्य सर्वसाधारणे हि ते॥**
**[3]अर्थिने यदभीष्टं स्यात्स्वल्पं वा यदि वा बहु।**
**तद्दत्वा पुण्यमाप्नोति राजसूयाश्वमेधयोः॥**
**किमिच्छकैः पूजकैर्ब्राह्मणानां**
**लोकं गत्वा ब्रह्मणो ब्राह्मणेभ्यः।**
**देवैर्विप्रैः पूज्यमानः सुखी स्यात्**
**तस्माद्देयं प्रार्थितं ब्राह्मणेभ्यः॥**
**[4]क्लेशं विना दत्तमथार्थिने तु**
**दानं हि लोके फलदं निरुक्तम्।**
**अभ्यर्थितेनाथ ततो न कार्या**
**विमानना त्वर्थिजनस्य शक्त्या॥**

(१) **विध.** ३।२९८।२८-३०.
(२) **विध.** ३।३०१।६-८, ४२-४३.
(३) **विध.** ३।३११।२६-२७.
(४) **विध.** ३।३१६।३०.

शूद्रं प्रति तपोविधिः

**[1]तपः कुर्वीत शूद्रस्तु चैकद्विदिवसान्तरम्।**
**यथाशक्ति द्विजश्रेष्ठास्तेन कामानुपाश्नुते॥**

ग्रस्तास्तचन्द्रसूर्यग्रहणयोर्भोजने वर्ज्यौ पूर्वोत्तरकालौ

**[2]अहोरात्रं न भोक्तव्यं चन्द्रसूर्यग्रहो यदा।**
**मुक्तिं दृष्ट्वा तु भोक्तव्यं स्नानं कृत्वा ततः परम्॥**

(१) ननु मेघाद्यन्तर्धाने चाक्षुषं दर्शनं न संभवति इति चेत्, दर्शनशब्देन शास्त्रविज्ञानस्य विवक्षितत्वात्। तदाह वृद्धगौतमः – 'चन्द्रसूर्यग्रहे नाद्यात् तस्मिन्नहनि पूर्वतः। राहोर्विमुक्तिं विज्ञाय स्नात्वा कुर्वीत भोजनम्॥' इति। एवं तर्हि परेद्युरुदयात् प्रागपि शास्त्रविज्ञानसंभवात् ग्रस्तास्तमयेऽपि तथैव भोजनं प्रसज्येत। तन्न, 'तयोः परेद्युरुदये स्नात्वाऽभ्यवहरेन्नरः।' 'अहोरात्रं न भोक्तव्यम्.....' इति वचनद्वयेन तदप्रसक्तेः।

*पमा. १।३८३-३८४

(२) ग्रहे ग्रहणे। ग्रस्तास्तगे शशिनि ग्रहणात् पूर्वस्यां रात्रौ परस्मिन्नह्नि च न भुञ्जीत, ग्रस्तास्तगे सूर्ये ग्रहणात् पूर्वस्मिन्नह्नि परस्यां रात्रौ च न भुञ्जीतेत्यर्थः।

मुक्ता. ४५०

(३) अहोरात्रनिषेधः (चन्द्र)सूर्यग्रस्तास्ते।

सिन्धु. २८३

(४) एतदनाहिताग्निविषयम्, 'अपराह्णे व्रतोपायनीयमश्नीतः' (काश्रौ. २।१।१०) इति कात्यायनोक्तेर्व्रतस्य श्रौतत्वेन विहितस्य प्राबल्यात्। अद्भिर्व्रतं कुर्यादिति निर्णयदीपकृत्। **विपा. ३।२।४७२

वेदमन्त्रादिरहितेषु यज्ञादिषु शूद्रस्याप्यधिकारः

**[3]आहिताग्निरनग्निर्वा यज्ञदानव्रतादिकम्।**

* चमव्याआ. पमावत्।
** शेषं सिन्धुवत्।

(१) **विध.** ३।३२०।१२.
(२) **पमा.** १।३८३ अहो (आहो) : १।३८४ प्रथमचरणमात्रम् (=); **चमव्याआ.** ६१; **मुक्ता.** ४५० भोक्तव्यं (भुञ्जीत) र्यग्रहो यदा (र्यौ ग्रहेऽस्तगौ) दृष्ट्वा (बुद्ध्वा); **सिन्धु.** २८३ : ३१२ उत्त., (=); **विपा.** ३।२।४७२ वा तु (वाऽनु) : ३।२।४७३ पू.; **आभू.** ३९६ प्रथमचरणमात्रम् (=).
(३) **विपा.** ३।२।५३७.

**शूद्रो वर्णश्चतुर्थोऽपि वर्णत्वात्कर्तुमर्हति।**
**वेदमन्त्रस्वधास्वाहावषट्कारादिभिर्विना॥**

चाण्डालपतितादिभिर्भाषणस्य निषेधः
तदतिक्रमे प्रायश्चित्तं च

[1]**चण्डालैः पतितैर्म्लेच्छैर्भाषणं वाऽप्युदक्यया।**
**न कार्यं कामतः कृत्वा कीर्तयेत् केशवं विभुम्॥**

गवां प्राणत्राणस्य मुमूर्षुभ्यस्ताभ्यो
जलदानस्य च फलविधिः

[2]**प्राणत्राणं गवां कृत्वा गृहे पुरुषसत्तमः।**
**वासवं लोकमाप्नोति यावदिन्द्राश्चतुर्दश॥**
**प्राणप्रयाणे पानीयं दत्त्वा पुरुषसत्तमः।**
**वारुणं लोकमाप्नोति क्रीडत्यप्सरसां युतैः॥**

## श्रीमद्भागवतपुराणम्

स्त्रीशूद्रद्विजबन्धूनां वेदश्रवणानधिकारः

[3]**स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा॥**

(१) द्विजबन्धवः त्रैवर्णिकेष्वधमाः, तेषाम्। श्रीटी.

(२) द्विजबन्धवः द्विजातिभ्यः शूद्रायामुत्पन्नाः। अथवा संस्काररहिता व्रात्या द्विजबन्धुशब्देन निर्दिश्यन्ते। # स्मृकौ. ५१

(३) कर्णपथं नाऽऽरोहतीत्यर्थः। द्विजबन्धुः ब्राह्मणब्रुवः। आन. ८९

मनुष्यसामान्यधर्मस्य सत्यदयातप-
आदीनि त्रिंशत् लक्षणानि

[4]**सत्यं दया तपः शौचं तितिक्षेक्षा शमो दमः।**
**अहिंसा ब्रह्मचर्यं च त्यागः स्वाध्याय आर्जवम्॥**
**संतोषः समदृक्सेवा ग्राम्येहोपरमः शनैः।**
**नृणां विपर्ययेहेक्षा मौनमात्मविमर्शनम्॥**
**अन्नाद्यादेः संविभागो भूतेभ्यश्च यथार्हतः।**
**तेष्वात्मदेवताबुद्धिः सुतरां नृषु पाण्डव॥**
**श्रवणं कीर्तनं चास्य स्मरणं महतां गतेः।**
**सेवेज्याऽवनतिर्दास्यं सख्यमात्मसमर्पणम्॥**
**नृणामयं परो धर्मः सर्वेषां समुदाहृतः।**
**त्रिंशल्लक्षणवान्राजन्सर्वात्मा येन तुष्यति॥**

तत्र तावन्नरमात्रसाधारणधर्ममाह — सत्यमिति पञ्चभिः। तपः एकादश्युपवासादि। ईक्षा युक्तायुक्तविवेकः। शमः मनसः संयमः। दमः बाह्येन्द्रियाणाम्। त्यागः दानम्। स्वाध्यायः यथोचितजपः। संतोषः दैवलब्धेनालंबुद्धिः। समदृशां महतां सेवा। ग्राम्येहोपरमः प्रवृत्तकर्मभ्यो निवृत्तिः। विपर्ययेहेक्षा निष्फलक्रियाणामीक्षणम्। मौनं वृथालापनिवृत्तिः। आत्मविमर्शनं देहादिव्यतिरिक्तात्मानुसंधानम्। आत्मेति देवतेति च बुद्धिः। अस्य श्रीकृष्णस्य। श्रवणादयो नव। इज्या अर्चनम्। एवं त्रिंशल्लक्षणवान्। श्रीटी.

द्विजलक्षणम्, द्विजसामान्यधर्माः, चतुर्णां
वर्णानां गुणसमुच्चयरूपाणि लक्षणानि,
उक्तलक्षणप्रयुक्त एव ब्राह्मणा-
दिशब्दव्यवहारो
मुख्यः

**संस्कारा यत्राविच्छिन्नाः स द्विजोऽजो जगाद यम्।**
**इज्याध्ययनदानानि विहितानि द्विजन्मनाम्।**
**जन्मकर्मावदातानां क्रियाश्चाऽऽश्रमचोदिताः॥**

इदानीं वर्णधर्मान्वक्तुं द्विजानां लक्षणमाह — संस्कारा इति। संस्काराः मन्त्रवन्तो गर्भाधानादयः यस्मिन्नविच्छिन्नाः स द्विजः। तर्हि शूद्रस्यापि संस्काराविच्छेदे सति द्विजत्वं स्यात्तत्राऽऽह — अजः ब्रह्मा यम् एवंभूतसंस्कारयुक्तं जगाद स द्विजः। शूद्रं तु न मन्त्रवत्संस्कारयुक्तं जगाद, न चोपनयनवन्तम् अतो नासौ द्विजः। तथा च स्मृतिः — 'विवाहमात्रसंस्कारं शूद्रोऽपि लभतां सदा।, न केनचित्समसृजच्छन्दसा तं प्रजापतिः' इति। श्रुतिश्च 'गायत्र्या ब्राह्मणमसृजत, त्रिष्टुभा राजन्यम्, जगत्या वैश्यम्, न केनचिच्छूद्रम्' इति। अतो विवाहव्यतिरिक्तसंस्कारस्यानावश्यकत्वादुपनयनस्य तु

---

# शूशि., संर. स्मृकौवत्।

(१) **आत.** ३७०.

(२) **विपा.** ४।४१६.

(३) **भाग.** १।४।२५; **चव्र.** ७; **स्मृकौ.** ५० (=), ५१; **शूशि.** ४७, ५७; **मुक्ता.** २९७ भारते; **शूक.** १६; **संम.** ८० भारते; **आन.** ८९ महाभारते; **बाल.** १।७७ पृ. २१० : १।१२१ पृ. ३८१ त्रयी न (न त्रयी); **संर.** ६७८ पुराणम्; **सस्मृ.** १२४ भारते; **आभू.** ३१९ (=).

(४) **भाग.** ७।११।८-१३.

सर्वथा निषेधान्न तस्य द्विजत्वमित्यर्थः। पाठान्तरे वैदिकादय इति गर्भाधानादय इत्यर्थः। त्रैवर्णिकानामावश्यकान्धर्मानाह – इज्येति। जन्मना विशुद्धेन कुलेन, कर्मणा च आचारेण अवदातानां शुद्धानाम्। अदुष्कुलानां दुराचाराणां च नैतानि विहितानीत्यर्थः। ब्रह्मचर्याद्याश्रमविहिताः क्रियाश्च। शूद्रस्य तु वर्णधर्मा एव, आश्रमभेदकृतविशेषाभावात्। श्रीटी.

**[1]शमो दमस्तपः शौचं संतोषः क्षान्तिरार्जवम्।**
**ज्ञानं दयाऽच्युतात्मत्वं सत्यं च ब्रह्मलक्षणम्॥**

वर्णानामभिव्यञ्जकरूपान्धर्मानाह – शम इति चतुर्भिः। अच्युतात्मत्वं श्रीविष्णुपरत्वम्। श्रीटी.

**शौर्यं वीर्यं धृतिस्तेजस्त्याग आत्मजयः क्षमा।**
**ब्रह्मण्यता प्रसादश्च रक्षा च क्षत्रलक्षणम्॥**

शौर्यं युद्धोत्साहः। वीर्यं प्रभावः। तेजः प्रागल्भ्यम्। त्यागः दानम्। आत्मनः मनसः जयः। श्रीटी.

**देवगुर्वच्युते भक्तिस्त्रिवर्गपरिपोषणम्।**
**आस्तिक्यमुद्यमो नित्यं नैपुणं वैश्यलक्षणम्॥**
**शूद्रस्य संनतिः शौचं सेवा स्वामिन्यमायया।**
**अमन्त्रयज्ञो ह्यस्तेयं सत्यं गोविप्ररक्षणम्॥**

अमन्त्रयज्ञः नमस्कारेणैव पञ्चयज्ञानुष्ठानम्। तथा च याज्ञवल्क्यः – 'नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत्' (यास्मृ. १।१२१) इति। श्रीटी.

**यस्य यल्लक्षणं प्रोक्तं पुंसो वर्णाभिव्यञ्जकम्।**
**यदन्यत्रापि दृश्येत तत्तेनैव विनिर्दिशेत्॥**

शमादिभिरेव ब्राह्मणादिव्यवहारो मुख्यः, न जातिमात्रादित्याह – यस्येति। यत् यदि अन्यत्र वर्णान्तरेऽपि दृश्येत तत् वर्णान्तरं तेनैव लक्षणनिमित्तेनैव वर्णेन विनिर्दिशेत्, न तज्जातिनिमित्तेनेत्यर्थः। श्रीटी.

स्नानजपादीनां पुण्याः पर्वकालाः

**[2]श्राद्धं पित्रोर्यथावित्तं तद्बन्धूनां च वित्तवान्।**
**अयने विषुवे कुर्याद्व्यतीपाते दिनक्षये।**
**चन्द्रादित्योपरागे च द्वादशीश्रवणेषु च॥**
**त एते श्रेयसः काला नृणां श्रेयोविवर्धनाः।**
**कुर्यात्सर्वात्मनैतेषु श्रेयोऽमोघं तदायुषः॥**
**एषु स्नानं जपो होमो व्रतं देवद्विजार्चनम्।**
**पितृदेवनृभूतेभ्यो यद्दत्तं तद्ध्यनश्वरम्॥**

न केवलं श्राद्धस्यैवैते कालाः, किंतु धर्ममात्रस्येत्याह – त एत इति द्वाभ्याम्। तदेवाऽऽयुषः अमोघं साफल्यमित्यर्थः। श्रीटी.

अहिंसा परमो धर्मः

**[1]नैतादृशः परो धर्मो नृणां सद्धर्ममिच्छताम्।**
**न्यासो दण्डस्य भूतेषु मनोवाक्कायजस्य यः॥**

दण्डस्य न्यासः हिंसायास्त्यागः, य एतादृशोऽन्यो धर्मो नास्ति। श्रीटी.

धर्मार्थमपि यात्रार्थमपि च धनेहानिषेधः संतोषप्रशंसा च

**धर्मार्थमपि नेहेत यात्रार्थं वाऽधनो धनम्।**
**अनीहाऽनीहमानस्य महाहेरिव वृत्तिदा॥**

किंच, अधनो धर्मार्थं धनं नेहेत नापेक्षेत धनार्थं न व्याप्रियेतेति वा, दैवोपपन्नेनैव स्वधर्मसिद्धेरुक्तत्वात्। यात्रार्थमपि नेहेतेत्येतत्प्रपञ्चयति – अनीहेति सार्धैः षड्भिः। श्रीटी.

**संतुष्टस्य निरीहस्य स्वात्मारामस्य यत्सुखम्।**
**कुतस्तत्कामलोभेन धावतोऽर्थेहया दिशः॥**
**सदा संतुष्टमनसः सर्वाः सुखमया दिशः।**
**शर्कराकण्टकादिभ्यो यथोपानत्पदः शिवम्॥**

उपानहौ पादयोर्यस्य स उपानत्पात्(?दः), तस्य। श्रीटी.

**संतुष्टः केन वा राजन्न वर्तेतापि वारिणा।**
**औपस्थ्यजैह्व्यकार्पण्याद्गृहपालायते जनः॥**

गृहपालः श्वा तद्वदाचरति। श्रीटी.

**असंतुष्टस्य विप्रस्य तेजो विद्या तपो यशः।**
**स्रवन्तीन्द्रियलौल्येन ज्ञानं चैवावकीर्यते॥**
**कामस्यान्तं च क्षुत्तृड्भ्यां क्रोधस्यैतत्फलोदयात्।**
**जनो याति न लोभस्य जित्वा भुक्त्वा दिशो भुवः॥**

क्षुधा तृषा च जनः कामस्यान्तं याति, अन्नोदकातिरिक्तकामान्तराभावात्। क्रोधस्य याति, एतस्य क्रोधस्य यत्फलं हिंसा तस्या उदयात् निष्पत्तेः।

(१) **भाग.** ७।११।२१-२४, ३५.
(२) **भाग.** ७।१४।१९-२०, २४-२५.

(१) **भाग.** ७।१५।८, १५-२५, ३८-३९, ४३-४५, ६६.

दिशो जित्वाऽपि भुवो भुक्त्वाऽपि लोभस्य नैवान्तं यातीत्यर्थः। श्रीटी.

**पण्डिता बहवो राजन्बहुज्ञाः संशयच्छिदः।**
**सदसस्पतयोऽप्येके असंतोषात्पतन्त्यधः॥**

षोडशानां कामक्रोधादीनामसंकल्पादयः असाधारणाः गुरुभक्तिरूपाः च साधारणाः जयोपायाः

**असंकल्पाज्जयेत्कामं क्रोधं कामविवर्जनात्।**
**अर्थानर्थेक्षया लोभं भयं तत्त्वावमर्शनात्॥**

इदानीं कामादिजयोपायानाह – असंकल्पादिति चतुर्भिः। जयेदिति यथापेक्षमन्वेति। अर्थेऽनर्थदर्शनेन। तत्त्वावमर्शनात् अद्वैतानुसंधानेन। श्रीटी.

**आन्वीक्षिक्या शोकमोहौ दम्भं महदुपासया।**
**योगान्तरायान्मौनेन हिंसां कायाद्यनीहया॥**

आन्वीक्षिक्या आत्मानात्मविवेकेन। महतां सात्त्विकानां सेवया। योगस्य अन्तरायान् लोकवार्तादीन्। श्रीटी.

**कृपया भूतजं दुःखं दैवं जह्यात्समाधिना।**
**आत्मजं योगवीर्येण निद्रां सत्त्वनिषेवया॥**

येभ्यो भूतेभ्यो भयं जायेत तेष्वेव कृपया हिताचरणेन। दैवं देवोपसर्गनिमित्तं वृथा मनःपीडादि। तदुक्तं याज्ञवल्क्येन – 'विमना विफलारम्भः संसीदत्यनिमित्ततः' (यास्मृ. १।२७४) इति। आत्मजं देहजं योगवीर्येण प्राणायामादिबलेन। सत्त्वनिषेवया सात्त्विकाहारादिना। श्रीटी.

**रजस्तमश्च सत्त्वेन सत्त्वं चोपशमेन च।**
**एतत्सर्वं गुरौ भक्त्या पुरुषो ह्यञ्जसा जयेत्॥**

गार्हस्थ्याद्याश्रमापसदत्वनिमित्तानि क्रियात्यागादीनि, तादृशाश्रमिणामुपेक्ष्यत्वम्

**गृहस्थस्य क्रियात्यागो व्रतत्यागो बटोरपि।**
**तपस्विनो ग्रामसेवा भिक्षोरिन्द्रियलौल्यता॥**

यतिमुपलक्षणीकृत्यान्यानपि स्वधर्मत्यागिनो निन्दति – गृहस्थस्येति द्वाभ्याम्। श्रीटी.

**आश्रमापसदा ह्येते खल्वाश्रमविडम्बकाः।**
**देवमायाविमूढांस्तानुपेक्षेतानुकम्पया॥**

रागद्वेषादयो विंशतिर्निर्दिष्टा अन्ये चाऽऽदिशब्दग्राह्याः शत्रवः, एतच्छत्रुनिरासो मोक्षप्रदः

**रागो द्वेषश्च लोभश्च शोकमोहौ भयं मदः।**
**मानोऽवमानोऽसूया च माया हिंसा च मत्सरः॥**
**रजः प्रमादः क्षुन्निद्रा शत्रवस्त्वेवमादयः।**
**रजस्तमःप्रकृतयः सत्त्वप्रकृतयः क्वचित्॥**

रागादयो जेतव्याः शत्रवः। तत्र रजः अभिनिवेशः। क्वचिदारूढसमाधेः सत्त्वप्रकृतयोऽपि परोपकारादिप्रवृत्तयः शत्रवः। श्रीटी.

**यावन्नृकायरथमात्मवशोपकल्पं**
**धत्ते गरिष्ठचरणार्चनया निशातम्।**
**ज्ञानासिमच्युतबलो दधदस्तशत्रुः**
**स्वाराज्यतुष्ट उपशान्त इदं विजह्यात्॥**

नृकायरूपं रथम् आत्मवशः उपकल्पः इन्द्रियादिपरिकरः यस्मिंस्तथाभूतं यावद्धत्ते तावदेव गरिष्ठानां गुरूणां चरणसेवया निशितं ज्ञानखड्ग बिभ्रदच्युताश्रयः सन्निरस्तशत्रुरुपशान्तः स्वानन्देन तुष्टो भूत्वेदं रथादिकमुपेक्षेतेत्यर्थः। श्रीटी.

स्वरूपत उपायतोऽपादानतश्चानिषिद्धेन द्रव्येण कर्मणां कर्तव्यत्वम्

**यद्यस्य वाऽनिषिद्धं स्याद्येन यत्र यतो नृप।**
**स तेनेहेत कर्माणि नरो नान्यैरनापदि॥**

उक्तानाश्रमधर्मान्संक्षिप्याऽऽह – यदिति। यत् द्रव्यम्। येन उपायेन। यतः सकाशात्। श्रीटी.

ब्राह्मणस्य जन्म आमुष्मिकफलकतपः–क्लेशार्थम्

**'ब्राह्मणस्य हि देहोऽयं क्षुद्रकामाय नेष्यते।**
**कृच्छ्राय तपसे चेह प्रेत्यानन्तसुखाय च॥**

एवं च वृत्तिकार्श्यं ब्राह्मणेन सोढव्यमित्याह – ब्राह्मणस्येति। श्रीटी.

---

(१) **भाग.** ११।१७।४२; **मुक्ता.** ४ हि (तु) द्वितीयतृतीयचरणयोः (नोपभोगाय कल्पते। इह क्लेशाय महते) वसिष्ठः; **यसं.** १०० द्वितीयतृतीयचरणयोः (नोपभोगाय जायते। इह क्लेशाय महते) भविष्ये.

## लिङ्गपुराणम्

अहिंसा परमो धर्मः, तदर्थं शुद्धेन जलेन कर्मकरणविधिः, शुद्धजलस्वरूपम्, अहिंसाप्रशंसा

**[1]आपः पूता भवन्त्येता वस्त्रपूताः समुद्धृताः।**
**अफेना मुनिशार्दूल नादेयाश्च विशेषतः॥**
**तस्माद्वै सर्वकार्याणि दैविकानि द्विजोत्तमाः।**
**अद्भिः कार्याणि पूताभिः सर्वकार्यप्रसिद्धये॥**
**जन्तुभिर्मिश्रिता ह्यापः सूक्ष्माभिस्तान्निहत्य तु।**
**यत्पापं सकलं चाद्भिरपूताभिश्चिरं लभेत्॥**
**संमार्जने तथा नृणां मार्जने च विशेषतः।**
**अग्नौ कण्डनके चैव पेषणे तोयसंग्रहे।**
**हिंसा सदा गृहस्थानां तस्माद्धिंसां विवर्जयेत्॥**
**अहिंसेयं परो धर्मः सर्वेषां प्राणिनां द्विजाः।**
**तस्मात्सर्वप्रयत्नेन वस्त्रपूतं समाचरेत्॥**

अहिंसामाहात्म्यं कथयति – अहिंसेत्यादिना। शितो.

**तद्दानमभयं पुण्यं सर्वदानोत्तमोत्तमम्।**
**तस्मात्तु परिहर्तव्या हिंसा सर्वत्र सर्वदा॥**
**मनसा कर्मणा वाचा सर्वदाऽहिंसकं नरम्।**
**रक्षन्ति जन्तवः सर्वे हिंसकं बाधयन्ति च॥**
**त्रैलोक्यमखिलं दत्त्वा यत्फलं वेदपारगे।**
**तत्फलं कोटिगुणितं लभतेऽहिंसको नरः॥**
**मनसा कर्मणा वाचा सर्वभूतहिते रताः।**
**दयादर्शितपन्थानो रुद्रलोकं व्रजन्ति च॥**
**स्वामिवत्परिरक्षन्ति बहूनि विविधानि च।**
**ये पुत्रपौत्रवत्स्नेहाद्रुद्रलोकं व्रजन्ति ते॥**

स्वामिवत् स्वामिसदृशम्। विविधानि अनेकप्रकाराणि, बहूनि असंख्यातानि, कुटुम्बानीति शेषः ये पुत्रपौत्रवद्रक्षन्ति ते रुद्रलोकं व्रजन्तीत्यग्रिमेणान्वयः। शितो.

**तस्मात्सर्वप्रयत्नेन वस्त्रपूतेन वारिणा।**
**कार्यमभ्युक्षणं नित्यं स्नपनं च विशेषतः॥**

(१) लिङ्ग. १।७८।२-२२.

**त्रैलोक्यमखिलं हत्वा यत्फलं परिकीर्त्यते।**
**शिवालये निहत्यैकमपि तत्सकलं लभेत्॥**

शिवालये हिंसायाः महापापं कथयति – त्रैलोक्यमित्यादिना। शितो.

अहिंसापवादः तदपवादश्च

**शिवार्थं सर्वदा कार्या पुष्पहिंसा द्विजोत्तमाः।**
**यज्ञार्थं पशुहिंसा च क्षत्रियैर्दुष्टशासनम्॥**

'मा हिंस्यात्सर्वभूतानि' इत्युत्सर्गापवादकवैधहिंसां निरूपयति – शिवार्थमित्यादिना। शितो.

**विहिताविहितं नास्ति योगिनां ब्रह्मवादिनाम्।**
**यतस्तस्मान्न हन्तव्या निषिद्धानां निषेवणात्।**
**सर्वकर्माणि विन्यस्य संन्यस्ता ब्रह्मवादिनः॥**

दुष्टशासनेऽपि अपवादं कथयति – विहिताविहितमित्यादिना। शितो.

**न हन्तव्याः सदा पूज्याः पापकर्मरता अपि।**
**पवित्रास्तु स्त्रियः सर्वा अत्रेश्च कुलसंभवाः॥**

स्त्रियः पापकर्मरता अपि न हन्तव्याः। पवित्राः पतिव्रताः अत्रेः कुलसंभवाश्च सर्वाः सदा पूज्या इत्यन्वयः। शितो.

**ब्रह्महत्यासमं पापमात्रेयीं विनिहत्य च।**
**स्त्रियः सर्वा न हन्तव्याः पापकर्मरता अपि॥**

आत्रेयीम् अत्रिगोत्रस्त्रियम्। 'स्त्रियः सर्वा न हन्तव्याः' इति द्विरुक्तिः सर्वथा निषेधबोधनार्थम्। शितो.

**न यज्ञार्थं स्त्रियो ग्राह्याः सर्वैः सर्वत्र सर्वदा।**
**सर्ववर्णेषु विप्रेन्द्राः पापकर्मरता अपि॥**

मानुषस्त्रीणां यज्ञार्थमपि हिंसां वर्जयति – नेत्यादिना। पशुस्त्रीहिंसा तु वर्तत एव, 'सारस्वतीं वशामालभेत' इति श्रुतेः। शितो.

**मलिना रूपवत्यश्च विरूपा मलिनाम्बराः।**
**न हन्तव्याः सदा मर्त्यैः शिववच्छङ्कया तथा॥**

तथा पूर्वोक्तमलिनाद्या अपि, स्त्रिय इत्यनुषङ्गः, मर्त्यैः मनुष्यैः शिवः विद्यते यस्मिन्नसौ शिववानग्निस्तच्छङ्कया सदा न हन्तव्या इत्यन्वयः,'योषा वाव गोतमाग्निः' इति श्रुतेः। शितो.

**वेदबाह्यव्रताचाराः श्रौतस्मार्तबहिष्कृताः।**
**पाषण्डिन इति ख्याता न संभाष्या द्विजातिभिः॥**
**न स्प्रष्टव्या न द्रष्टव्या दृष्ट्वा भानुं समीक्षते।**
**तथापि ते न वध्याश्च नृपैरन्यैश्च जन्तुभिः॥**

अतिनिन्द्या अपि पाषण्डा अहिंस्या इति कथयति — वेदबाह्येत्यादिना। पाखण्डिस्पर्शालापौ वर्जितुं शक्यौ। अदर्शनमशक्यमतस्तत्प्रायश्चित्तं कथयति — दृष्ट्वेति। पाखण्डिनमिति शेषः। दृष्ट्वा यः भानुमीक्षते स शुध्यतीति शेषः। पाखण्डिसंल्लापदोषकथा विष्णुपुराण-तृतीयांशे शतधनुनृपाख्याने विस्तरेणोक्ता।

शितो.

चक्षुःपूतमार्गक्रमणादीनां ज्येष्ठवन्दनादीनां च बहूनामाचाराणामनुक्रमणम्

[1]**चक्षुःपूतं चरेन्मार्गं वस्त्रपूतं जलं पिबेत्।**
**सत्यपूतं वदेद्वाक्यं मनःपूतं समाचरेत्॥**

चक्षुषा स्वदृष्ट्या पूतं कीटादिरहितमित्यर्थः। मनसा स्वान्तःकरणेन पूतं शास्त्राद्यनिर्णये पवित्रत्वेन भातं समाचरेत् विचारेणाऽऽचरेदित्यर्थः। शितो.

**पितामहेनोपदिष्टो धर्मः साक्षात्सनातनः।**
**सर्वलोकोपकारार्थं शृणुध्वं प्रवदामि वः॥**
**गुरूपदेशयुक्तानां वृद्धानां क्रमवर्तिनाम्।**
**अभ्युत्थानादिकं सर्वं प्रणामं चैव कारयेत्॥**
**अष्टाङ्गप्रणिपातेन त्रिधा न्यस्तेन सुव्रताः।**
**त्रिःप्रदक्षिणयोगेन वन्द्यो वै ब्राह्मणो गुरुः॥**

त्रिधा न्यस्तेन त्रिवारकृतेनेत्यर्थः। ब्राह्मणः ब्रह्म-प्रापकः गुरुर्वै पिता च वन्द्यः अभिवाद्य इत्यर्थः।

शितो.

***ज्येष्ठाऽन्येऽपि च ते सर्वे वन्दनीया विजानता।**
**आज्ञाभङ्गं न कुर्वीत यदीच्छेत्सिद्धिमुत्तमाम्॥**

अन्ये पितृव्यभ्रात्रादयोऽपि विजानता सुज्ञेन वन्दनीयाः। आज्ञाभङ्गं गुर्वाज्ञाभङ्गमित्यर्थः।

शितो.

**धातुशून्यबिलक्षेत्रक्षुद्रमेयो( ?मन्त्रो )पजीवनम्।**
**विषग्रहविडम्बादीन्वर्जयेत्सर्वयत्नतः॥**

धातुः धातुवादः। शून्यं नास्तिकवादः। बिलक्षेत्रम् ऊखरभूमिः। क्षुद्रमन्त्राः भूतप्रेतादिसाधनमन्त्राः तैः जीवनं वृत्तिकरणम्। विषग्रहः विषयुक्तसर्पादीनां मन्त्रा-दिना ग्रहणम्। विडम्बः अन्यानुकरणम्। तदादिनिन्द्य-गुणान्वर्जयेदित्यन्वयः। शितो.

**कैतवं वित्तशाठ्यं च पैशुन्यं वर्जयेत्सदा।**
**अतिहासमवष्टम्भं लीलास्वेच्छाप्रवर्तनम्॥**
**वर्जयेत्सर्वयत्नेन गुरूणामपि संनिधौ॥**

अवष्टम्भम् असत्प्रारम्भम्। 'अवष्टम्भः सुवर्णे च स्तम्बप्रारम्भयोरपि' इति विश्वः। लीलया स्वेच्छाप्रवर्तनं स्वेच्छाचारं वर्जयेत्। गुरूणां संनिधौ यत्नेनापि वर्जयेदित्यग्रिमेणान्वयः। शितो.

**तद्वाक्यप्रतिकूलं च अयुक्तं वै गुरोर्वचः।**
**न वदेत्सर्वयत्नेन अनिष्टं न स्मरेत्सदा॥**
**यतीनामासनं वस्त्रं दण्डाद्यं पादुके तथा।**
**माल्यं च शयनस्थानं पात्रं छायां च यत्नतः।**
**यज्ञोपकरणाङ्गं च न स्पृशेद्वै पदेन च॥**

यतीनामासनादि यज्ञोपकरणाङ्गं च यत्नतः पदेन न स्पृशेदिति पूर्वस्थैरन्वयः। शितो.

**देवद्रोहं गुरुद्रोहं न कुर्यात्सर्वयत्नतः।**
**कृत्वा प्रमादतो विप्राः प्रणवस्यायुतं जपेत्॥**

प्रमादतः अनवधानेनेत्यर्थः। शितो.

[2]**वस्त्रशौचान्वितः कुर्यात्सर्वकार्याणि वै द्विजाः॥**

वस्त्रशौचेन अन्वितः युक्त इत्यर्थः।

शितो.

ग्रहणे स्नानविधिः कर्माङ्गशुद्धिश्च

[3]**चन्द्रसूर्यग्रहे स्नायात्सूतके मृतकेऽपि वा।**
**अस्नायी मृत्युमाप्नोति स्नायी पापं न विन्दति॥**

(१) अत्र — 'चन्द्रसूर्योपरागे तु यावद्दर्शनगोचरे।' इति चक्षुर्गोचरमेव निमित्तम्। निप. ११७

(२) इदं च स्नानं सूतकादावपि कर्तव्यमेव। तथा च लिङ्गपुराणे — चन्द्रसूर्यग्रहे इति।

निप्र. २।६८८

* आर्षः संधिः।
(१) **लिङ्ग**. १।८९।७, ३२-४१.

(२) **लिङ्ग**. १।८९।५२.
(३) **स्मृच**. २।६२३; **निप**. ११७ वा (च) (=); **निप्र**. २।६८८ स्नायी (स्नायात्) शेषं निपवत्.

[१]**सूतके मृतके चैव न दोषो राहुदर्शने।**
**तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते॥**

तथा दानादिकमपि सूतकिना कर्तव्यम्। तत्रैव – सूतके इति। अत्र शुद्ध्यभिधानं दानश्राद्धार्थमेव, पूर्वेण स्नानस्य प्राप्तेः। निप्र. २।६८८-६८९

ग्रहणे त्रिरात्रमेकरात्रं वोपवासः तत्फलं च

[२]**एकरात्रमुपोष्यैव स्नात्वा दत्त्वा च शक्तितः।**
**कञ्चुकादिव सर्पस्य निष्कृतिः पापकोशतः॥**
[३]**त्रिरात्रं समुपोष्यैव ग्रहणे चन्द्रसूर्ययोः।**
**स्नात्वा दत्त्वा च विधिवन्मोदते ब्रह्मणा सह॥**

ग्रहणे च त्रिरात्रमेकरात्रं वोपवासः श्रेयोर्थिना कार्यः, 'एकरात्रमुपोष्यैव...... ब्रह्मणा सह॥' इति हेमाद्रौ लैङ्गोक्तेः। इदं च पुत्र्यतिरिक्तविषम्, 'आदित्येऽहनि संक्रान्तौ ग्रहणे चन्द्रसूर्ययोः। पारणं चोपवासं च न कुर्यात्पुत्रवान् गृही॥' इति जैमिनिवचनात्।
+सिन्धु. २८६

## स्कन्दपुराणम्

परपीडावर्जनम्

[४]**परेषां क्लेशदं कर्म न कार्यं तत्कदाचन।**
**परमेष्ठिन्परेषां यदात्मनस्तद्भविष्यति॥**

शत्रुप्रभृतिषु विश्वासस्य निषेधः

[५]**विश्वासो नैव कर्तव्यो दुर्हृदा च कथंचन।**
**ऊनेनापि हि तुच्छेन वैरिणाऽपि कथंचन॥**
**मैत्री बुद्धिमता कार्या आपद्यपि निवर्तते(?)॥**

साधूपहासनिषेधः

[६]**साधूनां समचित्तानामुपहासं करोति यः।**
**देवो वाऽप्यथ वा मर्त्यः स विज्ञेयोऽधमाधमः॥**

+ विपा. सिन्धुवत्।

(१) **स्मृच.** २।६२३ क्तिर्न (क्तो न); **निप.** १२५ (=); **निप्र.** २।६८८ तावदेव (तावत्कालं); **सिन्धु.** १९०५.

(२) **स्मृच.** २।६२३; **सिन्धु.** २८६ निष्कृतिः (निवृत्तिः); **विपा.** ३।२।४७३ कोशतः (कोषतः).

(३) **स्मृच.** २।६२३; **सिन्धु.** २८६ ष्यैव (ष्यैवं); **विपा.** ३।२।४७३ चतुर्थचरणे (ब्रह्मणा सह मोदते).

(४) **स्कन्द.** १।१।५।२२.

(५) **स्कन्द.** १।१।१३।१०-११.

(६) **स्कन्द.** १।१।१७।१०६.

सामान्यतो युद्धमरणस्य विशेषतो ब्राह्मणादिरक्षार्थयुद्धमरणस्य च प्रशंसा

[१]**स्वर्गद्वारं विहायैव क्षत्रियाणां मनस्विनाम्।**
**पलायध्वे किमर्थं वा सङ्ग्रामाङ्गणमुत्तमम्॥**
**संगरे मरणं येषां ते यान्ति परमं पदम्।**
**यत्र तत्र च लिप्सेत सङ्ग्रामे मरणं बुधः।**
**त्यजन्ति संगरं ये वै ते यान्ति निरयं ध्रुवम्॥**
**ये ब्राह्मणार्थे भृत्यार्थे स्वार्थे वै शस्त्रपाणयः।**
**सङ्ग्रामं ये प्रकुर्वन्ति महापातकिनो नराः॥**
**शस्त्रघातहता ये वै मृता वा संगरे तथा।**
**ते यान्ति परमं स्थानं नात्र कार्या विचारणा॥**
**शस्त्रैर्विच्छिन्नदेहा ये गवार्थे स्वामिकारणात्।**
**रणे मृताः क्षता ये वै ते यान्ति परमां गतिम्॥**
**तस्माद्रणेऽपि ये शूराः पापिनो निहताः पुरः।**
**प्राप्नुवन्ति परं स्थानं दुर्लभं ज्ञानिनामपि॥**
**अथवा तीर्थगमनं वेदाध्ययनमेव च।**
**देवतार्चनयज्ञादि श्रेयांसि विविधानि च॥**
**ऐकपद्येन तान्येव कलां नार्हन्ति षोडशीम्।**
**सङ्ग्रामे पतितानां च सर्वशास्त्रेष्वयं विधिः॥**
**तस्माद्युद्धावदानं च कर्तव्यमविशङ्कितैः।**
**भवद्भिर्नान्यथा कार्यं वेदवाक्यप्रमाणतः॥**
**यूयं सर्वे शौरवृत्त्या समेताः**
**कुलेन शीलेन महानुभावाः।**
**पदानि तान्येव पलायमाना**
**गच्छन्त्यशूरा रणमण्डलाच्च।**
**त एव सर्वे खलु पापलोकान्**
**गच्छन्ति नूनं वचनात्स्मृतेश्च॥**
**ये पापिष्ठास्त्वधर्मस्था ब्रह्मघ्ना गुरुतल्पगाः।**
**नरकं यान्ति ते पापं तथैव रणविच्युताः।**
**तस्माद्भवद्भिर्योद्धव्यं स्वामिकार्यभरक्षमैः॥**

अतिदुर्लभस्य मनुष्यजन्मनो धर्माचरणेन साफल्यम्

[२]**दानं वृत्तं व्रतं वाचः कीर्तिधर्मौ तथाऽऽयुषः।**
**परोपकरणं कायादसारात्सारमुद्धरेत्॥**

(१) **स्कन्द.** १।१।१७।१५१-१६४.

(२) **स्कन्द.** १।२।२।४६-५०.

**धर्मे रागः श्रुतौ चिन्ता दाने व्यसनमुत्तमम्।**
**इन्द्रियार्थेषु वैराग्यं संप्राप्तं जन्मनः फलम्॥**
**देशेऽस्मिन्भारते जन्म प्राप्य मानुष्यमध्रुवम्।**
**न कुर्यादात्मनः श्रेयस्तेनाऽऽत्मा वञ्चितश्चिरम्॥**
**देवासुराणां सर्वेषां मानुष्यमतिदुर्लभम्।**
**तत्संप्राप्य तथा कुर्यान्न गच्छेन्नरकं यथा।**
**सर्वस्य मूलं मानुष्यं तथा सर्वार्थसाधकम्॥**

चतुर्णां वर्णानां तपआदयः
प्रधानधर्माः

**श्रीकृष्ण उवाच –**
[1]**वत्स पृथक्पृथक्प्रोक्तं वर्णानां श्रेय उत्तमम्।**
**ब्राह्मणानां तपो मूलं दमोऽध्ययनमेव च।**
**धर्मप्रकटनं चापि श्रेय उक्तं मनीषिभिः॥**
**बलं साध्यं पूर्वमेव क्षत्रियाणां प्रकीर्तितम्।**
**दुष्टानां शासनं चापि साधूनां परिपालनम्॥**
**पाशुपाल्यं च वैश्यानां कृषिर्विज्ञानमेव च।**
**शूद्रस्य द्विजशुश्रूषा तयाऽजीवन्वणिग्भवेत्।**
**शिल्पैर्वा विविधैर्जीवेद्द्विजातिहितमाचरन्॥**
**भार्यारतिर्भृत्यपोष्टा शुचिः श्रद्धापरायणः।**
**नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत्॥**

द्विजशुश्रूषा शूद्रधर्मः, शूद्रं प्रति
अध्यापनस्य निषेधः

**कुलपतिरुवाच –**
[2]**यागे दीक्षयितुं शक्यो न शूद्रो हीनजन्मभाक्।**
**श्रूयते यदि ते बुद्धिः शुश्रूषानिरतो भव॥**
[3]**उपदेशो न कर्तव्यो जातिहीनस्य कर्हिचित्।**
**उपदेशे महान्दोष उपाध्यायस्य विद्यते॥**
[4]**नाध्यापयेद्बुधः शूद्रं तथा नैव च याजयेत्।**
**न पाठयेत्तथा शूद्रं शास्त्रं व्याकरणादिकम्॥**
[5]**काव्यं वा नाटकं वाऽपि तथाऽलंकारमेव वा।**
**पुराणमितिहासं च शूद्रं नैव तु पाठयेत्॥**

(१) **स्कन्द.** १।२।६१।१८-२२.
(२) **स्कन्द.** २।१।१९।३५ : ३।१।१०।३८ श्रूयते (श्रूयतां); **सस्मृ.** १२० श्रूयते (श्रूयतां).
(३) **स्कन्द.** २।१।१९।३६, ३।१।१०।३९; **सस्मृ.** १२० कर्हि (कस्य) महान्दोष (महादोष) विद्यते (बुध्यते).
(४) **स्कन्द.** २।१।१९।३७, ३।१।१०।४०; **सस्मृ.** १२०.
(५) **स्कन्द.** २।१।१९।३८ : ३।१।१०।४१ मेव वा (मेव च); **सस्मृ.** १२० वाऽपि (चापि) मेव वा (मेव च).

[1]**यदि चोपदिशेद्विप्रः शूद्रस्यैतानि कर्हिचित्।**
**त्यजेयुर्ब्राह्मणा विप्रं तं ग्रामाद्ब्रह्मसंकुलात्॥**
[2]**शूद्राय चोपदेष्टारं द्विजं चण्डालवत्त्यजेत्।**
**शूद्रं चाक्षरसंयुक्तं दूरतः परिवर्जयेत्॥**
[3]**तच्छुश्रूषस्व भद्रं ते ब्राह्मणाञ्छ्रद्धया सह।**
**शूद्रस्य द्विजशुश्रूषा मन्वादिभिरुदीरिता॥**
[4]**न हि नैसर्गिकं कर्म परित्यक्तुं त्वमर्हसि॥**

ग्रहणे तीर्थक्षेत्रविशेषेषु दानमधिक-
फलम्

[5]**सोमसूर्योपरागेषु स्नानदानादिकं कृतम्।**
**स्यादमेयफलं पार्थ सुवर्णमुखरीतटे॥**
[6]**कुरुक्षेत्रे रामतीर्थे स्वर्णं दत्त्वा स्वशक्तितः।**
**सूर्योपरागे विधिवत्स नरो मुक्तिभाग्भवेत्॥**

पुत्रभार्याभूपतीनां त्यागस्य निमित्तानि
तत्संसर्गनिषेधश्च

[7]**पुत्रं च धर्मविमुखं भार्यां चाप्रियवादिनीम्।**
**अब्रह्मण्यं च राजानं त्यजेत्सद्यो न चेत्पतेत्॥**

अब्रह्मण्यम्, ब्रह्मणे ब्राह्मणाय वेदाय वा साधुर्ब्रह्मण्यः, तद्विपरीतोऽब्रह्मण्यः, तमित्यर्थः।

वैमाटी.

**दाक्षिण्यादर्थलोभाद्वा संसर्गं ये प्रकुर्वते।**
**ते सर्वे नरकं यान्ति यावदिन्द्राश्चतुर्दश॥**

ग्रहणनिमित्तकमा-
शौचम्

[8]**स्वसंबन्धिजनानां चाप्याशौचं जनिनाशयोः।**
**यथाशास्त्रं पालयेत ग्रहणे चार्कचन्द्रयोः॥**

(१) **स्कन्द.** २।१।१९।४० : ३।१।१०।४२ शूद्रस्यै (शूद्रं चै); **सस्मृ.** १२० द्ब्रह्म (द्विप्र).
(२) **स्कन्द.** २।१।१९।४०, ३।१।१०।४३; **आन.** ४०३ शूद्रं चा (शूद्रम) उत्त., (=).
(३) **स्कन्द.** २।१।१९।४१ : ३।१।१०।४४ तच्छुश्रूषस्व (अतः शुश्रूष); **सस्मृ.** १०५ उत्त.
(४) **स्कन्द.** २।१।१९।४२, ३।१।१०।४५.
(५) **स्कन्द.** २।१।३३।४७.
(६) **स्कन्द.** २।३।१।३८.
(७) **स्कन्द.** २।७।१७।५५-५६.
(८) **स्कन्द.** २।९।२२।४९.

ग्रहणे धनुष्कोटिरामसेत्वोः स्नानं महाफलम्

**[1]चन्द्रसूर्योपरागेषु यः स्नायादत्र मानवः।**
**तस्य पुण्यफलं वक्तुं शेषेणापि न शक्यते॥**
**चन्द्रसूर्योपरागेषु धनुष्कोट्यवगाहनम्।**
**ब्रह्महत्यादिपापानां प्रायश्चित्तमुदीरितम्॥**
**श्रीरामधनुषः कोटौ चन्द्रसूर्योपरागयोः।**
**स्नानं सायुज्यदं प्रोक्तं सर्वतीर्थफलप्रदम्॥**
**चन्द्रसूर्योपरागेषु अर्धोदयमहोदये।**
**स्नातव्यमत्र मनुजैर्भुक्तिमुक्तिफलेच्छुभिः॥**
**[2]चन्द्रसूर्योपरागे च तथैवार्धोदये द्विजाः।**
**महोदये रामसेतौ स्नानं कुर्वन्द्विजोत्तमाः॥**
**अनेकक्लेशसंयुक्तं गर्भवासं न पश्यति।**
**ब्रह्महत्यादिपापानां नाशकं च प्रकीर्तितम्॥**
**सर्वेषां नरकाणां च बाधकं परिकीर्तितम्।**
**संपदामपि सर्वासां निदानं परिकीर्तितम्॥**
**इन्द्रादिसर्वलोकानां सालोक्यादिप्रदं तथा।**
**चन्द्रसूर्योपरागे च तथैवार्धोदये द्विजाः॥**
**महोदये धनुष्कोटौ मज्जनं त्वतिनिश्चितम्॥**

उत्तमजनसंबन्धाधमजनत्यागयोर्विधिः

**[3]संबन्धानाचरेन्नित्यमुत्तमैरुत्तमैः सुधीः।**
**अधमानधमांस्त्यक्त्वा कुलमुत्कर्षतां नयेत्॥**

किंच, श्रेष्ठैनैव धर्मोऽनुष्ठेय इति श्रेष्ठत्वसंपादनप्रकारमाह — संबन्धानित्येकेन। रामा.

**[4]उत्तमानुत्तमानेव गच्छन्हीनांश्च वर्जयन्।**
**ब्राह्मणः श्रेष्ठतामेति प्रत्यवायेन शूद्रताम्॥**

फलितमाह — उत्तमानिति। प्रत्यवायेन नीचसंबन्धाचरणादिजनितपापेनेत्यर्थः। रामा.

अध्ययनसदाचारादिहीनस्य द्विजस्य मृत्युभयम्

**[5]अनध्ययनशीलं च सदाचारविलङ्घिनम्।**
**सालसं च दुरन्नादं ब्राह्मणं बाधतेऽन्तकः॥**

(१) **स्कन्द.** ३।१।३०।१२२-१२६.
(२) **स्कन्द.** ३।१।५२।२७-३१.
(३) **स्कन्द.** ३।२।५।२७-२८, ४।१।३५।४०.
(४) **स्कन्द.** ३।२।५।२८ द्वितीयचरणे (गच्छेद्धीनांश्च वर्जयेत्), ४।१।३५।४१.
(५) **स्कन्द.** ३।२।५।२९, ४।१।३५।४२.

तथा च मनुः — 'अनभ्यासाच्च वेदानामाचारस्य तु लङ्घनात्। आलस्याच्चान्नदोषाच्च मृत्युर्विप्राञ्जिघांसति॥' (मस्मृ. ५।४) इति। रामा.

**[1]ततोऽभ्यसेत्प्रयत्नेन सदाचारं सदा द्विजः।**
**तीर्थान्यप्यभिलष्यन्ति सदाचारिसमागमम्॥**

यतः सदाचारविलङ्घिनं मृत्युर्बाधते तत इत्यर्थः। सदाचारानुष्ठायिनां माहात्म्यमाह — तीर्थानीति। रामा.

शूद्रं प्रति धर्मोपदेशस्य वेदमन्त्रश्रावणस्य च निषेधः, द्विजशुश्रूषा शूद्रधर्मः

**[2]धर्मोपदेशः शूद्राणां स्वश्रेयः प्रतिघातयेत्।**
**द्विजशुश्रूषणं धर्मः शूद्राणां हि परो मतः॥**

धर्मोपदेशः ब्राह्मणकर्तृकः शूद्रकर्तृको वा। स्वश्रेय इत्यत्र स्वशब्दः उपदेष्टृपरः, द्वितीये श्रोतृपरोऽपि। रामा.

**[3]श्रावयेद्वैदिकं मन्त्रं न शूद्राय कदाचन।**
**ब्राह्मण्याद्धीयते विप्रः शूद्रो धर्माच्च हीयते॥**

वैदिकं मन्त्रं न श्रावयेदित्यनेन तन्त्राद्युक्तं श्रावयेदित्यभ्यनुजानाति। रामा.

दारिद्र्ये आत्मानवमाननम्, सत्यप्रियोक्तिः, भद्रोक्तिः इत्यादीनां बहूनामाचाराणामनुक्रमणम्

**[4]पूर्वर्द्धिभिः परित्यक्तमात्मानं नावमानयेत्।**
**सदोद्यमवतां यस्माच्छ्रियो विद्या न दुर्लभाः॥**
**[5]सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम्।**
**प्रियं च नानृतं ब्रूयादेष धर्मो घटोद्भव॥**
**[6]भद्रमेव वदेन्नित्यं भद्रमेव विचिन्तयेत्।**
**भद्रैरेवेह संसर्गो नाभद्रैश्च कदाचन॥**

इह मनुष्ययोनौ। संसर्गः, कार्य इति शेषः। रामा.

(१) **स्कन्द.** ३।२।५।३० ततो (अतो), ४।१।३५।४३.
(२) **स्कन्द.** ३।२।६।७७-७८; ४।१।३८।७२.
(३) **स्कन्द.** ३।२।६।७९ श्रावये (आदिशे), ४।१।३८।७१.
(४) **स्कन्द.** ३।२।६।८७, ४।१।३८।८२.
(५) **स्कन्द.** ३।२।६।८८ घटोद्भव (विधीयते), ४।१।३८।८३.
(६) **स्कन्द.** ४।१।३८।८४-८५.

**रूपवित्तकुलैर्हीनान्सुधीर्नाधिक्षिपेन्नरान्।**
**पुष्पवन्तौ न चेक्षेत त्वशुचिर्ज्योतिषां गणम्॥**
पुष्पवन्तौ चन्द्रसूर्यौ। सूर्यासोमाविति क्वचित्पाठः।
रामा.

**[1]वाचोवेगं मनोवेगं जिह्वावेगं च वर्जयेत्।**
**उत्कोचद्यूतदौत्यार्तद्रव्यं दूरात्परित्यजेत्॥**
उत्कोचद्रव्यं नाम भयादिकं प्रदर्श्य यद्गृह्यते।
रामा.

**[2]गोब्राह्मणाग्नीनुच्छिष्टपाणिना नैव संस्पृशेत्।**
**न स्पृशेदनिमित्तेन खानि स्वानि त्वनातुरः॥**
**[3]गुह्यजान्यपि लोमानि तत्स्पर्शादशुचिर्भवेत्।**
**पादधौतोदकं मूत्रमुच्छिष्टान्नोदकानि च॥**
**[4]निष्ठीवनं च श्लेष्माणं गृहाद्दूरं विनिक्षिपेत्।**
**अहर्निशं श्रुतेर्जाप्याच्छौचाचारनिषेवणात्।**
**अद्रोहवत्या बुद्ध्या च पूर्वं जन्म स्मरेद्द्विजः॥**
**[5]वृद्धान्प्रयत्नाद्वन्देत दद्यात्तेषां स्वमासनम्।**
**विनम्रधमनिस्तस्मादनुयायात्ततश्च तान्॥**
विनम्रधमनिः प्रणतनाडिकः। 'विनम्रकंधरः' इति क्वचित्। 'विनम्रधर्मनिष्ठः स्यात्' इति चान्यत्र। यस्मादयं विनम्रधमन्यादिर्भवेत्तस्मात्ताननुयायादित्यन्वयः।
रामा.

**[6]श्रुतिभूदेवदेवानां नृपसाधुतपस्विनाम्।**
**पतिव्रतानां नारीणां निन्दां कुर्यान्न कर्हिचित्॥**
**[7]न मनुष्यस्तुतिं कुर्यान्नाऽऽत्मानमपमानयेत्।**
**अभ्युद्यतं न प्रणुदेत्परमर्माणि नोच्चरेत्॥**
**अधर्मादेधते पूर्वं विद्वेष्टॄनपि संजयेत्।**
**सर्वतो भद्रमाप्यापि ततो नश्येच्च सान्वयः॥**
सान्वयः वंशसहितः। रामा.

(१) **स्कन्द.** ३।२।६।८९ पू., ४।१।३८।८६.
(२) **स्कन्द.** ४।१।३८।८७.
(३) **स्कन्द.** ३।२।६।८९-९० ष्टान्नोद (ष्टान्युद), ४।१।३८।८८.
(४) **स्कन्द.** ३।२।६।९०-९१ निक्षि (निःक्षि) पूर्वं जन्म (पूर्वजन्म), ४।१।३८।८९.
(५) **स्कन्द.** ३।२।६।९२ धमनिस्तस्मा (कन्धरो भूत्वा), ४।१।३८।९०.
(६) **स्कन्द.** ३।२।६।९३, ४।१।३८।९१.
(७) **स्कन्द.** ४।१।३८।९२-९३.

ग्रहणे कुरुक्षेत्रमहिमा

**[1]कुरुक्षेत्रे नरो राम ग्रहणे चन्द्रसूर्ययोः।**
**हेमदानाच्च राजेन्द्र न भूयः स्तनपो भवेत्॥**

विप्रसेवा शूद्रधर्मः

**[2]विप्राज्ञा नोल्लङ्घनीया सेवनीया प्रयत्नतः।**
**यं यं कामं प्रार्थयन्ते कारयध्वं ततस्ततः॥**
**एवं नत्वा च विप्राणां सेवनं कुरुते तु यः।**
**स शूद्रः स्वर्गमाप्नोति धनवान्पुत्रवान्भवेत्॥**
**अन्यथा निर्धनत्वं हि लभते नात्र संशयः॥**

ब्रह्मस्वहरणस्य निषेधः
निन्दा च

**विप्र उवाच –**
**[3]अनृतं चैव भाषन्ते लौल्येन महता वृताः।**
**पुत्रपौत्रविनाशाय ब्रह्मस्वेष्वतिलोलुपाः॥**
**न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते।**
**विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम्॥**
**ब्रह्मस्वेन च दग्धेषु पुत्रदारगृहादिषु।**
**न च ते अपि तिष्ठन्ति ब्रह्मस्वेन विनाशिताः।**
**न नाकं लभते सोऽथ सदा ब्रह्मस्वहारकः॥**
**यदा वराटिकां चैव ब्राह्मणस्य हरन्ति ये।**
**ततो जन्मत्रयाण्येव हर्ता निरयमाव्रजेत्॥**
**पूर्वजा नोपभुञ्जन्ति तत्प्रदत्तं जलं क्वचित्।**
**क्षयाहे नोपभुञ्जन्ति तस्य पिण्डोदकक्रियाः॥**
**संततिं नैव लभते लभ्यमाना न जीवति।**
**यदि जीवति दैवाच्चेद्भ्रष्टाचारा भवेदिति॥**

देशकुलगोत्राचारपालन-
विधिः

**[4]यो लौल्याच्च कुलाचारं गोत्राचारं प्रलोपयेत्।**
**स्वाचारं यो न कुर्वीत कदाचिद्वै विमोहितः।**
**सर्वनाशो भवेत्तस्य भस्मीभवति तत्क्षणात्॥**
**तस्मात्सर्वः कुलाचारः स्थानाचारस्तथैव च।**
**गोत्राचारः पालनीयो यथावित्तानुसारतः॥**

(१) **स्कन्द.** ३।२।३१।२१-२२.
(२) **स्कन्द.** ३।२।३५।५६-५८.
(३) **स्कन्द.** ३।२।३९।३१४-३२०.
(४) **स्कन्द.** ३।२।४०।६४-६६.

सन्मार्गसेवनम्, वृथाहिंसावर्जनम्, आहारादिष्वतिशयस्त्याज्यः, विद्यादिष्वतिशयः साध्यः, गुर्वादिषु विश्वासः, भृत्येष्वविश्वासः, शरणागतस्यावधः, कीर्तेरर्जनम्, ब्राह्मणसेवा, अतिथिसेवा, प्राधान्येन शिवोपासना इत्यादीनां बहूनां क्षत्रियधर्माणामनुक्रमणम्

**ऋषभ उवाच –**

**[1]श्रुतिस्मृतिपुराणेषु प्रोक्तो धर्मः सनातनः।**
**वर्णाश्रमानुरूपेण निषेव्यः सर्वदा जनैः॥**
**भज वत्स सतां मार्गं सदेव चरितं चर।**
**न देवाज्ञां विलङ्घयेथा मा कार्षीर्देवहेलनम्॥**
**गोदेवगुरुविप्रेषु भक्तिमान्भव सर्वदा।**
**चाण्डालमपि संप्राप्तं सदा संभावयातिथिम्॥**
**सत्यं न त्यज सर्वत्र प्राप्तेऽपि प्राणसंकटे।**
**गोब्राह्मणानां रक्षार्थमसत्यं त्वं वद क्वचित्॥**
**परस्वेषु परस्त्रीषु देवब्राह्मणवस्तुषु।**
**तृष्णां त्यज महाबाहो दुर्लभेष्वपि वस्तुषु॥**
**सत्कथायां सदाचारे सद्व्रते च सदागमे।**
**धर्मादिसंग्रहे नित्यं तृष्णां कुरु महामते॥**
**स्नाने जपे च होमे च स्वाध्याये पितृतर्पणे।**
**गोदेवातिथिपूजासु निरालस्यो भवानघ॥**
**क्रोधं द्वेषं भयं शाठ्यं पैशुन्यमसदाग्रहम्।**
**कौटिल्यं दम्भमुद्वेगं यत्नेन परिवर्जय॥**
**क्षात्रधर्मरतोऽपि त्वं वृथा हिंसां परित्यज।**
**शुष्कवैरं वृथालापं परनिन्दां च वर्जय॥**
**मृगयाद्यूतपानेषु स्त्रीषु स्त्रीविजितेषु च।**
**अत्याहारमतिक्रोधमतिनिद्रामतिश्रमम्।**
**अत्यालापमतिक्रीडां सर्वदा परिवर्जय॥**
**अतिविद्यामतिश्रद्धामतिपुण्यमतिस्मृतिम्।**
**अत्युत्साहमतिख्यातिमतिधैर्यं च साधय॥**
**सकामो निजदारेषु सक्रोधो निजशत्रुषु।**
**सलोभः पुण्यनिचये साभ्यसूयो ह्यधर्मिषु॥**
**सद्वेषो भव पाखण्डे सरागः सज्जनेषु च।**
**दुर्बोधो भव दुर्मन्त्रे बधिरः पिशुनोक्तिषु॥**
**धूर्तं चण्डं शठं क्रूरं कितवं चपलं खलम्।**
**पतितं नास्तिकं जिह्मं दूरतः परिवर्जय॥**
**आत्मप्रशंसां मा कार्षीः परिज्ञातेङ्गितो भव।**
**धने सर्वकुटुम्बे च नात्यासक्तः सदा भव॥**
**पत्न्याः पतिव्रतायाश्च जनन्याः श्वशुरस्य च।**
**सतां गुरोश्च वचने विश्वासं कुरु सर्वदा॥**
**आत्मरक्षापरो नित्यमप्रमत्तो दृढव्रतः।**
**विश्वासं नैव कुर्वीथाः स्वभृत्येष्वपि कुत्रचित्॥**
**विश्वस्तं मा वधीः कंचिदपि चोरं महामते।**
**अपापेषु न शङ्केथाः सत्यान्न चलितो भव॥**
**अनाथं कृपणं वृद्धं स्त्रियं बालं निरागसम्।**
**परिरक्ष धनैः प्राणैर्बुद्ध्या शक्त्या बलेन च।**
**अपि शत्रुं वधस्यार्हं मा वधीः शरणागतम्॥**
**अप्यपात्रं सुपात्रं वा नीचो वाऽपि महत्तमः।**
**यो वा को वाऽपि याचेत तस्मै देहि शिरोऽपि च॥**
**अपि यत्नेन महता कीर्तिमेव सदाऽर्जय।**
**राज्ञां च विदुषां चैव कीर्तिरेव हि भूषणम्॥**
**सत्कीर्तिप्रभवा लक्ष्मीः पुण्यं सत्कीर्तिसंभवम्।**
**सत्कीर्त्या राजते लोकश्चन्द्रश्चन्द्रिकया यथा॥**
**गजाश्वहेमनिचयं रत्नराशिं नगोपमम्।**
**अकीर्त्योपहतं सर्वं तृणवन्मुञ्च सत्वरम्॥**
**मातुः कोपं पितुः कोपं गुरोः कोपं धनव्ययम्।**
**पुत्राणामपराधं च ब्राह्मणानां क्षमस्व भोः॥**
**यथा द्विजप्रसादः स्यात्तथा तेषां हितं चर।**
**राजानं संकटे मग्नमुद्धरेयुर्द्विजोत्तमाः॥**
**आयुर्यशो बलं सौख्यं धनं पुण्यं प्रजोन्नतिः।**
**कर्मणा येन जायेत तत्सेव्यं भवता सदा॥**
**देशं कालं च शक्तिं च कार्यं चाकार्यमेव च।**
**सम्यग्विचार्य यत्नेन कुरु कार्यं च सर्वदा॥**
**न कुर्याः कस्यचिद्बाधां परबाधां निवारय।**
**चोरान्दुष्टांश्च बाधेथाः सुनीत्या शक्तिमत्तया॥**
**स्नाने जपे च होमे च दैवे पित्र्ये च कर्मणि।**
**अत्वरो भव निद्रायां भोजने भव सत्वरः॥**
**दाक्षिण्ययुक्तमशठं सत्यं जनमनोहरम्।**

(१) स्कन्द. ३।३।११।१७-६४.

अल्पाक्षरमनन्तार्थं वाक्यं ब्रूहि महामते॥
अभीतो भव सर्वत्र विपक्षेषु विपत्सु च।
भीतो भव ब्रह्मकुले न (?) पापे गुरुशासने॥
ज्ञातिबन्धुषु विप्रेषु भार्यासु तनयेषु च।
समभावेन वर्तेथास्तथा भोजनपङ्क्तिषु॥
सतां हितोपदेशेषु तथा पुण्यकथासु च।
विद्यागोष्ठीषु धर्म्यासु क्वचिन्मा भूः पराङ्मुखः॥
शुचौ पुण्यजलस्यान्ते प्रख्याते ब्रह्मसंकुले।
महादेशे शिवमये वस्तव्यं भवता सदा॥
कुलटा गणिका यत्र यत्र तिष्ठति कामुकः।
दुर्देशे नीचसंबाधे कदाचिदपि मा वस॥
एकमेवाऽऽश्रितोऽपि त्वं शिवं त्रिभुवनेश्वरम्।
सर्वान्देवानुपासीथास्तद्दिनानि च मानयन्॥
सदा शुचिः सदा दक्षः सदा शान्तः सदा स्थिरः।
सदा विजितषड्वर्गः सदैकान्तो भवानघ॥
विप्रान्वेदविदः शान्तान्यतींश्च नियतोज्वलान्।
पुण्यवृक्षान्पुण्यनदीः पुण्यतीर्थं महत्सरः॥
धेनुं च वृषभं रत्नं युवतीं च पतिव्रताम्।
आत्मनो गृहदेवांश्च सहसैव नमस्कुरु॥
उत्थाय समये ब्राह्मे स्वाचम्य विमलाशयः।
नमस्कृत्याऽऽत्मगुरवे ध्यात्वा देवमुमापतिम्॥
नारायणं च लक्ष्मीशं ब्रह्माणं च विनायकम्।
स्कन्दं कात्यायनीं देवीं महालक्ष्मीं सरस्वतीम्॥
इन्द्रादीनथ लोकेशान्पुण्यश्लोकानृषीनपि।
चिन्तयित्वाऽथ मार्तण्डमुद्यन्तं प्रणमेत्सदा ॥
गन्धं पुष्पं च ताम्बूलं शाकं पक्वफलादिकम्।
शिवाय दत्त्वोपभुङ्क्ष्व भक्ष्यं भोज्यं प्रियं नवम्॥
यद्दत्तं यत्कृतं जप्तं यत्स्नातं यद्धुतं स्मृतम्।
यच्च तप्तं तपः सर्वं तच्छिवाय निवेदय॥
भुञ्जानश्च पठन्वाऽपि शयानो विहरन्नपि।
पश्यञ्शृण्वन्वदन्गृह्णञ्छिवमेवानुचिन्तय॥
रुद्राक्षकङ्कणलसत्करदण्डयुग्मो
मालान्तरालधृतभस्मसितत्रिपुण्ड्रः।
पञ्चाक्षरं परिपठन्परमन्त्रराजं
ध्यायन्सदा पशुपतेश्चरणं रमेथाः॥
इति संक्षेपतो वत्स कथितो धर्मसंग्रहः॥

गोः तत्सेवायाश्च प्रशंसा

[1]गावः पवित्रमतुलं गावो मङ्गलमुत्तमम्।
यासां खुरोत्थितो रेणुर्गङ्गावारिसमो भवेत्॥
धात्र्यः सर्वस्य लोकस्य गावो मातेव सर्वथा॥
गवां स्तुत्वा नमस्कृत्य कृत्वा चैव प्रदक्षिणाम्।
प्रदक्षिणीकृता तेन सप्तद्वीपा वसुंधरा॥
गवां शुश्रूषका ये च गोप्रदा ये च मानवाः।
एषामन्यतमे लोके ते स्युः सर्वसमृद्धयः॥

ग्रहणे गङ्गास्नानस्य प्रशंसा

+[2]चन्द्रसूर्यग्रहे लक्षम्।

चूडामणिग्रहणलक्षणं तत्प्रशंसा च

सोमग्रहः सोमदिने रविवारे रविग्रहः।
तच्चूडामणिपर्वाख्यं तत्र स्नानमसंख्यकम्॥
असंख्यकम् असंख्यातफलजनकमित्यर्थः।

रामा.

स्नानं दानं जपो होमो यद्यच्चूडामणौ कृतम्।
तदक्षयं सर्वमिह विष्णो भागीरथीतटे॥
इह जगति भागीरथीतटे भागीरथ्यां तत्तटे चेत्यर्थः। तत्र तीरं धनुःशतत्रयपरिमितमिति ज्ञातव्यम्, 'गङ्गातीरे वसेन्नित्यं भिक्षुर्मोक्षपरायणः। सिद्धिक्षेत्रं तु तज्ज्ञेयं यावद्धनुःशतत्रयम्॥' इति वचनादित्युक्तमेव।

रामा.

व्रात्यसंबन्धनिषेधः

[3]सावित्रीपतितैः सार्धं संबन्धं न समाचरेत्॥

मात्रादिभिरपि सहैकान्तवासनिषेधः

न मात्रा न दुहित्रा वा न स्वस्त्रैकान्तशीलता।
बलवन्तीन्द्रियाण्यत्र मोहयन्त्यपि कोविदान्॥
एकान्तशीलता एकान्तस्थितिः। न कर्तव्येति शेषः।

रामा.

मातृपितृगुरुसंतोषणम्

सुतस्य संभवे क्लेशं सहेते पितरौ च यत्।
शक्या वर्षशतेनापि नो कर्तुं तस्य निष्कृतिः॥

---

+ गङ्गास्नाने पुण्यम् इति प्रकृतम्।
(१) स्कन्द. ४।१।२।७७, ८०-८१, ९३.
(२) स्कन्द. ४।१।२७।१३०-१३२.
(३) स्कन्द. ४।१।३६।२४, ६९, ७२-७३.

**अतस्तयोः प्रियं कुर्याद्गुरोरपि च सर्वदा।**
**त्रिषु तेषु सुतुष्टेषु तपः सर्वं समाप्यते॥**

काशीमरणस्य प्रशंसा तद्धेतुः
सदाचारश्च

**[1]अद्य श्वो वा परश्वो वा कालाद्वाऽथ परःशतात्।**
**सत्वरो गत्वरो देहः काश्यां चेदमृतीभवेत्॥**
**सा च वाराणसी लभ्या सदाचारवता सदा।**
**मनसाऽपि सदाचारमतो विद्वान्न लङ्घयेत्॥**

सत्यशौचादीनि नव धर्मसाधनानि

**[2]सत्यं शौचमहिंसा च क्षान्तिर्दानं दया दमः।**
**अस्तेयमिन्द्रियाकोचः सर्वेषां धर्मसाधनम्॥**

दमः इन्द्रियनिग्रहः। कथंचिद्विषयेषु परापतताभिन्द्रियाणां प्रत्याहरणम् इन्द्रियाणाम् आकोचः प्रत्याहारः इत्यर्थः। रामा.

गोरक्षणादीनि षट् विप्रस्य
शूद्रसाम्यापादकानि

**गोरक्षकान्वणिजकांस्तथा कारुकुशीलवान्।**
**प्रेष्यान्वार्धुषिकांश्चैव विप्राञ्शूद्रवदाचरेत्॥**

कारवः कटादिक्रियोपजीविनः, कुशीलवाः वृद्ध्युपजीविनो मूल्यकर्मकाराः, तान् कारुकुशीलवान्। रामा.

पादुकाविसर्जननिमित्तानि

**अग्न्यगारे गवां गोष्ठे देवब्राह्मणसंनिधौ।**
**स्वाध्याये भोजने पाने पादुके वै विसर्जयेत्॥**

ग्रहणे शिप्रास्नानशिवदर्शनयोः
प्रशंसा

**[3]चन्द्रसूर्योपरागे तु चन्द्रादित्येश्वरं शिवम्।**
**ये पश्यन्ति नरा भक्त्या स्नात्वा शिप्रां च पावनीम्॥**
**तेषां कुलशतं यावत्पैतृकं मातृकं तथा।**
**लोके चन्द्रस्य सूर्यस्य मोदते शाश्वतीः समाः॥**

ग्रहणे गोप्रतिमादानस्य प्रशंसा

**[4]रौप्यखुरीं कांस्यदोहां सवस्त्रां च पयस्विनीम्।**
**ये प्रयच्छन्ति कृतिनो ग्रस्ते सूर्ये निशाकरे।**

(१) स्कन्द. ४।१।३८।१०९-११०.
(२) स्कन्द. ४।१।४०।८६, ११८, १३१.
(३) स्कन्द. ५।२।७२।६०-६१.
(४) स्कन्द. ५।३।५१।५८-६०.

**तेषां संख्यां न जानामि पुण्यस्याब्दशतैरपि॥**
**सर्वस्याऽपि हि दानस्य संख्याऽस्तीह नराधिप।**
**चन्द्रसूर्योपरागे च दानसंख्या न विद्यते॥**

ग्रहणे चन्द्रहासतीर्थस्नानादेः
प्रशंसा

**[1]चन्द्रहासे तु यो गत्वा ग्रहणे चन्द्रसूर्ययोः।**
**स्नानं समाचरेद्भक्त्या मुच्यते सर्वकिल्बिषैः॥**
**तत्र स्नानं च दानं च चन्द्रहासे शुभाशुभम्।**
**कृतं नृपवरश्रेष्ठ सर्वं भवति चाक्षयम्॥**
**ते धन्यास्ते महात्मानस्तेषां जन्म सुजीवितम्।**
**चन्द्रहासे तु ये स्नात्वा पश्यन्ति ग्रहणं नराः॥**

चतुर्णां वर्णानामाश्रमक्रमेण
स्वस्वधर्मपालनेन
सद्गतिः

**[2]गतिर्ध्यानं विना भक्तैर्ब्राह्मणैः प्राप्यते नृप।**
***अध्यापयन्यतो(?) वेदान्वेदं वाऽपि यथाविधि॥**
**कुलजां रूपसंपन्नां सर्वलक्षणलक्षिताम्।**
**उद्वाहयेत्ततः पत्नीं गुरुणाऽनुमते तदा॥**
**ततः स्मार्तं विवाहाग्निं श्रौतं वा पूजयेत्क्रमात्।**
**प्रतिग्रहधनो भूत्वा दम्भलोभविवर्जितः॥**
**पञ्चयज्ञविधानानि कारयेद्वै यथाविधि।**
**वनं गच्छेत्ततः पश्चाद्द्वितीयाश्रमसेवनात्॥**
**पुत्रेषु भार्यां निक्षिप्य सर्वसङ्गविवर्जितः।**
**इष्टाल्लोँकानवाप्नोति न चेह जायते पुनः॥**
**क्षत्रियस्तु स्थितो राज्ये पालयित्वा वसुंधराम्।**
**शश्वद्धर्ममनाश्चैष प्राप्नोति परमां गतिम्॥**
**वैश्यधर्मो न संदेहः कृषिगोरक्षणे रतः।**
**सत्यशौचसमायुक्तो गच्छते स्वर्गमुत्तमम्॥**
**न शूद्रस्य पृथग्धर्मो विहितः परमेष्ठिना।**
**न मन्त्रो न च संस्कारो न विद्यापरिसेवनम्।**
**न शब्दविद्यासमयो देवताभ्यर्चनानि च॥**
**यथा जातेन सततं वर्तितव्यमहर्निशम्।**
**स धर्मः सर्ववर्णानां पुरा सृष्टः स्वयंभुवा।**
**मन्त्रसंस्कारसंपन्नास्त्रयो वर्णा द्विजातयः॥**

* 'अधीत्य गुरुतः' इत्येवमर्था शब्दयोजनाऽत्राऽऽकाङ्क्ष्यते।
(१) स्कन्द. ५।३।१२१।१८-२०.
(२) स्कन्द. ५।३।१२२।९-२०.

तेषां मतमनादृत्य यदि वर्तेत काम्मतः।
स मृतो जायते श्वा वै गतिरूर्ध्वा न विद्यते॥
न तेषां प्रेषणं नित्यं तेषां मतमनुस्मरन्।
यशोभागी स्वधर्मस्थः स्वर्गभागी स जायते॥

ग्रहणे रवितीर्थस्नानादेः
प्रशंसा

[1]चन्द्रसूर्यग्रहे स्नात्वा सोपवासो जितेन्द्रियः।
+तत्राऽऽदित्यमुखं दृष्ट्वा मुच्यते सर्वकिल्बिषैः॥

ग्रहणे योगिभोजनविधिः

[2]तस्मात्सर्वप्रयत्नेन ग्रहणे चन्द्रसूर्ययोः।
संक्रान्तौ च व्यतीपाते योगी भोज्यो विशेषतः॥

ग्रहणे रवितीर्थे दानस्य
प्रशंसा

....... [3]चन्द्रसूर्यग्रहे तथा।
रवितीर्थे प्रदत्तानां दानानां फलमुत्तमम्॥

अहिंसायाः प्रशंसा

[4]अहिंसा परमो धर्मः सर्ववेदे प्रकीर्तितः।
ब्राह्मणस्य विशेषेण तस्मात्सर्पवधं त्यज।
नास्ति हिंसासमं पापं नास्ति धर्मो दयापरः॥

सोमवारे सोमग्रहणे सोमदर्शनस्य
प्रशंसा

[5]सोमवारे तु संप्राप्ते सोमस्य ग्रहणे नरः।
यस्तंΣ पश्यति पापोऽपि नरकं न स पश्यति॥

ग्रहणे श्राद्धविधिः

[6]व्यतीपातो गजच्छाया ग्रहणं सोमसूर्ययोः।
एतेषु युज्यते श्राद्धं प्रकर्तुं पितृतृप्तये॥

रविवारे रविग्रहणे कुरुक्षेत्र-
स्नानप्रशंसा

[7]संनिहित्यां कुरुक्षेत्रे राहुग्रस्ते दिवाकरे।
सूर्यवारेण यः स्नाति नरकं न स पश्यति॥

+ रवितीर्थे इत्यर्थः।
Σ सोमम्।
(१) स्कन्द. ५।३।१२५।३२.
(२) स्कन्द. ५।३।१३९।११.
(३) स्कन्द. ५।३।१५३।७.
(४) स्कन्द. ६।२९।२१८, २२१.
(५) स्कन्द. ६।८७।२.
(६) स्कन्द. ६।२१६।४-५.
(७) स्कन्द. ६।२२७।१४.

सच्छूद्राणामपि श्रुतिस्मृतिपठनश्रवणानधिकारः
पुराणश्रवणमात्राधिकारश्च, सच्छूद्र-
लक्षणम्, सच्छूद्राणां
धर्माः

[1]सच्छूद्रैरपि नो कार्या वेदाक्षरविचारणा।
न श्रोतव्या न पठ्या च पठन्नरकभाग्भवेत्॥
पुराणानां नैव पाठः श्रवणं कारयेत्सदा।
स्मृत्युक्तं सुगुरोर्ग्राह्यं न पाठः श्रवणादिकम्॥
धर्मोढा यस्य पत्नी स्यात्स सच्छूद्र उदाहृतः॥
भार्यारतिः शुचिर्भृत्यादीनां पोषणतत्परः।
श्राद्धादिकारको नित्यमिष्टापूर्तप्रसाधकः॥
नमस्कारान्तमन्त्रेण नामसंकीर्तनेन च।
देवास्तस्य च तुष्यन्ति पञ्चयज्ञादिकैः शुभैः॥
स्नानं च तर्पणं चैव वह्निहोमोऽप्यमन्त्रकः।
ब्रह्मयज्ञोऽतिथेः पूजा पञ्चयज्ञान्न संत्यजेत्॥
कार्यं स्त्रीभिश्च शूद्रैश्च ह्यमन्त्रं पञ्चयज्ञकम्।
पञ्चयज्ञैश्च संतुष्टा यथैषां पितृदेवताः॥

प्रकृतीनामष्टादशमिता नीचाः, तेषां
श्रौतस्मार्तकर्मानधिकारः
ब्राह्मणशुश्रूषादयो
धर्माश्च

अष्टादशमिता नीचाः प्रकृतीनां यथातथा।
विधिर्नैव क्रिया नैव स्मृतिमार्गोऽपि नैव च॥
तासां ब्राह्मणशुश्रूषा विष्णुध्यानं शिवार्चनम्।
अमन्त्रात्पुण्यकरणं दानं देयं च वै सदा॥
न दानस्य क्षयो लोके श्रद्धया यत्प्रदीयते।
अश्रद्धयाऽशुचितया दानं वैरस्य कारणम्॥
अहिंसादिः समादिष्टो धर्मस्तासां महाफलः।
चातुर्मास्ये विशेषेण त्रिदिवेशादिसेवया॥
सुदर्शनैस्तथा धर्मः सेव्यते ह्यविरोधिभिः।
सच्छूद्रैर्दानपुण्यैश्च द्विजशुश्रूषणादिभिः॥

प्रातर्मध्याह्नापराह्णेषु क्रमेण देवद्विजपितृ-
कर्मकरणात्सुखावाप्तिः

प्रातः कर्म सुरेशानां मध्याह्ने द्विजसेवनम्।
अपराह्णेऽथ+ कार्याणि कुर्वन्मर्त्यः सुखी भवेत्॥

+ 'अपराह्णः पितृणाम्।' (शब्रा. २।४।२।८) इति वचनात् पितृकार्याणि।
(१) स्कन्द. ६।२४१।४-५, ७, १३-१६, ३९-४३, ४६.

चतुर्णां वर्णानां धर्मा वृत्तयश्च

[1]ब्राह्मणः क्षत्रियो वैश्यस्त्रय एव द्विजातयः।
वेदास्तपोऽध्ययनं च यजनं दानमेव च॥ (?)
वृत्तिरध्यापनाच्चैव तथा स्वल्पप्रतिग्रहात्।
विप्रः समर्थस्तपसा यद्यपि स्यात्प्रतिग्रहे।
तथापि नैव गृह्णीयात्तपोरक्षा यतः सदा॥
वेदपाठो विष्णुपूजा ब्रह्मध्यानमलोभता।
अक्रोधता निर्मलत्वं क्षमासारत्वमार्यता॥
क्रियातत्परता दानक्रिया सत्यादिभिर्गुणैः।
भूषितो यो भवेन्नित्यं स विप्र इति कथ्यते॥
क्षत्रियेण तपः कार्यं यजनं दानमेव च।
वेदपाठो विप्रभक्तिरेषां शस्त्रेण जीवनम्॥
स्त्रीबालगोब्राह्मणार्थे भूम्यर्थे स्वामिसंकटे।
संप्राप्ते शरणं चैव पीडितानां च शब्दिते।
आर्तत्राणपरा ये च क्षत्रिया ब्रह्मणा कृताः॥
धनवृद्धिकरो वैश्यः पशुपालः कृषीवलः।
रसादीनां च विक्रेता देवब्राह्मणपूजकः॥
अर्थवृद्धिकरो व्याजाद्यज्ञकर्मादिकारकः।
दानमध्ययनं चेति वैश्यवृत्तिरुदाहृता॥
एतान्येव ह्यमन्त्राणि शूद्रः कारयते सदा।
नित्यं षड्दैवतं श्राद्धं हन्तकारोऽग्नितर्पणम्।
देवद्विजातिभक्तिश्च नमस्कारेण सिध्यति॥
शूद्रोऽपि प्रातरुत्थाय कृत्वा पादाभिवन्दनम्।
विष्णुभक्तिमयाञ्श्लोकान्पठन्विष्णुत्वमाप्नुयात्॥

अष्टादशमपदार्थः, प्रकृतीनामुत्तममध्यम-
समरूपेण त्रैविध्यम्, तत्र शिल्पि-
प्रभृतयः सप्त उत्तमाः
प्रकृतीनां
धर्माः

यो यस्य हीनो वर्णेन स चाष्टादशमो नरः।
सर्वासां प्रकृतीनां च उत्तमा मध्यमाः समाः॥
भेदास्त्रयः समाख्याता विज्ञेयाः स्मृतिनिर्णयात्।
शिल्पिनः सप्त विज्ञेया उत्तमाः समुदाहृताः॥
स्वर्णकृत्कम्बुकश्चैव तन्दुली पुष्पलावकः।
ताम्बूली नापितश्चैव मणिकारश्च सप्तधा॥
न स्नानं देवताहोमस्तपो नियम एव च।
न स्वाध्यायवषट्कारौ न च शुद्धिर्विवाहिता॥
एतासां प्रकृतीनां च गुरुपूजा सदोदिता।
विप्राणां प्राकृतो नित्यं दानमेव परो विधिः॥
सर्वेषामेव वर्णानामाश्रमाणां महामुने।
सर्वासां प्रकृतीनां च विष्णुभक्तिः सदा शुभा॥

सोमवारे सोमग्रहे सोमनाथदर्शनस्य
प्रशंसा

[1]स्नातः सोमग्रहे चन्द्र सोमवारे च भक्तितः।
यो *मां पश्यति सर्वेषामेतेषां लभते फलम्॥

ग्रहणे श्राद्धस्य विधिः

[2]श्राद्धं कार्यम्.........।
.......सूर्येन्दुग्रहणे तथा॥

वेदविक्रयस्य निन्दा षड्विधत्वं च

[3]स्थितो वै नृपतिद्वारि यः कुर्याद्वेदविक्रयम्।
ब्रह्महत्यासमं पापं न भूतं न भविष्यति।
वरं कुर्वन्ध्रुवं देवि न कुर्याद्वेदविक्रयम्॥
हत्वा गाश्च वरं मांसं भक्षयीत द्विजाधमः।
वरं जीवेत्समं म्लेच्छैर्न कुर्याद्वेदविक्रयम्॥
प्रत्यक्षोक्तिः प्रत्ययश्च प्रश्नपूर्वः प्रतिग्रहः।
याजनाध्यापने वादः षड्विधो वेदविक्रयः॥
वेदाक्षराणि यावन्ति नियुङ्क्ते स्वार्थकारणात्।
तावतीर्भ्रूणहत्या वै प्राप्नुयाद्वेदविक्रयी॥
वेदानुयोगाद्यो दद्याद्ब्राह्मणाय प्रतिग्रहम्।
स पूर्वं नरकं याति ब्राह्मणस्तदनन्तरम्॥

वैश्वदेवहीनत्वादीनि ब्राह्मणस्य शूद्रसाम्ये निमित्तानि

वैश्वदेवेन हीना ये हीनाश्चाऽऽतिथ्यतोऽपि ये।
कर्मणा सर्ववृषला वेदयुक्ता अपि द्विजाः॥
येषामध्ययनं नास्ति ये च केचिदनग्नयः।
कुलं वाऽश्रोत्रियं येषां ते सर्वे शूद्रजातयः॥
मृतके यस्तु भुञ्जीत गृहीतशशिभास्करे।
गजच्छायासु यः कश्चित्तं च शूद्रवदाचरेत्॥

(१) स्कन्द. ६।२४२।१९-३०, ३८-४३.

* सोमनाथमित्यर्थः।
(१) स्कन्द. ७।१।२४।३६.
(२) स्कन्द. ७।१।२०५।३०.
(३) स्कन्द. ७।१।२०७।२२-२९, ३१, ३३, ५६-५७, ६९.

**गोरक्षकान्वाणिजकांस्तथा कारुकुशीलवान्।**
**स्पृश्यान्वार्धुषिकांश्चैव विप्राञ्छूद्रवदाचरेत्॥**

मनुष्यत्वस्य दुर्लभत्वात् तत्रापि ब्राह्मणत्वस्य दुर्लभतरत्वाच्च संकरस्य वर्जनीयत्वम्, संकरस्य नव विधाः

**विप्रयोनिं समासाद्य संकरं परिवर्जयेत्।**
**मानुष्यं दुर्लभं लोके ब्राह्मण्यमधिकं ततः॥**
**एकशय्यासनं पक्तिर्भाण्डपक्वान्नमिश्रणम्।**
**याजनाध्यापनं योनिस्तथा च सह भोजनम्।**
**नवधा संकरः प्रोक्तो न कर्तव्योऽधमैः सह॥**

वृत्तस्य वित्ततः श्रेष्ठत्वम्

**वृत्तं तस्मात्तु संरक्षेद्वित्तमेति गतं पुनः।**
**अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः॥**

ग्रहणे पौत्रवत उपवासनिषेधः

[१]**आदित्येऽहनि संक्रान्तौ ग्रहणे चन्द्रसूर्ययोः।**
**पारणैश्चैव गोदाने नोपोष्यः पौत्रवान्गृही॥**

सूर्यग्रहे कुरुक्षेत्रे दानस्य प्रशंसा

[२]**सूर्यग्रहे कुरुक्षेत्रे दद्याद्दानमनुत्तमम्॥**

चन्द्रग्रहणे स्नानदानादिभिश्चन्द्रपीडाहरणं महाफलम्

[३]**ग्रहणे *तव संप्राप्ते स्नानदानादिकाः क्रियाः।**
**करिष्यन्ति जना लोके सम्यक्छ्रेयःसमन्विताः॥**
**ताभिस्तव न σसंतापः स्वल्पोऽप्येवं भविष्यति।**
**अक्षयं सुकृतं तेषां कृतं कर्म भविष्यति॥**
**ग्रहणे *तव संप्राप्ते योऽत्र स्नानं करिष्यति।**
**न तस्य पुनरेवात्र जन्म लोके भविष्यति॥**

श्रद्धापूर्वकं ज्ञानार्जनम्

[४]**श्रद्धा मातेव जननी ज्ञानस्य सुकृतस्य च।**
**तस्माच्छ्रद्धां समुत्पाद्य ज्ञानं सुकृतमर्जयेत्॥**

* चन्द्रस्य।
σ राहुपीडारूपः।
(१) **स्कन्द.** ७।१।२०८।३५.
(२) **स्कन्द.** ७।३।१३।४६.
(३) **स्कन्द.** ७।३।५१।१३-१४, १६.
(४) **चव्र.** ३१.

शूद्राधिकारनिषेधाः कर्मविशेषेषु

[१]**न दर्भानुद्धरेच्छूद्रो न पिबेत्कापिलं पयः।**
**मध्यपत्रे न भुञ्जीत ब्रह्मवृक्षस्य भामिनि॥**
[२]**नोच्चरेत्प्रणवं मन्त्रं पुरोडाशं न भक्षयेत्।**
**न शिखां नोपवीतं च नोच्चरेत्संस्कृतां गिरम्॥**
न शिखे(?स्वामि)त्येतदपकृष्टशूद्रपरम्। शूशि.३७

[३]**न पठेद्वेदवचनं त्रिषवं न हि सेवयेत्।**
**नमस्कारेण मन्त्रेण क्रियासिद्धिर्भवेद्ध्रुवम्॥**
**निषिद्धाचरणं कुर्वन्पितृभिः सह मज्जति॥**

यतेः पुत्रत्वेन कीर्तनस्य निषेधः, यतेर्विष्णुरूपत्वम्, यतिदर्शनादिप्रशंसा

[४]**सदोषं निर्गुणं वाऽपि यतिं पुत्रं न कीर्तयेत्।**
**अज्ञानात्कीर्तयेद्यस्तु स याति नरकं ध्रुवम्॥**
**येनापमानितो भिक्षुस्तेनाहं चापमानितः॥**
**ये नमन्ति यतिं दूराद्दृष्ट्वा काषायवाससम्।**
**राजसूयफलावाप्तिस्तेषां भवति पुत्रक॥**
**यतिरूपेण सर्वत्र विष्णुः पर्यटते महीम्।**
**भक्तानामनुकम्पार्थं महद्ध(?द्धा)र्मविवृद्धये॥**
**यदा कारयति स्नानं यतीनां यो द्विजोत्तमः।**
**स्नानजं लभते पुण्यं गङ्गायाः शतवार्षिकम्॥**
**कौपीनाच्छादनं दण्डं बहिर्वासश्च पादुके।**
**यो ददाति यथाशक्त्या पुण्यं तस्य वदाम्यहम्॥**
**दत्तं वाजिसहस्रं तु मातङ्गानां शतत्रयम्।**
**गोयुतस्य सहस्रस्य फलं प्राप्नोति मानवः॥**
**कौपीनाच्छादनं पात्रं भिक्षुकेभ्यः प्रयच्छति।**
**वाजपेयसमं पुण्यं विष्णुमुद्दिश्य तत्कृतम्॥**
**अग्निचित्कपिला सत्री राजा भिक्षुर्महोदधिः।**
**दृष्टमात्राः पुनन्त्येते तस्मात्पश्येत नित्यशः॥**

चन्द्रग्रहणे समुद्रस्नानं महाफलम्

[५]**गावो नागास्तिला धान्यं रत्नानि कनकं मही*।**

* एतानीति शेषः।
(१) **शूशि.** ३७, ४४; **शूक.** ५१ उत्त., पाद्मे.
(२) **शूशि.** ३७ नोच्चरेत्सं (नोद्धरेत्सं) : ४४.
(३) **शूशि.** ३७, ४४.
(४) **यसं.** १३१- १३२.
(५) **सिन्धु.** २९१ पृथ्वीचन्द्रोदये प्रभासखण्डे.

**संप्रदाय कुरुक्षेत्रे यत्फलं लभते(?भ्यते) नरैः।**
**तदिन्दुग्रहणेऽम्भोधौ स्नानाद्भवति षड्गुणम्॥**

निशीथपूर्वोत्तरकालयोश्चन्द्रग्रहणे
भोजने वर्ज्यः

पूर्वकालः

**[1]यदा चन्द्रग्रहस्तात निशीथात्परतो भवेत्।**
**भोक्तव्यं तात पूर्वाह्णे नापराह्णे कथंचन॥**
**पूर्वं निशीथाद्ग्रहणं यदा चन्द्रस्य वै भवेत्।**
**तदा दिवा न कर्तव्यं भोजनं शिखिवाहन॥**

यत्तु स्कन्दपुराणे – 'यदा चन्द्र०, पूर्वं निशीथा०', तदिदं यामत्रयाभिप्रायकम्, 'चन्द्रग्रहे तु यामांस्त्रीन्' इति विशेषस्य वृद्धगौतमेनाभिधानात्।

पमा. १।३८४

द्विजानां धर्मोपदेष्टृत्वं तस्य
पापनिवर्तकत्वं च

**8[2]श्रावयित्वा द्विजांश्चापि श्रद्धाभक्तिसमन्वितान्।**
**क्षत्रियान् धर्मनिरतान् वैश्यान् सन्मार्गवर्तिनः।**
**शूद्रान् द्विजेषु भक्तांश्च निष्पापो जायते द्विजः॥**

आचारसंपन्नशूद्रस्य शिव-
पूजनाधिकारः

**[3]शूद्रः कर्माणि यो नित्यं स्वीयानि कुरुते प्रिये।**
**तस्याहमर्चां गृह्णामि चन्द्रखण्डविभूषिते॥**

इदं पुराणप्रसिद्धजीर्णलिङ्गविषयमिति त्रिस्थलीसेतौ भट्टपादाः। +आर. ७९

## सह्याद्रिखण्डः

अक्रोधादयः सामान्यधर्माः

**[4]न क्रोधो न च मात्सर्यं न द्वेषो नाशुभा मतिः।**
**तत्त्ववित् χकारयेदेवमेवं सर्वत्र निर्णयः॥**

8 वचनेऽस्मिन् श्रावणक्रियायाः प्रधानकर्म नोक्तम्। आदर्शपुस्तके पूर्वोत्तरग्रन्थतोऽपि तन्न ज्ञायते। केवलं 'द्विजादीनां स्वस्वधर्मान्' इत्यस्य प्रधानकर्मणः संभवं गृहीत्वाऽत्र संगृहीतम्।

\+ सिन्धु. आरवत्।

χ अविवक्षितण्यर्थोऽयं प्रयोगः, परनिष्ठक्रोधादौ स्वातन्त्र्याभावात्।

(१) **पमा.** १।३८४.
(२) **सस्मृ.** १०१ काशीखण्डे.
(३) **आर.** ७९; **सिन्धु.** ११८१; **शूक.** ३४; **आम.** ६८.
(४) **सखं.** १।९।७४-७५, ८८.

**अहिंसा सत्यमस्तेयं शौचेन्द्रियविनिग्रहौ।**
**दानं दमो दया शान्तिः सर्वेषां धर्मसाधनम्॥**

देवभक्तशूद्रस्य मन्त्रप्रणवरहितशिव-
नमस्कारानुज्ञा

**नमस्कारोऽप्यनुज्ञातो मन्त्रप्रणववर्जितः।**
**शूद्राणां देवभक्तानां महादेवेन धीमता॥**

द्विजधर्माः, ब्राह्मणाः षट्कर्माणः, क्षत्रिया-
दयस्त्रिकर्माणः, अन्त्यजानां
धर्मकर्माभावः

**[1]अग्निहोत्रतपोयज्ञशौचमार्जवमेव च।**
**सत्यं वेदप्रसङ्गश्च द्विजकर्म परं स्मृतम्॥**
**[2]ब्राह्मणानां च षट्कर्म क्षत्रियाश्च त्रिकर्मजाः॥**
**वैश्याः शूद्राश्च तान्त्रीकाः सर्वशास्त्रेषु निर्णयः।**
**तथा वाऽप्यन्त्यजानां तु नास्ति धर्मश्च कर्म च॥**

धार्मिकाणां मानवत्वनियता दोषा
न वक्तव्याः

**[3]यथाचारं यथाकालं स्वस्वधर्मानुवर्तिनः।**
**जनास्ते नावमन्तव्या दोषाः सर्वानुवर्तिनः॥**
**गुणा एव विचेतव्या दोषा नैव च नैव च।**
**न चात्रातीव कर्तव्यं दोषदृष्टिपरं मनः॥**
**दोषो ह्यविद्यमानोऽपि तत्पराणां प्रदृश्यते॥**
**ततो दोषा न वक्तव्या गुणग्राही भवेज्जनः॥**

सर्वधर्ममूलं सामान्यधर्मः, ब्राह्मण-
निन्दानिषेधः, द्विजशुश्रूषा
शूद्रधर्मः

**सामान्यधर्मचारेण सर्वमुत्तममाचरेत्।**
**स्वमात्राधर्मचारेण कुलमेव समाश्रयेत्॥**
**यत्र वेदस्तत्र कर्म तद्द्वयं नियतं मतम्।**
**न निन्द्याद् ब्राह्मणांल्लोके कथं वाऽपि चरन्ति ते॥**
**[4]शूद्राणां द्विजशुश्रूषा .......॥**

(१) **सखं.** १।६४।२०.
(२) **सखं.** २।४।२९-३०.
(३) **सखं.** २।५।३२-३४, ४६, ६५-६६, ७२-७३.
(४) **सखं.** ४।३।१४.

## सूतसंहिता

प्रतिदिनं शिवपूजनं तत्र द्विजशूद्रादि-
भेदेन विशेषाश्च

***[1]प्रणवेन महादेवं सर्वज्ञं सर्वकारणम्॥**
**[2]ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च सुव्रताः।**
**एवं दिने दिने देवं पूजयेदम्बिकापतिम्॥**

(१) उक्तपूजाविधावाश्रमभेदेन मन्त्रव्यवस्थामाह — ब्रह्मचारीति। तादी.

(२) आश्रमभेदेन (तथा) स्त्रीणां शूद्राणां च मन्त्रे विशेषं दर्शयति — प्रणवेनेति। प्रणवेनेति प्रणवयुक्तेन पञ्चाक्षरेणेत्यर्थः। ωस्मृकौ. ६५-६६

**[3]संन्यासी देवदेवेशं प्रणवेनैव पूजयेत्।**
**नमोन्तेन शिवेनैव स्त्रीणां पूजा विधीयते।**
**विरक्तानां च शूद्राणामेवं पूजा प्रकीर्तिता॥**

(१) पञ्चाक्षरपूजायां स्त्रीशूद्राणां विशेषमाह — नमोन्तेनेति। तादी.

(२) शिवेन मन्त्रेण। स्मृकौ. ६६

(३) प्रणवेनैव प्रणवयुक्तेन पञ्चाक्षरेणेत्यर्थः। नमोन्तेन शिवेनैवेति। 'शिवाय नमः' इत्येतावता प्रणव-रहितेनेत्यर्थः। एतेन स्त्रीशूद्रयोः प्रणवे नाधिकार इत्युक्तम्। शूशि. ७२

(४) पञ्चाक्षरस्य श्रुतौ नमआदित्वेऽपि स्त्रीशूद्रयो-र्नमोन्तत्वम्। अन्ये त्वन्ते भिन्नं नमःशब्दमाहुः। शूक. ३५

(५) एवकारः प्रणवपरिसंख्यार्थः। आम. ६८

(६) एवं च ब्रह्मचारिगृहस्थवानप्रस्थानाम् 'ॐ नमः शिवाय' इति प्रणवाद्यः षडक्षरः। स्त्रीशूद्राणां तु 'शिवाय नमः' 'नमः शिवाय' इति वा। संन्यासिनां तु केवलः प्रणवः। अस्य प्रणवयोगेन षडक्षरत्वेऽपि 'पञ्चाक्षरमन्त्रजपं करिष्ये' इत्येव संकल्पः। इन्दु. १३५

**[1]अन्येषामपि सर्वेषां नराणां मुनिपुंगवाः।**
**पूजा देवालयं दृष्ट्वा प्रणामस्तस्य कीर्तितः।**
**एवं पूजा कृता येन सफलं तस्य जीवितम्॥**

अन्येषामिति। संकरजातीनां देवालयं दृष्ट्वा तस्य देवालयस्य प्रणाम एव पूजा प्रकीर्तिता। पुराणान्तरेषु स्त्रीशूद्रादीनां सर्वेषां प्रणवमात्रं परित्यज्यावशिष्टेन पञ्चाक्षरेणैव पूजाऽभिहिता। यथाऽऽह वसिष्ठः — 'ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः। सदोंनमः शिवायेति शिवमन्त्रं समाश्रयेत्॥ पञ्चाक्षरः सप्रणवो द्विजराज्ञोर्विधीयते। विट्शूद्रजन्मनां वाऽपि स्त्रीणां निर्बीज एव हि॥ सबीजः सस्वरः सौम्य विप्रक्षत्रिय-योर्द्वयोः। नेतरेषामितीशानः स्वयमेवाऽऽह शंकरः॥ दुर्वृत्तो वृत्तहीनो वा पतितोऽप्यन्त्यजोऽपि वा। जपेत्पञ्चाक्षरीं विद्यां जपेनैवाऽऽप्नुयाच्छिवम्॥' इति। शैवपुराणे शिवोऽप्याह — 'समन्त्रकं तु पतितो ह्यर्चयेद्यदि पद्मज। नारकी स्यान्न संदेहो मम पञ्चाक्षरं विना॥ मयोक्तमेतद्धि पुरा पवित्रं पञ्चाक्षरं मन्त्रमिमं शिवायै। साधारणं पद्मज वेदसारं ममाऽऽज्ञया सर्वमिदं सुरेश॥' इति। नन्दीश्वरोऽपि — 'शृणुष्वातिरहस्यं ते वदामि मुनिपुंगव। हिताय सर्वलोकानां पतितानां

---

* अतः प्राक् महादेवपूजाप्रयोगविधिरुक्तः। तत्रान्ते 'हृदि विसर्जयेत्' इति विसर्जनमुक्तम्। तत्र 'महादेवं प्रणवेन हृदि विसर्जयेत्' इति पूर्वत्रास्य श्लोकार्धस्यान्वयस्तात्पर्यदीपिकायामुक्तः। स एव युक्तः, न तु स्मृतिकौमुद्याद्यभिमत उत्तरत्रान्वयः, पूर्वोक्त-पूजाविधाने तत्तदङ्गभेदेनानेकवारं प्रणवस्य विहितत्वेन मन्त्रा-काङ्क्षायास्तेनैव शमयितुं युक्तत्वात्, पूर्वं शिवलिङ्गे हृदयस्थित-देवेशावाहने प्रणवस्य विहितत्वात् तेनैव शिवलिङ्गावाहितस्य देवेशस्य हृदि विसर्जनकल्पनाया उचितत्वाच्च। किंच, वाक्यस्य महादेवपदेनैव कर्मणि निराकाङ्क्षत्वेन 'देवम् अम्बिकापतिम्' इत्यस्य समाप्तपुनरात्तत्वापत्तेः, महादेवेतिसंज्ञाशब्देनैव देवविशेषस्य व्यावृत्तौ सिद्धायां पुनस्तस्यैव देवपदेन सामान्यतो बोधितस्य अम्बिकापतिमिति विशेषणेन व्यावर्तनाच्च प्रतीयमानो वाक्यभेदः कौमुद्यादिपक्षे नोपपद्यते।

ω इन्दु. स्मृकौवत्।

(१) **सूसं.** १।४।१२; **स्मृकौ.** ६६; **इन्दु.** १३५.

(२) **सूसं.** १।४।१३; **स्मृकौ.** ६६; **शूक.** ३५ स्थश्च (स्थो वा) सुव्रताः (सुव्रतः); **इन्दु.** १३५ सुव्रताः (सुव्रतः).

(३) **सूसं.** १।४।१४-१५; **स्मृकौ.** ६६; **शूशि.** ७२ चतुर्थचरणमारभ्य वचनं मुद्रितम्, व्याख्यानात्तु शेषांशोऽप्यस्तीति निश्चीयते, (-); **शूक.** ३५ प्रथमार्धं नास्ति; **संम.** ८१ विरक्तानां च (शिवमन्त्रेण) प्रथमार्धं नास्ति; **आम.** ६८ द्वितीयार्धमात्रम्, (-); **बाल.** १।७७ पृ. २१०, १।१२१ पृ. ३८१ सर्वं संमवत्; **इन्दु.** १३५.

(१) **सूसं.** १।४।१५-१६; **स्मृकौ.** ६६; **शूशि.** ७२ पुंगवाः (पुंगव) (-); **शूक.** ३५.

विशेषतः॥ समन्त्रकं सकृद्वाऽपि पतितः पूजयेद्यदि। नारकी स्यान्न संदेहः शैवपञ्चाक्षरं विना॥' इति। इत्थमुक्ता पूजा। तत्फलमाह – एवं पूजा कृता येनेति। तादी.

ग्रहणे ब्रह्मतीर्थे स्नानदानादेर्महिमा

**[×][1]तत्र स्नात्वाऽर्कवारे च ग्रहणे चैव पर्वणि।**
**यो ददाति धनं भक्त्या स याति परमेश्वरम्॥**

सत्यप्रियवचनम्

**[2]सत्यं ब्रूयात्प्रियं ब्रूयात्सर्वभूतेषु सर्वदा॥**

संन्यासिपूजनम्

**[3]दुर्वृत्तो वा सुवृत्तो वा मूर्खो वा पण्डितोऽपि वा।**
**वेषमात्रेण संन्यासी पूज्यः सर्वेश्वरो यथा॥**

सिद्धान्तश्रवणे सर्वेषामधिकारः

**[4]सिद्धान्तश्रवणं प्राहुर्द्विजानां मुनिसत्तम।**
**शूद्राणां च विरक्तानां तथा स्त्रीणां महामुने।**
**सिद्धान्तश्रवणं प्रोक्तं पुराणश्रवणं बुधैः॥**

(१) तथा स्त्रीणामिति। त्रैवर्णिकस्त्रीणां तु श्रौते विकल्प उक्तः॥ तादी.

(२) पुराणेष्वपि सकलशास्त्रसिद्धान्तप्रतिपादनात् पुराणान्येवोपचार (?रात्)सिद्धान्तशब्देन प्रतिपाद्यन्ते। स्मृकौ. ५१

(३) सिद्धान्तः स्मृत्यर्थः। संर. ६७८

ग्रहणे वेदतीर्थे स्नानदानादेर्महिमा

**.........[5]ग्रहणे सोमसूर्ययोः॥**
**स्नात्वा यो वेदतीर्थेऽस्मिञ्श्रद्धया परया सह।**
**प्रदक्षिणत्रयं कृत्वा वेदारण्याधिपं शिवम्॥**
**प्रणम्य दण्डवत्तस्मै प्रदत्त्वा दीपमच्युत।**
**निष्कमात्रं धनं दत्त्वा श्रद्धया शिवयोगिने॥**
**उपवासं करोत्यत्र स मुक्तो नात्र संशयः॥**

वर्णाश्रमहीनैः सह लाञ्छितैश्च सह सर्वव्यवहाराणां निषेधः

**[1]वर्णाश्रमादिहीनानां कुर्यात्सेवां न मानवः।**
**सह वासं न तैः कुर्यात्सह संभाषणं तथा॥**
**सह प्रमोदं संसृष्टिं सह पङ्क्तौ तु भोजनम्।**
**सहैव गमनं सख्यं सह संबन्धमेव च॥**
**देवानां च मनुष्याणां तथाऽन्येषां च लाञ्छनम्।**
**न कुर्यान्मोहतो वाऽपि यदि कुर्यात्पतत्यधः॥**
**कस्यचिल्लाञ्छितो मर्त्यो न साक्षी सर्वथा भवेत्।**
**श्रौतस्मार्तसदाचारे नाधिकारी च लाञ्छितः॥**
**लाञ्छिताश्च न संभाष्या न स्पृश्याश्च तथैव च।**
**न दर्शनीयास्तान् राजा देशाच्छीघ्रं प्रवासयेत्॥**

अप्रियभाषणस्य परदेहे क्षतकरणलोहितकरणाङ्कनकरणानां च निषेधाः

**[2]मोहेनापि सदा नैव कुर्यादप्रियभाषणम्।**
**यदि कुर्यात्प्रमादेन हन्ति तं देवता परा॥**
**न क्षतं विग्रहे कुर्यादस्त्रशस्त्रनखादिभिः।**
**तथा न लोहितं कुर्याद्यदि कुर्यात्पतत्यधः॥**
**स्वदेहे परदेहे वा न कुर्यादङ्कनं नरः।**
**यदि कुर्यात्तु चक्राद्यैः पतत्येव न संशयः॥**
**रहस्यं सर्वशास्त्राणां मया प्रोक्तं समासतः।**
**शरीरं देवतारूपं भजध्वं यूयमास्तिकाः॥**

एवं सर्वशरीरेषु देवतानामवस्थानं प्रतिपाद्य तत्प्रयोजनमाह – मोहेनापीत्यादिना। अप्रियभाषणहननलोहितकरणानि तत्तच्छरीरावस्थितदेवतापराधाभावाय न कार्याणीत्यर्थः। श्रुतिरपि – 'योऽपगुराते शतेन यातयात्' इत्युपक्रम्य 'तस्माद्ब्राह्मणाय नापगुरेत न निहन्यान्न लोहितं कुर्यात्' (तैसं. २।६।१०।२) इत्यप्रियभाषणानि निषेधति। तस्मात्स्वशरीरवत्परकीयशरीरेष्वपि सर्वत्र देवतामयत्वं चिन्तनीयमित्यर्थः। तादी.

× ब्रह्मतीर्थे।
(१) **सूसं.** १।१३।७५-७६.
(२) **सूसं.** २।४।२८.
(३) **सूसं.** २।६।३६.
(४) **सूसं.** २।१४।१३-१४; **स्मृकौ.** ५१; **शूशि.** ४७ (=); **शूक.** १७ सत्तम (सत्तमाः); **बाल.** १।७७ पृ. २११ प्राहुर्द्वि (प्राह द्वि) : १।१२१ पृ. ३८१; **संर.** ६८७ प्रथमार्धं नास्ति.
(५) **सूसं.** ३।३।९९, १००-१०२.

(१) **सूसं.** ४।१।१६।२९-३३.
(२) **सूसं.** ४।२।२।७।३१-३४.

वेदोक्तानामागमोक्तानां च धर्माणां
वैदिकतान्त्रिकरूपाधिकारिभेदेन
व्यवस्था

[1]श्रुतिपथगलितानां मानुषाणां तु तन्त्रं
गुरुगुरुरखिलेशः सर्ववित्प्राह शंभुः।
श्रुतिपथनिरतानां तत्र नैवास्ति किंचि-
द्धितकरमिह सर्वं पुष्कलं सत्यमुक्तम्॥

एवमुपनिषदामागमानां चाद्वितीयब्रह्मपरत्वं प्रतिपाद्य तत्राधिकारिभेदेन व्यवस्थामाह — श्रुतिपथेति। यद्यपि कामिकादिप्रभेदानामागमानां श्रुतीनां चोक्तरीत्याऽद्वितीयपरशिवस्वरूपात्मप्रतिपादने विप्रतिपत्तिर्नास्ति तथाऽपि य उपनीतास्त्रैवर्णिकाः श्रुतावधिकृतास्तेषां तन्मुखादेव परतत्त्वमधिगन्तव्यम्, येषां श्रुतावनधिकारस्तेषामागममुखादिति विवेकः।

तादी. १०५२-१०५३

श्रुतिरपि मनुजानां वर्णधर्मं बभाषे
परगुरुरखिलेशः प्राह तन्त्रेषु तद्वत्।
श्रुतिपथगलितानां वर्णधर्मं घृणाब्धिः
श्रुतिपथनिरतानां नैव तत्सेवनीयम्॥

वर्णाश्रमधर्मा अपि तान्त्रिकाणां वैदिकानां च तत्तद्व्यवस्थयैव प्रयोक्तव्या इत्याह — श्रुतिरपीति।

तादी.

श्रुतिपथनिरतानामाश्रमा यद्वदुक्ताः
परगुरुरखिलेशस्तद्वदाहाऽऽश्रमांश्च।
श्रुतिपथगलितानां मानुषाणां तु तन्त्रं
हरिरपि मुनिमुख्याः प्राह तन्त्रे स्वकीये॥
विधिरपि मनुजानामाह वर्णाश्रमांश्च
श्रुतिपथगलितानामेव तन्त्रे स्वकीये।
श्रुतिपथनिरतानां ते न संसेवनीयाः
श्रुतिपथसममार्गो नैव सत्यं मयोक्तम्॥

न केवलं शैवागमानामेवं व्यवस्था। विष्णुब्रह्मागमानामपि श्रुत्यनधिकृतविषयत्वं दर्शयति — श्रुतिपथेति।

तादी.

हरहरिविधिपूजा कीर्तिता सर्वतन्त्रे
श्रुतिपथनिरतानां यद्वदुक्ता तु पूजा।
श्रुतिपथगलितानामेव तन्त्रोक्तपूजा
श्रुतिपथनिरतानां सर्ववेदोदितैव॥
श्रुतिपथगलितानां सर्वतन्त्रेषु लिङ्गं
कथितमखिलदुःखध्वंसकं तत्र तत्र।
श्रुतिपथनिरतानां तत्सदा नैव धार्यं
श्रुतिरपि मनुजानामाह लिङ्गं विशुद्धम्॥

## शिवरहस्यम्

ग्रहणे जपादेर्विधिः स्वापादेर्निषेधश्च

[1]सूर्येन्दुग्रहणं यावत्तावत्कुर्याज्जपादिकम्।
न स्वपेन्न च भुञ्जीत स्नात्वा भुञ्जीत मुक्तयोः॥

## गरुडपुराणम्

वर्णानां यजनादिधर्मविभागः
क्षमादमादयः सामान्य-
धर्माश्च

[2]यजनं याजनं दानं ब्राह्मणस्य प्रतिग्रहः।
अध्यापनं चाध्ययनं षट् कर्माणि द्विजोत्तमे॥
दानमध्ययनं यज्ञो धर्मः क्षत्रियवैश्ययोः।
दण्डस्तथा क्षत्रियस्य कृषिर्वैश्यस्य शस्यते॥
शुश्रूषैव द्विजातीनां शूद्राणां धर्मसाधनम्।
कारुकर्म तथाऽऽजीवो पाकयज्ञोऽपि धर्मतः॥
क्षमा दमो दया दानमलोभोऽभ्यास एव च।
आर्जवं चानसूया च तीर्थानुसरणं तथा।
सत्यं संतोष आस्तिक्यं तथा चेन्द्रियनिग्रहः॥
देवताभ्यर्चनं पूजा ब्राह्मणानां विशेषतः।
अहिंसा प्रियवादित्वमपैशुन्यमरूक्षता॥
एत आश्रमिका धर्माश्चातुर्वर्ण्यं ब्रवीम्यतः॥

ग्रहणे जपादेर्विधिः

......[3]ग्रहणे चन्द्रसूर्ययोः।
.......दत्तं भवति चाक्षयम्॥
[4]तपो जपस्तीर्थसेवा देवब्राह्मणपूजनम्।
ग्रहणादिषु कालेषु महापातकनाशनम्॥

---

(१) सूसं. ४।२।२।८।२५-३०.

(१) सम. ७८.
(२) गरुड. १।४९।२-४, २१-२४.
(३) गरुड. १।५१।३०,३१.
(४) गरुड. १।५२।२२.

वर्णानां यजनादिधर्मविभागः अहिंसादयः सामान्यधर्माश्च

**[1]इज्याध्ययनदानानि वैश्यस्य क्षत्रियस्य च।**
**प्रतिग्रहोऽधिको विप्रे याजनाध्यापने तथा॥**
**प्रधानं क्षत्रिये कर्म प्रजानां परिपालनम्।**
**कुसीदकृषिवाणिज्यं पाशुपाल्यं विशः स्मृतम्॥**
**शूद्रस्य द्विजशुश्रूषा द्विजो यज्ञान्न हापयेत्॥**
**अहिंसा सत्यमस्तेयं शौचमिन्द्रियसंयमः।**
**दमं क्षमाऽऽर्जवं दानं सर्वेषां धर्मसाधनम्॥**

कर्तव्यानां सत्सङ्गादीनां वर्जनीयानां क्षुद्रसंवादादीनां चानुक्रमणम्

**[2]सद्भिः सङ्गं प्रकुर्वीत सिद्धिकामः सदा नरः।**
**नासद्भिरिहलोकाय परलोकाय वा हितम्॥**
**वर्जयेत् क्षुद्रसंवादमदुष्टस्य 8तु दर्शनम्।**
**विरोधं सह मित्रेण संप्रीतिं शत्रुसेविना॥**
**मूर्खशिष्योपदेशेन दुष्टस्त्रीभरणेन च।**
**दुष्टानां संप्रयोगेण पण्डितोऽप्यवसीदति॥**
**ब्राह्मणं बालिशं क्षत्रमयोद्धारं विशं जडम्।**
**शूद्रमक्षरसंयुक्तं दूरतः परिवर्जयेत्॥**
**परीवादं परार्थं च परिहासं परस्त्रियम्।**
**परवेश्मनि वासं च न कुर्वीत कदाचन॥**
**त्यज दुर्जनसंसर्गं भज साधुसमागमम्।**
**कुरु पुण्यमहोरात्रं स्मर नित्यमनित्यताम्॥**

यज्ञाध्ययनदानानि द्विजसामान्यधर्माः

**[3]इज्याध्ययनदानानि यथाशास्त्रं सनातनः।**
**ब्रह्मक्षत्रियवैश्यानां सामान्यो धर्म उच्यते॥**

अहिंसादयः सामान्यधर्माः

**अहिंसा सूनृता वाणी सत्यशौचे क्षमा दया।**
**वर्णिनां लिङ्गिनां चैव सामान्यो धर्म उच्यते॥**

ग्रहणे रात्रिस्नानानुमतिः

**राहोश्च दर्शने स्नानं प्रशस्तं निशि नान्यथा॥**

शोकनिन्दा दानविधिश्च

**[4]श्रुतं धर्मं बलं धैर्यं सुखमुत्साहमेव च।**
**शोको हरति वै नृणां तस्माच्छोकं परित्यजेत्॥**
**कर्मदाराः कर्मलोकाः कर्मसंबन्धिबान्धवाः।**
**कर्मणि प्रेरयन्तीह पुरुषं सुखदुःखयोः॥**
**दानमेव परो धर्मो दानात्सर्वमवाप्यते।**
**दानात्स्वर्गश्च राज्यं च दद्याद्दानं ततो नरः॥**

कूपतडागादिनिर्माणप्रशंसा

**कूपवापीतडागादीनारामांश्चैव कारयेत्।**
**त्रिसप्तकुलमुद्धृत्य विष्णुलोके महीयते॥**

साधुदर्शनप्रशंसा

**साधूनां दर्शनं पुण्यं तीर्थादपि विशिष्यते।**

सत्यदमादय एकादश सनातनधर्माः

**कालेन तीर्थं फलति सद्यः साधुसमागमः॥**
**सत्यं दमस्तपः शौचं संतोषश्च क्षमाऽऽर्जवम्।**
**ज्ञानं शमो दया दानमेष धर्मः सनातनः॥**

सर्वार्थसाधनदेहधनरक्षणविधिः

**[1]विना देहेन कस्यापि पुरुषार्थो न विद्यते।**
**तस्माद्देहं धनं रक्षेत्पुण्यकर्माणि साधयेत्॥**
**रक्षेच्च सर्वदाऽऽत्मानमात्मा सर्वस्य भाजनम्।**
**रक्षणे यत्नमातिष्ठेज्जीवन् भद्राणि पश्यति॥**

## पद्मपुराणम्

ग्रहणे अमरकण्टकाद्यनेकक्षेत्रतीर्थेषु शिवदर्शनस्नानादीनां प्रशंसा

**[2]चन्द्रसूर्योपरागेषु गच्छेद्योऽमरकण्टकम्।**
**अश्वमेधाद्दशगुणं प्रवदन्ति मनीषिणः॥**
**स्वर्गलोकमवाप्नोति दृष्ट्वा तत्र महेश्वरम्।**
**संनिहत्याऽऽगमिष्यन्ति राहुग्रस्ते दिवाकरे(?)॥**
**तदेव निखिलं पुण्यं पर्वतेऽमरकण्टके।**
**पुण्डरीकस्य यज्ञस्य फलं प्राप्नोति मानवः॥**
**[3]गङ्गा कनखले पुण्या प्रयागं पुष्करं गया।**
**कुरुक्षेत्रं तथा पुण्यं राहुग्रस्ते दिवाकरे॥**
**[4]सूर्योपरागे यो दद्याद्दानं चैव यथेच्छया।**
**तीर्थस्नानं तु यद्दानमक्षयं तस्य तद्भवेत्॥**

8 नास्ति दुष्टः यस्मादिति अमूल्यमितिवद्योजनीयम्।
(१) **गरुड.** १।९६।२६-२९.
(२) **गरुड.** १।१०८।२-५, १३, २६.
(३) **गरुड.** १।२१३।१०, २२, १२०.
(४) **गरुड.** १।२२१।२-४, २२-२४.

(१) **गरुड.** २।४९।१७-१८.
(२) **पद्म.** १।१५।७४-७७.
(३) **पद्म.** १।१९।११.
(४) **पद्म.** १।२०।५४-५६.

**चन्द्रसूर्योपरागेषु वृषोत्सर्गमनुत्तमम्।**
**न जानन्ति नरा मूढा विष्णुमायाविमोहिताः॥**
**[1]संनिहितायामुपस्पृश्य राहुग्रस्ते दिवाकरे।**
**अश्वमेधशतं तेन इष्टं भवति शाश्वतम्॥**

अहिंसाप्रशंसा

**[2]कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा।**
**परपीडां न कुर्वन्ति न ते यान्ति यमालयम्॥**
**न वेदैर्न च दानैश्च न तपोभिर्न चाध्वरैः।**
**कथंचित्स्वर्गतिं यान्ति पुरुषाः प्राणिहिंसकाः॥**
**अहिंसा परमो धर्मो ह्यहिंसैव परं तपः।**
**अहिंसा परमं दानमित्याहुर्मुनयः सदा॥**
**भूतानि येऽत्र हिंसन्ति जलस्थलचराणि च।**
**जीवनार्थं च ते यान्ति कालसूत्रं च दुर्गतिम्॥**
**तस्माद्वैश्य परत्रेह कर्मणा मनसा गिरा।**
**लोकद्वयसुखप्रेप्सुर्धर्मज्ञो न तदाचरेत्॥**
**लोकद्वये न विन्दन्ति सुखानि प्राणिहिंसकाः।**
**ये न हिंसन्ति भूतानि न ते बिभ्यति कुत्रचित्॥**

परस्त्रीगमननिषेधः

**[3]मातृवत्परदारान्ये मन्यन्ते वै नरोत्तमाः।**
**न ते यान्ति नरश्रेष्ठ कदाचिद्यमयातनाम्॥**
**[4]तस्माद्धर्मान्वितैस्त्याज्यं परदारोपसेवनम्।**
**नयन्ति परदारास्तु नरकानेकविंशतिम्॥**

संक्षेपेण अद्रोहादिधर्मकथनम्,
तपोदानकीर्तननिषेधः

**[5]संक्षिप्य वच्मि ते धर्मं नरकस्य निवारकम्।**
**अद्रोहः सर्वभूतेषु वाङ्मनःकायकर्मभिः॥**
**[6]इन्द्रियाणां विरोधश्च दानं च हरिसेवनम्।**
**वर्णाश्रमक्रियाणां च पालनं विधितः सदा॥**

**[1]स्वर्गार्थी सर्वदा वैश्य तपो दानं न कीर्तयेत्।**
**यथाशक्ति तथा दद्यादात्मनो हितकाम्यया॥**
**[2]उपानच्छत्रवस्त्रादि पत्रं मूलं फलं जलम्।**
**अवन्ध्यं दिवसं कार्यं दरिद्रेणापि वैश्यक॥**
**इह लोके परे चैव न दत्तं नोपतिष्ठते॥**

ब्राह्मणलक्षणभूता क्षमादयादिगुणाः

**[3]क्षमा दया च विज्ञानं सत्यं चैव दमः शमः।**
**अध्यात्मनित्यता ज्ञानमेतद्ब्राह्मणलक्षणम्॥**
**एतस्मान्न प्रमाद्येत विशेषेण द्विजोत्तमः।**
**यथाशक्ति चरन्धर्मं निन्दितानि विवर्जयेत्॥**

धर्मसाधनशरीररक्षणविधिः

**धर्मस्याऽऽयतनं यत्नाच्छरीरं परिपालयेत्।**
**न हि देहं विना विष्णुः पुरुषैर्विद्यते परः॥**

परद्रोहः वेददेवतानिन्दा हिंसा अनृतम्
अहिताप्रियवचनमित्येतेषां
निषेधाः

**भूतानां प्रियकारी स्यान्न परद्रोहकर्मधीः।**
**न वेददेवतानिन्दां कुर्यात्तैश्च न संवसेत्॥**
**[4]न हिंस्यात्सर्वभूतानि नानृतं वा वदेत्क्वचित्।**
**नाहितं नाप्रियं वाच्यं न स्तेनः स्यात्कदाचन॥**

धर्मध्वजित्वनिषेधः

**[5]न धर्मस्यापदेशेन पापं कृत्वा व्रतं चरेत्।**
**व्रतेन पापं व्याच्छाद्य कुर्वन्स्त्रीशूद्रलम्भनम्॥**
**प्रेत्येह चेदृशो विप्रो गर्ह्यते ब्रह्मवादिभिः।**
**छद्मना चरितं यच्च व्रतं रक्षांसि गच्छति॥**

देवगुरुद्रोहनिषेधः

**देवद्रोहं न कुर्वीत गुरुद्रोहं तथैव च।**
**देवद्रोहाद्गुरुद्रोहः कोटिकोटिगुणाधिकः।**
**जनापवादो नास्तिक्यं तस्मात्कोटिगुणाधिकम्॥**

---

(१) **पद्म.** १।२७।७८.

(२) **पद्म.** १।३१।२५-२७, ३०, ३५-३६.

(३) **पद्म.** १।३१।८५ : ६।२४५।१२ मन्यन्ते वै (संपश्यन्ति) नरश्रेष्ठ (विशां श्रेष्ठ).

(४) **पद्म.** १।३१।८७ : ६।२४५।१४ र्मान्वितै (र्मरतै) रोपसेवनम् (रावलोकनम्) दारास्तु (दारास्तान्).

(५) **पद्म.** १।३१।१६८ वच्मि ते (कथितं) निवारकम् (निरूपणम्) : ६।२४५।१०२-१०३.

(६) **पद्म.** १।३१।१६९ : ६।२४५।१०३-१०४ तः सदा (वत्तथा).

---

(१) **पद्म.** १।३१।१७० : ६।२४५।१०४-१०५ तथा (सदा) काम्यया (मिच्छता).

(२) **पद्म.** १।३१।१७१-१७२ च्छत्रवस्त्रादि (द्वस्त्रदत्तानि) : ६।२४५।१०५-१०६ पत्रं (ह्यन्नं) उत्तरार्धे (अवन्ध्यं दिवसं कुर्याद्दरिद्रोऽपि विशां वर॥) न दत्तं नोपतिष्ठते (नादत्तमुपतिष्ठति).

(३) **पद्म.** १।५४।२५-२६, ३७, ४०.

(४) **पद्म.** १।५५।१; **मेधा.** ४।३२, ४।१७६, ८।२९९ (सर्व०) प्रथमचरणमात्रम् (=) : ८।१०४ प्रथमचरणमात्रम् (=): **मच.** ८।३५१ प्रथमचरणमात्रम्, धर्मशास्त्रम्.

(५) **पद्म.** १।५५।११-१२, १५, ५०-५१.

शूद्राय अदेया मत्यादिपदार्थाः
व्रतधर्मोपदेशनिषेधश्च

**न शूद्राय मतिं दद्यात्कृसरं पायसं दधि।**
**नोच्छिष्टं वा मधु घृतं न च कृष्णाजिनं हविः।**
**न चैवास्मै व्रतं ब्रूयान्न च धर्मं वदेद्बुधः॥**

ग्रहणे दानस्य प्रशंसा

**[1]अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः।**
**संक्रान्त्यादिषु कालेषु दत्तं भवति चाक्षयम्॥**

याचितयुद्धदानं वीरधर्मः, स महाफलः
अन्यथा नरकश्च

**वराह उवाच –**
**[2]वीराणां त्वं न जानासि सुधर्मं शृणु सांप्रतम्।**
**युद्धार्थिना हि वीरेण वीरं गत्वा प्रयाचितम्।**
**देहि मे योधनं संख्ये युद्धार्थी त्वहमागतः॥**
**परेण याचितं युद्धं न ददाति यदा भटः।**
**कामाल्लोभाद्भयाद्वाऽपि मोहाद्वा शृणु वल्लभे॥**
**कुम्भीपाके स नरके वसेद्युगसहस्रकम्।**
**क्षत्रियाणां परो धर्मो युद्धं देयं न संशयः॥**
**तद्युद्धं +दीयमानेन रङ्गभूमिं गतेन वै।**
**जित्वा शत्रुं पुनस्तत्र यशः कीर्तिं( ?र्तिः) प्रभुञ्ज- ( ?ज्य) ते॥**
**नो वा हतोऽपि युद्धेऽस्मिन्युध्यमानः सुनिर्भयः।**
**वीरलोकमवाप्नोति दिव्याँल्लोकान्प्रभुञ्जते 8॥**

पुण्यकालेष्वसद्ब्राह्मणोऽपि पूज्यः

**[3]ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चापि चतुर्थकः।**
**पुण्यकालेषु सर्वेषु निर्धनं पूजयेद्द्विजम्॥**
**मूर्खं वाऽपि च विद्वांसं तस्य पुण्यफलं शृणु।**
**अश्वमेधस्य यज्ञस्य फलं तस्य प्रजायते॥**

ग्रहणस्नानादौ सर्वेषां जलानां ब्राह्मणानां
वायसतीर्थस्य च प्रशंसा

**[4]कुर्याद्ग्रासं सैंहिकेयस्तत्क्षणं दुर्लभं भवेत्।**
**सर्वं गङ्गासमं तोयं वेदव्याससमा द्विजाः॥**
**स्नानं वायसतीर्थे यो गङ्गास्नानफलं लभेत्।**
**दानमक्षय्यपुण्यं स्यात्कोटिजन्मार्जितं तथा।**
**पापं नश्येत्समूलं च किं पुनः क्रतुकोटिभिः॥**
**विद्यार्थी लभते विद्यां पुत्रार्थी पुत्रमाप्नुयात्।**
**मोक्षार्थी लभते मोक्षं मन्त्रसिद्धिर्भवेद्ध्रुवम्॥**

दानस्य तपसोऽपि श्रेष्ठत्वम्

**[1]तपसोऽपि परं दानं प्रोक्तं च तत्त्वदर्शिभिः।**
**अतो यत्नाद्द्विजश्रेष्ठ दानकर्म समाचरेत्॥**
**ब्रह्महत्यादिपापानि यानि वै द्विजसत्तम।**
**तानि दानेन हन्यन्ते तस्माद्दानं समाचरेत्॥**

ब्राह्मणस्य यजनाध्यापनादिर्धर्मः
गार्हस्थ्यविकल्पश्च

**[2]ब्राह्मणेन सदा कार्यं यजनाध्यापनादिकम्।**
**वेदान्पठित्वा विरजेन्नो वा गार्हस्थ्यमाविशेत्॥**

ग्रहणनिमित्तकश्राद्धविधिः, शूद्रस्य
दानं प्रधानम्

**......[3]उपरागे तु.......।**
**.......श्राद्धं देयं विजानता॥**
**[4]एवं शूद्रोऽपि सामान्यं वृद्धिश्राद्धं च सर्वदा।**
**नमस्कारेण मन्त्रेण कुर्याद्दानादिकं बुधः॥**
**दानं प्रधानं शूद्रस्य प्राहेति भगवान्प्रभुः।**
**दानेन सर्वकामाप्तिस्तस्य संजायते यतः॥**

यज्ञोद्देशेनैवान्नं पाच्यं पशवश्च वध्याः

**[5]नाऽऽत्मार्थं पाचयेदन्नं न वृथा घातयेत्पशून्।**
**प्राणी वा यदि वाऽप्राणी संस्काराद्यज्ञमर्हति॥**

स्वापभोजनायोग्याः कालाः

**न दिवा प्रस्वपेज्जातु न पूर्वापररात्रयोः।**
**न भुञ्जीतान्तराकाले नानृतं तु वदेत ह॥**

शमविधिः अर्थतृष्णानिषेधः
संतोषविधिश्च

**[6]यत्पृथिव्यां व्रीहियवं हिरण्यं वाससी स्त्रियः।**
**न नूनं कस्य पर्याप्तमिति मत्वा शमं व्रजेत्॥**

---

+ ददानेनेत्यर्थः। विकरणव्यत्यय आर्षः।
8 आर्षो वचनव्यत्ययः।
(१) **पद्म.** १।५७।५३.
(२) **पद्म.** २।४२।५१-५६.
(३) **पद्म.** २।६७।१६-१७.
(४) **पद्म.** ३।१०।२१-२४.

(१) **पद्म.** ३।२४।५५, ५८.
(२) **पद्म.** ४।९।४०.
(३) **पद्म.** ५।९।१३८, १३९.
(४) **पद्म.** ५।९।१९९-२००.
(५) **पद्म.** ५।१५।३०५-३०६.
(६) **पद्म.** ५।१९।२४५, २५१, २५७, २६१, २६८, २७३, ३१२, ३३४-३३५, ३४१, ३५७-३५८.

अर्थसंपद्विमोहाय विमोहो नरकाय च।
तस्मादर्थमनर्थाय श्रेयोर्थी दूरतस्त्यजेत्॥
अनन्तपारा दुष्पूरा तृष्णा दोषशतावहा।
अधर्मबहुला चैव तस्मात्तां परिवर्जयेत्॥
असंतोषः परं दुःखं संतोषः परमं सुखम्।
सुखार्थी पुरुषस्तस्मात्संतुष्टः सततं भवेत्॥

प्रतिग्रहनिन्दा

प्रतिग्रहसमर्थोऽपि न प्रसज्येत्प्रतिग्रहे।
प्रतिग्रहेण विप्राणां ब्रह्म तेजश्च हीयते॥

विद्वदाचरितो धर्मोऽनुष्ठेयः

यदाचरन्ति विद्वांसः सदा धर्मपरायणाः।
तदेव विदुषा कार्यमात्मनो हितमिच्छता॥

दमो ब्राह्मणस्य विशेषधर्मः

ब्राह्मणानां विशेषेण दमो धर्मः सनातनः।
दमस्तेजो वर्धयति पवित्रो दम उत्तमः॥

अपमानेऽपि परदूषणं त्याज्यम्

अपमानी तु न ध्यायेत्तस्य पापं कदाचन।
स्वधर्ममपि चावेक्ष्य परधर्मं न दूषयेत्॥
आत्मानमपि जानीयात्परं दोषैस्तु नाऽऽक्षिपेत्।
मन्त्रहीनं क्रियाभिर्वा जन्मनाऽप्यथवा पुनः॥

अपमाने संतुष्टिः संमाने जुगुप्सा च कार्या

अमृतस्येव तृप्येत अपमानस्य योगवित्।
विषवच्च जुगुप्सेत संमानस्य सदा द्विजः॥

स्वप्रतिकूलं परस्मिन्नाऽऽचरणीयम्

श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम्।
आत्मनः प्रतिकूलानि परेषां न समाचरेत्॥

श्रोत्रियलक्षणं तदनुषङ्गेण ब्राह्मण-द्विज-विप्रलक्षणानि च, पूज्यतमत्व-प्रयोजकास्तीर्थस्नानादयो ब्राह्मणाचाराः

नारद उवाच –
[1]जातः कः श्रोत्रियस्तात सत्कुले वाऽप्यसत्कुले।
सदसत्कर्मकर्ता वा कः पूज्यो भुवि वाडवः॥
ब्रह्मोवाच –
सच्छ्रोत्रियकुले जातो अक्रियो नैव पूजितः।
असत्क्षेत्रकुले पूज्यौ व्यासवैभाण्डकौ यथा॥
क्षत्रियाणां कुले जातो विश्वामित्रोऽस्ति मत्समः।
वेश्यापुत्रो वसिष्ठश्च अन्ये सिद्धा द्विजातयः॥
तस्मात्सच्छ्रोत्रियादीनां शृणु पुत्रक लक्षणम्।
धरायां तीर्थभूतानां सर्वपापहराय च॥
जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते।
विद्यया याति विप्रत्वं त्रिभिः श्रोत्रियलक्षणम्॥
विद्यापूतो मन्त्रपूतो वेदपूतस्तथैव च।
तीर्थस्नानादिभिर्मेध्यो विप्रः पूज्यतमः स्मृतः॥
नारायणे सदा भक्तः शुद्धान्तःकरणस्तथा।
जितेन्द्रियो जितक्रोधः समः सर्वजनेषु च॥
गुरुदेवातिथेर्भक्तः पित्रोः शुश्रूषणे रतः।
परदारे मनो यस्य कदाचिन्नैव मोदते॥
पुराणकथको नित्यं धर्माख्यानस्य संततिः।
अस्यैव दर्शनान्नित्यमश्वमेधादिजं फलम्॥
संलापे गतिरेतस्य भागीरथ्या जलस्य च।
व्रतैश्च विविधैः पूतो नित्यस्नानद्विजार्चनैः॥
मित्रामित्रे दयालुः स्यात्समः सर्वजनेषु च।
परस्वं न हरेद्यस्तु तृणमप्यटवीगतम्॥
कामक्रोधादिनिर्मुक्त इन्द्रियैरजितः पुमान्।
परदारान्न गृह्णाति मनसाऽपि गृहागतान्॥
गायत्रीं च जपेन्नित्यं त्रिपदां यजुरप्यगाम्(?)।
चतुर्वेदमयीं शुद्धां चतुर्विंशतिवर्णकाम्।
अस्या भेदं च संज्ञाय ब्रह्मणः पदवीं व्रजेत्॥
स्वाध्यायनिरतो विप्रो यः पठेत्पाठयेत्परान्।
धर्मं च श्रावयेल्लोके सदाचारं श्रुतिं स्मृतिम्॥
पुराणसंहितां नूनं तथैव धर्मसंहिताम्।
श्रावयित्वा तु लोकेषु श्रावयित्वा द्विजातिषु॥
उर्व्यां विष्णुसमः सोऽपि पूजनीयो नरः सुरैः।
यद्बलं चाक्षयं तस्य तीर्थभूतानघस्य च।
समानमर्चनं कृत्वा नरो यात्यच्युतालयम्॥

(१) पद्म. ५।४३।१३०-१४२, १५४-१५७.

अधमत्वप्रयोजकाः स्नानरहितत्वादयो
ब्राह्मणाचाराः, आग्नेयादीनि
पञ्चस्नानानि सलक्षणानि,
अधमब्राह्मणस्यापि
वधस्य निषेधः

**नारद उवाच –**

**'तव प्रसादतो ज्ञातो विप्रः पुण्यतमश्च यः।**
**यथा जानामि देवेश क्रियया ब्राह्मणाधमम्।**
**ब्रूहि शीघ्रं सुरश्रेष्ठ यदि प्रीतिं मयीच्छसि॥**

**ब्रह्मोवाच –**

**स्नानैर्दशविधैर्मुक्तस्तथैव तर्पणादिभिः।**
**संध्यासमयहीनश्च स एव ब्राह्मणाधमः॥**
**देवपूजाव्रतैर्मुक्तो वेदविद्यादिभिस्तथा।**
**सत्यशौचादिभिश्चैव योगज्ञानाग्नितर्पणैः॥**
**पञ्च स्नानानि विप्राणां कीर्तितानि महर्षिभिः॥**
**आग्नेयं वारुणं ब्राह्मं वायव्यं दिव्यमेव च॥**
**आग्नेयं भस्मना स्नानमद्भिर्वारुणमुच्यते।**
**आपो हि ष्ठेति वै ब्राह्मं वायव्यं गोरजः स्मृतम्॥**
**अद्भिरातपवर्षाभिर्दिव्यं स्नानमुदाहृतम्।**
**एतैस्तु मन्त्रतः स्नानात्तीर्थानां फलमाप्नुयात्॥**
**तुलसीपत्रसंलग्नं शालग्रामशिलाम्बु च।**
**गवां शृङ्गोदकं चैव विप्रपादोदकं च यत्।**
**गुरूणामेव मुख्यानां पूतात्पूतमिति स्मृतिः॥**
**त्यागतीर्थादिभिर्यज्ञैर्व्रतहोमादिभिस्तथा।**
**यत्फलं लभते धीरः स्नानैरेतैस्तु तत्फलम्॥**
**तर्पणैश्च विनिर्मुक्तः पितृणामेव नित्यशः।**
**पितृहा नरकं याति संध्याहीनस्तु विप्रहा॥**
**मन्त्रव्रतविहीनश्च वेदविद्यागुणैरपि।**
**यज्ञदानादिभिर्मुक्तो ब्राह्मणश्चाधमाधमः॥**
**यज्ञार्थका देवलका नाक्षत्रा ग्रामयाजकाः।**
**परदाररता नित्यं पञ्चैते ब्राह्मणाधमाः॥**
**मन्त्रसंस्कारहीनाश्च शुचिसंयमवर्जिताः।**
**मोघाशिनो दुरात्मानो ब्राह्मणाश्चाधमाधमाः॥**
**अपि स्तेयरता मूढाः सर्वधर्मविवर्जिताः।**
**उन्मार्गगामिनो नित्यं ब्राह्मणाश्चाधमाधमाः॥**
**श्राद्धादिकर्मरहिता गुरुसेवाविवर्जिताः।**
**अमन्त्रा भिन्नमर्यादा एते सर्वेऽधमाधमाः॥**
**असंभाष्या इमे दुष्टाः सर्वे निरयगामिनः।**
**अमेध्यास्ते दुराचारा अपूज्याश्च समन्ततः॥**
**खड्गोपजीविकाः प्रेष्या गोवाहनरता द्विजाः।**
**कारुवृत्त्युपजीवाश्च ऋणवार्धुषिकाश्च ये॥**
**बालापण्याभिचाराश्च अन्त्यजाश्रयमाश्रिताः।**
**कृतघ्नाश्च गुरुघ्नाश्च एते सर्वाधमाः स्मृताः॥**
**ये चैवान्ये हताचाराः पाखण्डा धर्मनिन्दकाः।**
**दूषका देववेदानामेते ब्रह्मद्विषो द्विजाः॥**
**तथापि ब्राह्मणश्चैव न हन्तव्यः कदाचन।**
**एनं हत्वा द्विजश्रेष्ठ ब्रह्महा पुरुषो भवेत्॥**
**अन्त्यजातिषु म्लेच्छेषु तथा चण्डालजातिषु।**
**पतितो वाऽन्ययोनिभ्यां न हन्तव्यः कथंचन॥**
**सर्वजातिस्त्रियं गत्वा सर्वाभक्ष्यस्य भक्षणात्।**
**द्विजत्वं न विनश्येत पुण्याद्विप्रो भवेत्पुनः॥**

क्षुधाशान्त्यकरणादिब्राह्मणपीडानां विपाकाः,
आततायिब्राह्मणहत्यानुमतिः,
ब्राह्मणस्य पूज्यत्वम्

**नारद उवाच –**

**'प्राप्नुवन्ति गतिं लोकाः पूजयित्वा द्विजोत्तमान्।**
**द्विजानां पीडनं कृत्वा गतिं गच्छन्ति कां प्रभो॥**

**ब्रह्मोवाच –**

**क्षुधा संतप्तदेहानां ब्राह्मणानां महात्मनाम्।**
**नार्चयेच्छक्तितो भक्त्या स याति नरकं नरः॥**
**परुषेण क्रोशयित्वा क्रोधाद्यस्तु विसर्जयेत्।**
**स याति नरकं घोरं महारौरवकृच्छ्रकम्॥**
**संनिवृत्तस्ततः कीटादन्त्य(?द्यन्य) जातिषु जायते।**
**ततो रोगी दरिद्रस्तु क्षुधया परिपीडितः॥**
**नावमन्येत्ततो विप्रं क्षुधया गृहमागतम्।**
**न ददामीति यो ब्रूयाद्देवाग्निब्राह्मणेषु च।**
**तिर्यग्योनिशतं गत्वा चाण्डालत्वं स गच्छति॥**
**पादमुद्यम्य यो विप्रं हन्ति गां पितरौ गुरुम्।**
**रौरवे नियतं वासस्तस्य नास्तीति निष्कृतिः॥**
**यदि पुण्याद्भवेज्जन्म स एव पङ्गुतां व्रजेत्।**

(१) **पद्म.** ५।४४।१-२१.

(१) **पद्म.** ५।४५।१२-२५, ३३-३६, ५५-५६, ५९-६०.

अतिदीनो विषादी च दुःखशोकाभिपीडितः।
एवं जन्मत्रयं प्राप्य भवेत्तस्यैव निष्कृतिः॥
मुष्टिचर्पटकीलैश्च हन्याद्विप्रं तु यः पुमान्।
तापने रौरवे घोरे कल्पान्तं सोऽपि तिष्ठति॥
अथ जन्म समासाद्य कुक्कुरः 8करवण्डकः।
अन्त्यजातिषु जातोऽपि दरिद्रः कुक्षिशूलवान्॥
पाद उद्यम्यते वाचा तस्य पादे शिलीपदः।
खञ्जो वा मृदुजङ्घो वा खण्डपादो भवेन्नरः।
पक्षवातेन चाङ्गानि प्रकम्पन्ते सदैव हि॥
मातरं पितरं विप्रं स्नातकं च तपस्विनम्।
हत्वा गुरुगणं क्रोधात्कुम्भीपाके चिरं वसेत्।
उषित्वा चैव जायेत कीटजातिषु तत्परम्॥
विरुद्धं परुषं वाक्यं यो वदेद्धि द्विजातिषु।
अष्टौ कुष्ठाः प्रजायन्ते तस्य देहे दृढं सुत॥
न्यायेनोपार्जितां वृत्तिं ब्रह्मस्वं हरते तु यः।
अक्षयं नरकं प्राप्य पुनर्जन्म न विद्यते॥
पिशुनो यस्तु विप्राणां रन्ध्रान्वेषणतत्परः।
तं दृष्ट्वाऽप्यथवा स्पृष्ट्वा सचैलो जलमाविशेत्॥
ब्रह्मस्वं प्रणयाद्भुक्तं दहत्यासप्तमं कुलम्।
विक्रमेण तु भुञ्जानो दश पूर्वान्दशापरान्॥
न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते।
विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम्॥
आततायिनमायान्तमपि चेदन्तिके रणे।
जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत्॥
लोके विप्रसमो नास्ति पूजनीयो जगद्गुरुः।
हत्वा तं यद्भवेत्पापं तत्परं च न विद्यते॥
देववत्पूजनीयोऽसौ देवासुरगणैर्नरैः।
ब्राह्मणस्य समो नास्ति त्रिषु लोकेषु निश्चितम्॥

पुंगवानां स्त्रीगवीनां च नानाविधसेवाविधयः गोप्रशंसा च

[1]घासमुष्टिं परगवे यो ददाति सदाऽऽह्निकम्।
सर्वपापक्षयस्तस्य स्वर्गं चाक्षयमश्नुते॥
यथा विप्रस्तथा गौश्च द्वयोः पूजाफलं समम्।
विचारे ब्राह्मणो मुख्यो नृणां गावः पशौ तथा॥
तस्माद्गौः पूजनीयोऽसौ विप्रदेवासुरैरपि।
उदारः सर्वकार्येषु आतस्तथ्यो गुणाकरः॥
सर्वदेवमयः साक्षात्सर्वसत्त्वानुकम्पकः।
अस्य कायं मया सृष्टं पुरैव पोषणं प्रति॥
अत एव मया दत्तं वरं चातिसुशोभनम्।
एकजन्मनि ते मोक्षस्तवास्त्विति विनिश्चितम्॥
अत्रैव ये मृता गावस्ते गच्छन्ति ममाऽऽलयम्।
पापस्य कणमात्रं तु तेषां देहे न तिष्ठति॥
देवी गौर्धेनुका देवै(?वा)श्चाऽऽदिदेवास्त्रिशक्तिकाः।
प्रसादाद्यस्य यज्ञानां प्रभवो हि विनिश्चितम्॥
गवां सर्वपवित्राणि पुनन्ति सकलं जगत्।
मूत्रं गोर्गोमयं क्षीरं दधि सर्पिस्तथैव च॥
अमीषां भक्षणे पापं न तिष्ठति कलेवरे।
तस्मादघृतं दधि क्षीरं नित्यं खादन्ति धार्मिकाः॥
विशिष्टं सर्वद्रव्येषु गव्यमिष्टं परं शुभम्।
यस्यास्य भोजनं नास्ति तस्य मूर्तिस्तु पूतिका॥
अन्नाद्यं पञ्चरात्रेण सप्तरात्रेण वै पयः।
दधि विंशतिरात्रेण घृतं स्यान्मासमेककम्(?)॥
अगव्यैर्यश्च भुङ्क्ते वै मासमेकं निरन्तरम्।
भोजने तस्य मर्त्यस्य प्रेतादन्ति(?) तथैव हि॥
परमान्नं परं शुद्धं स्विन्नं चाऽऽतपतण्डुलैः।
भुक्त्वा तु यत्कृतं पुण्यं कोटिकोटिगुणं भवेत्॥
अन्यच्चापि च यद्द्रव्यं हविष्यं शास्त्रनिर्मितम्।
तद्भुक्त्वा यत्कृतं कर्म सर्वं लक्षगुणं भवेत्॥
निरामिषं च यत्किंचित्तस्माद्यद्यत्फलं लभेत्।
तस्माद्गौः सर्वकार्येषु शस्त एको युगे युगे।
सर्वदा सर्वकालेषु धर्मकामार्थमोक्षदः॥
नारद उवाच –
केषु किं वा (?कस्य) प्रयोगेण परं पुण्यं प्रकीर्तितम्।
वद तत्सर्वलोकेश यथा जानामि तत्त्वतः॥
ब्रह्मोवाच –
सकृत्प्रदक्षिणं कृत्वा गोधनं चाभिवन्दयेत्।
सर्वपापैर्विनिर्मुक्तः स्वर्गं चाक्षयमश्नुते॥
सुराचार्यो यथा वन्द्यः पूज्योऽसौ माधवो यथा।
सप्तप्रदक्षिणं कृत्वा चैश्वर्यात्पाकशासनः॥
कल्य उत्थाय गोमध्ये पात्रं गृह्य सहोदकम्।

8 शब्दोऽयं कोशेषु नोपलभ्यते।
(१) पद्म. ५।४५।११९-१२०, १२९-१६३.

निषिञ्चेद्यो गवां शृङ्गं मस्तकेनैव तज्जलम्॥
प्रतीक्षेत निराहारस्तस्य पुण्यं निबोधत।
श्रूयन्ते यानि तीर्थानि त्रिषु लोकेषु नारद॥
सिद्धचारणयुक्तानि सेवितानि महर्षिभिः।
अभिषेकः समस्तेषां गवां शृङ्गोदकस्य च॥
प्रातरुत्थाय यो मर्त्यः स्पृशेद्गां च घृतं मधु।
सर्षपांश्च प्रियङ्गूंश्च कल्मषात्प्रतिमुच्यते॥
घृतक्षीरप्रदा गावो घृतयोन्यो घृतोद्भवाः।
घृतनद्यो घृतावर्तास्ता मे सन्तु सदा गृहे॥
घृतं मे सर्वगात्रेषु घृतं मे मनसि स्थितम्।
गावो ममाग्रतो नित्यं गावः पृष्ठत एव च॥
गावश्च सर्वगात्रेषु गवां मध्ये वसाम्यहम्।
इत्याचम्य जपेन्मन्त्रं सायं प्रातरिमं शुचिः॥
सर्वपापक्षयस्तस्य स्वर्लोके पूजितो भवेत्।
यथा गौश्च तथा विप्रो यथा विप्रस्तथा हरिः॥
हरिर्यथा तथा गङ्गा एते नह्य(?ऽनह्य)वृषाः स्मृताः।
गावो बन्धुर्मनुष्याणां मनुष्या बान्धवा गवाम्॥
गौस्तु यस्मिन्गृहे नास्ति तद्बन्धुरहितं गृहम्।
गोमुखे चाऽऽश्रिता वेदाः सषडङ्गपदक्रमाः॥
शृङ्गयोश्च स्थितौ नित्यं सदैव हरकेशवौ।
उदरे च स्थितः स्कन्दः शीर्षे ब्रह्मा स्थितः सदा॥
वृषध्वजो ललाटे च शृङ्गाग्र इन्द्र एव च।
कर्णयोरश्विनौ देवौ चक्षुषोः शशिभास्करौ॥
दन्तेषु गरुडो देवो जिह्वायां च सरस्वती।
अपाने सर्वतीर्थानि प्रस्रावे चैव जाह्नवी॥
ऋषयो रोमकूपेषु मुखतः पृष्ठतो यमः।
धनदो वरुणश्चैव दक्षिणं पार्श्वमाश्रितौ॥
वामपार्श्वे स्थिता यक्षास्तेजस्वन्तो महाबलाः।
मुखमध्ये च गन्धर्वा नासाग्रे पन्नगास्तथा॥
खुराणां पश्चिमे पार्श्वे अप्सराश्च समाश्रिताः।
गोमये वसते लक्ष्मीर्गोमूत्रे सर्वमङ्गला॥
पादाग्रे खेचरा वेद्या हम्भशब्दे प्रजापतिः।
चत्वारः सागराः पूर्णा धेनूनां च पयोधरे॥
गां च स्पृशति यो नित्यं स्नातो भवति नित्यशः।
अतो मर्त्यः प्रपुष्टैस्तु सर्वपापैः प्रमुच्यते॥
गवां खुरोद्धतरजः शिरसा यस्तु धारयेत्।
स च तीर्थजले स्नातः सर्वपापैः प्रमुच्यते॥

ग्रहणनिमित्तकश्राद्धप्रशंसा

[1]ग्रहणे चन्द्रसूर्यस्य पुण्यतीर्थे गयादिषु।
तर्पयित्वा पितृन्याति माधवस्य निकेतनम्॥

असत्समागमस्य दीपच्छायाकलिद्रुमयोरवस्थानस्य अस्पृश्यादिभिः सहाऽऽलापस्य च निषेधाः

न स्थातव्यं न गन्तव्यं क्षणमप्यसता सह।
न तिष्ठेच्च क्षणं धीरो दीपच्छाये कलिद्रुमे॥
अस्पृश्यैः सह चाऽऽलापं पतितैः कुपितैः सह।
न कुर्यात्क्षणमात्रं तु कृत्वा गच्छेच्च रौरवम्॥

ग्रहणनिमित्तकश्राद्धप्रशंसा

[2]अमावास्यां युगाद्यायां ग्रहणे चन्द्रसूर्ययोः।
पार्वणं कुरुते यस्तु सोऽक्षयं लोकमश्नुते॥
ग्रहणे चन्द्रसूर्यस्य दत्त्वा पिण्डोदकं नरः।
अक्षयं लभते स्वर्गं पितृणां पुष्टिवर्धनम्॥
तत्र स्नानं न कुर्याद्यः शक्त्या पिण्डोदकं नरः।
न ददाति पितृणां तु चाण्डालत्वं स गच्छति॥

ग्रहणनिमित्तकदानस्नानयोः सर्वदेयवस्तुद्विजतोयानि प्रशस्तानि, विशेषतो गङ्गातोयस्य प्रशंसा

सर्वं भूमिसमं दानं सर्वे व्याससमा द्विजाः।
सर्वं गङ्गासमं तोयं राहुग्रस्ते निशाकरे॥
इन्दोर्लक्षगुणं प्रोक्तं दशलक्षं तु भास्करे।
गङ्गातोये तु संप्राप्ते इन्दोः कोटी रवेर्दश॥
गवां शतसहस्रस्य सम्यग्दत्तस्य यत्फलम्।
तत्फलं जाह्नवीस्नाने राहुग्रस्ते निशाकरे॥
चन्द्रसूर्यग्रहे चैव अवगाहति जाह्नवीम्।
स स्नातः सर्वतीर्थेषु किमर्थमटते महीम्॥

चूडामणिग्रहणस्य लक्षणं प्रशंसा च

सूर्यग्रहः सूर्यवारे सोमे सोमग्रहस्तथा।
चूडामणिरिति ख्यातस्तत्रानन्तफलं स्मृतम्॥
समुपोष्य तयोः पूर्वे पुण्यतीर्थे तु यः पुमान्।
दत्त्वा पिण्डोदकं दानं सत्यलोके प्रतिष्ठितः॥

---

(१) पद्म. ५।४६।४५, १११-११२.
(२) पद्म. ५।४७।२२०, २३५-२४२.

वापीकूपतडागनिर्माणस्य वृक्षरोपणस्य च विधिः

[1]पानीयदानं परमं दानानामुत्तमं सदा।
तस्माद्वापीश्च कूपांश्च तडागानि च कारयेत्॥
अतीतानागतौ चोभौ पितृवंशौ महाऋषे।
तारयेद्वृक्षरोपी च तस्माद्वृक्षांस्तु रोपयेत्॥

सत्यवदनविधिः सत्यप्रशंसा च

सत्यमेव परं ब्रह्म सत्यमेव परं तपः।
सत्यमेव परो मोक्षः सत्यमेव परं श्रुतम्।
सत्यं देवेषु जागर्ति सत्यं च परमं पदम्॥
तपो यज्ञाश्च पुण्यं च तथा देवर्षिपूजनम्।
आद्यो विधिश्च विद्या च सर्वं सत्ये प्रतिष्ठितम्॥
सत्यं यज्ञस्तथा दानं मन्त्रा देवी सरस्वती।
व्रतचर्या तथा सत्यमोंकारः सत्यमेव च॥
सत्येन वायुरभ्येति सत्येन तपते रविः।
सत्येन चाग्निर्दहति स्वर्गः सत्येन तिष्ठति॥
पूजनं सर्वदेवानां सर्वतीर्थावगाहनम्।
सत्यं यो वदते लोके सर्वमाप्नोत्यसंशयः॥
अश्वमेधसहस्रं च सत्यं च तुलया धृतम्।
सर्वेषां सर्वयज्ञानां सत्यमेव विशिष्यते॥
सत्ये देवाः प्रतीयन्ते पितर ऋषयस्तथा।
सत्यमाहुः परं धर्मं सत्यमाहुः परं पदम्॥
सत्यमाहुः परं ब्रह्म तस्मात्सत्यं वदामि ते।
मुनयः सत्यनिरतास्तपस्तप्त्वा सुदुष्करम्॥
सत्यधर्मरताः सिद्धास्ततः स्वर्गमितो गताः।
अप्सरोगणसंघुष्टैर्विमानैः परितो वृताः॥
वक्तव्यं च सदा सत्यं न सत्याद्विद्यते परम्॥

ब्रह्मस्वदेवस्वोपभोगनिषेधः

[2]ब्रह्मस्वे नो रतिं कुर्यात्प्राणैः कण्ठगतैरपि।
अग्निदग्धाः प्ररोहन्ति ब्रह्मदग्धो न रोहति॥
ब्रह्मस्वेन तु यत्सौख्यं देवस्वेन तु या रतिः।
तद्धनं कुलनाशाय भवत्यात्मविनाशनम्॥

गोरक्षणप्रशंसा

[3]गोरक्षणे महान्धर्मो रक्षितुः स्वर्गतिर्भवेत्॥

(१) पद्म. ६।२८।१, १३-१४, १९-२९.
(२) पद्म. ६।३३।४२, ४७.
(३) पद्म. ६।२०१।२.

आशात्यागविधिः

[1]कष्टाऽऽशा वर्तते यस्य स विद्वानप्यपण्डितः।
स चाशान्तः प्रमन्युः स्याद्धीमानप्यतिमूढधीः॥
आशा भङ्करी पुंसामाशा ज्ञेयाऽग्निसंनिभा।
तस्मादाशां त्यजेत्प्राज्ञो य इच्छेच्छाश्वतं पदम्॥

परदारपरद्रव्यवर्जनस्य अक्रोधस्य च प्रशंसा

[2]मातृवत्परदारान्ये संपश्यन्ति नरोत्तमाः।
न ते यान्ति विशां श्रेष्ठ कदाचिद्यमयातनाम्॥
मनसाऽपि परेषां यः कलत्राणि न सेवते।
स हि लोकद्वये पूज्यस्तेन वैश्य धरा धृता॥
तस्माद्धर्मरतैस्त्याज्यं परदारावलोकनम्।
नयन्ति परदारास्तान्नरकानेकविंशतिम्॥
न लोभे* जायते येषां परद्रव्येषु मानसम्।
ते यान्ति देवलोकं हि न यमं वैश्यसत्तम॥
सत्सु क्रोधनिदानेषु यः क्रोधेन न जीयते।
जितनाकः स मन्तव्यः पुरुषोऽक्रोधनो भुवि॥

श्रौतस्मार्ताचारविधिः, शमदमादीनि षट् धर्मसाधनानि

[3]श्रुतिस्मृत्युदितं सम्यङ्नित्यमाचारमाचरेत्।
श्रुतिस्मृत्युक्तकर्माणि नातिक्रामेत बुद्धिमान्॥
शमो दमस्तपः शौचं सत्यमामिषवर्जनम्।
अस्तेयमेवाहिंसा च सर्वेषां धर्मसाधनम्॥

विप्रस्य यक्षराक्षसभूतार्चननिषेधः

यक्षराक्षसभूतानामर्चनं वर्जयेत्सदा।
यो मोहात्कुरुते विप्रः स चाण्डालो भवेद्ध्रुवम्॥
यक्षाणां च पिशाचानां मद्यमांसभुजां तथा।
दिवौकसां तु भजनं सुरापानसमं स्मृतम्॥
कोटिजन्मकृतं पुण्यं यज्ञदानक्रियादिकम्।
सद्यः सर्वं लयं याति यक्षभूतादिपूजनात्॥
सर्वयज्ञस्य भोक्तारं पुराणं पुरुषोत्तमम्।
ज्ञात्वा सर्वं प्रकुर्वीत नित्यनैमित्तिकीः क्रियाः॥

* सतीत्यर्थः।
(१) पद्म. ६।२३८।३०-३१.
(२) पद्म. ६।२४५।१२-१५, १७.
(३) पद्म. ६।२८०।३५, ३९, ९४-९५, ९७, ११६-१२०.

**यक्षराक्षसभूताश्च कूष्माण्डगणभैरवाः।**
**नार्चनीयाः सदा देवि स्वर्गलोकमभीप्सुभिः॥**
**यक्षराक्षसभूतानामर्चनं वर्जयेद्द्विजः।**
**पैशाचत्वमवाप्नोति कल्पकोटिशतत्रयम्॥**
**तस्माद्राक्षसभूतानामर्चनं प्रतिषिध्यते॥**
**कल्पकोटिसहस्राणि कल्पकोटिशतानि च।**
**रौरवं नरकं याति यक्षभूतगणार्चनात्॥**

द्विजानामेव श्रौते शूद्राणां स्मार्ते एव चाधिकारः, शूद्रस्य शिखोपवीतसंस्कृतोच्चारणनिषेधः

[1]**श्रौतं द्विजातयः कुर्युः स्मार्तं शूद्रः समाचरेत्॥**
[2]**न शिखी नोपवीती स्यान्नोच्चरेत्संस्कृतां गिरम्॥**

समन्त्रकगोप्रणामस्य प्रशंसा

[3]**सदा गावः प्रणम्यास्तु मन्त्रेणानेन पार्थिव।**
**नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च।**
**नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः॥**
[4]**मन्त्रस्य स्मरणादेव गोदानफलमाप्नुयात्॥**

## ब्रह्मपुराणम्

सामान्यतो याच्ञानिषेधः, विशेषतः क्षत्रियस्य

[5]**याच्ञेयमखिलाशर्मजननी पापरूपिणी।**
**केनाप्यतो न कार्यैव क्षत्रियेण विशेषतः॥**

ग्रहणे श्राद्धविधिः

[6]**अष्टकासु च कर्तव्यं श्राद्धं मन्वन्तरासु वै।**
**ग्रहणे च व्यतीपाते रविचन्द्रसमागमे॥**

असत्प्रलापादीनि षट् वर्ज्यानि

[7]**असत्प्रलापमनृतं वाक्पारुष्यं च वर्जयेत्।**
**असच्छास्त्रमसद्वादमसत्सेवां च वै द्विजाः॥**

ग्रहणे रात्रिस्नानानुमतिः

**उपरागे परं स्नानमृते दिनमुदाहृतम्॥**

क्षौरे दिक्कालनियमः सचैलस्नानं च

**प्राङ्मुखोदङ्मुखो वाऽपि श्मश्रुकर्म च कारयेत्॥**
**विधर्मिणो वै पर्वादौ संध्याकालेषु षण्ढकाः।**
**क्षुरकर्मणि रिक्तां वै वर्जयीत विचक्षणः॥**
**क्षुरकर्मणि चा(?वा)न्ते च स्त्रीसंभोगे च भो द्विजाः।**
**स्नायीत चैलवान्प्राज्ञः कटभूमिमुपेत्य च॥**

देववेदादीनां दशानां परिहासपरिवादौ वर्ज्यौ, मङ्गलवेषविधिः

**देववेदद्विजातीनां साधुसत्यमहात्मनाम्।**
**गुरोः पतिव्रतानां च ब्रह्मचारितपस्विनाम्।**
**परिवादं न कुर्वीत परिहासं च भो द्विजाः॥**
**धवलाम्बरसंवीतः सितपुष्पविभूषितः।**
**सदा माङ्गल्यवेषः स्यान्न वाऽमाङ्गल्यवान्भवेत्॥**

उद्धतादिभिः चतुर्दशभिः सह मैत्र्या निषेधः

**नोद्धतोन्मत्तमूढैश्च नाविनीतैश्च पण्डितः।**
**गच्छेन्मैत्रीं न शैलूषैर्न च वा जातिदूषितैः॥**
**न चातिव्ययशीलैश्च पुरुषैर्नैव वैरिभिः।**
**कार्याक्षमैर्निन्दितैर्न न चैव विटसङ्गिभिः।**
**न निःस्वैर्न समुद्विग्नैर्न च दैवपरैः सह॥**

उद्यानादौ अकालावस्थाननिषेधः, जनविद्विष्टादिभिः सहाऽऽलापे तत्स्पर्शने च प्रत्यवायः

**नोद्यानादौ विकालेषु प्राज्ञस्तिष्ठेत्कदाचन।**
**नाऽऽलपेज्जनविद्विष्टान्वीरहीनास्तथा स्त्रियः॥**
**देवतापितृसच्छास्त्रयज्विसंन्यासिनिन्दकैः।**
**कृत्वा तु स्पर्शनालापं शुध्यत्यर्कावलोकनात्॥**

नित्यकर्मकर्तव्यता आत्माप्रकोपेण यज्ञकर्तव्यता च

**नित्यस्य कर्मणो हानिं न कुर्वीत कदाचन।**
**तस्य त्वकरणं वक्ष्ये केवलं मृतजन्मसु॥**
**धर्मतो धनमाहार्यं यष्टव्यं चापि यत्नतः।**

(१) **विपा.** ३।२।३७२.
(२) **सिन्धु.** ९२२; **शूक.** ५१; **संदी.** १/८.
(३) **निक.** ४६१; **निप्र.** २१५६६ त्राभ्यो (त्रेभ्यो).
(४) **निक.** ४६१.
(५) **ब्रह्म.** १६८।५.
(६) **ब्रह्म.** २२०।५१, ५२.
(७) **ब्रह्म.** २२१।१९, ५१, ७२, ७७, ७९-८४, १३९-१४१, १४६-१४७, १६३-१६४.

**येन प्रकुपितो नाऽऽत्मा जुगुप्सामेति भो द्विजाः॥**
**तत्कर्तव्यमशङ्केन यन्न गोप्यं महाजनैः॥**

वर्णानां वैशेषिकाः सामान्याश्च धर्माः

**व्यास उवाच —**

**[1]ब्राह्मणक्षत्रियविशां शूद्राणां च यथाक्रमम्।**
**शृणुध्वं संयता भूत्वा वर्णधर्मान्मयोदितान्॥**
**दानदयातपोदेवयज्ञस्वाध्यायतत्परः।**
**नित्योदकी भवेद्विप्रः कुर्याच्चाग्निपरिग्रहम्॥**
**सर्वलोकहितं कुर्यान्नाहितं कस्यचिद्द्विजाः।**
**मैत्री समस्तसत्त्वेषु ब्राह्मणस्योत्तमं धनम्॥**
**गवि रत्ने च पारक्ये समबुद्धिर्भवेद्द्विजाः।**
**ऋतावभिगमः पत्न्यां शस्यते वाऽस्य भो द्विजाः॥**
**दानानि दद्यादिच्छातो द्विजेभ्यः क्षत्रियोऽपि हि।**
**यजेच्च विविधैर्यज्ञैरधीयीत च भो द्विजाः॥**
**दुष्टानां शासनाद्राजा शिष्टानां परिपालनात्।**
**प्राप्नोत्यभिमताँल्लोकान्वर्णसंस्थापको नृपः॥**
***तस्याप्यध्ययनं यज्ञो दानं धर्मश्च शस्यते।**
**नित्यनैमित्तिकादीनामनुष्ठानं च कर्मणाम्॥**
**दानं दद्याच्च शूद्रोऽपि पाकयज्ञैर्यजेत च।**
**पित्र्यादिकं च वै सर्वं शूद्रः कुर्वीत तेन वै॥**
**भृत्यादिभरणार्थाय सर्वेषां च परिग्रहाः।**
**ऋतुकालाभिगमनं स्वदारेषु द्विजोत्तमाः॥**
**दया समस्तभूतेषु तितिक्षा नाभिमानिता।**
**सत्यं शौचमनायासो मङ्गलं विप्रवादिता॥**
**मैत्री चैवास्पृहा तद्वदकार्पण्यं द्विजोत्तमाः।**
**अनसूया च सामान्या वर्णानां कथिता गुणाः।**
**आश्रमाणां च सर्वेषामेते सामान्यलक्षणाः॥**

संतोषसत्पथालम्बनब्राह्यमार्गाक्रमणानि

ब्राह्मणधर्माः

**[2]संतुष्टेन सदा भाव्यं सत्पथालम्बिना सदा।**
**ब्राह्मं हि मार्गमाक्रम्य वर्तितव्यं बुभूषता॥**

शीलकर्मसमाचारगुणरूपाणां स्वर्गफलानां धर्माणामनुक्रमणम्

**8[1]केन शीलेन वै देव कर्मणा कीदृशेन वा।**
**समाचारैर्गुणैः कैर्वा स्वर्गं यान्तीह मानवाः॥**
**सर्वभूतदयावन्तो विश्वास्याः सर्वजन्तुषु।**
**त्यक्तहिंस्रसमाचारास्ते नराः स्वर्गगामिनः॥**
**परस्वनिर्ममा नित्यं परदारविवर्जकाः।**
**धर्मलब्धार्थभोक्तारस्ते नराः स्वर्गगामिनः॥**
**मातृवत्स्वसृवच्चैव नित्यं दुहितृवच्च ये।**
**परदारेषु वर्तन्ते ते नराः स्वर्गगामिनः॥**
**स्वदारनिरता ये च ऋतुकालाभिगामिनः।**
**अग्राम्यसुखभोगाश्च ते नराः स्वर्गगामिनः॥**
**स्तैन्यान्निवृत्ताः सततं संतुष्टाः स्वधनेन च।**
**स्वभाग्यान्युपजीवन्ति ते नराः स्वर्गगामिनः॥**
**परदारेषु ये नित्यं चारित्रावृतलोचनाः।**
**जितेन्द्रियाः शौचपरास्ते नराः स्वर्गगामिनः॥**
**एष दैवकृतो मार्गः सेवितव्यः सदा नरैः।**
**अकषायकृतश्चैव मार्गः सेव्यः सदा बुधैः॥**
**अवृथापकृतश्चैव मार्गः सेव्यः सदा बुधैः।**
**दानकर्मतपोयुक्तः शीलशौचदयात्मकः।**
**स्वर्गमार्गमभीप्सद्भिर्न सेव्यस्त्वत उत्तरः॥**

वाचिकानां स्वर्गफलानां धर्माणामनुक्रमणम्

**उमोवाच —**

**वाचा तु बध्यते येन मुच्यते ह्यथवा पुनः।**
**तानि कर्माणि मे देव वद भूतपतेऽनघ॥**

**शिव उवाच —**

**आत्महेतोः परार्थे वा अधर्माश्रितमेव च।**
**ये मृषा न वदन्तीह ते नराः स्वर्गगामिनः॥**
**वृत्त्यर्थं धर्महेतोर्वा कामकारात्तथैव च।**
**अनृतं ये न भाषन्ते ते नराः स्वर्गगामिनः॥**
**श्लक्ष्णां वाणीं स्वच्छवर्णां मधुरां पापवर्जिताम्।**
**स्वगतेनाभिभाषन्ते ते नराः स्वर्गगामिनः॥**

---

* तस्य वैश्यस्य।

(१) **ब्रह्म.** २२२।२-३, ५-७, १०, १२, १४-१८.

(२) **ब्रह्म.** २२३।६१-६२.

8 प्रश्नोऽयमुमायाः प्रतिवचनं शिवस्य।

(१) **ब्रह्म.** २२४।३,९-५६.

परुषं ये न भाषन्ते कटुकं निष्ठुरं तथा।
न पैशुन्यरताः सन्तस्ते नराः स्वर्गगामिनः॥
पिशुनं न प्रभाषन्ते मित्रभेदकरं तथा।
परपीडाकरं चैव ते नराः स्वर्गगामिनः॥
ये वर्जयन्ति परुषं परद्रोहं च मानवाः।
सर्वभूतसमा दान्तास्ते नराः स्वर्गगामिनः॥
शठप्रलापाद्विरता विरुद्धपरिवर्जकाः।
सौम्यप्रलापिनो नित्यं ते नराः स्वर्गगामिनः॥
न कोपाद्व्याहरन्ते ये वाचं हृदयदारिणीम्।
शान्तिं विन्दन्ति ये क्रुद्धास्ते नराः स्वर्गगामिनः॥
एष वाणीकृतो देवि धर्मः सेव्यः सदा नरैः।
शुभसत्यगुणैर्नित्यं वर्जनीया मृषा बुधैः॥

मानसिकानां स्वर्गफलानां धर्माणाम-
नुक्रमणम्

उमोवाच —
मनसा बध्यते येन कर्मणा पुरुषः सदा।
तन्मे ब्रूहि महाभाग देवदेव पिनाकधृक्॥
महेश्वर उवाच —
मानसेनेह धर्मेण संयुक्ताः पुरुषाः सदा।
स्वर्गं गच्छन्ति कल्याणि तन्मे कीर्तयतः शृणु॥
दुष्प्रणीतेन मनसा दुष्प्रणीतान्तराकृतिः।
नरो बध्येत येनेह शृणु वा तं शुभानने॥
अरण्ये विजने न्यस्तं परस्वं दृश्यते यदा।
मनसाऽपि न गृह्णन्ति ते नराः स्वर्गगामिनः॥
तथैव परदारान्ये कामवृत्ता रहोगताः।
मनसाऽपि न हिंसन्ति ते नराः स्वर्गगामिनः॥
शत्रुं मित्रं च ये नित्यं तुल्येन मनसा नराः।
भजन्ति मैत्र्यं संगम्य ते नराः स्वर्गगामिनः॥
श्रुतवन्तो दयावन्तः शुचयः सत्यसंगराः।
स्वैरर्थैः परिसंतुष्टास्ते नराः स्वर्गगामिनः॥
अवैरा ये त्वनायासा मैत्रचित्तरताः सदा।
सर्वभूतदयावन्तस्ते नराः स्वर्गगामिनः॥
ज्ञानवन्तः क्रियावन्तः क्षमावन्तः सुहृत्प्रियाः।
धर्माधर्मविदो नित्यं ते नराः स्वर्गगामिनः॥
शुभानामशुभानां च कर्मणां फलसंचये।
निराकाङ्क्षाश्च ये देवि ते नराः स्वर्गगामिनः॥
पापोपेतान्वर्जयन्ति देवद्विजपराः सदा।
समुत्थानमनुप्राप्तास्ते नराः स्वर्गगामिनः॥
शुभैः कर्मफलैर्देवि मयैते परिकीर्तिताः।
स्वर्गमार्गपरा भूयः किं त्वं श्रोतुमिहेच्छसि॥

मनुष्यजन्मभोग्यदीर्घायुष्ट्वाल्पायुष्ट्वकुलीनत्वा-
कुलीनत्वादिविषमविपाककारणी-
भूतानां पूर्वजन्मकृतकर्मणां
विस्तरेणानुक्रमणम्

उमोवाच —
महान्मे संशयः कश्चिन्मर्त्यान्प्रति महेश्वर।
तस्मात्त्वं निपुणेनाद्य मम व्याख्यातुमर्हसि॥
केनाऽऽयुर्लभते दीर्घं कर्मणा पुरुषः प्रभो।
तपसा वाऽपि देवेश केनाऽऽयुर्लभते महत्॥
क्षीणायुः केन भवति कर्मणा भुवि मानवः।
विपाकं कर्मणां देव वक्तुमर्हस्यनिन्दित॥
अपरे च महाभाग्या मन्दभाग्यास्तथा परे।
अकुलीनाः कुलीनाश्च संभवन्ति तथा परे॥
दुर्दर्शाः केचिदाभान्ति नराः काष्ठमया इव।
प्रियदर्शास्तथा चान्ये दर्शनादेव मानवाः॥
दुष्प्रज्ञाः केचिदाभान्ति केचिदाभान्ति पण्डिताः।
महाप्रज्ञास्तथा चान्ये ज्ञानविज्ञानभाविनः॥
अल्पवाचास्तथा केचिन्महावाचास्तथा परे।
दृश्यन्ते पुरुषा देव ततो व्याख्यातुमर्हसि॥
शिव उवाच —
हन्त तेऽहं प्रवक्ष्यामि देवि कर्मफलोदयम्।
मर्त्यलोके नरः सर्वो येन स्वं फलमश्नुते॥
प्राणातिपाती योगीन्द्रो दण्डहस्तो नरः सदा।
नित्यमुद्यतशस्त्रश्च हन्ति भूतगणान्नरः॥
निर्दयः सर्वभूतेभ्यो नित्यमुद्वेगकारकः।
अपि कीटपतङ्गानामशरण्यं सुनिर्घृणः॥
एवंभूतो नरो देवि निरयं प्रतिपद्यते।
विपरीतस्तु धर्मात्मा स्वरूपेणाभिजायते॥
निरयं याति हिंसात्मा याति स्वर्गमहिंसकः।
यातनां निरये रौद्रां सुकृच्छ्रां लभते नरः॥
यः कश्चिन्निरयात्तस्मात्समुत्तरति कर्हिचित्।
मानुष्यं लभते वाऽपि हीनायुस्तत्र जायते॥

पापेन कर्मणा देवि युक्तो हिंसादिभिर्यतः।
अहितः सर्वभूतानां हीनायुरुपजायते॥
शुभेन कर्मणा देवि प्राणिघातविवर्जितः।
निक्षिप्तशस्त्रो निर्दण्डो न हिंसति कदाचन॥
न घातयति नो हन्ति घ्नन्तं नैवानुमोदते।
सर्वभूतेषु सस्नेहो यथाऽऽत्मनि तथा परे॥
ईदृशः पुरुषो नित्यं देवि देवत्वमश्नुते।
उपपन्नान्सुखान्भोगान्सदाऽश्नाति मुदा युतः॥
अथ चेन्मानुषे लोके कदाचिदुपपद्यते।
एष दीर्घायुषां मार्गः सुवृत्तानां सुकर्मणाम्।
प्राणिहिंसाविमोक्षेण ब्रह्मणा समुदीरितः॥
उमोवाच –
[1]किंशीलः किंसमाचारः पुरुषः कैश्च कर्मभिः।
स्वर्गं समभिपद्येत संप्रदानेन केन वा॥
महेश्वर उवाच –
दाता ब्राह्मणसत्कर्ता दीनार्तकृपणादिषु।
भक्षभोज्यान्नपानानां वाससां च महामतिः॥
प्रतिश्रयान्सभाः कुर्यात्प्रपाः पुष्करिणीस्तथा।
नित्यकादीनि कर्माणि करोति प्रयतः शुचिः॥
आसनं शयनं यानं गृहं रत्नं धनं तथा।
सस्यजातानि सर्वाणि सक्षेत्राण्यथ योषितः॥
सुप्रशान्तमना नित्यं यः प्रयच्छति मानवः।
एवंभूतो नरो देवि देवलोकेऽभिजायते॥
तत्रोष्य सुचिरं कालं भुक्त्वा भोगाननुत्तमान्।
सहाप्सरोभिर्मुदितो रमित्वा नन्दनादिषु॥
तस्माच्च्युतो महेशानि मानुषेषूपजायते।
महाभागकुले देवि धनधान्यसमाचिते॥
तत्र कामगुणैः सर्वैः समुपेतो मुदाऽन्वितः।
महाकायो महाभोगो धनी भवति मानवः॥
एते देवि महाभागाः प्राणिनो दानशीलिनः।
ब्रह्मणा वै पुरा प्रोक्ताः सर्वस्य प्रियदर्शनाः॥
अपरे मानवा देवि प्रदानकृपणा द्विजाः।
येऽन्नानि न प्रयच्छन्ति विद्यमानेऽप्यबुद्धयः॥
दीनान्धकृपणान्दृष्ट्वा भिक्षुकानतिथीनपि।
याच्यमाना निवर्तन्ते जिह्वालोभसमन्विताः॥

न धनानि न वासांसि न भोगान्न च काञ्चनम्।
न गाश्च नान्नविकृतिं प्रयच्छन्ति कदाचन॥
अप्रलुब्धाश्च ये लुब्धा नास्तिका दानवर्जिताः।
एवंभूता नरा देवि निरयं यान्त्यबुद्धयः॥
ते वै मनुष्यतां यान्ति यदा कालस्य पर्ययात्।
धनरिक्ते कुले जन्म लभन्ते स्वल्पबुद्धयः॥
क्षुत्पिपासापरीताश्च सर्वलोकबहिष्कृताः।
निराशाः सर्वभोगेभ्यो जीवन्त्यधर्मजीविकाः॥
अल्पभोगकुले जाता अल्पभोगरता नराः।
अनेन कर्मणा देवि भवन्त्यधनिनो नराः॥
अपरे दम्भिनो नित्यं मानिनः परतो रताः।
आसनार्हस्य ये पीठं न यच्छन्त्यल्पचेतसः॥
मार्गार्हस्य च ये मार्गं न प्रयच्छन्त्यबुद्धयः।
अर्घार्हान्न च संस्कारैरर्चयन्ति यथाविधि॥
पाद्यमाचमनीयं वा प्रयच्छन्त्यभि( ?न प्रयच्छन्त्य )बुद्धयः।
शुभं चाभिमतं प्रेम्णा गुरुं नाभिवदन्ति ये॥
अभिमानप्रवृद्धेन लोभेन सममास्थिताः।
संमान्यांश्चावमन्यन्ते वृद्धान्परिभवन्ति च।
एवंविधा नरा देवि सर्वे निरयगामिनः॥
ते चेद्यदि नरास्तस्मान्निरयादुत्तरन्ति च।
वर्षपूगैस्ततो जन्म लभन्ते कुत्सिते कुले॥
श्वपाकपुल्कसादीनां कुत्सितानामचेतसाम्।
कुलेषु तेऽभिजायन्ते गुरुवृद्धोपतापिनः॥
न दम्भी न च मानी यो देवतातिथिपूजकः।
लोकपूज्यो नमस्कर्ता प्रसूतो मधुरं वचः॥
सर्वकर्मप्रियकरः सर्वभूतप्रियः सदा।
अद्वेषी सुमुखः श्लक्ष्णः स्निग्धवाणीप्रदः सदा॥
स्वागतेनैव सर्वेषां भूतानामविहिंसकः।
यथार्थं सत्क्रियापूर्वमर्चयन्नवतिष्ठते॥
मार्गार्हाय ददन्मार्गं गुरुमभ्यर्चयन्सदा।
अतिथिप्रग्रहरतस्तथाऽभ्यागतपूजकः॥
एवंभूतो नरो देवि स्वर्गतिं प्रतिपद्यते।
ततो मानुष्यमासाद्य विशिष्टकुलजो भवेत्॥
तत्रासौ विपुलैर्भोगैः सर्वरत्नसमायुतः।
यथार्हदाता चार्हेषु धर्मचर्यापरो भवेत्॥
संमतः सर्वभूतानां सर्वलोकनमस्कृतः।

(१) ब्रह्म. २२५।१-६३.

स्वकर्मफलमाप्नोति स्वयमेव नरः सदा।
एष धर्मो मया प्रोक्तो विधात्रा स्वयमीरितः॥
यस्तु रौद्रसमाचारः सर्वसत्त्वभयंकरः।
हस्ताभ्यां यदि वा पद्भ्यां रज्ज्वा दण्डेन वा पुनः॥
लोष्टैः स्तम्भैरुपायैर्वा जन्तून्बाधेत शोभने।
हिंसार्थं निष्कृतिप्रज्ञः प्रोद्वेजयति चैव हि॥
उपक्रामति जन्तूंश्च उद्वेगजननः सदा।
एवं शीलसमाचारो निरयं प्रतिपद्यते॥
स चेन्मनुष्यतां गच्छेद्यदि कालस्य पर्ययात्।
बह्वाबाधापरिक्लिष्टे कुले जायति सोऽधमे॥
लोकद्विष्टोऽधमः पुंसां स्वयं कर्मकृतैः फलैः।
एष देवि मनुष्येषु बोद्धव्यो ज्ञातिबन्धुषु॥
अपरः सर्वभूतानि दयावाननुपश्यति।
मैत्रीदृष्टिः पितृसमो निर्वैरो नियतेन्द्रियः॥
नोद्वेजयति भूतानि न च हन्ति दयापरः।
हस्तपादैश्च नियतैर्विश्वास्यः सर्वजन्तुषु॥
न रज्ज्वा न च दण्डेन न लोष्टैर्नाऽऽयुधेन च।
उद्वेजयति भूतानि शुभकर्मा दयापरः॥
एवं शीलसमाचारः स्वर्गे समुपजायते।
तत्रासौ भवने दिव्ये मुदा वसति देववत्॥
स चेत्स्वर्गक्षयान्मर्त्यो मनुष्येषूपजायते।
अल्पायासो निरातङ्कः स जातः सुखमेधते॥
सुखभागी निरायासो निरुद्वेगः सदा नरः।
एष देवि सतां मार्गो बाधा यत्र न विद्यते॥
उमोवाच —
इमे मनुष्या दृश्यन्ते ऊहापोहविशारदाः।
ज्ञानविज्ञानसंपन्नाः प्रज्ञावन्तोऽर्थकोविदाः।
दुष्प्रज्ञाश्चापरे देव ज्ञानविज्ञानवर्जिताः॥
केन कर्मविपाकेन प्रज्ञावान्पुरुषो भवेत्।
अल्पप्रज्ञो विरूपाक्ष कथं भवति मानवः।
एवं त्वं संशयं छिन्धि सर्वधर्मभृतां वर॥
जात्यन्धाश्चापरे देव रोगार्ताश्चापरे तथा।
नराः क्लीबाश्च दृश्यन्ते कारणं ब्रूहि तत्र वै॥
महेश्वर उवाच —
ब्राह्मणान्वेदविदुषः सिद्धान्धर्मविदस्तथा।
परिपृच्छन्त्यहरहः कुशलाकुशलं सदा॥
वर्जयन्तोऽशुभं कर्म सेवमानाः शुभं तथा।
लभन्ते स्वर्गतिं नित्यमिह लोके यथासुखम्॥
स चेन्मनुष्यतां याति मेधावी तत्र जायते।
श्रुतं यज्ञानुगं यस्य कल्याणमुपजायते॥
परदारेषु ये चापि चक्षुर्दुष्टं प्रयुञ्जते।
तेन दुष्टस्वभावेन जात्यन्धास्ते भवन्ति हि॥
मनसाऽपि प्रदुष्टेन नग्नां पश्यन्ति ये स्त्रियम्।
रोगार्तास्ते भवन्तीह नरा दुष्कृतकारिणः॥
ये तु मूढा दुराचारा वियोनौ मैथुने रताः।
पुरुषेषु सुदुष्प्रज्ञाः क्लीबत्वमुपयान्ति ते॥
पशूंश्च ये वै बध्नन्ति ये चैव गुरुतल्पगाः।
प्रकीर्णमैथुना ये च क्लीबा जायन्ति वै नराः॥
उमोवाच —
अवद्यं किं नु वै कर्म निरवद्यं तथैव च।
श्रेयः कुर्वन्नवाप्नोति मानवो देवसत्तम॥
महेश्वर उवाच —
श्रेयांसं मार्गमन्विच्छन्सदा यः पृच्छति द्विजान्।
धर्मान्वेषी गुणाकाङ्क्षी स स्वर्गं समुपाश्नुते॥
यदि मानुष्यतां देवि कदाचित्संनियच्छति।
मेधावी धारणायुक्तः प्राज्ञस्तत्रापि जायते॥
एष देवि सतां धर्मो गन्तव्यो भूतिकारकः।
नृणां हितार्थाय सदा मया चैवमुदाहृतः॥
उमोवाच —
अपरे स्वल्पविज्ञाना धर्मविद्वेषिणो नराः।
ब्राह्मणान्वेदविदुषो नेच्छन्ति परिसर्पितुम्॥
व्रतवन्तो नराः केचिच्छ्रद्धादमपरायणाः।
अव्रता भ्रष्टनियमास्तथाऽन्ये राक्षसोपमाः॥
यज्वानश्च तथैवान्ये निर्होमाश्च तथा परे।
केन कर्मविपाकेन भवन्तीह वदस्व मे॥
महेश्वर उवाच —
आगमालोकधर्माणां मर्यादाः पूर्वनिर्मिताः।
प्रमाणेनानुवर्तन्ते दृश्यन्ते ह दृढव्रताः॥
अधर्मं धर्ममित्याहुर्ये च मोहवशं गताः।
अव्रता नष्टमर्यादास्ते नरा ब्रह्मराक्षसाः॥
ये वै कालकृतोद्योगात्संभवन्तीह मानवाः।
निर्होमा निर्वषट्कारास्ते भवन्ति नराधमाः॥

**एष देवि मया सर्वसंशयच्छेदनाय ते।**
**कुशलाकुशलो नृणां व्याख्यातो धर्मसागरः॥**

सत्यभाषणप्रशंसा

**[1]धर्मार्थकामसंप्राप्तिर्मोक्षप्राप्तिश्च दुर्लभा।**
**सत्येन जायते पुंसां तस्मात्सत्यं न संत्यजेत्॥**
**सत्यं ब्रह्म परं लोके सत्यं यज्ञेषु चोत्तमम्।**
**सत्यं स्वर्गसमायातं तस्मात्सत्यं न संत्यजेत्॥**

ग्रहणपुण्यकालभागभेदप्रयुक्तं कर्मफलतारतम्यम्

**[2]उपमर्दे लक्षगुणं ग्रहणे चन्द्रसूर्ययोः।**
**पुण्यं कोटिगुणं मध्ये मुक्तिकाले त्वनन्तकम्॥**

उपमर्दः स्पर्शः। सम. ७८

ग्रहणकालभोजननिषेधः, ग्रहणकालिककर्मप्रशंसा

**[3]नाश्नीयादथ तत्काले ग्रस्तयोश्चन्द्रसूर्ययोः।**
**मुक्तयोश्च कृतस्नानः पश्चात् कुर्यात्स्ववेश्मनि॥**

कुर्यात् इति। अशनमिति विपरिणतमनुषज्यते। *निक. ३७०

**[4]नित्यं द्वयोरयनयोर्नित्यं विषुवतोर्द्वयोः।**
**चन्द्रार्कयोर्ग्रहणयोर्व्यतीपातेषु पर्वसु॥**
**[5]अहोरात्रोषितः स्नानं श्राद्धं दानं तथा जपम्।**
**यः करोति प्रसन्नात्मा तस्य स्यादक्षयं च तत्॥**
**[6]सूतके मृतके चैव ग्रस्तयोश्चन्द्रसूर्ययोः।**
**छायायां कुञ्जरस्याथ भुक्त्वा चान्द्रायणं चरेत्॥**

अत्र +पूर्वनिर्दिष्टगजच्छायायोगे चन्द्रसूर्योपरागे च यत् श्राद्धं तत्राभोजनमित्यर्थः, पूर्वयोगनिर्देशस्यान्यार्थत्वात्। छायायां कुञ्जरस्येति। गवामयनादिपदवदसमस्तस्यापि कुञ्जरछायेति एकं योगनाम। व्यत्ययनिर्देशस्तु छान्दसः। गप. ४१८

नानाविधा गोपरिचर्या गोप्रशंसा च

**[1]परिभूयाथ गा मोहादवीचिनरके नरः।**
**गोभिर्निश्वासनिर्भिन्नो दह्यते नरकाग्निना॥**
**[2]तस्मान्मार्गं नयेत्तास्तु क्षीरिवृक्षोत्थवल्कलैः।**
**हे श्रीमातस्त्वमायाहि वत्सायेति ब्रुवन् वचः॥**
**[3]गोब्राह्मणार्थं संग्रामे निहतः शांकरं पदम्।**
**योऽपि कश्चिन्नरो याति किं पुनर्ब्राह्मणादयः॥**
**[4]गावः स्तुत्याश्च पूज्याश्च गावः सेव्याश्च नित्यशः॥**
**गवां गोष्ठस्थितानां तु यः करोति प्रदक्षिणम्।**
**प्रदक्षिणीकृतं तेन जगत्सदसदात्मकम्॥**
**यज्ञोपवीतं तद्वालैः पुच्छोत्थैर्मुनिभिः कृतम्॥**
**[5]युद्धे भग्नं तु यच्छृङ्गं दक्षिणं पतितं भुवि।**
**निर्मांसं प्राप्य विधिवत् पूरयित्वा जलेन च॥**
**[6]स्नानं कृतं च मुनिभिर्देवैः सिद्धैश्च सर्वदा।**
**अलक्ष्मीनाशनं धन्यं सर्वसौभाग्यवर्धनम्॥**
**ओं [7]तृणोदकाद्येषु वनेषु मत्ताः**
**क्रीडन्तु गावः सवृषाः सवत्साः।**
**क्षीरं प्रमुञ्चन्तु सुखं स्वपन्तु**
**शीतातपव्याधिभयैर्विमुक्ताः॥**
**[8]इमं मन्त्रं सुशुद्धात्मा जपेन्नित्यं समाहितः।**
**गच्छंस्तिष्ठन् स्वपञ्जिघ्रन् भुञ्जन् क्रीडन् समुच्छ्वसन्॥**

---

* कुर. निकवत्।

+ 'योगः पितृत्रयोदश्यां कुञ्जरच्छायसंज्ञकः। भवेन्मघासंस्थिते च शशिन्यर्के करोत्थिते॥' इति श्लोकोक्ते।

(१) **ब्रह्म.** २२७।५४-५५.

(२) **मुक्ता.** २७३; **सम.** ७८ तृतीयचरणे (मध्ये कोटिगुणं पुण्यं); **आन.** २४०.

(३) **निक.** ३७०; **कुर.** ६२७; **कृभ.** २८३ कुर्या (भुञ्जा) ब्रह्माण्डे.

(४) **निक.** ३७० योर्नित्यं (योस्तथा) क्रमेण ब्रह्मपुराणम्; **कुर.** ६२८ क्रमेण ब्रह्मपुराणम्; **कृभ.** १५ (=).

(५) **निक.** ३७० स्नानं (स्नातः) क्रमेण ब्रह्मपुराणम्; **कुर.** ६२८ क्रमेण ब्रह्मपुराणम्; **कृभ.** १५ (=).

(६) **गप.** ४१८.

(१) **गृक.** २१३ गा (गां); **गृर.** ४४३; **बाल.** १।११९ पृ. ३७५ याथ (य च) पू.

(२) **गृक.** २१३ येत्तास्तु (येताऽऽशु); **गृर.** ४४३ स्त्वमायाहि (स्त्वं मां पाहि); **निप्र.** २।३२५ पूर्वार्धे (उन्मार्गगां तर्जयेत्तां क्षीरवृक्षोत्थबिल्वजैः।) स्त्वमायाहि (मां पाहि); **बाल.** १।११९ पृ. ३७५ र्गं नये (र्गान्नये) पू.

(३) **गृक.** २१३ णार्थं (णानां); **गृर.** ४४३; **निप्र.** २।३२६ णार्थं (णार्थे) शांकरं (शंकरं) योऽपि कश्चि (गोपकश्चे); **बाल.** १।११९ पृ. ३७५ णार्थं (णार्थे).

(४) **निक.** ४५८.

(५) **निक.** ४५८; **निप्र.** २।६५० तु (च).

(६) **निक.** ४५८; **निप्र.** २।६५० च (तु) सिद्धैश्च(सिद्धैस्तु).

(७) **निक.** ४५८; **निप्र.** २।५६७ डन्तु (डन्ति) मुञ्चन्तु (यच्छन्ति) स्वपन्तु (स्वपन्ति) (=).

(८) **निक.** ४५८; **निप्र.** २।५६७ सुशु (विशु) च्छ्वसन् (त्सृजन्) (=).

[1]महाभयेषु सर्वेषु समेषु विषमेषु च।
प्रयाणकाले च तथा श्रोतव्यमभयप्रदम्॥
[2]पञ्चविंशो महामन्त्रः पठितस्तु सुरासुरैः।
श्रुतोऽनुमोदितो ध्यातः कीर्तितः पूजितः क्रमात्॥
[3]तदा रसातलाद्गावः पञ्च पुण्याः समुत्थिताः।
नन्दा सुनन्दा सुरभी सुशीला सुमना तथा॥
[4]रत्नान्यनेकान्यादाय कौस्तुभप्रभृतीनि च।
प्रदक्षिणीकृतास्ताश्च सर्वैर्देवासुरैः क्रमात्॥
संस्कृताः पूजिताः सम्यग्दृष्टाः स्पृष्टाश्च वन्दिताः।
कस्यचित्त्वथ कालस्य दिव्यास्ताः कामधेनवः॥
[5]ब्रह्मस्थानार्चितास्तुष्टा वव्रिरे वरमुत्तमम्।
दक्षात्प्रजापतेर्जन्म मरीचं कश्यपं प्रति॥
[6]शिवलोके च गमनं न भूयो जन्म कुत्रचित्।
वने वासस्तृणं तोयं भोजनं निष्परिग्रहम्॥
[7]दृढेन मृदुना बन्धः पाशेनाऽऽस्तृतवेश्मनि।
घासग्रासादिकं भूरि निशि दीपं तु भास्वरम्॥
[8]इतिहासपुराणानां श्रवणं सोपवीणनम्।
अन्नमुष्टिर्यथाशक्त्या परिचर्या यथाक्रमम्॥
[9]ताडनाक्रोशखेदाश्च स्वप्नेऽपि न कदाचन।
तासां मूत्रपुरीषेषु नोद्वेगः क्रियते क्वचित्॥
[10]शोधनीयश्च गोवाटः शुष्कैः क्षारादिभिः सदा।
ग्रीष्मे वृक्षाकुले वेश्म शीततोयविकर्दमे॥

(१) निप्र. २।५६७ (=).
(२) निक. ४५८; निप्र. २।५६७ पञ्चविंशो (एवं विधो) तः पूजितः क्रमात् (तश्च पुनः पुनः) (=).
(३) निक. ४५९; निप्र. २।५६७ प्रथमचरणे (सदा व्युत्पादनाद्गावः) रभी (रभिः) ना तथा (नास्तथा) (=).
(४) निक. ४५९; निप्र. २।५६७ (=).
(५) निक. ४५९; निप्र. २।५६८ प्रथमचरणे (ब्रह्मण्येनार्चितास्तास्तु) दक्षात्प्र (दक्षप्र) मरी (मारी) (=).
(६) निक. ४५९; निप्र. २।५६८ निष्परि (निःपरि) (=).
(७) निकः ४५९; निप्र. २।५६८ नाऽऽस्तृत (नातृण) पं तु भास्वरम् (पश्च भास्वरः) (=).
(८) निक. ४५९; निप्र. २।५६८ वीणनम् (वीतिनम्) (=).
(९) निक. ४५९; निप्र. २।५६८ खेदाश्च (खेदानि) तृतीयचरणे (स्नानमूत्रपुरीषेण) (=).
(१०) निक. ४५९; निप्र. २।५६८ वाटः (वाट्टः) क्षारादिभिः सदा (क्षीरादिभिस्तथा) तोयवि (तोये वि) (=).

[1]वर्षासु वाऽथ शिशिरे सुखोष्णे वातवर्जिते।
गोकुले रुद्रमुख्याश्च प्रतिष्ठाप्या गणैः सह॥
[2]जापकैः सर्वमन्त्रैश्च जप्तव्यास्त्वात्मशुद्धये।
उच्छिष्टमूत्रविट्श्लेष्ममलं जह्यान्न तत्र च॥
[3]रजस्वला न प्रवेश्या नान्यजातिर्न पुंश्चली।
न ताः परिभवेत्तोये गोकुले तु विशेषतः॥
[4]न लङ्घयेद्वृत्ततरीन् क्रीडयेद्गोष्ठसंनिधौ।
न गन्तव्यं गवां मध्ये सोपानत्कैः सपादुकैः॥
[5]हस्त्यश्वरथयानैश्च संवितानैः कदाचन।
दक्षिणोत्तरतः प्रह्वैर्गन्तव्यं च पदातिभिः॥
[6]गावः कृशातुराः पाल्याः श्रद्धया पितृमातृवत्।
गिरिप्रपातसिंहर्क्षशीतातपभयात्तथा॥
[7]महाकोलाहले घोरे दुर्दिने देशविप्लवे।
गवां तृणानि देयानि शीतलं च ततो जलम्॥
[8]गावः संवत्सरं रक्ष्याः सर्वपापप्रशान्तये।
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च सुसमाहितैः॥
[9]आषाढ्यामाश्वयुज्यां च पौष्यां चैत्र्यां च सर्वदा।
न गृह्णीयाद्गवां क्षीरं सर्वं वत्साय निक्षिपेत्॥
[10]न षण्ढं वाहयेद्धेनुं न गां भारेण पीडयेत्।
न वाहनीयाः शिशिरे वृषभा यत्र कुत्रचित्॥

(१) निक. ४५९; निप्र. २।५६८ वाऽथ (चाथ) णैः सह (णाः सदा) (=).
(२) निक. ४५९; निप्र. २।५६८ न्त्रैश्च (न्त्रास्तु) स्त्वात्मशु (श्च समृ) (=).
(३) निक. ४५९; निप्र. २।५६८ गोकुले तु (कोकिलेषु) (=).
(४) निक. ४६०; निप्र. २।५६८ तरीन् क्रीडये (तन्त्रीं न क्रीडे) (=).
(५) निक. ४६०; निप्र. २।५६८-५६९ संवि (सवि) तः प्रह्वै (गैः प्राज्ञै) (=).
(६) निक. ४६०; निप्र. २।५६९ वः कृशा (वस्तृषा) पातसिं (पातात्सिं) (=).
(७) निक. ४६०; निप्र. २।५६९ देश (दोष) ततो जलम् (जलं तथा) (=).
(८) निक. ४६०; निप्र. २।५६९ द्वितीयचरणे (श्रद्धया च समाहिताः) चतुर्थचरणे (शूद्रैः सर्वाघशान्तये) (=).
(९) निक. ४६०; कृर. १४०; निप्र. २।५६९ माश्व (मश्व) पौष्यां चैत्र्यां (चैत्र्यां पौष्यां).
(१०) गृक. १९७; निक. ४६० षण्ढं (षण्डं) पू.; गृर. ४३३ निकवत्; निप्र. २।५६९ सर्वं निकवत्.

[1]युगाद्येषु युगान्तेषु षडशीतिमुखेषु च।
दक्षिणोत्तरगे सूर्ये तथा विषुवतोर्द्वयोः॥
[2]संक्रान्तिषु च सर्वासु ग्रहणे चन्द्रसूर्ययोः।
पञ्चदश्यां चतुर्दश्यां द्वादश्यामष्टमीषु च॥
[3]उपचारो गवां कार्यो मासि मासि यथाक्रमम्।
लवणस्य च चत्वारि पलान्यष्टौ घृतस्य वा॥
[4]परकीयस्य दुग्धस्य तथा देयानि षोडश।
द्वात्रिंशच्छीतलस्यापि जलस्यापि पलानि च॥
[5]आदौ विचार्य वै सर्वं परिणामं बलं रुचिम्।
आकस्मिकं तु दातव्यं पुण्यार्थं तु गवाह्निकम्॥
[6]प्रभाते लवणं तत्र दीयते च ततो जलम्।
ततस्तृणानि भोज्यं च पोषणं मांसवर्जितम्॥
[7]निशि दीपः सतन्त्रीको दिव्या पौराणिकी कथा।
एवं कृते रत्नपूर्णां महीं दत्त्वा भवेत्फलम्॥
[8]गोप्रदानात्तु यत्पुण्यं गवां संरक्षणाद्भवेत्॥
[9]मनुष्यैस्तृणतोयाद्यैर्गावः पाल्या विशेषतः।
देयाः पोष्याश्च रक्ष्याश्च पूज्या ग्राह्याश्च सर्वदा॥
[10]सदोषा गौर्गृहे जाता परिपाल्या सदा स्वयम्।
दुःशीलोऽपि द्विजः पूज्यो न तु शूद्रः सुसंयतः॥
[11]अनाथानां गवां यत्नात् कार्यस्तु शिशिरे मठः।
पुण्यार्थं यत्र दीयन्ते तृणतोयेन्धनानि च॥

(१) निक. ४६०; निप्र. २१५६९ रगे सू (रतः सू).
(२) निक. ४६०; निप्र. २१५६९.
(३) निक. ४६०-४६१; निप्र. २१५६९-५७० वा (च).
(४) निक. ४६१; निप्र. २१५७० लस्यापि (लस्य च).
(५) निक. ४६१; निप्र. २१५७० वै सर्वं (पयसः) तु दा (प्रदा).
(६) निक. ४६१; निप्र. २१५७० तत्र (पत्रं) भोज्यं च पो (भोज्यन्ते शो).
(७) निक. ४६१; निप्र. २१५७० पूर्वार्धे (निशि दीपः समन्त्रज्ञो दिव्याः पौराणिकास्तथा।) भवेत्फलम् (फलं लभेत्).
(८) निक. ४६१; निप्र. २१५७० नात्तु (नाच्च) णाद्भवेत् (णाल्लभेत्).
(९) निक. ४६१.
(१०) निक. ४६३; निप्र. २१५७१ सदा स्वयम् (स्वयं तथा).
(११) निक. ४६३; निप्र. २१५७१ यत्नात् (दत्त्वा) मठः (महः).

## ब्रह्मवैवर्तपुराणम्

दिवास्त्रीगमनरजस्वलागमनरात्रिदधि-
भक्षणसंध्याकालशयनानां
निषेधाः

[1]निषिद्धं सर्ववर्णानां दिवा स्वस्त्रीनिषेवणम्।
रात्रौ च दधिभक्ष्यं च शयनं संध्ययोर्दिने।
रजस्वलास्त्रीगमनमेतन्नरककारणम्॥

क्षौरे वर्ज्यः कालः, क्षौराशुद्धस्य
कर्मानधिकारः

रोहिण्यां च विशाखायां मैत्रे चैवोत्तरासु च।
अमायां कृत्तिकायां च द्विजैः क्षौरं विवर्जितम्॥
कृत्वा तु मैथुनं क्षौरं यो देवांस्तर्पयेत्पितॄन्।
रुधिरं तद्भवेत्तोयं दाता च नरकं व्रजेत्॥

ग्रहणकृतकर्मणां फलाधिक्यम्

[2]सामान्यदिवसे विप्रे दानं समफलं भवेत्॥
ग्रहणे शशिनः कोटिगुणं च फलमेव च।
सूर्यस्य ग्रहणे चापि ततो दशगुणं फलम्॥
यथा दाने तथा स्नाने जपे वै पुण्यकर्मसु।
एवं सर्वत्र बोद्धव्यं नराणां कर्मणां फलम्॥

ब्राह्मणस्य दिवास्वापशूद्रश्राद्धान्न-
भोजनशूद्रशवदाहाः
शूद्रसाम्यकराः

[3]ब्राह्मणश्च दिवाशायी शूद्रश्राद्धान्नभोजनः।
शूद्राणां शवदाही च ते च शूद्रसमा द्विजाः॥

विप्रस्य विष्णूपासनं नित्यम्

विप्राणां नित्यकृत्यं च विष्णोर्नैवेद्यभोजनम्।
यत्नेन पूजनं तस्य तत्पादोदकसेवनम्॥

ग्रहणाशुचिस्पृष्टानि पाकभाण्डादीनि
त्याज्यानि

चन्द्रसूर्योपरागे वै चाऽऽशौचे मृतजातयोः।
स्पृष्टेनाशुचिना सद्यः पाकभाण्डं परित्यजेत्।
भृष्टं द्रव्यं तथाऽन्नं च......॥

(१) ब्रह्मवै. १।२७।३९-४०, ४५-४६.
(२) ब्रह्मवै. २।३७।२७, २८, ३०.
(३) ब्रह्मवै. ४।८३।१९-२०, २४-२५, ५८-५९, ६९-७६, ९९-१००.

क्षत्रियवैश्यशूद्रधर्माः

द्विजार्चनं क्षत्रियाणां तथा नारायणार्चनम्।
राज्यानां पालनं चैव रणे निर्भयता तथा॥
नित्यं दानं ब्राह्मणेभ्यः शरणागतरक्षणम्।
पुत्रतुल्यं प्रजानां च दुःखिनां परिपालनम्॥
शस्त्रास्त्राणां च नैपुण्यं रणे शौण्डीर्यमेव च।
तपश्च धर्मकृत्यं च यत्नतः कुरुते मुदा॥
पण्डितं नीतिशास्त्रज्ञं नित्यं च परिपालयेत्।
नियोजयेत्सभामध्ये नित्यं सद्भिश्च संयुते॥
हस्त्यश्वरथपादातं सेनाङ्गं च चतुष्टयम्।
पालयेद्यत्नतो नित्यं यशस्वी च प्रतापवान्॥
रणे निमन्त्रितश्चैव दाने न विमुखो भवेत्।
रणे वा यस्त्यजेत्प्राणांस्तस्य स्वर्गो यशस्करः॥
वैश्यानामपि वाणिज्यमीश्वरः कृषिपालने।
विप्रदेवार्चनं दानं तपस्या व्रतसेवनम्॥
विप्राणामर्चनं नित्यं शूद्रधर्मो विधीयते।
तत्कृषी तद्धनग्राही शूद्रश्चाण्डालतां व्रजेत्॥

ग्रहणे भृष्टद्रव्यत्यागः

.....चन्द्रसूर्योपरागयोः।
भृष्टं द्रव्यं परित्यज्य भुज्यते परमेव च॥

पीतशेषजलपानस्य माघे मूलकभक्षणस्य
शयने जपादेश्च निषेधः

[1]पीतशेषजलं चैव माघे च मूलकं तथा।
जपादिकं च शयने सदा प्राज्ञः परित्यजेत्॥

अहिंस्रे दयाविधिः हिंस्रहिंसानुमतिश्च

कृपा कार्या (सता?) शश्वदहिंस्रेषु च जन्तुषु।
हिंसायां न हि दोषश्च हिंस्राणां च व्रजेश्वर॥

वैश्यशूद्रतत्स्त्रीणां पातकानि

[2]वञ्चनं तु तुलामाने वैश्यानां पापमुच्यते।
मांसविक्रयिणं चैव सुराविक्रयिणं तथा॥
ब्राह्मणीगमनं चैव पयःपानं च कापिलम्।
पातकं प्रोच्यते सद्भिः शूद्राणां च विशेषतः॥
संकराणां द्विजद्वेषो महापातकमुच्यते।
पुरुषाणां च नारीणां समानं पातकं स्मृतम्॥

(१) ब्रह्मवै. ४।८५।९, ८६.
(२) सस्मृ. ९९-१००.

ग्रहणनिमित्तककर्मणां पुण्यकालभागभेदेन
कर्तव्यता

[1]स्नानं स्यादुपरागादौ मध्ये होमः सुरार्चनम्।
दानं जपश्च मुक्ते तु पुनः स्नानं विधीयते॥

मुक्तिस्नानाभावे प्रत्यवायः

[2]विमुक्ते यदि न स्नायाच्चन्द्रसूर्यग्रहे तथा।
तस्य स्यात्तावदाशौचं यावदन्यः परो ग्रहः॥

मुक्तिस्नानाकरणेऽपि प्रत्यवायः। तथा च ब्रह्मवैवर्ते – विमुक्ते इति। सम. ७७

विद्यादयो दश सामान्यधर्माः

[3]विद्या दया दमः शौचं सत्यमस्तेयता तपः।
जितेन्द्रियत्वमक्रोधो लज्जा धर्म इति स्मृतः॥

## वराहपुराणम्

ग्रहणे तिलोदकेन पितृतर्पणमात्रमपि
महाफलम्

[4]उपप्लवे चन्द्रमसो रवेश्च....॥
पानीयमप्यत्र तिलैर्विमिश्रं
दद्यात्पितृभ्यः प्रयतो मनुष्यः।
श्राद्धं कृतं तेन समाः सहस्रं
रहस्यमेतत्पितरो वदन्ति॥

गोपालनम्, गोः विशेषतः कपिलायाश्च
प्रशंसा

[5]सर्वपापहरा धेनुः सर्वकामप्रदायिनी॥
[6]कपिलायाः शिरो ग्रीवा सर्वतीर्थानि भामिनि।
पितामहनियोगाच्च निवसन्ति हि निश्चयः॥
प्रातरुत्थाय यो मर्त्यः कपिलागलमस्तकात्।
च्युतं तु भक्त्या पानीयं शिरसा वन्दते शुचिः॥
स तेन पुण्यतोयेन तत्क्षणाद्दग्धकिल्बिषः।
त्रिंशद्वर्षकृतं पापं दहत्यग्निरिवेन्धनम्॥
कल्यमुत्थाय यो मर्त्यः कुर्यात्तासां प्रदक्षिणम्।
प्रदक्षिणी कृता तेन पृथिवी स्याद्वसुंधरे॥

(१) मुक्ता. २७३; सिन्धु. २८८ पू.; आभू. ३९६.
(२) सम. ७७.
(३) चव्र. ७.
(४) वराह. १३।४१, ४२.
(५) वराह. १०३।१७.
(६) वराह. १११।३-१३.

प्रदक्षिणेन चैकेन श्रद्धायुक्तेन तत्क्षणात्।
दशजन्मकृतं पापं तस्य नश्यत्यसंशयम्॥
कपिलायास्तु मूत्रेण स्नायाच्चैव शुचिव्रतः।
स गङ्गादिषु तीर्थेषु स्नातो भवति मानवः॥
तेन स्नानेन चैकेन भावयुक्तेन वै नरः।
यावज्जीवकृतात्पापान्मुच्यते नात्र संशयः॥
गोसहस्रं च यो दद्यादेकां वा कपिलां नरः।
सममेतत्पुरा प्राह ब्रह्मा लोकपितामहः॥
गवामस्थि ततोऽप्येतन्मृतगन्धे न दूषयेत्।
यावज्जिघ्रति तं गन्धं तावत्पुण्यैस्तु पूर्यते॥
गवां कण्डूयनं श्रेष्ठं तथा च परिपालनम्।
तुल्यं गोशतदानस्य भयरोगादिपालने॥
तृणोदकानि यो दद्यात्क्षुधितानां गवाह्निकम्।
गोमेधस्य फलं दिव्यं लभते मानवोत्तमः॥
[1]कपिला ह्यग्निहोत्रार्थे यज्ञार्थे च वरानने।
उद्धृत्य सर्वतेजोभिर्ब्रह्मणा निर्मिता पुरा॥
पवित्राणां पवित्रं च मङ्गलानां च मङ्गलम्।
पुण्यानां परमं पुण्यं कपिला च वसुंधरे॥
तपसस्तप एवाग्र्यं व्रतानां व्रतमुत्तमम्।
दानानामुत्तमं दानं निधीनां ह्येतदक्षयम्॥
पृथिव्यां यानि तीर्थानि गुह्यान्यायतनानि च।
पवित्राणि च पुण्यानि सर्वलोकेषु सुन्दरि॥
होतव्यान्यग्निहोत्राणि सायं प्रातर्द्विजातिभिः।
कपिलाया घृतेनेह दध्ना क्षीरेण वा पुनः॥
जुह्वते ह्यग्निहोत्राणि मन्त्रैश्च विविधैः सदा।
पूजयन्त्यतिथींश्चैव परां भक्तिमुपागताः।
ते यान्त्यादित्यवर्णैश्च विमानैर्द्विजसत्तमाः॥
सूर्यमण्डलमध्यात्तु ब्रह्मणा निर्मिता पुरा।
कपिला या पिङ्गलाक्षी सर्वसौख्यप्रदायिनी।
सिद्धिबुद्धिप्रदा धेनुः कपिलाऽनन्तरूपिणी॥
पूर्वोक्ता यास्तु कपिलाः सर्वलक्षणलक्षिताः।
सर्वा ह्येता महाभागास्तारयन्ति न संशयः॥
संगमेषु प्रशस्ताश्च सर्वपापविनाशनाः।
अग्निपुच्छा अग्निमुखी अग्निलोमानलप्रभा॥

(१) वराह. ११२।६-१७, २९-३०.

तथाऽऽग्नायी तथा देवी सुवर्णाख्या प्रवर्तते।
गृहीत्वा कपिलां शूद्रात्कामतः सदृशीं पिबेत्॥
पतितः स हि विज्ञेयश्चाण्डालसदृशोऽधमः।
तस्मान्न प्रतिगृह्णीयाच्छूद्राद्विप्रः प्रतिग्रहम्॥
आसन्नप्रसवां धेनुं दानार्थं प्रतिपालयेत्।
कपिलाऽर्धप्रसूता वै दातव्या च द्विजन्मने॥
जायमानस्य वत्सस्य मुखं योन्यां प्रदृश्यते।
तावत्सा पृथिवी ज्ञेया यावद्गर्भं न मुञ्चति॥

प्रतिवर्णं भिन्नाः सर्ववर्ण-
साधारणाश्च धर्माः

[1]ब्राह्मणस्य तु वक्ष्यामि शृणु कर्म वसुंधरे।
यानि कर्माणि कुर्वीत मम भक्तिपरायणः॥
षट्कर्मनिरतो भूत्वा अहंकारविवर्जितः।
लाभालाभं परित्यज्य भिक्षाहारो जितेन्द्रियः॥
मम कर्मसमायुक्तः पैशुन्येन विवर्जितः।
शास्त्रानुसारिमध्यस्थो नवृद्धशिशुचेतनः॥
एतद्वै ब्रह्मणः कर्म एकचित्तो जितेन्द्रियः।
इष्टापूर्तं च कुरुते स मामेति वसुंधरे॥
क्षत्रियाणां प्रवक्ष्यामि मम कर्मसु तिष्ठताम्।
यानि कर्माणि कुर्वीत क्षत्रियो मध्यसंस्थितः॥
दानशूरश्च कर्मज्ञो यज्ञेषु कुशलः शुचिः।
मम कर्मसु मेधावी अहंकारविवर्जितः॥
अल्पभाषी गुणज्ञश्च नित्यं भागवतप्रियः।
गुरुविद्योऽनसूयश्च निन्द्यकर्मविवर्जितः॥
अभ्युत्थानादिकुशलः पैशुन्येन विवर्जितः।
एतैर्गुणैः समायुक्तो यो मां व्रजति क्षत्रियः॥
भजते मम यो नित्यं मम लोकाय गच्छति।
वैश्यानां तु प्रवक्ष्यामि मम कर्मसु तिष्ठताम्॥
यानि कर्माणि कुरुते मम भक्तिपथे स्थितः।
एतैर्गुणैः स्वधर्मेण लाभालाभविवर्जितः॥
ऋतुकालाभिगामी च शान्तात्मा मोहवर्जितः।
शुचिर्दक्षो निराहारो मम कर्मरतः सदा॥
गुरुसंपूजको नित्यं युक्तो भक्तानुवत्सलः।
वैश्योऽप्येवं सुसंयुक्तो यस्तु कर्माणि कारयेत्॥

(१) वराह. ११५।२३-४०.

तस्याहं न प्रणश्यामि स च मे न प्रणश्यति।
अथ शूद्रस्य वक्ष्यामि कर्माणि शृणु माधवि॥
कर्माणि यानि कृत्वा ह शूद्रो मह्यं व्यवस्थितः।
दंपती मम भक्तौ यौ मम कर्मपरायणौ॥
उभौ भागवतौ भक्तौ मद्भक्तौ कर्मनिष्ठितौ।
देशकालौ च जानीतो रजसा तमसोज्झितौ॥
निरहंकारशुद्धात्मा आतिथेयो विनीतवान्।
श्रद्दधानोऽतिपूतात्मा लोभमोहविवर्जितः॥
नमस्कारप्रियो नित्यं मम चिन्ताव्यवस्थितः।
शूद्रः कर्माणि मे देवि य एवं सममाचरेत्॥
त्यक्त्वा ऋषिसहस्राणि शूद्रमेव भजाम्यहम्।
चातुर्वर्ण्यस्य कर्माणि यत्त्वया परिपृच्छितम्॥
[1]कृत्वा चाऽऽवश्यकं कर्म मम लोकं च गच्छति।
नित्ययुक्तश्च शास्त्रज्ञो मम कर्मपरायणः॥
अहिंसापरमश्चैव सर्वभूतदयापरः।
सामान्यश्च शुचिर्दक्षो मम नित्यं पथि स्थितः॥
निगृह्य चेन्द्रियग्राममपराधविवर्जितः।
उदारो धार्मिकश्चैव स्वदारेषु सुनिष्ठितः॥
शास्त्रज्ञः कुशलश्चैव मम कर्मपरायणः।
चातुर्वर्ण्यस्य मे भद्रे सन्मार्गेषु व्यवस्थितः॥

स्वधर्मपालनं परधर्मनिन्दावर्जनं च
पुण्यलोकसाधनम्

[2]आत्मनाऽऽत्मनि धर्मेण ये नरा निश्चितव्रताः॥
स्वकं पालयते धर्मं स्वमतेनैव भाषितम्।
परवादं न कुर्वीत सर्वधर्मेषु निश्चितम्॥
न निन्देद्धर्मकार्याणि आत्मधर्मपथे स्थितः।
एभिर्गुणैः समायुक्तो मम कर्माणि कारयेत्।
वियोनिं स न गच्छेत मम लोकाय गच्छति॥

पुण्यलोकप्रापका जितेन्द्रियत्वादयः
सामान्यधर्माः

पुनरन्यच्च वक्ष्यामि तच्छृणुष्वेह माधवि।
तरन्ति पुरुषा येन गर्भसंसारसागरम्॥
जितेन्द्रिया जितक्रोधा लोभमोहविवर्जिताः।
आत्मोपकारका नित्यं देवातिथिगुरुप्रियाः।
हिंसादीनि न कुर्वन्ति मधुमांसविवर्जकाः॥
मनसा ब्राह्मणीं चैव यो गच्छेन्न कदाचन।
विप्राय कपिलां दद्याद्वृद्धं सान्त्वेन पालयेत्॥
सर्वेषां चैव पुत्राणां न विशेषं करोति यः।
संक्रुद्धं ब्राह्मणं दृष्ट्वा यस्तु तत्र प्रसादयेत्॥
यः स्पृशेत्कपिलां भक्त्या कुमारीं न च दूषयेत्।
अग्निं न च क्रमेत्पद्भ्यां न च पुत्रेण भाषयेत्॥
जले न मेहयेद्यस्तु गुरुभक्तो न जल्पकः।
एवं धर्मेण संयुक्तो यो नु मां प्रतिपद्यते।
स च गर्भं न गच्छेत मम लोकं स गच्छति॥

गोमहिमा

[1]सर्वदेवमया गाव ईश्वरेणावतारिताः।
अमृतं क्षरयन्त्यश्च प्रचरन्ति महीतले॥
[2]तीर्थानां परमं तीर्थमतस्तीर्थं न विद्यते।
पवित्रं च पवित्राणां पुष्टीनां पुष्टिरेव च॥
तस्मात्पुरस्तु दातव्यं गवां वै मेध्यकारणात्॥
दध्ना हि त्रिदशाः सर्वे क्षीरेण च महेश्वरः।
घृतेन पावको नित्यं पायसेन पितामहः।
सकृद्दत्तेन प्रीयन्ते वर्षाणां हि त्रयोदश॥
तां दत्त्वा चैव पीत्वा च प्रीतो मेध्यस्तु जायते।
पञ्चगव्येन पीतेन वाजिमेधफलं लभेत्॥
गव्यं तु परमं मेध्यं गव्यादन्यन्न विद्यते।
दन्तेषु मरुतो देवा जिह्वायां तु सरस्वती॥
खुरमध्ये तु गन्धर्वाः खुराग्रेषु तु पन्नगाः।
सर्वसंधिषु साध्याश्च चन्द्रादित्यौ तु लोचने॥
ककुदे सर्वक्षत्राणि लाङ्गूले धर्म आश्रितः।
अपाने सर्वतीर्थानि प्रस्तावे जाह्नवी नदी॥
नानाद्वीपसमाकीर्णाश्चत्वारः सागरास्तथा।
ऋषयो रोमकूपेषु गोमये पद्मधारिणी॥
रोमे वसन्ति विद्याश्च त्वक्केशेष्वयनद्वयम्।
धैर्यं धृतिश्च शान्तिश्च पुष्टिर्वृद्धिस्तथैव च॥
स्मृतिर्मेधा तथा लज्जा वपुः कीर्तिस्तथैव च।
विद्या शान्तिर्मतिश्चैव संततिः परमा तथा॥

(१) वराह. ११७।३७-४०.
(२) वराह. १२१।१९-२९.

(१) वराह. १८७।१०४-१०५; २०६।२३-२४ पूर्वार्धे (सर्वदेवमया देव्यः सर्ववेदमयास्तथा।) क्षरयन्त्य (धारयन्त्य).
(२) वराह. २०६।२४-३५.

**गच्छन्तमनुगच्छन्ति ह्येता गावो न संशयः।**
**यत्र गावो जगत्तत्र देवदेवपुरोगमाः।**
**यत्र गावस्तत्र लक्ष्मीः सांख्यधर्मश्च शाश्वतः॥**
**[1]प्रस्नवे यो गवां स्नायाद्रोहिण्यां यो नरो द्विजः।**
**स सर्वपापजातानि दहत्याशु न संशयः॥**
**[2]लाङ्गूलेनोद्धृतं तोयं मूर्ध्ना गृह्णाति यो नरः।**
**सरित्स्वनुप्रयान्तीनां स पापेभ्यः प्रमुच्यते॥**
**[3]धेनुस्तनाद्विनिष्क्रान्तां धारां क्षीरस्य यः पिबेत्।**
**शिरसा प्रतिगृह्णाति स पापेभ्यः प्रमुच्यते॥**

वैश्यशूद्रधर्माः

**[4]स्वाध्यायं यजनं दानं कुसीदं पशुपालनम्।**
**गोरक्षां कृषिवाणिज्यं कुर्याद्वैश्यो यथाविधि॥**

पशुपालनम् अजाश्वादिपालनम्, गोशब्दस्य पृथगुपात्तत्वात्। पमा. १।४१६

**[5]त्रिषु वर्णेषु कर्तव्यं पाकभोजनमेव तु।**
**शुश्रूषामभिपन्नानां शूद्राणां च वरानने॥**

यत्तु वाराहे श्राद्धं प्रकृत्य 'त्रिषु वर्णेषु...॥' इति पाकश्राद्धमुक्तं तच्छूद्रायां द्विजोत्पन्नविषयमिति केचित्। युक्तं तु, तस्मिन् शूद्रत्वाभावात्। 'शूद्राश्च पाककर्तारः' (आध. २।३।४) इत्यापस्तम्बोक्तपाककर्तृगोपालादिसच्छूद्रपरमिति, तच्च कलियुगातिरिक्तयुगविषयमिति। संम. ८२

## वामनपुराणम्

क्षौरे वर्ज्यः कालः ग्रहणे रात्रिस्नानानुमतिश्च

**[6]नन्दासु नाभ्यङ्गमुपाचरेत**
**क्षौरं च रिक्तासु जयासु मांसम्॥**
**[1]नाभ्यङ्गमर्के न च भूमिपुत्रे**
**क्षौरं च शुक्रे रविजे च मांसम्॥**
**[2]क्षौरं विशाखास्वभिजित्सु वर्ज्यम्॥**
**[3]स्नायाच्छिरःस्नानतया च नित्यं**
**निष्कारणं नैव महानिशासु।**
**ग्रहोपरागे स्वजनापघाते**
**मुक्त्वा च जन्मर्क्षगते शशाङ्के॥**

देशकुलगोत्रधर्मपालनम्, निरर्थककर्मकरणादिदुराचारनिषेधाः

**[4]देशानुशिष्टं कुलधर्ममग्र्यं**
**स्वगोत्रधर्मं न हि संत्यजेत।**
**नानर्थसिद्धिं समुपाचरेत**
**नासत्प्रलापं न च सत्यहीनम्॥**
**[5]न निष्ठुरं नाम न शास्त्रहीनं**
**वाक्यं वदेत्साधुजनेन येन।**
**निन्द्यो भवेन्नैव च धर्मवेदी**
**सङ्गं न चासत्सु जनेषु कुर्यात्॥**

क्षौरे निषिद्धकालाः

**[6]देवकार्ये पितृश्राद्धे रवेरंशपरिक्षये।**
**क्षौरकर्म न कुर्वीत जन्ममासे न जन्मभे॥**

अंशपरिक्षयः सौरमासान्तिमदिनम्। संग. ६२३

## कूर्मपुराणम्

चतुर्णां वर्णानां विशेषधर्माः सामान्यधर्माश्च, प्रथमतृतीयचतुर्थाश्रमिणां ब्रह्मचर्यं सामान्यधर्मः

**[7]यजनं याजनं दानं ब्राह्मणस्य प्रतिग्रहः।**
**अध्यापनं चाध्ययनं षट् कर्माणि द्विजोत्तमाः॥**

---

(१) **निक.** ४५७; **निप्र.** २।६५० प्रस्नवे (शृङ्गेण) यो नरो द्विजः (द्विजसत्तमः).

(२) **निक.** ४५८; **निप्र.** २।६५० मूर्ध्ना(मूर्ध्नि) नुप्रयान्तीनां स पापेभ्यः (पि प्रयातानां सर्वपापैः).

(३) **निक.** ४५८; **निप्र.** २।६५० पूर्वार्धे (धेनोस्तनातिनिष्क्रान्तं धारोष्णं वाऽपि यः पयः।) शिरसा (शिरसि).

(४) **पमा.** १।४१६.

(५) **शूशि.** १६० पाक (पाके) तु (च); **शूक.** २७९ पाक (पक्व) तु (च); **संम.** ८२.

(६) **वामन.** १४।४८; **निप.** १७३ (नन्दासु नाभ्यङ्गमुपाचरेत क्षौरं च रिक्तासु) एतावदेव (=); **निप्र.** १।५६ (क्षौरं रिक्तासु वर्जयेत्) एतावदेव; **गप.** १०५ (क्षौरं च रिक्तासु परिवर्जयेत्) एतावदेव.

(१) **वामन.** १४।४९; **निप्र.** १।५६ (क्षौरं शुक्रे) एतावदेव; **गप.** १०५ (क्षौरं शुक्रे वर्ज्यम्) एतावदेव.

(२) **वामन.** १४।५०; **निप्र.** १।५६; **गप.** १०५.

(३) **वामन.** १४।५३-५४.

(४) **निक.** ३२ स्वगोत्र (सगोत्र) पू.; **गृर.** १८७ द्वितीयचरणे (सगोत्रधर्मं न हि संत्यजेच्च) पू.; **आद.** २२ त्यजेत (त्यजेच्च) पू.; **मुक्ता.** ४६६ न हि (च न); **आप्र.** १५१ सर्वम् आदवत्.

(५) **मुक्ता.** ४६६.

(६) **निप.** १७३ क्षौर (क्षुर) न ज (च ज) (=); **निप्र.** १।५६ निपवत्; **गप.** १०५; **संग.** ६२३ क्षौर (क्षुर) राजमार्तण्डे; **पुम.** ४५६ पितृश्रा (पितुः श्रा) राजमार्तण्डः.

(७) **कूर्म.** १।२।३८-४१, ४६-४७, ६५-६८.

**दानमध्ययनं यज्ञो धर्मः क्षत्रियवैश्ययोः।**
**दण्डो युद्धं क्षत्रियस्य कृषिर्वैश्यस्य शस्यते॥**
**शुश्रूषैव द्विजातीनां शूद्राणां धर्मसाधनम्।**
**कारुकर्म तथाऽऽजीवः पाकयज्ञादि धर्मतः॥**
**ब्रह्मचारिवनस्थानां भिक्षुकाणां द्विजोत्तमाः।**
**साधारणं ब्रह्मचर्यं प्रोवाच कमलोद्भवः॥**
**क्षमा दमो दया दानमलोभस्त्याग एव च।**
**आर्जवं चानसूया च तीर्थानुसरणं तथा॥**
**सत्यं संतोषमास्तिक्यं श्रद्धा चेन्द्रियनिग्रहः।**
**देवताभ्यर्चनं पूजा ब्राह्मणानां विशेषतः॥**
**अहिंसा प्रियवादित्वमपैशुन्यमकल्कता।**
**सामासिकमिमं धर्मं चातुर्वर्ण्येऽब्रवीन्मनुः॥**

द्विजस्य संध्यावन्दनं नियतम्

[1]**सायं प्रातर्द्विजः संध्यामुपासीत समाहितः।**
**कामाल्लोभाद्भयान्मोहात्त्यक्त्वैनां पतितो भवेत्॥**

कामादिभिर्हेतुभिः संध्यावन्दनान्मुक्तः अकृतसंध्यः सन् पतितो भवेदित्यर्थः। भयमोहयोरुपादानमावश्यकत्वद्योतनार्थम्। तेन महति भये चित्तविभ्रमे च संध्यापरित्यागे स्वल्पो दोषो भवेत्। प्रायश्चित्तं च कालानुसारेणैकरात्रोपवासादि कल्प्यम्।

स्मृकौ. ६२

कुलक्रमागतधर्माचरणविधिः

[2]**येनास्य पितरो याता येन याताः पितामहाः।**
**तेन यायात्सतां मार्गं तेन गच्छन्न रिष्यति॥**

क्षमादिगुणाष्टकं ब्राह्मणलक्षणम्, वेददेवतानिन्दाया निन्दकसंवादस्य च निषेधः

**क्षमा दया च विज्ञानं सत्यं चैव दमः शमः।**
**अध्यात्मशीलता ज्ञानमेतद्ब्राह्मणलक्षणम्।**
**एतस्मान्न प्रमाद्येत विशेषेण द्विजोत्तमः॥**
**भूतानां प्रियकारी स्यान्न परद्रोहकर्मधीः।**
**न वेददेवतानिन्दां कुर्यात्तैश्च न संवदेत्॥**

(१) **कूर्म.** २।१२।१६; **स्मृकौ.** ६२ हात्यक्त्वैनां (हान्मुक्तो हि); **मर.** २०-२१ त्यक्त्वैनां (त्यक्ते तत्); **शुशि.** ७१ स्मृकौवत्; **आर.** ५३ पू.

(२) **कूर्म.** २।१५।२०, २७-२८, ४१.

अहिंसा सत्यमस्तेयं विशेषतो देवब्रह्मस्वानपहरणं चेति धर्माः

[1]**न हिंस्यात्सर्वभूतानि नानृतं वा वदेत्क्वचित्।**
**नाहितं नाप्रियं ब्रूयान्न स्तेनः स्यात्कथंचन॥**
**तृणं वा यदि वा शाकं मृदं वा जलमेव च।**
**परस्यापहरञ्जन्तुर्नरकं प्रतिपद्यते॥**
**न देवद्रव्यहारी स्याद्विशेषेण द्विजोत्तमः।**
**ब्रह्मस्वं वा नापहरेदापद्यपि कदाचन॥**
**न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते।**
**देवस्वं चापि यत्नेन सदा परिहरेत्ततः॥**

पाखण्डिविकर्मस्थवामाचारपाञ्चरात्रपाशुपतवेददेवद्विजनिन्दकाः असंव्यवहार्याः

**पाखण्डिनो विकर्मस्थान्वामाचारांस्तथैव च।**
**पञ्चरात्रान्पाशुपतान्वाङ्मात्रेणापि नार्चयेत्॥**
**वेदनिन्दारतान्मर्त्यान्देवनिन्दारतांस्तथा।**
**द्विजनिन्दारतांश्चैव मनसाऽपि न चिन्तयेत्॥**
**याजनं योनिसंबन्धं सहवासं च भाषणम्।**
**कुर्वाणः पतते जन्तुस्तस्माद्यत्नेन वर्जयेत्॥**

असंव्यवहार्याः पतितादयः, एकादशविधः सांकर्यदोषो वर्जनीयः, पापिसमीपावस्थानात् पापसंक्रमः

**न संवसेच्च पतितैर्न चण्डालैर्न पुक्कसैः।**
**न मूर्खैर्नावलिप्तैश्च नान्त्यैर्नान्त्यावसायिभिः॥**
**एकशय्यासनं पङ्क्तिर्भाण्डपक्वान्नमिश्रणम्।**
**याजनाध्यापनं योनिस्तथैव सहभोजनम्॥**
**सहाध्यायस्तु दशमः सहयाजनमेव च।**
**एकादशैते निर्दिष्टा दोषाः सांकर्यसंज्ञिताः॥**
**समीपे वाऽप्यवस्थानात्पापं संक्रमते नृणाम्।**
**तस्मात्सर्वप्रयत्नेन संकरं वर्जयेद्बुधः॥**

शूद्रायादेयाः पदार्थाः

**न शूद्राय मतिं दद्यात्कृशरं पायसं दधि।**
**नोच्छिष्टं वा घृतमधु न च कृष्णाजिनं हविः।**
**न चैवास्मै व्रतं दद्यान्न च धर्मं वदेद्बुधः॥**

(१) **कूर्म.** २।१६।१-२, ५-६, १५-१७, २७-३०, ५३-५४.

ग्रहणपूर्वोत्तरकालविशेषयोर्ग्रहणकाले च भोजननिषेधः

**[1]नाद्यात्सूर्यग्रहात्पूर्वमह्नि सायं शशिग्रहात्।**
**ग्रहकाले न चाश्नीयात्स्नात्वाऽश्नीयाद्विमुक्तयोः॥**

अत्राहस्सायंशब्दावनुवादकौ वचनान्तरप्राप्तकालोपलक्षणार्थौ वेत्यनुसंधेयम्। स्मृच. २।६२१

**[2]मुक्ते शशिनि चाश्नीयाद्यदि न स्यान्महानिशा।**
**अमुक्तयोरस्तगयोरद्याद्दृष्ट्वा परेऽहनि॥**

महानिशा रात्रेः सार्धप्रहरादुपरि मुहूर्तचतुष्टयम्। कृर. ६२७

ग्रहणे नैमित्तिककर्मणां नित्यत्वं काम्यश्राद्धानां प्राशस्त्यं दानस्य फलातिशयश्च

**[3]नैमित्तिकं तु कर्तव्यं ग्रहणे चन्द्रसूर्ययोः।**
**बान्धवानां विस्तरेण नारकी स्यादतोऽन्यथा॥**
**[4]काम्यानि चैव श्राद्धानि शस्यन्ते ग्रहणादिषु॥**
**.....[5]ग्रहणे चन्द्रसूर्ययोः।**
**.....दत्तं भवति चाक्षयम्॥**
**[6]दानधर्मात्परो धर्मो भूतानां नेह विद्यते।**
**तस्माद्विप्राय दातव्यं श्रोत्रियाय द्विजातिभिः॥**
**[7]स्वर्गायुर्भूतिकामेन तथा पापोपशान्तये।**
**मुमुक्षुणा च दातव्यं ब्राह्मणेभ्यस्तथाऽन्वहम्॥**

(१) **कूर्म.** २।१९।१५ र्वमह्नि सा (र्वं प्रतिसा) क्तयोः (क्तये); **अप.** १।१०६ पृ. १५१ न चा (च ना) द्विमु (च्च मु) विष्णुपुराणे; **स्मृच.** २।६२१ न चा (तु ना); **कृर.** ६२६ अपवत् (=) : ६२७ अपवत्, पू. (=).

(२) **कूर्म.** २।१९।१६; **अप.** १।१०६ पृ. १५१ उत्तरार्धे (स्नात्वा दृष्ट्वा परेऽह्न्यद्याद्ग्रस्तास्तमितयोस्तथा॥) उत्त. विष्णुपुराणे; **स्मृच.** २।६२१ चाश्नीयाद्यदि(भुञ्जीत यदि) उत्तरार्धे (स्नात्वा दृष्ट्वाऽपरेऽह्न्यद्याद्ग्रस्तास्तमितयोस्तयोः॥); **कृर.** ६२७ (दृष्ट्वा प) इति पाठं वर्जयित्वा स्मृचवत् (=); **कृभ.** ४७७ चाश्नीयाद्यदि (भुञ्जीत यदि) पू. (=).

(३) **कूर्म.** २।२०।६; **मुक्ता.** २७२ तृतीयचरणे (यच्छ्राद्धं बान्धवानां तु) स्यादतो (स्यात्ततो) कालनिर्णये.

(४) **कूर्म.** २।२०।७; **मुक्ता.** २७२ कालनिर्णये.

(५) **कूर्म.** २।२६।५३.

(६) **कूर्म.** २।२६।५५; **विपा.** ४।७ पूर्वार्धात्परम् 'इह लोके परे लोके नादत्तमुपतिष्ठते' इत्यर्धमधिकम्, द्विजातिभिः (कुटुम्बिने).

(७) **कूर्म.** २।२६।५६.

ग्रहणे महानदीस्नानस्य प्राशस्त्यम्

**[1]महानदीजलं पुण्यं सर्वपापविनाशनम्।**
**ग्रहणे तदुपस्पृश्य मुच्यते सर्वपातकैः॥**

प्रतिपर्व पुराणाध्ययनं ब्राह्मणैः कर्तव्यं शूद्रसंनिधौ तन्निषेधश्च

**[2]अध्येतव्यमिदं पुण्यं विप्रैः पर्वणि पर्वणि।**
**श्रोतव्यं च द्विजश्रेष्ठा महापातकनाशनम्॥**
**[3]नाध्येतव्यमिदं शास्त्रं वृषलस्य च संनिधौ।**
**योऽधीते चैव मोहात्मा स याति नरकान् बहून्॥**

(१) वृषलः शूद्रः। तत्संनिधौ पुराणपाठनिषेधस्तत्प्राधान्येन, न तु तदुपसर्जनत्वेन, 'स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा। तेन भारतमाख्यानं मुनिना कृपया कृतम्॥' इत्यादिवचनबलात्। भारतमिति प्रदर्शनमात्रम्। अथवा, अतिक्रान्तनिषेधेन ब्राह्मणेन पुराणपाठे क्रियमाणे शूद्रः पुराणं शृणोतु, ब्राह्मण एव प्रत्यवैति। ✡स्मृकौ. ५०

(२) सूतस्य श्रवणं तु न शूद्राधिकारप्रतिपादकम्, सूतस्य संकरजातत्वेनाशूद्रत्वात्, 'ब्राह्मण्यां क्षत्रियात्सूतः' इत्युक्तेः। *बाल. १।१२१ पृ. ३८१

उपास्यमन्त्राणां ग्रहणे जपाभावे मालिन्यम्

**[4]स्वस्वेष्टदेवतामन्त्रजपं कुर्यात्प्रयत्नतः।**
**चन्द्रसूर्योपरागे तु मालिन्यमजपाद्भवेत्॥**

✡ शूशि. सस्मृ. स्मृकौगतम्।

* शेषं स्मृकौगतम्।

(१) **कूर्म.** २।३५।२५.

(२) **कूर्म.** २।४६।१२८; **स्मृकौ.** ४९-५० पुण्यं (नित्यं) पू.; **शूशि.** ४५ सर्वं स्मृकौवत्; **बाल.** १।७७ पृ. २११, १।१२१ पृ. ३८० सर्वं स्मृकौवत्; **सस्मृ.** १२३-१२४ सर्वं स्मृकौवत्.

(३) **कूर्म.** २।४६।१३३-१३४; **स्मृकौ.** ५०; **शूशि.** ४५ : ४८ पू. (=); **शूक.** १५ च (तु) : २३-२४ च (तु) पू.; **विपा.** ५।३६६ सर्वं शूक. २३-२४ वत्; **बाल.** १।७७ पृ. २११ : १।१२१ पृ. ३८० : १।१२१ पृ. ३८१ पू. (=); **सस्मृ.** १२४ मोहात्मा (मोहेन).

(४) **विपा.** ३।२।४६९.

## भविष्यपुराणम्

चातुर्वर्ण्यकर्मविभागः

**[1]ब्राह्मणक्षत्रियविशां शूद्राणां च परस्परम्।**
**कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः॥**
**[2]शमस्तपो दमः शौचं क्षान्तिरार्जवमेव च।**
**ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम्॥**

विज्ञानं यज्ञादिकर्मकौशलम्। कृर. १३

**[3]शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्।**
**दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम्॥**

शौर्यं विक्रमः। तेजः अधृष्यतौपाधिकं रूपम्। दाक्ष्यं दक्षता, उत्साह इति यावत्। ईश्वरभावः प्रभुत्वम्। कृर. १३

**[4]कृषिगोरक्षवाणिज्यं वैश्यकर्म स्वभावजम्।**
**परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम्॥**

गोरक्षं पशुपालनम्। परिचर्यात्मकं वर्णत्रय-शुश्रूषात्मकम्। कृर. १३

सूर्यवारे सूर्यग्रहणे कर्तव्यः कर्मविशेषः सर्वनैमित्तिककर्मणां फलातिशयश्च

**ब्रह्मोवाच –**

**[5]यस्त्वादित्यग्रहस्यास्य वारो देवस्य सुव्रत।**
**शस्यः प्रोक्तः प्रियो लोके ख्यातो गोश्रुतिभूषणः॥**
**यस्तु पूजयते तस्मिन्पतङ्गं पतगप्रियम्।**
**गन्धपुष्पोपहारैस्तु सूर्यलोकं स गच्छति॥**
**सोपवासो गणश्रेष्ठ आदित्यग्रहणे शुचिः।**
**जपमानो महाश्वेतां खपोषमथवा शिवम्॥**
**पूजयेज्जगतामीशं तमोनाशनमाशुगम्।**
**पूजयित्वा खपोषं तु महाश्वेतां ततो जपेत्॥**
**पूजयित्वा महाश्वेतां रविं देवं समर्चयेत्।**
**महाश्वेतां प्रतिष्ठाप्य गन्धपुष्पैः सुपूजिताम्॥**

(१) **भविष्य.** १।४४।२४-२५; **कृर.** १३ परस्परम् (परंतप).

(२) **भविष्य.** १।४४।२५-२६; **कृर.** १३ शमस्तपो दमः (यमो दमस्तपः) ब्रह्मकर्म (ब्राह्मं कर्म).

(३) **भविष्य.** १।४४।२६-२७; **कृर.** १३.

(४) **भविष्य.** १।४४।२७-२८; **कृर.** १३ शूद्रस्यापि (शूद्रस्य तु).

(५) **भविष्य.** १।९२।१-१२.

**तस्या एव बहिः कार्यं स्थण्डिलं सुसमाहितैः।**
**शुचौ भूमिविभागे तु वीर संस्थाप्य यत्नतः॥**
**कुर्याद्धोमं तिलैः स्नातः सर्पिषा च विशेषतः।**
**आदित्यग्रहवेलायां जपञ्छ्वेतां महामते॥**
**मुक्ते दिनकरे पश्चात्स्नानं कृत्वा समाहितः।**
**पूजयित्वा महाश्वेतां रविं देवं समर्चयेत्॥**
**ब्राह्मणान्वाचयित्वा च ततो भुञ्जीत वाग्यतः।**
**आदित्यग्रहयुक्तेऽस्मिन्वारे त्रिपुरसूदन॥**
**यत्कर्म क्रियते पुण्यं तत्सर्वं शुभदं भवेत्।**
**स्नानदानजपादीनां कर्मणां गोवृषध्वज॥**
**अनन्तं हि फलं तेषां भवत्यस्मिन्न संशयः।**
**कृतानां तु गणश्रेष्ठ भास्करस्य वचो यथा॥**
**तस्माद्द्विजगणैः कार्यं पुण्यकर्म विचक्षणैः॥**

शूद्रान्नभक्षणादीनि चत्वारि कर्माणि पातित्यनिमित्तानि

**[1]शूद्रान्नं शूद्रसंपर्कं शूद्रेण सहवासनम्।**
**शूद्राज्ज्ञानागमः कश्चिज्ज्वलन्तमपि पातयेत्॥**

गुणपरीक्षां विनैव विप्रस्य पूज्यत्वम्

**आदित्य उवाच –**

**[2]ममाप्येवं मतं वीर ब्राह्मणं न परीक्षयेत्।**
**सर्वदेवमयो विप्रः सर्वलोकमयस्तथा।**
**तस्मात्संपूजयेदेनं न गुणांस्तस्य चिन्तयेत्॥**

ग्रहणस्य पुण्यकालत्वं तत्र सूर्यपूजा-वस्त्रादिदानविधिश्च

**[3]ग्रहणं चन्द्रसूर्याभ्याम्.....॥**
**इति कालः समाख्यातः पुंसां पुण्यविवर्धनः॥**
**..... [4]ग्रहणे तथा।**
**पूजयेत् सततं भानुम्.....॥**

(१) **भविष्य** . १।१८४।२१-२२; **निक.** २५६ पर्कं (पर्कः) सहवा (च सहा); **गृर.** ३३६ सहवा (च सहा); **आप्र.** ४९१ निकवत्; **आन.** ३७६-३७७ सहवा (तु सहा) मः कश्चिज्ज्व (मश्चापि ज्व) (=); **बाल.** १।१६० पृ. ४२६ कश्चिज्ज्व (कोऽपि ज्व) शेषं निकवत्.

(२) **भविष्य.** १।१८४।३८-३९.

(३) **भविष्य.** १।१८९।२८, २९.

(४) **भविष्य.** १।१९३।१.

[1]कृत्वोपवासं ग्रहणे विधिवच्चन्द्रसूर्ययोः।
पूजयेद्भास्करं भक्त्या ब्रह्मलोकं स गच्छति॥
[2]वासांसि दक्षिणा देया मणिमुक्ता यथारुचि।
.....चन्द्रसूर्यग्रहे तथा॥

विस्तरेण गोप्रशंसा

[3]क्षीरोदतोयसंभूता याः पुराऽमृतमन्थने।
पञ्च गावः शुभाः पार्थ पञ्च लोकस्य मातरः।
नन्दा सुभद्रा सुरभी सुशीला बहुला इति॥
एते(?ता) लोकोपकाराय देवानां तर्पणाय च।
जमदग्निभरद्वाजवसिष्ठासितगौतमाः।
जगृहुः कामदाः पञ्च गावो दत्ताः सुरैस्ततः॥
गोमयं रोचना मूत्रं क्षीरं दधि घृतं गवाम्।
षडङ्गानि पवित्राणि संशुद्धिकरणानि च॥
गोमयादुत्थितः श्रीमान्बिल्ववृक्षः शिवप्रियः।
तत्राऽऽस्ते पद्महस्ता श्रीः श्रीवृक्षस्तेन स स्मृतः॥
बीजान्युत्पलपद्मानां पुनर्जातानि गोमयात्।
गोरोचना च माङ्गल्या पवित्रा सर्वसाधिका॥
गोमूत्राद्गुग्गुलुर्जातः सुगन्धप्रियदर्शनः।
आहारः सर्वदेवानां शिवस्य च विशेषतः॥
यद्बीजं जगतः किंचित्तज्ज्ञेयं क्षीरसंभवम्।
दध्नः सर्वाणि जातानि मङ्गलान्यर्थसिद्धये।
घृतादमृतमुत्पन्नं देवानां तृप्तिकारणम्॥
ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम्।
एकत्र मन्त्रास्तिष्ठन्ति हविरन्यत्र तिष्ठति॥
गोषु यज्ञाः प्रवर्तन्ते गोषु देवाः प्रतिष्ठिताः।
गोषु वेदाः समुत्कीर्णाः सषडङ्गपदक्रमाः॥
शृङ्गमूले गवां नित्यं ब्रह्मा विष्णुश्च संस्थितौ।
शृङ्गाग्रे सर्वतीर्थानि स्थावराणि चराणि च।
शिवो मध्ये महादेवः सर्वकारणकारणम्॥
ललाटे संस्थिता गौरी नासावंशे च षण्मुखः।
कम्बलाश्वतरौ नागौ नासापुटसमाश्रितौ॥
कर्णयोरश्विनौ देवौ चक्षुर्भ्यां शशिभास्करौ।
दन्तेषु वसवः सर्वे जिह्वायां वरुणः स्थितः॥
सरस्वती च कुहरे यमयक्षौ च गण्डयोः।
संध्याद्वयं तथेष्ठा(?तथौष्ठा)भ्यां ग्रीवायां च पुरंदरः॥
रक्षांसि ककुदे द्यौश्च पार्ष्णिकाये व्यवस्थिता।
चतुष्पात्सकलो धर्मो नित्यं जङ्घासु तिष्ठति॥
खुरमध्येषु गन्धर्वाः खुराग्रेषु च पन्नगाः।
खुराणां पश्चिमे भागे राक्षसाः संप्रतिष्ठिताः॥
रुद्रा एकादश पृष्ठे वरुणः सर्वसंधिषु।
श्रोणीतटस्थाः पितरः कपोलेषु च मानवाः॥
श्रीरपाने गवां नित्यं स्वाहाऽलंकारमाश्रिताः(?ता)।
आदित्या रश्मयो वालाः पिण्डीभूता व्यवस्थिताः॥
साक्षाद्गङ्गा च गोमूत्रे गोमये यमुना स्थिता।
त्रयस्त्रिंशद्देवकोट्यो रोमकूपे व्यवस्थिताः॥
उदरे पृथिवी सर्वा सशैलवनकानना।
चत्वारः सागराः प्रोक्ता गवां ये तु पयोधराः॥
पर्जन्यः क्षीरधारासु मेघा बिन्दुव्यवस्थिताः।
जठरे गार्हपत्योऽग्निर्दक्षिणाग्निर्हृदि स्थितः॥
कण्ठे आहवनीयोऽग्निः सभ्योऽग्निस्तालुनि(?) स्थितः।
अस्थिव्यवस्थिताः शैला मज्जासु क्रतवः स्थिताः॥
ऋग्वेदोऽथर्ववेदश्च सामवेदो यजुस्तथा।
सुरक्तपीतकृष्णादौ गवां वर्णे व्यवस्थिताः॥
[1]गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश।
यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र च॥

गोब्राह्मणप्रशंसा

ग्रहा गावो नरेन्द्राश्च ब्राह्मणाश्च विशेषतः।
पूजिताः पूजयन्त्येते निर्दहन्त्यपमानिताः॥
श्रीकृष्ण उवाच –
[2]गावः पवित्रा लोकानां गाव एव परायणम्।
ब्रह्मणा सृजता लोकान्वृत्तिहेतोः प्रजेश्वर॥
गावः प्रथमतः सृष्टास्त्रैलोक्यहितकाम्यया।
यासां मूत्रपुरीषेण देवतायतनान्यपि।
शुचीनि समजायन्त किं भूतमधिकं ततः॥
मूलं यज्ञस्य काम्यस्य सर्वदेवमयाः शुभाः।
गोमये वसते लक्ष्मीः पर्याप्तं तन्निदर्शनम्॥
ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम्।
एकत्र मन्त्रास्तिष्ठन्ति हविरन्यत्र तिष्ठति॥

(१) भविष्य. १।२०३।१६-१७.
(२) भविष्य. २।१।६।३-४.
(३) भविष्य. ४।६९।१६-४०.

(१) भविष्य. ४।१४१।६६, ८४-८५.
(२) भविष्य. ४।१५९।२-६.

परस्वहरणादीनां नवानां दुराचाराणां निषेधाः

**[1]किंचित्परस्वं न हरेन्नाल्पमप्यप्रियं वदेत्।**
**प्रियं च नानृतं ब्रूयान्नान्यदोषानुदीरयेत्॥**
**नान्याश्रितं तथा वैरं रोचयेत्पुरुषेश्वर।**
**न दुष्टयानमारोहेत्कूलच्छायां न संश्रयेत्॥**
**विद्विष्टपतितोन्मत्तबहुवैरादिसंकरैः।**
**बन्धकीबन्धकीभर्तृक्षुद्रानृतकथैः सह॥**
**तथाऽतिव्ययशीलैश्च परिवादरतैः शठैः।**
**बुधो मैत्रीं न कुर्वीत नैकः पन्थानमाश्रयेत्॥**

परस्त्रीसेवननिन्दा, स्त्रीविषयकेर्ष्यानिषेधः, मूर्खोन्मत्ताद्याक्षेपनिषेधः, कृशस्त्री-ब्राह्मणक्षत्रियावज्ञानिषेधः

**न हीदृशमनायुष्यं लोके किंचन विद्यते।**
**यादृशं पुरुषस्येह परदारोपसेवनम्॥**
**न चेर्ष्या स्त्रीषु कर्तव्या दारा रक्ष्याः प्रयत्नतः।**
**अनायुष्या भवेदीर्ष्या तस्मात्तां परिवर्जयेत्॥**
**मूर्खोन्मत्तव्यसनिनो विरूपान्मानिनस्तथा।**
**हीनाङ्गानधिकाङ्गांश्च विद्याहीनांश्च नाऽऽक्षिपेत्॥**
**[2]स्त्रीं कृशां नावजानीयाद्दीर्घमायुर्जिजीविषुः।**
**ब्राह्मणं क्षत्रियं सर्वं सर्वे ह्याशीविषोपमाः॥**
**हन्यादाशीविषः क्रुद्धो यावत्स्पृशति दंष्ट्रया।**
**क्षत्रियोऽपि दहेत्क्रुद्धो यावत्पश्यति तेजसा।**
**ब्राह्मणः सकुलं हन्याद्ध्यानेनावेक्षितेन च॥**

अरुंतुदत्वपरोक्षवादित्वप्रमादित्वनास्तिक्य-वेददेवतानिन्दानां द्वेषदम्भाति-मानक्लैब्यानां च निषेधः

**नारुंतुदः स्यान्न परोक्षवादी न प्रमादि च॥**
**नास्तिक्यं वेदनिन्दां च देवतानां च कुत्सनम्।**
**द्वेषो दम्भोऽतिमानश्च क्लैब्यं च परिवर्जयेत्॥**

क्षौरान्ते सचैलस्नानम्

**[3]क्षुरकर्मणि चान्ते च स्त्रीसंभोगे च भारत।**
**स्नायीत चैलवान्प्रातः शुद्धभूमिमुपेत्य च॥**

(१) **भविष्य.** ४।२०५।५८-६२, ७३-७५.
(२) **भविष्य.** ४।२०५।७९-८१, ८२, ८४.
(३) **भविष्य.** ४।२०५।१२८, १२९.

गुरुपतिव्रतायज्ञतपस्विनां परिवाद-परिहासयोर्निषेधः

**गुरोः पतिव्रतानां च तथा यज्ञतपस्विनाम्।**
**परिवादं न कुर्वीत परिहासोऽपि भारत॥**

शूद्रस्य पुराणधर्मशास्त्राद्यध्ययनानधिकारः, श्रवण-मपि देवताप्रतिमादिपुरस्कारेण प्रोच्य-मानानामेव पुराणादीनाम्

**[1]मोहाद्वा कामतः शूद्रः पुराणं संहितां स्मृतिम्।**
**पठन्नरकमाप्नोति पितृभिः सह कुट्टनम्॥**
कुट्टनमिति नरकनाम। शूशि. ४५
**[2]यस्य राज्ये सदा शूद्राः पुराणं संहितां तथा।**
**पठन्ति स्यात्स चाल्पायू राजा राष्ट्रेण सान्वयः॥**
**पुराणं धर्मशास्त्राणि संहिताश्च मुनीरिताः।**
**नाध्यापयेन्नृपः शूद्रैर्विहितानि यदृच्छया॥**
**[3]अध्येतव्यं न चान्येन ब्राह्मणं क्षत्रियं विना।**
**श्रोतव्यमेव शूद्रेण नाध्येतव्यं कदाचन॥**
**[4]देवार्चां पुरतः कृत्वा ब्राह्मणांश्च नृपोत्तम।**
**श्रोतव्यमेव शूद्रेण तथाऽन्यैश्च द्विजातिभिः॥**
**[5]श्रौतं स्मार्तं हि वै धर्मं प्रोक्तमस्मिन्नृपोत्तम।**
**तस्माच्छूद्रैर्विना विप्रं न श्रोतव्यं कदाचन॥**

(१) अर्चां प्रतिमां पुरतः कृत्वा प्रधानतया श्रवणे पुरस्कृत्य, तत्सेवानुषङ्गेण स्वयमपि श्रवणात्, न तु स्वातन्त्र्येण। तदिदमुक्तम् — 'विना विप्रं पुराणादि न श्रोतव्यं कदाचन' इति। विप्रं श्रोतृत्वेन पुरस्कृत्येत्यर्थः। श्रावयितुरपि एषैव गतिः।

\+ शूशि. ४७-४८

\+ बाल. शूशिवत्।
(१) **शूशि.** ४५.
(२) **शूशि.** ४५-४६ क्रमेण भविष्यपुराणम्.
(३) **दीक.** १।१२१ मेव (मिह); **शूशि.** ४८; **शूक.** २३ उत्त. (=) : २४ पूर्वार्धे (अध्येतव्यं ब्राह्मणेन वैश्येन क्षत्रियेण च।) (=) : २५ शूक. २४ वत्, पू. : २६ उत्त. (=); **विपा.** ५।३६६ शूक. २४ वत्; आप्र. २३३; **बाल.** १।७७ पृ. २०९; **संर.** ६७९ उत्त. (=).
(४) **शूशि.** ४७; **शूक.** १७; **बाल.** १।७७ पृ. २११ णांश्च (णं च) (=) : १।८९ पृ. २४५ णांश्च (णानां) क्रमेण मनुः १।१२१ पृ. ३८१ णांश्च (णैश्च); **संर.** ६७८.
(५) **शूशि.** ४७; **शूक.** २४ हि (च); **बाल.** १।७७ पृ. २११ श्रौतं स्मार्तं (श्रौतस्मार्तं) (=) : १।१२१ पृ. ३८१.

(२) पुराणश्रवणविधानादेव तदन्तर्गतवैदिकमन्त्रश्रवणेऽपि न दोषः। शूक. १७

गोसेवा

[1]गामालभ्य नमस्कृत्य कृत्वा चैव प्रदक्षिणम्।
प्रदक्षिणीकृता तेन सप्तद्वीपा वसुंधरा॥
[2]गवामस्थि न लङ्घेत मृतगन्धं न वर्जयेत्।
यावदाघ्राति तं गन्धं तावत्पुण्येन युज्यते॥

## नारदपुराणम्

इष्टापूर्तविधिः

[3]इष्टापूर्तं तु कर्तव्यं ब्राह्मणेन प्रयत्नतः।
इष्टेन लभते स्वर्गं मोक्षं पूर्तेन चाऽऽप्नुयात्॥

यतिनिन्दा स्वर्णस्तेयसमा

[4]यतीनां निन्दनं चैव स्वर्णस्तेयसमं स्मृतम्॥

चतुर्णां वर्णानां विशेषाः
सामान्याश्च धर्माः

[5]ब्राह्मणक्षत्रियविशां शूद्राणां च द्विजोत्तम।
क्रियाः सामान्यतो वक्ष्ये तच्छृणुष्व समाहितः॥
दानं दद्याद्ब्राह्मणेभ्यस्तथा यज्ञैर्यजेत्सुरान्।
वृत्त्यर्थं याचयेच्चैव अन्यानध्यापयेत्तथा॥
याजयेद्यजने योग्यान्विप्रो नित्योदकी भवेत्।
कुर्याच्च वेदग्रहणं तथाऽग्नेश्च परिग्रहम्॥
ग्राह्यो द्रव्ये च पारक्ये समबुद्धिर्भवेत्तथा।
सर्वलोकहितं कुर्यान्मृदुवाक्यमुदीरयेत्॥
ऋतावभिगमः पत्न्यां शस्यते ब्राह्मणस्य वै।
न कस्याप्यहितं ब्रूयाद्विष्णुपूजापरो भवेत्॥
दद्याद्दानानि विप्रेभ्यः क्षत्रियोऽपि द्विजोत्तम।
कुर्याच्च वेदग्रहणं यज्ञैर्देवान्यजेत्तथा॥
शस्त्राजीवी भवेच्चैव पालयेद्धर्मतो महीम्।
दुष्टानां शासनं कुर्याच्छिष्टानां पालनं तथा॥
पाशुपाल्यं च वाणिज्यं कृषिश्च द्विजसत्तम।
वेदस्याध्ययनं चैव वैश्यस्यापि प्रकीर्तितम्॥
कुर्याच्च दारग्रहणं धर्मांश्चैव समाचरेत्।
क्रयविक्रयजैर्वाऽपि धनैः कारुक्रियोद्भवैः॥
दद्याद्दानानि शूद्रोऽपि पाकयज्ञैर्यजेन्न(?जेत) च।
ब्राह्मणक्षत्रियविशां शुश्रूषानिरतो भवेत्।
ऋतुकालाभिगामी च स्वदारेषु भवेत्तथा॥
सर्वलोकहितैषित्वं मङ्गलं प्रियवादिता।
अनायासो मनोहर्षस्तितिक्षा नातिमानिता।
सामान्यं सर्ववर्णानां मुनिभिः परिकीर्तितम्॥
सर्वे च मुनितां यान्ति स्वाश्रमोचितकर्मणा॥

ग्रहणनिमित्तकश्राद्धविधिः

........[1]ग्रहणे चन्द्रसूर्ययोः।
........गृही श्राद्धं समाचरेत्॥

ग्रहणनिमित्तकर्मसु ग्राह्यस्तिथिभागः

[2]सूर्येन्दुग्रहणे यावत्तावद्ग्राह्या+ जपादिषु॥

ग्रस्तास्तमने भोजनकालः

आदित्यशीतकिरणौ ग्राह्य(?ग्रस्ता)वस्तंगतौ यदि।
स्नात्वा(?दृष्ट्वा) भुञ्जीत विप्रेन्द्र परेद्युः शुद्धमण्डलम्॥

सूर्यग्रहणात्प्राक् भोजने
वर्ज्यः कालः

आदित्यग्रहणे प्राप्ते पूर्वयामत्रये तथा।
नाद्याद्वै यदि भुञ्जीत सुरापेन समो भवेत्॥

दुर्लभमनुष्यजन्मनः परलोकार्थकर्मभिः
सार्थकता

[3]दुर्लभं मानुषं जन्म प्रार्थ्यते त्रिदशैरपि।
तल्लब्ध्वा परलोकार्थं यत्नं कुर्याद्विचक्षणः॥

संतोषप्रशंसा

[4]यदृच्छालाभसंतुष्टिः संतोष इति गीयते।
संतोषहीनः पुरुषो न लभेच्छर्म कुत्रचित्॥
न जातु कामः कामानामुपभोगेन शाम्यति।
इतोऽधिकं कदा लप्स्य इति कामस्तु वर्धते॥
तस्मात्कामं परित्यज्य देहसंशोषकारणम्।
यदृच्छालाभसंतुष्टो भवेद्धर्मपरायणः॥

---

(१) निक. ४६२; निप्र. २।५६६.
(२) निक. ४६२.
(३) नारद. १।१४।६४.
(४) नारद. १।१५।३९.
(५) नारद. १।२४।१८-३०.

+ तिथिः इति शेषः।
(१) नारद. १।२६।४२.
(२) नारद. १।२९।१९, २५-२६, ५७.
(३) नारद. १।३२।४७.
(४) नारद. १।३३।९७-९९.

चतुर्णां वर्णानां लक्षणभूता गुणाः तेषां जातितः प्राधान्यं च, लोभ-क्रोधादयो दोषास्त्याज्याः

**भारद्वाज उवाच –**

**[1]ब्राह्मणः केन भवति क्षत्रियो वा द्विजोत्तम।**
**वैश्यः शूद्रश्च विप्रर्षे तद्ब्रूहि वदतां वर॥**

**भृगुरुवाच –**

**जातकर्मादिभिर्यस्तु संस्कारैः संस्कृतः शुचिः।**
**वेदाध्ययनसंपन्नः ब्रह्मकर्मस्ववस्थितः॥**
**शौचाचारस्थितः सम्यग्विघसाभ्यासी गुरुप्रियः।**
**नित्यव्रती सत्यपरः स वै ब्राह्मण उच्यते॥**
**सत्यं दानमथोऽद्रोह आनृशंस्यं कृपा घृणा।**
**तापस्यं दृश्यते यत्र स ब्राह्मण इति स्मृतः॥**
**क्षत्रजं सेवते कर्म वेदाध्ययनसंगतः।**
**दानादानरतिर्यस्तु स वै क्षत्रिय उच्यते॥**
**विशत्याशु पशुभ्यश्च(?) कृष्यादानरतिः शुचिः।**
**वेदाध्ययनसंपन्नः स वैश्य इति संज्ञितः॥**
**सर्वभक्षरतिर्नित्यं सर्वकर्मकरोऽशुचिः।**
**त्यक्तवेदस्त्वनाचारः स वै शूद्र इति स्मृतः॥**
**शूद्रे चैतद्भवेल्लक्ष्म द्विजे तच्च न विद्यते।**
**न वै शूद्रो भवेच्छूद्रो ब्राह्मणो ब्राह्मणो न च॥**
**सर्वोपायैस्तु लोभस्य क्रोधस्य च विनिग्रहः॥**
**एतत्पवित्रं ज्ञानिनां तथा चैवाऽऽत्मसंयमः।**
**वर्ज्यौ सर्वात्मना तौ हि श्रेयोघातार्थमुद्यतौ॥**
**नित्यं क्रोधाच्छ्रियं रक्षेत्तपो रक्षेत्तु मत्सरात्।**
**विद्यां मानापमानाभ्यामात्मानं तु प्रमादतः॥**
**यस्य सर्वे समारम्भा निराशीर्बन्धना द्विज।**
**त्यागे यस्य हुतं सर्वं स त्यागी स च बुद्धिमान्॥**
**अहिंस्रः सर्वभूतानां मैत्रायणगतश्चरेत्।**
**परिग्रहान्परित्यज्य भवेद्बुद्ध्या जितेन्द्रियः॥**

क्षौरे शुभाशुभकालाः

**[2]क्षौरं कलेस्तिथौ........ परिवर्जयेत्॥**
**अभ्यक्ते संध्ययोर्नाऽऽरे निशि भुक्त्वा न वाऽऽहवे।**
**नोत्कटे भूषिते नैव याने न नवमेऽह्नि च॥**
**क्षौरकर्म महीपानां पञ्चमे पञ्चमेऽहनि।**
**कर्तव्यं क्षौरनक्षत्रेऽप्यथ वाऽस्योदये शुभम्॥**

क्षौरे वर्ज्यकालापवादः

**नृपविप्राज्ञया यज्ञे मरणे बन्धमोक्षणे।**
**उद्वाहेऽखिलवारर्क्षतिथिषु क्षौरमिष्टदम्॥**

ग्रहणे गङ्गास्नानस्य कुरुक्षेत्रे दानस्य च प्रशंसा

**.......[1]ग्रहणे चन्द्रसूर्ययोः।**
**गङ्गास्नातो नरः कामाद्ब्रह्मणः सदनं लभेत्॥**
**[2]यद्यद्ददाति यस्तत्र कुरुक्षेत्रे रविग्रहे।**
**तत्तदेव सदाऽऽप्नोति नरो जन्मनि जन्मनि॥**

## अग्निपुराणम्

आद्यक्षौरे मासा वाराश्च

**[3]वारे ज्ञगुरुशुक्राणां सूर्याचन्द्रमसोस्तथा।**
**माघादिमासषट्के तु क्षौरमाद्यं प्रशस्यते॥**

वर्णानां सामान्या विशेषाश्च धर्माः

**[4]अहिंसा सत्यवचनं दया भूतेष्वनुग्रहः।**
**तीर्थानुसरणं दानं ब्रह्मचर्यममत्सरः॥**
**देवद्विजातिशुश्रूषा गुरूणां च भृगूत्तम।**
**श्रवणं सर्वधर्माणां पितृणां पूजनं तथा॥**
**भक्तिश्च नृपतौ नित्यं तथा सच्छास्त्रनेत्रता।**
**आनृशंस्यं तितिक्षा च तथा चाऽऽस्तिक्यमेव च॥**
**वर्णाश्रमाणां सामान्यं धर्माधर्मं समीरितम्॥**
**यजनं याजनं दानं वेदाद्यध्यापनक्रिया।**
**प्रतिग्रहश्चाध्ययनं विप्रकर्माणि निर्दिशेत्॥**
**दानमध्ययनं चैव यजनं च यथाविधि।**
**क्षत्रियस्य सवैश्यस्य कर्मेदं परिकीर्तितम्।**
**क्षत्रियस्य विशेषेण पालनं दुष्टनिग्रहः॥**
**कृषिगोरक्ष्यवाणिज्यं वैश्यस्य परिकीर्तितम्।**
**शूद्रस्य द्विजशुश्रूषा सर्वशिल्पानि वाऽप्यथ॥**
**[5]आत्मज्ञाने शमे च स्याद्वेदाभ्यासे च यत्नवान्।**
**एतद्विजन्मसामर्थ्यं ब्राह्मणस्य विशेषतः॥**

---

(१) नारद. १।४३।६३-७५.
(२) नारद. १।५६।१४०-१४१, ३४०-३४३.

(१) नारद. २।४०।१८-१९.
(२) नारद. २।६५।१२६-१२७.
(३) अग्नि. १२१।२४.
(४) अग्नि. १५१।३-९.
(५) अग्नि. १६२।७-९.

**वेदशास्त्रार्थतत्त्वज्ञो यत्र तत्राऽऽश्रमे वसन्।**
**इहैव लोके तिष्ठन्हि ब्रह्मभूयाय कल्पते॥**

हस्तिच्छायासंज्ञकसूर्यग्रहणकृत-
श्राद्धादेः प्रशंसा

[1]**सैंहिकेयो यदा सूर्यं ग्रसते पर्वसंधिषु।**
**हस्तिच्छाया तु सा ज्ञेया श्राद्धदानादिकेऽक्षया॥**

मौननिमित्तानि

[2]**प्रचारे मैथुने चैव प्रस्तावे दन्तधावने।**
**स्नानभोजनकाले च षट्सु मौनं समाचरेत्॥**

ग्रहणकृतदानप्रशंसा

[3]**ग्रहोपरागे यद्दानं......तदपि नाकदम्॥**

राज्ञा कामक्रोधादयस्त्याज्याः

[4]**कामः क्रोधस्तथा लोभो हर्षो मानो मदस्तथा।**
**षड्वर्गमुत्सृजेदेनमस्मिंस्त्यक्ते सुखी नृपः॥**

ब्रह्मचारिसंन्यासिनोः सामान्यधर्माः

**अहिंसा सूनृता वाणी सत्यं शौचं दया क्षमा।**
**वर्णिनां लिङ्गिनां चैव सामान्यो धर्म उच्यते॥**

गोब्राह्मणप्रशंसा

[5]**गावः पवित्रा माङ्गल्या गोषु लोकाः प्रतिष्ठिताः।**
**शकृन्मूत्रं परं तासामलक्ष्मीनाशनं परम्।**
**गवां कण्डूयनं वारिदानं शृङ्गस्य मर्दनम्॥**
**गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्।**
**षडङ्गं परमं पाने दुःस्वप्नादिनिवारणम्॥**
**रोचना विषरक्षोघ्नी ग्रासदः स्वर्गगो गवाम्।**
**यद्गृहे दुःखिता गावः स याति नरकं नरः॥**
**परगोग्रासदः स्वर्गी गोहितो ब्रह्मलोकभाक्।**
**गोदानात्कीर्तनाद्रक्षां कृत्वा चोद्धरते कुलम्।**
**गवां श्वासात्पवित्रा भूः स्पर्शनात्किल्बिषक्षयः॥**
**गावः सुरभयो नित्यं गावो गुग्गुलगन्धिकाः।**
**गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं परम्॥**
**अन्नमेव परं गावो देवानां हविरुत्तमम्।**

(१) अग्नि. १६५।३.
(२) अग्नि. १६६।१७-१८.
(३) अग्नि. २०९।४.
(४) अग्नि. २३८।७,१०.
(५) अग्नि. २९२।१-६, १४-२२.

**पावनं सर्वभूतानां क्षरन्ति च वहन्ति च।**
**हविषा मन्त्रपूतेन तर्पयन्त्यमरान्दिवि॥**
**ऋषीणामग्निहोत्रेषु गावो होमेषु योजिताः।**
**सर्वेषामेव भूतानां गावः शरणमुत्तमम्॥**
**गावः पवित्रं परमं गावो माङ्गल्यमुत्तमम्।**
**गावः स्वर्गस्य सोपानं गावो धन्याः सनातनाः॥**
**नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च।**
**नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः॥**
**ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम्।**
**एकत्र मन्त्रास्तिष्ठन्ति हविरेकत्र तिष्ठति॥**
**देवब्राह्मणगोसाधुसाध्वीभिः सकलं जगत्।**
**धार्यते वै सदा तस्मात्सर्वे पूज्यतमा मताः।**
**पिबन्ति यत्र तत्तीर्थं गङ्गाद्या गाव एव हि॥**

सत्यप्रियभाषणविधिः

[1]**सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम्।**
**प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः॥**

धर्मार्थशरीररक्षा

[2]**शरीरं धर्मसंयुक्तं रक्षणीयं प्रयत्नतः॥**

## देवीभागवतम्

मूर्खसंगतिनिन्दा विज्ञसंगतिप्रशंसा च

[3]**मूर्खेण सह संयोगो विषादपि सुदुर्जरः।**
**विज्ञेन सह संयोगः सुधारससमः स्मृतः॥**

प्रभुसेवा सेवकधर्मः

[4]**प्रभुकार्यं प्रकर्तव्यं सेवकेन यथोचितम्॥**

चोरशत्रुपरिज्ञानकर्तव्यता

**चोरशत्रुपरिज्ञानं कर्तव्यं सर्वथा बुधैः॥**

उद्यमप्रशंसा

[5]**भवितव्ये न विश्वासः कर्तव्यः सर्वथा बुधैः॥**

भवितव्ये न विश्वासः कार्यः भवितव्यमाश्रित्यैव निरुद्योगेन स्थातव्यमिति न, किंतूद्योगोऽपि कर्तव्य इत्यर्थः। तिलक.

(१) अग्नि. ३७२।८.
(२) अग्नि. ३७२।१७.
(३) देवीभा. १।६।५.
(४) देवीभा. १।१७।३३, ३४.
(५) देवीभा. २।८।३५-४०.

**प्रत्यक्षं तत्र दृष्टान्तं पश्यन्तु सचिवाः किल।**
**दिवि कोऽपि पृथिव्यां वा दृश्यते पुरुषः क्वचित्॥**

'अयं सर्पदष्टोऽनेन प्रत्यक्षं जीवितः' इति प्रत्यक्षं दृष्टान्तं प्रथमं पश्यन्तु मयोच्यमानम् आलोचयन्तु। तं तथाविधं निश्चित्य दिवि पृथिव्यां वा यः कोऽपि पुरुषो विद्यते क्वचित्? स आनेय इति शेषः।

तिलक.

**दैवे मतिं समाधाय यस्तिष्ठेत्तु निरुद्यमः।**
**विरक्तस्तु यतिर्भूत्वा भिक्षार्थं याति सर्वथा॥**

ननु दैवं प्रारब्धमेव मुख्यमिति केचिद्वदन्ति तत्राऽऽह – दैवे मतिमिति। एतादृशो निरुद्यमस्तु पुरुषो विरक्तो दैवे प्रारब्धे निश्चयात्मिकां मतिं कृत्वा यस्तिष्ठति स यतिर्भूत्वा भिक्षार्थे गृहस्थानां गृहं याति, न तु गृहस्थाश्रमे तिष्ठति। अतो मम गृहस्थाश्रमिणो न तन्मतं युक्तमिति भावः। तिलक.

**गृहस्थानां गृहे काममाहूतो वाऽऽथवाऽन्यथा।**
**यदृच्छयोपपन्नं च क्षिप्तं केनापि वा मुखे॥**

उद्योगस्तु तदाश्रमेऽप्यपेक्षितः, अन्यथाऽनिर्वाहादिति तन्मतेऽपि दूषणमस्त्येवेत्याह – गृहस्थानामिति। आहूतोऽथवा नाऽऽहूतो वा यदृच्छति गृहस्थानां गृहं प्रति यतिः स उद्योगेनैव गच्छति, न तु केवलं दैवेन। तथा यदृच्छया उपात्तं केनापि मुखे निक्षिप्तम् अन्नम् उद्योगेन विना यत्नं विना कथमुदरे संविशेत्? न कथमपीत्यर्थः। तस्माद्विरक्तोऽप्युद्योगप्रधान एवेति भावः। तिलक.

**उद्यमेन विना चाऽऽस्यादुदरे संविशेत्कथम्।**
**प्रयत्नश्चोद्यमे कार्यो यदा सिद्धिं न याति चेत्।**
**तदा दैवं स्थितं चेति चित्तमालम्बयेद्बुधः॥**

तदेवाऽऽह – उद्यमेनेति। यदोद्यमे कृतेऽपि कार्यं न सिध्यति तदा दैवं प्रबलम् इति निश्चयः कर्तव्यः, न तु ततः पूर्वमित्याह – तदा दैवमिति।

तिलक.

प्राणरक्षणं यशोरक्षणं च कर्तव्यम्

**[1]उपायस्तु प्रकर्तव्यः सर्वथा शास्त्रसंमतः।**
**मणिमन्त्रौषधीभिश्च विधिवत्प्राणरक्षणे॥**

(१) **देवीभा.** २।९।४०-४१.

**[2]रक्षणीयं यशः कामं धिग्धनं यशसा विना॥**

मूर्खब्राह्मणनिन्दा

**[3]यथा शूद्रस्तथा मूर्खो ब्राह्मणो नात्र संशयः।**
**न पूजार्हो न दानार्हो निन्द्यश्च सर्वकर्मसु॥**

अवेदविद्वेदविद्भ्यां क्रमेणाऽऽहाराधिकान्नदानेऽन्नदाने च निन्दाप्रशंसे

**आहारादधिकं चान्नं न दातव्यमपण्डिते।**
**दाता नरकमाप्नोति ग्रहीता तु विशेषतः॥**
**भुक्त्वाऽन्नं वेदविद्विप्रो वेदाभ्यासं करोति वै।**
**क्रीडन्ति पूर्वजास्तस्य स्वर्गे प्रमुदिताः किल॥**

न्यायार्जितद्रव्यकृतकर्मण एव साफल्यम्

**[3]अन्यायोपार्जितेनैव द्रव्येण सुकृतं कृतम्।**
**न कीर्तिरिह लोके च परलोके न तत्फलम्॥**
**तस्मान्न्यायार्जितेनैव कर्तव्यं सुकृतं सदा।**
**यशसे परलोकाय भवत्येव सुखाय च॥**

धर्मसत्ययोः प्रशंसा

**[4]धर्मो जयति नाधर्मः सत्यं जयति नानृतम्॥**

साहसबहुविरोधयोर्निषेधः

**[5]न पुत्रि साहसं कार्यं मतिमद्भिः कदाचन।**
**बहुभिर्न विरोद्धव्यमिति वेदविदो विदुः॥**

मनुष्यजन्मैव धर्मसाधनं भारते तद्दुर्लभं च

**[6]धर्मस्याऽऽचरणं कार्यं पुरुषेण विजानता।**
**संजित्येन्द्रियवर्गं वै यथा न नरकं व्रजेत्॥**

यथा न नरकं व्रजेत्तथा धर्माचरणं कर्तव्यमित्यर्थः।

तिलक.

**मानुष्यं दुर्लभं मातः खण्डेऽस्मिन्भारते शुभे।**
**आहारादि सुखं नूनं भवेत्सर्वासु योनिषु॥**
**प्राप्य तं मानुषं देहं कर्तव्यं धर्मसाधनम्।**
**स्वर्गमोक्षप्रदं नृणां दुर्लभं चान्ययोनिषु॥**

(१) **देवीभा.** २।१०।२१.
(२) **देवीभा.** ३।१०।३३, ३८, ४३.
(३) **देवीभा.** ३।१२।८-९.
(४) **देवीभा.** ३।१९।५९.
(५) **देवीभा.** ३।२१।४१-४२.
(६) **देवीभा.** ३।२५।१७-१९.

सत्यशौचदयादानवत एव धर्माचरणं सफलम्

[1]धर्मस्य प्रथमः पादः सत्यमेतच्छ्रुतेर्वचः।
द्वितीयस्तु तथा शौचं दया पादस्तृतीयकः॥
दानं पादश्चतुर्थश्च पुराणज्ञा वदन्ति वै।
तैर्विहीनः कथं धर्मस्तिष्ठेदिह सुसंमतः॥

तदपि फलं न संभवतीत्याह — धर्मस्येति। तैः पादैः। तिलक.

शान्तत्वं तपसो मूलम्

[2]शान्तत्वं तपसो मूलं मुनिभिः परिकीर्तितम्॥

सर्वधर्मकारणं सत्यम्

[3]धर्मशास्त्रेषु सर्वेषु सत्यं धर्मस्य कारणम्।
कथितं मुनिभिर्येन परमात्माऽपि लभ्यते॥

येन सत्येन परमात्मा परं ब्रह्म लभ्यते प्राप्यते। तथा च श्रुतिः — 'सत्येन लभ्यस्तपसा ह्येष आत्मा' (मुउ. ३।१।५) इति। तिलक.

उद्यमप्रशंसा

[4]उद्यमः सर्वथा कार्यो यथापौरुषमात्मनः।
मुनयोऽपि हि मुक्त्यर्थमुद्यमैकरताः सदा॥
दैवाधीनं च जानन्तो योगध्यानपरायणाः।
तस्मात्सदैव कर्तव्यो व्यवहारोदितोद्यमः॥
[5]यतीनां भूषणं ज्ञानं संतोषो हि द्विजन्मनाम्।
उद्यमः शत्रुहननं भूषणं भूतिमिच्छताम्॥

तदेवाऽऽह — यतीनामिति। तिलक.

सात्त्विकादिभेदेन ब्राह्मणत्रैविध्यं सलक्षणम्

[6]त्रिधात्वात्सृष्टिधर्मस्य त्रिविधा ब्राह्मणास्ततः।
सात्त्विका राजसाश्चैव तामसाश्च तथा परे॥
सर्वे वेदविदो दक्षाः सात्त्विकाः सत्त्ववृत्तयः।
प्रतिग्रहविहीनाश्च दयादमपरायणाः॥
यज्ञांस्ते सात्त्विकैरन्नैः कुर्वाणा धर्मतत्पराः।
पुरोडाशविधानैश्च पशुभिर्न कदाचन॥
दानमध्ययनं चैव यजनं तु तृतीयकम्।
त्रिकर्मरसिकास्ते वै सात्त्विका ब्राह्मणा नृप॥
राजसा वेदविद्वांसः क्षत्रियाणां पुरोहिताः।
षट्कर्मनिरताः सर्वे विधिवन्मांसभक्षकाः॥
यजनं याजनं दानं तथैव च प्रतिग्रहः।
अध्ययनं तु वेदानां तथैवाध्यापनं तु षट्॥
तामसाः क्रोधसंयुक्ता रागद्वेषपराः पुनः।
राज्ञां कर्मकरा नित्यं किंचिदध्ययने रताः॥

शरणागतरक्षणाभावे प्रत्यवायः

[1]शरणागतमार्तं च यो ददाति⇧ नराधमः।
स एव नरकं याति यावदाभूतसंप्लवम्॥

अहिंसादियमानां स्वधर्मपालनस्य क्षमायाश्च प्रशंसा

[2]अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः।
स्वधर्मपालनं राजन्सर्वतीर्थफलप्रदम्॥
व्यास उवाच —
[3]क्षमाऽतिदुर्लभा राजन्प्राणिभिरजितात्मभिः।
क्षमावान्दुर्लभो लोके सुसमर्थो विशेषतः॥

शीलादिगुणषट्कं विद्याफलम्

शीलं परहितत्वं च कोपाभावः क्षमा धृतिः।
संतोषश्चेति विद्यायाः परिपाकोज्ज्वलं फलम्॥

मनुष्यजन्मनो दुर्लभत्वमात्मज्ञानेन साफल्यं च

[4]दुर्लभो मानुषो देहः प्राणिनां क्षणभङ्गुरः।
तस्मिन्प्राप्ते तु कर्तव्ये सर्वथैवाऽऽत्मसाधनम्॥
जिह्वोपस्थरसो राजन्पशुयोनिषु वर्तते।
ज्ञानं मानुषदेहे वै नान्यासु च कुयोनिषु॥

दयाप्रशंसा

[5]दयासमं नास्ति पुण्यं पापं हिंसासमं न हि।
8रागिणां रोचनार्थाय नोदनेयं विचारय॥

---

(१) देवीभा. ४।४।१४-१५.
(२) देवीभा. ४।७।१७.
(३) देवीभा. ४।१३।३.
(४) देवीभा. ५।४।२९-३०.
(५) देवीभा. ५।५।३.
(६) देवीभा. ५।२०।३८-४५.

⇧ शत्रवे इति शेषः।

8 प्रसङ्गसंगतायां दयाप्रशंसायाम् 'यज्ञीयपशुहिंसाविधिः कामतो मांसं बुभुक्षूणां संतोषाय अनिर्बन्धमांसभक्षणप्रवृत्तिनियमनाय च यज्ञीयपशुहिंसानुमतिद्वारा यज्ञबाह्यपशुहिंसानिवृत्तिपरः, न तु यज्ञीयपशुहिंसावश्यकत्वपरः' इत्यर्थकोऽयमर्धश्लोकः पूर्वप्रकृतनरमेधसंबद्धः।

(१) देवीभा. ६।७।६२.
(२) देवीभा. ६।१२।२१-२२.
(३) देवीभा. ६।१५।३६, ५६-५७.
(४) देवीभा. ६।३०।२५-२६.
(५) देवीभा. ७।१६।३९-४३.

**आत्मदेहस्य रक्षार्थं परदेहनिकृन्तनम्।**
**न कर्तव्यं महाराज सर्वतः शुभमिच्छता॥**
**दयया सर्वभूतेषु संतुष्टो येन केन च।**
**सर्वेन्द्रियोपशान्त्या च तुष्यत्याशु जगत्पतिः॥**
**आत्मवत्सर्वभूतेषु चिन्तनीयं नृपोत्तम।**
**जीवितव्यं प्रियं नूनं सर्वेषां सर्वदा किल॥**

सत्यप्रशंसा

(१)**प्रेतवद्वर्जनीयो हि नरः सत्यबहिष्कृतः॥**
**नातः परतरं धर्मं वदन्ति पुरुषस्य च।**
**यादृशं पुरुषव्याघ्र स्वसत्यस्यानुपालनम्॥**

नातः परतरमिति। 8'अश्वमेधसहस्राच्च सत्यमेकं विशिष्यते' (विस्मृ. ८।३६) इति स्मृतेः।

तिलक.

**अग्निहोत्रमधीतं च दानाद्याः सकलाः क्रियाः।**
**भवन्ति तस्य वैफल्यं(? विफला)वाक्यं यस्यानृतं भवेत्॥**
**सत्यमत्यन्तमुदितं धर्मशास्त्रेषु धीमताम्।**
**तारणायानृतं तद्वत्पतनायाकृतात्मनाम्॥**

सत्यं पालनाय, अनृतं पातनाय नरकपातनायेत्यर्थः।

तिलक.

**शताश्वमेधानाहृत्य राजसूयं च पार्थिवः।**
**कृत्वा राजा सकृत्स्वर्गादसत्यवचनाच्च्युतः॥**

पार्थिवः ययातिर्नृप सकृत् असत्यवचनात् असत्यभाषणात् स्वर्गात् च्युतः पतितः इत्यन्वयः। इयं कथा पुराणेषु प्रसिद्धा। तिलक.

(२)**सत्येनार्कः प्रतपति सत्ये तिष्ठति मेदिनी।**
**सत्ये चोक्तः परो धर्मः स्वर्गः सत्ये प्रतिष्ठितः॥**
**अश्वमेधसहस्रं तु सत्यं च तुलया धृतम्।**
**अश्वमेधसहस्राद्धि सत्यमेकं विशिष्यते॥**

धर्माचरणविधिः

(३)**विना धर्मं मनुष्याणां जायते न शुभं क्वचित्।**
**यत्नतो धारयेत्तस्मात्पुरुषो धर्ममेव हि॥**

8 यद्यपि वचनमिदं प्रकृतपुराणे प्रकृतकथायामेवोत्तराध्याये पठिष्यते, तथापि प्रकृतव्याख्येयवचने वदन्तिशब्देन सत्यात्परतर धर्माभावस्य परोक्तत्वबोधनात्, स्वोक्त्या परोक्तोपोद्वलनस्यानौचित्याच्च, व्याख्यात्राऽपि स्मृतेरिति परोक्षनिर्देशाच्च विष्णुस्मृतीयस्थलनिर्देशोऽत्रास्माभिः कृतः।

(१) **देवीभा.** ७।२०।२९-३३.
(२) **देवीभा.** ७।२१।६-८.
(३) **देवीभा.** ७।२४।२६-२७.

सवेतनसेवालोपे प्रत्यवायः

(१)**यः स्वामिवेतनं गृह्य तस्य कार्यं विलुम्पति।**
**नरके पच्यते सोऽथ महारौरवपूर्वके॥**

स्त्रीवधनिषेधः

**स्त्रियो रक्ष्याः प्रयत्नेन न हन्तव्याः कदाचन।**
**स्त्रीवधे कीर्तितं पापं मुनिभिर्धर्मतत्परैः॥**
**पुरुषो यः स्त्रियं हन्याज्ज्ञानतोऽज्ञानतोऽपि वा।**
**नरके पच्यते सोऽथ महारौरवपूर्वके॥**

सवेतनसेवालोपे प्रत्यवायः

**यः स्वामिवेतनं गृह्य स्वामिकार्यं विलुम्पति।**
**नरकान्निष्कृतिस्तस्य नास्ति कल्पायुतैरपि॥**

स्वभक्तत्यागनिषेधः

(२)**ब्रह्महत्या सुरापानं गोवधः स्त्रीवधस्तथा।**
**तुल्यमेभिर्महत्पापं भक्तत्यागादुदाहृतम्।**
**भजन्तं भक्तमत्याज्यं त्यजतः स्यात्कथं सुखम्॥**

आत्माज्ञाननाशनेन जीवनसाफल्यम्,
चित्तशुद्धिपर्यन्तं कर्माचरणम्

(३)**तस्मादज्ञाननाशाय यतेत नियतं नरः।**
**एतद्धि जन्मसाफल्यं यदज्ञानस्य नाशनम्॥**

यस्मादज्ञानमेव मूलं तस्मादित्यर्थः। एतद्धि जन्मेति। तथा च श्रुतिः – 'यो ह्यविदित्वाऽऽत्मानमस्माल्लोकात्प्रैति स कृपणः' (बृउ. ३।८।१०) इति।

तिलक.

**पुरुषार्थसमाप्तिश्च जीवन्मुक्तदशाऽपि च॥**
**तस्मात्सर्वाणि कर्माणि वैदिकानि महामते।**
**चित्तशुद्ध्यन्तमेव स्युस्तानि कुर्यात् प्रयत्नतः॥**

तर्हि कियत्पर्यन्तं वैदिककर्ममर्यादेति चेत्तत्राऽऽह – तस्मात् सर्वाणीति। यथा ज्ञानेन सह विरोधाद्यावज्जीवश्रुतेः संकोचस्तथा ज्ञानाङ्गेन सहापि विरोधात्तस्याः श्रुतेः यावद्वैराग्यादिप्राप्तिपर्यन्तम् इति संकोचः कर्तव्यः। तथा च चित्तशुद्ध्यन्तमेव कर्माणि हे महामते, सिद्धानि। तानि प्रयत्नतः अतियत्नेन श्रद्धादिपुरःसरं चित्तशुद्धिपर्यन्तं कुर्यादित्यर्थः। तिलक.

(१) **देवीभा.** ७।२५।२०-२१, ७६-७७, ८२-८३.
(२) **देवीभा.** ७।२७।२१-२२.
(३) **देवीभा.** ७।३४।७-८, १५.

विषहीनसर्पतुल्यतापादका विप्रस्य विष्णुमन्त्रहीनत्वादयो दोषाः

**[१]विष्णुमन्त्रविहीनश्च त्रिसंध्यारहितो द्विजः।**
**एकादशीविहीनश्च विषहीनो यथोरगः॥**
**हरेरनैवेद्यभोजी धावको वृषवाहकः।**
**शूद्रान्नभोजी यो विप्रो विषहीनो यथोरगः॥**
**शूद्राणां शवदाही यः स(?यो) विप्रो वृषलीपतिः।**
**शूद्राणां सूपकारश्च विषहीनो यथोरगः॥**

दिनविशेषेषु क्षारद्रव्यैर्वस्त्रप्रक्षालनस्य निषेधः

**[२]रविवारे च संक्रान्त्याममायां श्राद्धवासरे।**
**वस्त्राणां क्षारसंयोगं करोति केवलं नरः॥**
**स याति क्षारकुण्डं च सूत्रमानाब्दमेव च॥**

रविवारे चेति। क्षारसंयोगम्। मलनिष्कासनार्थं रजकैः क्षारो दीयते स क्षारः।

तिलक.

क्षौरे वर्ज्यः कालः

**व्रतानामुपवासानां श्राद्धादीनां च संगमे।**
**करोति यः क्षौरकर्म सोऽशुचिः सर्वकर्मसु॥**

संगमे प्राप्ते तद्दिने इत्यर्थः।

तिलक.

गोवंशसेवा

**[३]गोप्रहारं प्रकुर्वन्तं दृष्ट्वा यो न निवारयेत्।**
**याति गोविप्रयोर्मध्ये गोहत्यां तु लभेत्तु सः॥**
**दण्डैर्गास्ताडयेन्मूढो यो विप्रो वृषवाहनः।**
**दिने दिने गोवधं च लभते नात्र संशयः॥**
**ददाति गोभ्य उच्छिष्टं भोजयेद्वृषवाहकम्।**
**भुनक्ति वृषवाहान्नं स गोहत्यां लभेद्ध्रुवम्॥**
**पादं ददाति वह्नौ यो गाश्च पादेन ताडयेत्।**
**गेहं विशेदधौताङ्घ्रिः स्नात्वा गोवधमाप्नुयात्॥**

स्नात्वा अधौताङ्घ्रिः* गेहं देवगृहं यदि विशेदित्यन्वयः।

तिलक.

* इयमशुद्धिरज्ञातपूर्वा।

(१) **देवीभा.** ९।२६।३२-३४.

(२) **देवीभा.** ९।३३।६-७, ४२-४३.

(३) **देवीभा.** ९।३४।५२-५४, ५६.

सदाचारप्रशंसा, प्रतिदिनं कृताकृत-धर्माधर्मविचारः

**नारायण उवाच –**

**[१]शृणु नारद तत्त्वज्ञ सदाचारविधिक्रमम्।**
**यदनुष्ठानमात्रेण देवी प्रीणाति सर्वदा॥**
**प्रातरुत्थाय कर्तव्यं यद्द्विजेन दिने दिने।**
**तदहं संप्रवक्ष्यामि द्विजानामुपकारकम्॥**
**उदयास्तमयं यावद्द्विजः सत्कर्मकृद्भवेत्।**
**नित्यनैमित्तिकैर्युक्तः काम्यैश्चान्यैरगर्हितैः॥**

सत्कर्मकृदिति। 'न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्' (भगी.३।५) इति न्यायेन व्यापाररहितत्वस्यासंभवेनान्यव्यापारं विहाय सद्व्यापार एवाऽऽश्रयणीय इत्यर्थः।

तिलक.

**आत्मैव न सहायार्थं पिता माता च तिष्ठति।**
**न पुत्रदारा न ज्ञातिर्धर्मस्तिष्ठति केवलम्॥**

ननु पित्रादिभिर्लालनहास्यविनोदेन कालः सुखेन गच्छति, तदा तद्विहाय किमिति धर्म आस्थेय इति चेत्तत्राऽऽह – आत्मैवेति। परलोके न पित्रादयः सहाया भविष्यन्ति, किंतु धर्म एव। स च आत्मनैव जायते इति आत्मैव स्वस्य सहायः, नान्य इति स्वेनैव स्वस्य धर्माचरणेन कल्याणं कर्तव्यमिति भावः। तदुक्तम् – 'आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः' (भगी. ६।५) इति।

तिलक.

**तस्माद्धर्मं सहायार्थं नित्यं संचिनु साधनैः।**
**धर्मेणैव सहायात्तु तमस्तरति दुस्तरम्॥**

तदेव स्पष्टयति – तस्मादिति। संचिनु गृहाण। तमः दुःखमज्ञानं वा।

तिलक.

**आचारः प्रथमो धर्मः श्रुत्युक्तः स्मार्त एव च।**
**तस्मादस्मिन्समायुक्तो नित्यं स्यादात्मनो द्विजः॥**

तत्र धर्मस्यानेकविधत्वेऽपि मुख्यरूपस्य तस्याऽऽश्रयणेनापि निर्वाहादवश्यं स विधेय इति दर्शयन्धर्मस्य मुख्यं रूपमाह – आचार इति। प्रथमः मुख्यः स च श्रुत्युक्तः स्मृत्युक्तश्च मान्यः। आत्मनः सदाचारे द्विजो नित्यं समायुक्तः स्यादित्यन्वयः।

तिलक.

(१) **देवीभा.** ११।१।४-१९, ३२-३३.

**आचाराल्लभते चाऽऽयुराचाराल्लभते प्रजाः।**
**आचारादन्नमक्षय्यमाचारो हन्ति पातकम्॥**

आचाररूपधर्मस्य मुख्यत्वं प्रतिपादयति – आचाराल्लभत इति। तिलक.

**आचारः परमो धर्मो नृणां कल्याणकारकः।**
**इह लोके सुखी भूत्वा परत्र लभते सुखम्॥**
**अज्ञानान्धजनानां तु मोहितैर्भ्रामितात्मनाम्।**
**धर्मरूपो महादीपो मुक्तिमार्गप्रदर्शकः॥**

तत्र हारीतस्मृतिमर्थतः पठति – अज्ञानान्धेति। मोहितैः भ्रान्तैः पुरुषैः। 'अज्ञानां तमसाऽन्धानां भ्रामितानां कुदृष्टिभिः। धर्मशास्त्रप्रदीपोऽयं धार्यो मार्गोपदेशकः॥' इति हि हारीतवचः। तिलक.

**आचारात्प्राप्यते श्रैष्ठ्यमाचारात्कर्म लभ्यते।**
**कर्मणो जायते ज्ञानमिति वाक्यं मनोः स्मृतम्॥**

अत्रैव मनुवचनमर्थतः पठति – आचारात्प्राप्यत इति। तथा च मनुः – 'आचारात्प(? रः प)रमो धर्मः' (मस्मृ. १।१०८) इत्यादि 'कर्मणो जायते ज्ञानं ज्ञानान्मोक्षमवाप्यते' इत्यन्तम्(?)। तिलक.

**सर्वधर्मवरिष्ठोऽयमाचारः परमं तपः।**
**तदेव ज्ञानमुद्दिष्टं तेन सर्वं प्रसाध्यते॥**
**यस्त्वाचारविहीनोऽत्र वर्तते द्विजसत्तमः।**
**स शूद्रवद्बहिष्कार्यो यथा शूद्रस्तथैव सः॥**

पराशरस्मृतिमर्थतः पठति – यस्त्वाचारविहीन इति। तथा च पराशरः – 'आचारः परमो धर्मः'(बृपसं. ६।२०५) इत्यादि 'सर्वधर्मबहिष्कार्यो यथा शूद्रस्तथैव सः' इत्यन्तम्(?)। तिलक.

**आचारो द्विविधः प्रोक्तः शास्त्रीयो लौकिकस्तथा।**
**उभावपि प्रकर्तव्यौ न त्याज्यौ शुभमिच्छता॥**
**ग्रामधर्मा जातिधर्मा देशधर्माः कुलोद्भवाः।**
**परिग्राह्या नृभिः सर्वे नैव ताँल्लङ्घयेन्मुने॥**

नैव तांल्लङ्घयेदिति। तथा च गौतमः – 'यद्यपि स्यात्स्वयं ब्रह्मा' इत्यादि, 'तथापि लौकिकाचारं मनसाऽपि न लङ्घयेत्' इति। तिलक.

**दुराचारो हि पुरुषो लोके भवति निन्दितः।**
**दुःखभागी च सततं व्याधिना व्याप्त एव च॥**

सदाचारत्यागे दृष्टदोषमाह – दुराचारो हीति। तिलक.

**परित्यजेदर्थकामौ यौ स्यातां धर्मवर्जितौ।**
**धर्ममप्यसुखोदर्कं लोकविद्विष्टमेव च॥**

ननु दुराचारत्यागेऽर्थकामावपि त्यक्तौ स्याताम्। न हि सदाचारासक्तस्यार्थकामसंपादनं संभवति। ततश्च पुरुषार्थचतुष्टये धर्ममोक्षरूपार्थद्वयमेव संपादितं स्यात्। तथा च पुरुषार्थचतुष्टयावाप्तिः सदाचारिणां भवतीति वचनानि विरुध्येरन्नित्यत आह – परित्यजेदिति। धर्मवर्जितावर्थकामौ परित्यजेदेवेत्यर्थः। न हि पुरुषार्थचतुष्टये धर्मविरुद्धावर्थकामौ गृहीतौ, येन तद्विरोधः स्यात्, किंतु धर्माविरुद्धावर्थकामौ सदाचारिणोऽनायासेन जायमानावेव गृहीताविति भावः। ननु धर्मस्य गवालम्भादिरूपस्यापि सत्त्वात्सोऽपि कर्तव्य इति चेत् तत्राऽऽह – धर्ममप्यसुखोदर्कमिति। असुखोदर्कं प्राणिनां पीडाकरं दुःखदायकं लोके विद्विष्टं गवालम्भादिकमपि त्यजेदित्यर्थः। न हि स नित्यो धर्मः, यदकरणे प्रत्यवायः स्यात् किंत्वभ्युदयार्थः। स च अभ्युदयो बहुभिरन्यसाधनैः शास्त्रेषूक्त एवेति नाभ्युदयार्थं प्राणिदुःखकरं लोकैर्विद्विष्टं धर्ममाचरेदिति भावः। तथा च पाद्मे– 'मधुपर्के गवालम्भो लोकविद्विष्ट एव च। स च नैव प्रकर्तव्यो यतः स नियतो न हि॥' इति। तिलक.

**वेदोक्तमेव सद्धर्मं तस्मात्कुर्यान्नरः सदा।**
**उत्थायोत्थाय बोद्धव्यं किं मयाऽद्य कृतं कृतम्॥**

उत्थायोत्थायेति प्रतिदिनमिति शेषः। कृतं सुकृतं किं मयाऽद्य कृतमित्यन्वयः। तिलक.

**दत्तं वा दापितं वाऽपि वाक्येनापि च भाषितम्।**
**उपपापेषु सर्वेषु पातकेषु महत्स्वपि॥**

किमित्यस्य दत्तादिष्वन्वयः। महत्स्वपि पातकेषु किं मया पातकं कृतमिति विचार्यमिति भावः। तिलक.

द्विजस्य गायत्र्युपासनाया नित्यत्वम्

**'गायत्र्युपासना नित्या सर्ववेदैः समीरिता।**
**यया विना त्वधः पातो ब्राह्मणस्यास्ति सर्वथा॥**

(१) देवीभा. १२।८।८९-९२.

नित्योपासना तर्हि काऽस्तीत्यत्राऽऽह – गायत्र्युपासनेति। द्विजो यदि गायत्रीदीक्षितो न स्यात्तदाऽध एव पतेत्, न तथा विष्णुगणेशदीक्षाभावेऽधःपातो द्विजस्य कुत्राप्युक्तः, तथात्वे सर्वे शैवा वैष्णवा गाणपत्या वा बभूवुः, न च केचिच्छैवाः केचिद्वैष्णवाः केचिद्गाणपत्या इति। गायत्रीदीक्षावन्तस्तु सर्वे द्विजा दृश्यन्ते। तस्माद्गायत्रीदीक्षैव नित्या इति भावः।

तिलक.

**तावता कृतकृत्यत्वं नान्यापेक्षा द्विजस्य हि।**
**गायत्रीमात्रनिष्णातो द्विजो मोक्षमवाप्नुयात्॥**

ननु अभ्युदयार्थमपि द्विजस्य शैववैष्णवादिदीक्षाऽपेक्षितेति चेत्तत्राऽऽह – तावता कृतकृत्यत्वमिति। गायत्र्युपासनायां यदि कश्चिदभ्युदयार्थो न्यूनः स्यात्तदा तत्प्राप्त्यर्थमन्यदेवतोपास्तिः द्विजस्यापेक्षिता, न तु तथाऽस्ति। तावता केवलगायत्रीमन्त्रेणैव कृतकृत्यत्वं द्विजस्य श्रुतिर्ब्रवीति। तस्माद्द्विजस्याभ्युदयार्थमपि नान्यदेवतोपास्तिरपेक्षितेति भावः। तथा च श्रुतिः बृहदारण्यके – 'अष्टाक्षरं वा एकं गायत्र्यै पदम्। एतदु हास्या एतत्। स यावदेतेषु लोकेषु तावद्ध जयति योऽस्या एतदेवं पदं वेद' (बृउ. ५।१४।१) इति। 'एतस्य यावतीयं त्रयी विद्या तावद्ध जयति योऽस्या एतदेवं पदं वेद', 'एतत्स यावदिदं प्राणि तावद्ध जयति योऽस्या एतदेवं पदं वेद' (बृउ. ५।१४।२,३) इति। तथा 'सा हैषा गयांस्तत्रे। प्राणा वै गयाः तत्प्राणांस्तत्रे। तद्यद्गयांस्तत्रे तस्माद्गायत्री नाम' (बृउ.५।१४।४) इति। तथा गोपथब्राह्मणे – 'यो ह वा एवंवित् स ब्रह्मवित्पुण्यां च कीर्तिं लभते सुरभींश्च गन्धान्सोऽपहतपाप्माऽनन्तां श्रियमश्नुते य एवं वेद यश्चैवं विद्वानेवमेतां वेदानां मातरं सावित्रीसंपदमुपनिषदमुपास्ते' (गोब्रा. १।१।३८) इत्यादिसर्ववेदेषु श्रुतयो द्रष्टव्याः। ननु तर्हि वेदेषु किमित्यन्यदेवतोपास्तिरुक्तेति चेदिच्छाया वैचित्र्यात्स्वभावत इतरदेवताभक्तानामिच्छाविघाताभावायेति ब्रूमः।

तिलक.

**कुर्यादन्यन्न वा कुर्यादिति प्राह मनुः स्वयम्।**
**विहाय तां तु गायत्रीं विष्णूपास्तिपरायणाः( ?णः)।**
**शिवोपास्तिरतो विप्रो नरकं याति सर्वथा॥**

मनुरपि गायत्रीमन्त्रेणैव द्विजस्य कृतकृत्यत्वमाहेत्याह – कुर्यादन्यन्नवेति। तथा च मनुः – 'कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते' (मस्मृ. २।८७) इति। महाभारतेऽपि शान्तिपर्वणि जप्यमाहात्म्ये गायत्रीमन्त्रस्यैव प्राशस्त्यमुक्तम्। किंच, गायत्रीमन्त्रमगृहीत्वा द्विजो विष्ण्वादिदेवतोपास्तिपरायणो नरकमेव सर्वथा याति, विष्ण्वादिदेवतामन्त्रमगृहीत्वा केवलगायत्रीमन्त्रपरायणो मोक्षं याति। तस्मात्पराशक्तेः गायत्र्या एवोपास्तिर्नित्या सर्वोत्तमा च इत्याह – विहाय तां तु गायत्रीमिति।

तिलक.

**तस्मादाद्ययुगे राजन्गायत्रीजपतत्पराः।**
**देवीपदाम्बुजरता आसन्सर्वे द्विजोत्तमाः॥**

उपसंहरति – तस्मादिति। अत एव हेतोः सत्ययुगे सर्वे पराशक्तिगायत्रीपादाम्बुजरता देवीभक्ता आसन्नित्यर्थः। प्रथमतो द्विजातीनां वेदेनोपदिष्टगायत्र्युपासनया सकलेष्टसंभवेऽन्यदेवतोपासनायां प्रयोजनाभाव एवेति भावः।

तिलक.

# शिवपुराणम्

ब्राह्मण-विप्र-क्षत्रियब्राह्मण-वैश्यब्राह्मण-शूद्रब्राह्मण-
चण्डालब्राह्मणशब्दानां राजक्षत्रियशब्दयोः
वैश्यवणिक्शब्दयोः शूद्रवृषलदस्यु-
शब्दानां च प्रवृत्तिनिमित्त-
भूतानि सदाचारादिगुण-
वैशिष्ट्यानि

**सूत उवाच –**

**'सदाचारयुतो विद्वान्ब्राह्मणो नाम नामतः।**
**वेदाचारयुतो विप्रो ह्येतैरेकैकवान्द्विजः॥**
**अल्पाचारोऽल्पवेदश्च क्षत्रियो राजसेवकः।**
**किंचिदाचारवान्वैश्यः कृषिवाणिज्यकृत्तथा॥**
**शूद्रब्राह्मण इत्युक्तः स्वयमेव हि कर्षकः।**
**असूयालुः परद्रोही चण्डालद्विज उच्यते॥**
**पृथिवीपालको राजा इतरे क्षत्रिया मताः।**
**धान्यादिक्रयवान्वैश्य इतरो वणिगुच्यते॥**
**ब्रह्मक्षत्रियवैश्यानां शुश्रूषुः शूद्र उच्यते।**
**कर्षको वृषलो ज्ञेय इतरे चैव दस्यवः॥**

(१) शिव. १।१३।२-६, ५०-५४, ६२-६३, ७८-८०.

धर्ममोक्षपुरुषार्थयोः प्रशंसा,
धर्मद्वैविध्यम्

**ब्राह्मणो मुक्तिकामः स्याद्ब्रह्मज्ञानं सदाऽभ्यसेत्।**
**धर्मादर्थोऽर्थतो भोगो भोगाद्वैराग्यसंभवः॥**
**धर्मार्जितार्थभोगेन वैराग्यमुपजायते।**
**विपरीतार्थभोगेन राग एव प्रजायते॥**
**धर्मश्च द्विविधः प्रोक्तो द्रव्यदेहद्वयेन च।**
**8द्रव्यमिज्यादिरूपं स्यात्तीर्थस्नानादि दैहिकम्॥**
**धर्मेण धनमाप्नोति तपसा दिव्यरूपताम्।**
**निष्कामः शुद्धिमाप्नोति शुद्ध्या ज्ञानं न संशयः॥**
**अर्थहीनः सदा कुर्यात्तपसामर्जनं तथा।**
**तीर्थाच्च तपसा प्राप्यं सुखमक्षय्यमश्नुते॥**

पृष्टवस्तुदानाभावे दोषः, परदोष-
कीर्तननिषेधः

**पृष्टं सर्वं सदा देयमात्मशक्त्यनुसारतः।**
**जन्मान्तरे ऋणी हि स्याददत्ते पृष्टवस्तुनि॥**
**परेषां च तथा दोषं न प्रशंसेद्विचक्षणः।**
**विद्वेषेण तथा ब्रह्मञ्छ्रुतं दृष्टं च नो वदेत्।**
**न वदेत्सर्वजन्तूनां हृदि रोषकरं बुधः॥**

श्रद्धास्तिक्ययोर्वैलक्षण्यम्, दरिद्रस्य
वाचिककायिकयजनयोरधिकारः

**[1]वेदशास्त्रं समादाय बुद्ध्वा गुरुमुखात्स्वयम्।**
**कर्मणां फलमस्तीति बुद्धिरास्तिक्यमुच्यते।**
**बन्धुराजभयाद्बुद्धिः श्रद्धा सा च कनीयसी॥**
**सर्वाभावे दरिद्रस्तु वाचा वा कर्मणा यजेत्।**
**वाचिकं यजनं विद्यान्मन्त्रस्तोत्रजपादिकम्।**
**तीर्थयात्रा व्रताद्यं हि कायिकं यजनं विदुः॥**

देवतार्पणबुद्ध्या कृतानां कर्मणामभ्युदयः
फलम्, ईश्वरार्पणबुद्ध्या कृतानां
निःश्रेयसं फलम्

**येन केनाप्युपायेन ह्यल्पं वा यदि वा बहु।**
**देवतार्पणबुद्ध्या च कृतं भोगाय कल्पते॥**
**तपश्चर्या च दानं च कर्तव्यमुभयं सदा।**

8 द्रव्यमस्यास्तीत्यर्थे अच्प्रत्ययान्तोऽयं द्रव्यशब्दो ग्राह्यः। तेनेज्यादिशब्दसामानाधिकरण्यं युज्यते। कार्यकारणभावसंबन्धः षष्ठ्यर्थः।

(१) शिव. १।१५।५५-६०.

**प्रतिश्रयं प्रदातव्यं स्ववर्णं गुणशोभितम्॥**
**देवानां तृप्तयेऽत्यर्थं सर्वभोगप्रदं बुधैः।**
**इहामुत्रोत्तमं जन्म सदा भोगं लभेद्बुधः॥**
**ईश्वरार्पणबुद्ध्या हि कृत्वा मोक्षफलं लभेत्॥**

सर्वमानवान् प्रति लिङ्गपूजाविधिः

**[2]ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा प्रतिलोमजः।**
**पूजयेत्सततं लिङ्गं तत्तन्मन्त्रेण सादरम्॥**

शिवसंतोषोद्देशेन कर्मविधिः

**[3]शिवसंतोषहेतोश्च कर्म स्वोक्तं समाचरेत्।**
**यद्यज्जातिसमुद्दिष्टं तत्तत्कर्म न लङ्घयेत्॥**

तत्त्वज्ञानपर्यन्तं कर्माधिकारः

**यथा जलेषु कमलं सलिलैर्नाविलिप्यते।**
**तथा ज्ञानी गृहे तिष्ठन्कर्मणा नावबध्यते॥**
**इति ज्ञानं समुत्पन्नं यावन्नैव नरस्य वै।**
**तावच्च कर्मणा देवं शिवमाराधयेन्नरः॥**

मात्रादिविषयककामदृष्टिनिषेधः

**[4]यथा माता च भगिनी भ्रातृपत्नी तथा सुता।**
**एताः कुदृष्ट्या द्रष्टव्या न कदाऽपि विपश्चिता॥**

अनाह्वाने परगृहगमनस्य निन्दा

**[5]अनाहूताश्च ये देवि गच्छन्ति परमन्दिरम्।**
**अवमानं प्राप्नुवन्ति मरणादधिकं तथा॥**
**परालयं गतोऽपीन्द्रो लघुर्भवति तद्विधः।**
**का कथा च परेषां वै रीढा यात्रा हि तद्विधा॥**

तपस्विनं प्रति स्त्रीसंगतिनिषेधः

**[6]अतस्तपस्विना शैल न कार्या स्त्रीषु संगतिः।**
**महाविषयमूलं सा ज्ञानवैराग्यनाशिनी॥**

सुखोदर्कसूनृतवचनयोः प्रशंसा

**[6]आदावप्रीतिजनकं परिणामे सुखावहम्।**
**दयालुर्धर्मशीलो हि बोधयत्येव बान्धवः॥**
**श्रुतिमात्रात्सुधातुल्यं सर्वकालसुखावहम्।**
**सत्यसारं हितकरं वचनं श्रेष्ठमीप्सितम्॥**

(१) शिव. १।२१।३९.
(२) शिव. २।१।१२।४३-४४, ५७-५८.
(३) शिव. २।२।३।४०.
(४) शिव. २।२।२८।२६-२७.
(५) शिव. २।३।१२।३३.
(६) शिव. २।३।३३।३२-३३.

स्त्रिया अजितस्य पुरुषस्य प्रशंसा
जितस्य निन्दा च

[१]स धन्यः पुरुषो लोके न स्त्रिया यः पराजितः।
सत्क्रियोऽप्यशुचिर्नित्यं स पुमान्यः स्त्रिया जितः।
निन्दन्ति पितरो देवा मानवाः सकलाश्च तम्॥
शुध्येद्विप्रो दशाहेन जातके मृतसूतके।
क्षत्रियो द्वादशाहेन वैश्यः पञ्चदशाहतः॥
शूद्रो मासेन शुध्येत्तु हीति वेदानुशासनम्।
न शुचिः स्त्रीजितः क्वापि चितादाहं विना पुमान्॥
न गृह्णन्तीच्छया तस्मात्पितरः पिण्डतर्पणम्।
न गृह्णन्ति सुरास्तेन दत्तं पुष्पफलादिकम्॥
तस्य किं ज्ञानसुतपोजपहोमप्रपूजनैः।
विद्यया दानतः किं वा स्त्रीभिर्यस्य मनो हतम्॥

क्षत्रियस्य रणमरणं प्रशस्तम्

[२]क्षत्रियस्य रणे श्रेयो मरणं सन्मुखो(?संमुखे) सदा।
न वीरमानिनो भूमौ दीनस्येव कृताञ्जलिः(?लेः)॥

कृतोपकारपीडननिन्दा

[३]उपस्कृतं पुरा यैस्तु तेभ्यो दुःखं हितं न हि।
यदा च दीयते दुःखं तदा नाशो भवेदिह॥

कृतापकारेऽप्युपकारस्य प्रशंसा

[४]अपकारेषु यश्चैव ह्युपकारं करोति च।
तस्य दर्शनमात्रेण पापं दूरतरं व्रजेत्॥

विद्यामदस्य निन्दा

[५]यश्च विद्याभिमानेन निस्तेजयति सुद्विजम्।
उदासीनं सभामध्ये ब्रह्महा स प्रकीर्तितः॥

वृषभेषु क्रौर्यकारिणां वन्ध्यां
गां वाहयतां च
निन्दा

[६]ये ताडयन्ति गां क्रूरा दमयन्ते मुहुर्मुहुः।
दुर्बलान्ये न पुष्णन्ति सततं ये त्यजन्ति च॥
पीडयन्त्यतिभारेणासहन्तं वाहयन्ति च।
योजयन्त्यकृताहारान्न विमुञ्चन्ति संयतान्॥
ये भारक्षतरोगार्तान्गोवृषांश्च क्षुधातुरान्।
न पालयन्ति यत्नेन गोघ्नास्ते नारकाः स्मृताः॥
वृषाणां वृषणान्ये च पापिष्ठा गालयन्ति च।
वाहयन्ति च गां वन्ध्यां महानारकिणो नराः॥

सत्यस्य प्रशंसा

[१]सत्यमेव परं ब्रह्म सत्यमेव परं तपः।
सत्यमेव परो यज्ञः सत्यमेव परं श्रुतम्॥
सत्यं सुप्तेषु जागर्ति सत्यं च परमं पदम्।
सत्येनैव धृता पृथ्वी सत्ये सर्वं प्रतिष्ठितम्॥
तपो यज्ञश्च पुण्यं च देवर्षिपितृपूजने।
आपो विद्या च ते सर्वे सर्वं सत्ये प्रतिष्ठितम्॥
सत्यं यज्ञस्तपो दानं मन्त्रा देवी सरस्वती।
ब्रह्मचर्यं तथा सत्यमोंकारः सत्यमेव च॥
सत्येन वायुरभ्येति सत्येन तपते रविः।
सत्येनाग्निर्निर्दहति स्वर्गः सत्येन तिष्ठति॥
पालनं सर्ववेदानां सर्वतीर्थावगाहनम्।
सत्येन वहते लोके सर्वमाप्नोत्यसंशयम्॥
अश्वमेधसहस्रं च सत्यं च तुलया धृतम्।
लक्षाणि क्रतवश्चैव सत्यमेव विशिष्यते॥
सत्येन देवाः पितरो मानवोरगराक्षसाः।
प्रीयन्ते सत्यतः सर्वे लोकाश्च सचराचराः॥
सत्यमाहुः परं धर्मं सत्यमाहुः परं पदम्।
सत्यमाहुः परं ब्रह्म तस्मात्सत्यं सदा वदेत्॥
मुनयः सत्यनिरतास्तपस्तप्त्वा सुदुश्चरम्।
सत्यधर्मरताः सिद्धास्ततः स्वर्गं च ते गताः॥
अप्सरोगणसंविष्टैर्विमानैः परिमातृभिः।
वक्तव्यं च सदा सत्यं न सत्याद्विद्यते परम्॥
अगाधे विपुले सिद्धे सत्यतीर्थे शुचिह्रदे।
स्नातव्यं मनसा युक्तं स्थानं तत्परमं स्मृतम्॥
आत्मार्थे वा परार्थे वा पुत्रार्थे वाऽपि मानवाः।
अनृतं ये न भाषन्ते ते नराः स्वर्गगामिनः॥
वेदा यज्ञास्तथा मन्त्राः सन्ति विप्रेषु नित्यशः।
नो भान्त्यपि ह्यसत्येषु तस्मात्सत्यं समाचरेत्॥

(१) शिव. २।५।२८।२६-३१.
(२) शिव. २।५।५३।३५.
(३) शिव. ४।२५।१५.
(४) शिव. ४।३३।३९.
(५) शिव. ५।५।२६.
(६) शिव. ५।६।३१-३४.

(१) शिव. ५।१२।२३-३६.

कर्मभूमौ भारतवर्षे कर्मयोनिर्मनुष्यत्व-
मतिदुर्लभम्, धर्माचरणेनैव
तत्साफल्यम्

[1]एवं योनिषु सर्वासु प्रतिक्रम्य भ्रमेण तु।
कालान्तरवशाद्याति मानुष्यमतिदुर्लभम्॥
व्युत्क्रमेणापि मानुष्यं प्राप्यते पुण्यगौरवात्।
विचित्रा गतयः प्रोक्ताः कर्मणां गुरुलाघवात्॥
मानुष्यं च समासाद्य स्वर्गमोक्षप्रसाधनम्।
नाऽऽचरत्यात्मनः श्रेयः स मृतः शोचते चिरम्॥
देवासुराणां सर्वेषां मानुष्यं चातिदुर्लभम्।
तत्संप्राप्य तथा कुर्यान्न गच्छेन्नरकं यथा॥
स्वर्गापवर्गलाभाय यदि नास्ति समुद्यमः।
दुर्लभं प्राप्य मानुष्यं वृथा तज्जन्म कीर्तितम्॥
सर्वस्य मूलं मानुष्यं चतुर्वर्गस्य कीर्तितम्।
संप्राप्य धर्मतो व्यास तद्यत्नादनुपालयेत्॥
धर्ममूलं हि मानुष्यं लब्ध्वा सर्वार्थसाधकम्।
यदि लाभाय यत्नः स्यान्मूलं रक्षेत्स्वयं ततः॥
मानुष्येऽपि च विप्रत्वं यः प्राप्य खलु दुर्लभम्।
नाऽऽचरत्यात्मनः श्रेयः कोऽन्यस्तस्मादचेतनः॥
द्वीपानामेव सर्वेषां कर्मभूरियमुच्यते।
इतः स्वर्गश्च मोक्षश्च प्राप्यते समुपार्जितः॥
देशेऽस्मिन्भारते वर्षे प्राप्य मानुष्यमध्रुवम्।
न कुर्यादात्मनः श्रेयस्तेनाऽऽत्मा खलु वञ्चितः॥
कर्मभूमिरियं विप्र फलभूमिरसौ स्मृता।
इह यत्क्रियते कर्म स्वर्गे तदनुभुज्यते॥
यावत्स्वास्थ्यं शरीरस्य तावद्धर्मं समाचरेत्।
अस्वस्थश्चोदितोऽप्यन्यैर्न किंचित्कर्तुमुत्सहेत्॥
अध्रुवेण शरीरेण ध्रुवं यो न प्रसाधयेत्।
ध्रुवं तस्य परिभ्रष्टमध्रुवं नष्टमेव च॥
आयुषः खण्डखण्डानि निपतन्ति तदग्रतः।
अहोरात्रोपदेशेन किमर्थं नावबुध्यते॥
यदा न ज्ञायते मृत्युः कदा कस्य भविष्यति।
आकस्मिके हि मरणे धृतिं विन्दति कस्तथा॥
परित्यज्य यदा सर्वमेकाकी यास्यति ध्रुवम्।
न ददाति कदा कस्मात्पाथेयार्थमिदं धनम्॥
गृहीतदानपाथेयः सुखं याति यमालयम्।
अन्यथा क्लिश्यते जन्तुः पाथेयरहिते पथि॥
येषां ×कालेय पुण्यानि परिपूर्णानि सर्वतः।
गच्छतां स्वर्गदेशं हि तेषां लाभः पदे पदे॥
इति ज्ञात्वा नरः पुण्यं कुर्यात्पापं विवर्जयेत्।
पुण्येन याति देवत्वमपुण्यो नरकं व्रजेत्॥

युद्धं सर्वेषां धर्मः, क्षत्रियस्य युद्धं विशेषधर्मः,
युद्धे वध्यावध्यविवेकः,
युद्धप्रीतेः प्रशंसा

[2]युद्धं पुण्यतमं स्वर्ग्यं रूपज्ञं सर्वतोमुखम्।
सर्वेषामेव वर्णानां क्षत्रियस्य विशेषतः॥
भृशं चैव प्रवक्ष्यामि युद्धधर्मं सनातनम्।
यादृशाय प्रहर्तव्यं यादृशं परिवर्जयेत्॥
आततायिनमायान्तमपि वेदान्तगं द्विजम्।
जिघांसन्तं जिघांसेत्तु न तेन ब्रह्महा भवेत्॥
हन्ताऽप्यसौ न हन्तव्यः पानीयं यश्च याचते।
रणे हत्वाऽऽतुरान्व्यास स नरो ब्रह्महा भवेत्॥
व्याधितं दुर्बलं बालं स्त्रीनाथं कृपणं ध्रुवम्।
धनुर्भग्नं छिन्नगुणं हत्वा वै ब्रह्महा भवेत्॥
एवं विचार्य सद्धीमान्भवेत्प्रीत्या रणप्रियः।
स जन्मनः फलं प्राप्य परत्रेह प्रमोदते॥

श्रौतस्मार्तधर्मे त्रैवर्णिकानामेवाधिकारः,
शुश्रूषा शूद्रधर्मः, निष्कामकर्म-
भिर्मोक्षप्राप्तिः

[3]चातुर्वर्ण्यं हि लोकेऽस्मिन्प्रसिद्धं मानुषे मुने॥
त्रैवर्णिकानामेवात्र श्रुत्याचारसमन्वयः।
शुश्रूषामात्रसारा हि शूद्राः श्रुतिबहिष्कृताः॥
त्रैवर्णिकानां सर्वेषां स्वस्वाश्रमरतात्मनाम्।
श्रुतिस्मृत्युदितो धर्मोऽनुष्ठेयो नापरः क्वचित्॥
श्रुतिस्मृत्युदितं कर्म कुर्वन्सिद्धिमवाप्स्यति।
इत्युक्तं परमेशेन वेदमार्गप्रदर्शिना॥
वर्णाश्रमाचारपुण्यैरभ्यर्च्य परमेश्वरम्।
तत्सायुज्यं गताः सर्वे बहवो मुनिसत्तमाः॥

(१) शिव. ५।२०।२८-४६.

× इदं संबोधनम्।
(१) शिव. ५।२१।३३-३८.
(२) शिव. ६।१२।२१-२५.

पूज्यापूजने अपूज्यपूजने च महान् दोषः

दधीच उवाच –

[1]अप्यपूज्ये चैव पूजा पूज्यानां चाप्यपूजने।
नरः पापमवाप्नोति महद्वै नात्र संशयः॥
असतां संमतिर्यत्र सतामवमतिस्तथा।
दण्डो देवकृतस्तत्र सद्यः पतति दारुणः॥

परमेश्वरभक्त्या सर्वपुरुषार्थसिद्धिः

[2]वर्णिनो ये प्रपद्यन्ते मामनन्यसमाश्रयाः।
तेषां सुखेन मार्गेण धर्मकामार्थमुक्तयः॥
तस्मान्मे मुखतो लब्धं वर्णधर्मं समाचरेत्॥
वर्णाश्रमप्रयुक्तस्य मयैव विहितस्य च।
ममार्चनादिधर्मस्य चर्या चर्येति कथ्यते॥

ब्राह्मणधर्माः

दया कार्याऽथ सततमहिंसा ज्ञानसंग्रहः।
सत्यमस्तेयमास्तिक्यं श्रद्धा चेन्द्रियनिग्रहः॥
अध्यापनं चाध्ययनं यजनं याजनं तथा।
ध्यानमीश्वरभावश्च सततं ज्ञानशीलता॥
य एवं वर्तते विप्रो ज्ञानयोगस्य सिद्धये।
अचिरादेव विज्ञानं लब्ध्वा योगं च विन्दति॥

ईश्वर उवाच –

[3]अथ वक्ष्यामि देवेशि भक्तानामधिकारिणाम्।
विदुषां द्विजमुख्यानां वर्णधर्मं समासतः॥
त्रिः स्नानं चाग्निकार्यं च लिङ्गार्चनमनुक्रमम्।
दानमीश्वरभावश्च दया सर्वत्र सर्वदा॥
सत्यं संतोषमास्तिक्यमहिंसा सर्वजन्तुषु।
ह्रीश्रद्धाध्ययनं योगः सदाऽध्यापनमेव च॥
व्याख्यानं ब्रह्मचर्यं च श्रवणं च तपः क्षमा।
शौचं शिखोपवीतं च उष्णीषं चोत्तरीयकम्॥
निषिद्धासेवनं चैव भस्मरुद्राक्षधारणम्।
पर्वण्यभ्यर्चनं देवि चतुर्दश्यां विशेषतः॥
पानं च ब्रह्मकूर्चस्य मासि मासि यथाविधि।
अभ्यर्चनं विशेषेण तेनैव स्नाप्य मां प्रिये॥
सर्वक्रियान्नसंत्यागः श्राद्धान्नस्य च वर्जनम्।
तथा पर्युषितान्नस्य यावकस्य विशेषतः॥
मद्यस्य मद्यगन्धस्य नैवेद्यस्य च वर्जनम्।
सामान्यं सर्ववर्णानां ब्राह्मणानां विशेषतः॥
क्षमा शान्तिश्च संतोषः सत्यमस्तेयमेव च।
ब्रह्मचर्यं मम ज्ञानं वैराग्यं भस्मसेवनम्॥
सर्वसङ्गनिवृत्तिश्च दशैतानि विशेषतः।
लिङ्गानि योगिनां भूयो दिवा भिक्षाशनं तथा॥
वानप्रस्थाश्रमस्थानां समानमिदमिष्यते।
रात्रौ न भोजनं कार्यं सर्वेषां ब्रह्मचारिणाम्॥
अध्यापनं याजनं च क्षत्रियस्याप्रतिग्रहः।
वैश्यस्य च विशेषेण मया नात्र विधीयते॥

क्षत्रियवैश्यशूद्रधर्माः

रक्षणं सर्ववर्णानां युद्धे शत्रुवधस्तथा।
दुष्टपक्षिमृगाणां च दुष्टानां शातनं नृणाम्॥
अविश्वासश्च सर्वत्र विश्वासो मम योगिषु।
स्त्रीसंसर्गश्च कालेषु चमूरक्षणमेव च॥
सदा संचारितैश्चारैर्लोकवृत्तान्तवेदनम्।
सदाऽस्त्रधारणं चैव भस्मकञ्चुकधारणम्॥
राज्ञां ममाऽऽश्रमस्थानामेष धर्मस्य संग्रहः।
गोरक्षणं च वाणिज्यं कृषिर्वैश्यस्य कथ्यते॥
शुश्रूषेतरवर्णानां धर्मः शूद्रस्य कथ्यते।
उद्यानकरणं चैव मम क्षेत्रसमाश्रयः॥

सदाचारप्रशंसा, सदाचारमूलमास्तिक्यम्

[1]आचारः परमो धर्म आचारः परमं धनम्।
आचारः परमा विद्या आचारः परमा गतिः॥
आचारहीनः पुरुषो लोके भवति निन्दितः।
परत्र च सुखी न स्यात्तस्मादाचारवान्भवेत्॥
यस्य यद्विहितं कर्म वेदे शास्त्रे च वैदिकैः।
तस्य तेन समाचारः सदाचारो न चेतरः॥
सद्भिराचरितत्वाच्च सदाचारः स उच्यते।
सदाचारस्य तस्याऽऽहुरास्तिक्यं मूलकारणम्॥
आस्तिकश्चेत्प्रमादाद्यैः सदाचारादविच्युतः।
न दुष्यति नरो नित्यं तस्मादास्तिकतां व्रजेत्॥

(१) शिव. ७।१।१९।१०-११.
(२) शिव. ७।२।१०।२१, २६, ३२, ३७-४०.
(३) शिव. ७।२।११।१-१७.

(१) शिव. ७।२।१४।५५-५९.

## नरसिंहपुराणम्

प्रधानपुरुषाचारः

[१]प्रधानपुरुषाचीर्णं लोकोऽयमनुवर्तते।
तस्मादनिन्दितं धर्मं प्रधानपुरुषश्चरेत्॥
निन्दितं वर्जयेद्यत्नादेतद्धर्मस्य लक्षणम्॥
यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते॥

पापवर्जने दृढचित्तत्वमनन्तफलम्

नराणां दृढचित्तानामेवं पापमकुर्वताम्।
अनन्तं फलमित्याहुस्तेषां स्वर्गफलं भवेत्॥

ज्ञानार्जनप्रशंसा

[२]ज्ञानमेव परं पुंसां श्रेयसामभिवाञ्छितम्।
तोषणं नरसिंहस्य ज्ञानहीनः पशुः पुमान्॥
आहारनिद्राभयमैथुनानि
समानमेतत्पशुभिर्नराणाम्।
ज्ञानं नराणामधिकं हि लोके
ज्ञानेन हीनाः पशुभिः समानाः॥

शरणागतस्य रक्षणं महाफलमुपेक्षणं महादोषं च

[३]भयातुरं नरो जीवं यो रक्षेच्छरणागतम्।
तस्यानन्तफलं स्याद्वै किं पुनर्मां द्विजोत्तमम्॥
एकतो मेदिनीदानं मेरुभूधरदक्षिणम्।
अन्यतो ह्यार्तजीवानां 8प्राणसंशयकारणम्॥
द्विजं धेनुं स्त्रियं बालं पीड्यमानं च दुर्जनैः।
उपेक्षेत नरो यस्तु स च गच्छति रौरवम्॥

स्त्रीवधे महापापम्

[४]स्त्रीवधे तु महापापं प्रवदन्ति मनीषिणः॥

कृतघ्नता महादोषा

[५]न तं पश्यामि लोकेऽस्मिन् कृतं प्रतिकरोति यः॥
सर्वस्य हि कृतार्थस्य मतिरन्या प्रवर्तते।
वत्सः क्षीरक्षयं दृष्ट्वा परित्यज्यति मातरम्॥
शास्त्रेषु निष्कृतिर्दृष्टा महापातकिनामपि।
कृतघ्नस्य कपे दुष्ट न दृष्टा निष्कृतिः पुरा॥

8 प्राणसंशयकारणमिति पदं लक्षणया प्राणसंशयकारण-निवारणपरम्। प्राणसंशयकारणभूतापन्निवारणं समेरुदक्षिणमेदिनी-दानेन तुल्यगौरवमित्यर्थः। अथवा वारणशब्दस्थाने कारणशब्दः प्रामादिकः स्यात्।

(१) नरसिंह. १३।२२-२४, ३७.
(२) नरसिंह. १६।१२-१३.
(३) नरसिंह. ३३।२६-२९.
(४) नरसिंह. ४७।७८.
(५) नरसिंह. ५०।४९-५१.

षट्कर्माणि सत्यवदनादीनि च ब्राह्मणस्य धर्माः

[१]षट्कर्माणि च यान्याहुर्ब्राह्मणस्य मनीषिणः।
तैरेव सततं यस्तु प्रवृत्तः सुखमेधते॥
अध्ययनाध्यापनं च यजनं याजनं तथा।
दानं प्रतिग्रहश्चेति कर्मषट्कमिहोच्यते॥
अध्यापनं च त्रिविधं धर्मस्यार्थं च (?स्यार्थस्य) कारणम्।
शुश्रूषाकारणं चैव त्रिविधं परिकीर्तितम्॥
योग्यानध्यापयेच्छिष्यान् याज्यानपि च याजयेत्।
विधिना प्रतिगृह्णंश्च गृहधर्मप्रसिद्धये॥
वेदमेवाभ्यसेन्नित्यं शुभे देशे समाहितः।
नित्यं नैमित्तिकं काम्यं कर्म कुर्यात्प्रयत्नतः।
गुरुशुश्रूषणं चैव यथान्यायमतन्द्रितः॥
सत्यवादी जितक्रोधः स्वधर्मनिरतो भवेत्।
स्वकर्मणि च संप्राप्ते प्रमादं नैव कारयेत्॥
प्रियां हितां वदेद्वाचं परलोकाविरोधिनीम्।
एवं धर्मः समुद्दिष्टो ब्राह्मणस्य समासतः।
धर्ममेवं तु यः कुर्यात् स याति ब्रह्मणः पदम्॥

अध्ययनादिकर्मत्रयं प्रजापालनाद्याश्च क्षत्रियस्य धर्माः

[२]क्षत्रियादीन्प्रवक्ष्यामि यथावदनुपूर्वशः।
येन येन प्रवर्तन्ते विधिना क्षत्रियादयः॥
राज्यस्थः क्षत्रियश्चैव प्रजां धर्मेण पालयेत्।
कुर्यादध्ययनं सम्यग्यजन् यज्ञान्यथाविधि॥
दद्याद्दानं द्विजाग्रेभ्यो धर्मबुद्धिसमन्वितः।
स्वदारनिरतो नित्यं परदारविवर्जितम्(?तः)॥
नीतिशास्त्रार्थकुशलः संधिविग्रहतत्त्ववित्।
देवब्राह्मणभक्तश्च पितृकार्यपरस्तथा॥
धर्मेणैव जयं काङ्क्षेदधर्मं परिवर्जयेत्।
उत्तमां गतिमाप्नोति क्षत्रियोऽथैवमाचरन्॥

(१) नरसिंह. ५७।२१, २२-२५, २८-३०.
(२) नरसिंह. ५८।१-७.

गोरक्षादयः अध्ययनादिकर्मत्रयं च वैश्यधर्माः

**गोरक्षाकृषिवाणिज्यं कुर्याद्वैश्यो यथाविधि।**
**दानधर्मं यथाशक्त्या गुरुशुश्रूषणं तथा॥**
**लोभदम्भविनिर्मुक्तः सत्यवागनसूयकः।**
**स्वदारनिरतो दान्तः परदारविवर्जितः॥**
[1]**धनैर्विप्रान् समर्चेत यज्ञकाले त्वरान्वितः।**
**अप्रभुत्वं च वर्तेत धर्मेष्वा देहपातनात्।**
**यज्ञाध्ययनदानानि कुर्यान्नित्यमतन्द्रितः॥**
[2]**पितृकार्यं च तत्काले नरसिंहार्चनं तथा।**
**एतद्वैश्यस्य कर्मोक्तं स्वधर्ममनुतिष्ठतः॥**
**एतदासेवमानस्तु स स्वर्गी स्यान्न संशयः॥**

वर्णत्रयशुश्रूषापाकयज्ञादयः शूद्रधर्माः

**वर्णत्रयस्य शुश्रूषां कुर्याच्छूद्रः प्रयत्नतः॥**
[3]**दासवद्ब्राह्मणानां तु विशेषेण समाचरेत्।**
**अयाचितं प्रदातव्यं कृषिं वृत्त्यर्थमाचरेत्॥**
[4]**पाकयज्ञविधानेन यजेद्देवमतन्द्रितः॥**
[5]**ग्रहाणां मासिकं कार्यं पूजनं न्यायधर्मतः।**
**धारणं जीर्णवस्त्रस्य विप्रस्योच्छिष्टमार्जनम्॥**
[6]**स्वदारेषु रतिं कुर्यात्परदारविवर्जितः।**
**पुराणश्रवणं विप्रान्नरसिंहस्य पूजनम्॥**

(१) **नरसिंह.** ५८।८ द्वितीयार्धम् आदर्शान्तरेऽत्र पठितम्।

(२) **नरसिंह.** ५८।९-१०.

(३) **नरसिंह.** ५८।११; **अप.** १।१२० पृ. १६२ चितं प्रदातव्यं (चितः प्रदाता स्यात्) चरेत् (श्रयेत्) उत्त.; **गृक.** २७३ सर्वम् अपवत्; **गृर.** ४८१ (अयाचितः प्रदाता स्यात्कृषिवृत्तिं समाश्रयेत्) उत्त.; **स्मृकौ.** ९५ सर्वम् अपवत्; **दीक.** १।१२० चितं प्र (चितप्र) उत्त.; **मर.** १५ चितं प्र (चितप्र) चरेत् (श्रयेत्) उत्त.; **शूशि.** ४१ सर्वं मरवत्; **शूक.** ३५, ७१ सर्वं मरवत्; **पप्र.** ४६ सर्वं मरवत्; **सस्मृ.** १२४ सर्वम् अपवत्.

(४) **नरसिंह.** ५८।११ इत्यतः परम् आदर्शान्तरे.

(५) **नरसिंह.** ५८।१२.

(६) **नरसिंह.** ५८।१३; **अप.** १।१२० पृ. १६२ तृतीयचरणे (पुराणं शृणुयाच्चैव) उत्त.; **गृक.** २७३ तृतीयचरणे (पुराणं शृणुयान्नित्यं) उत्त.; **गृर.** ४८१ सर्वं गृकवत्; **स्मृकौ.** ९५ सर्वं गृकवत्; **दीक.** १।१२० सर्वं गृकवत्; **मर.** १५ सर्वं गृकवत्; **शूशि.** ४१ सर्वं गृकवत्; **शूक.** ३५ तृतीयचरणे (पुराणं शृणुयाद्विप्रात्) उत्त. : ७१ सर्वं गृकवत्; **आर.** ७९ सर्वं गृकवत्; **पप्र.** ४६ नरसिंहस्य (नृसिंहस्य च) शेषं सर्वं गृकवत्; **सस्मृ.** १२४ नर (नार) शेषं सर्वं गृकवत्.

कुर्यादिति शेषः। गृर. ४८१

[1]**तथा विप्रनमस्कारं कार्यं श्रद्धासमन्वितम्।**
**सत्यसंभाषणं चैव रागद्वेषविवर्जनम्॥**
**इत्थं कुर्वन् सदा शूद्रो मनोवाक्कायकर्मभिः।**
**स्थानमैन्द्रमवाप्नोति नष्टपापस्तु पुण्यभाक्॥**

स्वस्वधर्माचरणविधिः, ब्रह्मध्यानविधिः, दयाप्रशंसा

[2]**मुखजस्य तु यत्कर्म कर्म यद्बाहुजस्य तु।**
**ऊरुजस्य तु यत्कर्म पादजस्य तथा नृप॥**
**स्वं स्वं कर्म प्रकुर्वाणा विप्राद्या यान्ति सद्गतिम्।**
**अन्यथा वर्तमानो हि सद्यः पतति यात्यधः॥**
**यद्यस्य विहितं कर्म स तु तैस्तैः प्रतिष्ठितः।**
**तस्मात्स्वधर्मं कुर्वीत नित्यमेवमनापदि॥**
**चतुर्वर्णाश्च राजेन्द्र चत्वारश्चापि चाऽऽश्रमाः।**
**स्वधर्मं येऽनुतिष्ठन्ति ते यान्ति परमां गतिम्॥**
**स्वधर्मेण यथा नृणां नरसिंहः प्रतुष्यति।**
**वर्णधर्मानुसारेण नरसिंहं तथाऽर्चयेत्॥**
**उत्पन्नवैराग्यबलेन योगा-**
**द्ध्यायेत्परं ब्रह्म सदा क्रियावान्।**
**सत्यात्मकं चित्सुखरूपमाद्यं**
**विहाय देहं पदमेति विष्णोः॥**
[3]**सर्वधर्मो दयापरः॥**
[4]**दूराच्छूद्रेणोपचर्यो ब्राह्मणोऽग्निरिव ज्वलन्॥**

## कालिकापुराणम्

धर्माचरणप्रशंसा

[5]**धर्मं शनैः संचिनुयाद्वल्मीको मृत्तिकां यथा।**
**सहायार्थं परे लोके पूर्वपापविमुक्तये॥**
**एको धर्मः परं श्रेयः सर्वसंसारकर्मसु।**
**इतरे तु त्रयो धर्माजायन्तेऽर्थादयोऽपरे॥**
**वरं प्राणपरित्यागः शिरसो वाऽथ कर्तनम्।**
**न तु धर्मपरित्यागो लोके वेदे च गर्हितः॥**
**धर्मेण ध्रियते लोको धर्मेण ध्रियते जगत्।**
**धर्मेणैव सुराः सर्वे सुरत्वमगमन्पुरा॥**

(१) **नरसिंह.** ५८।१४-१५.

(२) **नरसिंह.** ६१।१७-२२.

(३) **नरसिंह.** ६६।४१.

(४) **शूक.** ७१.

(५) **कालिका.** २९।८-१३.

धर्मश्चतुष्पाद्भगवाञ्जगत्पालयतेऽनिशम्।
स एव मूलं पुरुषो धर्म इत्यभिधीयते॥
सर्वं क्षरति लोकेऽस्मिन् धर्मो नैव च्युतो भवेत्।
धर्माद्यो न विचलति स एवाक्षर उच्यते॥

जात्यादिहीनावमाननिषेधः

[1]जातिहीनं वृत्तिहीनं रूपहीनमदक्षिणम्।
हीनाङ्गमतिरिक्ताङ्गं तेन दोषेण नाऽऽक्षिपेत्॥
इति ब्रह्मा पुरा प्राह वेदौघार्थविनिश्चयम्॥

नित्यनैमित्तिककाम्यकर्मणां शिवापूजायाश्चानाचरणे निमित्तानि

[2]जानूर्ध्वे क्षतजे जाते नित्यं कर्म न चाऽऽचरेत्।
नैमित्तिकं च तदधः स्रवद्रक्तो न चाऽऽचरेत्॥
[3]सूतके च समुत्पन्ने क्षुरकर्मणि मैथुने।
धूमोद्गारे तथा वान्ते नित्यकर्माणि संत्यजेत्॥
लोतकं लूतासंपर्कजः स्फोटभेदः। कृभ. १४०
[4]द्रव्ये भुक्ते त्वजीर्णे च नैव भुक्त्वा च किंचन।
कर्म कुर्यान्नरो नित्यं सूतके मृतके तथा॥
[5]पत्रं पुष्पं च ताम्बूलं भेषजत्वेन कल्पितम्।
कणादिपिप्पल्यन्तं च फलं भुक्त्वा न चाऽऽचरेत्॥
[6]जलस्यापि नरश्रेष्ठ भोजनाद्भेषजादृते।
नित्यक्रिया निवर्तेत सह नैमित्तिकैः सदा॥
[7]जलौकां गूढपादं च कृमिगण्डूपदादिकम्।
कामाद्धस्तेन संस्पृश्य नित्यकर्माणि संत्यजेत्॥
[8]विशेषतः शिवापूजां प्रमीतपितृको नरः।
यावद्वत्सरपर्यन्तं मनसाऽपि न चाऽऽचरेत्॥

(१) कालिका. ४७।६६-६७.
(२) कालिका. ५७।९०-९१; आर. १२२ नूर्ध्वे (नूर्ध्व) नित्यं कर्म (नित्यकर्म); सिन्धु. १३९ आरवत्.
(३) कालिका. ५७।९१; आत. ३४४ सूतके च (अश्रुपाते); सिन्धु. १४० सूत (लोत) क्षुर (ज्वर) वान्ते (वान्तौ); कृभ. १४० निर्देशमात्रम्, सिन्धुवत्.
(४) कालिका. ५७।९२; सिन्धु. १४० भुक्त्वा (भुक्त्वाऽपि).
(५) कालिका. ५७।९३; आत. ३४४ द्वितीयचरणे (न भैषज्योपकल्पितम्) क्त्वा न चा (क्त्वाऽपि ना).
(६) कालिका. ५७।९४; आत. ३४४ सह नै (काम्य नै) सदा (सह).
(७) कालिका. ५७।९५; आत. ३४४ कां गूढ (कागूढ) कृमिगण्डू (क्रमिगण्डु) क्रियाकौमुद्याम्.
(८) कालिका. ५७।९६.

[1]महागुरुनिपाते तु काम्यं किंचिन्न चाऽऽचरेत्।
आर्त्विज्यं ब्रह्मयज्ञं च श्राद्धं देवयजं च यत्॥
[2]गुरुमाक्षिप्य विप्रं च प्रहृत्यैव च पाणिना।
न कुर्यान्नित्यकर्माणि रेतःपाते च भैरव॥

ग्रहणे गङ्गास्नानमाहात्म्यम्

[3]चन्द्रसूर्यग्रहे +स्नात्वा कैवल्यं प्राप्नुयान्नरः॥

कर्ममन्त्रौ शूद्रेण विप्रवचनाद्ग्राह्यौ

[4]शूद्रेभ्यो विहितं यत्तु यश्च मन्त्र उदाहृतः।
तद्विप्रवचनाद्ग्राह्यं द्वयं शूद्रैः सदैव हि॥

## साम्बपुराणम्

स्नानादिविषये ग्रहणप्रशंसा

[5]जगत्संमोहनं चैव ग्रहणं चन्द्रसूर्ययोः।
पुण्यं महापवित्रं तु स्नाने दाने तथा जपे॥

भावशुद्ध्या कर्मसाफल्यम्

[6]भावशुद्धिः प्रयोक्तव्या नियमाचारसंयुता।
भावशुद्ध्या कृतं यच्च तत्सर्वं सफलं भवेत्॥

सदाचारप्रशंसा

[7]आचारयुक्तः पुरुषः प्रेत्य चेह च मोदते।
आचाराद्वर्धते ह्यायुराचारो हन्त्यलक्षणम्॥
दुराचारो हि पुरुषो लोके भवति निन्दितः।
दुष्टभागी च सततं व्याधितोऽल्पायुरेव च॥
तस्माद्भवेत्सदाचारः स मुदा(?)श्रीरवेर्नरः।
देवस्य प्रियतामेति लक्ष्मीं विन्दति निश्चलाम्॥

ग्रहणे गायत्रीमन्त्रजपविधिः

[8]ग्रहोपरागे संप्राप्ते ......॥
जपेन्मन्त्री च सावित्र्याः शतमष्टाधिकं शुचिः॥

+ 'त्रिस्रोताख्यगङ्गायाम्' इति प्रकृतम्।
(१) कालिका. ५७।९७; आर. १२२ यजं (युतं) उत्त.
(२) कालिका. ५७।९८; आर. ३४४ कुर्यान्नित्यक (कृत्यानि न क) च भैरव (तथैव च); आर. १२२.
(३) कालिका. ८०।३९.
(४) कालिका. ९१।४९-५०.
(५) साम्ब. २३।३९-४०.
(६) साम्ब. ३८।१५-१६.
(७) साम्ब. ४४।१२-१४.
(८) साम्ब. ४७।१७, १८.

## सौरपुराणम्

गोग्रासफलम्

[1]गवां ग्रासप्रसादेन मुच्यते सर्वपातकैः॥

ग्रहणदानप्रशंसा

......... ग्रहणे चन्द्रसूर्ययोः।
........ दत्तं भवति चाक्षयम्॥

अभयदानप्रशंसा

अभयं सर्वभूतेभ्यो दद्याद्दानं परं स्मृतम्।
न तस्मादधिकं दानं विद्यते च धनैर्विना॥

अप्रियादिवचन-हिंसा-वेदनिन्दा-शम्भुनिन्दानिषेधाः, विशेषतः स्त्रीहिंसानिषेधः

सूत उवाच –

[2]वदेन्नैवाप्रियं वाक्यं नानृतं न च मर्मभित्।
न हिंस्यात्सर्वभूतानि न वेदानां च कुत्सनम्॥
ईश्वरः सर्वभूतानां साक्षी यः सर्वकर्मणाम्।
स्मरणान्मोक्षदः शम्भुस्तस्य निन्दां विवर्जयेत्॥
शास्त्रेषु दृश्यते शुद्धिर्महापातकिनामपि।
निन्दकानां महेशस्य शुद्धिर्न खलु दृश्यते॥
[3]अहिंसा तु परो धर्मः सर्वेषां प्राणिनां यतः।
तस्मात्सर्वप्रयत्नेन वस्त्रपूतेन कारयेत्॥
यद्दानमभयं पुण्यं सर्वदानोत्तमोत्तमम्।
तस्मात्सा परिहर्तव्या हिंसा सर्वत्र सर्वदा॥
मनसा कर्मणा वाचा सर्वभूतहिते रताः।
यदा दर्शितपन्थानः शिवलोकं व्रजन्ति ते॥
न हन्तव्याः स्त्रियः सर्वा अत्रेश्च कुलसंभवाः।
ब्रह्महत्यासमं पापमात्रेय्या वधतो भवेत्॥
स्त्रियः सर्वा न हन्तव्याः सर्वैश्चैव द्विजातिभिः।
सर्वधर्मेषु विप्रेन्द्राः पापकर्मरता अपि॥

अहिंसासत्यास्तेयभूतानुग्रहविधिः

[4]अहिंसा सत्यमस्तेयं दया भूतेष्वनुग्रहः।
यस्यैतानि सदा विप्रास्तस्य तुष्यति शंकरः॥

(१) सौर. १०।४४, ५१, ५२, ६१.
(२) सौर. १८।१-३.
(३) सौर. ४४।४७-४९, ५२-५३.
(४) सौर. ४८।१६.

सूर्यग्रहणे जपविधिः स्वापभोजननिषेधश्च

[1]सूर्येन्दुग्रहणं यावत्तावत्कुर्याज्जपादिकम्।
न स्वप्यान्न च भुञ्जीत स्नात्वा भुञ्जीत मुक्तयोः॥

ग्रस्तास्तोत्तरभोजनकालः

आदित्यशीतकिरणौ ग्रस्तावस्तं गतौ यदा।
दृष्ट्वा तदाऽन्यदिवसे स्नात्वा भुञ्जीत वाग्यतः॥

ग्रहणे समुद्रस्नानं महाफलम्

[2]दानानि यानि लोकेषु विख्यातानि मनीषिभिः।
तेषां फलमवाप्नोति ग्रहणे चन्द्रसूर्ययोः॥
सौरपुराणेऽम्बुधिस्नानमुपक्रम्य – दानानीति।

सिन्धु. २९१

## पराशरपुराणम्

श्रौतस्मार्ताचारविधिः तान्त्रिकाचारनिषेधश्च

[3]यज्ञदानतपःकर्म कर्तव्यं सर्वचेतनैः।
वेदोक्तं चित्तशुद्ध्यर्थं परया श्रद्धया सह॥
वर्णाश्रमसदाचारः श्रौतः स्मार्तश्च सत्तमैः।
सर्वथा न परित्याज्यः कर्तव्यः श्रेयसे सदा॥
[4]वर्णाश्रमपरिभ्रष्टः प्रायश्चित्तेष्वनुन्मुखः।
वेदे तथाऽऽगमे स्थित्वा तदुक्तं धर्ममाचरेत्॥
अतः श्रुत्युदितं धर्मं गृह्णीयादेव वैदिकः।
तन्त्रसिद्धं न गृह्णीयान्मोहाद्वाऽपि कदाचन॥
यत्तु तन्त्रानुरोधेन कथितं तत्परित्यजेत्।
धर्मशास्त्रे पुराणे च यत्नतो वैदिको जनः॥

महादेवप्रसादात् वर्णानां स्वस्वधर्मे प्रवृत्तिः

[5]ज्ञाननिष्ठो भवेद्विप्रो महादेवप्रसादतः।
रक्षकश्च भवेद्राजा महादेवप्रसादतः॥
वाणिज्यकृषको वैश्यो भवेद्रुद्रप्रसादतः।
शूद्रः शुश्रूषुरेव स्यात्प्रसादेन विजानताम्॥

(१) सौर. ५१।२१-२२.
(२) सौर. ६६।५८-५९; सिन्धु. २९१.
(३) पराशर. ५।१०-११.
(४) पराशर. ६।११, ३०-३१.
(५) पराशर. ७।७-९, २७-३०.

चक्राद्यङ्कितस्य ब्राह्मणस्य कर्मा-
नधिकारः, ब्राह्मण-
लिङ्गानि

**अध्यापने चाध्ययने श्रौतस्मार्तेषु कर्मसु।**
**संभाषणे च संबन्धे नाधिकारी च लाञ्छितः॥**
**यज्ञोपवीतं दण्डं च सोदकं च कमण्डलुम्।**
**लाञ्छनं ब्राह्मणस्याऽऽहुर्मुनयः सूक्ष्मदर्शिनः॥**
**वैणवीं धारयेद्यष्टिं सोदकं च कमण्डलुम्।**
**पवित्रमुपवीतं च त्रिपुण्ड्रोद्धूलनं द्विजः॥**
**एतादृशानि लिङ्गानि यस्य सन्ति द्विजन्मनः।**
**सत्यमेव मया प्रोक्तं सफलं तस्य जीवितम्॥**

नित्यनैमित्तिककर्म-
प्रशंसा

**[1]ज्ञानार्थं कर्म सश्रद्धं कुर्यान्नित्यमतन्द्रितः॥**
**कर्मणा न हि विज्ञानं विना मर्त्यस्य सिध्यति।**
**नैमित्तिकं च कर्तव्यं पापानां विनिवृत्तये॥**
**पापिष्ठस्य परिज्ञानं सर्वथा नोपपद्यते।**
**अनर्थं चावशो याति मानवः पापकर्मणा॥**
**अतो नैमित्तिकं कुर्याच्छ्रद्धया कर्म नित्यवत्।**
**नित्यनैमित्तिकादन्यद्वरिष्ठं नैव विद्यते॥**
**नित्यनैमित्तिकं कर्म यः करोति द्विजोत्तमः।**
**स धीरः स तु सर्वज्ञः स साक्षाद्वेदवित्तमः॥**
**[2]अनुकूलस्तु वेदानामाचारस्तेषु यः स्थितः।**
**सोऽयं वैदिकनिष्ठानामिति वाञ्छन्ति केचन॥**
**[3]न शूद्राय परिज्ञानं दद्याद्वेदमुखेन तु॥**

## आदिपुराणम्

दानोपासनद्विविधाध्ययनैर्नर-
जन्मसाफल्यम्

**गृत्सपाद उवाच –**
**[4]दानेनोपासनेनैव शास्त्रस्याध्ययनेन च।**
**नराणां सफलं दिनं (?) शेषं च द्विविधं भवेत्।**
**गुरोः सम्यगध्ययनं तथा साधुजनाच्छ्रुतम्॥**

(१) **पराशर.** ९।१४-१८.
(२) **पराशर.** १०।७०; **सस्मृ.** १९० स्थितः (स्मृतः).
(३) **शूक.** १४; **सस्मृ.** १२४ दद्या (भाष्या).
(४) **आदि.** ४।४-५, ७, १३, १८.

पातिव्रत्यधनविनयत्यागविद्यासाधु-
वचनानां सत्कथाश्रवणस्य
च प्रशंसा

**पतिभक्तिरबलानां गृहस्य भूषणं धनम्।**
**विनयो हि यौवनस्य त्यागो वृद्धस्य भूषणम्।**
**विद्या च नरलोकस्य तथा साधुवचः परम्॥**
**जाबालिरुवाच –**
**मानवश्चेत्सत्कथायां बाल्यावधिसमुत्सुकः।**
**सफलं जीवनं तस्य अन्ते च सुखभाजनम्॥**

स्वधर्मत्यागे परधर्मपरिग्रहे च
दोषः, कुलाचारकर्तव्यता

**स्वस्वधर्मान्परित्यज्य परधर्मे रताश्च ये।**
**ते सर्वे विफलायासाः केवलं क्लेशभागिनः॥**
**[1]कुर्वन्नरः कुलाचारं सर्वमाप्नोति शोभनम्॥**

## मुद्गलपुराणम्

कर्ममूलनरदेहपोषणकर्तव्यता

**[2]तथापि नरदेहोऽयमृणत्रयसमन्वितः।**
**नरदेहकृतं कर्म तन्मूलं सकलं जगत्॥**
**सर्वेषामन्नरूपोऽयं नरदेहो न संशयः।**
**तस्य पोषणमत्यन्तं कर्तव्यं देहधारिणा॥**

क्षमाप्रशंसा

**[3]क्षमा यत्र भवेद्विप्रास्तत्र सर्वं प्रतिष्ठितम्।**
**क्रमेण प्राप्यते ब्रह्म क्षमायुक्तेन चेतसा॥**

अध्ययनादित्रयं क्षत्रियवैश्ययोर्धर्मः
होमादि ब्राह्मणद्वारा च

**[4]अग्निहोमं च विप्रस्य हस्तेनायं समाचरेत्।**
**संन्यासं नैव विप्रेश कुर्यात्क्षत्रियजः कदा॥**
**क्षत्रियाणां विशां विप्र यजनं दानमेव च।**
**समाख्यातं त्वध्ययनं न प्रोक्तं याजनादिकम्।**
**अग्निकर्म तथा देवार्चनं ब्राह्मणहस्ततः॥**
**कारयेद्वैश्यधर्मज्ञः स्वधर्मपालनाय वै।**
**तर्पणं ब्राह्मणास्येन मन्त्रेण तु समाचरेत्।**
**एष वैश्यस्य मार्गो वै कथितस्ते द्विजोत्तम॥**

(१) **आदि.** २६।२४.
(२) **मुद्गल.** २।९।१८-१९.
(३) **मुद्गल.** २।४२।४४.
(४) **मुद्गल.** ३।२०।१४, १६-३१.

शूद्रस्य द्विजसेवादयो धर्माः, कर्मसु नाममन्त्राणां स्वयंपाठः पौराणमन्त्राणां ब्राह्मणेन पाठः, शूद्रस्य देवर्षिप्रतिष्ठापित-मूर्तिस्पर्शानधिकारः

**शूद्रस्य तु त्रिवर्णानां सदा सेवा प्रकीर्तिता।**
**दासवन्नात्र संदेह आश्रमो गृहिसंज्ञितः॥**
**दानं दद्याद्द्विजायैव पुराणश्रवणं तथा।**
**कुर्याद्वेदाक्षरस्यायं न कुर्याच्छ्रवणं कदा॥**

अधुना वेदाक्षरश्रवणं न कर्तव्यम्, तदर्थमाह — दानमिति। पुराणश्रवणं कुर्यात्, न पुराणश्लोकादि-पठनम्, गीर्वाणभाषणहीनत्वात्, 'शूद्रमक्षरसंयुक्तं दूरतः परिवर्जयेत्' इति स्मृतेः, 'दुःशीलोऽपि द्विजः पूज्यो न तु शूद्रो जितेन्द्रियः। कः परित्यज्य दुष्टां गां दुहेच्छीलवतीं खरीम्॥' इति स्मृतेः। 'पण्डितस्यापि शूद्रस्य शास्त्रज्ञानरतस्य च। वचनं तस्य न ग्राह्यं शुनोच्छिष्टं हविर्यथा॥ शूद्रो ज्ञानबलेनापि ब्राह्मणान् भाषते यदि। स याति नरकं घोरं यावदाभूत-संप्लवम्॥ कृष्णसर्पं द्विजं नष्टं शूद्रं च प्रतिपाठकम्। गर्दभं जारजातं च दूरतः परिवर्जयेत्॥' इति अङ्गिराः। मुभा.

**पुराणादिषु देवानामवताराः प्रकीर्तिताः।**
**तेषां मूर्तिप्रतिष्ठा वै कृता देवर्षिभिः पुरा।**
**तासां स्पर्शादिकं चैव न कर्तव्यं कदाचन॥**
**नरादिभिश्च सर्वत्र स्वेच्छया स्थापिता भवेत्।**
**तस्याः स्पर्शश्च कर्तव्यः शूद्रैर्नित्यं महामुने॥**
**नाममन्त्रेण पूजा वै कर्तव्या स्मरणं तथा।**
**मृत्तिकार्चां समभ्यर्चेन्नाममन्त्रेण वा मुने।**
**आवाहनादि प्रारभ्य विसर्गान्तं समाचरेत्॥**
**पुराणसंभवैर्मन्त्रैः श्राद्धतर्पणकादिकम्।**
**ब्राह्मणानां मुखैश्चैव शूद्रैः कर्तव्यमादरात्॥**
**न पुराणादिसंभूताः श्लोकास्ते शूद्रजातिभिः।**
**पठितव्या महाभाग श्रवणं संमतं सदा॥**

शूद्रहीनजातीनां नामस्मरणादयो धर्माः

**अन्त्यजातिभवाः शूद्रास्तैर्नामस्मरणं सदा।**
**कर्तव्यं देवमूर्तीनां स्पर्शो नैव कदाचन॥**
**पुराणसंभवैर्मन्त्रैर्न कर्तव्यं महामुने।**
**कर्म किंचिच्च तैः सर्वैः स्वस्वधर्मपरायणैः॥**
**पितॄणां देवतानां चोद्देशं कृत्वा धनादिकम्।**
**धान्यं तैः संप्रदातव्यमेष मार्गः पुरातनः॥**
**स्वस्वधर्मरता एते स्वर्गगामिन एव च।**
**भवन्ति नात्र संदेहो महाभोगाः सुखे रताः॥**

अधुना वर्णधर्मफलमाह — स्वस्वधर्मरता इति। स्वस्वधर्मरता एते ब्राह्मणादयः स्वर्गगामिनो भवन्ति। तत्र विवेकः — येऽल्पपुण्यास्ते स्वर्गं गत्वा देवसेवका भवन्ति, देवभक्तिपरायणत्वादल्पयज्ञादिकारकत्वाच्च। ये महायज्ञकारकास्ते देवा भवन्ति, शताश्वमेधकृदिन्द्रो भवति,यज्ञफलोद्भूतत्वात्। तत्र कथ्यते — कृत्तिकायज्ञे-नाग्निर्भवति, वेदादिप्रामाण्यात्। तद्यथा — 'अग्निर्वा अकामयत — अन्नदो देवानाम् (स्याम्) इति। स एतमग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निरवपत्' (तैब्रा. ३।१।४।१) इति। तद्वद्बृहस्पतित्वं भवति। तद्यथा — 'बृहस्पतिरकामयत — तन्मे देवादधानाः सोऽयं पुरोधा (?श्रन्मे देवा दधीरन् गच्छेयं पुरोधाम्) इति स एतं चतुर्विंशतिरात्रमपश्यत्तमाहरत्तेनायजत' (तैसं. ७।४।१।१), 'बृहस्पतिर्देवानां पुरोहित आसीत्' (तैसं. ६।४।१०।१) इति। एवं इन्द्रादिदेवा ज्ञातव्याः, यज्ञकृदिन्द्रादिदेवः संभवतीति। मुभा.

दैवपित्र्यकर्मकर्तव्यता, ग्रहणादि-कृतकाम्यश्राद्ध-प्रशंसा

**[1]सर्वेषां पितृदेवानां कर्म कर्तव्यमादरात्॥**
**काम्यानि चैव श्राद्धानि शस्यन्ते ग्रहणादिषु॥**

देवार्चनं नित्यम्, ब्रह्मार्पित-कर्मभिर्योगसिद्धिः

**नित्यं देवार्चनं प्रोक्तं व्रतादिषु विशेषतः।**
**एवं नानाव्रतादीनां कर्तव्यं सेवनं नरैः॥**
**अग्निहोत्रादिमार्गैश्च देवानां सेवनं मतम्।**
**तीर्थादिदानसंभावैरिष्टापूर्तादि संमतम्॥**
**एवं दैवं तथा पित्र्यं विविधं कर्म कथ्यते।**
**तदेव ब्रह्मणि प्राज्ञैरर्पितं योगदं भवेत्॥**

(१) मुद्गल. ३।२१।१७, २५, ३६-३८.

वेदोक्तान्येव कर्माणि कार्याणि

**[1]सर्वेषां गुरवः प्रोक्ता वेदास्तैः कथितं भवेत्।**
**तदेव करणीयं यद्गतिदं सर्वसंमतम्॥**
**वेदाधारविहीनं यत्त्याज्यं सर्वैर्न संशयः।**
**नो चेन्नरकगो भूत्वा यातनां लभते नरः॥**

वेदाज्ञापालनं कार्यम्

**[2]वेदशास्त्रमयी वाणी गणेशेन विनिर्मिता।**
**तस्या आज्ञां प्रपाल्यैव वर्तितव्यं तु जन्तुभिः॥**
**प्रीतो गणेश्वरस्तेन दास्यति स्वपदं परम्।**
**सर्वेषां नात्र संदेहो जीवानामीशभाविनाम्॥**

योगिनिन्दानिषेधः योगिसेवा-विधिश्च

**[3]अतो न योगिनां निन्दां कदा कुर्याद्विचक्षणः।**
**सेवां समाचरेत्तेषां तेन सौख्ययुतो भवेत्॥**

अधुना जनविचक्षणत्वं प्रकटयन्नाह — अत इति। अतः पूर्वोक्तपापपुण्यगतिज्ञानयुक्तत्वात् विचक्षणो नरः योगिनां निन्दां न कुर्यात्, तेषां सेवां समाचरेत्। योगिलक्षणज्ञानहीनः अहंममयुक्तस्वभावधारणात् अतः सेवां कुर्यादिति भावः। योगिलक्षणज्ञस्तत्सदृशो योगीति तेनाऽऽचरणेन सौख्ययुतो भवेदिति। अत्राष्टावक्रः — 'संतुष्टोऽपि न संतुष्टः खिन्नोऽपि च न खिद्यते। तस्याऽऽश्चर्यदशां तां तां तादृशा एव जानते॥' इति स्मृतेः, 8'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति श्रुतेः। मुभा.

चातुर्वर्ण्यस्य शूद्रहीनानां च धर्माः

**[4]अथ वर्णाश्रमाचारं शृणु सर्वसुखप्रदम्।**
**येन धर्मार्थकामांश्च लभेन्मोक्षं नरोत्तमः॥**

अधुना वर्णाश्रमाचारवर्णनार्थमाह — अथेति। 'हे दक्ष' इत्याकर्षणीयम्। अथ क्षेत्रक्षेत्रज्ञकथनानन्तरं वर्णाश्रमाचारं शृणु। तदेवान्तःकरणशुद्धिकारकं योगदं सर्वसुखप्रदम्। येनाऽऽचरणेन धर्मार्थकामान् मोक्षं च नरोत्तमो लभेत्, तत्साधनसाध्यत्वादिति।

मुभा.

**चित्तेन्द्रियाणि वश्यानि क्षमार्जवतपांसि च।**
**शौचं श्रुतिस्मृतीनां वै ज्ञानं यत्र प्रतिष्ठति॥**

अधुना ब्राह्मणाचारं वर्णयन्नाह — चित्तेन्द्रियाणीति। चित्तेन्द्रियाणि चित्तम् अन्तःकरणम् इन्द्रियाणि च वश्यानि यस्य। क्षमार्जवं षड्डूर्मिवेगसहनं क्षमा, तद्वत् आर्जवं शास्त्रोक्तसन्मार्गसेवनम् आर्जवम् तत्राऽऽग्रहहीनत्वम्, तपांसि नानातपसाम् आचरणं तपोधनो ब्राह्मण इति। शौचं यथोक्ताचाराचरणम्। यत्र ब्राह्मणे श्रुतिस्मृतीनां ज्ञानं प्रतिष्ठति, सर्वज्ञत्वादिति।

मुभा.

**वेदाधारविहीनं यन्न करोति कदाचन।**
**सदा ब्रह्मपरो यस्माद्ब्राह्मणः स च संस्मृतः॥**

वेदाधारविहीनं यद्भवति तत्कदाचन न करोति, सदाचारधारकत्वात्। सदा ब्रह्मपरः ब्रह्मणि तत्परं चित्तं यस्य एतादृशः यः स एव ब्राह्मणः संस्मृतः तत्र ब्रह्मणि रता ब्राह्मणाः ब्राह्मणशब्दार्थ इति।

मुभा.

**शौर्यं दाक्ष्यं तथा दार्ढ्यं युद्धे संमुखता सदा।**
**शरण्यरक्षणं नित्यं प्रभुत्वं दण्डधारणम्॥**

अधुना क्षत्रियाचारं वर्णयन्द्वाभ्यामाह — शौर्यमिति। शौर्यं शूरभावधारणम्। दाक्ष्यं वर्णाश्रमस्थानां चित्तभावज्ञत्वम्, 'दक्ष हिंसारत्योः' इति धात्वर्थात् वर्णाश्रमाचारहीनानां दण्डधारकत्वात् स्वाचारनिष्ठानां तद्भावरक्षणेन गतिकारकत्वाच्च। तथा तद्वत् दार्ढ्यं देहेन्द्रियेषु युद्धार्थं शस्त्राद्याकर्षणादिभिर्दृढत्वम्। सदा युद्धे संमुखता, वीरावेशयुक्तत्वात्। शरण्यरक्षणं शरणागतानां रक्षणम्। नित्यं दण्डधारणम् अधर्माचारयुक्तानां दण्डधारणम्। प्रभुत्वं राजसत्ताधीनसर्वजनकारकत्वमिति। मुभा.

**धृतिः क्षात्रं सदा तेजश्चित्तमौदार्यसंयुतम्।**
**सुनीत्या पालनं पञ्चकर्मयुक्तः स बाहुजः॥**

धृतिः, परचक्रागमनं दृष्ट्वा धृतिर्धार्या। क्षात्रं क्षतात् त्रायते तत् क्षत्रं तद्भावधारणम्। तेजः प्रजारक्षण-

---

8अस्य वाक्यस्याऽऽकरनिर्देशः 'शाट्यायनिनः' इति ब्रह्मसूत्रशाङ्करभाष्ये कृतः। सामवेदस्य राणायनीयायाः शाखाया अवान्तरशाखा शाट्यायनीयेति चरणव्यूहे।

(१) मुद्गल. ३।४८।४-५.
(२) मुद्गल. ८।१५।२५-२६.
(३) मुद्गल. ९।७।५२.
(४) मुद्गल. ९।१३।४५-५२.

तत्परत्वम्। औदार्यसंयुतं चित्तं ब्राह्मणेभ्य ईप्सितदमन्येभ्यः स्वस्वपात्रताप्रमाणेन ददच्च। सुनीत्या यथोक्तवर्णाश्रमधर्मनीत्या पालनं प्रजापालनम्। [8]पञ्चकर्मयुक्तः यजनादिषट्कर्माणि तेषु याजनवर्जितः। नन्वध्यापनयाजनयाचकत्वानि क्षत्रियाणां न सन्ति, यजनादित्रिकर्मयुक्तत्वादिति चेत्, सत्यम्, तदपि कथ्यते – वेदाध्यापकत्वं क्षत्रियो न कुर्यात्, शस्त्रविद्याद्यध्यापको भवेदेवं प्रतिपादनात्। तत्र सात्यकये यादवाय पाण्डवेनार्जुनेन शस्त्रविद्याध्यापनं कृतं न दोषदम् अधर्महीनत्वात्। तद्वद्याचकत्वम्। कृष्णभीमार्जुनाः ब्राह्मणवेषं धृत्वा जरासंधाय याच्ञां चक्रुः, तदेव न दोषदम्, अधर्महीनत्वात्। एवं सहस्रार्जुनादिभिः जमदग्न्यादिभ्यो लोभयुक्तत्वात् 'अतिथिरूपिणे मह्यं धेनुं देहि' इति याचितम्। सः बाहुजः क्षत्रियः ज्ञातव्यः, स्वधर्मयुक्तत्वात्, 'बाहू राजन्यः कृतः' (ऋसं. १०।९०।१२) इति श्रुतेः। मुभा.

**क्रयविक्रयकौ नित्यं वस्तूनां भूमिकर्षणम्।**
**गवां पालनकं त्रेधाकर्मयुक्तः स वैश्यकः॥**

अधुना वैश्यधर्मार्थमाह – क्रयविक्रयकाविति। नित्यं निरन्तरं वस्तूनां धान्यादिवस्तूनां क्रयविक्रयकौ कार्यौ। भूमिकर्षणं शूद्रहस्तेन कार्यम्, त्रिवर्णसेवकत्वात् हिंसादिकानां स्वहस्ताचरणाभावाच्च। गवां पालनकं रसादिविक्रयकारणार्थम्। त्रेधाकर्मयुक्तोऽध्ययनयजनदानाधिकारयुक्तत्वात्। स एव वैश्यको ज्ञातव्यः, स्वधर्मरतत्वात्। अन्ये स्वधर्महीना ब्राह्मणादयो नामधारका ज्ञातव्याः, ब्राह्मणादिवर्णोद्भवत्वादिति। मुभा.

**त्रिवर्णसेवनं दानं नाममन्त्रं जपेत्परम्।**
**पुराणश्रवणं शौद्रं कर्म पौराणिकं द्विजात्॥**

अधुना शूद्रधर्मार्थमाह – त्रिवर्णसेवनमिति। त्रिवर्णसेवनं ब्राह्मणक्षत्रियवैश्यानां सेवा धर्मयुक्तेति। दानं दातव्यम् अध्ययनादिपञ्चकर्माधिकाराभावात्। नाममन्त्रं जपेत्, वेदतन्त्रपुराणस्मृतीनामध्ययनाभावात्। तदेव परं धर्मार्थकाममोक्षदम्। पुराणश्रवणं स्मृतिश्रवणं कार्यम्, श्रुतिश्रवणाधिकारहीनत्वात्। कर्म दैवं पित्र्यं च द्विजात् ब्राह्मणमुखोद्गतं पौराणिकं पुराणप्रोक्तम्, वेदोक्तकर्माचरणहीनत्वात्। शौद्रं शूद्राणामिदं कर्म स्वधर्माचरणं ज्ञातव्यमिति। मुभा.

**अन्त्यजानां पुराणोक्तं कर्म विप्रमुखोद्गतम्।**
**नैव शूद्रसमं चान्यदस्पर्शत्वं द्विजादिषु॥**

अधुना नीचशूद्राणां धर्मार्थमाह – अन्त्यजानामिति। अन्त्यजानां नीचशूद्राणाम्, वर्णसंकरोद्भवत्वात्। विप्रमुखोद्गतं पुराणोक्तं कर्म नैव। देवपितॄणामुद्देशेन दानं धनधान्यादिदानं प्रोक्तं अन्यच्छूद्रसमं कर्म। द्विजादिषु श्रेष्ठवर्णोद्भवेषु अस्पर्शत्वं दूरे स्थित्वा नमनादिकम्। एतदन्त्यजानां कर्म ज्ञातव्यमिति। मुभा.

## गणेशपुराणम्

पुराणश्रवणादयस्त्रैवर्णिकसामान्यधर्माः,
याजनादित्रयं ब्राह्मणस्याधिकम्,
आतिथ्यं चातुर्वर्ण्यधर्मः

**[1]पुराणश्रवणं दानं परनिन्दादिवर्जनम्॥**
**परोपकारं कुर्याच्च द्रव्यप्राणवचोमृतैः।**
**परोपतापं नो कुर्यादात्मस्तवनमेव च॥**
**गुरुद्रोहं वेदनिन्दां नास्तिक्यं पापसेवनम्।**
**अभक्ष्यभक्षणं चैव परदारनिषेवणम्॥**
**स्वदारवर्जनं नैव कुर्यात्सत्संगतिं चरेत्।**
**मातापितृगुरूणां च गवां शुश्रूषणं तथा॥**

---

8 व्याख्यानमिदं न मनोहरम्। तथाहि – अत्र रूढषट्कर्म – शब्दबोध्ययजनादिकर्माणि याजनवर्जितानि पञ्चकर्मशब्देन गृहीतानि। यजनाद्यन्यतममध्यापनं च वेदविषयमेवेति 'त्रयो धर्मा निवर्तन्ते ब्राह्मणात्क्षत्रियं प्रति।.... वैश्यं प्रति तथैवैते निवर्तेरन्' (मस्मृ. १०।७७, ७८) इत्यादिस्मृतिवचनेभ्यः सिद्धम्। तेनात्र पञ्चकर्मान्यतमत्वेन शस्त्रविद्याध्यापनग्रहणं न युज्यते। एवमत्र मुख्ययाचकत्वस्य षट्कर्मान्यतमत्वाभावात् याचकत्वशब्दलक्षितस्य प्रतिग्रहस्यापि शास्त्रीयधर्मरूपदानसंप्रदानकर्तृकस्य वृत्तिरूपस्यैव षट्कर्मान्यतमत्वात् अत्रोदाहृतक्षत्रियकर्तृकः प्रतिग्रहोऽपि न पञ्चकर्मान्यतमो भवितुमर्हति। किंचात्रोदाहृतप्रतिग्रहस्य क्षत्रियधर्मत्वे ब्राह्मणवेषधारणं व्यर्थम्। न च ब्राह्मणवेषधारणाङ्कप्रतिग्रहस्य क्षत्रियधर्मत्वं कुत्रचिद्विहितम्। अपि च जमदग्न्यादिब्राह्मणेभ्योऽतिथिरूपेण याचनापूर्वको धेन्वादिप्रतिग्रहोऽपि न क्षत्रियधर्मः 'न ब्राह्मणस्य त्वतिथिर्गृहि राजन्य उच्यते। वैश्यशूद्रौ सखा चैव ज्ञातयो गुरुरेव च॥' (मस्मृ. ३।११०) इति ब्राह्मणगृहे क्षत्रियादेरतिथित्वनिषेधात्। तस्मात् संनिहितत्वात् एकवाक्यगतत्वाच्च धृतिधारणादीनामेव पञ्चकर्मशब्देन ग्रहणं युक्तम्। एवमुत्तरश्लोकेऽपि त्रेधाकर्मशब्देन तद्वाक्योक्तक्रयविक्रयादीनामेव ग्रहणं युक्तम्।

(१) गणेश. १।३।२४-२८.

दीनान्धकृपणेभ्यश्च दद्यादन्नं सवस्त्रकम्।
प्राणात्ययेऽपि सत्यस्य त्यागं नैव समाचरेत्॥
[१]मन्त्रायुर्गृहरन्ध्रश्रीरतयश्चौषधानि च।
मानापमानदानानि प्रकटानि न कारयेत्॥
[२]परद्रव्यं परद्रोहं परदारांस्तथैव च।
परनिन्दां च नेच्छन्ति नृपाः सौम्याश्च साधवः॥
अधीतिर्यजनं दानं शरणागतपालनम्।
निषिद्धाकरणं चैव विध्यर्थप्रतिपालनम्।
एते धर्मास्त्रिवर्णानां याजनादित्रयं द्विजे॥
अधिकं सर्ववर्णानामातिथ्यं परमं मतम्॥

ऐहिकपारलौकिकसुखकारकाणि
कर्माणि कर्तव्यानि

[३]इहलोके तु तत्कार्यं येन सौख्यं परे भवेत्।
पूर्वे वयसि तत्कार्यं येन शं वार्धके भवेत्॥
अष्टमासेषु तत्कुर्याद्येन वर्षासु शं भवेत्।
दिवसे कर्म तत्कार्यं येन रात्रौ सुखं भवेत्॥

पुण्यातिशयः क्षुद्रवाक्यानुसरणं च
साधुशब्दप्रवृत्तिनिमित्तम्

[४]अतिपुण्यवतो लोके साधुशब्दः प्रयुज्यते॥
महान्क्षुद्रस्य वाक्यं चेत्कुरुते सोऽपि साधुताम्।
प्राप्नोति सर्वलोकेषु कीर्तिं स्फीतिं समुत्कटाम्॥

शुभकर्मकर्तव्यता, शरणागतरक्षणादिभिः
पुरुषार्थित्वसिद्धिः

[५]अशुभात्प्राप्यते दुःखं सुखं स्याच्छुभकर्मणा।
अतः सन्तः प्रकुर्वन्ति शुभं कर्म सदाऽऽदरात्॥
हितं च सर्वभूतेषु ह्येवं वदति सा गिरा।
+भवता पुरुषार्थेन पीडितास्ते सुरर्षयः॥
पुरुषार्थः स विज्ञेयो यश्चतुर्णां हि साधकः॥
यः सदा ह्यर्थलुब्धः स्यात्परदारेषु न क्वचित्।
स एव पुरुषार्थी स्याद्यश्च निन्दां न विन्दति॥
शरणागतसंत्राता दृढो धर्मपरायणः।
अदुष्टवाक् सत्यशीलो स्वगुणानामकीर्तकः॥

+ सिन्धुनामकदैत्येन।
(१) गणेश. १।३१।१२.
(२) गणेश. १।५४।२५-२८.
(३) गणेश. १।७७।३४-३५.
(४) गणेश. १।७९।३३-३४.
(५) गणेश. २।११८।१६-२१.

परोपकरणे सक्तः परपैशुन्यवर्जितः।
दया सर्वेषु भूतेषु पुरुषार्थी स गण्यते॥

आप्तमरणोत्तररोदननिन्दा

[१]न रोदनं प्रशंसन्ति धर्मशास्त्रविदो जनाः।
यदश्रु सुहृदामास्ये प्रेतस्य तद्भवेद्ध्रुवम्॥

चतुर्णां वर्णानां कर्माणि

[२]ब्रह्मक्षत्रियविट्शूद्राः स्वभावाद्भिन्नकर्मिणः।
तानि तेषां तु कर्माणि संक्षेपात्तेऽधुना वदे॥
अन्तर्बाह्येन्द्रियाणां च वश्यत्वमार्जवं क्षमा।
नाना तपांसि शौचं च द्विविधं ज्ञानमात्मनः॥
वेदशास्त्रपुराणानां स्मृतीनां ज्ञानमेव च।
अनुष्ठानं तदर्थानां कर्म ब्राह्ममुदाहृतम्॥
दार्ढ्यं शौर्यं च दाक्ष्यं च युद्धे पृष्ठाप्रदर्शनम्।
अनाथपालनं दानं धृतिस्तेजः स्वभावजम्॥
प्रभुता मनऔन्नत्यं सुनीतिर्लोक(?त्या लोक)पालनम्।
पञ्चकर्मस्वधिकारः क्षात्रकर्म समीरितम्॥
नानावस्तुक्रयो भूमेः कर्षणं रक्षणं गवाम्।
त्रिधाकर्माधिकारित्वं वैश्यकर्म समीरितम्॥
दानं द्विजानां शुश्रूषा सर्वदा शिवसेवनम्।
एतादृशं नरव्याघ्र कर्म शौद्रमुदीरितम्॥
स्वस्वकर्मरता एते मय्यर्प्याखिलकारिणः।
मत्प्रसादात् स्थिरं स्थानं यान्ति ते परमं नृप॥

## देवीपुराणम्

ग्रहणकाले मासभेदेन गङ्गादिनदीनां प्रशस्तत्वम्,
कासांचित् सर्वमासेषु प्रशस्तत्वम्,
प्रशस्तानि क्षेत्राणि च

[३]कार्तिके ग्रहणं पुण्यं गङ्गासागरसंगमे।
मार्गे तु ग्रहणं पुण्यं देविकायां महामुने॥
[४]पौषे वै नर्मदा पुण्या माघे संनिहिता शुभा।
फाल्गुने वरणा पुण्या चैत्रे पुण्या सरस्वती॥

(१) गणेश. २।१२५।२५-२६.
(२) गणेश. २।१४९।२८-३५.
(३) निप्र. २।६८७ देवि (देवी); सम. ७७ पुण्यं (श्रेष्ठं) सागर (यमुन) पुण्यं दे (प्रोक्तं दे); कृभ. २९० समवत्.
(४) निप्र. २।६८७ वरणा (श्रवणा); सम. ७७ वै (तु); कृभ. २९० समवत्.

**[1]वैशाखे तु महापुण्या चन्द्रभागा सरिद्वरा।**
**ज्येष्ठे तु कौशिकी पुण्या आषाढे तापिका नदी॥**
**[2]श्रावणे सिन्धुनामा च तथा भाद्रे च गण्डकी।**
**आश्विने सरयूः श्रेष्ठा तथा पुण्या तु नर्मदा॥**
**[3]गोदावरी महापुण्या चन्द्रे राहुसमन्विते।**
**सूर्ये च राहुणा ग्रस्ते तमोभूते महामुने॥**
**[4]नर्मदातोयसंस्पर्शात्कृतकृत्या भवन्ति ते।**
**एवं गङ्गाऽपि द्रष्टव्या तद्वदेव सरस्वती॥**

मासभेदेन नदीनां पुण्यत्वं देवीपुराणे – 'कार्तिके.... भवन्ति ते' इति।

सम. ७७

**[5]ये सूर्ये सैंहिकेयेन स्पृष्टे रेवाजलं नराः।**
**स्पृशन्ति चावगाहन्ते न ते प्रकृतिमानवाः॥**
**स्मृत्वा शतक्रतुफलं दृष्ट्वा गोदानजं फलम्।**
**स्पृष्ट्वा गोमेधतुल्यं तु पीत्वा सौत्रामणीं लभेत्॥**
**स्नात्वा वाजिमखं पुण्यं प्राप्नुयादविचारतः।**
**रविचन्द्रोपरागे तु अयने चोत्तरे तथा॥**
**शिवादित्यफलं तच्च मण्डले समुदाहृतम्।**
**सग्रहे मण्डले योगे तदपि प्राप्नुयान्नरः॥**

शिवादित्ययोः मण्डले क्षेत्रे तयोर्यत् फलं तद्राहुग्रस्ते शशिसूर्ययोर्मण्डले योगे पूजायां प्राप्नोतीत्यर्थः इति कल्पतरुः।

कृ. ६२८

**ऊषरारण्यक्षेत्रेषु यत्पुण्यं समुदाहृतम्।**
**तदत्र कालमाहात्म्यादुपरागेऽधिकं भवेत्॥**

(१) **निप्र.** २।६८७ तापिका न (अविकान); **सम.** ७७; **कृभ.** २९०.

(२) **निप्र.** २।६८७ नामा (नाम्ना) गण्डकी (गण्डुकी) तथा (भूयः); **सम.** ७७ च (तु) गण्डकी (चन्द्रिका); **कृभ.** २९० च (तु) सरयूः (शरयूः).

(३) **कृ.** ६२८; **निप्र.** २।६८८; **सिन्धु.** २९१ (=); **सम.** ७७ च (तु).

(४) **कृ.** ६२८ पूर्वोत्तरार्धे देवीपुराणस्थषट्पङ्क्तिभिर्व्यवहिते; **निप्र.** २।६८८; **सिन्धु.** २९१ स्पर्शात्कृ (स्पर्शे कृ) पू. (=); **सम.** ७८ पू.

(५) **कृ.** ६२८.

**[1]गङ्गा कनखलं पुण्यं प्रयागः पुष्करं तथा।**
**कुरुक्षेत्रं महापुण्यं राहुग्रस्ते दिवाकरे॥**

## कल्किपुराणम्

क्षत्रियाणां धर्मो युद्धम्

**शशिध्वज उवाच –**

**[2]सुशान्ते परमो धर्मः प्रजापतिविनिर्मितः।**
**युद्धे प्रहारः सर्वत्र गुरौ शिष्ये हरेरिव॥**
**जीवतो राजभोगः स्यान्मृतः स्वर्गे प्रमोदते।**
**युद्धे जयो वा मृत्युर्वा क्षत्रियाणां सुखावहः॥**

## संग्रहकारः (स्मृतिसंग्रहः)

तीर्थादावसंभवे गृहे ग्रहणस्नानम्

**[3]उपरागेऽर्कवारे च ह्यमावास्यां च पर्वसु।**
**गृहे वाऽपि प्रकुर्वीत स्नानं शीतोदकेन च॥**

ग्रहणे निद्रामूत्रोत्सर्गादीनां दुष्फलानि

**[4]निद्रायां जायते व्याधिर्मूत्रे दारिद्र्यमाप्नुयात्।**
**पुरीषे कृमियोनिः स्यान्मैथुने ग्रामशूकरः॥**
**[5]अभ्यङ्गे च भवेत्कुष्ठी भोजने स्यादधोगतिः।**
**बन्धने च भवेत्सर्पो वधे च नरकं व्रजेत्॥**

ग्रहणे पत्रादिच्छेदन-निषेधः

**[6]पत्रं दारु तृणं पुष्पं शाकं नैवेह तक्षयेत्॥**

निषिद्धकालेऽपि नैमित्तिकं क्षौरम्

**[7]क्षौरं नैमित्तिकं कार्यं निषेधे सत्यपि ध्रुवम्।**
**पित्रादिमृतिदीक्षासु प्रायश्चित्ते च तीर्थके॥**

(१) **सिन्धु.** २९१ यागः (यागे); **सम.** ७८.

(२) **कल्कि.** ३।८।६-७.

(३) **इन्दु.** ४४.

(४) **विपा.** ३।२।४७२; **कृभ.** २८३ व्याधिर्मू (रोगो मू) शूकरः (सूकरः) (=).

(५) **विपा.** ३।२।४७२; **कृभ.** २८३ बन्धने (वचने) (=).

(६) **विपा.** ३।२।४७२.

(७) **बाल.** १।८९ पृ. २७४; **संदी.** २।६२ कार्यं नि (कुर्यान्नि).

सकञ्चुकयतिविधवयोः निष्कञ्चुक-
सधवायाश्च दर्शनस्य
निषेधः

**[1]विधवां कञ्चुकोपेतां सधवां कञ्चुकं विना।**
**यतिं (च) कञ्चुकोपेतं सवासा जलमाविशेत्॥**

अत्र दृष्ट्वेति शेषः। कञ्चुकोपेतमिति उष्णीष-स्याप्युपलक्षणम्। यप्र. १०२

गृहस्थवनस्थयतिभ्यो यथाक्रमं
सिद्धान्नगोरसकाञ्चन-
दाननिषेधः

**सिद्धमन्नं गृहस्थाय वनस्थाय च गोरसम्।**
**यतये काञ्चनं दत्त्वा रौरवं नरकं व्रजेत्॥**

## स्मृत्यर्थसारः

ग्रहणे वर्ज्यानि, ग्रहणे रात्रिस्नानानुमतिः,
ग्रहणसंबन्धेन भोजनविषयक-
विधिनिषेधाः

**..........[2]ग्रहणेषु च॥**
**तैलाभ्यङ्गं रतिं मांसं दन्तकाष्ठं च वर्जयेत्।**
**उष्णोदकेन न स्नायादन्यदा वाऽप्यकारणात्॥**
**राहुदर्शनसंक्रान्तिविवाहोत्क्रान्तिवृद्धिषु।**
**स्नानदानादिकं कार्यं निशि काम्यव्रतेषु च॥**

**[3]ग्रहणसंक्रान्तिविवाहोत्क्रान्तिवृद्धिषु रात्रावपि स्नानदानादिकं कार्यम्॥**

**[4]ग्रहणे नाश्नीयात्। तदाऽन्यसूतकसूतकित्वं नास्ति। तदा स्नानतर्पणश्राद्धयागदानादि कृत्वा मोक्षस्नानं कृत्वाऽश्नीयात्। सूर्यग्रहे पूर्वं चतुर्यामं नाश्नीयात्। चन्द्रग्रहे त्रियामम्। चन्द्रमसो ग्रस्तोदये न दिवा पूर्वमश्नीयात्। अमुक्तयोरस्तंगतयोर्दृष्ट्वा स्नात्वा परेऽहन्यद्यात्॥**

**[5]ग्रस्तोदये विधोः पूर्वं नाहर्भोजनमारभेत्॥**

(१) **यप्र.** १०२.
(२) **स्मृसार.** ३१.
(३) **स्मृसार.** ६३.
(४) **स्मृसार.** ६९; आप्र. ४७८ (ग्रहणे नाश्नीयात्। तदा स्नानतर्पणश्राद्धदानादि कृत्वा मोक्षस्नानं कृत्वाऽश्नीयात्। सूर्यग्रहे पूर्वचतुर्यामं नाद्यात्। चन्द्रग्रहे त्रियामम्। अमुक्तयोरस्तंगतयोर्दृष्ट्वा स्नात्वा परेऽहन्यद्यात्।).
(५) **स्मृसार.** ६९.

त्रैवर्णिकं प्रति पैष्टीसुरापानस्य ब्राह्मणं
प्रति मद्यपानस्य च निषेधः

**8 [1]तत्र मुख्या सुरा पैष्ट्येव। गौडी माध्वी तु मद्ये। तत्र सुरां त्रैवर्णिकस्तथा शूद्रा स्त्री च चातुर्वर्ण्यविवाह उत्पत्त्यादि न पिबेत्।**

**[2]तत्र गौडी माध्वी च सुरा मद्यम्। तालं पानसं द्राक्षं माधुकं खार्जूरं सैरमारिष्टं मैरेयं नालिकेरजमेतान्येकादश मद्यानि विद्यात्। एतानि मद्यान्युत्पत्त्यादि ब्राह्मणानां तत्स्त्रीणां चानुपनीतानां कन्यायाश्चापेयानि क्षत्रवैश्ययोर्न दुष्यति मद्यम्॥**

ग्रहणे नद्यादिरजोदोषाभावः

**[3]चन्द्रसूर्यग्रहे च रजोदोषो नास्ति॥**

## रेणुकारिका:

यथाशास्त्रमापद्धर्मस्वीकारः अनापदि तत्त्यागश्च

**[4]ये ये विशेषा बहवो यत्र यत्रोपदर्शिताः।**
**कुशलो न प्रसङ्गेन कुर्यादापत्सु**
**तदनम्(? तन्मतम्) (?)॥**
**विशेषात्सर्वशास्त्रेभ्यः प्रयत्नेनोपचारयेत्।**
**कर्मणे प्रविचारार्थमापत्सु च समाप्नुयात्(?)॥**
**आपत्कालेन यो धर्मं कुरुतेऽनापदि द्विजः।**
**स नाऽऽप्नोति फलं तस्य परत्रेति विचारितम्॥**

8 अत्र विवक्षितार्थप्रतिपत्तिः स्पष्टं न भवति। अयमत्र विवक्षितोऽर्थः — पैष्टी गौडी माध्वी चेति त्रिविधा सुरा। तत्र पैष्टी मुख्या, ब्राह्मणस्य तत्पाने दोषगौरवात् क्षत्रियवैश्ययोर्दोषाच्च। न तस्यां पारिभाषिकं मद्यत्वम्। गौडीमाध्व्यौ तु सुरे सत्यौ मद्यरूपे। तयोरत्र ग्रहणं सुरात्वप्रतिपादनार्थम्, अत्र पैष्टीपानस्यैव निषेध्यत्वात् मद्यत्वेन तत्पाननिषेधस्य वक्ष्यमाणत्वाच्च। अत एवात्र 'सुरां त्रैवर्णिकः' इत्यत्र सुराशब्दः पैष्टीपरः। अग्रे 'चातुर्वर्ण्यविवाहे' इत्यत्र चातुर्वर्ण्यत्वं विवाह्यस्त्रीनिष्ठम्, न तु वोढृनिष्ठम्, शूद्रव्यूढां शूद्रां प्रति पैष्टीपानानिषेधात्, अन्यथा शूद्रस्यानिषेधस्तत्पत्न्याश्च निषेध इति वैषम्यापातात्। स्त्रीनिष्ठमपि चातुर्वर्ण्यत्वं ब्राह्मणापेक्षम्, ब्राह्मणस्यैव चातुर्वर्ण्यस्त्रीभिर्विवाहात्। तच्च त्रिवर्णत्वद्विवर्णत्वयोरप्युलक्षणम्, पुरुषार्थशरीरत्वरूपनिषेधोद्देश्यताबीजस्य क्षत्रियव्यूढायां वैश्यव्यूढायां च शूद्रायामपि सत्त्वात्। उत्पत्त्यादीति। जन्मत इत्यर्थः। एतच्च त्रैवर्णिकविषयम्, न शूद्राविषयम्, असंभवात्।

(१) **स्मृसार.** १०६.
(२) **स्मृसार.** १०७.
(३) **स्मृसार.** १५५.
(४) **रेका.** (अग्नि.) २७।४६-४९.

## अनिर्दिष्टकर्तृकवचनानि

ब्राह्मणहत्यानिषेधः, ब्राह्मणस्य निष्कारणं वेदाध्ययनविधिः, सुरापानमद्यव्यवहारनिषेधः संतोषक्षमादिगुणविधिश्च

[1]**ब्राह्मणो न हन्तव्यः॥**

[2]**ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयः॥**

[3]**ब्राह्मणेन सुरा न पेया॥**

[4]**मद्यविक्रयसंधानदानादानानि नाऽऽचरेत्॥**

[5]**अकृत्वा देवकार्याणि न कुर्वीताऽऽत्मसत्क्रियाम्।**
**संतुष्टाश्च क्षमायुक्ता भवेयुरविकत्थनाः॥**

अविकत्थनाः आत्मश्लाघारहिताः।

आत. ४००

[6]**नित्यं नैमित्तिकं चैव कर्म कुर्वन्नतन्द्रितः।**
**निषिद्धं वर्जयन्धीमानिहामुत्र सुखी भवेत्॥**

सर्वाश्रमिणां तीर्थयात्राविधिः

[7]**ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा।**
**तीर्थयात्रां प्रकुर्वीत स्वर्गमोक्षफलाप्तये॥**

श्रौतस्मार्तागमोक्तधर्माः सर्वद्विजसाधारणाः, विप्रस्य तु श्रौतः प्रशस्यतरः

[8]**श्रौतस्मार्तागमं चेति द्विजानां तु त्रयं भवेत्।**
**श्रौतार्चनं तु विप्राणां विशेषेण भवेत्तदा॥**
**स्मार्तागमार्चनं क्षत्रे वैश्ये केवलमागमम्।**
**तस्माद्देवार्चने श्रौतं विप्रस्यैव तदुच्यते॥**

सुजनसंगतिदुर्जनत्यागविधिः, सुजनदुर्जनलक्षणानि

[9]**सुजनैः संगतं कुर्याद्धर्माय च सुखाय च॥**

(१) **मेधा.** २।६, २४, ४।२०४.
(२) **मेधा.** २।१६५, स्मृत्यन्तरम् : ३।१; **मभा.** ८।६ (साङ्गो वेदोऽध्येतव्यः) स्मृत्यन्तरम्.
(३) **मेधा.** २।६ (ब्राह्मणेन०) : २।२५ : ४।२०४ (ब्राह्मणेन०).
(४) **अप.** १।१५४ पृ. २२७ स्मृत्यन्तरम्.
(५) **आत.** ४०० दानधर्मे विष्णुं प्रति नारदवाक्यम्.
(६) **मुक्ता.** ४६७ चन्द्रिकायाम्; **आन.** ६५५ चन्द्रिकायाम्.
(७) **आपा.** १८४ मन्त्रराजानुष्टुब्विधाने.
(८) **विपा.** ३।२।७२७.
(९) **इन्दु.** ३४३.

[1]**बुद्धिविद्यायशःशीलधैर्यस्मृतिसमन्वितान्।**
**त्यागविज्ञानसत्त्वाढ्यान्महापक्षान्प्रियंवदान्॥**
**वृद्धोपसेविनः स्निग्धान्स्वभावज्ञान् गतव्यथान्।**
**सुमुखान्सर्वभूतेषु प्रशान्ताञ्छंसितव्रतान्॥**
**धीरान्सन्मार्गनिरतान्पुण्यश्रवणदर्शनान्।**
**सद्वंशजातानद्वेष्यान्सहायान् परिकल्पयेत्॥**

अत्र सुजनानाह स एव – बुद्धिविद्येति।

इन्दु. ३४४

**पापवृत्तवचःसत्त्वान्सूचकान्कलहप्रियान्।**
**धर्मोपहासिनो लुब्धांश्चपलान् रिपुसेविनः॥**
**परापवादनिरतान्परवृद्धौ द्विषः खलान्।**
**पाखण्डिनो विकर्मस्थान् बैडलव्रतिनः शठान्॥**
**लोकभूपतिविद्विष्टान्निर्घृणान्धर्मदूषकान्।**
**हेतुकान्बकवृत्तींश्च दुर्जनान्दूरतस्त्यजेत्॥**

अत्र दुष्टानाह स एव – पापवृत्तेति।

इन्दु. ३४४

स्त्रीशूद्रयोः शिवकेशवस्पर्शनिषेधः

[2]**केशवं वा शिवं वाऽपि स्पृष्ट्वा नरकमश्नुते॥**

यत्तु पूर्वं सूतसंहितायां पूजनं स्पर्शनं चोक्तं तत्स्वकृतपार्थिवादिविषयम्। यत्तु 'केशवं वा....' इति निषेधः सोऽन्यस्थापितपरः स्थावरपरो वा।

संम. ८१

अब्राह्मणायोच्छिष्टदानस्य निषेधः

[3]**नाब्राह्मणायोच्छिष्टं प्रयच्छेत्॥**

(१) एतत्तु दास(?अदास)विषयम्। गृहस्थशूद्रविषयमित्यन्ये। गौमि. १०।६१

(२) यत्तु 'नाब्राह्मणायो....' इति, एतददासविषयम्, गृहस्थशूद्रविषयमित्यन्ये। *शूशि. ३४

शूद्रस्य द्विजशुश्रूषातिरिक्ततपस्यनधिकारः मन्त्रानधिकारश्च

[4]**स्वस्यायोग्यक्रियायुक्तो यदि शूद्रस्तपश्चरेत्।**
**कृतं तेन तपस्तस्य नरकायैव कल्पयेत्॥**

* मुक्ता. शूशिवत्।
(१) **इन्दु.** ३४४ वैद्यः.
(२) **संम.** ८१.
(३) **गौमि.** १०।६१; **शूशि.** ३४; **मुक्ता.** ६७.
(४) **आपा.** २३४.

द्विजातीनां सदा शूद्रः शुश्रूषक इति स्मृतः।
शुश्रूषैव तपस्तस्य नान्यच्छन्दसि भाषितम्॥
[1]शूद्रोऽमन्त्रेण गृह्यते॥

द्विजशुश्रूषादानपाकयज्ञादयः
शूद्रधर्माः

[2]वर्णत्रयस्य शुश्रूषां कुर्याच्छूद्रः प्रयत्नतः।
दासवद्ब्राह्मणानां तु विशेषेण समाचरेत्॥
अयाचितप्रदाता स्यात्कृषिं वृत्त्यर्थमाश्रयेत्।
पाकयज्ञविधानेन यजेद्देवानतन्द्रितः॥
शूद्राणां मासिकं कार्यं वपनं न्यायवर्तिनाम्।
धारणं जीर्णवस्त्रस्य विप्रस्योच्छिष्टभोजनम्॥
स्वदारनिरतश्चैव परदारविवर्जनम्।
पुराणश्रवणं विप्रात्कुर्याद्देवार्चनं तथा॥
तथा विप्रनमस्कारं तस्य शस्तं दिने दिने।
सत्यसंभाषणं चैव रागद्वेषविवर्जनम्॥
इत्थं कुर्यात्सदा शूद्रः स्थानमैन्द्रं स गच्छति॥
[3]केवलं शूद्रजातिस्तु आगमोक्तं समाचरेत्।
इतरेषां च सर्वेषां तूष्णीमाचार उच्यते॥

मृतगुरुकस्य शिष्यस्य गुरुपर्वणि
कृत्यम्

[4]गुरौ शरीरं संत्यज्य परलोकं गते सति।
कार्या परोक्षा शुश्रूषा शिष्येण स्वाभिवृद्धये॥
गुरोः प्रयाणसमये शिष्यास्तत्पार्श्वतः स्थिताः।
तदा केशान्वपेयुस्ते श्रुत्वा दूरे स्थिता यदा॥
तदा तस्य सुतैः सार्धं प्रकुर्युस्तर्पणादिकम्॥
तदा पृथक् पृथक् पूजां प्रकुर्युः शंकरस्य च।
सद्भक्त्या गुरुसंप्रीत्यै समृद्धौ विभवैः सह॥
समुदीकृत्य कुर्वीरन्ने(? समुदेत्य प्रकुर्वीरन्ने)
कस्मिन् दिवसेऽधनाः।
ततः प्रतिसमं शिष्या गुरुपर्वविधिं सदा।
पृथक् पृथक् प्रकुर्वीरंस्तदर्थं तीर्थसेवनम्॥
प्रतिसमं प्रतिसंवत्सरम्। आपा. २३३

यस्मिन्मासे तिथौ यस्यां मुमोच स्वतनुं गुरुः।
तत्तिथि(?थे)र्गुरुपर्वेति नामधेयं भविष्यति॥
विप्रान्भक्त्या च शिष्यः स्वगुरुपर्वणि भोजयेत्।
..... परमान्नेन घृतापूपोपदंशकैः॥
विप्रा एकादश श्रेष्ठं दश मध्यं नवाधमम्।
यथाशक्त्या यथालाभं संभोज्या गुरुपर्वणि॥
शान्ताः सच्छीलवन्तश्च श्रोत्रियाः शिवपूजकाः।
गुर्वर्थं भोजने योग्या एते नैवेतराः(?तरे) स्मृताः॥
पूर्वरात्रे द्विजान् शक्त्या गत्वा तत्तद्गृहं प्रति।
हस्ते तु दत्त्वा ताम्बूलं भक्त्या शिष्यो निमन्त्रयेत्॥
कृतनित्यक्रियः शिष्यः कृतनित्यक्रियान् द्विजान्।
निमन्त्रिताना(?नथाऽऽ)हूय स्थापयेदासने दिने(?)॥
ततः शुद्धप्रदेशे तु गोमयालिप्तमण्डले।
गन्धपुष्पाक्षततिलैः सकुशैरपि पूजिते॥
तिष्ठतः प्राङ्मुखस्याऽऽदावेकस्य चरणद्वये।
गन्धाद्यम्भोञ्जलिं दद्याद्द्विजस्य प्रत्यगाननः।
ततः प्रक्षालयेत्तद्वदन्यान्विप्रान्यथाक्रमात्॥
ततस्तु भोजनस्थाने शुचावतिमनोहरे।
प्राङ्मुखान्स्थापयेदेतानासनेषु यथाक्रमात्।
अथवोदङ्मुखान्वाऽपि स्थापयेन्नान्यदिङ्मुखान्॥
वस्त्रोर्णुकाभ्यां गन्धाद्यैः समृद्धः पूजयेत्ततः।
असमृद्धो यथाशक्ति भक्त्या सह समर्चयेत्॥
पायसापूपसर्पिर्भिर्दध्ना चान्योपदंशकैः।
स्वखण्डैर्भोजयेद्विप्रानथाऽऽचान्तेषु पद्मज॥
ताम्बूलमुत्तमं दत्त्वा यथाशक्त्या च दक्षिणाम्।
नत्वा क्षमध्वमिति तान्वदेत्....॥
गुर्वर्थमेवं (यः) शिष्यः (त्र)कुर्याद्द्विजभोजनम्।
सर्वपापविनिर्मुक्त इहामुत्र सुखी भवेत्॥
विप्राभावे महादेवं तदर्थं संप्रपूज्य च।
विप्रार्थपाक(?कं सक)लं तस्मै प्रीत्या निवेदयेत्॥
यावच्छिष्योऽवनौ जीवेत्समृद्धो गुरुपर्वणि।
तावद्भक्तिमतो विप्रान् भोजयेत्प्रतिवत्सरम्॥

सर्ववर्णगुरुत्वं ब्राह्मणस्यैव

सर्वेषामेव वर्णानां गुरुर्विप्र उदाहृतः।
पतितोऽपि वरो विप्रो न हि शूद्रो जितेन्द्रियः।
कः परित्यज्य गां दुष्टां खरीं शीलवतीं दुहेत्॥

(१) मच. २।१७२ स्मृतिः.
(२) सस्मृ. १०१-१०२ धर्मसंहितायाम्.
(३) सस्मृ. १९० संताने.
(४) आपा. २३३-२३४ क्रियासारे.

शूद्रस्य द्विजशुश्रूषा धर्मः तपस्यनधिकारश्च, ब्राह्मणस्य शूद्रान्मन्त्रग्रहणे शूद्रप्रशंसायां च दोषः

**स्वस्यायोग्यक्रियायुक्तो यदि शूद्रस्तपश्चरेत्।**
**कृतं तेन तपस्तस्य नरकायैव कल्पयेत्॥**
**द्विजातीनां सदा शूद्रः शुश्रूषक इति स्मृतः।**
**शुश्रूषैव तपस्तस्य नान्यच्छन्दसि भाषितम्॥**
**शूद्रे किं(?द्रात् क)मपि मन्त्रं यो द्विजो गृह्णाति यद्यपि।**
**स शूद्र इति वक्तव्यो न तु ब्राह्मणसंज्ञकः॥**
**ततः शूद्रस्य शीलं च विस्मयं ......।**
**यः शंसति द्विजस्तस्य नरके पतनं ध्रुवम्॥**

शूद्रस्य नादरहितमन्त्रैर्नित्यपूजायामधिकारः

**[1]शूद्रस्यापि गृहस्थस्य नित्येष्टावधिकारिता।**
**तत्रापि नादरहितैर्मन्त्रैरेव तु पूजयेत्॥**

वर्णभेदेन वैदिकतान्त्रिककर्माधिकारभेदः बलभेदश्च

**[2]वैदिकं ब्राह्मणानां स्याद्राज्ञां वैदिकतान्त्रिकम्।**
**तान्त्रिकं वैश्यशूद्राणां स्त्रीणामपि च तान्त्रिकम्॥**
**[3]क्षत्रियाणां बलं धैर्यं ब्राह्मणानां बलं श्रुतिः।**
**शूद्राणां बलमाचारो वैश्यानां तु बलं धनम्॥**

निन्दानिकृत्यार्जवानां फलानि, अगम्या देशाः

**[4]निन्दा मृत्युपदं ज्ञेयं निकृतिस्तमसः पदम्।**
**सर्वभूतात्मभूतत्वादार्जवं ब्रह्मणः पदम्॥**
**अन्तःपुरं वित्तगृहं परद्रोहिगतं(?गृहं) तथा।**
**न गच्छेद्बन्धनागारं वध्यभूमिं च गर्हिताम्॥**

(१) सस्मृ. १६७ कामिके.
(२) मुक्ता. ३९० स्मर्यते; आन. २८५ स्मृतेः.
(३) सस्मृ. १३१ नीतिसारे.
(४) मुक्ता. ४६४.

धनादीनां रक्षणीयत्वम्, व्याध्यादीनामनुपेक्षणीयत्वम्, बिभीतकादिच्छायानामनाश्रयणीयत्वम्, गोपुच्छादिजलविप्रुषां त्याज्यत्वम्

**[1]गोपायेज्जन्मनक्षत्रं धनमायुर्गृहं बलम्।**
**वेगरोधो न कर्तव्यस्त्वन्यत्र क्रोधवेगतः॥**
**नोपेक्षितव्यो व्याधिः स्यान्मृदुरल्पोऽपि वा नृणाम्।**
**[2]बिभीतककपित्थार्कस्नुहिच्छायां न चाऽऽश्रयेत्।**
**स्तम्भदीपमनुष्याणामन्येषां प्राणिनां तथा॥**
**[3]गोगजाश्वाजपुच्छेषु मुखेषु च विशेषतः।**
**यल्लग्नमुदकं तस्य विप्रुषो दूरतस्त्यजेत्॥**

अन्तरागमननिषेधः

**[4]गोविप्रयोर्ब्राह्मणाग्न्योर्दंपत्योर्गुरुशिष्ययोः।**
**अन्तरेण न गच्छेत्तु हरस्य वृषभस्य च॥**

विशिष्टोऽनृतवादः

**[5]परप्राणोपघातार्थं परद्रव्यापहारतः।**
**विशिष्टोऽनृतवादस्तु न वृथाकथनादिषु॥**

पूर्तदानाहिंसासु सर्ववर्णाधिकारः

**[6]सर्वेषामेव वर्णानां पूर्ते दानेऽप्यहिंसने॥**

किं च 'सर्वेषामेव..... हिंसने' इति धर्मविवृतिवचनात्पूर्तादावेषां साक्षादधिकारो बोध्यः। अमन्त्रकवस्त्रहिरण्यादिदाने चण्डालादीनामपि। अत एव 'अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः। दानं दमो दया शान्तिः सर्वेषां धर्मसाधनम्॥' (यास्मृ. १।१२२) इति मूलवाक्यं ब्राह्मणादिचण्डालान्तसाधारण्येन व्याख्यातम्। पूर्तपदार्थमाह जातुकर्ण्यः — 'वापीकूपतडागादि देवतायतनानि च। अन्नप्रदानमारामः पूर्तमित्यभिधीयते॥', 'बहिर्वेदि च यद्दानं तत्पौर्तिकमुदाहृतम्।' इति स्मृत्यन्तरं चेति दिक्।

बाल. १।१२१ पृ. ३८२

(१) मुक्ता. ४६४ गोपा (गोप) गृहं (गृहि) अपरार्के; आन. ६५२ प्रथमार्धमात्रम्।
(२) मुक्ता. ४६४ अपरार्के; आन. ६५२ पू.
(३) मुक्ता. ४६४ अपरार्के.
(४) मुक्ता. ४६५ धर्मसारे; आन. ६५२ धर्मसारे.
(५) निप्र. २।५००.
(६) बाल. १।१२१ पृ. ३८२ धर्मविवृतिवचनम्.

म्लेच्छशब्दासाधुशब्दोच्चा-
रणनिषेधः

[1]साधुभिर्भाषेत। न म्लेच्छितवै नापभाषितवै।
म्लेच्छो ह वा एष यदपशब्दः॥

विषयविशेषेष्वनृत-
वचनानुज्ञा

[2]स्त्रीषु नर्म विवाहे च वृत्त्यर्थे प्राणसंकटे।
गोब्राह्मणार्थे हिंसायां नानृतं स्याज्जुगुप्सितम्॥

स्त्रीष्वनृतं नर्मेत्याद्य(?र्मेत्य)न्वयः। हिंसायां गो-ब्राह्मणहिंसायां प्रसक्तायां गोब्राह्मणजीवनार्थे। यद्वा गोब्राह्मणार्थे तज्जीवनार्थे हिंसायां हिंसासामान्ये (वा?)।

कृभ. २२३

[3]असत्यमपि वक्तव्यं गोब्राह्मणहिताय च।
सत्यादपि हि तत्सत्यं न सत्यं सत्यमुच्यते॥

स्तेयनिषेधः

परमापद्गतेनापि न कार्यं स्तेयकर्म हि।
स्तेयादप्यधिकः कश्चिन्नास्त्यधर्म इति स्मृतिः॥

देवर्षिपितृनामोच्चारणनिषेधः

[4]देवर्षिपितृनामानि न कीर्तयेत्॥

रोगयुक्तादिषु नित्यकर्महानौ
पापाभावः

[5]अत्यन्तरोगयुक्तेऽङ्गे राजचौरभयादिषु।
गुर्वग्निदेवकृत्येषु नित्यहानौ न पापभाक्॥

शमप्रशंसा

[6]ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथ भिक्षुकः।
सर्व एव शमेनैव प्राप्नुवन्ति परां गतिम्॥

अनिर्णिक्तपादस्याप्रवेश्यानि

[7]जलं देवगृहं चैव शयनं च द्विजालयम्।
निर्णिक्तपादः प्रविशेन्नानिर्णिक्तः कथंचन॥

(१) शूशि. ४३; बाल. १।१२१ पृ. ३७९.
(२) कृभ. २२३.
(३) यसं. ३३.
(४) निप. ३६.
(५) पमा. १।१२९ शैवागमे; आभू. ३६० चौर (चोर) पाप (दोष) शैवागमे; संदी. १।२ चौर (चोर) माधवीयोक्तिः.
(६) यसं. १४२.
(७) मुक्ता. २५९ माधवीये.

उपकारव्यापृतस्याकस्मादपकारनिष्पत्तौ
न दोषः

[1]उपकारप्रवृत्तानां कथंचिच्चेद्विपर्ययः।
न तत्र दोषः केषांचिद्वे(?द्वि)बजामौषधी यथा॥

अत्र न केवलं वैद्यादेरातुरोपकारार्थिनः प्रयुक्तौषधस्य कथंचिद्विपरीततयोप(?या व्या)पत्तावदोषः, किं तर्हि? अन्यस्यापि गवादेर्महति पङ्के निमग्नस्योद्धर्तुर्भुजाकर्ष-णाय यथाश्रमेण(?) यदि व्यापत्तिर्न तत्रोद्धर्ता दुष्येदिति कथितं भवति। एवं सर्वत्र।

मेधा. ८।१०४ पृ. १२०

मद्यपानेन पातित्यम्

[2]पानात्पतितो भवेत्॥

आपद्धर्मोऽपि प्रत्यवाय-
कारणम्

[3]आपत्कल्पं द्विजः कृत्वा प्रायश्चित्तं पुनश्चरेत्॥

ग्रहणादिनिमित्तकदानानां
पूर्तत्वम्

[4]ग्रहोपरागे यद्दानं सूर्यसंक्रमणेषु च।
बहिर्वेद्यां च यद्दानं तत्पौर्तिकमुदाहृतम्॥

शूद्रधर्मः शुश्रूषा

[5]श्रुता शुश्रूषया निष्ठा सर्वशास्त्रेषु दर्शनात्।
शूद्राणां वृत्तयो वाच्याः श्रुत्यर्थैरागमादिकैः॥

चण्डालस्य दूरतः
परिहार्यत्वम्

[6]चण्डालमागोवालव्यजनात्परिहरेत्॥

ब्राह्मणस्य मद्यपान-
निषेधः

[7]न मद्यं ब्राह्मणः पिबेत्॥

(१) मेधा. ८।१०४ पृ. १२०.
(२) भाच. ५।५६.
(३) संम. ५१.
(४) शूक. ४३ हेमाद्रौ मदनरत्ने च स्मृत्यन्तरे.
(५) सस्मृ. ११७ सिद्धान्तबोधे.
(६) मभा. ४।२८ त्परिहरेत् (द्व्रच्छेत्), स्मृत्यन्तरम्; गौमि. ४।२३ मागो (माजगो) नात्प (नान्प), स्मृत्यन्तरम्.
(७) संर. ६३३.

सुरापाननिषेधस्य जाति-
प्रयुक्तत्वम्

**[१]सुरापाननिषेधस्तु जात्याश्रय इति स्थितिः॥**

नित्यादिकर्मसु ग्रहणवेध-
दोषाभावः

**[२]नित्ये नैमित्तिके जप्ये होमे यज्ञक्रियासु च।**
**उपाकर्मणि चोत्सर्गे ग्रहवेधो न विद्यते॥**

(१) पर्वणि ग्रहणे सति पूर्वं त्रिरात्रादिवेधाभाव उक्तः प्रयोगपारिजाते – नित्ये इति। प्रथमारम्भस्तु न भवति।

गभा. २७५

(२) इदमपि प्रारब्धनित्यकर्मविषयम्।

εविपा. ३।२।४७४

ग्रहणादिषु सूतकाभावः

**[३]अम्बुमध्ये गवां गोष्ठे तीर्थेष्वपि च पर्वसु।**
**राहोर्दर्शनकाले च सूतकं नैव विद्यते॥**

सूतकमिति मृतकस्यापि उपलक्षकम्। इदं च शीघ्रमन्यत्र गमनसंभावनायां दानादिविषये द्रष्टव्यम्।

विपा. ३।२।८४८-८४९

नक्षत्रविशेषेषु ग्रहणस्य
दर्शननिषेधः

**[४]जन्मर्क्षे जन्मनक्षत्रे सप्तमे चाष्टमे तथा।**
**चतुर्थे द्वादशे चन्द्रे न कुर्याद्राहुदर्शनम्॥**

एतद्दोषभीत्या सूर्ये च स्नातकव्रतभङ्गभीत्या स्वयमदर्शनेऽपि स्नानादावधिकारः।

निप्र. २।६८६

ग्रस्तचन्द्रास्तमने मोक्षस्नानादिकालविधिः

**+[५]यदैवास्तंगतश्चन्द्रो राहोराननगोचरः।**
**आकलय्य तु तं कालं क्रिया कार्या विचक्षणैः॥**

ε शेषं गभागतम्।

+अस्य कृभव्याख्यानं अनिर्दिष्टकर्तृके 'मेघमालादि' इति वचने (वका. पृ. १९१२) द्रष्टव्यम्।

(१) **गप.** ४०८ स्मृत्यन्तरम्.

(२) **प्रपा.** २४७ स्मृत्यन्तरे; **गभा.** २७५ होमे य (होमय) प्रयोगपारिजाते; **विपा.** २।५१३ जप्ये (जाप्ये) शेषं गभावत्, स्मृत्यन्तरे, ३।२।४७४ जप्ये (जाप्ये).

(३) **विपा.** ३।२।८४८.

(४) **निप्र.** २।६८६ ज्योतिःशास्त्रे.

(५) **कृभ.** ३१२.

उपोषणग्रहणदर्शनपूर्वकस्नान-
श्राद्धफलविधिः

**[१]एकरात्रमुपोष्यैव राहुं दृष्ट्वाऽक्षयं नरः।**
**पुण्यमाप्नोति कृत्वा च स्नानश्राद्धे विधानतः॥**

'एकरात्र०' इति वाक्येन उपवासदर्शनोभयपूर्वकस्नानश्राद्धे विधाय तत्राक्षयपुण्यरूपफलसंबन्धो बोधनीयः, न तूपवासदर्शनयोस्तादृशफलसंबन्धः, बहुषु वचनेषु स्नानश्राद्धयोरेव फलसंबन्धश्रवणात्। दर्शनोपवासयोस्त्वफलत्वादङ्गतया विधिरस्तु।

कृभ. ३०७

ग्रहणनिमित्तककर्मसु सूतकादि-
दोषाभावः

**[२]न सूतकादिदोषोऽस्ति ग्रहे होमजपादिषु।**
**ग्रस्ते स्नायादुदक्याऽपि तीर्थादुद्धृतवारिणा॥**

रजस्वलायास्तु भार्गवार्चनदीपिकायां सूर्योदयनिबन्धे – 'न सूतकादि०' इति। अत्र – 'स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला। पात्रान्तरिततोयेन स्नानं कृत्वा व्रतं चरेत्॥' इति मिताक्षरोक्तो विधिर्ज्ञेयः।

$सिन्धु. २९५

**+[३]स्नानमात्रं प्रकुर्वीत दानश्राद्धविवर्जितम्॥**

अमन्त्रकस्नाननिमित्तानि

**[४]अन्त्येष्ट्यां शवचाण्डालस्पर्शने खरकाकयोः।**
**राहुग्रस्ते विमुक्ते वा कुर्यात्स्नानममन्त्रकम्॥**

ज्योतिर्निबन्धे तु – 'अन्त्येष्ट्याम्०' इति वचनेन राहूपरागनिमित्तकस्नानेऽप्यमन्त्रकत्वमुक्तम्। एवमपि 'नित्यं नैमित्तिकम्' इत्यादिब्रह्मपुराणवचनोक्तं तर्पणं तु भवत्येव।

आप्र. २००-२०१

सूर्यग्रहणे तीर्थभेदेन स्नानफलभेदः

**[५]कोटिजन्मकृतं पापं पुरुषोत्तमसंनिधौ।**
**कृत्वा सूर्यग्रहे स्नानं विमुञ्चति महोदधौ॥**

$ विपा. सिन्धुवत्।

+ अस्य सिन्धुव्याख्यानम्, अङ्गिरसः 'सर्वे वर्णाः०' इति (वका. पृ. १८०१) श्लोके द्रष्टव्यम्।

(१) **कृभ.** ३०७.

(२) **सिन्धु.** २९५ दृधृतवा (दृधृत्य वा) भार्गवार्चनदीपिकायां सूर्योदयनिबन्धे; **विपा.** ३।२।४६८ सूर्योदयनिबन्धोक्तिः.

(३) **सिन्धु.** २९४.

(४) **आप्र.** २०१ ज्योतिर्निबन्धे.

(५) **निप्र.** २।६८७ शिष्टाः पठन्ति.

**दशजन्मकृतं पापं स्नानान्नश्यति पुष्करे।**
**शतजन्मकृतं पापं गङ्गासागरसंगमे॥**
**जन्मान्तरसहस्रेण यत्पापं समुपार्जितम्।**
**तत्सर्वं संनिहत्यायां राहुग्रस्ते दिवाकरे॥**

सं(नि)हत्या कुरुक्षेत्रे तीर्थम्।

निप्र. २।६८७

ग्रहणस्पर्शमध्यमोक्षकालकृतकर्मभिर्देव-
पितृराक्षसानां तृप्तिर्यथाक्रमम्

[1]**त्रिदशाः स्पर्शसमये तृप्यन्ति पितरस्तथा।**
**मनुष्या मध्यकाले तु मोक्षकाले तु राक्षसाः॥**

यत्तु स्मर्यते — 'त्रिदशाः०' इति, तद्ग्रहणे स्नानादिना सर्वेषां तृप्तिरित्येवंपरम्, न तु मोक्षकालनिषेधपरम्, 'मुक्तिकाले त्वनन्तकम्' इति स्मरणात्। ⇧मुक्ता. २७३

ग्रहणभागभेदेन स्नानहोमादि-
विधानम्

[2]**ग्रस्यमाने भवेत्स्नानं ग्रस्ते होमो विधीयते।**
**मुच्यमाने भवेद्दानं मुक्ते स्नानं विधीयते॥**

(१)आद्यन्तयोः स्नानं विहितं कालनिर्णये — ग्रस्यमाने इति। +मुक्ता. २७३

(२)अत्र अनुष्ठेयक्रमो दर्शितो माधवीये — ग्रस्यमाने इति। विपा. ३।२।४६४

[3]**ग्रस्यमाने रवौ स्नायान्मुच्यमाने निशाकरे॥**

ग्रस्तास्तमनोत्तरं भोजनकालः

[4]**मुक्तिं दृष्ट्वा परेऽह्न्यद्याद् ग्रस्तास्तमितयोस्तयोः॥**

अत्र 'परेऽह्न्यद्यात्' अस्य पूर्वदिनभोजननिषेधपरत्वे त्रिदोषा परिसंख्या स्यात्। न हि तत्र निषेधान्तरमस्ति येन 'सदृशं प्रतिवीक्षेत' इतिवदनुवादः स्यात्। तेन मुक्तिं दृष्ट्वा इति शास्त्रतो ज्ञात्वा अपरेऽहनि रात्रौ वाऽश्नीयादित्यर्थः। तेन ग्रहणकाले च नाश्नीयादित्युक्तनिषेधस्यैवानुवादः, दृष्ट्वेति प्रत्यक्षदर्शनाभिधानात्। परिसंख्याङ्गीकारेऽपि 'आदित्येऽहनि संक्रान्तौ ग्रहणे चन्द्रसूर्ययोः। पारणं चोपवासं च न कुर्यात् पुत्रवान् गृही॥' इति निषेधात् गृहस्थस्यायुक्तम्। यत्तु 'अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः। अहोरात्रोषितः स्नात्वा सर्वपापैः प्रमुच्यते॥' इति, तत् गृहस्थेतरविषयम्।

निप. ११७-११८

ग्रहणे अभ्यङ्गस्नाननिषेधः
तदपवादश्च

[1]**सप्तमीनवमीदर्शसंक्रान्तिग्रहणेषु च।**
**धात्रीफलस्य कल्केन तैलस्नानं च नाऽऽचरेत्॥**

[2]**द्रव्यान्तरयुतं तैलं न दुष्येद्ग्रहणं विना।**
**तुलसीदलसंयुक्तं ग्रहणेऽपि न दुष्यति॥**

मलमासेऽपि ग्रहणस्नानश्राद्धादीनां
कर्तव्यता

[3]**चन्द्रसूर्यग्रहे स्नानश्राद्धदानजपादिकम्।**
**कार्याणि मलमासेऽपि नित्यं नैमित्तिकं तथा॥**

ग्रहणे रात्रिस्नानानुमतिः

[4]**राहुपर्वणि विवाहकर्मणि**
**स्थापने दिविषदां सुतोत्सवे।**
**संक्रमे व्रतविधौ न निन्दिता**
**स्नानदानविषये विभावरी॥**

ग्रस्तास्तमनोत्तरभोजनकालः

[5]**तयोः परेद्युरुदये दृष्ट्वाऽभ्यवहरेच्छुचिः॥**

ग्रहणदोषाभाववन्तः
पदार्थाः

[6]**आरनालं पयस्तक्रं दधि स्नेहाज्यपाचितम्।**
**मणिकस्थोदकं चैव न दुष्येद्राहुसूतके॥**

---

⇧ आन. मुक्तावत्।

\+ आन, सिन्धु., यप्र. मुक्तावत्।

(१) **मुक्ता.** २७३ स्मर्यते; **आन.** २४१ स्मर्यते.

(२) **मुक्ता.** २७३ कालनिर्णये; **सिन्धु.** २८८ हेमाद्रौ; **विपा.** ३।२।४६४ माधवीये; **यप्र.** ६९ द्वितीयचरणे (मध्ये होमः सुरार्चनम्) इत्यपि पाठान्तरं निर्दिशति, स्मृत्यन्तरम्; **आन.** २४० भवेत्स्ना (रवौ स्ना) कालनिर्णये; **आभू.** ३९६ माधवीये.

(३) **मुक्ता.** २७३ स्मृत्यन्तरे.

(४) **निप.** ११७.

(१) **मुक्ता.** २८३ कालादर्शे.

(२) **मुक्ता.** २८५ स्मृत्यन्तरे.

(३) **कृम.** ६१.

(४) **संग.** २२६ ज्योतिर्निबन्धे.

(५) **सिन्धु.** ३०८, ३११.

(६) **सिन्धु.** २८५ भार्गवार्चनदीपिकायां ज्योतिर्निबन्धे मेधातिथिः; **सम.** ७८ स्नेहाज्य (तैलाज्य) सूतके (दर्शने).

**[1]अन्नं पक्कमिह त्याज्यं स्नानं सवसनं ग्रहे।**
**वारि तक्रारनालादि तिलदर्भैर्न दुष्यति॥**
**[2]आरनालं च तक्रं च ह्यादेयं घृतपाचितम्।**
**उदकं च कुशच्छन्नं न दुष्येद्राहुसूतके॥**

आरनालं काञ्जिकम्, घृतपाचितं द्रोणाढकादिमितं कठिनतरं वा बद्धपक्कान्नमिति वाक्यात्(?)।

कृभ. २८६

**[3]जले घृते तथा तैले संधाने गोरसेषु च।**
**कुशान्तरायं कुर्वीत ग्रहणे चन्द्रसूर्ययोः॥**

ग्रहणशिष्टान्नत्यागः

**[4]एकोद्दिष्टे च यद्भोक्तुरभोज्यं शिष्टमोदनम्।**
**चन्द्रसूर्योपरागे च शिष्टमन्नं विवर्जयेत्॥**

ग्रहणदिवसे भोजनकालनियमः

**[5]सायाह्ने संगवेऽश्नीयाच्छारदे संगवादधः।**
**मध्याह्ने परतोऽश्नीयान्नोपवासो रविग्रहे॥**

शारदः अपराह्णः। ⇧सिन्धु. २८७

**[6]मेघमालादिदोषेण यदि मुक्तिर्न दृश्यते।**
**आकलय्य तु तं कालं स्नात्वा भुञ्जीत वाग्यतः॥**

(१)परदिने तूदयकाले मेघाच्छादने 'मेघकालादि०' इति वाक्याद्दर्शनाभावेऽपि शास्त्रान्निश्चित्य भोजनमिति। निप्र. २।६८६

(२)दर्शनं मुक्तिस्नानाधिकारसंपादकमिति निरस्यति — मेघेति। तं कालमित्यस्य मुक्तिकालमित्यर्थः। 'यदैवास्तंगतश्चन्द्रो राहोराननगोचरः। आकलय्य तु तं कालं क्रिया कार्या विचक्षणैः॥' इत्यादिवचनेष्वेव तं कालमित्यस्य चन्द्रोदयकालमित्यर्थः, अन्यथा 'तयोः परेद्युरुदये' इत्यनेन विरोधात्।

कृभ. ३१२

**[1]ग्रस्तोदये विधोः पूर्वं नाहर्भोजनमाचरेत्।**
**✡विमुक्ते मण्डले रात्रौ स्नात्वा भुञ्जीत मानवः॥**
**[2]अर्धरात्रे व्यतीते तु यदा चन्द्रग्रहो भवेत्।**
**सायं तत्र न भुञ्जीत न तु प्रातरभोजनम्॥**
**[3]रात्रौ सूर्यग्रहः स्याच्चेद्दिवा चन्द्रग्रहस्तथा।**
**नाऽऽदेश्यमुभयं राज्ञे यत्र सूक्ष्मतमं भवेत्॥**

वपने मुखदिङ्नियमः

वपनप्रकारश्च

**[4]उदङ्मुखः प्राङ्मुखो वा वपनं कारयेत्सुधीः।**
**केशश्मश्रुलोमनखान्युदक्संस्थानि वापयेत्॥**
**[5]दक्षिणं कर्णमारभ्य धर्मार्थं पापसंचये।**
**शिखाद्यं नवसंस्कारे शिखाद्यन्तं शिरो वपेत्॥**

(१)वपनप्रकारश्चापरार्के — उदङ्मुख इति। धर्मार्थतीर्थादिवपने दक्षिणकर्णं उदक्संस्थं (कृत्वा) वापयेत्। पापसंचये पित्रादिमृतौ वा दक्षिणसंस्थं कृत्वा अथवा वामश्मश्रुवपनमादाविति(?)।

विपा. ३।२।७५९

(२)त्रिस्थलीसेतावपरार्के वपनक्रियायां विशेषो दर्शितः — उदङ्मुख इति। तीर्थादिवपने दक्षिणं कर्णमारभ्योदक्संस्थं वापयेत्। पापनिमित्तके शिखाप्रान्तदेशमादीकृत्याधस्तात्सर्वतो वपेत्, नोदक्संस्थम्। चूडाकरणादौ दक्षिणकर्णमारभ्य शिखान्तं शिखामारभ्य वामकर्णान्तं च वपेत्। यसं. ९९

---

⇧ विपा. सिन्धुवत्।

(१) **सिन्धु.** २८५ मन्वर्थमुक्तावल्याम्.

(२) **कृभ.** २८५.

(३) **कृभ.** २८५-२८६ स्मृत्यन्तरे.

(४) **मुक्ता.** ४४१; **आन.** ३७० च य (तु य).

(५) **सिन्धु.** २८७ स्मृतेश्चेति हेमाद्रिः; **विपा.** ३।२।४७३ हेमाद्रयुक्तिः.

(६) **निप्र.** २।६८६ (मेघकालादिदोषेण मुक्तयोरनवेक्षणे। आकालाख्यस्ततः कालं भुञ्जीत स्नानपूर्वकम्॥); **सिन्धु.** ३१२ गौडनिबन्धे; **कृभ.** ३१२ निर्देशमात्रम्.

✡एतदुत्तरार्धविषये आदर्शलिखितग्रन्थे त्रयः प्रमादाः संवृत्ताः। यथास्थानमिदं न लिखितमित्येकः प्रमादः। ततो यथास्थानं समावेशयितुं यत्र ग्रन्थपृष्ठे पूर्वार्धमस्ति तस्यैव समासेतिभाषाप्रसिद्धरिक्तभागे लेखनीयमपि तदुत्तरपृष्ठस्य रिक्तभागे लिखितमिति द्वितीयः प्रमादः। अथ तत्र संक्रान्तिविषयकवचनस्य पूर्वार्धात् परं समानचिह्नदानेन समावेशितमिति तृतीयः प्रमादः। तदिदमस्माभिरर्थानुरोधेनात्र समाकृष्टम्।

(१) **आन.** २४२.

(२) **कृर.** ६२७ ज्योतिःशास्त्रे.

(३) **कृभ.** ३१० गणकपाठः.

(४) **विपा.** ३।२।७५९ अपरार्के; **यसं.** ९९ त्रिस्थलीसेतौ अपरार्के; **यप्र.** ९६ त्रिस्थलीसेतावपरार्के; **संग.** ६२२ उत्त. अपरार्के.

(५) **विपा.** ३।२।७५९-७६० अपरार्के; **यसं.** ९९ **धर्मार्थ** (धर्मार्थे) त्रिस्थलीसेतौ अपरार्के; **यप्र.** ९६ सर्वं यसंवत्; **संग.** ६२२ संचये (संभवे) तृतीयचरणे (हन्वाद्यन्तं च संस्कारे) वपेत् (भवेत्) अपरार्के.

(३) पित्रादिमृतौ तु दक्षिणसंस्थायै वामकर्णमारभ्य वपेत्। +यप्र. ९६

[1]**यतिः शूद्रश्च विधवा सशिखं वपनं चरेत्॥**

इदं च वपनं यत्यादिभिः शिखामरक्षित्वैव कार्यम् — यतिरिति। इति स्मृतेः। विपा. ३।२।७६०

क्षौरे नक्षत्रादिविधानम्

[2]**पौष्णाश्वितिष्यवसुवासववासुदेव-**
**वातार्कचन्द्रवरुणादितिचित्रभेषु।**
**वारेषु सौम्यबुधवाक्पतिभार्गवाणां**
**क्षौरं हितं शुभफलं शुभतारकासु॥**

[3]**पुष्ये पौष्णे चाश्विनीष्वैन्दवे च**
**शाक्रे हस्ताद्यत्रिके भेऽप्यदित्याः।**
**क्षौरं कार्यं वैष्णवादित्रये च**
**मुक्त्वा भौमादित्यपातङ्गिवारान्॥**

राज्ञां श्मश्रुकर्मणोऽवान्तरकालः

[4]**पञ्चमे पञ्चमे राज्ञां क्षौरभेऽस्योदयेऽथ वा।**
**श्मश्रुकर्म प्रकुर्वीत नवमे दिवसे तु न॥**

[5]**श्मश्रुकर्म पञ्चमे पञ्चमेऽह्नि भूभुजाम्।**
**क्षौरभस्य चोदये निन्द्यतारका न चेत्॥**

नृपक्षौरे विशेषः। तत्र श्रीपतिः — श्मश्रुकर्मेति। निन्द्यतारकाः जन्मत्रिपञ्चसप्तमताराः। संग. ६२४

अशुभर्क्षकृतक्षौरस्य शुभर्क्षे पुनःकरणम्, आहिताग्नेः प्रशस्तः क्षौरकालः

[6]**अशुभर्क्षे कृते क्षौरे क्षिप्रं कुर्यात्पुनः शुभे।**
**आहिताग्नेः पर्वदिने द्वादश्यां च प्रशस्यते॥**

पञ्चाशत्तमवर्षपर्यन्तं रागप्राप्तक्षौरस्य निषेधः तदूर्ध्वमैच्छिकत्वं च

[7]**पञ्चाशद्वायनात्पूर्वं क्षौरं नैमित्तिकं विना।**
**न कुर्यात् तत् तदूर्ध्वं तु स्वेच्छया वपनं चरेत्॥**

+ शेषं यसंवत्।
(१) **विपा**. ३।२।७६० स्मृतिः; **कृभ**. १७८३ स्मृतिः.
(२) **निप**. १७२-१७३.
(३) **पुम**. ४५६ श्रीपतिः.
(४) **आभू**. १४८ मुहूर्तमालायाम्.
(५) **संग**. ६२४ श्रीपतिः.
(६) **संग**. ६२३ कालविधाने.
(७) **संदी**. २।६३.

क्षौरे वर्ज्याः कालाः

[1]**जातं दिनं दूषयते वशिष्ठ-**
**स्त्वष्टौ तु गर्गश्च्यवनो दशाहम्।**
**जन्मादिमासं किल भागुरिश्च**
**व्रते विवाहे क्षुरकर्णवेधे॥**
**नन्दासु नाभ्यङ्गमुपाचरेत्क्षौरं च रिक्तासु॥**

[2]**क्षुरकर्म न कर्तव्यं चौलात्परमृतुत्रयम्।**
**तथोपनयनादूर्ध्वमुपाकर्म विना क्वचित्॥**

[3]**बीजानां वापनं क्षौरं वास्तुकर्म कृषिं तथा।**
**रात्रौ विप्रो न कुर्वीत कुर्वन्क्षिप्रं विनश्यति॥**
**चौलाब्दे च विवाहाब्दे ह्यौपनायनिके तथा।**
**मातापित्रोर्मृताब्दे च क्षौरं नैव समाचरेत्॥**

[4]**षष्ठाब्दे षोडशाब्दे च विवाहाब्दे तथैव च।**
**अन्तर्वत्न्यां च जायायां क्षौरकर्म विवर्जयेत्॥**

[5]**षष्ठ्यष्टमीममावास्यामुभयत्र चतुर्दशीम्।**
**वर्जयेत्पौर्णमासीं च तैले मांसे भगे क्षुरे॥**

[6]**पञ्चदश्यां चतुर्दश्यामष्टम्यां च विशारदः।**
**तैलं मांसं व्यवायं च क्षुरं च परिवर्जयेत्॥**

[7]**न स्नातभुक्तोत्कटभूषिताना-**
**मभ्यक्तयात्रासमरोत्सुकानाम्।**
**क्षौरं विदध्यान्निशि संध्ययोर्वा**
**जिजीविषूणां नवमे न चाह्नि॥**

[8]**नाभ्यङ्गमर्के न च भूमिपुत्रे**
**क्षौरं च शुक्रेऽथ कुजेऽथ मांसम्।**
**बुधेऽथ योषित्परिवर्जनीया**
**शेषेषु सर्वाणि सदैव कुर्यात्॥**

[9]**चित्रासु हस्ते श्रवणे च तैलं**
**क्षौरं विशाखासु भिषक्षु वर्ज्यम्।**

(१) **निप**. १७३.
(२) **मुक्ता**. ३५ स्मृतिः; **आन**. ५९२ उत्त., स्मृतिः.
(३) **मुक्ता**. ४६६-४६७ सारसमुच्चये.
(४) **गौमि**. ९।८ स्मृत्यन्तरे; **बाल**. १।१३१ पृ. ३९२ स्मृत्यन्तरे.
(५) **मेधा**. ४।१२८ स्मृत्यन्तरम्.
(६) **सम**. १०६.
(७) **पुम**. ४५६ श्रीपतिः.
(८) **आत**. ३६२ कल्पतरौ.
(९) **आत**. ३६२ (चित्राश्विहस्ताश्रवणेषु तैलं क्षौरं विशाखप्रतिपत्सु वर्ज्यम्। मूले मघाभाद्रपदासु मांसं योषिन्मघाकृत्तिकासोत्तरासु॥) कल्पतरौ; **मुक्ता**. २८४.

**मूले मृगे भाद्रपदे तु मांसं**
**योषिन्मघासूत्तरकृत्तिकासु॥**

मघाकृत्तिकाभ्यां सहोत्तराः, तासु। तृतीयासमासः छान्दसः। आत. ३६२

[1]**एकोदराणां पुत्राणां पितुश्चैकदिने तथा।**
**श्राद्धे तु भोजनं नैव क्षौरकर्म न चैव हि॥**
**पितुः पुत्रस्य चैकस्मिन् दिने क्षौरं कृतं यदि।**
**पुत्रस्य चाऽऽयुर्हीयेत पितुश्च तदनन्तरम्॥**

क्षौरनिषेधस्यापवादः

[2]**क्षौरं नैमित्तिकं कार्यं निषेधे सत्यपि ध्रुवम्।**
**पित्रादिमृतिदीक्षासु प्रायश्चित्तेऽथ तीर्थके॥**

अथास्य सर्वस्यापवादस्तीर्थप्राप्तौ, 'क्षौरं नैमित्तिकं .....तीर्थके॥' इति स्मृतेः, 'नृपविप्राज्ञया यज्ञे मरणे बन्धमोक्षणे। उद्वाहेऽखिलवारर्क्षे तिथिषु क्षौरमिष्टदम्॥'

(१) मुक्ता. ४६७ चन्द्रिकायाम्.
(२) विपा. ३।२।७५८ स्मृतिः.

इति नारदवचने निमित्तपरिगणनस्य उपलक्षणत्वाच्च। विपा. ३।२।७५८

क्षौरदोषनाशकः श्लोकः

[1]**आनर्तोऽहिच्छत्रः पाटलिपुत्रो द्युतिर्दितिः श्रीशः।**
**क्षौरे स्मरणादेषां दोषा नश्यन्ति निःशेषाः॥**

अत्र जप्यः श्लोको मुहूर्तमालायाम् — 'आनर्तोऽहिच्छत्रः.....निशेषाः॥' इति। अहिच्छत्रः नृसिंहः, 'छत्रीभूतफणीन्द्रमिन्दुधवलं लक्ष्मीनृसिंह भजे' इति वचनात्। 'अदितिर्दितिः' इति पाठः सार्वत्रिकः। स्पष्टं शिष्टम्। आभू. १४९

मन्त्रादिषु भावनानुसारिणी
सिद्धिः

[2]**मन्त्रे तीर्थे द्विजे देवे दैवज्ञे भेषजे गुरौ।**
**यादृशी भावना यस्य सिद्धिर्भवति तादृशी॥**

(१) आभू. १४९ त्रो द्युति (त्रोऽदिति) इति पाठान्तरमपि निर्दिशति.
(२) विपा. ३।२।७४७.



# अनुपनीतधर्माः



## वैतानश्रौतसूत्रम्

अनुपनीतस्य कामचारः

**[1]अनेनसः पुरोऽष्टमाद्वसन्तात्कुमारकाः कामं चरन्ति सम्राड्धर्माणः पञ्चत्वयाजिनः॥**

## गौतमः

अनुपनीतस्य कामचारकामवाद-
कामभक्षाः

***[2]प्रागुपनयनात्कामचारवादभक्षः॥**

(१) द्विजानामुक्तमुपनयनम्। तेषामुपनयनात्प्रागपि कैश्चिद्वर्णधर्मैरधिकार इष्यत इति तदर्थमाह — प्रागुपनयनादिति। ननु च प्रागेवोपनयनादेतद्वक्तव्यम्, तत्र 'प्रागुपनयनात्' इत्येतन्न वक्तव्यं भवति। उच्यते — सत्यमेतत्, किंतु उपनयनस्याऽऽदावभिधाने प्रयोजनमुक्तम्। नानेन विधीयते, अर्थप्राप्तत्वात्। न च नियम्यते, अवश्यकर्तव्याभावात्, 'उपनयनादिर्नियमः' (गौध. २।१०) इति वक्ष्यमाणत्वात् पाक्षिकत्वाभावाच्च। नापि परिसंख्या, निवर्त्याभावात्। न ह्यस्याकामचारित्वादिकं प्राप्तम्। अतः इदं सूत्रमनुवादकं प्रायश्चित्तराजदण्डाभावज्ञापनार्थम्, तयोः सामान्येनोपदिष्टत्वात्।

ननु च राजदण्ड(? ण्डः)प्रायश्चित्तानि च विहिताकरणे निषिद्धसेवने वा विधीयन्ते। न चास्य विधिप्रतिषेधाभ्यामधिकारः, न चास्य विधिः प्रतिषेधो वा श्रूयत इति। न त्वस्याहुतात्त्वादि विधायिष्यते(?) प्रतिषिध्यते वा, यद्व्यतिक्रमे उभयं भविष्यतीति, पित्रादीनामुपदेशात्। अत इदं सूत्रमनर्थकमिति।

अत्रोच्यते — यद्विहिताकरणे प्रतिषिद्धसेवने वा प्रायश्चित्तमुक्तं राजदण्डो वा, तदुभयमस्यापि प्राप्नोत्येव। यद्यप्यस्यैवोद्देशेन विधिः प्रतिषेधो वा न श्रूयते, तथापि यत्तु सामान्येनोक्तम् 'अहिंसा सत्यमस्तेयम्' (मस्मृ. १०।६३) इत्यादि, तद्वर्णधर्मत्वादस्यापि प्राप्नोति। तद्व्यतिक्रमे राजदण्डप्रायश्चित्ते अपि भवतः। अतः तन्निवृत्त्यर्थमनुवादस्वरूपं सूत्रमारब्धम्।

'उपनयनादिर्नियमः' (गौध. २।१०) इत्यनेन सूत्रेण उपनयनादारभ्य यो विधिरुच्यते तद्व्यतिक्रमे एव प्रायश्चित्तम्, नान्यव्यतिक्रमे इति वक्ष्यमाणत्वात् तेनैवास्यापि वर्णधर्मातिक्रमे प्रायश्चित्ताभावो ज्ञातुं शक्यते, राजदण्डाभावोऽपि, तथापि नित्योपनयनकालातीतस्य भिन्नबुद्धेः शक्तस्य एकादशवर्षादूर्ध्वं षोडशवर्षात्प्राक् प्रायश्चित्तार्धप्रवेशनार्थम्, ततोऽर्वाक् पञ्चवर्षादूर्ध्वं पित्रादीनां प्रायश्चित्तप्रवेशार्थम्, तत अर्वागपराधाभावज्ञापनार्थं च सूत्रमारब्धम्। तथा च भार्गवीयम् — 'अशीतिर्यस्य वर्षाणि बालो वाऽप्यूनषोडशः। प्रायश्चित्तार्धमर्हन्ति स्त्रियो व्याधित एव च॥ ऊनैकादशवर्षस्य पञ्चवर्षात्परस्य च। चरेत्सुहृद्गुरुश्चैव प्रायश्चित्तं विशुद्धये॥ अतो बालतरस्याथ नापराधोऽस्ति कुत्रचित्। राजदण्डश्च तस्यातः प्रायश्चित्तं च नेष्यते॥' इति। एवं चोपनयनात्प्राग्यद्यपि सामान्येन कामचारित्वाद्युक्तम्, तथापि पञ्चवर्षात्प्रागेवात्यन्तकामचारिता, तत ऊर्ध्वं वर्णधर्मेषु नियोक्तव्यः पित्रादिभिः, तद्व्यतिक्रमे बालस्य सतः पित्रादीनां प्रायश्चित्तस्य श्रवणात्। अलमतिप्रसङ्गेन।

---

* अस्य वचनस्य विश्वरूपव्याख्यानम् 'ब्रह्मचारिधर्माः' इति महाप्रकरणस्य अवान्तरे अध्ययनप्रकरणे 'उपनीय गुरुः शिष्यम्' इति याज्ञवल्क्यवचने द्रष्टव्यम्।

(१) **विश्व**. १।१५ पृ. ३५, आथर्वणानां वितानकल्पः.

(२) **गौध**. २।१; **विश्व**. १।१५ नयना (नया); **मिता**. १।८७ वादभक्षः (कामवादकामभक्षाः) स्मरणम्; **ब्रक**. ९७; **गौमि**. २।१ चारवादभक्षः (चारः कामवादः कामभक्षः); उ. १।१।६, २।१५।२५; **स्मृच**. १।६२; **हभा**. १८८; **स्मृसा**. ४ (उपनयनात्प्राक् कामचारभक्ष्यवादः); **पमा**. १।४४ मितावत्; **मपा**. ३६४ विश्ववत्; **प्रपा**. २१० मितावत्; **निप्र**. १।२४ भक्षः (भक्ष्यः); **गभा**. १९४ भक्षः (भक्षाः); **बौवि**. १।३।७; **चमव्या**. ११; **मुक्ता**. ८४; **सिन्धु**. ९२५ गभावत्; **शूक**. २३८ गभावत्; **संम**. २० मितावत्; **विपा**. २।४६७ मितावत्; **संप्र**. ३२७; **आप्र**. ९० मितावत्; **आन**. ४३० (वादभक्षः०) (–); **संग**. ६२९ वादभक्षः (कामवादकामभक्षः); **बाल**. १।१५ पृ. ७२; **संर**. ९०९ मितावत्.

इदानीं सूत्रं विव्रियते – उपनयनात्प्राक् कामचारः इच्छागतिः। तस्माच्चण्डालस्पर्शनादौ प्रोक्षणमात्रं वक्ष्यति 'अवोक्षणेभ्यः' (गौध. २।६) इति। तदपि पञ्चवर्षात्प्रागेवेत्युक्तम्। अत ऊर्ध्वं चण्डालादिस्पर्शने स्नापयितव्यः। एकादशवर्षादूर्ध्वं स्वयमेव स्नायात्। एवं सर्वत्र। कामवादः अश्लीलाद्यपि वदति। कामभक्षः पर्युषिताद्यपि भक्षयति। पञ्चवर्षादूर्ध्वं वर्णधर्माविरोधीनि कारयितव्यानि। उपनयनात्प्रागित्यापत्कल्पोपनयनस्यापि ग्रहणम्। कुतः? 'ब्रह्मचारी' (गौध. २।३) इति लिङ्गात्। नित्यकालात्प्राक् ब्रह्मचर्यस्य स्खलनासंभवादेव सिद्धत्वात् ब्रह्मचर्यरक्षणोपदेशोऽनर्थकः स्यादिति। कामचारस्योदाहरणं स्वयमेव वक्ष्यति – 'यथोपपादमूत्रपुरीषो भवति' (गौध. २।४) इति। अतोऽत्यन्तबालावस्थायामपि ब्रह्महत्यादेर्यत्नतो निवारयितव्यः। कामवादे अभिशंसादौ कामभक्षणे सुरापानादौ चात्यन्तबाल्यावस्थायामपि यत्नतो निवारयितव्यः, कामचार इत्यनेनैव सिद्धे वादभक्षणयोः पुनरुपन्यासात्। *उप(?ओप)नयनादिति वक्तव्ये प्राग्ग्रहणं नियमार्थम्, उपनयनात्प्रागेव कामचारित्वादीति। असति नियमे 'उत्तरेषां चैतदविरोधि' (गौध. ३।१०) इत्यनेन हुतशिष्टभक्षणवर्जनादि यतीनामपि प्राप्नोतीति।

मभा.

(२) 'कामचारवादभक्षः' इत्यनेन इच्छया अश्लीलभाषणपर्युषितभक्षणादीनि न निषिद्धानीति प्रतिपादितम्। यानि पुनरत्यन्तपतनीयानि तानि निषिद्धान्येव, स्मृत्यन्तरे प्रायश्चित्तदर्शनात्। ब्रक. ९८

(३) उपनीतप्रसङ्गेन अनुपनीतधर्मा उच्यन्ते – प्रागुपनयनादिति। 'आ षोडशाद्ब्राह्मणस्य' (गौध.१।१४) इत्यापत्कल्पोपनयनविषयम्। कामचारः इच्छाचरणम् अपण्यान्यपि विक्रीणीयाच्छ्ववृत्त्याऽपि जीवेदिति, कामवादः अश्लीलानृतादिवचनम्, कामभक्षः लशुनपर्युषितान्नादिभक्षणं चतुःपञ्चकृत्वो वा भोजनमित्येतावद्यस्य स तथोक्तः। न तु ब्रह्महत्यासुरापानाद्यतिप्रसङ्गः।

गौमि.

(४) कामचारः इच्छागतिः, कामवादः अश्लीलादिभाषणम्, कामभक्षः पर्युषितादिभोजनम्, एतेषु प्रागुपनयनान्न दोष इत्यभिप्रायः। तथा च विष्णुपुराणम् – 'भक्ष्याभक्ष्ये तथाऽपेये वाच्यावाच्ये तथाऽनृते। अस्मिन्काले न दोषः स्यात्स यावन्नोपनीयते॥' इति। न चापेय इत्यनेन मद्यादिपाने न दोष इति शङ्कनीयम्, वर्जयेदित्यनुवृत्तौ 'नित्यं मद्यं ब्राह्मणः' (गौध. २।२६) इति गौतमस्मरणात्। नित्यग्रहणमनुपनीतस्यापि निषेधप्राप्त्यर्थम्। न च प्रागुपनयनाद्ब्राह्मण्यमेव नास्तीत्यपि शङ्कनीयम्, 'गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम्।' (मस्मृ. २।३६) इति मनुना ब्राह्मणस्य सत उपनयनविधानात्। एवं गौतमादिवचनं महापातकादिव्यतिरिक्तविषयमिति मन्तव्यम्। तथा च स्मृत्यन्तरम् – 'स्यात्कामचारभक्षोक्तिर्महतः पातकादृते।' इति।

§स्मृच १।६२-६३

(५) कामचारोऽप्यपतनीयकर्मस्वेव, तत्र 'पादो बालेषु दातव्यः' इत्यादिप्रायश्चित्तस्मरणात्।

मपा.३६४

(६) 'प्रागुपनयनात्' इति वदता अतिक्रान्तोपनयनकालस्यापि यावदुपनयनमेते धर्मा भवन्तीत्युक्तं भवति।

×संप्र. ३२८

(७) उपनयनकालात् पूर्वं तच्च(?तत्र) 'गर्भाष्टमेऽष्टमेऽब्दे वा' (यास्मृ. १।१४) इति याज्ञवल्क्यादिवचनैः गर्भाष्टमशुद्धाष्टमयोर्मुख्यकालत्वेनाङ्गीकारात् जन्मतः षष्ठसप्तमाब्दावधि कामचारादयो न दोषाय भवन्ति। आन. ४३३-४३४

---

* अत्र 'उप' इति पाठो नोपपद्यते। 'ओप' इति पाठः सूपपादः। तथाहि – 'प्रागुप' इतिपाठापेक्षया 'ओप' इति पाठे सार्धमात्राद्वयेन लाघवमभिप्रेत्य प्राक्पदकृत्यमिदं व्याख्यातम्। तत्र आङः पूर्वोत्तरमर्यादावाचित्वेन उपनयनशब्दस्य ब्रह्मचर्याश्रमोपलक्षकत्वेन च 'ब्रह्मचर्याश्रमपर्यन्तं ब्रह्मचर्याश्रमोत्तरं च कामचारत्वादि' इत्यर्थः संपद्यते। तेन हुतशिष्टभक्षणवर्जनादि यतीनामपि प्राप्नोतीति। 'ओप' इति पाठे उपनयनशब्दस्य ब्रह्मचर्याश्रमोपलक्षकत्वं तदभावे ब्रह्मचारिणोऽपि कामचारत्वादिप्रसक्त्या सूत्रकरणान्यथानुपपत्तिसिद्धम्। 'प्रागुप' इति पाठे तु फलाभावान्नोपलक्षकत्वम्। अत एव सप्तमसूत्रव्याख्याने 'ततश्चोपनयनादूर्ध्वम्' इत्यत्र ब्रह्मचारिणोऽपि ग्रहणं युक्तं लभ्यते।

§ स्मृसा., पमा., प्रपा., चमव्या., संम., बाल., संर., संग. स्मृचगतम्।

× शेषं स्मृचवत् मपावच्च।

(८)एतेन वृन्दावने श्रीहरेर्विहारेऽनुमतिर्लभ्यते। न हीशत्वात् तदनुमतिर्युक्ता, 'वर्त एव च कर्मणि' (भगी. ३।२२) इति विरोधात्।* एतेन 'कृच्छ्रत्रयं चोपनेता त्रीन्कृच्छ्रांश्च बटुश्चरेत्।' इति प्रायश्चित्तं कामचारादिनिमित्तमिति न भ्रमः कार्यः, तस्य प्रागुपनयनादनुज्ञातत्वात्, किंतु उपनेतृत्वाधिकारार्थम्।

8कृभ. ९२५

अनुपनीतस्य कामभक्षापवादः

[1]**अहुतात्॥**

(१)इदानीं कामवादभक्षणस्यापवादमाह — अहुतादिति। हुतं हुतशिष्टं चरुपुरोडाशादि, न वैश्वदेवशिष्टम्, तस्य सर्वार्थत्वात्। तथाऽऽहाऽऽपस्तम्बः — 'सर्वान् वैश्वदेवे भागिनः कुर्वीत' (आध. २।९।५) इति। अहुतात्, कार्य इति शेषः। अर्थप्राप्तस्य प्रतिषेधोऽयं पित्रादीनामुपदेशः, बालस्य विज्ञानाभावात्। एकादशवर्षादूर्ध्वं तस्यैवेत्युक्तम्। मभा.

(२)अहुतादिति हुतं विना। हुतस्याभक्षणम्।

ब्रक. ९८

(३)(हुतं) हुतशेषं पुरोडाशादि, तदत्तीति हुतात्। तद्विपरीतः अहुतात्। अनुपनीतो हुतं नाद्यादिति।

*गौमि.

(४)अहुतादः। न हुतशेषभोजननियमः।

निप्र. १।२४

(५)यद्वा, अहुतं वैश्वदेवासंस्कृतमपि अद्यादित्यर्थः।

σसंप्र. ३२८

ब्रह्मचर्यनियमः

[2]**ब्रह्मचारी॥**

(१)ब्रह्मचर्यरक्षणं कर्तव्यम्। मभा.

(२)ब्रह्मचारी मैथुनवर्जी। ब्रक. ९८

(३)कामचारादेरयमपवादः। 'आ षोडशात्' (गौध. ११।१४) इत्युक्तत्वात्स्त्रीषु प्रसङ्गयोग्यताऽस्ति, अतो ब्रह्मचारी जितेन्द्रियः स्यादिति। तथा च स्मृत्यन्तरे प्रायश्चित्तम् — 'विलुप्तमवकीर्णिव्रतेन शुद्धमुपनयेन्न सप्तदशम्, अत ऊर्ध्वं व्रात्यावकीर्णिव्रताभ्याम्' इति।

×गौमि.

(४)न च ब्रह्मचारीत्येतद्ब्रह्मचारिधर्मप्राप्त्यर्थमिति शङ्कनीयम्। यत आह वसिष्ठः — 'न ह्यस्य विद्यते कर्म किंचिदा मौञ्जिबन्धनात्। वृत्त्या शूद्रसमस्तावद्यावद्वेदे न जायते॥' (वाध. २।६) इति।

+स्मृच. ११६४

(५)एतदवधिके काले यद्यनुपनीतः स्यात्तदाऽपि ब्रह्मचारी ब्रह्मचारिवत् शौचाचमनस्नानादिकर्ता भवेत्।

आन. ४३४

मूत्रपुरीषयोरनियमः

[1]**यथोपपादमूत्रपुरीषो भवति॥**

(१)इदानीं कामचारस्योदाहरणमाह — यथोपपादेति। यथाऽपरिवेष्टितशिरसः कृष्टादावपि मूत्रपुरीषावुत्पद्येते तिष्ठतो वा तथा तत्रैव कुर्यादित्यर्थः।

मभा.

(२)यथोपपादमूत्रपुरीषः उदङ्मुखादिनियमवान् न स्यादित्यर्थः। ब्रक. ९८

(३)मूत्रपुरीषे यथोपपद्येते यस्य स तथोक्तः, प्राङ्मुखादिरपि कुर्यात्। 'न भूमावनन्तर्धाय' (गौध. ९।४२) इत्यादिस्थाननियमोऽपि नास्ति।

*गौमि.

---

* हरिविहारः प्रकृतसूत्रानुमतो न वा? प्रकृतसूत्रं धर्मशास्त्रं न वा? इत्येतदत्र निर्णेयम्।

8 शेषं स्मृचगतम्।

* स्मृच., आन. गौमिवत्।

σ शेषं गौमिवत्।

(१) **गौध.** २।२; **ब्रक.** ९७; **उ.** २।१५।२५ अशुद्धो ग्रन्थः; **स्मृच.** ११६३ (आहुतात् स्यात्); **निप्र.** ११२४ अहुतात् (अहुतादः); **मुक्ता.** ८५; **संप्र.** ३२८; **आन.** ४३३.

(२) **गौध.** २।३; **ब्रक.** ९७; **उ.** २।१५।२५; **स्मृच.** ११६४; **स्मृसा.**४; **निप्र.** ११२४; **मुक्ता.** ८५; **संप्र.** ३२८; **आन.** ४३४.

× संप्र. गौमिगतम्।

\+ शेषं गौमिगतम्। मुक्ता. स्मृचवत्।

* प्रपा., निप्र., संम., विपा., संप्र., संकौ., संग., संर., कृभ. गौमिगतम्।

(१) **गौध.** २।४; **ब्रक.** ९७; **गौमि.** २।४ यथोपपाद (यथोपपादित); **उ.** २।१५।२५; **स्मृच.** ११६४; **पमा.** १।४४५ गौमिवत्; **प्रपा.** २१०; **निप्र.** ११२४ व्याख्यानमस्ति, सूत्रं तु भ्रष्टम्; **बौवि.** १।३।७ यथोपपाद (यथोपपात); **मुक्ता.** ८५ गौमिवत्; **संम.** २० (न पादमूत्रपुरीषो भवति); **विपा.** २।४६७ पुरीषो (पुरिषो); **संप्र.** ३२८; **संकौ.** ११७ गौमिवत्; **आन.** ४३३; **संग.** ६२९; **बाल.** १।१५ पृ. ७२ गौमिवत्; **संर.** ९०९ गौमिवत्; **कृभ.** ९२६ गौमिवत्.

(४) न तस्य उदङ्मुखः, दिवा, रात्रौ दक्षिणामुखः, इत्यादयो नियमाः सन्तीत्यर्थः।

स्मृच. ११६४

(५) अयमपि उपनयनकालात्प्रागेव।

*आन. ४३४

अनुपनीतस्य कल्परहितमाचमनम्

'नास्याऽऽचमनकल्पो विद्यते॥

(१) किंच — नास्येति। पञ्च(म)वर्षादूर्ध्वमस्यैकादशवर्षात्प्राक् आचमनकल्पः आचमनविधिर्न विद्यते। कल्पप्रतिषेधात् आचमनमात्रमस्तीत्यवगम्यते। तत्र 'शूद्रेण हि समस्तावद्यावद्वेदे न जायते' (मस्मृ. २।१७२) इति स्मृत्यन्तरे शूद्रेण तुल्यधर्मश्रवणादाचमनं शूद्रवद्द्रष्टव्यम्। §ऊनैकादशवर्षस्येति कुतः? अस्येत्यारम्भात्, पञ्च(म)वर्षात्प्रागदोषाभावश्रवणात् एकादशवर्षादूर्ध्वं वर्णधर्मेऽधिकृतत्वाच्च। एकादशवर्षादूर्ध्वमाचमनकल्पोऽपि तस्य विद्यत एवेति गम्यते।

×मभा.

(२) आचमनकल्पः प्राङ्मुखत्वश्रोत्रस्पर्शादिः। आचमनं तु करोत्येव। ब्रक. ९८

(३) 'त्रिराचामेत्, सकृदुपस्पृश्य' इत्यादिकल्पो न भवति। अयमपि प्रागेवाष्टमात्, ऊर्ध्वं तु आचमनविधाने 'ब्रह्मचारी' इत्युपदेशात् भवत्येव।

आन. ४३४

अतिबाले शुद्धिप्रक्रियासंकोचः

'अन्यत्रापमार्जनप्रधावनावोक्षणेभ्यः॥

(१) इदानीमतिबालस्याऽऽह — अन्यत्रेति। 'अस्य न विद्यते' इति वर्तते। अस्य ऊनपञ्चवर्षस्यापमार्जनादिभ्यः अन्यत् किंचिदपि शौचप्रकारः न विद्यत इत्यर्थः। अपमार्जनं भुक्तोच्छिष्टस्य सोदकेन पाणिना लेपापनयनम्। प्रधावनं प्रक्षालनं मूत्रोच्चारादौ। अवोक्षणं चण्डालादिस्पर्शने प्रोक्षणम्। प्राप्त्यभावात् 'नास्याऽऽचमनकल्पो विद्यते' 'अन्यत्रापमार्जनप्रधावनावोक्षणेभ्यः' इति प्रतिषेधद्वयस्यानारम्भः प्राप्नोति इति चेत्, नैष दोषः, 'नास्याऽऽचमनकल्पो विद्यते' इत्यनेन ऊनषोडशवर्षस्याऽऽचमनकल्पो विधीयते ऊनैकादशवर्षस्य प्रतिषेधद्वारेण, 'अन्यत्रापमार्जनप्रधावनावोक्षणेभ्यः' इत्यनेन पुनः ऊनपञ्चवर्षस्य अपमार्जनादि विधीयते अन्यशौचप्रतिषेधद्वारेणेति।

×मभा.

(२) सर्वत्र कल्पनिषेधे प्राप्तेऽपवादमाह — अन्यत्रेति। अपमार्जनम् उच्छिष्टादिलिप्तस्य उदकेन पाणिना निर्मलीकरणम्। प्रधावनं पुरीषादिलिप्तस्य प्रक्षालनम्। प्रोक्षणम् अशुचिस्पृष्टस्योदकेनाभ्युक्षणम्।

ब्रक. ९८

(३) अपमार्जनादीनि वर्जयित्वाऽऽचमनकल्पो नास्ति। अपमार्जनादिकमस्तीति यावत्। यद्यप्यपमार्जनादीन्याचमनकल्पे नान्तर्भवन्ति, तथापि पर्युदासमुखेन तानि विधीयन्ते। अत्र अपमार्जनं सोदकेन पाणिना परिमार्जनमुच्छिष्टादिलिप्तस्य। प्रधावनम् अमेध्यादिलिप्तस्याद्भिर्मृदा च क्षालनम्। अवोक्षणं रजस्वलादिस्पृष्टस्य। इदमत्यन्तबालविषयम्। षड्वर्षादूर्ध्वं स्नानमिच्छन्ति।

अस्यानुपनीतस्यैतावदुक्तमकामकाराद्व्यतिक्रमे प्रायश्चित्तमस्ति। तत्र स्मृत्यन्तरे — 'अशीतिर्यस्य वर्षाणि बालो वाऽप्यूनषोडशः। प्रायश्चित्तार्धमर्हन्ति स्त्रियो व्याधित एव च॥ ऊनैकादशवर्षस्य पञ्चवर्षात्परस्य च। चरेद्गुरुः सुहृच्चैव प्रायश्चित्तं विशुद्धये॥ अतो बालतरस्यास्य नापराधो न पातकम्। राजदण्डश्च तस्यातः प्रायश्चित्तं च नेष्यते॥' इति। *गौमि.

---

* शेषं गौमिगतम्।

§ क्रमानुरोधेन वक्ष्यमाणहेत्वनुरोधेन च 'पूर्णपञ्चमवर्षस्य इत्यर्थकोऽधिको ग्रन्थोऽत्राऽऽवश्यकः।

× गौमि., स्मृच., मुक्ता., संकौ; संर., कृभ. मभागतम्।

(१) गौध. २१५; ब्रक. ९७; उ. २।१५।२५; मवि. ५।१३९ (विद्यते.) (=); स्मृच. ११६४ : ११६५ नास्या (न तस्या); स्मृसा. ४; पमा. १।४४५ नास्या (न तस्या); प्रपा. २१०-२११ पमावत्; निप्र. १।२४; मुक्ता. ८५; संम. २० पमावत्; विपा. २।४६७ पमावत्; संप्र. ३२६; आप्र. ९०; संकौ. ११७ पमावत्; आन. ४३३; बाल. १।१५ पृ. ७२; संर. ९०९ पमावत्; कृभ. ९२६ पमावत्.

(२) गौध. २१६; ब्रक. ९७ नावोक्षणेभ्यः (नप्रोक्षणेभ्यः); उ. २।१५।१९ त्रापमा (त्रापां मा); स्मृच. ११६५ त्राप (त्रापा); प्रपा. २११ नावोक्ष (नोक्ष) शेषं स्मृचवत्; निप्र. १।२४ ब्रकवत्; मुक्ता. ८५; संम. २० (अन्यत्रावमार्जनप्रक्षालनप्रोक्षणेभ्यः); संप्र.३२६; आन. ४३३ त्रापमा (त्रावमा).

× संप्र. सूत्रार्थः मभावत्। उद्देश्यरूपविषयविशेषस्तु तदभिमतः 'यावता वा दिशो न प्रजानीयुः' (आध. २।१५।२१) इत्यापस्तम्बसूत्रव्याख्याने (बुका. पृ. १९२३) द्रष्टव्यः।

* आन. गौमिगतम्।

(४) तथा शुद्ध्यन्तराण्याह गौतमः – अन्यत्रेति। अपमार्जनम् उच्छिष्टावयवानां सोदकेन पाणिना संमार्जनम्। प्रधावनं प्रक्षालनममेध्यालिप्तस्य। अवोक्षणं प्रोक्षणमशुचिस्पृष्टस्य। एतेभ्योऽन्यत्र आचमनं शुद्धिहेतुरित्यर्थः। ⇩स्मृच. १।६५-६६

(५) एतत् त्रितयं षष्ठवर्षात्प्रागिति बालस्य भूतपिशाचादिभ्यो रक्षार्थं कुर्यात्। σमुक्ता. ८६

न तदुपस्पर्शनादशौचम्॥

(१) किंच – न तदिति। तद्ग्रहणेनाकृतशौचो गृह्यते। अकृतशौचस्पर्शनात्तेन वा स्पृष्टस्याशुचित्वं न भवति। अतिबालविषयमेवैतत्। तर्ह्यस्य शौचविधानमनर्थकम्। कुतः? द्वयमेव प्रयोजनं शौचविधानस्य दृश्यते – इतरस्पर्शयोग्यार्थमनुष्ठानार्थं च। अस्य तु इतरस्पर्शयोग्यार्थं न भवति, अकृतशौचस्यापि स्पर्शयोग्यत्वात् 'न तदुपस्पर्शनादशौचम्' इत्यनेन; अनुष्ठानार्थं च न भवति, अस्यानुष्ठानाभावादिति। नानर्थकम्, रक्षार्थत्वाच्छौचविधानस्येति। तथा च स्मृत्यन्तरम् – 'बालस्याऽऽपञ्चमाद्वर्षाद्रक्षार्थं शौचं कुर्यात्' इति।

अकृतशौचस्यास्यैव स्पर्शने दोषाभावज्ञापनार्थः उपशब्दप्रयोगः। एवं चान्येषामुच्छिष्टकृतमूत्रपुरीषाणां स्पर्शने आचमनं कर्तव्यम्। तत्स्पर्शने न दोषः, शवस्पृष्टिसूत्रे परिगणितत्वात्। तथा स्मृत्यन्तरम् – 'अशुचिं स्पृशते यस्तु एक एव हि दुष्यते। तं स्पृष्ट्वाऽन्यो न दुष्येत सर्वद्रव्येष्वयं विधिः॥' इति। चण्डालस्पर्शने तु शवस्पृष्टिसूत्रे वक्ष्यति। 'तमुपस्पृशेत्' इति वक्तव्ये 'न तदुपस्पर्शनादशौचम्' इति गुरुसूत्रकरणं 'प्रागुपनयनात्' इत्यत्र नियमस्यापि बाधनार्थम्। ततश्चोपनयनादूर्ध्वमप्युच्छिष्टकृतमूत्रपुरीषाणां स्पर्शने आचमनं कर्तव्यम्। मभा.

(२) एतेन कृतापमार्जनादेः स्पर्शे नाशौचम्। ब्रक. ९८

(३) तदुपस्पर्शनात् तस्याकृतोपनयस्योदक्यादिस्पृष्टस्याप्युपस्पर्शनादशौचं न स्यात्। αस्पृष्टास्पृष्टिरुपस्पर्शनम्। तेन स्नानं न कर्तव्यम्। भुक्तोच्छिष्टस्य कृतमूत्रपुरीष(स्य) स्पर्शनादपि नाऽऽचमनम्। इदमपि षड्वर्षात्प्रागेव। *गौमि.

(४) अत 8एवमभिधानेन ⇩अनाचान्तस्पर्शेऽपि पित्रादेरशुद्धिर्नास्तीत्याह स एव – न तदिति। तावन्मात्रेणैव तस्य प्रयतत्वादित्यभिप्रायः। नन्वेवं तर्हि चण्डालसूतिकादिस्पृष्टस्पर्शेऽप्यशुद्धिर्न स्यात्? मैवम्, गौतमवाक्ये चण्डालादेरप्रकृतत्वात्, 'पतितचण्डालसूतिकोदक्याशवस्पृष्टितत्स्पृष्ट्युपस्पर्शने सचेलोदकस्पर्शनाच्छुध्येत्' (गौध. १४।२९) इत्यत्र वयोविशेषानभिधानाच्च। अतो 'न तदुपस्पर्शनादाशौचम्' इत्येतत्, 'न तस्याऽऽचमनकल्पो विद्यते' इति प्रकृताचमनविषयमेवेति मन्तव्यम्। स्मृच. १।६४-६५

(५) 'उदक्याशुचिभिः स्नायात्संस्पृष्टस्तैरुपस्पृशेत्' इत्यनेन तृतीयं प्रति प्राप्तस्याऽऽचमनस्यापवादोऽयम्। # संप्र. ३२७

---

⇩प्रपा., निप्र. स्मृचगतम्।

σ शेषं गौमिगतं स्मृचगतं च।

(१) गौध. २।७; मेधा. २।२७(=); ब्रक. ९७-९८; स्मृच. १।६४-६५ दशौचं (दाशौच); प्रपा. २११ (न तस्य स्पर्शनादौ शौचम्); निप्र. १।२४; चमव्या. १२; मुक्ता. ८५, ८६ स्मृचवत्; सिन्धु. ९२५ स्मृचवत्; संप्र. २० तदुपस्य (तस्य स्प); विपा. २।४६८ स्मृचवत्; संप्र. ३२७; आन. ४३३; बाल. १।१५ पृ. ७२.

α अयमुपस्पर्शनशब्दार्थो न प्रागुक्तसूत्रार्थगतोपस्पर्शनशब्दस्य। तथा सति उदक्यादिस्पृष्टोऽनुपनीतः प्रथमः, तत्स्पृष्टः पित्रादिर्द्वितीयः, तत्स्पृष्टोऽन्यस्तृतीयः, तस्य तृतीयस्य स्पृष्टस्पृष्टस्याशौचाभावे सूत्रतात्पर्यमसमञ्जसं स्यात्। किंतु सूत्रगतोपस्पर्शनशब्दस्यायमर्थः। तथा च उदक्यादिस्पृष्टानुपनीतस्पृष्टस्य द्वितीयस्य नाशौचमिति सूत्रार्थः संपद्यते। अत एव प्राक् 'उदक्यादिस्पृष्टस्याप्युपस्पर्शनात्' इत्युक्तम्। 'स्पृष्टस्य आस्पृष्टिः' इति तत्पुरुषेण व्युत्पादनीयोऽयं शब्दः अन्यपदार्थप्राधान्याभावात्, अव्ययत्वप्रसक्त्या विसर्गान्तत्वानुपपत्तेश्च।

* शेषं मभागतम्। मुक्ता., गौमि. स्मृचमतयोरनुवादः। चमव्या., विपा., आन., बाल. गौमिगतम्।

8 कल्पमात्रनिषेधादाचमनमात्रविधानेनेत्यर्थः।

⇩यथाश्रुतस्यास्य ग्रन्थस्य 'अकृताचमनस्पर्शेऽपि अशुद्धिर्नास्ति' इति मस्करिमतवदर्थो गम्यते। स नोपपद्यते, 'एवमभिधानेन' इत्यनेनोक्तस्य केवलाचमनाशुद्ध्यभावयोः प्रयोज्यप्रयोजकभावस्यानुपपत्तेः, अग्रे 'तावन्मात्रेण' इति पदस्य निर्विषयत्वापत्तेश्च। आचमनाभावे किं पूर्वोक्तं प्रायत्यनिमित्तं तच्छब्देन परामृश्येत? अतोऽत्र 'आचान्तस्पर्शेऽपि' इति शुद्धिः कल्पनीया। तथा चास्य ब्रकसमानमतत्वं भवति। 'आचमनान्तःस्पर्शेऽपि' इति पुस्तकान्तरीयः अशुद्धोऽपि पाठ एतच्छुद्धिकल्पनेऽनुकूलः।

# शेषं गौमिगतम्।

(६) तस्य अनुपनीतस्य चाण्डालादिस्पृष्टस्यापि स्पर्शान्न स्नानम्। इदं च षष्ठवर्षात्प्राक्, ऊर्ध्वं तु स्नानं भवत्येव। #सिन्धु. ९२५

पाकयज्ञानधिकारः अनुपनीतस्य

**'न त्वेवैनमग्निहवनबलिहरणयोर्नियुञ्ज्यात्॥**

(१) किंच – न त्वेवैनमिति। एनमिति सर्वस्यानुपनीतस्योपसंग्रहार्थम्। अग्नौ यत्क्रियते अग्निहोत्रहोमादि तत् अग्निहवनम्। वैश्वदेवोत्तरकालं दिग्देवताभ्यो यो बलिर्दीयते तद्बलिहरणम्। तुशब्दो विशेषवाची। – अष्टकादौ ब्राह्मणपादप्रक्षालनादावपि न नियुञ्ज्यात्, विशेषतोऽग्निहवनबलिहरणयोरिति। कामचारित्वाद्यत्रकुत्रचिन्मन्त्रमधीत्याग्निहोत्रादौ यदि स्वयमेव प्रवर्तते तदा तं दृष्ट्वाऽनुमन्ताऽपि न स्यादित्येवमर्थ एवशब्दः। उपनीतस्य नियोगार्थमिदं वचनम्, अन्यत्र प्राप्त्यभावात्प्रतिषेधस्य। एवं च 'विद्वानग्निहोत्रं जुहुयात्' इति यद्यपि श्रुत्या बहुश्रुतस्यैवाधिकारः, तथापि तदसंभवे अल्पविद्यमप्युपनीतं नियुञ्ज्यात्। तथा च मनुः – 'नैव कन्या न युवतिर्नाल्पविद्यो न बालिशः। होता स्यादग्निहोत्रस्य नाऽऽर्तो नासंस्कृतस्तथा॥' (मस्मृ. ११।३६) इति। तत्राल्पविद्यप्रतिषेधादेव प्रतिषेधे सिद्धे नासंस्कृत इति प्रतिषेधोऽन्यस्य विदुषोऽभावेऽल्पविद्यस्यापि संस्कृतस्याभ्यनुज्ञानार्थमिति प्रतिपादितम्। 'प्रागुपनयनात्' इत्यादि यदुक्तं तत्स्त्रीणामपि आ विवाहात् द्रष्टव्यम्। कुतः? 'वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृतः' (मस्मृ. २।६७) इति स्मृत्यन्तरदर्शनात्। एवं चाग्निहवनबलिहरणयोः कन्याया अपि नियोगप्रतिषेधः सिद्धः। अतो विवाहोत्तरकालं नियोगः कर्तव्यः। तत्र 'न स्त्री जुहुयात्' इति श्रुत्याऽग्निहोत्रे प्रतिषिद्धत्वात् औपासनादौ द्रष्टव्यम्। तथा च स्मृत्यन्तरम् – 'पत्न्यौपासनं जुहुयाद्वैश्वदेवं च' इत्यादि। 'न युवतिः' इति प्रतिषेधश्च परदारविषयत्वाददोषः। मभा.

(२) (न) अग्निहवनबलिहरणयोर्नियुञ्ज्यादिति। सहकारित्वेनापीति शेषः, 'न वै कन्या न युवतिर्नाल्पविद्यो न बालिशः।' (मस्मृ. ११।३६) इति बालस्य साक्षाद्धोमकर्तव्य(?कर्तृत्व)निषेधात्।

ब्रक. ९८

(३) एनम् अनुपनीतम् अग्निहवने औपासनहोमादौ बलिहरणे वैश्वदेवादौ न नियुञ्ज्यात् न नियुञ्जीतेति यावत्। तुशब्दादुक्तादन्यत्रापि समन्त्रके कर्मणि न नियुञ्जीतेति। एवकारोऽवधारणे। अथाऽऽश्वलायनः – 'पाणिग्रहणादि गृह्यं परिचरेत्स्वयम्। पत्न्यपि वा। पुत्रः कुमार्यन्तेवासी वा' (आगृ. १।९।१-३) इति। छन्दोगाश्च 'पत्नी जुहुयात्' (गोगृ. १।३।१५) इति। पत्नीकुमार्याद्यनुज्ञातेऽस्मिन्पक्षे न त्वेवैनमित्यर्थः।

×गौमि.

(४) एवमाचमनादिभिः कृतशौचमपि नाग्निहोत्रादौ नियुञ्ज्यात्। तदाह गौतमः – न त्वेवैनमिति। तस्य मन्त्रहीनत्वादित्यभिप्रायः। δस्मृच. १।६६

(५) कृतचौलमपि नाग्निहोत्रे नियुञ्ज्यात्.... तस्य मन्त्रहीनत्वादित्यभिप्रायः। प्रपा. २११

(६) अष्टमाब्दे अनुपनीतस्य वर्णधर्मेषु स्नानाचमनादिनियोजनात् अयं ब्रह्मचारिधर्मवानिति मत्वा औपासनहोमवैश्वदेवबलिहरणकर्मणि न नियुञ्ज्यात्, मन्त्रानधिकारात्। आन. ४३५

वेदोच्चारणानधिकारः सापवादः

अनुपनीतस्य

**'न ब्रह्माभिव्याहारयेदन्यत्र स्वधानिनयनात्॥**

(१) किंच – न ब्रह्मेति। एनमित्यनुवर्तते। ब्रह्मशब्देन वेदा उच्यन्ते। तस्मादेनं नाध्यापयेत्। उपनीतस्योपाकरणादूर्ध्वम् 'अधीयीत छन्दांसि' इत्यनेन वेदाध्ययन-

# शेषं गौमिगतम्।

(१) **गौध.** २।८; **ब्रक.** ९८; **स्मृच.** १।६६; **प्रपा.** २११ त्वेवैन (त्वेन); **निप्र.** १।२४; **मुक्ता.** ८५; **संप्र.** २०; **विपा.** २।४६८ हवन (हरण) शेषं प्रपावत्; **संप्र.** ३२८; **आन.** ४३३; **संग.** ६२९-६३०; **संर.** ९१० प्रपावत्.

× संप्र., संग. गौमिवत्।

δ मुक्ता. स्मृचगतम्। विपा. स्मृचवत्।

(१) **गौध.** २।९; **मेधा.** २।१७२ (न ब्रह्माभिव्याहरेत्) एतावदेव, स्मृत्यन्तरम्; **ब्रक.** ९८; **स्मृच.** १।६६; **पमा.** १।४४५ हारये (हरे); **प्रपा.** २११; **चमव्या.** १२ पमावत्; **मुक्ता.** ८५, ८६; **विपा.** २।४६८; **संप्र.** ३२९; **संकौ.** ११७ पमावत्; **आन.** ४३३; **संग.** ६३० पमावत्; **बाल.** १।१५ पृ. ७२ पमावत्; **संर.** ९०९ पमावत् : ९१०.

विधानादेवानुपनीतस्य प्रतिषेधे सिद्धे वेदस्य पुनः प्रतिषेधः वेद एव नाध्यापयितव्यः इति नियमार्थः। ततश्चाङ्गाध्यापने न दोषः। कामचारित्वाद्येन केनचित्प्रकारेण गृहीतं मन्त्रमपि नोच्चारयेत्। कुतः? अध्यापयेदित्यनारभ्याभिव्याहारयेदित्यारम्भात्। अन्यत्र स्वधानिनयनात् स्वधानिनयनं वर्जयित्वा। 'अमुष्मै स्वधा' इत्युक्त्वा यत्पिण्डोदकादि प्रेतेभ्यो दीयते तत्स्वधानिनयनम्। तदपि प्रेतकर्मणः समस्तस्याप्युपलक्षणम्। तथा च वसिष्ठः — 'अन्यत्रोदककर्मस्वधापितृसंयुक्तेभ्यः' (वाध. २।७) इति। एवं च पुत्रेऽनुपनीतेऽपि सति सपिण्डादिभिः प्रेतक्रिया न कर्तव्या, शास्त्रचोदनानर्थक्यप्रसङ्गो मा भूदिति।

*मभा.

(२) न च मन्त्रान्ग्राहयित्वा विनियोग इत्याह गौतमः — न ब्रह्मेति। स्वधानिनयनं प्रेतकर्म। तत्रानुपनीतस्यापि मन्त्राध्ययनमविरुद्धमित्यर्थः। ब्रह्मग्रहणं स्मृत्यङ्गाद्यनिषिद्धार्थम्। ×स्मृच. १।६६

(३) अक्षराभ्यासस्तु कर्तव्यः। तदाह मार्कण्डेयः — 'प्राप्ते तु पञ्चमे वर्षे ह्यप्रसुप्ते जनार्दने। षष्ठीं प्रतिपदं चैव वर्जयित्वा तथाऽष्टमीम्॥ रिक्तां पञ्चदशीं चैव सौरिभौमदिनं तथा। एवं सुनिश्चिते काले विद्यारम्भं तु कारयेत्॥' पमा. १।४४५

(४) अन्यत्रेत्यादिना पितृकर्मणि दाहादावनुपनीतस्यापि मन्त्रोच्चारणं भवतीति ज्ञाप्यते। तदपि कृतचूडस्य त्रिवर्षस्य वा ज्ञेयम्, 'अनुपेतोऽपि कुर्वीत मन्त्रवत्पैतृमेधिकम्। यद्यसौ कृतचूडः स्याद्यदि स्याच्च त्रिवत्सरः॥' इति सुमन्तूक्तेः। अत्र चूडा प्रथमवर्षातिरिक्तवर्षकृता ज्ञेया। 'कृतचूडस्तु कुर्वीत उदकं पिण्डमेव च। स्वधाकारं प्रयुञ्जीत वेदोच्चारं न कारयेत्॥' इति व्याघ्रवचनस्य सुमन्तुवचनाविरोधाय प्रथमवर्षकृतचूडविषयत्वात्, तथैव माधवादिभिरुक्तेः। यत्तु — 'असंस्कृतेन पत्न्या च ह्यग्निदानं समन्त्रकम्। कर्तव्यमितरत्सर्वं कारयेदन्यमेव हि॥' इति, तदपि प्रथमवर्षकृतचूडं प्रत्येवाग्निदानेन- (?दाने) मन्त्रप्रतिप्रसवार्थम्, लाघवात्, शेषस्याशक्तिप्राप्तार्थानुवादत्वसंभवात्; न त्वकृतचूडविषयम्, अत्यन्ताप्राप्तविशिष्टविधेरन्याय्यत्वात्। नापि सुमन्तुवाक्यविषयेऽप्यशक्तविषयम्, अग्निदानेऽश्रुतप्रतिनिधिनिरासपरत्वकल्पनाया अन्याय्यत्वात्। एतच्चौरसविषयम्, 'पित्रोरनुपनीतोऽपि विदध्यादौरसः सुतः। और्ध्वदेहिकमन्ये तु संस्कृताः श्राद्धकारकाः॥' इति स्कान्दात्, 'नाभिव्याहारयेद्ब्रह्म यावन्मौञ्जी न बध्यते। मन्त्राननुपनीतोऽपि पठेदेवैक औरसः॥' इति सुमन्तूक्तेश्च।

#संकौ. ११७

(५) उपनयनकर्मण आरम्भात्प्रागेव कुमारसंबन्धिकर्मोपयुक्तमन्त्रान्कुमारं पाठयेत्। इति (अन्यथा) कर्मकाले मन्त्राध्ययनासंभवेन तत्साध्यस्य कर्मणोऽप्यसंभवापत्तेः। न चाऽऽचार्येण तदा वाचनीय इति वाच्यम्, तादृशविधेरेवाभावात्। ⇧तदैव वाचयीत वा। इत्यनुपनीतधर्माः। ×संर. ९१०

मद्यनिषेधः अनुपनीतस्य

8[1]**मद्यं नित्यं ब्राह्मणः॥**

## लघुहारीतः

अनुपनीतस्य कामचारत्वात्
प्रायश्चित्ताभावः

[2]**गर्भस्थः पञ्चवर्षः स्यात्कामचारस्तु स स्मृतः। न भवेत्पतितस्तस्मात्प्रायश्चित्तं न विद्यते॥**

## बौधायनः

कर्मनियमाभावः अनुपनीतस्य

[3]**नास्य कर्म नियच्छन्ति किंचिदा मौञ्जिबन्धनात्। वृत्त्या शूद्रसमो ह्येष यावद्वेदेषु जायते॥ इति॥**

---

* गौमि., संप्र., आन., बाल. मभावत्। चमव्या. मभागतं पमावच्च।

× मुक्ता., विपा. स्मृचगतम्।

# संग. संकौगतम्।

⇧ सहेतुकं निषिद्धस्य तात्कालिकवाचनस्य पुनर्विधानमिदं प्रबलहेत्वनुक्तेर्न युज्यते।

× शेषं स्मृचगतम्।

8 अस्य व्याख्यानानि 'वर्णसामान्यधर्माः' इत्यस्मिन्प्रकरणे (वका. पृ. १६११) द्रष्टव्यानि।

(१) **गौध.** २।२६; शेषः स्थलादिनिर्देशः 'वर्णसामान्यधर्माः' इत्यस्मिन्प्रकरणे (वका. पृ. १६११) द्रष्टव्यः.

(२) **लहास्मृ.** ३५.

(३) **बौध.** १।३।७; **संप्र.** ३४८ कर्म नि (कर्माणि) द्वेदेषु (द्वेदे न).

(१) अथेदानीं ब्रह्मचर्यस्य उपनयनानन्तरारम्भं दर्शयितुमनुपनीतस्य शास्त्रचोदितकर्मानधिकारमाह — नास्येति। प्रायशो नियमरूपत्वाद्विधीनां नियच्छन्तीत्युक्तम्। तथा च गौतमः — 'यथोपपादमूत्रपुरीषो भवति' (गौध.२।४) इति। ननु किमिति तस्य धर्मानधिकारः? यावता सोऽपि त्रैवर्णिक एव। सत्यम्, तथापि वृत्त्या शूद्रसमो ह्येषः। वृत्तिः वर्तनम् आचारः। तथा च गौतमः — 'प्रागुपनयनात्कामचारवादभक्षः' (गौध.२।१) इति। वेदजननमस्योपनयनम्। ननु प्रागुपनयनाच्छूद्रसम इत्यत्रातिदेशान्मधुपानादिष्वप्यदोषः स्यात्। नैतदेवम्, शूद्रसम इत्यतिदेशान्न स्वयं शूद्रः, ततश्च न स्वजात्याश्रयधर्मनिवृत्तिर्भवति। जात्याश्रयश्च मधुपानादिप्रतिषेधः, 'मद्यं नित्यं ब्राह्मणः' (गौध. २।२६) इत्यादिस्मृतेः। अत्र पूर्वेणार्धेन विध्यभावमाह, उत्तरेण च प्रतिषेधाभावम्। बौवि.

(२) यद्यप्येतदनुपनीतप्रकरणेऽभिहितं तथापि व्रात्यानामनुपनीतत्वापरिहारेणैव व्रात्यत्वोक्त्या न तत्सामान्यधर्मनिवृत्तिः। बालत्वादिप्रयुक्तविशेषधर्मनिवृत्तिस्त्वास्ताम्। ततश्च व्रात्यानामपि अविरुद्धानुपनीतधर्मशूद्रधर्मसाधारणधर्मेष्वधिकारः सिध्यति।

संप्र. ३४९

## आपस्तम्बः हिरण्यकेशिधर्मसूत्रं च

होमानधिकारः अनुपनीतस्य

***[१]नानुपेतः॥**

अनुपनीतस्य प्रायत्याभावे मतभेदेन मर्यादाभेदाः

**[२]आऽन्नप्राशनाद्गर्भा नाप्रयता भवन्ति॥**

(१) अन्नप्राशनात्प्राक् गर्भाः बालाः नाप्रयता भवन्ति रजस्वलादिस्पर्शनेऽपि। गौतमस्तु अपां मार्जनादिकमिच्छति। यथाऽऽह — 'अन्यत्रापां मार्जनप्रधावनावोक्षणेभ्यः' (गौध. २।६)। *उ.

(२) प्रयता भवन्ति, प्रोक्षणेनेति शेषः।

संप्र. ३२६

(३) आऽन्नप्राशनात् आऽन्नप्राशनकालात् दिनसंख्यया षण्मासावधि। #आन. ४३२

**[१]आ परिसंवत्सरादित्येके॥**

यावत् संवत्सरो न परिपूर्यते तावन्नाप्रयता गर्भा इत्येके मन्यन्ते। ×उ.

**[२]यावता वा दिशो न प्रजानीयुः॥**

(१) यावद्दिग्विभागज्ञानं नास्ति तावन्नाप्रयता भवन्ति। ×उ.

(२) ⇧दिक्परिज्ञानं नाम आहूतस्य तत्संमुखीभवनं शब्दार्थपरिज्ञानं वा। 8तदेतद्व्याध्यादिनाऽशक्तस्याऽऽचमनस्नानाद्यसंभवे वेदितव्यम्। यत्तु 'अन्यत्रापमार्जनप्रधावनावोक्षणेभ्यः' (गौध. २।६) इति गौतमेन वयोवस्थाविशेषानादरेण सामान्यतोऽपमार्जनाद्युक्तम्, तदप्यस्मिन्नेव विषये द्रष्टव्यम्।

संप्र. ३२६

---

* 'जुहुयात्' इत्यनुवर्तते।

(१) **आध**. २।१५।१८; **हिध**. २७।३।५२.

(२) **आध**. २।१५।१९; **हिध**. २७।३।५३; **ब्रक**. ९९; **स्मृच**. १।६५; **प्रपा**. २११ (अन्नप्राशनात्प्रयता भवन्ति); **मुक्ता**. ८५, ८६; **आर**. ५७ प्रपावत्; **सिन्धु**. ९२५ (अन्नप्राशनात्प्रयतो भवति); **विपा**. २।४६८ (गर्भा०) नाप्रयता भवन्ति (प्रयतो भवति); **संप्र**. ३२६ (गर्भा०) नाप्रयता (प्रयता); **आन**. २३४, ४३२; **संर**. ९०८.

* मुक्ता., संर. उवत्।

# शेषम् उगतम्।

× मुक्ता., आन., संर. उवत्।

⇧ इदमत्र विचार्यम् — अन्नप्राशनस्य षष्ठमासकर्तव्यत्वादर्धसंवत्सरात्मकः प्रायत्यकालः प्रथमपक्षे उक्तः। तदधिको द्वितीयपक्षे संवत्सरात्मकः। अतस्तृतीयेऽस्मिन्पक्षे संवत्सराधिकः कालो दिक्परिज्ञानेन ग्रहीतुं युक्तः। आहूतस्य संमुखीभवनं तु संवत्सरेऽपि दृश्यते। अतोऽयं प्रथमकल्पो न युज्यते। शब्दार्थपरिज्ञानमिति द्वितीयकल्पेऽपि शब्दशब्दो दिक्शब्दपरो ग्राह्यः, कतिपयशब्दार्थपरिज्ञानस्य संवत्सरेऽपि सत्त्वात्।

8 'आऽन्नप्राशनात्०' इत्यादिसूत्रत्रयोक्तमित्यर्थः।

(१) **आध**. २।१५।२०; **हिध**. २७।३।५४; **ब्रक**. ९९; **स्मृच**. १।६५; **प्रपा**. २११ (आ संवत्सरात्प्रयता इत्येके); **मुक्ता**. ८५, ८६; **आर**. ५७ (परि०); **सिन्धु**. ९२५ आरवत्; **विपा**. २।४६८ (परिसं०); **संप्र**. ३२६ आरवत्; **आन**. २३४, ४३२; **संर**. ९०८ आ परिसं (आपदि सं).

(२) **आध**. २।१५।२१; **हिध**. २७।३।५५; **ब्रक**. ९९; **स्मृच**. १।६५; **प्रपा**. २११ (वा०); **मुक्ता**. ८५, ८६; **आर**. ५७ प्रजानीयुः (प्रज्ञायन्ते); **संप्र**. ३२६ जानीयुः (जानीत); **आन**. २३४, ४३२; **संर**. ९०८ प्रजा (प्रतिजा).

[1]**ओपनयनादित्यपरम्॥**

(१) उपनयनादर्वाक् नाप्रयता गर्भा इत्यपरदर्शनम्।

×उ.

(२) एवमाचार्येण पक्षचतुष्टयाभ्यनुज्ञानात् उपनयनपर्यन्तमशुद्धा न भवन्ति।

आन. ४३२-४३३

[2]**अत्र ह्यधिकारः शास्त्रैर्भवति॥**

(१) अत्रोपपत्तिः – अत्रेति। हि यस्मात् अत्र उपनयने सति विधिनिषेधशास्त्रैरधिकारो भवति।

×उ.

(२) अत्र ह्यधिकार इति हेतुबलादन्ये(?लात् आऽन्न०)इत्यादि पक्षत्रयं पूर्वपक्षत्वेनोपन्यस्तमित्युक्तं तद्भाष्ये। स्मृच. ११६५

[3]**सा निष्ठा॥**

उपनयनमपि परामृशतस्तच्छब्दस्य निष्ठाशब्दसामानाधिकरण्यात् स्त्रीलिङ्गता। सा निष्ठा तदुपनयनमवसानमनधिकारस्येति। ×उ.

[4]**स्मृतिश्च॥**

अस्मिन्नर्थे स्मृतिरपि भवति। 'उताऽ(?अहुतात्), ब्रह्मचारी, यथोपपादमूत्रपुरीषो भवति, नास्याऽऽचमनकल्पो विद्यते इति, प्रागुपनयनात्कामचारवादभक्षः' (गौध. २।२-५,१) इति गौतमः।

⇧उ.

× मुक्ता., संर. उवत्।

⇧ संर. उवत्।

(१) **आध.** २।१५।२२; **हिध.** २७।३।५६ दित्यपरम् (दित्येके); **ब्रक.** ९९ ओप (पुरोप); **स्मृच.** ११६५; **प्रपा.** २११ ओप (औप) परम् (परे); **मुक्ता.** ८५, ८६; **संप्र.** ३२६ ओप (पुरोप) परम् (परे); **आन.** २३४, ४३२; **संर.** ९०८ हिधवत्.

(२) **आध.** २।१५।२३; **हिध.** २७।३।५७ भवति (र्भवतीति); **ब्रक.** ९९; **स्मृच.** ११६५; **मुक्ता.** ८५, ८६; **आन.** ४३२; **संर.** ९०८ हिधवत्.

(३) **आध.** २।१५।२४; **हिध.** २७।३।५८; **ब्रक.** ९९; **मुक्ता.** ८५, ८६; **आन.** ४३२; **संर.** ९०८.

(४) **आध.** २।१५।२५; **हिध.** २७।३।५९; **ब्रक.** ९९; **मुक्ता.** ८५; **आन.** ४३२; **संर.** ९०८.

## वसिष्ठः

अनुपनीतस्य शूद्रसमत्वं श्रौतस्मार्तकर्मानधिकारश्च

[1]**हारीतोऽप्युदाहरति –**

**न ह्यस्य विद्यते कर्म किंचिदा मौञ्जिबन्धनात्।**
**वृत्त्या शूद्रसमो ह्येष यावद्वेदे न जायते॥इति॥**

वसिष्ठोऽपि शूद्रवृत्तित्वं तस्याऽऽह – न ह्यस्येति। वृत्तिः आचारः जीवनोपायश्च, 'वृत्तिर्वर्तनजीवने' इति त्रिकाण्डीस्मरणात्। संप्र. ३४८

[2]**अन्यत्रोदककर्मस्वधापितृसंयुक्तेभ्यः॥**

(१) प्रेतपित्राद्युदकतर्पणश्राद्धपितृसंयुक्तभूमिच्छत्रादिदानादन्यत्रेत्यर्थः। ×ब्रक. ९७

(२) उदकं तिलाञ्जलिदानादि। धर्मः आशौचिनां कटशयनादिः। स्वधा श्राद्धम् एकोद्दिष्टसपिण्डनमासिकवार्षिकादि। पितृसंयुक्तं शय्यादानवृषोत्सर्गादि, पितृसंयोगाविशेषात्। एतेभ्योऽन्यत्र एतानि विहायेत्यर्थः। तेन तेष्वनुपेतस्यापि मन्त्रोच्चारणं सिध्यति। तदपि कृतचूडस्य त्रिवर्षस्य वा द्रष्टव्यम्, 'अनुपेतोऽपि कुर्वीत

× स्मृसा. ब्रकगतम्।

(१) **वाध.** २।६; **ब्रक.** ९७ हारीतोऽप्युदाहरति (अथाप्युदाहरन्ति) ह्यस्य (ह्यस्मिन्) (इति०); **स्मृच.** ११६४ (हारीतोऽप्युदाहरति०) समो ह्येष यावद्वेदे न (समस्तावद्यावद्वेदेन) (इति०); **स्मृसा.** ४ (हारीतोऽप्युदाहरति०) पू.; **पमा.** १।४४४ (हारीतोऽप्युदाहरति०) समो ह्येष यावद्वेदे (समस्तावद्यावद्वेदी) (इति०); **प्रपा.** २१० स्मृचवत्; **मुक्ता.** ८६ (हारीतोऽप्युदाहरति०) मौञ्जि (मौञ्जी) समो ह्येष (समस्तावत्) (इति०); **विपा.** २।४६७ (हारीतोऽप्युदाहरति०) समो ह्येष (समस्तावत्) (इति०); **संप्र.** ३२९ हारीतोऽप्युदाहरति (अथाप्युदाहरन्ति) पू. : ३३० स्य विद्य (स्मिन्युज्य) शेषं सर्वं स्मृसावत् : ३४८ (हारीतोऽप्युदाहरति) समो ह्येष (समस्तावद्); **आन.** ४४१ (शूद्रसमो ज्ञेयो यावद्वेदे न जायते) एतावदेव; **संग.** ६२९ विपावत् : ६३० हारीतोऽप्युदाहरति (अथाप्युदाहरन्ति) पू. वचनक्रमो विपरीतः; **बाल.** १।११-१२ पृ. ३३ (हारीतोऽप्युदाहरति०) उत्तरार्धे (शूद्रवृत्त्या समस्तावद्यावद्वेदो न जायते॥) (इति०); **संर.** ९०९ द्वेदे (द्वेदो) शेषं विपावत्.

(२) **वाध.** २।७; **मभा.** २।९; **ब्रक.** ९७; **गौमि.** २।९; **स्मृसा.** ४ संयुक्ते (संबन्धे); **चमव्या.** १२ वृद्धवसिष्ठः; **मुक्ता.** ८६ त्रोदककर्म (त्रोदकर्म) संयुक्ते (संसक्ते); **संप्र.** ३२९ कर्म (धर्म); **संग.** ६३० संप्रवत्; **बाल.** १।१५ पृ. ७३ वृद्धवसिष्ठः.

मन्त्रवत्पैतृमेधिकम्। यद्यसौ कृतचूडः स्याद्यदि स्याच्च त्रिवत्सरः॥' इति सुमन्तुस्मरणात्। चूडा चात्र प्रथमवर्षातिरिक्तवर्षकृता द्रष्टव्या, 'पुत्रश्चोत्पत्तिमात्रेण संस्कुर्यादृणमोचनात्। पितरं नाऽऽब्दिकाच्चौलात्पैतृमेधेन कर्मणा॥' इति तस्यैव स्मरणात्। उत्पत्तिमात्रेण पुत्रः पैतृमेधेन कर्मणा पितरं न संस्कुर्यादित्यन्वयः, किंत्वाब्दिकाच्चौलात्, प्रथमवर्षकृतच्चौलादारभ्येत्यर्थः। अत एव कालादर्शः — 'चौलादाद्याब्दिकादर्वाङ्न कुर्यात्पैतृमेधिकम्।' इति। तदप्यमन्त्रकं कुर्यात्। तथा च व्याघ्रः — 'कृतचूडस्तु कुर्वीत उदकं पिण्डमेव च। स्वधाकारं प्रयुञ्जीत वेदोच्चारं न कारयेत्॥' इति। संग्रहेऽपि — 'कृतचूडोऽनुपेतस्तु पित्रोः श्राद्धं समाचरेत्। उदाहरेत्स्वधाकारं न तु वेदाक्षराण्यसौ॥' इति। इदं च वचनद्वयं प्रथमवर्षकृतविषयत्वेनैव घटते, अन्यथा पूर्वोदाहृतसुमन्तुवचनविरोधात्। एतेन 'नाभिव्याहारयेद् ब्रह्म स्वधानिनयनादृते।' (मस्मृ. २।१७२) इति मनुवाक्यमपि कृतचूडस्य त्रिवर्षस्य वा पैतृके मन्त्राधिकारं बोधयतीति व्याख्येयम्। यत्तु 'कुर्यादनुपनीतोऽपि, श्राद्धमेकोऽपि यः सुतः। पितृयज्ञाहुतिं पाणौ जुहुयान्मन्त्रपूर्वकम्॥' इति वचनम्, यच्च 'असंस्कृतेन पत्न्या, च ह्यग्निदानं समन्त्रकम्। कर्तव्यमितरत्सर्वं कारयेदन्यमेव हि॥' इति कात्यायनवाक्यम्, तदुभयमपि उक्तविषय एव योज्यम्। यत्तु 'न ह्यस्मिन्युज्यते कर्म किंचिदा मौञ्जिबन्धनात्।' (वाध. २।६) इति, तदपि पैतृकातिरिक्तविषयं द्रष्टव्यम्। अयं च पैतृकमन्त्राधिकारोऽनुपनीतस्यौरसस्यैव। तथा च स्कन्दपुराणम् — 'पित्रोरनुपनीतोऽपि विदध्यादौरसः सुतः। और्ध्वदेहिकमन्ये तु संस्कृताः श्राद्धकारिणः॥' इति। और्ध्वदेहिकम्, समन्त्रकमिति शेषः। तथा च सुमन्तुः — 'नाभिव्याहारयेद्ब्रह्म यावन्मौञ्जी न बध्यते। मन्त्राननुपनीतोऽपि पठेदेवैक औरसः॥' इति। और्ध्वदेहिके इति शेषः। *संप्र. ३२९-३३१

## विष्णुः

उपनयनपर्यन्तं शूद्रसमत्वमनुपनीतस्य

**'[1]प्राङ्मौञ्जीबन्धनाद्द्विजः शूद्रसमो भवति॥**

* संग. संप्रवत्।

(१) विस्मृ. २८।४०.

प्रागुपनयनादाह — प्राङ्मौञ्जीति। उपनयनं यावत् द्विजः त्रैवर्णिकः शूद्रसमः शूद्रवत् वेदानधिकारी भवति। न तु शूद्रधर्मा, अनुपनीतस्यापि नमोमन्त्रेण पञ्चयज्ञोपपत्तेः। न चोपनयनकालं लक्षयति, कालात्यये सर्वकर्माधिकारप्रसङ्गात्। तच्चेदं मुख्यगौणकालानुपनीतसाधारणम्, अनुपनीतत्वाविशेषात्। व्रात्यत्वं परमधिकम्, व्रात्यस्तोमाम्नानात्, 'श्रौतस्मार्ताधिकारी स्यान्नौपनायनिकं विना।' इति भृगुस्मरणात्। न चोपनयनेनैव व्रात्यत्वमप्यपैति, प्रायश्चित्तानन्तरमुपनयनविध्यनुपपत्तेः। तस्मात् ब्राह्मणपरिव्राजकवत् सामान्यविशेषाविमौ। तेन 'न त्वेवैनमग्निहवनबलिहरणयोर्नियुञ्ज्यात्। न ब्रह्माभिव्याहारयेदन्यत्र स्वधानिनयनात्' (गौध. २।८-९) इत्युभयसाधारणं सिद्धम्। वै.

## शङ्खः

उपनयनपर्यन्तं शूद्रसमत्वमनुपनीतस्य

**'वृत्त्या शूद्रसमास्तावद्विज्ञेयास्ते विचक्षणैः।**
**यावद्वेदे न जायन्ते द्विजा ज्ञेयास्ततः परम्॥**

## मनुः

उपनयनपर्यन्तं श्रौतस्मार्तकर्मानधिकारः

**'[2]न ह्यस्मिन् युज्यते कर्म किंचिदा मौञ्जिबन्धनात्॥**

(१) न ह्यस्मिन् प्राङ्मौञ्जिबन्धनात् अस्य माणवकस्य किंचित्कर्म श्रौतस्मार्तम् आचारप्रतिष्ठं वाऽदृष्टार्थं प्रयुज्यते न तत्राधिक्रियते, उपनयनसमनन्तरमेव सर्वैर्द्विजातिपुरुषधर्मैरधिक्रियते।

*मेधा.

(२) अयमर्थः — अजातस्य यथा न किंचिदस्ति कर्म, कर्मणः शरीरसापेक्षत्वात्; एवमनुपनीतस्यापि

* गोरा., मवि., ममु., मच., भाच. मेधागतम्।

(१) शंस्मृ. ११८.

(२) मस्मृ. २।१७१; स्मृच. ११६६ : ४१६ (=); हभा. १८८ न ह्यस्मिन् युज्यते (नास्मिन् ह्युत्तिष्ठते); पमा. १।७९०; प्रपा. २११ युज्यते (विद्यते); मुक्ता. ८६ : ८८ ह्यस्मिन् युज्यते (ह्यस्य विद्यते); आर. १६; संम. २० (न ह्यस्मिन्विद्यते कर्म यावन्मौञ्जी न बध्यते॥); विपा. २१४६९ युज्यते (विद्यते); संप्र. ३३० (=) : ३४८; नन्द. ह्यस्मिन् (ह्यस्य); भाच. विपावत् नन्दवच्च; सग. ६९७; बाल. ११९५ पृ. ७३ विपावत्; संर. १९१; सस्मृ. १०१ ह्यस्मिन् (ह्यस्य) शेषं विपावत्.

विहितं कर्म नास्ति। जातस्य तु यथाऽस्ति कर्म, एवमुपनीतस्यापि विहितं कर्मास्ति। नन्द.

शूद्रसमत्वात् वेदोच्चारणाभावः
सापवादः अनुपनीतस्य

**'नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते।**
**शूद्रेण हि समस्तावद्यावद्वेदे न जायते॥**

(१)आ मौञ्जिबन्धनादित्यनुवर्तते। यदि वा 'यावद्वेदे न जायते' इत्यर्थवादतोऽवधिपरिनिश्चयः। ब्रह्म वेदः, तन्नोच्चारयेत्। पितुरयमुपदेशः। यथा मद्यपानादिभ्यो रक्षेत्तथा वेदाक्षरोच्चारणात्। केचित्त्विममेव ब्रह्माभिव्याहारनिषेधं प्रागुपनयनादव्याकरणाद्यङ्गाध्ययने ज्ञापकं वर्णयन्ति। णिजर्थं व्याचक्षते — पित्रा न वाचनीयः, बाल्यात्तु कानिचिदव्यक्तानि वेदवाक्यानि स्वयं पठतो न दोषः। एतत्तु न युक्तम्। स्मृत्यन्तरे हि पठ्यते — 'न ब्रह्माभिव्याहरेत्' (गौध. २।९) इति। अर्थवादे च श्रुतं शूद्रेण हि समस्तावदिति। यथा शूद्रो दुष्यति तद्वदयमपीत्युक्तं भवति। स्वधाशब्देन पितृभ्यः कल्पितमन्नमिहोच्यते। अथवा पित्र्यं कर्म स्वधाशब्देनोच्यते। तन्निनीयते, त्यज्यते प्राप्यते येन मन्त्रेण स स्वधानिनयनः 'शुन्धन्तां पितरः' इत्यादिः, तं वर्जयित्वाऽन्यमन्त्रो नोच्चारयितव्यः। अनुपनीतेनोदकदाननवश्राद्धादि पितुः कर्तव्यमित्यस्मादेव प्रतीयते। पार्वणश्राद्धादौ त्वग्निमत्त्वाभावादनधिकारः। पिण्डान्वाहार्यके हि तद्वक्ष्यते (मस्मृ. ३।१२२)। तृतीये चैतन्निपुणमुपपादयिष्यामः। ⇧मेधा.

(२)एवं च प्रागुपनयनादध्ययनप्रतिषेधे सति प्रतिप्रसवमाह — नाभिव्याहारयेदिति। 8स्वधाशब्दाख्यमन्त्रसाधनं कर्म निनीयते पितॄन् प्रति प्राप्यते येन तत् स्वधानिनयनं पित्र्यं कर्म, तद्वर्जयित्वा न वेदमुदाहारयेत्। यस्मात् वेदनिमित्तं यावन्न जायते यावदुप(?दनुप)नीतस्तावत् शूद्रतुल्योऽसौ। एतदेव ज्ञापकमुपनीतपितृप्रसवे(? मनुपनीतपितृप्रशमे) सत्येकोद्दिष्टश्राद्धादिकरणाधिकारस्य। *गोरा.

(३)श्राद्धे नवश्राद्धादौ वेदोच्चारणमनुज्ञातम्। एतच्च कर्त्रन्तरासंभवे। शूद्रेण हीत्यन्यविषये वेदोच्चारणे तादृशप्रायश्चित्तलाभार्थम्। वेदे सावित्र्याम्। §मवि.

(४)शूद्रेण हि समः वेदं यथा शूद्रं न वाचयति, किंतु तूष्णीं कर्ता करोति, 'शूद्रोऽमन्त्रेण गृह्यते' इति स्मृतेः, एवम्, अस्य तदतिरिक्तवेदावाचकत्वात्। §मच.

(५)शूद्रसमत्वं चात्र मन्त्रवत्कर्मानधिकारहेतुः, हिशब्दश्रवणात्, 'चतुरुपभृति गृह्णाति न ह्यत्रानुयाजान् यक्ष्यन् भवति' इतिवत्; नार्थवादः 'तेन ह्यन्नं क्रियते' इतिवत्, 'यत्र यत्र शूद्रसधर्मत्वं तत्र तत्र मन्त्रवत्कर्मानधिकारः, यथा प्रतिलोमजादौ' इति व्याप्तिदर्शनात्। तथा च मनुः — 'शूद्राणां च सधर्माणः सर्वेऽपध्वंसजाः स्मृताः।' (मस्मृ. १०।४१) इति। शूद्रसमत्वं चास्य एकजातित्वेन स्पष्टमेवोक्तम् — यावद्वेदे न जायते इति। संप्र. ३४८

(६)यत एवं तस्मादनुपनीतं तन्नाभिव्याहारयेत् ब्रह्म पिता तत्समो वा। स्वधानिनयनात् स्वधानिनयनमन्त्रवत्पितृ(?मन्त्रात् पितृ)कर्ममन्त्रादिति यावत्। हि हेतौ। वेदे सावित्र्याम्। नन्द.

## वृद्धमनुः

अनुपनीतस्य पितृश्राद्धाधिकारः

**'कुर्यादनुपनीतोऽपि श्राद्धमेको हि यः सुतः।**
**पितृयज्ञाहुतिं पाणौ जुहुयाद्ब्राह्मणस्य सः॥**

---

⇧ ब्रक., संम. मेधागतम्।

8 श्राद्धदत्तान्नादिकमिति शेषः।

(१) **मस्मृ.** २।१७२; **मभा.** २।५ द्वेदे न (द्वेदेन) स्मृत्यन्तरम्; **ब्रक.** ९६; **स्मृच.** १।६६ पू.; **हभा.** १८८; **पमा.** १।७९० पू.; **प्रपा.** २११ पू.; **निप्र.** १।२३ पू.; **गप.** ३३३ पू.; **मुक्ता.** ८६ शूद्रेण हि (स्त्रीशूद्रेण) पूर्वोत्तरार्धे विपरीतक्रमे व्यवहिते च, उत्तरार्धं तु अनिर्दिष्टकर्तृकम्; **आर.** १६ जायते (युज्यते) उत्त.; **संप्र.** ३२७ उत्त. : ३३० पू. : ३४८; **शूक.** २३८ जायते (युज्यते); **संम.**२० पू.; **विपा.** २।४६९; **आन.** ४३९ येद्ब्रह्म (येच्च ब्रह्म) नादृते(नात्) पू. : ४४१; **संग.** ६९७; **बाल.** १।१५ पृ. ७३ पू.; **संर.** ९१० पू., सुमन्तुः; **सस्मृ.** १०१; **आभू.** २२ द्वेदे न जायते (द्वेदेन युज्यते) उत्त.; **संदी.** २।२८९ जायते (योजितः) उत्त. (=).

* ममु. गोरागतम्।

§ शेषं गोरागतम्।

(१) **स्मृच.** ४।६; **पमा.** १।७८९; **संप्र.** ३३० मेको हि (मेकोऽपि) यादृब्राह्मणस्य सः (यान्मन्त्रपूर्वकम्) (=); **संग.** ६३० संप्रवत्, वीरमित्रोदये मनुः.

## कात्यायनः

अनुपनीतस्य समन्त्रकपितृ-
दाहाधिकारः

[1]**असंस्कृतेन पत्न्या च ह्यग्निदानं समन्त्रकम्।**
**कर्तव्यमितरत्सर्वं कारयेदन्यमेव हि॥**

अयं च पैतृकमन्त्राधिकारोऽनुपेतस्यौरसस्यैव।

संग. ६३१

## यमः

शिशोर्वैश्वदेवादिशेषभक्षण-
निषेधः

[2]**वैश्वदेवं पुरोडाशमग्निमध्ये च यद्धुतम्।**
**यो ह्यद्याच्छिशुराकृष्य मात्रा रक्ष्यः प्रयत्नतः॥**

(१) वैश्वदेवं वैश्वदेवशिष्टम्। ♠स्मृच. १।६३

(२) इदं त्वतिबालविषयम्। §विपा. २।४६७

(३) आकर्षन्, भक्षणार्थमिति शेषः।

संप्र. ३२८

## दक्षः

अष्टमवर्षान्तपर्यन्तं कामचारकाम-
वादकामभक्षाः

[3]**जातमात्रः शिशुस्तावद्यावदष्टौ समा वयः।**
**स हि गर्भसमो ज्ञेयो व्यक्तिमात्रप्रदर्शकः॥**

समाः वर्षाणि। व्यक्तिमात्रेण, न तु कर्माधिकारि-(क)त्वेन। *ब्रक. ९७

$[1]**भक्ष्याभक्ष्ये तथाऽपेये वाच्यावाच्ये तथाऽनृते।**
**अस्मिन्काले न दोषः स्यात्स यावन्नोपनीयते॥**

(१) एतदभक्ष्यभक्षणापेयपानानुमननं मातापित्रोरुच्छिष्टमात्रविषयम्, न तु जातिभ्रंशकराद्यभक्ष्यापेयान्नपानविषयम्, संस्काराद्यनर्हत्वप्रसङ्गात्। दृश्यते हि स्मृतिषु प्राचुर्येण 'वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यं शरदि वैश्यम्' (बौगृ. २।५।६) इत्यादिनाऽनुपहतजात्याद्याश्रयणेनैवोपनयनादीति।

अप. १।१२ पृ. २८

(२) एतच्चाभक्ष्यभक्षणं महापातकहेतुव्यतिरिक्तविषयम्। अत एव स्मृत्यन्तरम् — 'स्यात्कामचारभक्ष्योक्तिर्महतः पातकादृते।' इति।

*पमा. १।४४४

(३) न चापेय इत्यनेन मद्यादिपाने न दोष इति शङ्कनीयम्, 'वर्जयेत्' इत्यनुवृत्तौ 'नित्यं मद्यं ब्राह्मणः' इति गौतमस्मरणात् (२।२६)। तत्र च नित्यग्रहणमनुपनीतस्यापि प्रतिषेधार्थम्। न च प्रागुपनयनात् ब्राह्मण्यमेव नास्तीत्यपि शङ्कनीयम् — 'ब्राह्मण्यां ब्राह्मणेनैव ह्युत्पन्नो ब्राह्मणः स्मृतः।' (नरसिंह. ५७।१९) सवर्णेभ्यः सवर्णासु जायन्ते हि स जातयः'। (यास्मृ. १।९०) इति हारीतयाज्ञवल्क्याभ्यामुत्पत्तिमात्रेण साजात्यस्याभिधानात् 'गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनयनम्'(मस्मृ. २।३६) इति मनुना ब्राह्मणस्य सत उपनयनविधानाच्च।

मुक्ता. ८५

---

♠ मुक्ता. स्मृचवत्।

§ संग. विपावत्।

* स्मृसा. ब्रकवत्।

(१) **संप्र.** ३३०; **संग.** ६३०-६३१ दानं (दाहः).

(२) **स्मृच.** १।६३ मध्ये च (मध्याच्च); **प्रपा.** २१० तृतीयचरणे (प्रमादाच्छिशुराकर्षन्) (-); **मुक्ता.** ८६ यो ह्यद्या (यद्द्या) शेषं स्मृचवत्; **विपा.** २।४६७ सर्वं प्रपावत्; **संप्र.** ३२८ प्रपावत्, जातूकर्ण्यः; **संग.** ३२९ देवं पु (देवपु) शेषं प्रपावत्, वीरमित्रोदये; **संर.** ९०९ च (तु) मात्रा (पित्रा) शेषं सर्वं प्रपावत्.

(३) **दस्मृ.** १।३; **अप.** १।१२ पृ. २८ वयः (गतः) दर्शकः (काशितः); **ब्रक.** ९७ दर्शकः (दर्शितः); **स्मृसा.**४; **मुक्ता.** ८५ दष्टौ (दष्ट) स हि (सोऽपि) व्यक्ति (गर्भ) दर्शकः (काशितः); **आन.** ४३३ दष्टौ (दष्ट) स हि (सोऽपि) दर्शकः (काशितः).

$ अस्य स्मृचव्याख्यानं 'प्रागुपनयनात्कामचारवादभक्षः' इति गौतमवचने (वका. पृ. १९१६) द्रष्टव्यम्।

* प्रपा. पमावत्।

(१) **दस्मृ.** १।४; **अप.** १।१२ पृ. २८; **स्मृच.** १।६३ विष्णुपुराणम्; **पमा.** १।४४४ ऽपेये (पेये) विष्णुपुराणे; **प्रपा.** २१० विष्णुपुराणम्; **निप्र.** १।२३ ऽपेये (पेये) अस्मिन् (तस्मिन्) दोषः स्यात् (दोषोऽस्ति); **मुक्ता.** ८५; **संप्र.** ३२७ दोषः स्यात् (दोषोऽस्ति) विष्णुपुराणम्; **संकौ.** ११७ विष्णुपुराणम्; **आन.** ४३३ ऽपेये (पेये); **संग.** ६२९ सर्वं संप्रवत्; **बाल.** १।१२ पृ. ३३ तृतीयचरणे (तावत्कालं न दोषोऽस्ति) विष्णुपुराणे; **संर.** ९०९ सर्वं पमावत्.

अनुपनीतस्य गन्धलेपक्षयमात्रकरी शौचक्रिया

**[1]न यावदुपनीयन्ते द्विजा शूद्रास्तथाऽङ्गनाः।
गन्धलेपक्षयकरं शौचमेषां विधीयते॥**

## शातातपः

बालशौचं पालककर्तव्यम्

**[2]बालस्याऽऽपञ्चमाद्वर्षाद्रक्षार्थं शौचमाचरेत्॥**

## वृद्धशातातपः

शिशुबालकुमारलक्षणानि तेषामस्पृश्यस्पर्शे शुद्धिकारणानि च

**[3]प्राक्चूडाकरणाद्बालः प्रागन्नप्राशनाच्छिशुः।
कुमारकस्तु विज्ञेयो यावन्मौञ्जीनिबन्धनम्॥**

×स च त्रिविधः — शिशुर्बालः कुमारश्चेति। तल्लक्षणान्याह वृद्धशातातपः — प्रागिति।

*संप्र. ३२६

**[4]शिशोरभ्युक्षणं प्रोक्तं बालस्याऽऽचमनं स्मृतम्।
रजस्वलादिसंस्पर्शे स्नातव्यं तु कुमारकैः॥**

(१) तस्यानुपनीतस्य चण्डालादिस्पृष्टस्यापि स्पर्शनान्न स्नानम्। इदं च षष्ठवर्षात्प्राक्, ऊर्ध्वं तु भवत्येव, 'बालस्य पञ्चमाद्वर्षाद्रक्षार्थं शौचमाचरेत्' इति स्मृतेः। कामचारादिकेऽप्येवम्, 'ऊनैकादशवर्षस्य पञ्चवर्षात्परस्य च। चरेद्गुरुः सुहृच्चैव प्रायश्चित्तं विशुद्धये॥' इति स्मृतेः। गभा. १९४

(२) तेषां चास्पृश्यस्पर्शनादौ शुद्धिभेदमप्याह स एव — शिशोरिति। बालस्याऽऽचमनं नाम सकृज्जलभक्षणमात्रम्, न सेतिकर्तव्यताकम्, 'नास्याऽऽचमनकल्पो विद्यते' (गौध. २।५) इति गौतमस्मरणात्। कल्पः इतिकर्तव्यता 'त्रिः प्राश्यापो द्विरुन्मृज्य' (यास्मृ. १।२०) इत्यादिका। सकृत्त्वं च स्त्रीशूद्रसमानधर्मत्वेन, 'शुध्येरन् स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः।' (यास्मृ. १।२१) इति योगिस्मरणात्। शूद्रसमानधर्मत्वं च वेदाध्ययनानधिकारात्, 'शूद्रेण हि समस्तावद्यावद्वेदे न जायते' (मस्मृ. २।१७२) इति मनुस्मरणात्। रजस्वलादीत्यादिशब्देन अस्पृश्यानां म्लेच्छचण्डालसूतिकादीनां ग्रहणम्। कुमाराणां स्नानं नाम सर्वाङ्गजलसंयोगमात्रम्, नेतिकर्तव्यता, मन्त्राद्यभावात्, 'स्नानं सर्वाङ्गसंयोगो वारिणा परिकीर्तितः।' इति स्मरणात्। *संप्र. ३२६-३२७

## पराशरः

शिशुबालकुमारलक्षणानि

**[1]शिशुरा दन्तजननादा चौलाद्बालकः स्मृतः।
कुमारः स तु विज्ञेयो बुधैरा मौञ्जिबन्धनात्॥**

---

× अनुपनीत इत्यर्थः।

* संग. संप्रवत्।

(१) **सस्मृ.** १३५.

(२) **मभा.** २।७ शौचमाचरेत् (शौचं कुर्यात्) स्मृत्यन्तरम्; **गौमि.** २।७ स्याऽऽ पञ्च (स्य पञ्च) स्मृत्यन्तरम्; **गभा.** १९४ सर्वं गौमिवत्; **मुक्ता.** ८६ (बालानां पञ्चमवर्षाद्रक्षार्थं शौचं कुर्यात्); **आर.** १४ सर्वं गौमिवत्; **सिन्धु.** ९२५ सर्वं गौमिवत्; **शूक.** १०८ माचरेत् (मादिशेत्) शेषं गौमिवत्, निर्णयसिन्धौ.

(३) **अप.** १।१२ पृ. २७-२८ रकस्तु (रस्तु स); **ब्रक.** ९८ रकस्तु (रः स तु); **हभा.** १८८ अपवत्; **स्मृसा.** ४ अपवत् (-); **प्रपा.** २११ स्मृतिदीपिकायाम्; **आपा.** ४५ प्रदीपिकायाम्; **निप.** १२९ अपवत् (-); **निप्र.** १।२४ ब्रकवत्; **गभा.** १९४ अपवत्; **आर.** ५७ स्मृतिप्रदीपिकायाम्; **सिन्धु.** ९२५; **शूक.** १०८ निबन्धनम् (निबध्यते) शेषं ब्रकवत्; **संम.** २० निबन्धनम् (न बध्यते) स्मृतिदीपिकायाम्; **विपा.**२।४६८ स्मृतिदीपिकायाम्; **संप्र.** ३२६; **संकौ.** ११७ स्मृतिदीपिकायाम्; **संग.** ६२८; **बाल.** १।१२ पृ. ३३; **संर.** ९०९ स्मृतिदीपिकायाम्; **इन्दु.** ५२ पूर्वार्धे (शिशुस्त्वन्नप्राशनात्प्रागाचौलं बालकः स्मृतः।) आचारप्रदीपे.

(४) **समु.** ४५ स्नातव्यं तु कुमारकैः (स्नानमेव कुमारके) उत्त., सुमन्तुः; **अप.** १।१२ पृ. २८; **ब्रक.** ९९; **हभा.** १८८; **स्मृसा.** ४ संस्पर्शे (स्पर्शे तु) (-); **प्रपा.** २११ चतुर्थचरणे (स्नानमेव कुमारके) स्मृतिदीपिकायाम्; **आपा.** ४५ प्रपावत्, प्रदीपिकायाम्; **निप.** १२९ (-); **निप्र.** १।२४; **गभा.** १९४ प्रपावत्; **मुक्ता.** २६९, प्रपावत् क्रमेण पराशरः, पराशरस्मृतौ नोपलभ्यते; **आर.** ५७ प्रपावत्, स्मृतिप्रदीपिकायाम्; **सिन्धु.** ९२५ प्रपावत्; **शूक.** १०८ रजस्वला (जलस्थला) शेषं प्रपावत्; **संम.** २० चतुर्थचरणे (स्नानमेव विधीयते) स्मृतिदीपिकायाम्; **विपा.** २।४६८ प्रपावत्, स्मृतिदीपिकायाम्; **संप्र.** ३२६; **संकौ.** ११७ सर्वं प्रपावत्; **संग.** ६२८; **बाल.** १।१२ पृ.३३ प्रपावत्; **संर.** ९०९ संस्पर्शे (स्पर्शे तु) शेषं प्रपावत्, स्मृतिदीपिकायाम्; **इन्दु.** ५२ प्रपावत्, आचारप्रदीपे.

* संग. संप्रगतम्।

(१) **समु.** ४५ रः स तु (रकस्तु) क्रमेण सुमन्तुः; **मुक्ता.** २६९ क्रमेण पराशरः; **आन.** २३४ तु (च) क्रमेण पराशरः.

## सुमन्तुः

कृतचूडस्य त्रिवत्सरस्य वा समन्त्रकपितृ-
मेधाधिकारः

**$ [1]अनुपेतोऽपि कुर्वीत मन्त्रवत्पैतृमेधिकम्।**
**यद्यसौ कृतचूडः स्याद्यदि स्याच्च त्रिवत्सरः॥**
**[2]पुत्रश्चोत्पत्तिमात्रेण संस्कुर्यादृणमोचनात्।**
**पितरं नाऽऽब्दिकाच्चौलात्पैतृमेधेन कर्मणा॥**

चूडा चात्र प्रथमवर्षातिरिक्तवर्षकृता द्रष्टव्या, 'पुत्रश्चोत्पत्तिमात्रेण' इति तस्यैव स्मरणात्। उत्पत्तिमात्रेण पुत्रः पैतृमेधेन कर्मणा पितरं न संस्कुर्यादित्यन्वयः, किन्त्वाब्दिकाच्चौलात्, प्रथमवर्षकृताच्चौलादारभ्येत्यर्थः। अत एव कालादर्शः – 'चौलादाद्याब्दिकादर्वाङ्न कुर्यात्पैतृमेधिकम्।' इति।

संप्र. ३३०

**[3]नाभिव्याहारयेद्ब्रह्म यावन्मौञ्जी न बध्यते।**
**मन्त्राननुपनीतोऽपि पठेदेवैक औरसः॥**

और्ध्वदेहिके इति शेषः। σसंप्र. ३३१

## व्याघ्रः

कृतचूडस्यामन्त्रकपितृमेधाधिकारः

**[4]कृतचूडस्तु कुर्वीत उदकं पिण्डमेव च।**
**स्वधाकारं प्रयुञ्जीत वेदोच्चारं न कारयेत्॥**

मातापित्रोरिति शेषः। स्मृच. ४।६

## आश्वलायनः

अनुपनीतस्य पितृमेधे वेदमन्त्रोच्चारणे
च नाधिकारः

**[5]पित्रोरनुपनीतो यः पुत्रः संस्थितयोरपि।**
**न कुर्याद्दहनाद्यास्तत्क्रियाः सर्वाः स बालकः।**
**कारयेदनुपेतोऽपि ज्ञातिना स्वेन तत्सुतः॥**
**अनग्रजः क्रियाः सर्वाः पित्रोः संस्थितयोः स्पृशन्।**
**सोऽयं च प्रक्षिपेच्छाखां स्वधां चैवोदकक्रियाः।**
**एकोद्दिष्ठ(? ष्टं) बलिं चैव द्वादशेऽह्नि समापयेत्॥**
**साग्रजस्त्वनुपेतो यः स ज्येष्ठानुगतः सदा।**
**समापयेत्तेन सह प्रतिच्याब्दावधिर्भवेत्(?)॥**
**नैव द्विजत्वमप्राप्तो जपेन्मन्त्रान्कदाचन।**
**वैदिकोस्मृतयोर्विप्रो(? वैदिकान्मृतयोः पित्रो)-**
**रप्युपस्थानकर्मणि॥**

## जातूकर्ण्यः

अनुपनीतमद्यपानप्रायश्चित्तं पित्रादिभिः
कार्यम्

**[1]अनुपेतस्तु यो विप्रो मद्यं मोहात्पिबेद्यदि।**
**तस्य कृच्छ्रत्रयं कुर्यान्माता भ्राता पिताऽथवा॥**

महापातके तु पित्रादिभिः प्रायश्चित्तं कर्तव्यमित्युच्यते पराशरप्रायश्चित्तकाण्डे जातूकर्ण्येन – अनुपेतस्त्विति।

*प्रपा. २१०

## षट्त्रिंशन्मतम्

अनुपनीतस्य कामचारादयो
महापातकादन्यत्र

**[2]स्यात्कामचारभक्षोक्तिर्महतः पातकादृते॥**

चतुर्णां ब्रह्महत्यादीनामेव महापातकत्वेनोपदेशात् तेषु कृतेषु अनुपनीतोऽपि प्रायश्चित्ती भवति। इदम्

---

$ अस्य संकौव्याख्यानं 'न ब्रह्माभिव्याहारयेत्' इति गौतमवचने (वका. पृ. १९२१) द्रष्टव्यम्।

σ संग. संप्रवत्।

(१) **पमा.** १।७९०; **गप.** ३३३ पेतोऽपि (पनीतोऽपि) यद्यसौ (यदसौ) स्याच्च (स्यान्न); **शूक.** ५४; **संप्र.** ३२९; **संकौ.** ११७; **संग.** ६३० त्रिवत्सरः (त्रिवर्षकः); **संर.** ९१०.

(२) **संप्र.** ३२९-३३०.

(३) **संप्र.** ३३१; **संकौ.** ११७; **संग.** ६३१; **संर.** ९१०.

(४) **स्मृच.** ४।६ चूडस्तु (चौलस्तु); **संप्र.** ३३०; **संकौ.** ११७; **संग.** ६३० व्याघ्रपादः.

(५) **आश्वस्मृ.** ३-४.

* विपा. प्रपावत्।

(१) **मपा.** ८१८ विप्रो (बालो) पिताऽथवा (तथा पिता); **प्रपा.** २१० उत्तरार्धे (तस्य कृच्छ्रत्रयं कार्यं पित्रा भ्रात्रा तथैव च॥); **विपा.**२।४६७ पेतस्तु (पनीतस्तु) उत्तरार्धे (तस्य कृच्छ्रत्रयं कार्यं पित्रा भ्रात्राऽपि वा तथा॥) पाराशरः; **संप्र.** ३२८ (=); **संग.** ६२९ विधानपारिजाते पाराशरः; **बाल.** २।१२ पृ. ३९ पेतस्तु (पनीतस्तु) विप्रो (बालो); **संर.** ९०९ उत्तरार्धं विपावत्; **कृभ.** ९२६ उत्तरार्धे (तस्य कृच्छ्रत्रयं कार्यं पित्रा भ्रात्राऽपि चान्यतः॥).

(२) **स्मृच.** १।६३ स्मृत्यन्तरम्; **पमा.** १।४४४ भक्षो (भक्ष्यो) स्मृत्यन्तरम्; **प्रपा.** २१० स्मृत्यन्तरम्; **चमव्या.** १२ पमावत्, स्मरणम्; **मुक्ता.** ८५ चार + (वाद) स्मरणम्; **संम.** २०; **विपा.** २।४६७ स्मृत्यन्तरम्; **संप्र.** ३२८ स्मृत्यन्तरम्; **संकौ.** ११७ सर्वं पमावत्; **आन.** ४३५ स्मरणम्; **संग.** ६२९ सर्वं पमावत्; **बाल.** १।१५ पृ. ७२ स्मरणम्; **संर.** ९०९ स्मृत्यन्तरम्; **कृभ.** ९२५-९२६ स्मृत्यन्तरम्.

'आषोडशाद्ब्राह्मणस्य' (आगृ. १।१९।५) इति पञ्चदशवर्षपर्यन्तमापदादिना अनुपनीतस्यापि समानम्। ब्रह्महत्या सुरापानं स्तेयं च अनुपनीतस्य एकादशान्यूनवयस्कस्यापि भवति। तदूर्ध्वमेतत्त्रयं गुरुदारगमनाद् अपि भवति। तत्र सर्वत्र प्रायश्चित्तविधानं तु मिताक्षरायामुक्तम् – 'अशीतिर्यस्य वर्षाणि बालो वाऽप्यूनषोडशः। प्रायश्चित्तार्धमर्हन्ति स्त्रियो रोगिण एव च॥ ऊनैकादशवर्षस्य पञ्चमाब्दात्परस्य च। चरेद्गुरुः सुहृद्वाऽपि प्रायश्चित्तं विशुद्धये॥ अतो बालतरस्यास्य नापराधो न पातकम्। राजदण्डोऽपि नास्यातः प्रायश्चित्तं च नेष्यते॥' इति। एतद्वचनत्रये प्रथमवचनमनुपनीतोपनीतादिसाधारणम्। द्वितीयवचनं तु बाल्यात्स्वस्यासामर्थ्यात् पित्रादिश्चरेदिति विधत्ते। तत्र प्रायश्चित्तेयत्ता मिताक्षरायां नोक्ता। तत्र 'पादो बालेषु दातव्यः' इति वचनं योजनीयम्। तृतीयवचने अतो बालतरस्येति पञ्चमाब्दादधो बालतरत्वविधानात्तदूर्ध्वं बालत्वकल्पनं न्याय्यम्। अतः पञ्चमाब्दान्न्यूनस्य न प्रायश्चित्तादिकल्पनमुचितम्।

आन. ४३६-४३७

## मार्कण्डेयपुराणम्

अनुपनीतस्य कामचारकामवाद-
कामभक्षाः

**[1]यावत्तु नोपनयनं क्रियते वै द्विजन्मनः।**
**कामचेष्टोक्तिभक्षस्तु तावद्भवति पुत्रक॥**

## स्कन्दपुराणम्

अनुपनीतस्य कामभक्षः पित्रोरौर्ध्व-
देहिकाधिकारश्च

**[2]जातमात्रः शिशुस्तावद्यावदष्टौ समाः स्मृताः।**
**भक्ष्याभक्ष्येषु नो दुष्येद्यावन्नैवोपनीयते॥**
**[3]पित्रोरनुपनीतोऽपि विदध्यादौरसः सुतः।**
**और्ध्वदेहिकमन्ये तु संस्कृताः श्राद्धकारिणः॥**

और्ध्वदेहिकम्, समन्त्रकमिति शेषः।

संप्र. ३३१

## ब्रह्मपुराणम्

अनुपनीतस्य पित्रोरुच्छिष्टस्य भक्षणे
दोषाभावः

**[1]मातापित्रोरथोच्छिष्टं बालो भुञ्जन्न दुष्यति॥**

(१) एतेन अन्यदीयोच्छिष्टभोजने दोषः।

स्मृसा. ४

(२) 'मातापित्रोः०' इति ब्राह्मवचनं अनुपनीतपरम्, तथैवाऽऽचारदर्शनात्। गप. ४१०

(३) पित्राद्युच्छिष्टं भोज्यम्। 'पितुर्ज्येष्ठस्य भ्रातुरित्यप्येके' (आध. १।४।११) इति आपस्तम्बस्मृतेश्च।

आर. १०७

## संग्रहकारः (स्मृतिसंग्रहः)

कृतचूडानुपनीतस्य वेदमन्त्ररहिते
पितृश्राद्धेऽधिकारः

**[2]कृतचूडोऽनुपेतस्तु पित्रोः श्राद्धं समाचरेत्।**
**उदाहरेत्स्वधाकारं न तु वेदाक्षराण्यसौ॥**

## स्मृत्यर्थसारः

अनुपनीतस्योच्छिष्टभक्षणे दोषाभावः, कामचारकाम-
वादकामभक्षाः महापातकादन्यत्र, अस्पृश्यस्पर्शे
शुद्धिकारणानि, पितृश्राद्धादन्यत्र
वेदमन्त्रानधिकारः

**[3]उपनयनात्प्राग्बाला उच्छिष्टादावप्रयता न स्युः॥**
**[4]कामचारकामवादकामभक्षाः स्युर्महापातकवर्जम्॥**

---

(१) **मार्क.** २५।१०.

(२) **स्कन्द.** ४।४०।६५.

(३) **संप्र.** ३३१; **संकौ.** ११७ कारिणः (कारकाः); **संग.** ६३१; **संर.** ९१० संकौवत्.

---

(१) **अप.** १।१२ पृ. २८ न्न दुष्यति (न्भवेत्सुखी); **ब्रक.** ९९ न्न दुष्यति (न्भवेत्सुखी); **स्मृसा.** ४ अपवत्; **गप.** ४१० ब्रकवत्; **आर.** १०७ बालो (कलौ) शेषम् अपवत्, चन्द्रिकायामादिपुराणात्; **संप्र.** ३२७ अपवत्; **संग.** ६२९ अपवत्.

(२) **संप्र.** ३३०; **संग.** ६३०.

(३) **स्मृसार.** ३; **हभा.** १८८ (उपनयनात्प्राग्बाला०) क्रमेण गौतमः; **गभा.** १९४ (उच्छिष्टतादावप्रयतमनस्कः) एतावदेव, क्रमेण गौतमः; **मुक्ता.** ८६ (बाला०).

(४) **स्मृसार.** ३; **हभा.** १८८ (महापातकवर्जम्) एतावदेव, क्रमेण गौतमः; **गभा.** १९४ सर्वं गभावत्; **मुक्ता.** ८६ (महापातकवर्जम्) एतावदेव.

[1]तेषां चण्डालादिस्पर्शे सचेलस्नानम्॥

[2]प्रागन्नप्राशनादभ्युक्षणम्॥

प्राक्चौलादाचमनम्।

पश्चात्स्नानमित्येके॥

[3]पित्रोः स्वधानिनयनादृते मन्त्रान्न ब्रूयुः॥

## अनिर्दिष्टकर्तृकवचनानि

### अकृतचूडस्य पितृमेधानधिकारः

[4]चौलादाद्याब्दिकादर्वाङ्न कुर्यात्पैतृमेधिकम्॥

(१) स्मृसार. ३; मुक्ता. ८६.

(२) स्मृसार. ३; मुक्ता. ८६; आन. ४४०. पश्चात्स्नानमित्येके (चौलात्परं स्नानमित्यन्ये).

(३) स्मृसार. ३; मुक्ता. ८६ दृते + (च).

(४) संप्र. [illegible])

तदपि अमन्त्रकं कुर्यात्। संप्र. ३३०

### अगृहीताक्षरस्यापि पितृसंस्काराधिकारः

[1]अगृहीताक्षरः पुत्रः पित्रोः संस्कारमर्हति॥

अन्यस्यासंभवे सर्वं पित्र्यं कर्म तदानीं मन्त्रान् ग्राहयित्वा असौ कारयितव्यः। गौमि. २१९

### पापिनोऽनुपनीतस्य चतुर्थांशः प्रायश्चित्तम्

[2]पादो बालेषु दातव्यः सर्वपापेष्वयं विधिः॥

(१) गौमि. २१९; यमव्या. १२ स्मृत्यन्तरम्; बाल. ११९ पृ. ७१ स्मृत्यन्तरम्.

(२) संप्र. ३२८; आन. ४३७ (पादो बालेषु दातव्यः) एतावदेव.

# आश्रमविचारः

✵✵✵

## आश्रमविचारः

### *पराशरमाधवः

अथ वानप्रस्थाश्रमो निरूप्यते। ननु केचन गार्हस्थ्यव्यतिरिक्तमाश्रमान्तरं नेच्छन्ति उदाहरन्ति च तत्र गौतमस्मृतिम् — 'ऐकाश्रम्यं त्वाचार्याः प्रत्यक्षविधानाद् गार्हस्थ्यस्य।' (गौध. ३।३६) इति। आचार्यास्तु गार्हस्थ्यमेक एवाऽऽश्रमः, नान्यः कश्चिदस्तीति, मन्यन्ते। हेतुं चाऽऽचक्षते — गार्हस्थ्यस्य प्रत्यक्षश्रुतिषु विधानादितरस्य तदभावादिति। तथाहि — बह्वृचाः 'अग्निमीळे' (ऋसं. १।१।१) इत्यारभ्य मन्त्रब्राह्मणात्मके कृत्स्नेऽपि वेदे हौतृकर्तव्यमेवाऽऽमनन्ति, यजुर्वेदिनश्च 'इषे त्वा' (तैसं. १।१।१।१) इत्यादिना अध्वर्युकर्तव्यम्, सामगा अपि 'अग्न आ याहि' (सासं. १।१।१) इत्यादिनोद्गातृकर्तव्यम्। होत्रादयश्च गृहस्था एव। तथा चाधीयमानेषु प्रत्यक्षवेदेषु गृहस्थकर्तव्याभिधानेन तदाश्रमविधिः परिकल्प्यते, न त्वेवमितराश्रमविधिकल्पकं किंचित् पश्यामः। अत एव 'यावज्जीवमग्निहोत्रं जुहोति' इति श्रुतिः कृत्स्नं पुरुषायुषं गृहिकर्मस्वेव विनियुङ्क्ते। श्रुत्यन्तरं च — 'एतद्वै जरामर्यं सत्रं यदग्निहोत्रम्। जरया वा ह्येवास्मान्मुच्यते(?) मृत्युना वा' (शब्रा. १२।४।१।१) इति। न चैवं सति कथं ब्रह्मचर्याश्रमाङ्गीकारः? इति शङ्कनीयम्; नैष्ठिकस्य पक्षकोटिनिक्षिप्तत्वादुपकुर्वाणकस्य प्रतिलोम आश्रमित्वाभावात्। यदा कर्मित्वेनाभिमतयोर्ब्रह्मचारिवानप्रस्थयोरीदृशी गतिः तदा कैव कथा कृत्स्नकर्मत्यागिनो यतेः? तस्मात् गार्हस्थ्यमेक एवाऽऽश्रमः इत्याचार्याणां पक्षः।

अत्रोच्यते — अस्ति हि चतुर्णामाश्रमाणां प्रत्यक्षश्रुतिविधानम्। तथा च जाबाला आमनन्ति — 'ब्रह्मचर्यं समाप्य गृही भवेत्। गृही भूत्वा वनी भवेत्। वनी भूत्वा प्रव्रजेत्।' (जाउ. ४) इति। आचार्यास्तु रागिणमभिप्रेत्य तस्योर्ध्वरेतःसु नैष्ठिकब्रह्मचर्यादिषु त्रिष्वाश्रमेष्वनधिकारं मन्यमाना गार्हस्थ्यमेव वर्णयामासुः। यत्तु कृत्स्नेऽपि वेदे गृहस्थधर्मस्यैवाऽऽम्नानमित्युक्तम्, तदयुक्तम्, वानप्रस्थस्यापि सदारस्याग्निहोत्रादिसद्भावात्। नैष्ठिकब्रह्मचारिधर्मस्तु छन्दोगैः पठ्यते — 'ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्' (छाउ. २।२३।१) इति। उपकुर्वाणकधर्माः सर्वशाखासूपनयनप्रकरणेषु प्रसिद्धाः, यतिधर्मश्चोपनिषद्भागेषु। असौ यावज्जीवादिश्रुतिः कामिविषयत्वेनाऽऽश्रमान्तराणि न तथाऽपलपितुं शक्यन्ते। साधितश्चोत्तरमीमांसायां चत्वार आश्रमाः। तस्मात् क्रमप्राप्तो वानप्रस्थाश्रमः प्रस्तूयते।

पमा. १।५२३-५२४

अथ चतुर्थाश्रमो निरूप्यते। तत्र मनुः — 'वनेषु तु विहृत्यैवं तृतीयं भागमायुषः। चतुर्थमायुषो भागं त्यक्त्वा सङ्गान् परिव्रजेत्॥' (मस्मृ. ६।३३) इति। याज्ञवल्क्योऽपि — 'वनाद्गृहाद्वा कृत्वेष्टिं सर्ववेदसदक्षिणाम्। प्राजापत्यां तदन्ते तानग्नीनारोप्य चाऽऽत्मनि॥ अधीतवेदो जपकृत्पुत्रवानन्नदोऽग्निमान्। शक्त्या च यज्ञकृन्मोक्षे मनः कुर्यात्तु नान्यथा॥' (यास्मृ. ३।५६-५७) इति। आश्रमचतुष्टयसमुच्चयमभिप्रेत्य वनान्मोक्षे मनः कुर्यादित्युक्तम्। आश्रमत्रयसमुच्चयाभिप्रायेण गृहाद्वेति पक्षान्तरोपन्यासः। ननु अत्रापि चतुष्टयसमुच्चय एवाभिप्रेयताम्, पारिव्राज्यानन्तरं वानप्रस्थ्यस्यानुष्ठातुं शक्यत्वात्। नैवम्, ब्रह्मचर्यादीनां चतुर्णामाश्रमाणा-

* सामान्यतः साकल्येन विषयबोधार्थं पराशरमाधवादिगता आश्रमविषयका इमे शास्त्रार्था अत्र संगृहीताः।

मारोहस्य प्रतिनियतत्वात्। तथा च जाबाला आश्रमाणामारोहमामनन्ति — 'ब्रह्मचर्यं समाप्य गृही भवेत्, गृही भूत्वा वनी भवेत्, वनी भूत्वा प्रव्रजेत्' (जाउ. ४) इति। न त्वेवमवरोहः क्वचिदप्याम्नातः, प्रत्युतावरोहं दक्षो निषेधति — 'त्रयाणामानुलोम्यं स्यात्प्रातिलोम्यं न विद्यते। प्रातिलोम्येन यो याति न तस्मात्पापकृत्तमः॥ यो गृहाश्रममास्थाय ब्रह्मचारी भवेत्पुनः। न यतिर्न वनस्थश्च स सर्वाश्रमवर्जितः॥' (दस्मृ. १।८-९) इति। यदि गृही कथंचित् प्रत्यवरुह्य ब्रह्मचारी भवेत्, तदाऽसौ सर्वाश्रमबहिष्कृतः, आरूढपतितत्वात्। अतो न वनस्थादिभिराश्रमवाचिभिः शब्दैरभिलप्यो भवति। अयं चावरोहाभाव उत्तरमीमांसायां तृतीयाध्याये वर्णितः। 'वनाद् गृहाद्वा' इत्यत्र 'ब्रह्मचर्याद्वा' इत्यपि द्रष्टव्यम्। यदा जन्मान्तरानुष्ठितसुकृतिपरिपाकबलात् बाल्य एव वैराग्यमुपजायते, तदानीमकृतोद्वाहो ब्रह्मचयदिव प्रव्रजेत्। तथा च जाबालश्रुतिः — 'यदि वेतरथा ब्रह्मचयदिव प्रव्रजेद्गृहाद्वा वनाद्वा' (जाउ.४) इति। पूर्वमविरक्तं जाबालं प्रति आश्रमचतुष्टयसमुच्चयमायुर्विभागेनोपन्यस्य विरक्तमुद्दिश्य यदि वेति पक्षान्तरोपन्यासः। इतरथेति बाल्य एव सति वैराग्य इत्यर्थः। अकृतोद्वाहस्य संन्यासो नृसिंहपुराणे दर्शितः — 'यस्यैतानि सुगुप्तानि जिह्वोपस्थोदरं शिरः। संन्यसेदकृतोद्वाहो ब्राह्मणो ब्रह्मचर्यवान्॥' (नरसिंह. ५८।३६) इति। अङ्गिरा अप्याह — 'संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया। प्रव्रजत्यकृतोद्वाहः परं वैराग्यमाश्रितः॥ प्रव्रजेद्ब्रह्मचर्येण प्रव्रजेच्च गृहादपि। वनाद्वा प्रव्रजेद्विद्वानातुरो वाऽथ दुःखितः॥' इति। दुःखितः व्याधितश्चौरव्याघ्राद्युपद्रुतः। आतुरः मुमूर्षुः। तत्र महाभारतम् — 'उत्पन्ने संकटे घोरे चौरव्याघ्रादिसंकटे। भयभीतस्य संन्यासमङ्गिरा मुनिरब्रवीत्॥ आतुराणां च संन्यासे न विधिर्नैव च क्रिया। प्रैषमात्रं समुच्चार्य संन्यासं तत्र कारयेत्॥' इति। ननु ब्रह्मचर्यदिव प्रव्रज्याङ्गीकारे मनुवचनानि विरुध्येरन् — 'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्। अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः॥ अधीत्य विधिवद्वेदान् पुत्रानुत्पाद्य धर्मतः। इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत्॥ अनधीत्य गुरोर्वेदाननुत्पाद्य तथाऽऽत्मजान्। अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन् व्रजत्यधः॥' (मस्मृ. ६।३५-३७) इति। ऋणत्रयं श्रुत्या दर्शितम्- 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते, ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः। एष वा अनृणी यः पुत्री यज्वा ब्रह्मचारिवासी' (तैसं. ६।३।१०।५) इति। यदा स्वर्गप्रापकः पितृयाणमार्गोऽप्यृणापाकरणमन्तरेण न संभवति, तदा कैव कथा मोक्षमार्गे? अत एव मन्त्रवर्णः — 'अनृणा अ(थोऽ?)स्मिन्ननृणाः परस्मिन् तृतीये लोके अनृणाः स्याम। ये देवयाना उत पितृयाणाः सर्वान् पथो अनृणा आक्षीयेम॥' (तैआ. २।१५।१) इति। ब्राह्मणमपि 'सर्वान् लोकाननृणोऽनुसंचरति' (तैआ. २।१५।१) इति। मैवम्, अविरक्तविषयत्वादेतेषां वचनानाम्। अत एव विरक्तस्य प्रव्रज्यायां कालविलम्बं निषेधति जाबालश्रुतिः — 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' (जाउ. ४) इति। ननु उक्तरीत्या ब्रह्मचर्यादिषु आश्रमेषु यथावद्धर्मानुष्ठायिनां तत्तदाश्रमात् प्रव्रजेदिति प्रतीयते। तथा सति स्नातकविधुरादीनामनाश्रमिणामाश्रमिणां च केषांचित् केनचित् प्रतिबन्धेन विहितधर्माननुष्ठायिनां सत्यपि वैराग्ये संन्यासो न प्राप्नुयात्। मैवम्, तेषां प्रत्यक्षश्रुत्यैव तद्विधानात्। 'अथ पुनरव्रती वा व्रती वा स्नातकोत्सन्नाग्निरनग्निको वा यदहरेव विरजेत् तदहरेव प्रव्रजेत्' (जाउ.४) इति। यमोऽपि — 'पुनर्दारक्रियाभावे मृतभार्यः परिव्रजेत्। वनस्थो धूतपापो वा परं पन्थानमाश्रयेत्॥' इति। स्नातकविधुरादीनामन्तरालवर्तिनामाश्रमनिरपेक्षैर्जपोपवासतीर्थयात्रादिकर्मभिश्चित्तशुद्धिसंभवेन मोक्षाश्रमेऽधिकारोऽस्तीति तृतीयाध्याये मीमांसितम्। धर्मलोपेऽप्यनुतापवतस्तत्प्रायश्चित्तत्वेन संन्यासः संभवति। तथा च स्मृत्यन्तरम् — 'ये च संतानजा दोषा ये च स्युः कर्मसंभवाः। संन्यासस्तान् दहेत्सर्वांस्तुषाग्निरिव काञ्चनम्॥' इति। मनुरपि — 'मृत्तोयैः शुध्यते शोध्यं नदी वेगेन शुध्यति। रजसा स्त्री मनोदुष्टा

संन्यासेन द्विजोत्तमः॥ (मस्मृ. ५।१०८) इति। अत्र केचित् ब्राह्मणस्यैव संन्यासाधिकारः, न क्षत्रियवैश्ययोः इत्याहुः। उदाहरन्ति च श्रुतिस्मृती। तत्र वाजसनेयक-ब्राह्मणम् – 'एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति।' (बृउ. ३।५।१) इति। मनुरप्युपक्रमोपसंहारयोर्ब्राह्मणशब्दं प्रयुङ्क्ते। 'आत्मन्य-ग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद् गृहात्।' (मस्मृ. ६।३८) इत्युपक्रमः, 'एष वोऽभिहितो धर्मो ब्राह्मणस्य चतुर्विधः।' (मस्मृ. ६।९७) इत्युपसंहारः। नारदोऽपि – 'प्रथमादाश्रमाद्वाऽपि विरक्तो भवसागरात्। ब्राह्मणो मोक्षमन्विच्छंस्त्यक्त्वा सङ्गान् परिव्रजेत्।' इति। योगियाज्ञवल्क्योऽपि – 'चत्वारो ब्राह्मणस्योक्ता आश्रमाः श्रुतिचोदिताः। क्षत्रियस्य त्रयः प्रोक्ता द्वावेको वैश्यशूद्रयोः॥' (बृयास्मृ. परि. ४३) इति। वामन-पुराणेऽपि – 'चत्वार आश्रमाश्चैते ब्राह्मणस्य प्रकी-र्तिताः। गार्हस्थ्यं ब्रह्मचर्यं च वानप्रस्थ्यं त्रयोऽऽश्रमाः॥ क्षत्रियस्यापि कथिता य आचारा द्विजस्य हि। ब्रह्मचर्यं च गार्हस्थ्यमाश्रमद्वितयं विशः॥ गार्हस्थ्यमुचितं त्वेकं शूद्रस्य क्षणदाचर॥' (वामन. १४।१६-१८) इति। ननु शूद्रस्याऽऽश्रम एव नास्ति, 'चत्वार आश्रमास्तात तेषु शूद्रस्तु नार्हति।' इति निषेधात्। ततः कथं तस्य गार्हस्थ्याङ्गीकारः? उच्यते समन्त्रक एव विवाहो निषिध्यते, न त्वमन्त्रकः। अन्यथा विवाहप्रकरणो-दाहृतानि शूद्रविषयाणि वचनानि, पञ्चमहायज्ञादि-गृहस्थधर्मेषु शूद्राधिकारवचनानि विरुध्येरन्। तस्मादस्ति शूद्रस्य गार्हस्थ्यम्। संन्यासस्तूक्तरीत्या विप्रस्यैव। अत एव स्मृत्यन्तरे कषायदण्डादिलिङ्गधारणं क्षत्रियवैश्य-योर्निषिद्धम् – 'मुखजानामयं धर्मो यद्विष्णोर्लिङ्ग-धारणम्। बाहुजातोरुजातानां नायं धर्मो विधीयते॥' इति। अपरे पुनः संन्यासे त्रैवर्णिकाधिकारमिच्छन्ति, अधीतवेदस्य द्विजातिमात्रस्य समुच्चयविकल्पाभ्या-माश्रमचतुष्टयस्य बहुस्मृतिषु विधानात्। अत एव याज्ञवल्क्येन संन्यासप्रकरणे द्विजशब्दः प्रयुक्तः 'संनिरुध्येन्द्रियग्रामं रागद्वेषौ प्रहाय च। भयं हृत्वा च भूतानाममृती भवति द्विजः।' (यास्मृ.३।६१) इति। स्मृत्यन्तरं तु शृङ्गग्राहिकयैव वर्णत्रयस्य संन्यासं विदधाति – 'ऋणत्रयमपाकृत्य निर्ममो निरहंकृतिः। ब्राह्मणः क्षत्रियो वाऽथ वैश्यो वा प्रव्रजेद्गृहात्॥' इति। कूर्मपुराणेऽपि द्विजग्रहणं कृतम् – 'अग्नीनात्मनि संस्थाप्य द्विजः प्रव्रजितो भवेत्। योगाभ्यासरतः शान्तो ब्रह्मविद्यापरायणः॥' (कूर्म. २।२८।२) इति। यानि पूर्वोदाहृतवचनानि तानि क्षत्रियवैश्ययोः काषाय-दण्डनिषेधपराणि। तथा च मुखजानामिति वचन-मुदाहृतम्। बौधायनोऽपि – 'ब्राह्मणानामयं धर्मो यद्विष्णोर्लिङ्गधारणम्। राजन्यवैश्ययोर्नेति दत्तात्रेय-मुनेर्वचः॥' इति। पमा. १।५३०-५३६

## मदनपारिजातः

अथ चतुर्थाश्रमः। तत्र प्रथमं त्रैवर्णिकेषु कोऽधि-क्रियत इति विचार्यते। तत्र छन्दोगसूत्रकारः – 'त्रयाणा-मधिकृतिः। ब्राह्मणः क्षत्रियो वाऽथ वैश्यो वा प्रव्रजेद्गृहात्'। धर्मविवृतावपि – 'ब्राह्मणः क्षत्रियो वैश्यस्ततो गच्छेद्वनं कृती। संन्यसेद्वासनाशान्तः सर्वभूत-दयापरः॥' इति। त्रैवर्णिकस्याधिकारमेतानि वाक्यानि विदधति। अतस्त्रैवर्णिकानामपि तुर्याश्रमेऽस्त्येवा-धिकारः। या तु जाबालश्रुतिः – 'ब्राह्मणाः प्रव्रजन्ति' इति, तस्येयं गतिः – ब्राह्मणशब्दः प्रदर्शनार्थः। अतः क्षत्रियवैश्यावप्युपलक्षयति। तेन न विरोध इति। अथ(वा) 'ब्रह्म वेदः, तन्निष्ठस्तदधीतवान् ब्राह्मणः' इति व्युत्पत्त्या ब्राह्मणशब्दो वर्णत्रयपरः। एतेन 'आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद्गृहात्।' इत्यादि मन्वादिवचनान्यपि व्याख्यातानि। यच्च दत्तात्रेयवचनम् – मुखजानामयं धर्मो यद्विष्णोर्लिङ्ग-धारणम्। बाहुजातोरुजातानामयं धर्मो न विद्यते॥' इति, तथा – 'गतिस्तुर्याश्रमे नास्ति बाहुजोरुजयोः क्वचित्। तुर्याश्रमे गतिः प्रोक्ता मुखजानां स्वयंभुवा॥' इति, एतच्च वचनद्वयं वस्तुतो न विरुध्यते। मुखजाः ब्राह्मणाः। बाहुजाः क्षत्रियाः। ऊरुजाः वैश्याः। परेषामयं धर्मो लिङ्गधारणात्मको न विद्यते। लिङ्गं लक्षणं चिह्नं

त्रिदण्डैकदण्डरूपम्। तथा च दक्षः – 'मेखलाजिनदण्डेन ब्रह्मचारीति लक्ष्यते। गृहस्थो यष्टिवेदाद्यैर्नखरोमैर्वनाश्रितः। त्रिदण्डेन यतिश्चैवं लक्षणानि पृथक् पृथक्॥' (दस्मृ. १।१२-१३) इति। त्रिदण्डग्रहणमेकदण्डस्यापि प्रदर्शनार्थम्। एवंविधं क्षत्रियवैश्ययोर्नेति दण्डधारणनिषेध एव, नाऽऽश्रमनिषेधः। तथा च 'गतिस्तुर्याश्रमे नास्ति' इत्यस्याप्ययमर्थः – गतिः ज्ञानम् 'सर्वे गत्यर्था ज्ञानार्थाः' इति स्मरणात्। ज्ञानं च ज्ञापकनिष्पाद्यम्। अत एव ज्ञापककार्यं तत् तेन ज्ञापक(?ज्ञान)रूपेण कार्येण कारणं लक्ष्यते। तथा चैतदुक्तं भवति – क्षत्रियवैश्ययोर्ज्ञापकं दण्डधारणं नास्तीति लिङ्गनिषेधः एव, न त्वाश्रमनिषेधः इति। दण्डधारणं बहिरङ्गम्, विषयविराग एव मुख्यः, विरागाभावे अधिकाराभावात्। यच्च धर्मविवृतावेव वचनान्तरम् 'संन्यसेद्ब्राह्मणः सम्यग्वानप्रस्थो भवेन्नृपः। वानप्रस्थो भवेद्वैश्य एवं वर्णक्रमः स्मृतः॥' इति, अत्रापि ब्राह्मणः सम्यक् न्यसेदिति सम्यक्शब्दोपादानात् ब्राह्मणस्य बहिरङ्गभूतदण्डधारणोपेत एव संन्यासः, न तु तद्रहित इति गम्यते। तथा च क्षत्रियवैश्ययोस्तद्रहित आश्रमो भवतीत्यर्थादुक्तं भवति, अन्यथा छन्दोगसूत्रकारादिवचनविरोधापत्तेः। अयं च तात्पर्यार्थः – 'अबाधेनोपपत्तौ बाधो न न्याय्यः' इति न्यायेन श्रुतिस्मृतिवाक्यविरोधपरिहाराय विधिवाक्यानामाश्रमस्वरूपविधौ तात्पर्यम्, निषेधवाक्यानां तु दण्डग्रहणमात्रनिषेधे तात्पर्यम्। तस्मात् क्षत्रियवैश्ययोर्दण्डग्रहणमात्रनिषेधः, न त्वाश्रमनिषेध इति। एवं प्राप्तेऽभिधीयते – 'श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी' इति। अतः श्रुत्यनुसारेण व्यवस्थाऽत्र विधीयते – 'ब्राह्मणाः प्रव्रजन्ति' इति श्रूयते। अत्र ब्राह्मणशब्दस्य ब्राह्मणत्वं जातिर्वाच्योऽर्थः। ब्राह्मणोद्देशेन च प्रव्रज्या अभिधीयते। उद्देश्यविशेषणमेवाविवक्षितं हविरुभयत्ववत् (न तु) उद्देश्यमविवक्षितम्। तस्मादिह ब्राह्मणोद्देशेन संन्यासविधानादुद्देश्यस्य ब्राह्मणत्वस्येह विवक्षितत्वात्तस्यैव प्रव्रज्याधिकारः, नान्यस्य। ननु यदि भवेद्ब्राह्मणशब्दस्य ब्राह्मणत्वं जातिर्वाच्यार्थः तर्हि तस्योद्देश्यत्वेन विवक्षितत्वात्क्षत्रियवैश्ययोः प्रव्रज्यायां मा भूदधिकारः, न च तथा ब्राह्मणत्वजातिरर्थः, अपि तु ब्रह्म वेदः, तन्निष्ठास्तदध्ययनवन्तो ब्राह्मणा इति वेदाध्ययनवत्त्वमेकोऽनुगतो धर्मः। स च ब्राह्मणशब्दस्यार्थः। तथा च वेदाध्ययनवत्त्वरूपेणैकेनोपाधिना ब्राह्मणक्षत्रियवैश्यास्त्रयोऽपि क्रोडीभूता भवेयुः। एवं च ब्राह्मणोद्देशेन प्रव्रज्याविधानात्त्रयाणामपि वर्णानां तत्राधिकारोऽस्त्विति चेत् मैवम्। यथा क्षत्रियशब्दस्य क्षत्रियत्वं वैश्यशब्दस्य वैश्यत्वं गोशब्दस्य च गोत्वमर्थः तथा ब्राह्मणशब्दस्यापि ब्राह्मणत्वमेवार्थ इति शेषजैमिनिबादरायणादिभिरङ्गीकृतं तद्व्याहन्येत। तथोक्तव्याघातभयात् ब्राह्मणशब्दस्य ब्राह्मणत्वं वेदाध्ययनवत्त्वं वो(?चो)भयम् (इति?) वाच्यत्वेन परिकल्पे(?ल्प्ये)त तदा 'अन्यायश्चानेकार्थत्वम्' इति तान्त्रिकैरनेकार्थत्वमेकशब्दस्य निषिद्धं तेन न्यायेन सह विरोधः प्रसज्यते। अथैवं ब्रूषे – 'अन्यायश्चानेकार्थत्वम्' इति न्याये जाग्रत्यपि गवादिशब्दानां यथाऽनेकार्थत्वमेवं ब्राह्मणशब्दस्यापि अनेकार्थत्वमस्त्विति, न चैतदुचितम्, अगतिका हीयं गतिः यदनेकशक्तिपरिकल्पनयाऽनेकार्थत्वस्वीकरणम्। शब्दार्थज्ञाने हि वृद्धव्यवहारः प्रमाणम्। वृद्धाश्च गवादिशब्दानामनेकशक्तिकल्पनयाऽप्यनेकार्थत्वमङ्गीकुर्वते, न ब्राह्मणशब्दस्य। अत एवाभिधानकारैरपि गवादिशब्दा अनेकार्थवर्गे परिगणिताः तेषामपि व्यवहारः शब्दश्लेषादिष्वेव। शास्त्रं निर्णीय शास्त्रार्थपरिज्ञाने तु प्रसिद्धस्यैव ग्रहणम्, नेतरस्य। इतरस्यापि ग्रहणे गोपशुविधायकवाक्येऽपि सास्नाद्युपेतगोपिण्डव्यतिरिक्तस्यापि ग्रहणं स्यात् न च गृह्यते। तस्माच्छास्त्रार्थनिर्णयेषु प्रसिद्धार्थस्यैव ग्रहणं युक्तम्, विपरीतार्थद्योतकवाक्यशेषाभावात्। अतोऽनेकार्थशक्तिकल्पनादोषभयाद्ब्राह्मणशब्दस्य ब्राह्मणत्वजातिरेवार्थः। ननु च 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते' इत्यत्र ब्राह्मणशब्दो यथा वर्णत्रयपरः एवमत्राप्यस्त्विति चेत्, मैवम्, दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात्। तथाहि – 'ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः' (तैसं. ६।३।१०।५) इति वाक्यशेषे ब्रह्मचर्यादिभिर्ऋष्याद्यृण-

त्रयापकरणप्रतीतेः, ब्रह्मचर्यादिषु च त्रैवर्णिकस्याधिकारात्। फलचमसवन्मुख्यान्तरेण(?) 'जायमानो वै ब्राह्मणः' इत्यत्रापि त्रैवर्णिकानुप्रवेशाद्युज्यते तत्र त्रैवर्णिकपरत्वम्। प्रकृते तु वाक्यशेषाद्यभावात्तत्रैवा(?व योगेना)न्यो ब्राह्मणशब्देन प्रत्याख्यास्यते (?यावत्प्रत्याययिष्यते), ततः पूर्वमेव लब्धार्थिकाया रूढेः प्राबल्यादनुपपत्त्यभावाच्च रूढ्या ब्राह्मणत्वमेव प्रत्याय्यते। अतश्च प्रथमप्रतीतब्राह्मणोद्देशेन प्रव्रज्याविधेश्चरितार्थत्वात् न चरमप्रतीतयौगिकार्थस्वीकरणमुचितम्। ततश्च 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति श्रुत्या विरुद्धम् 'औदुम्बरी सर्वा वेष्टयितव्या' इति स्मृतिवचनं यथा विरोधाधिकरणे अप्रमाणमित्युक्तम्, एवं 'ब्राह्मणाः प्रव्रजन्ति' इति जाबालश्रुतिविरुद्धं 'तत्र त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमाः' इत्यादिकं स्मार्तवचनजातमप्रमाणमेव। स्मार्तवचननिचयस्य सर्वथाप्रामाण्यपरिजिहीर्षया श्रुत्यनुकूल एवार्थः परिकल्पनीयः। 'त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमाः' इति छन्दोगसूत्रस्यायमर्थः — त्रयाणां वर्णानां यथोचितं चत्वार आश्रमा इति। औचित्यं च श्रुतिविरोधाद्ब्राह्मणस्यैव तुर्याश्रमाधिकारविधौ, नान्यथा। 'त्रैवर्णिकानां संन्यासो विद्यते नात्र संशयः। 'शिखायज्ञोपवीतानां त्यागपूर्वैकदण्डयुक्॥' इति ब्रह्माण्डपुराणवचनमपि छन्दोगसूत्रेण समानार्थः-(?र्थम्)। यच्च ब्रह्मवैवर्तवचनम् — 'वैराग्योत्पत्तिमात्रे च संन्यासे परियुज्यते। रागवान्न तु विप्रोऽपि वेदवेदाङ्गवित्तमः॥' इति। वेदवेदाङ्गवित्तमोऽपि विप्रो रागवांश्चेत्स संन्यासे न परियुज्यत इत्यन्वयः। एवं च विप्रस्य विरक्तस्यैवाधिकारोऽभिहितो भवेत्, न क्षत्रियादेः। यच्च स्मृत्यन्तरम् — 'ऋणत्रयमपाकृत्य निर्ममो निरहंकृतिः। ब्राह्मणः क्षत्रियो वाऽथ वैश्यो वा प्रव्रजेद्गृहात्॥' इति, अस्यायमभिप्रायः — गृहात्प्रव्रजेत् वानप्रस्थाश्रमं गच्छेत्। प्रव्रज्याशब्दो यद्यपि संन्यासे रूढस्तथापि श्रुतिविरोधपरिहारार्थमत्र तृतीयाश्रमपरः, अस्यापि वैराग्यहेतुकत्वात्। यद्वा, ब्राह्मणः स्ववृत्तावजीवन् क्षत्रियवृत्तिमाश्रितः, तत्राप्यजीवन् वैश्यवृत्तिम्, ततश्च तामापदं निस्तीर्यापि न वर्णान्तरवृत्तिं परित्यजति, किंतु तत्रैव वृत्तावस्थितः, तदा तत्तत्क्षत्रियादिवृत्तिः क्षत्रिय इति वैश्य इति च व्यपदिश्यते, शास्त्रानभ्यनुज्ञानकालेऽपि क्षत्रियादिवृत्तिनिरतत्वात्, ततः सोऽपि प्रव्रजेद्गृहादिति प्रव्रज्याधिकारं दर्शयति। अत एव 'ब्राह्मणः क्षत्रियो वाऽथ वैश्यो वा प्रव्रजेद्गृहात्।' इत्यथशब्द उपात्तः। ब्राह्मण एव अनन्तरं क्षत्रवृत्त्याश्रयणात् क्षत्रियः, अथ वैश्य इत्यानन्तर्यप्रतिपादनादयमर्थो गम्यत इत्यर्थः। एतेन 'ब्राह्मणः क्षत्रियो वैश्यस्ततो गच्छेद्वनं कृती। संन्यसेद्वाऽथ वा शान्तः' इत्येतदपि व्याख्यातम्। एवं च मनुदत्तात्रेयादिवचनान्यप्यानुकूल्यानि(?ल्येन) नेयानि। यश्च जडभरतं प्रत्युपदेशः पैङ्गिरहस्ये — 'यदि मृत्योः परं शान्तमनामयं शाश्वतं पदमिच्छुरसि तत्परमहंसो भवाह(?भव)' इति। अत्रेदं चिन्त्यम् — किं जडभरतं प्रत्येवोपदेशः, उत लक्षणया क्षत्रियमात्रं प्रति? आद्ये जडभरतस्यैवेति नेतरक्षत्रियप्राप्तिः। किंच, जडभरतोऽपि प्रैषोच्चारणपूर्वकमाश्रमं गृहीतवान् इति न क्वापि श्रूयते। ततः 'ब्राह्मणाः प्रव्रजन्ति' इत्येतदनुरोधात्परमहंसो भवेत्यस्यायमर्थः — परमहंस इव निर्ममो भवेति। नापि द्वितीयः। तत्र हि लक्षणा। सा च न युक्ता, 'न विधौ लक्षणा' इति भट्टगुरुप्रभृतिभिर्विधौ लक्षणानिषेधात्। विधिरिति वदन् वादी प्रष्टव्यः — किं विशिष्टविधिः, उत प्राप्ते कर्मण्यधिकारिविधिः? इति। पक्षद्वयेऽपि लक्षणाप्रसक्तिर्दुर्वारा। ननूद्देश्ये लक्षणा, न विध्यंशे, अतो न दोष इति चेत्, तर्हि लक्षणोद्देश्येऽपि न युक्तेति ब्रूमः। तथाहि — संबन्धानुपपत्तिभ्यां हि लक्षणा। न चानुपपत्तिः, पूर्वोक्तरीत्या वाक्यास्यार्थान्तरपरतयाऽप्युपपत्तेः। या च जाबालिश्रुतिर्जनकयाज्ञवल्क्यसंवादे — 'तत्र परमहंसा नाम संवर्तकारुणिश्वेतकेतुदुर्वासऋभुनिदाघजडभरतदत्तात्रेयरैवतकप्रभृतयः' इति, अत्रापि विधायकप्रत्ययाभावात् परमहंससदृशधर्मवन्त इति। अहंकारममतयोरभावात्परमहंसा इति व्यपदिश्यन्ते। तस्मात्सिद्धो ब्राह्मणस्यैवाधिकार इति। मपा. ३६५-३७३

## मदनरत्नम्

अथ गृहस्थधर्मनिरूपणानन्तरं कलिवर्ज्यप्रकरणे 'वानप्रस्थाश्रमस्यापि प्रवेशो विधिनोदितः' इति वाक्येन कलौ वानप्रस्थाश्रमस्य निषिद्धत्वात् तद्धर्मनिरूपणमुपेक्ष्य

यतिधर्मा निरूप्यन्ते। तत्र वानप्रस्थाश्रमानन्तरं यत्याश्रमस्वीकरणमाह मनुः – 'वनेषु तु विहृत्यैवं तृतीयं भागमायुषः। चतुर्थमायुषो भागं त्यक्त्वा सङ्गान् परिव्रजेत्॥' (मस्मृ. ६।३३)। गृहस्थाश्रमानन्तरमपि यत्याश्रमस्वीकारमाह याज्ञवल्क्यः – 'वनाद्गृहाद्वा कृत्वेष्टिं सार्ववेदसदक्षिणाम्। प्राजापत्यां तदन्ते तानग्नीनारोप्य चाऽऽत्मनि॥ अधीतवेदो जपकृत्पुत्रवानन्नदोऽग्निमान्। शक्त्या च यज्ञकृन्मोक्षे मनः कुर्यात्तु नान्यथा॥' (यास्मृ. ३।५६-५७)। मोक्षे मोक्षैकफलके चतुर्थाश्रमे। सत्यां दृढविरक्तौ ब्रह्मचर्याश्रमादपि यत्याश्रमः स्वीकार्य इत्युक्तं नृसिंहपुराणे – 'यस्यैतानि सुगुप्तानि जिह्वोपस्थोदरं शिरः। संन्यसेदकृतोद्वाहो ब्राह्मणो ब्रह्मचर्यवान्॥' (नरसिंह. ५८।३६) शिरःपदेन नेत्रादीन्द्रियाण्युपलक्ष्यन्ते। सर्वेऽप्येते पक्षा उक्ता जाबालश्रुतौ – 'ब्रह्मचर्यं परिसमाप्य गृही भवेत्। गृही भूत्वा वनी भवेत्। वनी भूत्वा प्रव्रजेत्। यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वा' इति। व्याधिचोरव्याघ्राद्युपद्रवेण मरणसंभावनायामपि यत्याश्रमस्वीकार उक्तोऽङ्गिरसा – 'संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया। प्रव्रजत्यकृतोद्वाहः परं वैराग्यमाश्रितः॥ प्रव्रजेद्ब्रह्मचर्येण प्रव्रजेच्च गृहादपि। वनाद्वा प्रव्रजेद्विद्वानातुरो वाऽथ दुःखितः॥'। महाभारतेऽपि – 'उत्पन्ने संकटे घोरे चौरव्याघ्रादिसंकटे। भयभीतस्य संन्याससमङ्गिरा मुनिरब्रवीत्॥ आतुराणां च संन्यासे न विधिर्नैव च क्रिया। प्रैषमात्रं समुच्चार्य संन्यासं तत्र पूरयेत्॥' इति। अस्मिंस्तु चतुर्थाश्रमे ब्राह्मणस्यैवाधिकारः। तथा च योगयाज्ञवल्क्यः – 'चत्वारो ब्राह्मणस्योक्ता आश्रमाः श्रुतिचोदिताः। क्षत्रियस्य त्रयः प्रोक्ता द्वावेकौ वैश्यशूद्रयोः॥' (बृयास्मृ. परि. ४३)। एतदेवाभिप्रेत्य काषायवस्त्रदण्डादिवैष्णवसंन्यासलिङ्गधारणं क्षत्रियादेर्निषिद्धं स्मृत्यन्तरे – 'मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम्। राजन्यवैश्ययोर्नेति दत्तात्रेयमुनेर्वचः॥' इति।

मर. ६१३-६१५

## गदाधरपद्धतिः

यद्यपि ब्रह्मचारिगृहिवानप्रस्थभिक्षुरूपाश्चत्वार आश्रमास्तथापि 'देवरेण सुतोत्पत्तिर्वानप्रस्थाश्रमग्रहः' इत्याद्युक्त्वा 'कलौ युगे त्विमान् धर्मान् वर्ज्यानाहुर्मनीषिणः' इति सारसंग्रहवचनात् ब्रह्मचारिगृहस्थसंन्यासिरूपास्त्रय एव आश्रमाः कलौ। तत्राऽऽश्रमधर्मस्वरूपं निरूप्यते – 'आदौ गुरौ वसेत्'। 'द्वितीयमायुषो भागं कृतदारो गृहे वसेत्'। (मस्मृ. ४।१, ५।१६९) 'वने वसेत्' 'प्रव्रजेत्'। (मस्मृ.- ६।१, ३८) इति विधिचतुष्टयम्। तत् यथा 'अग्नीनादधीत' इति विधिविहिताधानजन्यात्मनिष्ठसंस्कारः आहिताग्नित्वं स च प्रशान्ताग्नेरपि तिष्ठति। तत्संस्कारवन्तमेवाधिकृत्य 'आहिताग्निर्नानृतं वदेत्' इत्यादयो धर्माः। एवं 'गुरौ वसेत्' इति विधिवशात् 'गुरौ वत्स्यामि' इति यः संकल्पः, तज्जन्यसंस्कार एव ब्रह्मचारित्वम्। तमधिकृत्यावकीर्णपश्चादयो धर्मा विधीयन्ते। तस्यावधिः समावर्तनम्। एवं दारकरणोत्तरं 'गृहे वत्स्यामि' इति यः संकल्पः तज्जन्यसंस्कारविशेष एव गार्हस्थ्यम्। अत एव पत्नीमरणेऽपि संस्कारवत्त्वात् गृहस्थ इति तस्य गृहस्थधर्माधिकारः, किंतु पत्नीसहायसाध्यकर्मस्वेवानधिकारः। तस्य चावधिर्वानप्रस्थाश्रमपरिग्रहः। एवं 'वने वत्स्यामि' इति यः संकल्पस्तज्जन्यसंस्कारविशेष एव वनस्थत्वमिति तद्वन्तमेवाधिकृत्य अफालकृष्टाशनोर्ध्वरेतस्त्वादयो धर्मा विधीयन्ते इति गृहस्थतन्त्रस्या(?स्थस्य तत्रा)नधिकार एव। एतेन वानप्रस्थाश्रमो नाम वनवासादयो धर्मा एवेति कैश्चिल्लिखितम्, तन्निरस्तमेवेत्यनुसंधेयम्। एवं 'प्रव्रजिष्यामि' इति यः संकल्पः, तज्जन्यसंस्कारविशेष एव पारिव्र(?व्रा)ज्यम्। तद्वन्तमेवाधिकृत्य यतिधर्माः। *तद्यथा – 'सिद्धमन्नं गृहस्थाय वानप्रस्थाय गोरसम्। यतये काञ्चनं दत्त्वा नरकं प्रतिपद्यते॥' इत्यादीनामव्यवस्था स्यात्। स्नातकस्यापि गुरुगृहे वसतोऽवकीर्णप्रायश्चित्तापत्तेः। समावर्तनानन्तरं तु दारकरणपर्यन्तमनाश्रमित्वम्। तस्यैव तथैवानाश्रमे वास इति उपपातकित्वम्। 'अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः।' (दस्मृ. १।१०) इति दक्षोक्तिरपि तत्परैव। तस्य तु उपनयनात्पूर्वमिव केषुचित्कर्मसु स्नातकधर्मेष्वधिकारः। इत्याश्रमस्वरूपनिरूपणम्। ...... 'ऐकाश्रम्यं तु प्रत्यक्षविधानाद्गृहस्थस्य' (गौध. ३।३६) इत्युक्तवता च गौतमेन गार्हस्थ्यस्य

* इतः परः 'प्रायश्चित्तापत्तेः' इत्यन्तो ग्रन्थो दुर्बोधः।

प्रत्यक्षश्रुतिसिद्धत्वमुक्त्वाऽऽश्रमान्तराणां स्मार्तत्वेन दौर्बल्यमुक्तम्। गप. ६-७.

## यतिधर्मप्रकाशः

अथाऽऽदौ संन्यासो निरूप्यते। तत्र संन्यासो नाम विधितो गृहीतानां नित्यनैमित्तिककाम्यश्रौतस्मार्तकर्मणां प्रैषमात्रं समुच्चार्य परित्यागः। न च कुटीचकादौ शिखायज्ञोपवीतधारणादेः कर्मणः सत्त्वादव्याप्तिरिति वाच्यम्, 'शिखायज्ञोपवीती स्यात्' (सासंउ. २।२४) इत्यादिविशेषस्मरणात् तत्र शिखाधारणादेः सत्त्वेऽपि तदितरसर्वकर्मपरित्यागस्य सत्त्वादव्याप्तिविरहात्। न ह्यत्र यावत्कर्मपरित्यागो विवक्षितः, परमहंसेऽपि तस्यासत्त्वेनासंभवापातात्, परमहंसस्यापि प्रागधीतवैदिककर्मकाण्डपरित्यागेऽपि स्वाध्यायाध्ययनविधिप्रेरणया प्रागधीतारण्यकोपनिषच्छतरुद्रीयपुरुषसूक्तादिधारणस्य देवतापूजनप्राणाग्निहोत्रादेश्च सत्त्वाभ्युपगमात्। न चैवं प्रैषं समुच्चार्याग्निहोत्रमात्रस्य संध्यामात्रस्य वा परित्यागेऽतिव्याप्तिरिति वाच्यम्, तादृशपरित्यागे श्रुतेः स्मृतेर्वा प्रमाणस्याभावेन शशविषाणतुल्ये तत्रातिव्याप्तेर्वक्तुमशक्यत्वात्।

परित्यागश्च निवृत्तिरेव। अत एव संन्यासिनो निवृत्तिशास्त्र एवाधिकारः। न च 'संन्यस्य श्रवणं कुर्यात्' इति विधिप्रवृत्तिः कथम्? तत्र 'वेदान्तश्रवणेतरन्न कुर्यात्' इति 8परिसंख्याश्रयणात्। एवमन्यत्रापि 'भिक्षाचर्यं चरन्ति' (बृउ. ३।५।१, ४।४।२२) इत्यादौ सर्वत्र। αअन्ये तूत्सर्गापवादन्यायेन श्रवणादिविधिप्रवृत्तिः, 'न हिंस्यात्सर्वा भूतानि' (पद्म. १।५५।१) इत्युत्सर्गेऽपि 'अग्नीषोमीयं पशुमालभेत' (तैसं. ६।१।११।६) इतिवदिति दिक्।

8 श्रवणादीनां प्राप्तिस्तु तत्त्वसाक्षात्काररूपदृष्टफलकत्वाल्लोकतो न्यायत एव चेत्यभिप्रायो लक्ष्यते।

α 'अन्ये तु' इति स्वान्यत्वोक्त्या द्वितीयेऽस्मिन् पक्षे अरुचिः तथा अनिराकरणादर्धाङ्गीकारश्च प्रतीयते। अतोऽयमत्र दिगर्थ उन्नीयते – 'यद्यपि परिसंख्यावादिना मयाऽपि संन्यासस्वरूपव्याख्यानावसरे शिखायज्ञोपवीतधारणदेवतापूजनादिविषयेषु उत्सर्गापवादन्यायेन विधिप्रवृत्तिः स्वीकृतेति तन्न्यायेन क्वचिद्विधिप्रवृत्तिं न दुरुपपादां मन्ये, तथापि श्रवणादेर्दृष्टफलकत्वेन लोकतो न्यायतश्च प्राप्तत्वेन न तद्विषये विधिप्रवृत्तिरुपपद्यते। तथा चोक्तं श्रीमच्छंकराचार्यैः – 'दृष्टार्था च विद्या प्रतिषेधाभावमात्रेणाप्यर्थिनमधिकरोति श्रवणादिषु' (ब्रसू. ३।४।३८) इतीति।

संन्यासे प्रमाणम् – संन्यासे प्रमाणं च 'ब्राह्मणाः प्रव्रजन्ति' (बृउ.४।४।२२) 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' (जाउ.४) इत्याद्यारण्यकश्रुतिः। आरुणिकश्रुतिस्तु विशेषतः प्रथमाश्रमानन्तरमपि संन्यासं प्रतिपादयति 'ब्रह्मचारी गृहस्थो वा वानप्रस्थो वाऽलौकिकाग्नीनुदराग्नौ समारोपयेत्' (आरुउ.२) इति। व्यासोऽपि – 'ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथवा पुनः। विरक्तः सर्वकामेभ्यः पारिव्राज्यं समाश्रयेत्॥' इति। हेमाद्रौ चतुर्णामप्याश्रमाणां समुच्चयमभ्युपेत्योत्सर्गतः शतसंख्यमायुश्चतुर्धा विभज्य चतुर्भिर्भागैश्चत्वार आश्रमाः कार्या इत्येवमर्थकं मनुवाक्यमुदाहृतम् – 'चतुर्थमायुषो भागमुषित्वा स्वगुरोर्गृहे। द्वितीयमायुषो भागं कृतदारो वसेद्गृहे॥' (मस्मृ. ४।१) 'वनेषु च विहृत्यैव तृतीयं भागमायुषः। चतुर्थमायुषो भागं त्यक्त्वा सङ्गं परिव्रजेत्॥' (मस्मृ. ६।३३) इति। प्रकारान्तरमप्याह मनुः – 'चतुर्भिरेवमप्येतैर्नित्यमाश्रमिभिर्द्विजैः। दशलक्षणको धर्मः सेवितव्यः प्रयत्नतः॥ धृतिः क्षमा तपोऽस्तेयं शौचमिन्द्रियनिग्रहः। धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्॥ दशलक्षणको धर्मो यैर्विप्रैः समधीयते। अधीत्य चानुवर्तन्ते ते यान्ति परमां गतिम्॥ दशलक्षणकं धर्ममनुतिष्ठन्समाहितः। वेदान्तान्विधिवच्छ्रुत्वा संन्यसेदनृणो द्विजः॥' (मस्मृ. ६।९१-९४) इति। धीः निश्चयात्मिका। विद्या वेदादिरूपा। अत्र श्रुत्वेत्यनेन संन्यासात्पूर्वमेव वेदान्तश्रवणं संन्यासहेतुवैराग्यसिद्ध्यर्थं वर्णितम्। यस्य तु पूर्वमेवोत्कटवैराग्यं तेन संन्यासानन्तरमेव वेदान्तश्रवणं कार्यम्। तेन 'संन्यस्य श्रवणं कुर्यात्' इत्यनेन न विरोधः। अनृण इति विशेषणेन च 'ऋणत्रयमपाकृत्य मनो मोक्षे निवेशयेत्। अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः॥' (मस्मृ. ६।३५) इति मतं संगृहीतम्। अधः इत्यस्य मोक्षादर्वाक् सत्यलोके वसतीत्यर्थ इति रामतीर्थविश्वेश्वरादयः। ऋणत्रयं च देवर्षिपितृभेदेन बोध्यम्। तथा च तैत्तिरीयश्रुतिः – 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणः' (तैसं. ६।३।१०।५) इति।

पराशरमाधवीये मनुः – 'मृत्तोयैः शुध्यते शोध्यं नदी वेगेन शुध्यति। रजसा स्त्री मनोदुष्टा संन्यासेन द्विजोत्तमः॥' (मस्मृ. ५।१०८) इति। स्मृत्यन्तरेऽपि – 'ये च संतानजा दोषा ये च स्युः कर्मसंभवाः। संन्यासस्तान् दहेत्सर्वांस्तुषाग्निरिव काञ्चनम्॥' इति। विश्वेश्वरपद्धतौ स्मृत्यन्तरे – 'संन्यासाद्ब्रह्मणः स्थानं वैराग्यात्प्रकृतौ लयः। ज्ञानात्कैवल्यमाप्नोति तिस्रस्तु गतयः स्मृताः॥' इति। वैराग्यात् ऐहिकामुष्मिकसकलभोगवैराग्यात् प्रकृतौ ईश्वरोपाधिभूतमायायां लयः जीवोपाधेर्मनसो निःशेषलयः। सिद्धान्तलेशसंग्रहरीत्या सगुणेश्वरभाव इति यावत्। कैवल्यम् अविद्यानिवृत्त्या निर्गुणब्रह्मभावम्। गतयः फलानि। अत्र त्रयाणां भिन्नभिन्नफलसाधकत्वोक्तेरैहिकसकलभोगविरक्तस्यापि ब्रह्मलोकसुखकामस्य तदर्थं संन्यासो भवतीति दर्शितम्। अत एवेदानींतनाः परमहंसाः प्रायेण ब्रह्मलोकप्राप्तिहेतुभूतां प्रणवोपासनामेवानुतिष्ठन्ति। तत्त्वविवेककारास्तु ज्ञानार्थस्यापि संन्यासस्य ब्रह्मलोको नान्तरीयकं फलमुक्तस्मृतेरित्याहुः। तच्चिन्त्यम्, तस्मिन्नेव जन्मनि तत्त्वज्ञानोत्पत्तौ ब्रह्मलोकसंबन्धस्यासंभवेन तन्नान्तरीयकत्वानुपपत्तेः, अवर्जनीयसंनिधिकस्यैव नान्तरीयकपदार्थत्वात्, यथा पुरोडाशभक्षणादौ तृप्तेरिति दिक्।

संन्यासेऽधिकारः। प्रागुक्तश्रुतिस्मृतिवाक्येषु विशेषतो 'ब्राह्मणः' इति 'द्विजोत्तमः' इति च शब्दग्रहणेन संन्यासे ब्राह्मणजातीयस्यैवाधिकार इति दर्शितम्। न च 'ब्रह्मनिष्ठो ब्राह्मणः' इति योगात् ब्राह्मणशब्दस्त्रैवर्णिकपरः, एवं 'द्वाभ्यां जन्मसंस्काराभ्यां जायतेऽसौ द्विजः, स चासौ उत्तमश्च' इति योगात् द्विजोत्तमशब्दोऽपीति वाच्यम्, 'योगाद्रूढिर्बलीयसी' इति न्यायेन तत्र शब्दे योगस्यानादरात्। अत एव 'वर्षासु रथकारोऽग्नीनादधीत' (बौश्रौ. २।१२) इत्यादौ 'रथं करोति' इति योगस्त्रैवर्णिकसंग्राहको न प्रवर्तते, रूढ्या झटिति जातिविशेषस्यैवोपस्थितेः, योगस्य वाक्यत्वेन तदर्थस्य रूढ्यर्थापेक्षया विलम्बितोपस्थितिकत्वात्। तथा स्मृत्यन्तरमपि – 'मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम्। राजन्यवैश्ययोर्नेति दत्तात्रेयमुनेर्वचः॥' इति। लिङ्गं वैणवो दण्डः, तद्धारणं विष्णुरूपस्य संन्यासिनोऽसाधारणचिह्नम्। स चायं मुखजानां ब्राह्मणजातीयानामेव धर्मोऽनुष्ठेय इति स्मृत्यर्थः। तथा च पुराणवाक्यम् – 'वासुदेवस्य द्वे रूपे चलं चाचलमेव च। संन्यासी तु चलं रूपमचलं प्रतिमात्मकम्॥' इति। द्वे रूपे इति इह लोके दृश्यमानं रूपद्वयमित्यर्थः। तस्माद्ब्राह्मणानामेव संन्यासेऽधिकार इत्येकं मतम्। अन्ये तु – 'त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमाः' इति छन्दोगसूत्रात्, 'ऋणत्रयमपाकृत्य निर्ममो निरहंकृतिः। ब्राह्मणः क्षत्रियो वाऽथ वैश्यो वा प्रव्रजेद्गृहात्॥' इति स्मृत्यन्तरात्, जडभरताद्युपाख्यानाच्च क्षत्रियादेर्विरक्तस्य संन्यासो भवत्येव, परंतु दण्डधारणं नास्ति, प्रागुक्तवचनेन तस्यैव निषेधात्। किंच, 'त्रैवर्णिकानां संन्यासो विद्यते नात्र संशयः। शिखायज्ञोपवीतानां त्यागपूर्वैकदण्डयुक्॥' इति ब्रह्माण्डपुराणीयवचनेन दण्डधारणमपि पक्षेण संभवति। इत्थं सति श्रुत्यन्तरे स्मृत्यन्तरेऽपि क्वचित् क्वचित् ब्राह्मणेति द्विजोत्तमेति च वचनमवयुत्यानुवादरूपमुपलक्षणं वेति प्राहुः। युक्तं चैतत्। अत एव कालिदासीयमहाकाव्ये दशरथपितामहस्य रघोर्यथावत्संन्यासवर्णनं संगच्छते – 'यतिपार्थिवलिङ्गधारिणौ ददृशाते रघुराघवौ जनैः। अपवर्गमहोदयार्थयोर्भुवमंशाविव धर्मयोर्गतौ॥' (रघुवंशम्. ८।१६) इति। यतिलिङ्गं दण्डकौपीनादि। पार्थिवलिङ्गं छत्रचामरादि। धर्मयोः प्रवर्तकनिवर्तकयोः। तत्र प्रवर्तकः संध्योपासनाग्निहोत्रप्रजापालनादिरूपो महोदयार्थः। स च पार्थिवस्योचितः। निवर्तकश्च 'साक्षी केवलचिन्मयोऽहम्' इतिज्ञानाभ्यासरूपोऽपवर्गार्थः। स च यतेः परमहंसस्यैवोचितः। तथा च स्मृत्यन्तरे – 'संध्यावन्दनमारभ्य सर्वकर्म समाप्य च। अनुष्ठेयान्तराभावाद्ब्रह्मज्ञानेऽवतार्यते॥' इति। प्रैषमन्त्रेण परित्यज्य अवतार्यते पर्यवसाय्यते पर्यवसानं प्राप्यत इति यावत्। पुंसेति च शेषः।

यप्र. ३१-३४

## वेदाः

ब्रह्मचर्यकालावधिः

'द्वादशवर्षं ब्रह्मचर्यं पृथग्वेदेषु तत्स्मृतम्॥

(१) गोब्रा. १।५।२५.

गार्हस्थ्यसंन्यासयोर्विकल्पः

**[1]स यद्यगदः स्यात्पुत्रस्यैश्वर्ये पिता वसेत्, परि वा व्रजेत्॥**

विस्तरेण संन्यासप्रशंसा

**[2]न कर्मणा न प्रजया धनेन**
**त्यागेनैके अमृतत्वमानशुः।**
**परेण नाकं निहितं गुहायां**
**विभ्राजदेतद्यतयो विशन्ति॥**

यथोक्तब्रह्मतत्त्वस्मरणस्यान्तरङ्गं सर्वत्यागरूपं साधनमत्रोच्यते — नेति। अग्निहोत्रादिकं सहस्रसंवत्सरसत्रान्तं यत्कर्म तेन कर्मणा तदमृतत्वं न लभ्यते। 'प्रजया पितृभ्यः' (तैसं. ६।३।१०।५) इति श्रुतेः पितृविषयादृणाद्विमोचनहेतुर्या पुत्रादिरूपा प्रजा तयाऽ(प्य)मृतत्वं न लभ्यते। 'दाने सर्वं प्रतिष्ठितम्। तस्माद्दानं परमं वदन्ति' (नाउ. ७९) इतिश्रुतेर्धनदानस्य बहुविधफलसाधनत्वावगमात्तस्य दानस्य निष्पादकं यद्धनमस्ति तेन धनेनाप्यमृतत्वं न लभ्यते। किं तर्हि कर्मप्रजाधनादीनां सर्वेषां लौकिकवैदिकव्यापाराणां त्यागेनैके केचिदेवान्तर्मुखा अमृतत्वमानशुः प्राप्नुवन्ति। यत् अमृतत्वं यतय इन्द्रियनियमनशीला विशन्ति प्राप्नुवन्ति त(देत)दमृतत्वं नाकं परेण स्वर्गादप्युत्कृष्टं सद्गुहायां स्वकीयबुद्धावेकाग्रायां निहितमवस्थितं सत् (विभ्राजत्) विभ्राजते विशेषेण दीप्यते अन्तर्मुखैरनुभूयत इत्यर्थः।

नाउभा.

**[3]वेदान्तविज्ञानसुनिश्चितार्थाः**
**संन्यासयोगाद्यतयः शुद्धसत्त्वाः।**
**ते ब्रह्मलोके तु परान्तकाले**
**परामृतात्परिमुच्यन्ति सर्वे॥**

(१)पूर्वस्यामृचि त्यागस्य मोक्षसाधनत्वमुक्तम्। अत्र हि (?अन्यत्र) 'तरति शोकमात्मवित्' (छाउ.७।१।३) 'ज्ञानादेव (तु) कैवल्यं प्राप्यते येन मुच्यते' इत्यादिश्रुतिस्मृतिषु ज्ञानस्य(?स्यैव) मोक्षहेतुत्वमुच्यते। अतोऽस्यामृचि विरोधपरिहाराय ज्ञानसंन्यासयोर्मोक्षे पृथगुपयोग उच्यते। वेदान्ता उपनिषद्वाक्यानि तैरुत्पन्नं सर्वसंसारनिवर्तकत्वेन विशिष्टं ज्ञानं यदस्ति तेन सुनिश्चितो जीवब्रह्मैक्यलक्षणोऽर्थो यैः पुरुषैस्ते वेदान्तविज्ञानसुनिश्चितार्थाः। संन्यासः पूर्वोक्त(?क्तः) प्रजादित्यागः। तत्पूर्वको (♣योगः प्रमाणविपर्ययविकल्पनिद्रास्मृतिरूपाणां पञ्चानां चित्तवृत्तीनां निरोधः) 'योगश्चित्तवृत्तिनिरोधः' (योसू. १।२) (इति पतञ्जलिना सूत्रितत्वात्। तस्माद्योगाच्छुद्धसत्त्वा विषयभोगव्यावृत्तचित्ताः)। अत एव यतयो नियमशीलाः। एतेन ज्ञानं तत्त्वप्रकाशनेनाविद्यानिवर्तकम्, त्यागस्तु विषययो(?भो)गनिवृत्तिद्वारा चित्तशुद्धिहेतुरिति पृथगुपयोग उक्तो भवति। ब्रह्मणो लोकः दर्शनं साक्षात्कारः तस्मिन्नुत्पन्ने सति संसारिविलक्षणास्ते पुरुषाः। वैलक्षण्यद्योतनार्थस्तुशब्दः। तादृशाः पुरुषाः सर्वे (परिमुच्यन्ति) परिमुच्यन्ते। ज्ञानिषु देवमनुष्यत्वादिकृत उत्तमाधमभावोऽप्रयोजक इति विवक्षया सर्व इत्युक्तम्। कदा मुच्यन्त इत्याशङ्क्य परान्तकाले इत्युक्तम्। सत्यज्ञाने यो देहपातावसरः सोऽयमपरान्तकालः, पुनर्देहग्रहणस्य विद्यमानत्वात्। नष्टे त्वज्ञाने यो देहपातावसरः सोऽयं परान्तकालः, पुनर्देहग्रहणरहितत्वात्। तस्मिन्परान्तकाले संसारबन्धनाद्विमुच्यन्ते। ननु तत्त्व(?त्त्वा)ज्ञानिनोऽपि प्रलयकाले स्थूलसूक्ष्मशरीरद्वयबन्धनान्मुच्यन्त एवेत्याशङ्क्य परामृतादि(त्युक्तम्)। जगत्कारणत्वेनोत्कृष्टं परम्। तत्त्वज्ञानमन्तरेण विनाशरहितत्वादमृतम्। तादृशात्परामृतात् अव्याकृतात् अज्ञानिनः प्रलयकालेऽ(पि) न मुच्यन्ते। ज्ञानिनस्तु देहपातावसर एव तादृशादव्याकृतादपि मुच्यन्त इति (वि)शेषः।

नाउभा.

(२)ब्रह्मणो लोके दर्शने सति परान्तकाले पश्चिमजन्मसमाप्तिकाले परामृतात् परम् उत्कृष्टं तदेवामृतम् अमरणधर्मं ब्रह्म तस्मादनुभवगोचराद्ब्रह्मणो हेतोः परिमुच्यन्त इत्यर्थः। मुक्ता. १७६

**+[1]सत्यं परम्। परं सत्यम्। सत्येन न**

(१) शाआ. ४।१५.
(२) नाउ. १२; कैउ. १।३ जदेतद्य (जते यं); अवउ. ६ पू.
(३) नाउ. १२; कैउ. १।४ लोके तु (लोकेषु); मुक्ता. १७६ तैत्तिरीयके श्रूयते; यसं. १५५ कैउवत्, श्रुतिः; यप्र. ४६ मन्त्रः.

♣ 'त्रुटितोऽयमेतच्चिह्नान्तर्गतो ग्रन्थश्चतुःषष्ट्यनुवाकानुरोधिभाष्यात्संगृहीतः। प्रकृतग्रभाष्यस्य तत्रात्र चैक्यात्।' इति टिप्पणी कंसस्थग्रन्थविषये आदर्शपुस्तकसंपादकानां वर्तते। स ग्रन्थ आवश्यक इति कृत्वा कंसे संगृहीतः।

+ अनयोरनुवाकयोर्व्याख्यानं 'धर्मतत्त्वविचारः' इत्यस्मिन्प्रकरणे (वका. पृ. ३८१-३८८) द्रष्टव्यम्।

(१) नाउ. ७८; पमा. १।५५१ (न्यास इति ब्रह्म ब्रह्म हि परः परो हि ब्रह्म तानि वा एतान्यपराणि तपांसि न्यास एवात्यरेचयत्) एतावदेव, श्रुतिः.

सुवर्गाल्लोकाच्च्यवन्ते कदाचन। सतां हि सत्यम्। तस्मात्सत्ये रमन्ते॥

तप इति। तपो नानशनात्परम्। यद्धि परं तपस्तद्दुर्धर्षं तद्दुराधर्षम्। तस्मात्तपसि रमन्ते॥

दम इति नियतं ब्रह्मचारिणः। तस्माद्दमे रमन्ते॥

शम इत्यरण्ये मुनयः। तस्माच्छमे रमन्ते॥

दानमिति सर्वाणि भूतानि प्रशंसन्ति। दानान्नातिदुश्चरम्। तस्माद्दाने रमन्ते॥

धर्म इति। धर्मेण सर्वमिदं परिगृहीतम्। धर्मान्नातिदुष्करम्। तस्माद्धर्मे रमन्ते॥

प्रजन इति भूयांसः। तस्माद्भूयिष्ठाः प्रजायन्ते। तस्माद्भूयिष्ठाः प्रजनने रमन्ते॥

अग्नय इत्याह। तस्मादग्नय आधातव्याः॥

अग्निहोत्रमित्याह। तस्मादग्निहोत्रे रमन्ते॥

यज्ञ इति। यज्ञो हि देवाः। तस्माद्यज्ञे रमन्ते॥

मानसमिति विद्वांसः। तस्माद्विद्वांस एव मानसे रमन्ते॥

न्यास इति ब्रह्मा। ब्रह्मा हि परः। परो हि ब्रह्मा। तानि वा एतान्यवराणि परांसि। न्यास एवात्यरेचयत्॥

य एवं वेद। इत्युपनिषत्॥

[1]प्राजापत्यो हाऽऽरुणिः सुपर्णेयः प्रजापतिं पितरमुपससार — किं भगवन्तः परमं वदन्तीति। तस्मै प्रोवाच॥

सत्येन वायुरावाति। सत्येनाऽऽदित्यो रोचते दिवि। सत्यं वाचः प्रतिष्ठा। सत्ये सर्वं प्रतिष्ठितम्। तस्मात्सत्यं परमं वदन्ति॥

तपसा देवा देवतामग्र आयन्। तपसर्षयः सुवरन्वविन्दन्। तपसा सपत्नान्प्रणुदामारातीः। तपसि सर्वं प्रतिष्ठितम्। तस्मात्तपः परमं वदन्ति॥

दमेन दान्ताः किल्बिषमवधून्वन्ति। दमेन ब्रह्मचारिणः सुवरगच्छन्। दमो भूतानां दुराधर्षम्। दमे सर्वं प्रतिष्ठितम्। तस्माद्दमः परमं वदन्ति॥

शमेन शान्ताः शिवमाचरन्ति। शमेन नाकं मुनयोऽन्वविन्दन्। शमो भूतानां दुराधर्षम्। शमे सर्वं प्रतिष्ठितम्। तस्माच्छमः परमं वदन्ति॥

दानं यज्ञानां वरूथं दक्षिणा। लोके दातारं सर्वभूतान्युपजीवन्ति। दानेनारातीरपानुदन्त। दानेन द्विषन्तो मित्रा भवन्ति। दाने सर्वं प्रतिष्ठितम्। तस्माद्दानं परमं वदन्ति॥

धर्मो विश्वस्य जगतः प्रतिष्ठा। लोके धर्मिष्ठं प्रजा उपसर्पन्ति। धर्मेण पापमपनुदति। धर्मे सर्वं प्रतिष्ठितम्। तस्माद्धर्मं परमं वदन्ति॥

प्रजननं वै प्रतिष्ठा। लोके साधु प्रजायास्तन्तुं तन्वानः पितृणामनृणो भवति। तदेव तस्या अनृणम्। तस्मात्प्रजननं परमं वदन्ति॥

अग्नयो वै त्रयी विद्या देवयानः पन्थाः। गार्हपत्य ऋक्पृथिवी रथंतरम्। अन्वाहार्यपचनं यजुरन्तरिक्षं वामदेव्यम्। आहवनीयः साम सुवर्गो लोको बृहत्। तस्मादग्नीन् परमं वदन्ति॥

अग्निहोत्रं सायं प्रातर्गृहाणां निष्कृतिः स्विष्टं सुहुतं यज्ञक्रतूनां प्रायणं सुवर्गस्य लोकस्य ज्योतिः। तस्मादग्निहोत्रं परमं वदन्ति॥

यज्ञ इति। यज्ञेन हि देवा दिवं गताः। यज्ञेनासुरानपानुदन्त। यज्ञेन द्विषन्तो मित्रा भवन्ति। यज्ञे सर्वं प्रतिष्ठितम्। तस्माद्यज्ञं परमं वदन्ति॥

मानसं वै प्राजापत्यं पवित्रम्। मानसेन मनसा साधु पश्यति। मानसा ऋषयः प्रजा असृजन्त। मानसे सर्वं प्रतिष्ठितम्। तस्मान्मानसं परमं वदन्ति॥

न्यास इत्याहुर्मनीषिणो ब्रह्माणम्॥

ब्रह्मा विश्वः कतमः स्वयंभुप्रजापतिः संवत्सर इति॥

संवत्सरोऽसावादित्यः। य एष आदित्ये पुरुषः। स परमेष्ठी ब्रह्माऽऽत्मा॥

याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति। पर्जन्येनौषधिवनस्पतयः प्रजायन्ते। ओषधिवनस्पतिभिरन्नं भवति। अन्नेन प्राणाः। प्राणैर्बलम्। बलेन तपः। तपसा श्रद्धा। श्रद्धया मेधा। मेधया मनीषा। मनीषया मनः। मनसा शान्तिः। शान्त्या चित्तम्। चित्तेन स्मृतिम्। स्मृत्या स्मारम्। स्मारेण विज्ञानम्। विज्ञानेनाऽऽत्मानं वेदयति। तस्मादन्नं ददन्त्सर्वाण्येतानि

(१) नाउ. ७९; बौवि. २।११।२९ (तस्मात्प्रजननं परमं वदन्ति) एतावदेव, श्रुतिः.

**ददाति। अन्नात्प्राणा भवन्ति भूतानाम्। प्राणैर्मनः। मनसश्च विज्ञानम्। विज्ञानादानन्दो ब्रह्म योनिः॥**

**स वा एष पुरुषः पञ्चधा पञ्चात्मा। येन सर्वमिदं प्रोतं पृथिवी चान्तरिक्षं च द्यौश्च दिशश्चावान्तरदिशाश्च। स वै सर्वमिदं जगत् स स भूतं स भव्यं जिज्ञासक्लृप्त ऋतजा रयिष्ठा श्रद्धा सत्यो महस्वान् तपसो वरिष्ठात्॥**

**ज्ञात्वा तमेवं मनसा हृदा च भूयो न मृत्युमुपयाहि विद्वान्॥**

**तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः॥**

यत्यवान्तरभेदरूपस्यावधूतस्य लक्षणं
संन्यासस्य प्रशंसा च

[1]**अथ ह सांकृतिर्भगवन्तमवधूतं दत्तात्रेयं परिसमेत्य पप्रच्छ। भगवन् कोऽवधूतस्तस्य का स्थितिः किं लक्ष्म किं संसरणमिति। तं होवाच भगवो दत्तात्रेयः परमकारुणिकः॥**

सांकृतिदत्तात्रेयप्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था। आख्यायिकामवतारयति – अथेति। किमिति – भगवन्निति। सांकृतिप्रश्नोत्तरं भगवानाह – तमिति। भगव इत्यत्र भव इति पाठस्वीकारे भवतीति भवः भगवान् इति व्युत्पत्तिः(?)। विवरण.

**अक्षरत्वाद्वरेण्यत्वाद्धूतसंसारबन्धनात्।**
**तत्त्वमस्यादिलक्ष्यत्वादवधूत इतीर्यते॥**

अवधूत इत्यक्षरार्थमाह – अक्षर इति।

विवरण.

**यो विलङ्घ्याऽऽश्रमान्वर्णानात्मन्येव स्थितः सदा।**
**अतिवर्णाश्रमी योगी अवधूतः स कथ्यते॥**

मुख्यावधूतः परमात्मेत्युक्त्वा स्वातिरिक्तनिवृत्तिप्रधानगौणावधूतचर्यामाह – य इति। विवरण.

आश्रमक्रमः, संन्यासग्रहणोत्तरं
नाग्निः सेव्यः

[2]**ब्रह्मचारी वेदमधीत्य वेदोक्ताचरितब्रह्मचर्यो दारानाहृत्य पुत्रानुत्पाद्यताननुरूपोपाधिभिर्वितत्य इष्ट्वा च शक्तितो यज्ञैस्तस्य संन्यासो गुरुभिरनुज्ञातस्य बान्धवैश्च॥**

(१) **अवउ.** १-३.
(२) **कठरुउ.** ३,४.

ब्रह्मचर्याद्याश्रमाचारप्रकटनपूर्वकं क्रमसंन्यासमाह – ब्रह्मचारीति। ब्रह्मचर्यं समाप्याथ गुर्वनुज्ञयोद्वाह्याथ दारानाहृत्येति। तदनुरूपोपाधिभिः संयोज्य।

विवरण.

**+संन्यस्याग्निं न पुनरावर्तयेत्। यन्मृत्युर्जायमाहवमिति। अध्यात्ममन्त्राञ्जपेत्॥**

एषणाशून्यः संन्यासाधिकारी

[1]**एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति। या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणा। उभे ह्येते एषणे एव भवतः॥**

तम् एतं वै आत्मानं स्वं तत्त्वं विदित्वा ज्ञात्वा – 'अयमहमस्मि परं ब्रह्म सदा सर्वसंसारविनिर्मुक्तं नित्यतृप्तम्' इति, ब्राह्मणाः – ब्राह्मणानामेवाधिकारो व्युत्थाने। अतो ब्राह्मणग्रहणम्। व्युत्थाय वैपरीत्येनोत्थानं कृत्वा। कुत इत्याह – पुत्रैषणायाः। पुत्रार्थैषणा पुत्रैषणा – 'पुत्रेणेमं लोकं जयेयम्' इति लोकजयसाधनं पुत्रं प्रति इच्छा एषणा दारसंग्रहः। दारसंग्रहमकृत्वेत्यर्थः। वित्तैषणायाश्च – कर्मसाधनस्य गवादेरुपादानम् – 'अनेन कर्म कृत्वा पितृलोकं जेष्यामि' इति विद्यासंयुक्तेन वा देवलोकम्, केवलया वा हिरण्यगर्भविद्यया दैवेन वित्तेन देवलोकम्। दैवाद्वित्तात् व्युत्थानमेव नास्तीति केचित्, यस्मात् तद्बलेन हि किल व्युत्थानमिति। तदसत् 'एतावान्वै कामः' इति पठितत्वात् एषणामध्ये दैवस्य वित्तस्य।

+अयं ग्रन्थः कुण्डिकोपनिषदि प्रायशो व्याख्यात इति विवरणकारः।

(१) **शब्रा.** १४।६।४।१; **बृउ.** ३।५।१; **विश्व.** ३।६६ (व्युत्थायाथ भिक्षाचर्यं चरन्ति) एतावदेव, आम्नायः; **मभा.** ३।१ (ब्राह्मणाः०) पुत्रै (पुत्रे) वित्तै (वित्ते) लोकै (लोके) (या ह्येव.....भवतः०) श्रुतिः; **ब्रक.** ३१-३२ (एतं.....ब्राह्मणाः०) भिक्षा (भिक्ष) (या ह्येव..... भवतः०) श्रुतिः; **कृर.** ३७ (एतं....ब्राह्मणाः०) भिक्षाचर्यं (यथाप्राप्त - भिक्षं चर्यं) (या ह्येव...... भवतः०) श्रुतिः; **पमा.** १।५३४, १।५५० (या ह्येव.....भवतः०) वाजसनेयिब्राह्मणम्; **मच.** ६।३४ (व्युत्थायाथ भिक्षाचर्यमस्ति) एतावदेव, श्रुतिः : ६।८८ (ब्राह्मणाः पुत्रैषणायाश्च) एतावदेव, ब्राह्मणश्रुतिः; **यसं.** १८ (अथ.....भवतः०) बृहदारण्यकम् : ७६ विश्ववत्, बृहदारण्यकम्; **यप्र.** ३१ विश्ववत्, (=).

हिरण्यगर्भादिदेवताविषयैव विद्या वित्तमित्युच्यते, देवलोकहेतुत्वात्। न हि निरुपाधिकप्रज्ञानघनविषया ब्रह्मविद्या देवलोकप्राप्तिहेतुः, 'तस्मात्तत्सर्वमभवत्, आत्मा ह्येषां स भवति' (बृउ. १।४।१०) इति श्रुतेः। तद्बलेन हि व्युत्थानम्, 'एतं वै तमात्मानं विदित्वा' इति विशेषवचनात्। तस्मात् त्रिभ्योऽप्येतेभ्यः अनात्मलोकप्राप्तिसाधनेभ्यः एषणाविषयेभ्यो व्युत्थाय – एषणा कामः, 'एतावान्वै कामः' इति श्रुतेः – एतस्मिन् विविधे अनात्मलोकप्राप्तिसाधने तृष्णामकृत्वेत्यर्थः। सर्वा हि साधनेच्छा फलेच्छैव। अतो व्याचष्टे श्रुतिः – एकैव एषणेति। कथम्? या ह्येव पुत्रैषणा सा वित्तैषणा, दृष्टफलसाधनत्वतुल्यत्वात्। या वित्तैषणा सा लोकैषणा। फलार्थैव सा। सर्वः फलार्थप्रयुक्त एव हि सर्वं साधनमुपादत्ते। अत एकैव एषणा या लोकैषणा सा साधनमन्तरेण संपादयितुं न शक्यते इति साध्यसाधनभेदेन उभे हि यस्मात् एते एषणे एव भवतः। तस्मात् ब्रह्मविदो नास्ति कर्म कर्मसाधनं वा। अतो येऽतिक्रान्ता ब्राह्मणाः, सर्वं कर्म कर्मसाधनं च सर्वं देवपितृमानुषनिमित्तं यज्ञोपवितादि – तेन हि दैवं पित्र्यं मानुषं च कर्म क्रियते, 'निवीतं मनुष्याणाम्' इत्यादिश्रुतेः। तस्मात् पूर्वे ब्राह्मणाः ब्रह्मविदः व्युत्थाय कर्मभ्यः कर्मसाधनेभ्यश्च यज्ञोपवीतादिभ्यः, परमहंसपारिव्राज्यं प्रतिपद्य भिक्षाचर्यं चरन्ति – भिक्षार्थं चरणं भिक्षाचर्यम्, चरन्ति – त्यक्त्वा स्मार्तं लिङ्गं केवलमाश्रममात्रशरणानां जीवनसाधनं पारिव्राज्यव्यञ्जकम्। विद्वान् लिङ्गवर्जितः, 'तस्मादलिङ्गो धर्मज्ञोऽव्यक्तलिङ्गोऽव्यक्ताचारः' इत्यादिस्मृतिभ्यः 'अथ परिव्राड्विवर्णवासा मुण्डोऽपरिग्रहः' (जाउ.५) इत्यादिश्रुतेः, 'सशिखान्केशान्निकृत्य विसृज्य यज्ञोपवीतम्' (कठरुउ.१) इति च।

ननु 'व्युत्थायाथ भिक्षाचर्यं चरन्ति' इति वर्तमानापदेशात् अर्थवादोऽयम्। न विधायकः प्रत्ययः कश्चित् श्रूयते लिङ्लोट्तव्यानामन्यतमोऽपि। तस्मात् अर्थवादमात्रेण श्रुतिस्मृतिविहितानां यज्ञोपवीतादीनां साधनानां न शक्यते परित्यागः कारयितुम्। 'यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वा' (तैआ.२।१।१)। पारिव्राज्ये तावदध्ययनं विहितम् – 'वेदसंन्यसनाच्छूद्रस्तस्माद्वेदं न संन्यसेत्' (वाध.१०।४) इति। 'स्वाध्याय एवोत्सृज्यमानो वाचम्' (आध.२।२१।१०) इति च आपस्तम्बः। 'ब्रह्मोज्झं वेदनिन्दा च कौटसाक्ष्यं सुहृद्वधः। गर्हितानाद्ययोर्जग्धिः सुरापानसमानि षट्॥' (मस्मृ.११।५६) इति वेदपरित्यागे दोषश्रवणात्। 'उपासने गुरूणां वृद्धानामतिथीनां होमे जप्यकर्मणि भोजने आचमने स्वाध्याये च यज्ञोपवीती स्यात्' (आध.१।१५।१) इति। परिव्राजकधर्मेषु च गुरूपासनस्वाध्यायभोजनाचमनादीनां कर्मणां श्रुतिस्मृतिषु कर्तव्यतया चोदितत्वात् गुर्वाद्युपासनाङ्गत्वेन यज्ञोपवीतस्य विहितत्वात् तत्परित्यागो नैवावगन्तुं शक्यते। यद्यपि एषणाभ्यो व्युत्थानं विधीयत एव, तथापि पुत्राद्येषणाभ्यस्तिसृभ्य एव व्युत्थानम्, न तु सर्वस्मात्कर्मणः कर्मसाधनाच्च व्युत्थानम्। सर्वपरित्यागे च अश्रुतं कृतं स्यात् श्रुतं च यज्ञोपवीतादि हापितं स्यात्। तथा च महानपराधः विहिताकरणप्रतिषिद्धाचरणनिमित्तः कृतः स्यात्। तस्मात् यज्ञोपवीतादिलिङ्गपरित्यागोऽन्धपरंपरैव। न, 'यज्ञोपवीतं वेदांश्च सर्वं तद्वर्जयेद्यतिः' (कठरुउ.६) इति श्रुतेः। अपि च आत्मज्ञानपरत्वात्सर्वस्या उपनिषदः – 'आत्मा द्रष्टव्यः श्रोतव्यो मन्तव्यः', (बृउ.२।४।५) इति हि प्रस्तुतम्। स च आत्मैव साक्षादपरोक्षात्सर्वान्तरः अशनायादिसंसारधर्मवर्जित इत्येव विज्ञेय इति तावत् प्रसिद्धम्। सर्वा हीयमुपनिषत् एवंपरेति विध्यन्तरशेषत्वं तावन्नास्ति। अतो नार्थवादः, आत्मज्ञानस्य कर्तव्यत्वात्। आत्मा च अशनायादिधर्मवान्न भवतीति साधनफलविलक्षणो ज्ञातव्यः। अतोऽव्यतिरेकेण आत्मनो ज्ञानमविद्या – 'अन्योऽसावन्योऽहमस्मीति न स वेद' (बृउ.१।४।१०) 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' (बृउ.४।४।१९) 'एकधैवानुद्रष्टव्यम्' (बृउ.४।४।२०) 'एकमेवाद्वितीयम्' (छाउ.६।२।१) 'तत्त्वमसि' (छाउ.६।८।८) इत्यादिश्रुतिभ्यः। क्रियाफलं साधनं च अशनायादिसंसारधर्मातीतादात्मनोऽन्यत् अविद्याविषयम् 'यत्र हि द्वैतमिव भवति' (बृउ.२।४।१४) 'अन्योऽसावन्योऽहमस्मीति न स वेद' (बृउ.१।४।१०)

'अथ येऽन्यथाऽतो विदुः' (छाउ.७।२५।२) इत्यादिवाक्यशतेभ्यः। न च विद्याविद्ये एकस्य पुरुषस्य सह भवतः, विरोधात् तमःप्रकाशाविव। तस्मात् आत्मविदः अविद्याविषयोऽधिकारो न द्रष्टव्यः क्रियाकारकफलभेदरूपः, 'मृत्योः स मृत्युमाप्नोति' इत्यादिनिन्दितत्वात्, सर्वक्रियासाधनफलानां च अविद्याविषयाणां तद्विपरीतात्मविद्यया हातव्यत्वेनेष्टत्वात्, यज्ञोपवीतादिसाधनानां च तद्विषयत्वात्। तस्मात् असाधनफलस्वभावादात्मनः अन्यविषया विलक्षणा एषणा। उभे ह्येते साधनफले एषणे एव भवतः, यज्ञोपवीतादेस्तत्साध्यकर्मणां च साधनत्वात्, 'उभे ह्येते एषणे एव' इति हेतुवचनेनावधारणात्। यज्ञोपवीतादिसाधनात् तत्साध्येभ्यश्च कर्मभ्यः अविद्याविषयत्वात् एषणारूपत्वाच्च जिहासितव्यरूपत्वाच्च व्युत्थानं विधित्सितमेव। ननूपनिषद आत्मज्ञानपरत्वात् व्युत्थानश्रुतिः तत्स्तुत्यर्था, न विधिः। न, विधित्सितविज्ञानेन समानकर्तृकत्वश्रवणात्। न हि अकर्तव्येन कर्तव्यस्य समानकर्तृकत्वेन वेदे कदाचिदपि श्रवणं संभवति। कर्तव्यानामेव हि अभिषवहोमभक्षाणां यथा श्रवणम् 'अभिषुत्य हुत्वा भक्षयन्ति' इति, तद्वत् आत्मज्ञानैषणाव्युत्थानभिक्षाचर्याणां कर्तव्यानामेव समानकर्तृकत्वश्रवणं भवेत्। अविद्याविषयत्वात् एषणात्वाच्च अर्थप्राप्त आत्मज्ञानविधेरेव यज्ञोपवीतादिपरित्यागः, न तु विधातव्य इति चेत् — न । सुतरामात्मज्ञानविधिनैव विहितस्य समानकर्तृकत्वश्रवणेन दाढर्योपपत्तिः, तथा भिक्षाचर्यस्य च। यत्पुनरुक्तं वर्तमानापदेशादर्थवादमात्रमिति — न, औदुम्बरयूपादिविधिसमत्वाददोषः।

'व्युत्थाय भिक्षाचर्यं चरन्ति' इत्यनेन पारिव्राज्यं विधीयते। पारिव्राज्याश्रमे च यज्ञोपवीतादिसाधनानि विहितानि लिङ्गं च श्रुतिभिः स्मृतिभिश्च। अतः तत् वर्जयित्वा अन्यस्माद्व्युत्थानं एषणात्वेऽपीति चेत् — न, विज्ञानसमानकर्तृकात्पारिव्राज्यात् एषणाव्युत्थानलक्षणात् पारिव्राज्यान्तरोपपत्तेः। यद्धि तत् एषणाभ्यो व्युत्थानलक्षणं पारिव्राज्यं तत् आत्मज्ञानाङ्गम्, आत्मज्ञानविरोध्येषणापरित्यागरूपत्वात्, अविद्याविषयत्वाच्चैषणायाः। तद्व्यतिरेकेण च अस्ति आश्रमरूपं पारिव्राज्यं ब्रह्मलोकादिफलप्राप्तिसाधनम्, यद्विषयं यज्ञोपवीतादिसाधनविधानं लिङ्गविधानं च। न च एषणारूपसाधनोपादानस्य आश्रमधर्ममात्रेण पारिव्राज्यान्तरे विषये संभवति सति सर्वोपनिषद्विहितस्य आत्मज्ञानस्य बाधनं युक्तम्, यज्ञोपवीताद्यविद्याविषयैषणारूपसाधनोपादित्सायां च अवश्यम् असाधनफलरूपस्य अशनायादिसंसारधर्मवर्जितस्य 'अहं ब्रह्मास्मि' इति विज्ञानं बाध्यते। न च तद्बाधनं युक्तम्, सर्वोपनिषदां तदर्थपरत्वात्। 'भिक्षाचर्यं चरन्ति' इत्येषणां ग्राहयन्ती श्रुतिः स्वयमेव बाधत इति चेत् अथापि स्यादेषणाभ्यो व्युत्थानं विधाय पुनरेषणैकदेशं भिक्षाचर्यं ग्राहयन्ती तत्संबद्धमन्यदपि ग्राहयतीति चेत् — न, भिक्षाचर्यस्याप्रयोजकत्वात् — हुत्वोत्तरकालभक्षणवत्। शेषप्रतिपत्तिकर्मत्वात् अप्रयोजकं हि तत्। असंस्कारकत्वाच्च — भक्षणं पुरुषसंस्कारकमपि स्यात्, न तु भिक्षाचर्यम्। नियमादृष्टस्यापि ब्रह्मविदः अनिष्टत्वात्। नियमादृष्टस्यानिष्टत्वे किं भिक्षाचर्येणेति चेत् — न, अन्यसाधनात् व्युत्थानस्य विहितत्वात्। तथापि किं तेनेति चेत् — यदि स्यात्, बाढम्। अभ्युपगम्यते हि तत्। यानि पारिव्राज्येऽभिहितानि वचनानि 'यज्ञोपवीत्येवाधीयीत' इत्यादीनि, तानि अविद्वत्पारिव्राज्यमात्रविषयाणीति परिहृतानि। इतरथाऽऽत्मज्ञानबाधः स्यादिति ह्युक्तम्। 'निराशिषमनारम्भं निर्नमस्कारमस्तुतिम्। अक्षीणं क्षीणकर्माणं तं देवा ब्राह्मणं विदुः॥' इति सर्वकर्माभावं दर्शयति स्मृतिः विदुषः — 'विद्वाँल्लिङ्गविवर्जितः' 'तस्मादलिङ्गो धर्मज्ञः' इति च। तस्मात् परमहंसपारिव्राज्यमेव व्युत्थानलक्षणं प्रतिपद्येत आत्मवित् सर्वकर्मसाधनपरित्यागरूपमिति। शंकर.

**[1]एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति। एतद्ध स्म वै तत्पूर्वे विद्वाँसः प्रजां न कामयन्ते। किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति। ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ**

(१) **शब्रा.** १४।७।२।२५-२६ मिच्छन्तः (मीप्सन्तः) तत्पूर्वे + (ब्राह्मणा अनूचाना) (ते ह .... भवतः०); **बृउ.** ४।४।२२; **पमा.** १।५५०-५५१ (एतमेव....प्रव्रजन्ति) एतावदेव, वाजसनेयिब्राह्मणम्; **मुक्ता.** १७६ पमावत्, बृहदारण्यकम्; **यसं.** १९ सर्वं मुक्तावत्.

**भिक्षाचार्यं चरन्ति। या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणा। उभे ह्येते एषणे एव भवतः॥**

एतमेव आत्मानं स्वं लोकम् इच्छन्तः प्रार्थयन्तः प्रव्राजिनः प्रव्रजनशीलाः प्रव्रजन्ति प्रकर्षेण व्रजन्ति, सर्वाणि कर्माणि संन्यस्यन्तीत्यर्थः। 'एतमेव लोकमिच्छन्तः' इत्यवधारणात् न बाह्यलोकत्रयेप्सूनां पारिव्राज्ये अधिकार इति गम्यते। न हि गङ्गाद्वारं प्रतिपित्सुः काशीदेशनिवासी पूर्वाभिमुखः प्रैति। तस्मात् बाह्यलोकत्रयार्थिनां पुत्रकर्मापरब्रह्मविद्याः साधनम्, 'पुत्रेणायं लोको जय्यो नान्येन कर्मणा' (बृउ. १।५।१६) इत्यादिश्रुतेः। अतः तदर्थिभिः पुत्रादिसाधनं प्रत्याख्याय न पारिव्राज्यं प्रतिपत्तुं युक्तम्, अतत्साधनत्वात्पारिव्राज्यस्य। तस्मात् 'एतमेव लोकमिच्छन्तः प्रव्रजन्ति' इति युक्तमवधारणम्। आत्मलोकप्राप्तिर्हि अविद्यानिवृत्तौ स्वात्मन्यवस्थानमेव। तस्मात् आत्मानं चेत् लोकमिच्छति यः, तस्य सर्वक्रियोपरम एव आत्मलोकसाधनं मुख्यम् अन्तरङ्गम्। यथा पुत्रादिरेव बाह्यलोकत्रयस्य, पुत्रादिकर्मण आत्मलोकं प्रति असाधनत्वात्। असंभवेन च विरुद्धत्वमवोचाम। तस्मात् आत्मानं लोकमिच्छन्तः प्रव्रजन्त्येव, सर्वक्रियाभ्यो निवर्तेरन्नेवेत्यर्थः। यथा च बाह्यलोकत्रयार्थिनः प्रतिनियतानि पुत्रादीनि साधनानि विहितानि एवमात्मलोकार्थिनः सर्वेषणानिवृत्तिः पारिव्राज्यं ब्रह्मविदो विधीयत एव। कुतः पुनः ते आत्मलोकार्थिनः प्रव्रजन्त्येवेत्युच्यते। तत्र अर्थवादवाक्यरूपेण हेतुं दर्शयति — एतद्ध स्म वै तत्। तदेतत् पारिव्राज्ये कारणमुच्यते ह स्म वै किल पूर्वे अतिक्रान्तकालीना विद्वांसः आत्मज्ञाः, प्रजां कर्म अपरब्रह्मविद्यां च। प्रजोपलक्षितं हि त्रयमेतत् बाह्यलोकत्रयसाधनं निर्दिश्यते 'प्रजाम्' इति। प्रजां किम्? न कामयन्ते, पुत्रादिलोकत्रयसाधनं न अनुतिष्ठन्तीत्यर्थः। ननु अपरब्रह्मदर्शनमनुतिष्ठन्त्येव, तद्बलाद्धि व्युत्थानम्। न, अपवादात्। 'ब्रह्म तं परादाद्योऽन्यत्राऽऽत्मनो ब्रह्म वेद, सर्वं तं परादात्' (बृउ. २।४।६) इति अपरब्रह्मदर्शनमपि अपवदत्येव, अपरब्रह्मणोऽपि सर्वमध्यान्तर्भावात्। 'यत्र नान्यत्पश्यति' (छाउ. ७।२४।१) इति च। पूर्वापरबाह्यान्तरदर्शनप्रतिषेधाच्च 'अपूर्वमनपरमनन्तरमबाह्यम्' (बृउ. २।५।१९) इति 'तत्केन कं पश्येत्.... विजानीयात्' (बृउ. ४।५।१५) इति च। तस्मात् न आत्मदर्शनव्यतिरेकेण अन्यत् व्युत्थानकारणमपेक्षते। कः पुनः तेषामभिप्राय इत्युच्यते — किं प्रयोजनं फलं साध्यं करिष्यामः प्रजया साधनेन। प्रजा हि बाह्यलोकसाधनं निर्ज्ञाता। स च बाह्यलोको नास्त्यस्माकमात्मव्यतिरिक्तः। सर्वं ह्यस्माकमात्मभूतमेव, सर्वस्य च वयमात्मभूताः। आत्मा च नः आत्मत्वादेव न केनचित् साधनेन उत्पाद्यः आप्यो विकार्यः संस्कार्यो वा। यदपि आत्मयाजिनः संस्कारार्थं कर्मेति तदपि कार्यकरणात्मदर्शनविषयमेव, इदं मेऽनेनाङ्गं संस्क्रियते — इति अङ्गाङ्गित्वादिश्रवणात्। न हि विज्ञानघनैकरसनैरन्तर्यदर्शिनः अङ्गाङ्गिसंस्कारोपधानदर्शनं संभवति। तस्मात् न किंचित् प्रजादिसाधनैः करिष्यामः। अविदुषां हि तत् प्रजादिसाधनैः कर्तव्यं फलम्। न हि मृगतृष्णिकायामुदकपानाय तदुदकदर्शी प्रवृत्त इति, तत्र उषरमात्रमुदकाभावं पश्यतोऽपि प्रवृत्तिर्युक्ता। एवमस्माकमपि परमार्थात्मलोकदर्शिनां प्रजादिसाधनसाध्ये मृगतृष्णिकादिसमे अविद्वद्दर्शनविषये न प्रवृत्तिर्युक्तेत्यभिप्रायः।

तदेतदुच्यते — येषाम् अस्माकं परमार्थदर्शिनां नः, अयमात्मा अशनायादिविनिर्मुक्तः साध्वसाधुभ्यामविकार्यः अयं लोकः फलमभिप्रेतम्। न चास्य आत्मनः साध्यसाधनादिसर्वसंसारधर्मविनिर्मुक्तस्य साधनं किंचित् एषितव्यम्। साध्यस्य हि साधनान्वेषणा क्रियते। असाध्यस्य साधनान्वेषणायां हि जलबुद्ध्या स्थल इव तरणं कृतं स्यात् खे वा शाकुनपदान्वेषणम्। तस्मात् एतमात्मानं विदित्वा प्रव्रजेयुरेव ब्राह्मणाः। न कर्म आरभेरन्नित्यर्थः, यस्मात् पूर्वे ब्राह्मणा एवं विद्वांसः प्रजामकामयमानाः। ते एवं साध्यसाधनसंव्यवहारं निन्दन्तः अविद्वद्विषयोऽयमिति कृत्वा किं कृतवन्त इत्युच्यते — ते ह स्म किल पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्तीत्यादि व्याख्यातम्। तस्मात् आत्मानं लोकमिच्छन्तः प्रव्रजन्ति

प्रव्रजेयुः, इत्येष विधिः अर्थवादेन संगच्छते। न हि सार्थवादस्य अस्य लोकस्तुत्याभिमुख्यमुपपद्यते। प्रव्रजन्तीत्यस्यार्थवादरूपो हि 'एतद्ध स्म' इत्यादिरुत्तरो ग्रन्थः। अर्थवादश्चेत् नार्थवादान्तरमपेक्षेत। अपेक्षते तु 'एतद्ध स्म' इत्याद्यर्थवादं 'प्रव्रजन्ति' इत्येतत्। यस्मात् पूर्वे विद्वांसः प्रजादिकर्मभ्यो निवृत्ताः प्रव्रजितवन्त एव, तस्मात् अधुनातना अपि प्रव्रजन्ति प्रव्रजेयुः — इत्येवं संबध्यमानं न लोकस्तुत्यभिमुखं भवितुमर्हति, विज्ञानसमानकर्तृकत्वोपदेशादित्यादिना अवोचाम। वेदानुवचनादिसहपाठाच्च। यथा आत्मवेदनसाधनत्वेन विहितानां वेदानुवचनादीनां यथार्थत्वमेव, नार्थवादत्वं तथा तैरेव सह पठितस्य पारिव्राज्यस्य आत्मलोकप्राप्तिसाधनत्वेन अर्थवादत्वमयुक्तम्। फलविभागोपदेशाच्च।

'एतमेवाऽऽत्मानं लोकं विदित्वा' इति अन्यस्मात् बाह्यात् लोकात् आत्मानं फलान्तरत्वेन प्रविभजति, यथा 'पुत्रेणैवायं लोको जय्यः नान्येन कर्मणा, कर्मणा पितृलोकः' (बृउ. १।५।१६) इति। न च प्रव्रजन्तीत्येतत् प्राप्तवत् लोकस्तुतिपरम् प्रधानवच्च अर्थवादापेक्षम् — सकृच्छ्रुतं स्यात्। तस्मात् भ्रान्तिरेव एषा — लोकस्तुतिपरमिति। न च अनुष्ठेयेन पारिव्राज्येन स्तुतिरुपपद्यते। यदि पारिव्राज्यमनुष्ठेयमपि सत् अन्यस्तुत्यर्थं स्यात्, दर्शपूर्णमासादीनामपि अनुष्ठेयानां स्तुत्यर्थता स्यात्। न च अन्यत्र कर्तव्यता एतस्माद्विषयात् निर्ज्ञाता यत इह स्तुत्यर्थो भवेत्। यदि पुनः क्वचिद्विधिः परिकल्प्येत पारिव्राज्यस्य स इहैव मुख्यः, नान्यत्र संभवति। यदपि अनधिकृतविषये पारिव्राज्यं परिकल्प्यते तत्र वृक्षाद्यारोहणाद्यपि पारिव्राज्यवत् कल्प्येत कर्तव्यत्वेन अनिर्ज्ञातत्वाविशेषात्। तस्मात् स्तुतित्वगन्धोऽपि अत्र न शक्यः कल्पयितुम्। शंकर.

आश्रमसमुच्चयविकल्पौ, विरक्तस्य संन्यासेऽधिकारः, संन्यासफलम्

**[1]अथ ह जनको ह वैदेहो याज्ञवल्क्यमुपसमेत्योवाच — 'भगवन्संन्यासमनुब्रूहि' इति।**

**स होवाच याज्ञवल्क्यः — ब्रह्मचर्यं समाप्य गृही भवेत्, गृहि भूत्वा वनी भवेत्, वनी भूत्वा प्रव्रजेत्।**

(१) **जाउ.** ४; **याज्ञउ.** १ अथ ह (अथ) गृही भूत्वा वनी भवेत् +(गृहात्); **मेधा.** ६।३६ (गृही भूत्वा प्रव्रजेदथवेतरथा ब्रह्मचयदिव प्रव्रजेत्) एतावदेव, जाबालश्रुतिः : ६।८९ (गृही भूत्वा वनी भवेत् वनी भूत्वा प्रव्रजेत्) एतावदेव, जाबालश्रुतिः; **मिता.** ३।५६-५७ (अथ....याज्ञवल्क्यः०) समाप्य (परिसमाप्य) (अथ पुन...प्रव्रजेत्०) जाबालश्रुतिः; **अप.** १।५२ पृ. ७९ (ब्रह्मचारी भूत्वा गृही भवेद्गृही भूत्वा वनी भवेद्वनी भूत्वा प्रव्रजेत्) एतावदेव (-) : ३।५५-५६ पृ. ९४६ (अथ....याज्ञवल्क्यः०) देव प्र (देव परि) द्वा व (द्व) शेषं सर्वं मितावत् : ३।५५-५६ पृ. ९५१ (यदहरेव विरजेत्तदहरेव प्रव्रजेत्) एतावदेव, श्रुतिः; **मभा.** ३।१ (अथ...याज्ञवल्क्यः०) वनाद्वा + (ब्रह्मलोकं गच्छति) (अथ पुन.....प्रव्रजेत् ०) जाबालश्रुतिः; **उ.** २।२१।८ (अथ ह..... वेतरथा०) (अथ पुन....ग्निको वा०) श्रुतिः :२।२३।८ सर्वम् अप. ३।५५-५६ पृ. ९५१ वत्; **स्मृच.** १।३५ (यदितरथा ब्रह्मचयदिव प्रव्रजेत्) एतावदेव, (-) : १।१७२ (यदि वेतरथा ब्रह्मचयदिव प्रव्रजेत्) एतावदेव, (-) : १।१७४ मितावत्, जाबालश्रुतिः; **ममु.** ६।३८ (अथ...... याज्ञवल्क्यः०) यदि वेत (इत) (अथ पुन -- प्रव्रजेत्०) जाबालिश्रुतिः; **पमा.** १।५२४ (ब्रह्मचर्यं समाप्य गृही भवेत्. गृहाद्वनी भूत्वां प्रव्रजेत्) एतावदेव, जाबाला आमनन्ति : १।५३१ (अथ ह....याज्ञवल्क्यः०) (अथ पुन..... प्रव्रजेत्०) जाबालश्रुतिः : १।५३३ (अथ ह.... वनाद्वा०) अथ (अन्यः) को वाऽस्नातको वोत्सन्ना (कोत्सन्ना) जाबालश्रुतिः; **मपा.** १११ (यदहरेव विरज्येत्तदहरेव प्रव्रजेत्) एतावदेव (-); **निप.** ३०२ (वनी भूत्वा प्रव्रजेत्, यदहरेव विरजेत्तदहरेव प्रव्रजेत्) एतावदेव, श्रुतिः; **दीक.** ३।५६-५७ (अथ....याज्ञवल्क्यः०) समाप्य (परिसमाप्य) यदि वे (इति चे) (अथ पुन....प्रव्रजेत्०) जाबालः; **मर.** ६१४ सर्वं मितावत्; **मच.** ४।१ (अथ ह...याज्ञवल्क्यः०) (वनी भूत्वा.... रेव प्रव्रजेत्०) श्रुतिः : ६।१ (गृही भूत्वा वनी भवेत्) एतावदेव, श्रुतिः : ६।३३ (वनी भूत्वा प्रव्रजेत्, यदि चेतरथा ब्रह्मचयदिव व्रजेद्वनाद्वा गृहाद्वा, अव्रती वा व्रती वा उच्छिन्नाग्निरनुच्छिन्नाग्निको यदहरेव विरजेत्तदहरेव प्रव्रजेत्) एतावदेव, श्रुतिः : ६।८५ (अथ ह.....याज्ञवल्क्यः०) (यदि वे....देव प्रव्रजेत्०) (-) : ९।६८ (यदहरेव विरजेत्तदहरेव प्रव्रजेत्) एतावदेव, श्रुतिः : १२।९७ मच. ६।८५ वत्, श्रुतिः; **गप.** ४६० (वनी भूत्वा प्रव्रजेत्, यदहरेव विरजेत्तदहरेव प्रव्रजेत्) एतावदेव, श्रुतिः; **बौवि.** २।११।३६ (ब्रह्मचयदिव प्रव्रजेत् गृहाद्वा वनाद्वा) एतावदेव, स्मृतिः; **चमव्या.**३ (ब्रह्मचयदिव प्रव्रजेत्) एतावदेव, (-); **मुक्ता.** ७३ सर्वं स्मृच. १।१७२ वत् : १७२ पमा. १।५३१ वत्, जाबालिश्रुतिः : १७३ (अथ ह..... वनाद्वा०) वा व्रती (व्रती) (वाऽस्नातको०) जाबालश्रुतिः; **सिन्धु.** २१२९ (अथ ह.... भूत्वा प्रव्रजेत्०) वेत (चेत) जाबालश्रुतिः; **संम.** ४३ स्मृच. १।१७२ वत् जाबालश्रुतिः; **विपा.** ५।४९४ (अथ ह... भूत्वा प्रव्रजेत्०) गृहाद्वा व (गृहाद्व) अथ (यः) (रनग्नि०) रेव + (च) जाबालश्रुतिः; **वीमि.** ३।५६-५७ मितावत्, जाबालिः; **संप्र.** ५६२ (ब्रह्मचर्यं परिसमाप्य गृही भवेत्, गृही भूत्वा वनी भवेत्, वनी भूत्वा प्रव्रजेत्) एतावदेव, जाबालिः : ५६३ (अथवा ब्रह्मचयदिव प्रव्रजेत् गृहाद्वनाद्वा) एतावदेव, जाबालिः; **यसं.** १ (अथ ह.....याज्ञवल्क्यः०) (गृहाद्वा..... प्रव्रजेत्०) जाबालश्रुतिः : २ (अथ ह.....ग्निको वा०) श्रुतिः : ३ (अथ ह.... वनाद्वा०) जाबालश्रुतिः; **यप्र.** ३२ यसं. २ वत्, आरण्यकश्रुतिः; **बाल.** ३।६० पृ. ९९ (अथ ह...भूत्वा प्रव्रजेत्०) वेत (चेत) (वनाद्वा०) वा व्रती (व्रती) को वाऽस्ना (कोऽस्ना) जाबालश्रुतिः; **कृभ.** ९८७ सर्वं चमव्यावत्.

**यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा। अथ पुनरव्रती वा व्रती वा स्नातको वाऽस्नातको वोत्सन्नाग्निरनग्निको वा यदहरेव विरजेत्तदहरेव प्रव्रजेत्।**

अथ ब्रह्मचारिप्रश्नानन्तरं ह प्रसिद्धः जनकः नामतः। ह प्रसिद्धः। वैदेहः विदेहदेशाधिपतिः। याज्ञवल्क्यमुपसमेत्य उप समीपे समागत्योवाच – 'भगवन् षड्गुणैश्वर्यसंपन्न, संन्यासमनुब्रूहि' इति। अवसरमनु केन कथं कदा करणीय इत्यर्थः।

स होवाच याज्ञवल्क्यः इदानीमविरक्तस्य कालप्राप्तं संन्यासं वक्तुमाश्रमव्यवस्थामाह। ब्रह्मचर्यं विरक्तिशून्यः समाप्य स्नातकः प्रथमाश्रमविरक्तः भवेदिति शेषः। तत्र चेत्प्रीतिः संकल्पपुरःसरं तत्रैवावतिष्ठेत। तत्र प्रीतेरभावेऽष्टवर्षानन्तरं द्विजातीनां संस्काररूपं वेदग्रहणाङ्गम् एकं द्वौ त्रींश्चतुरो वेदान् एकां स्वशाखां षडङ्गयुक्तां वा यथाशास्त्रं गुरुशुश्रूषापुरःसरमधीत्य समावर्तनकर्मणा समाप्य प्राप्तयौवनकालो गृही दारपरिग्रहलक्षणं श्रौतस्मार्तयोरन्यतरेण निषेवितसर्वकर्मसंपादकं त्रिवर्गकारणं कंचित्कालं गार्हस्थ्यं गृहम् अस्यास्ति इति गृही भवेत्। गृह इच्छाभावे गृहाद्वनी कन्दमूलफलाद्याहारेण साग्निहोत्रो निरग्निहोत्रो वा, वनं निवासस्थानमस्यास्ति इति वनी भवेदित्यनुषङ्गः। भूत्वा वनस्थाश्रमं स्वीकृत्य अत्रापीच्छाया अभावे प्रव्रजेत् चतुर्थाश्रमं गच्छेत्। अत्र चतुर्ष्वाश्रमेष्वनुक्रमोऽयम्। आश्रमान्तरं गन्तुमिच्छाया अभाव एकैकं यावज्जीवं संकल्पपुरःसरं गन्तुमिच्छेत्। संन्यासमन्तरेणानुक्रमोऽपि नियतः। प्रातिलोम्यं तु चतुर्ष्वपि न कदाचिदपि।

इदानीं सति वैराग्ये संन्यासे विशेषमाह – यदि वा पक्षान्तरे विकल्पः इतरथा वैराग्यसंपन्नः संसारस्पृहातः प्रकारान्तरात्। अधीतस्वशाखावेदान्तः सर्ववेदान्ताध्यायी वा ब्रह्मचर्यादेव प्रथमाश्रमादेव स्वल्पकालं चीर्णात् ज्ञानकाले वा, असति यावज्जीवं तदाश्रमसंकल्पे उत्तराश्रमं वाऽस्वीकृत्यापि प्रव्रजेत् पारमहंस्याश्रमं गच्छेत्। यद्यपि प्रव्रजेदिति श्रुतिः साधारणी कुटीचकादीनामपि तथाऽपीतरथाशब्देन वैराग्यसंपत्तेरभिधानाद्वैराग्यस्य साकल्ये सति संकोचस्यायुक्तत्वात्पारमहंस्यमेव युक्तंग्रहम्। ब्रह्मचर्यादिति ब्रह्मचर्यावधिश्रवणादनुपनीतस्यानधिकारः सूचितः। यद्यपि जन्मान्तराधीतवेदत्वेन चेह तदर्थस्मरणादुपनयने(न) नोपयोगः तथाऽपि न तत्र वैधेन पारमहंस्येनाप्युपयोगः, स्वतःसिद्धत्वात्तस्य। गृहाद्वा कृतत्रिवर्गादकृतत्रिवर्गाद्वा अकृतगृहस्थाश्रमयावज्जीवसंकल्पः। वनाद्वा अचीर्णसमग्रवनस्थधर्माद्वा यावज्जीवं तदाश्रमसंकल्पाभावे। वाशब्दो द्वयोरेकस्य चोत्तराश्रमस्याग्रहणेऽपि वैराग्ये सति त्रिष्वप्याश्रमेषु प्रव्रज्याधिकारसमुच्चयार्थः। ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा प्रव्रजेत् वनादेव वा प्रव्रजेदित्यन्वयः।

अथ प्रकृतेभ्यो ब्रह्मचारिगृहस्थवानप्रस्थाश्रमिभ्योऽर्थान्तरभूतः पुनः पश्चादुत्पन्नवैराग्यः अव्रती वा व्रती वा। व्रतमस्यास्तीति व्रती। न व्रती अव्रती अव्रतवान्। अस्य वनस्थस्य जपविमोक्षानन्तरं वनस्थाश्रमसमाप्त्यभिषेके प्राप्ते कुतश्चिन्निमित्तात् संन्यासाश्रमप्रवेशे यावदवस्थानं तत् द्वेधा भवति मासोपवासजपादिव्रतत्वेन तद्विधुरत्वेन वा। तेन भेदेन भिन्नौ व्रत्यव्रतीतिशब्दाभ्यामुच्येते। वाशब्दौ वैराग्ये सति प्रव्रजेदित्यनुषङ्गार्थावुभयत्र। ब्रह्मचारिणो वेदानामध्ययनेऽवस्थानम्, स्वशाखामात्रस्य सकृत्पाठोऽपि। तावेतौ कुतश्चिन्निमित्तादकृतदारपरिग्रहौ स्नातकास्नातकशब्दाभ्यामुच्येते। स्नातको वा वेदान् साङ्गान् सर्वानधीत्य स्नातः स्नातकः, स्वशाखामात्रपाठेन स्नातः अस्नातको वा, मुख्यस्नातकत्वाभावात्। वाशब्दौ प्रव्रजेदित्युभयत्रानुषङ्गार्थौ। गृहस्थोऽपि द्वेधाऽऽश्रमी भवति। एकः स्वीकृताग्निः कलत्रमरणात् निमित्तान्तराद्वा उत्सन्नाग्निः। अपरस्तु कस्माच्चिन्निमित्तात् सत्स्वपि दारेष्वपरिगृहीताग्निः। तावेतावुत्सन्नाग्न्यनग्निकशब्दाभ्यामुच्येते। उत्सन्ना विच्छिन्ना अग्नयो यस्य स उत्सन्नाग्निः। अगृहीता अग्नयो येन सोऽनग्निकः। अत्रैक एव वाकार उभयत्र प्रव्रजेदित्यनुषङ्गार्थः। एवं पुरुषेष्वाश्रमिष्वनाश्रमिषु च पारमहंस्यस्यानियतिमुक्त्वा कालकृताऽपि नात्र नियतिरित्याह – यदहरेव यस्मिन्नेवाहनि विरजेत् वैराग्यं प्राप्नुयात् तदहरेव तस्मिन्नेवाहनि प्रव्रजेत्।

शंनन्द.

**[1]एष पन्था ब्रह्मणा हानुवित्तस्तेनैति संन्यासी ब्रह्मविदित्येवमेवैष भगवन्निति वै याज्ञवल्क्यः॥**

एष संन्यासलक्षणः पन्थाः मार्गः ब्रह्मज्ञानप्राप्तिहेतुः ब्रह्माधिकारिणा ब्रह्मणा हानुवित्तः प्रसिद्धः वेदे वाऽनुज्ञातो लब्धो वा तेन पथा एति गच्छति। संन्यासी लोकपुत्रवित्तैषणाविनिर्मुक्तः सर्वसङ्गपरित्यागी परमहंसः ब्रह्मवित् ब्रह्मसाक्षात्कारवान्भवति। संन्यासेन ब्रह्मज्ञानम्, तस्माद्विदेहकैवल्यमित्यर्थः। इति अत्रिराह एवमेवैष भगवन्। श्रुतिराह इति वै याज्ञवल्क्यः।

शंनन्द.

परमहंसप्रशंसा

**[2]अथ योगिनां परमहंसानां कोऽयं मार्गस्तेषां का स्थितिरिति नारदो भगवन्तमुपगत्योवाच॥**

यद्यप्यपौरुषेये वेदे न कोऽपि वक्ता, अत एव न प्रष्टाऽपि, तथाऽपि भगवानस्माननुजिघृक्षुरेकं वक्तारं परं प्रष्टारं च लोकवदङ्गीकृत्याऽऽस्तिक्यबुद्धिसंरक्षणार्थं ब्रह्मनारदावुररीकृत्य प्रख्यातपौरुषौ सर्वज्ञकल्पौ वक्तृप्रष्टारौ संगृह्य परमहंसधर्मानाह। अथ नित्यानित्यवस्तुविवेकेहामुत्रार्थभोगविरागशमदमादिसाधनसंपत्तिमुमुक्षुत्वानन्तरम्। योगिनां यमनियमासनप्राणायामप्रत्याहारजीवपरमात्मैक्यवस्तुधारणाध्यानसमाधिभाजाम्। परमहंसानां तुरीयाश्रमतुरीया(?य)भेदवताम्। कः प्रश्ने। अयं सर्वलोकविद्विष्टः शिखायज्ञोपवीतसंध्यावन्दनादिशून्यः प्रत्यक्षमुपलभ्यमानः। मार्गः पन्थाः साधुसेवितः श्रुतिमूलः आहोस्वित् दुर्जनरमणीयः कुतर्कमूलः? इत्यर्थः। यदा साधुसेवितः श्रुतिमूलस्तदाऽपि तेषां योगिनां परमहंसानाम्। का प्रश्ने। स्थितिः करणीयमिति यावत्। इति अनेन प्रकारेण। नारदो ब्रह्मणो मानसः पुत्रः। अरिसंबन्धि आरं कामक्रोधादिजं दुःखं तद्ददाति यः स आरदः। अयं तु तद्विपरीतः नारदः। अथवा अरदः दन्तशून्यो वृद्धः सर्वोपायपरिक्षीणः शून्य इत्यर्थः। अयं तु तद्विपरीतः नारदः। अथवा नारं नरसंबन्धिसुखं वैषयिकं तत् ज्ञानवैराग्याभ्यां स्वस्यान्यस्य च द्यति खण्डयतीति नारद इति सार्थकनामधारी। भगवन्तं समग्रधर्मज्ञानवैराग्यैश्वर्ययशःश्रीमन्तम्। उपगत्य ब्रह्मलोके अपराजितायां पुरि हिरण्मयसभायां संपत्समृद्धायामासीनं चतुराननं समस्तजीवघनं हिरण्यगर्भं समित्पाणिर्विनयादिसंपन्नो यथाशास्त्रं समीपमागत्योवाच उक्तवान्।

शंनन्द.

**तं भगवानाह। योऽयं परमहंसमार्गो लोके दुर्लभतरो न तु बाहुल्यः। यदि एको भवति। स एव नित्यपूतस्थः स एव वेदपुरुष इति विदुषो मन्यन्ते महापुरुषो यच्चित्तं तत्सर्वदा मय्येवावतिष्ठते तस्मादहं च तस्मिन्नेवावस्थीयते॥**

तम् उक्तविशेषणं नारदं भगवान् उक्तविशेषणो हिरण्यगर्भः आह उक्तवान्। 'योगिनां परमहंसानां कोऽयं मार्गः' इति प्रश्नस्य साधुसंसेवितः श्रुतिमूल इत्युत्तरमाह — यः प्रसिद्धो वैराग्यसमनन्तरक्षणभावी चतुर्णामाश्रमाणाम्, 'तव पुत्रान्' (आरुउ.१) इत्यारुण्यादिश्रुतेः। अयं भवता मुमुक्षुत्वादिनाऽऽदिष्टः। परमहंसमार्गः परमहंसानां तुरीयतुरीयाश्रमाणां मार्गः पन्थाः परमहंसमार्गः। लोके महर्लोकादिभुवने जने वा। दुर्लभतरः दुःखेन महता क्लेशेनानेकभवार्जितानेकपुण्यपुञ्जैर्लभ्यः दुर्लभः तुरीयाश्रमः। तुरीयतुरीयस्त्वतिशयेन दुर्लभः दुर्लभतर इत्यर्थः। दुर्लभत्वमुपपादयति — न तु बाहुल्यः न तु बहुलः। यद्ययं सुलभः स्यात्तदाऽधिकोऽप्युपलभ्येत गृहस्थादिवत्। न च बहुलः ततो दुर्लभतरः। तन्नैवम्, दृष्टो वैपरीत्यात् इत्यत आह — यद्येको भवति। कथंचिद्बहुल उपलभ्यते चेत् तीर्थादौ तत्रापि प्रत्येकं देशग्रामं कुलादौ विचारिते सत्येको भवति, न त्वनेकः। ननु तथाऽपि वेदाध्ययनादिसंन्यासाच्छूद्रसमानता शङ्कितुं शक्येत। अत आह — स एव यस्तु शिखायज्ञोपवीतवेदाध्ययनादित्यागी स एव, न त्वन्यो यज्ञोपवीतादिमान्। नित्यपूतस्थः नित्यं सर्वदा कालत्रयेऽप्यशेषविशेषशून्यत्वेन पूतं पवित्रं शिखायज्ञोपवीतवेदाध्ययनादित्यागशुद्धिकारणं सत्यं ज्ञानमनन्तमानन्दात्मस्वरूपं यद्ब्रह्म तस्मिन् 'इदमहमस्मि' इत्यैक्येनावतिष्ठत इति नित्यपूतस्थो यतः तत

(१) जाउ. ५; **यसं.** १८ वै याज्ञवल्क्यः (वैदेहः) श्रुतिः; **यप्र.** ५० (एष पन्था ब्रह्मणा हानुक्तिः) एतावदेव, जाबालश्रुतिः; **बाल.** ३।६० पृ. १०० (वै याज्ञवल्क्यः०) जाबालोपनिषत्.

(२) **परमउ.** १.

शिखायज्ञोपवीतवेदाध्ययनादिपरित्याग्यपि न शूद्रादिसमानत्वेन शङ्कनीयः, किं तु स एव यो नित्यपूतस्थः, न त्वन्यो वेदाध्ययनादिमानपि। वेदपुरुषः ऋगादीन्वेदान्साङ्गानन्यविद्यास्थानैः सहितान्पाठतोऽर्थतश्च योऽवगच्छति स वेदपुरुषः। अयमर्थः। केशयज्ञोपवीतादिधारणे वेदाध्ययनादौ च पुण्यं भवतीति शास्त्रमन्तरेण न प्रमाणमस्ति। तत्रैतत्परित्यागोऽपि शास्त्रेणोच्यते तथैव भवतु। को निर्बन्धः सूरीणां केशिनां पाठकानां च? नन्विदं संदिग्धमस्तीत्यत आह – इति विदुषो मन्यन्त इति। यो नित्यपूतस्थः शिखादिरहितोऽपीत्यनेन प्रकारेण विद्वांसो मदाद्याः सर्वज्ञाः साध्ववगच्छन्तीति। ननु यो वेदपुरुषः स भगवान् अन्यस्तूपचरितः। तर्हि कालात्मानं भवन्तं हिरण्यगर्भं विहायान्योऽकालात्मा न मुख्यो वेदपुरुषः। इत्यत आह – महापुरुषः महान् कालत्रयशून्यत्वेन कालात्मा स चासौ पुरि शयानोऽपि परिपूर्णः पुरुषो महापुरुषः। मत्तो भेदशून्य इत्यर्थः। ननु प्रत्यक्षविरुद्धमिदम्, यतो भवान्ब्रह्मलोकेऽन्यः अन्यश्चायं परमहंसः, आकृत्यादिभेदात्। इत्यत आह – यत्प्रसिद्धं सर्वभेदकारणं स्वप्नादौ चित्तम् अन्तःकरणं शुभाशुभवासनावासितं तत् उक्तमन्तःकरणं सर्वदा सदा एतच्छरीरान्(?) एतच्छरीरनिवासगमनागमनादिकाले मय्येवापगतसकलदुःखाकारेणाऽऽनन्दात्मनि, न तु मायातच्छरीरादिरूपे अवतिष्ठते 'अयमहमस्मि' इति ऐक्यभावेनावस्थानं कुरुते। ततो नैव प्रत्यक्षविरोध इत्यर्थः। ननु सर्वोऽपि निसर्गसुन्दरे वस्तुनि चित्तं लीनं दधाति तथाऽपि कथं तदात्मत्वम् इत्यत आह – तस्मात् यस्मान्मय्येवावतिष्ठते भेदशून्यत्वेन ततः, अहं च निसर्गसुन्दर आनन्दात्मा सर्वप्रियतमश्चापि तस्मिन्नेव नित्यपूतस्थे वेदपुरुषे परमहंसे, न त्वन्यस्मिन् भेददर्शिनि अवस्थीयते अवतिष्ठे। 'परमहंसोऽहमस्मि' इति भेदशून्यत्वेन स्थितोऽस्मीत्यर्थः।

शंनन्द.

कुटीचकादिचतुर्विधसंन्यासिनां लक्षणानि

[1]**अथ भिक्षूणां मोक्षार्थिनां कुटीचकबहूदकहंसपरमहंसाश्चेति चत्वारः॥**

**कुटीचका नाम गौतमभरद्वाजयाज्ञवल्क्यवसिष्ठप्रभृतयोऽष्टौ ग्रासांश्चरन्तो योगमार्गे मोक्षमेव प्रार्थयन्ते॥**

यथोक्ताधिकारिण उपलभ्य श्रुतिः कुटीचकादिधर्मपूगान् प्रकटयति। आदौ कुटीचकादिधर्मानाह – अथेति।

विवरण.

**अथ बहूदका नाम त्रिदण्डकमण्डलुशिखायज्ञोपवीतकाषायवस्त्रधारिणो ब्रह्मर्षिगृहे मधुमांसं वर्जयित्वाऽष्टौ ग्रासान्भैक्षाचरणं कृत्वा योगमार्गे मोक्षमेव प्रार्थयन्ते॥**

बहूदकधर्मानाह – अथ बहूदका नामेति।

विवरण.

**अथ हंसा नाम ग्राम एकरात्रं नगरे पञ्चरात्रं क्षेत्रे सप्तरात्रम्। तदुपरि न वसेयुः। गोमूत्रगोमयाहारिणो नित्यं चान्द्रायणपरायणा योगमार्गे मोक्षमेव प्रार्थयन्ते॥**

हंसधर्मानाह – अथ हंसा नामेति।

विवरण.

**अथ परमहंसा नाम संवर्तकारुणिश्वेतकेतुजडभरतदत्तात्रेयशुकवामदेवहारीतकप्रभृतयोऽष्टौ ग्रासांश्चरन्तो योगमार्गे मोक्षमेव प्रार्थयन्ते। वृक्षमूले शून्यगृहे श्मशानवासिनो वा साम्बरा वा दिगम्बरा वा। न तेषां धर्माधर्मौ, न हि तेषां लाभालाभकलनाऽस्ति। शुद्धाशुद्धद्वैतवर्जिताः समलोष्टाश्मकाञ्चनाः सर्ववर्णेषु भैक्षाचरणं कृत्वा सर्वत्राऽऽत्मैव(?वेति) पश्यन्ति। अथ जातरूपधरा निर्द्वन्द्वा निष्परिग्रहाः शुक्लध्यानपरायणा आत्ममात्रनिष्ठाः प्राणसंधारणार्थं यथोक्तकाले भैक्षमाचरन्तः शून्यागारदेवगृहतृणकूटवल्मीकवृक्षमूलकुलालशालाग्निहोत्रशालानदीपुलिनगिरिकन्दरकुहरकोटरनिर्झरस्थण्डिले तत्र ब्रह्ममार्गे सम्यक्संपन्नाः शुद्धमानसाः परमहंसाचरणेन संन्यासेन देहत्यागं कुर्वन्ति ते परमहंसा नामेत्युपनिषत्॥**

परमहंसधर्मान् प्रकाशयति – अथ परमहंसा नामेति। तेषां वसतिं चर्यामाह – वृक्षमूल इति। न तेषां धर्माधर्मौ भवतः, प्रवृत्तिनिवृत्तिपराङ्मुखत्वात्। सर्वत्र हर्षविषादाभावात् न हि तेषां लाभालाभकलनाऽस्ति। विशिष्टाद्वैतं शुद्धद्वैतं केवलद्वैतम् अशुद्धद्वैतं च येषां

(१) भिक्षुउ. १-५.

नाभिमतं ते शुद्धाशुद्धद्वैतवर्जिताः निष्प्रतियोगिकाद्वैतिनः इत्यर्थः। अत एव समलोष्टाश्मकाञ्चनाः सर्वत्र साम्यभावमापन्नब्रह्मदृष्टित्वात् ब्राह्मणजातिप्रविभक्तसर्ववर्णेषु चातुर्वर्ण्यधर्माश्रयणतो ब्राह्मणाब्राह्मणादिषु यथोक्तकाले भैक्षाचरणं कृत्वा सर्वत्राऽऽत्मेव पश्यन्ति, स्वात्मनो व्यष्टिसमष्टिप्रपञ्चाधिकरणत्वेन प्रत्यगभिन्नब्रह्मरूपत्वात्। अथ जातरूपधराः निर्द्वन्द्वा निष्परिग्रहाः शुक्लध्यानपरायणाः शुक्लतेजोनिष्ठं ब्रह्म इति श्रुत्यनुरोधेन ब्रह्ममात्रभावापन्ना इत्यर्थः। अत एवैते अनात्मापह्नवसिद्धात्ममात्रनिष्ठाः इत्यर्थः। यदि बहिश्चित्त(?त्ता)स्तदा प्राणसंधारणार्थं यथोक्तकाले भैक्षमाचरन्तः। हंसशब्देन प्रत्यगभिन्नपरमात्मोच्यते। पराक्सापेक्षप्रत्यगभेदगतसविशेषापायसिद्धः परमः स चासौ हंसश्चेति परमहंसः निष्प्रतियोगिकपरमात्मा तदाचरणं तन्मात्रेणावस्थानं तेन परमहंसाचरणेन स्वातिरिक्तकलनासंन्यासेन कर्मसंन्यासेन वा देहत्यागं देहोपलक्षितस्वाविद्यापदतत्कार्यजातमस्ति नास्तीति विभ्रमाभिमतित्यागं वा ये कुर्वन्ति ते परमहंसा नाम ब्रह्मैव भवन्ति इत्यर्थः। इत्युपनिषच्छब्दो भिक्षुकोपनिषत्परिसमाप्त्यर्थः।

विवरण.

तुरीयातीतावधूतलक्षणं

तत्प्रशंसा च

**[१]अथ तुरीयातीतावधूतानां कोऽयं मार्गस्तेषां का स्थितिरिति सर्वलोकपितामहो भगवन्तं पितरमादिनारायणं परिसमेत्योवाच। तमाह भगवान्नारायणः — योऽयमवधूतमार्गस्थो लोके दुर्लभतरः, न तु बाहुल्यः, यद्येको भवति। स एव नित्यपूतः स एव वैराग्यमूर्तिः स एव ज्ञानाकारः स एव वेदपुरुष इति ज्ञानिनो मन्यन्ते। महापुरुषो यस्तच्चित्तं मय्येवावतिष्ठते अहं च तस्मिन्नेवावस्थितः। सोऽयमादौ तावत्क्रमेण कुटीचको बहूदकत्वं प्राप्य, बहूदको हंसत्वमवलम्ब्य, हंसः परमहंसो भूत्वा स्वरूपानुसंधानेन सर्वप्रपञ्चं विदित्वा दण्डकमण्डलुकटिसूत्रकौपीनाच्छादनस्वविध्युक्तक्रियादिकं सर्वमप्सु संन्यस्य दिगम्बरो भूत्वा विवर्णजीर्णवल्कलाजिनपरिग्रहमपि संत्यज्य ..... तुरीयातीतोऽवधूतवेषेणाद्वैतनिष्ठापरः प्रणवात्मकत्वेन देहत्यागं करोति यः सोऽवधूतः स कृतकृत्यो भवतीत्युपनिषत्॥**

शिष्याचार्यपुत्रपितृभावंगतचतुराननारायणप्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था। आख्यायिकामवतारयति — अथेति। तुर्याश्रमप्रविभक्तकुटीचकबहूदकहंसपरमहंसचर्यां यथावदवगम्य अथ तुर्यसंख्यापूरकं पारमहंस्यं तदतीतास्तुर्यातीताश्च ते, 'यो विलङ्घ्याऽऽश्रमान् वर्णानात्मन्येव स्थितः सदा। अतिवर्णाश्रमी योगी अवधूतः स कथ्यते॥ अक्षरत्वाद्वरेण्यत्वाद्धूतसंसारबन्धनात्। तत्त्वमस्यादिलक्ष्यत्वादवधूत इतीर्यते॥' इति गौणमुख्यावधूताश्च इति तुरीयातीतावधूताः। तेषां महानुभावानां कोऽयं मार्गः? इत्यनेन तैराचरणीयचर्या अवगम्यते। का स्थितिः? इत्यनेन निष्ठा चापि ज्ञातव्येति तत्प्रश्नमङ्गीकृत्य तमाह भगवान् नारायणः। किं तत् इत्यत्र तन्मार्गस्यातिदुर्लभतया तानादौ स्तौति — योऽयमिति। नित्यपूतः मयि मद्भावमेत्य स्थितत्वात् मद्भावापन्नज्ञानिनो मन्यन्ते। अत एवायं महापुरुषः। कथमस्य महापुरुषत्वम्? इत्यत्र यतो यस्तच्चित्तं मय्येवावतिष्ठते, मदतिरिक्तचिन्तावैरल्यात्। त्वं कुत्रावस्थितः? इत्यत्र — अहं च तस्मिन्नेवावस्थित इति। कुटीचकादिधर्मा नारदपरिव्राजकोपनिषदि सम्यग्व्याख्याताः। तत्रायं परमहंसः सर्वापह्नवसिद्धं ब्रह्मनिष्प्रतियोगिकस्वमात्रमिति स्वरूपानुसंधानेन सर्वप्रपञ्चं स्वातिरिक्तं नेतीति विदित्वा तद्वेदनसमकालमेव पारमहंस्यलिङ्गं त्याज्यमिति मनीषया तत्रापि संसारधिया तत्त्याग उपपद्यत इत्यर्थः। .....अद्वैतनिष्ठापरः अद्वैतात्मपरायणो भूत्वा सर्ववाच्यवस्तु प्रणवात्मकम् इति श्रुतिसिद्धप्रणवात्मकत्वेन प्रणवार्थतुर्यतुर्यात्मना देहत्यागं करोति देहतन्निर्वर्त्यजाग्रज्जाग्रदादितुर्यस्वापान्ततद्व्यष्टिसमष्टिमदुभयारोपापवादधिकरणविश्वविश्वाद्यविकल्पानुज्ञैकरसान्तकलनात्यागमपह्नवं करोति। यस्य पारमहंस्यधर्मालंकृतस्य यतेराभासतोऽपि निर्वर्त्यस्वातिरिक्तमस्ति इति भ्रान्तिः सोऽयं गौणावधूतो भवति। यस्य पुनः ब्रह्ममात्रं निष्प्रतियोगिकं तदतिरेकेणापह्नोतव्यविषयाभावज्ञानमुदेति सोऽयं यतिः मुख्यावधूतो भवतीति। अत्र 'यस्य स्वात्मातिरेकेण निर्वर्त्यं प्रतिभाति

(१) तुरीयउ.

सः। गौणावधूतो भवति स्वातिरिक्तास्तिताभ्रमात्। ब्रह्ममात्रधिया यस्य निर्वर्त्यासंभवो भवेत्। मुख्यावधूतः स मुनिः स्वमात्रमवशिष्यते॥' इति स्मृतेः। इत्युपनिषच्छब्दः प्रकृतोपनिषत्समाप्त्यर्थः।

विवरण.

परमहंसप्रशंसा

**[१]आशाम्बरो न नमस्कारो न दारपुत्राभिलाषी लक्ष्यालक्ष्यनिर्वर्तकः परिव्राट् परमेश्वरो भवति॥**

उक्तलक्षणलक्षितः परिव्राट् परमेश्वर एवेत्याह — आशेति। लक्षणया बोधितं लक्ष्यं तद्विपरीतमलक्ष्यम्। समाहितासमाहितावस्थाभ्यां तदुभयनिर्वर्तकः परिव्राट् निरावृतित्रयसंपत्तितः परमेश्वरो भवति।

विवरण.

यतिभेदाः

**[२]अथ खलु सौम्य, कुटीचको बहूदको हंसः परमहंस इत्येते परिव्राजकाश्चतुर्विधा भवन्ति॥**

कुटीचकादिचतुराश्रमभेदम् ..... आह — अथेति।

विवरण.

संन्यासाश्रमप्रशंसा

**अथ खलु सोम्येमं सनातनमात्मधर्मं वैष्णवीं निष्ठां लब्ध्वा यस्तामदूषयन्वर्तते स वशी भवति। स पुण्यश्लोको भवति। स लोकज्ञो भवति। स वेदान्तज्ञो भवति। स ब्रह्मज्ञो भवति। स सर्वज्ञो भवति। स स्वराड्भवति। स परं ब्रह्म भगवन्तमाप्नोति। स पितॄन्संबन्धिनो बान्धवान्सुहृदो मित्राणि च भवादुत्तारयति॥**

**[३]शतं कुलानां प्रथमं बभूव**
**तथा पराणां त्रिशतं समग्रम्।**
**एते भवन्ति सुकृतस्य लोके**
**येषां कुले संन्यसतीह विद्वान्॥**
**[४]त्रिंशत्परांस्त्रिंशदपरांस्त्रिंशच्च परतः परान्।**
**उत्तारयति धर्मिष्ठः परिव्राडिति वै श्रुतिः॥**
**संन्यस्तमिति यो ब्रूयात्कण्ठस्थप्राणवानपि।**
**तारिताः पितरस्तेन इति वेदानुशासनम्॥**

अथ पूर्वोक्तविष्णुलिङ्गद्वयानुवर्तिनं कृतकृत्यतया स्तौति — अथेति। स वशी जितेन्द्रियो भवति। किं बहुना स परं ब्रह्म भगवन्तमाप्नोति। ब्राह्मणोक्तार्थे मन्त्रा 'अप्यनुवदन्तीत्याह — शतमिति। यद्ययं विद्वत्संन्यासी भवति तदा स्वस्य शतपूर्वाः स्वोत्तरतस्त्रिशतसंततयन्ताः कृतार्था भवेयुरित्यर्थः। किंच — त्रिंशत्परानिति। आतुराविद्वत्संन्यासतोऽपि तत्पित्रादयः सुकृतिनो भवेयुरिति निगमयति — संन्यस्तमिति।

विवरण.

आश्रमचतुष्टयप्रशंसा

**[१]त्रयो धर्मस्कन्धाः। यज्ञोऽध्ययनं दानमिति प्रथमः। तप एव द्वितीयः। ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्। सर्व एते पुण्यलोका भवन्ति। ब्रह्मसंस्थोऽमृतत्वमेति॥**

---

(१) **याज्ञउ.** ९.
(२) **शाट्याउ.** १२, ३२.
(३) **शाट्याउ.** ३३; **संम.** ८६ प्रथमं (पुरतो) (येषां कुले०) जाबालश्रुतिः; **यसं.** २० प्रथमं (पुरतो) था प (थाऽप) (-).
(४) **शाट्याउ.** ३४-३५.

(१) **छाउ.** २।२३।१; **विश्व.** १।५० कुलवासी (कुले वासी) कुलेऽव (कुलेऽवा) (सर्व.....मेति०) छान्दोग्ये : ३।५५ (त्रयो धर्म.... वसादयन्०) आम्नायः; **मेधा.** ६।३२ (त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानम्, तप एव, ब्रह्मचार्याचार्यकुलवासी, ब्रह्मसंस्थोऽमृतत्वमेति) एतावन्त एव त्रयोंऽशाः (-); **मिता.** ३।५५ एव (एवेति) त्मानमाचार्य कुलेऽव (चार्यकुल एवमात्मानमव) वचनं विच्छिद्य विच्छिद्य वर्तते, श्रुतिः; **अप.** १।५० पृ. ७१, ३।२०५ पृ. १०२९, विश्व. ३।५५ वत् छान्दोग्योपनिषत् : ३।२०५ पृ. १०३३, विश्व. ३।५५ वत् (-); **मभा.** ३।१ (त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव द्वितीयस्तृतीयमाचार्यकुले वसनमेतानारुह्य ब्रह्मलोकं गच्छति ब्रह्मसंस्थोऽमृतत्वमेति) श्रुतिः; **स्मृच.** १।७० (सर्वे ते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेति) एतावदेव, श्रुतिः : १।१७२ (ब्रह्मचार्याचार्यकुलवासी द्वितीयोऽत्यन्तमात्मानमाचर्यकुलेऽवसादयेत्) एतावदेव, श्रुतिः; **पमा.** १।५१ छान्दोग्यवाक्यम् : १।५२४ (त्रयो..द्वितीयः०) (सर्व....मेति०) छान्दोग्ये; **मपा.** ११२ तृतीयो (द्वितीयो) शेषं पमा. १।५२४ वत्, श्रुतिः; **बौवि.** १।१।८ (सर्व एते पुण्यलोका भवन्ति) एतावदेव, धर्मस्कन्धब्राह्मणे : २।३।१ विश्व. ३।५५ वत्, धर्मस्कन्धब्राह्मणे : २।११।२९ कुल (कुला) (अत्यन्त .....मेति०) धर्मस्कन्धश्रुतिः; **मुक्ता.** १२१ (त्रयो....द्वितीयः०) तृतीयो (द्वितीयो) यन् (येत्) लोका (श्लोका) श्रुतिः; **संप्र.** ५५१ विश्व. ३।५५ वत् श्रुतिः, एतद्वचनात्पूर्वं 'तद्ब्रह्म नैकविषयम्' इत्यसंगतो ग्रन्थो वर्तते.

(१) त्रयः त्रिसंख्याकाः धर्मस्य स्कन्धाः धर्मस्कन्धाः धर्मप्रविभागा इत्यर्थः। के त इत्याह – यज्ञः अग्निहोत्रादिः। अध्ययनं सनियमस्य ऋगादेरभ्यासः। दानं बहिर्वेदि यथाशक्ति द्रव्यसंविभागो भिक्षमाणेभ्यः। इति एषः प्रथमो धर्मस्कन्धः गृहस्थसमवेतत्वात्तन्निर्वर्तकेन गृहस्थेन निर्दिश्यते। +प्रथमः एक इत्यर्थः, द्वितीयतृतीयश्रवणान्नाऽऽद्यार्थः। तप एव द्वितीयः। तप इति कृच्छ्रचान्द्रायणादि। तद्वान् तापसः परिव्राड्वा, न ब्रह्मसंस्थ आश्रमधर्ममात्रसंस्थः, ब्रह्मसंस्थस्य त्वमृतत्वश्रवणात्। द्वितीयो धर्मस्कन्धः। ब्रह्मचारी आचार्यकुले वस्तुं शीलमस्येत्याचार्यकुलवासी अत्यन्तं यावज्जीवम् आत्मानं नियमैराचार्यकुले अवसादयन् क्षपयन्देहम्, तृतीयो धर्मस्कन्धः। अत्यन्तमित्यादिविशेषणान्नैष्ठिक इति गम्यते। उपकुर्वाणस्य स्वाध्यायग्रहणार्थत्वान्न पुण्यलोकत्वं ब्रह्मचर्येण। सर्वे एते त्रयोऽप्याश्रमिणः यथोक्तैर्धर्मैः पुण्यलोका भवन्ति। पुण्यो लोको येषां ते इमे पुण्यलोका आश्रमिणो भवन्ति। अवशिष्टस्त्वनुक्तः परिव्राट् ब्रह्मसंस्थः ब्रह्मणि सम्यक् स्थितः स अमृतत्वं पुण्यलोकविलक्षणम् अमरणभावमात्यन्तिकम् एति न आपेक्षिकं देवाद्यमृतत्ववत्, पुण्यलोकात्पृथगमृतत्वस्य विभागकरणात्। यदि च पुण्यलोकातिशयमात्रममृतत्वमभविष्यत्, ततः पुण्यलोकत्वाद्विभक्तं नावक्ष्यत्। विभक्तोपदेशाच्चाऽऽत्यन्तिकममृतत्वमिति गम्यते।

δशंकर.

(२) ब्रह्मसंस्थोऽमृतत्वमेति इत्यस्यायमर्थः – प्रकृतानामाश्रमिणां मध्ये यो ब्रह्मसंस्थो ब्रह्मप्रवणो ब्रह्मज्ञानाङ्गभूतं कर्म करोतीति यावत्, सोऽमृतत्वमेतीति। न पुनर्ब्रह्मसंस्थशब्देन भिक्षुराख्यायते। तस्य तत्संज्ञत्वे प्रमाणाभावात्। #अप. ३।२०५ पृ. १०३३

ब्रह्मचारिगृहस्थाश्रमयोः फलम्

**σ[१]आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान्विदधदात्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्याहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः। स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसंपद्यते। न च पुनरावर्तते न च पुनरावर्तते॥**

वैराग्यं संन्यासाधिकारहेतुः, तदभावे तद्ग्रहणे पातित्यम्

**[१]वमनाहारवद्यस्य भाति सर्वेषणादिषु।**
**तस्याधिकारः संन्यासे त्यक्तदेहाभिमानिनः॥**
**यदा मनसि वैराग्यं जातं सर्वेषु वस्तुषु।**
**तदैव संन्यसेद्विद्वानन्यथा पतितो भवेत्॥**
**द्रव्यार्थमन्नवस्त्रार्थं यः प्रतिष्ठार्थमेव वा।**
**संन्यसेदुभयभ्रष्टः स मुक्तिं नाऽऽप्तुमर्हति॥**

संन्यासाधिकारी कीदृशः? इत्याशङ्क्य यस्य वान्ताशनमूत्रपुरीषादिवत् बाह्यार्थेषु हेयतोदेति स एव संन्यासाधिकारीत्याह – वमनेति। संन्यासमूलं किमित्याशङ्क्य स्वातिरिक्तविषयतीव्रतरवैराग्यमेवेत्याह – यदेति। निमित्तान्तरेणापि (?ण) संन्यासकरणं (न)श्रेयः इत्यत आह – द्रव्यार्थमिति। विवरण.

संन्यासाश्रमाधिकारी

**[२]अथातः संन्यासोपनिषदं व्याख्यास्यामः। योऽनुक्रमेण संन्यस्यति स संन्यस्तो भवति। कोऽयं संन्यास उच्यते। कथं संन्यस्तो भवति। य आत्मानं क्रियाभिः गुप्तं करोति। मातरं पितरं भार्यां पुत्रान् बन्धूननुमोदयित्वा...॥**

यथोक्ताधिकारसाधनसंपन्नानुपलभ्य श्रुतयः स्वयमेव संन्यासोपनिषदमुपन्यस्यन्तीत्याह – अथेति। अथशब्दः अधिकारिलाभानन्तर्यार्थः। यतः स्वातिरिक्तसामान्यसंन्यासं विना निष्प्रतियोगिकस्वमात्रज्ञानं नोदेत्यतः तदुपायतया श्रुतयो वयं संन्यासोपनिषदं व्याख्यास्यामः विस्पष्टमाख्यास्यामः वदाम इत्यर्थः। तत्प्रकारः कथमित्यत्र – य इति। 'ब्रह्मचर्यं समाप्य गृही भवेत्' (जाउ.४) इत्यादि 'कुटीचको बहूदकत्वं प्राप्य' (तुरीयउ.१) इत्यादि चानुक्रमेण य एषणात्रयं संन्यस्यति

---

+ प्रथमद्वितीयतृतीयशब्दाः स्कन्धानां गणनापराः, न क्रमपराः।

δ विश्व., स्मृच., बौवि., मुक्ता., संप्र. शंकरगतम्।

# शेषं शंकरगतम्।

σ अस्य व्याख्याने 'वर्णसामान्यधर्माः' इत्यस्मिन् प्रकरणे (वका. पृ. १६०३ - १६०४) द्रष्टव्ये।

(१) छाउ. ८।१५।१ अन्ये स्थलादिनिर्देशाः 'वर्णसामान्यधर्माः' इत्यस्मिन्प्रकरणे (वका. पृ. १६०३ - १६०४) द्रष्टव्याः.

(१) मैत्रेउ. २।१९-२१.

(२) सासंउ. १।१.

स एव संन्यासी भवतीत्यर्थः। संन्यासं संन्यासिनं चाऽऽक्षिपति — क इति। स्वाशङ्कोत्तरं स्वयमेवाऽऽहुः — य इति। य आत्मानं वक्ष्यमाणक्रियाभिर्गुप्तं करोति। मात्राद्यनुमोदनादिवक्ष्यमाणविधिना संस्करोतीत्यर्थः। तत्कथमित्यत्र — मातरं पितरं भार्यां पुत्रान् बन्धूननुमोदयित्वा 'संन्यासं कर्तुमिच्छामि भवद्भिराज्ञा देया' इति। विवरण.

**(1)चत्वारिंशत्संस्कारसंपन्नः सर्वतो विरक्तश्चित्तशुद्धिमेत्याऽऽशासूयेर्ष्याहंकारं दग्ध्वा साधनचतुष्टयसंपन्न एव संन्यस्तुमर्हति॥**

कः संन्यस्तुमर्हतीत्याकाङ्क्षायामादौ संन्यासाधिकारिणं निरूपयति — चत्वारिंशदिति। साधनचतुष्टयसंपन्न एव संन्यस्तुमर्हति इत्येतत् नारदपरिव्राजके व्याख्यातम्। विवरण.

संन्यासग्रहणं संकल्प्य तदकरणे प्रायश्चित्तपूर्वकं तद्ग्रहणम्, संन्यासाधिक्षेपविघ्नौ पतितसंन्यासनं च निषिद्धानि

**संन्यासे निश्चयं कृत्वा पुनर्न च करोति यः।**
**स कुर्यात्कृच्छ्रमात्रं तु पुनः संन्यस्तुमर्हति॥**
**संन्यासं पातयेद्यस्तु पतितं न्यासयेत्तु यः।**
**संन्यासविघ्नकर्ता च त्रीनेतान्पतितान्विदुः॥**

किंच, संन्यासं करोमीति संन्यासे निश्चयं कृत्वा। यः संन्यासमधिक्षिपति पतितं न्यासयति संन्यासविघ्नमाचरति ते प्रत्यवायिनो भवन्तीत्याह — संन्यासमिति। विवरण.

संन्यासानधिकारिणः

**अथ षण्डः पतितोऽङ्गविकलः स्त्रैणो बधिरोऽर्भको मूकः पाषण्डश्चक्री लिङ्गी वैखानसहरद्विजौ भृतकाध्यापकः शिपिविष्टोऽनग्निको वैराग्यवन्तोऽप्येते न संन्यासार्हाः। संन्यस्ता यद्यपि महावाक्योपदेशे नाधिकारिणः॥**

**आरूढपतितापत्यं कुनखी श्यावदन्तकः।**
**क्षयी तथाऽङ्गविकलो नैव संन्यस्तुमर्हति॥**
**संप्रत्यवसितानां च महापातकिनां तथा।**
**व्रात्यानामभिशस्तानां संन्यासं नैव कारयेत्॥**

(१) सासंउ. २।१-७, ९-११, १८-२९,७४.

**व्रतयज्ञतपोदानहोमस्वाध्यायवर्जितम्।**
**सत्यशौचपरिभ्रष्टं संन्यासं नैव कारयेत्॥**
**एते नार्हन्ति संन्यासमातुरेण विना क्रमम्॥**

संन्यासानधिकारिणो निर्दिशति — अथेति। शिपिविष्टः विकसितशेफः। विवरण.

संन्यासप्रशंसा

**संन्यासिनं द्विजं दृष्ट्वा स्थानाच्चलति भास्करः।**
**एष मे मण्डलं भित्त्वा परं ब्रह्माधिगच्छति॥**
**षष्टिं कुलान्यतीतानि षष्टिमागामिकानि च।**
**कुलान्युद्धरते प्राज्ञः संन्यस्तमिति यो वदेत्॥**
**ये च संतानजा दोषा ये दोषा देहसंभवाः।**
**प्रैषाग्निर्निर्दहेत्सर्वांस्तुषाग्निरिव काञ्चनम्॥**

एवं विधिवत्संन्यस्तपुरुषं ज्ञानधिकारिणं स्तौति — संन्यासिनमिति। किंच — षष्टिमिति। संतानजा दोषाः दुष्पुत्रसंजाताः। विवरण.

ज्ञानवैराग्यान्यतर - तदुभयसत्त्व - क्रमैः चतुर्विधाः संन्यासिनः तल्लक्षणानि च, कुटीचकादयः षड्विधाः संन्यासिनः तल्लक्षणानि तत्प्राप्यफलानि च

**वैराग्यसंन्यासी ज्ञानसंन्यासी ज्ञानवैराग्यसंन्यासी कर्मसंन्यासी चेति चातुर्विध्यमुपागतः॥**

संन्यासः कतिविध इत्यत आह — वैराग्येति॥ विवरण.

**तद्यथेति। दृष्टानुश्रविकविषयवैतृष्ण्यमेत्य प्राक्पुण्यकर्मवशात्संन्यस्तः स वैराग्यसंन्यासी॥**

दृष्टानुश्रविकविषयवैतृष्ण्यमेत्य इहामुत्रार्थभोगतृष्णाविरतिमेत्य। विवरण.

**शास्त्रज्ञानात्पापपुण्यलोकानुभवश्रवणात्प्रपञ्चोपरतो देहवासनां शास्त्रवासनां लोकवासनां च त्यक्त्वा वमनान्नमिव प्रवृत्तिं सर्वां हेयां मत्वा साधनचतुष्टयसंपन्नो यः संन्यस्यति स एव ज्ञानसंन्यासी॥**

**क्रमेण सर्वमभ्यस्य सर्वमनुभूय ज्ञानवैराग्याभ्यां स्वरूपानुसंधानेन देहमात्रावशिष्टः संन्यस्य जातरूपधरो भवति स ज्ञानवैराग्यसंन्यासी॥**

**ब्रह्मचर्यं समाप्य गृही भूत्वा वानप्रस्थाश्रममेत्य वैराग्याभावेऽप्याश्रमक्रमानुसारेण यः संन्यस्यति स कर्मसंन्यासी॥**

**स संन्यासः षड्विधो भवति कुटीचकबहूदकहंसपरमहंसतुरीयातीतावधूताश्चेति॥**

**कुटीचकः शिखायज्ञोपवीती दण्डकमण्डलुधरः कौपीनशाटीकन्थाधरः पितृमातृगुर्वाराधनपरः पिठरखनित्रशिक्यादिमात्रसाधनपर एकत्रान्नादनपरः श्वेतोर्ध्वपुण्ड्रधारी त्रिदण्डः॥**

**बहूदकः शिखादिकन्थाधरस्त्रिपुण्ड्रधारी कुटीचकवत्सर्वसमो मधुकरवृत्त्याऽष्टकवलाशी॥**

**हंसो जटाधारी त्रिपुण्ड्रोर्ध्वपुण्ड्रधारी असंक्लृप्तमाधुकरान्नाशी कौपीनखण्डतुण्डधारी॥**

**परमहंसः शिखायज्ञोपवीतरहितः पञ्चगृहेषु करपात्री एककौपीनधारी शाटीमेकामेकं वैणवं दण्डमेकशाटीधरो वा भस्मोद्धूलनपरः सर्वत्यागी॥**

**तुरीयातीतो गोमुखवृत्त्या फलाहारी, अन्नाहारी चेद् गृहत्रये, देहमात्रावशिष्टो दिगम्बरः कुणपवच्छरीरवृत्तिकः॥**

**अवधूतस्त्वनियमः पतिताभिशस्तवर्जनपूर्वकं सर्ववर्णेष्वजगरवृत्त्याहारपरः स्वरूपानुसंधानपरः॥**

'वैराग्यसंन्यासी' इत्यारभ्य 'स्वरूपानुसंधानपरः' इत्यन्तं प्रायशो नारदपरिव्राजकोपनिषदि व्याख्यातम्।
विवरण.

**आतुरो जीवति चेत्क्रमसंन्यासः कर्तव्यः॥**

**आतुरकुटीचकयोर्भूर्लोकभुवर्लोकौ। बहूदकस्य स्वर्गलोकः। हंसस्य तपोलोकः। परमहंसस्य सत्यलोकः। तुरीयातीतावधूतयोः स्वात्मन्येव कैवल्यं स्वरूपानुसंधानेन भ्रमरकीटन्यायवत्॥**

आतुरो यदि जीवति तदा तेन किं कार्यमित्यत्राऽऽह – आतुर इति। कुटीचकत्वादिसंन्यासभेदानुरोधेन तत्तज्ज्ञानानुरोधेन च तत्तत्प्राप्यलोकभेदोऽपि युज्यत इत्याह – आतुरेति। मुनिः ब्रह्म संपद्यत इत्यर्थः।
विवरण.

आश्रमत्रयानुष्ठानं संन्यासाधिकारसंपादकम्,
संन्यासग्रहणोत्तरं नाग्निः सेव्यः

**[1]ब्रह्मचर्याश्रमेऽक्षीणे गुरुशुश्रूषणे रतः।**
**वेदानधीत्यानुज्ञात उच्यते गुरुणाऽऽश्रमी॥**
**दारमाहृत्य सदृशमग्निमाधाय शक्तितः।**
**ब्राह्मीमिष्टिं यजेत्तासामहोरात्रेण निर्वपेत्॥**
**संविभज्य सुतानर्थे ग्राम्यकामान्विसृज्य च।**
**संचरन्वनमार्गेण शुचौ देशे परिभ्रमन्॥**
**वायुभक्षोऽम्बुभक्षो वा विहितैः कन्दमूलकैः।**
**स्वशरीरे समाप्याथ पृथिव्यां नाश्रु पातयेत्॥**

आख्यायिकां विना श्रुतेरवान्तरतया प्रवृत्तिर्विद्यास्तुत्यर्था। ब्रह्मचर्येति। सत्कुलप्रसूतो द्विजातिर्ब्रह्मचर्याश्रमस्वीकरणार्थं स्वगुर्वभिमतशुश्रूषणे रतः सन् गुरुकुलवासं कृत्वाऽथ गुरुणोपनीतस्तन्मुखतोऽशेषवेदानधीत्य सर्ववेदार्थरहस्यमप्यवगम्य गुरोः प्रसादतः अक्षीणे अक्षये द्विविधब्रह्मचर्यास्पदब्रह्मचर्याश्रमे लब्धेऽपि सति 'ब्रह्मचर्यं समाप्य गृही भवेत्, गृहाद्वनी भूत्वा प्रव्रजेत्' (जाउ. ४) यतिः (? इति) श्रुत्यर्थमाननाय अधीत्यानुज्ञात इत्यत्र छान्दसत्वादकारलुप्तः पाठोऽपि वर्तते – अधीत्यनुज्ञात इति। उत्तराश्रमस्वीकरणार्थं गुरुणा अनुज्ञातः सन् अयमाश्रमी ब्रह्मचारी स्वसदृशं स्वकुलानुरूपं दारमाहृत्योद्वाह्य तया साकं गार्हस्थ्योचितधर्मानुष्ठानं कुर्वन्नुषित्वा वानप्रस्थाश्रमं जिगमिषुः शक्तितः धैर्यतः अग्निमाधाय वानप्रस्थाश्रमाङ्गत्वेन तासां ब्रह्मादिदेवतानां संतुष्ट्यर्थं ब्राह्मीं ब्रह्मदेवताकामिष्टिं यजेत्। कत्यहानि कर्तव्येयमिष्टिः? इत्यत्र – तासामहोरात्रेण निर्वपेत्। ततः स्वार्जितार्थे पित्राऽर्जितार्थे वा गोधनात्मके यथायोगं संविभज्य 'तवेदमस्तु, तवेदमस्तु' इति सुतान् प्रति दत्त्वा, निःशेषीकृतपरिकरो ग्राम्यकामान् विसृज्य शुचौ देशे संचरन् वनमार्गेण वन्याश्रमोक्तविधिना वायुभक्षोऽम्बुभक्षो वा परिभ्रमन् तदाश्रमं समापयेत्। यदि वाय्वादिभक्षणातृप्तस्तदा विहितैः निर्दुष्टैः कन्दमूलैरपक्वैः पक्वैर्वा शरीरयात्रां कुर्यात्। एवं स्वशरीरमात्रे सर्वसंसारं समाप्याथ पूर्वानुभूतस्वपरिकरं स्मृत्वा पृथिव्यामश्रुपातं न कुर्यादित्यर्थः। विवरण.

**सह तेनैव पुरुषः कथं संन्यस्त उच्यते।**
**सनामधेयो यस्मिंस्तु कथं संन्यस्त उच्यते॥**
**तस्मात्फलविशुद्धाङ्गी संन्यासं संहितात्मनाम्।**
**अग्निवर्णं विनिष्क्रम्य वानप्रस्थं प्रपद्यते॥**
**लोकवद्भार्यया सक्तो वनं गच्छति संयतः॥**

(१) कुण्डिउ. १-११.

संन्यासस्य क्रमप्राप्ततया विदारः सदारो वा संन्यसेदित्यत आह — सहेति। विदारेण संन्यासः कर्तव्यः खलु, संन्यासस्य दाराद्येषणात्यागपूर्वकत्वात्। तथा सति तेनैव दारेण साकं पुरुषो वनी कथं संन्यस्तो भवेत्? इति। उच्यते — यस्मिंस्तु सदारे(?दारे) सति सदारो वनीति नामधेयेन सहितः सनामधेयो भवति। स कथं संन्यस्तो भवति? इति। उच्यते — यस्मात् सदारस्य न संन्यासाधिकारः तस्मात् सम्यक् स्व(?)हितात्मनां संहितात्मनां वानप्रस्थधर्माणाम् ईश्वराराधनधियाऽनुष्ठितानां फलविशुद्धाङ्गी स्वकृतधर्मफलार्पणसंतुष्टेश्वरप्रसादासादितविशुद्धचित्तो विदारो मुनिः सर्वकर्मसंन्यासं कुर्यात्। तादृशचित्तशुद्ध्यभावे ब्रह्मचर्यतः चित्तशुद्धिहेतुश्रौतस्मार्तधर्मानुष्ठानार्थमग्निवर्णं गार्हस्थं प्रपद्य वानप्रस्थाश्रमारोहणचित्तशुद्धिर्वानप्रस्थाश्रमं पारिव्राज्यानुकूलचित्तशुद्धिप्रापकं प्रपद्यते। ग्राम्यसुखेच्छाभावेऽपि औपासनादिधर्मानुष्ठानार्थं संयतकरणग्रामो मुनिः लोकवत् भार्यया सक्त इव वनं गच्छतीत्यर्थः। विवरण.

**संत्यक्त्वा संसृतिसुखमनुतिष्ठति किं मुधा।**
**किं वा दुःखमनुस्मृत्य भोगांस्त्यजति चोच्छ्रितान्॥**
**गर्भवासभयाद्भीतः शीतोष्णाभ्यां तथैव च।**
**गुहां प्रवेष्टुमिच्छामि परं पदमनामयम्॥**

किमर्थं संसारदुःखं विहाय वनी भवतीत्याशङ्क्य जन्मादिभिया सर्वं त्यक्त्वा वनी भिक्षुर्वा भवतीत्याह — संत्यक्त्वेति। विपुलं संसारभवसुखं संत्यज्य मुधा वनाद्वनमटति दारपुत्रादियोगजसुखदे संसारे। किं दुःखमनुस्मृत्य सर्वोच्छ्रितान् स्रक्चन्दनादिभोगांस्त्यजति? इति प्राप्ते सांसारिकदुःखप्रायसुखाभासस्य क्षणभङ्गुरत्वेऽप्यनन्तकोटिकल्पपर्यन्तं जननमरणादिदुःखपरंपराहेतुत्वेन व्रतिगृहिवन्याश्रमोचितबाह्यान्तःसंसारत्याग एव श्रेयानिति मनसि विधाय 'हे जाये, त्वया मे यत् कर्तव्यं तत्सर्वं कृतम्, पुत्रनिकटमेत्य तपश्चरन्ती ब्रह्मलोकं व्रज। इदानीमहं शीतोष्णादिबहुदुःखास्पदगर्भवासभयात् भीतः सन् यत्परमपदसाधनं गुह्यं निर्विशेषब्रह्मनिष्ठानुकूलसंन्यासं प्रवेष्टुमिच्छामि' इति जायामाश्वास्य प्रेषयित्वा विदारो यथावत् संन्यासं कृतवानित्यर्थः। विवरण.

**संन्यस्याग्निमपुनरावर्तनम्॥**

कृतेऽपि संन्यासे मुक्तिहेतवे इतोऽधिकचित्तशुद्ध्यर्थं वा श्रौतस्मार्ताग्निसेवनं कर्तव्यनिर्विशेषब्रह्मज्ञानजनकचित्तशुद्धेः निष्कामबुद्ध्याऽनुष्ठेयसत्कर्मनिमित्तादग्निसेवनं कार्यमिति। तत्राऽऽह — संन्यस्येति। नह्युत्तीर्णसरित्पारो नौकां शिरसा वहति यथा तथा संप्राप्तसत्त्वशुद्धेः संन्यासिनः कृतकृत्यस्य न हि कर्मानुष्ठानापेक्षाऽस्ति, तस्य निरग्नित्वात्। यत एवमतः संन्यस्य पुनः श्रौतं स्मार्तं वाऽग्निं कदाऽपि न सेवेत। एवमग्निसेवाभावेऽपि यथोक्तकाले वचसा मनसा वाऽपि प्रधानमन्त्रस्य कृत्स्नस्य वा न कदाऽप्यावर्तनम् आम्रेडनं स्मरणं वा कुर्यात्। विवरण.

**यन्मन्युर्जायमावहम्॥**

एवं कृते का हानिः? इत्यत्राऽऽह — यदिति। योऽहं वर्णाश्रमव्यवस्थापकश्रुतिगणः सोऽहं मृत्युर्भूत्वा परिव्राड्धर्मविरलस्य ते पूर्वसिद्धमपि जायं जायमानं वा परापरविषयकब्रह्मज्ञानम् आवहं प्रविशेयम्। मृत्युः प्रमादः तदस्मरणम् इत्थंभूतमृत्युग्रस्तं ज्ञानमाभासज्ञानमज्ञानं वा भवेदित्यर्थः। यद्यत्स्वातिरिक्ततया त्यक्तं तत् कदाऽप्यस्ति नास्तीति वा न हि स्मरेदित्यर्थः। विवरण.

**अथाध्यात्ममन्त्राञ्जपेत्॥**

उत्पन्नचित्तशुद्धेः प्रयोजनाभावात् कर्म माऽस्तु। यद्यचित्तशुद्धः संन्यस्यति तदा तच्चित्तशुद्धये कर्म विना किं ते अस्तीत्याशङ्क्य तस्यापि न कर्मास्ति, ज्ञानतोऽज्ञानाते वाऽपि प्रैषादिमन्त्रपूर्वकं सर्वकर्मणां त्यक्तत्वात्। यद्यशुद्धचित्तस्तदा स्वाश्रमानुष्ठानमविहाय स्वचित्तशुद्धये प्रणवमहावाक्यजातमावर्तयेदित्याह — अथेति। अथ विविदिषासंन्यासानन्तरमध्यात्ममन्त्रान् प्रणवमहावाक्यानि ईशाद्यष्टोत्तरशतोपनिषदो वा स्वचित्तशुद्धये जपेत्। विवरण.

संन्यासप्रशंसा

**'वेदान्तविज्ञानसुनिश्चितार्थाः**
**संन्यासयोगाद्यतयः शुद्धसत्त्वाः।**

(१) मुउ. ३।२।६.

**ते ब्रह्मलोकेषु परान्तकाले**
**परामृताः परिमुच्यन्ति सर्वे॥**

किंच वेदान्तजनितविज्ञानं वेदान्तविज्ञानम्। तस्यार्थः परमात्मा विज्ञेयः। सोऽर्थः सुनिश्चितो येषां ते वेदान्तविज्ञानसुनिश्चितार्थाः। ते च संन्यासयोगात् सर्वकर्मपरित्यागलक्षणयोगात् केवलब्रह्मनिष्ठास्वरूपाद्योगात् यतयो यतनशीलाः शुद्धसत्त्वाः शुद्धं सत्त्वं येषां संन्यासयोगात्ते शुद्धसत्त्वाः। ते ब्रह्मलोकेषु। संसारिणां ये मरणकालास्ते अपरान्तकालाः। तानपेक्ष्य मुमुक्षूणां संसारावसाने देहपरित्यागकालः परान्तकालः, तस्मिन् परान्तकाले। साधकानां बहुत्वात्, ब्रह्मैव लोको ब्रह्मलोकः, एकोऽप्यनेकवद्दृश्यते प्राप्यते वा। अतो बहुवचनं ब्रह्मलोकेष्विति, ब्रह्मणीत्यर्थः। परामृताः परम् अमृतम् अमरणधर्मकं ब्रह्म आत्मभूतं येषां ते परामृताः जीवन्त एव ब्रह्मभूताः। परामृताः सन्तः परिमुच्यन्ति परि समन्तात्प्रदीपनिर्वाणवद्घटाकाशवच्च निवृत्तिमुपयान्ति परिमुच्यन्ति परि समन्तान्मुच्यन्ते सर्वे, न देशान्तरं गन्तव्यमपेक्षन्ते। 'शकुनीनामिवाऽऽकाशे जले वारिचरस्य च। पदं यथा न दृश्येत तथा ज्ञानवतां गतिः॥' 'अनध्वगा अध्वसु पारयिष्णवः' इति श्रुतिस्मृतिभ्याम्। देशपरिच्छिन्ना हि गतिः संसारविषयैव, परिच्छिन्नसाधनसाध्यत्वात्। ब्रह्म तु समस्तत्वान्न देशपरिच्छेदेन गन्तव्यम्। यदि हि देशपरिच्छिन्नं ब्रह्म स्यात् मूर्तद्रव्यवदाद्यन्तवदन्याश्रितं सावयवमनित्यं कृतकं च स्यात्। न त्वेवंविधं ब्रह्म भवितुमर्हति। अतस्तत्प्राप्तिश्च नैव देशपरिच्छिन्ना भवितुं युक्ता। अपि च अविद्यादिसंसारबन्धापनयनमेव मोक्षमिच्छन्ति ब्रह्मविदः, न तु कार्यभूतम्। शंकर.

आश्रमाणामुत्तरोत्तरं श्रैष्ठ्यम्

**'अनुपनीतशतमेकमेकेनोपनीतेन तत्समम्। उपनीतशतमेकमेकेन गृहस्थेन तत्समम्। गृहस्थशतमेकमेकेन वानप्रस्थेन तत्समम्। वानप्रस्थशतमेकमेकेन यतिना तत्समम्॥**

अनुपनीतशतमेकम् एकेनोपनीतेन तत्समम्। उपनीतशतमुपकुर्वाणकानाम्, न नैष्ठिकाभिप्रायेण, तस्य सर्वोत्कृष्टत्वात्। एकम् एकेन गृहस्थेन च तत्समम्। गृहस्थशतमेकम् एकेन वानप्रस्थेन तत्समम्। वानप्रस्थशतमेकम् एकेन यतिना तत्समम्। सोऽयमाश्रमस्वीकारमात्रे तरतमभावः, नाऽऽश्रमप्रयुक्तानुष्ठानाभिप्रायेण। शंकर.

संक्षेपविस्ताराभ्यामाश्रमक्रमवर्णनम्

**'इत्युक्तस्तान्स होवाच नारदः। सत्कुलभवोपनीतः सम्यगुपनयनपूर्वकं चतुश्च(?च)त्वारिंशत्संस्कारसंपन्नः स्वाभिमतैकगुरुसमीपे स्वशाखाध्ययनपूर्वकं सर्वविद्याभ्यासं कृत्वा, द्वादशवर्षशुश्रूषापूर्वकब्रह्मचर्यं पञ्चविंशतिवत्सरं गार्हस्थ्यं पञ्चविंशतिवत्सरं वानप्रस्थाश्रमं तद्विधिवत्क्रमान्निर्वर्त्य, चतुर्विधब्रह्मचर्यं षड्विधगार्हस्थ्यं चतुर्विधं वानप्रस्थधर्मं सम्यगभ्यस्य, तदुचितं कर्म सर्वं निर्वर्त्य, साधनचतुष्टयसंपन्नः सर्वसंसारोपरि मनोवाक्कायकर्मभिर्यथाऽऽशानिवृत्तस्तथा वासनैषणोपर्यपि, निर्वैरः शान्तो दान्तः संन्यासी परमहंसाश्रमेणास्खलितस्वरूपध्यानेन देहत्यागं करोति स मुक्तो भवति स मुक्तो भवति। इत्युपनिषत्॥**

तैरेवं पृष्टो देवर्षिराह – इत्युक्त इति। +इति एवं शौनकादिभिः उक्तः स होवाच नारदः। किं तत्? सत्कुले भवतीति यः कश्चन द्विजातिः सत्कुलभवः विधिवदुपनीतः चतुश्च(?च)त्वारिंशत्संस्कारसंपन्नः। चतुश्च(?च)त्वारिंशत्संस्काराः कीदृशः (?राः कीदृशाः) इत्यत्र गौतमधर्मे आम्नायते। तद्यथा – 'गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौलोपनयनानि, चत्वारि वेदव्रतानि, स्नानं सहधर्मचारिणीसंयोगः, पञ्चानां यज्ञानामनुष्ठानं देवपितृमनुष्यभूतब्रह्मणामेतेषां पञ्चकम्(? षां च), (अष्टका) पार्वणश्राद्धं (?णः श्राद्धं) श्रावण्याग्रहायणीचैत्र्याश्वयुजीति सप्त पाकयज्ञसंस्थाः, अग्न्याधेयमग्निहोत्र(?त्रं)दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि निरूढपशुबन्ध(?न्धः)सौत्रामणीति सप्त हविर्यज्ञसंस्थाः, अग्निष्टोमोऽत्यग्निष्टोम-उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त सोमसंस्था इत्येते चत्वारिंशत्संस्काराः। अष्टावात्मगुणा

(१) नृपूउ. ५।८.

+ 'मुक्त्युपायोऽस्माकं वक्तव्यः' इति पूर्वग्रन्थे।

(१) नापउ. १।२.

दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहेति। यस्यैते चत्वारिंशत्संस्कारा न चाष्टावात्मगुणा न स ब्रह्मणः सायुज्यं सालोक्यं च गच्छति। यस्य तु खलु संस्काराणामेकदेशोऽप्यष्टावात्मगुणाः, अथ स ब्रह्मणः सायुज्यं सालोक्यं च गच्छति' (गौध. ८।१३-२३) इत्युक्तसंस्कारसंपन्नो भूत्वा 'आचार्यो वेदसंपन्नो विष्णुभक्तो विमत्सरः' (अद्वउ. १४) इत्यादिश्रुत्यनुरोधेनोक्तलक्षणलक्षितस्वाभिमतैकगुरुनिकटे आदौ स्वशाखाध्ययनपूर्वकं सर्वविद्यामभ्यस्य द्वादशवर्षशुश्रूषापूर्वकब्रह्मचर्यव्रती भूत्वा विद्यामभ्यसेदित्यर्थः। ततः पञ्चविंशतिवत्सरपर्यन्तं गार्हस्थ्योचितधर्मानुष्ठानं कृत्वा, अथ तथा पञ्चविंशतिवत्सरपर्यन्तं वानप्रस्थाश्रमोचितधर्मजातं विधिवत् क्रमान्निर्वर्त्य अथ सप्तत्यूर्ध्वं संन्यसेदित्यर्थः।

ब्रह्मचर्यादिधर्माः कतिविधाः? इत्यत आह — चतुर्विधब्रह्मचर्यमिति। अस्मिन्नर्थे काण्वायनस्मृतिरर्थतोऽनुक्रम्यते। तद्यथा — गायत्रो ब्राह्मः प्राजापत्यो बृहन्निति ब्रह्मचारी चतुर्विधः। अस्यार्थः — तत्रोपनयनादूर्ध्वं यस्त्रिरात्रमक्षारलवणाशी गायत्रीमधीते स गायत्रः। यस्तु वेदस्याऽऽग्रहणात् ब्रह्मचर्यं चरति स ब्राह्मः। संवत्सरं वेदव्रतकृत् प्राजापत्यः। आमरणं गुरुकुलवासी नैष्ठिको बृहन्नित्युच्यते। गार्हस्थ्यं कतिविधम्? इत्यत आह — षड्विधगार्हस्थ्यमिति। तथा च गृहस्था अपि षड्विधाः। तद्यथा — वार्ताकः शालीनो यायावरो घोरसंन्यासिकः उञ्छवृत्तिः अयाचितश्चेति। तत्र कृषिगोरक्षादिकृतया वैश्यवृत्त्या जीवन्नित्यादिक्रियापरो वार्ताकवृत्तिः (? वार्ताकः)। शालीनस्तु षट्कर्मनिरतो याजनादिवृत्तिः। यायावरस्तु शिष्टगृहेषु किंचित् किंचित् स्वकुटुम्बभरणोपयोगितण्डुलसंग्रही। घोरसंन्यासिकस्तु उद्धृतपूताभिरद्भिः कार्यं कुर्वन् अहन्यहनि शिष्टजनतः तण्डुलपरिग्रही। उञ्छ(वृत्ति)स्तु सिलोञ्छवृत्तिः। अयाचितस्तु यदृच्छालब्धोपजीवी। वानप्रस्थः कतिविधः? इत्यत आह — चातुर्विध्य(?चतुर्विध)मिति। वनस्था अपि चतुर्विधाः। तद्यथा वैखानस औदुम्बरो वालखिल्यः फेनपाश्चेति। तत्र अकृष्टपच्यौषधीभिः ग्रामबहिष्कृताभिः अग्निहोत्रादि कुर्वन् वैखानस इत्युच्यते। यस्तु प्रातरुत्थाय यां यां दिशं पश्यति तत्रत्यौदुम्बरीबदरनीवारश्यामाकैः नित्ययात्रापर औदुम्बरः। यस्तु जटावल्कलधारी अष्टौ मासान् वृत्त्युपार्जनकृच्छ्रात्तुर्मास्ये गृहीताशी कार्तिक्यां संगृहीतपुष्पफलत्यागी स वालखिल्यः। फेनपास्तु शीर्णपर्णफलवृत्तयः यत्र क्वचिद्वसन्तः कर्मपरा इति। एवं ब्रह्मचर्यादिवानप्रस्थान्तधर्मजातं निर्वर्त्य नित्यादिसाधनचतुष्टयसंपन्नो भूत्वा संसृतिवासनैषणात्रयत्यागपूर्वकं सर्वभूतेषु स्वात्मतया निर्वैरस्वान्तर्बाह्यकलनाभावाच्छान्तो दान्तः संन्यासी अस्खलितस्वरूपध्यानेन यो देहोपलक्षितस्वाविद्यापदमस्ति नास्तीति विभ्रमाभिमतिं त्यजति सोऽयं स्वातिरिक्तास्तित्वभ्रममुक्तो विदेहमुक्तो भवति। आवृत्तिरादरार्था। इत्युपनिषच्छब्दः प्रथमोपदेशसमाप्त्यर्थः।

विवरण.

+[1]**भो नारद, विधिवदादावनुपनीतोपनयनानन्तरं तत्सत्कुलप्रसूतः पितृमातृविधेयः पितृसमीपादन्यत्र सत्संप्रदायस्थं श्रद्धावन्तं सत्कुलभवं श्रोत्रियं शास्त्रवात्सल्यं गुणवन्तमकुटिलं सद्गुरुमासाद्य नत्वा यथोपयोगशुश्रूषापूर्वकं स्वाभिमतं विज्ञाप्य द्वादशवर्षसेवापुरःसरं सर्वविद्याभ्यासं कृत्वा तदनुज्ञया स्वकुलानुरूपामभिमतकन्यां विवाह्य पञ्चविंशतिवत्सरं गुरुकुलवासं कृत्वाऽथ गुर्वनुज्ञया गृहस्थोचितकर्म कुर्वन् दौर्ब्राह्मण्यनिवृत्तिमेत्य स्ववंशवृद्धिकामः पुत्रमेकमासाद्य गार्हस्थ्योचित ⇧पञ्चविंशतिवत्सरं तीर्त्वा ततः पञ्चविंशतिवत्सरपर्यन्तं त्रिषवणमुदकस्पर्शनपूर्वकं चतुर्थकालमेकवारमाहारमाहरन्नयमेक एव वनस्थो भूत्वा पुरग्रामप्राक्तनसंचारं विहाय निकिरविरहिततदाश्रितकर्मोचितकृत्यं निर्वर्त्य दृष्टश्रवणविषयवैतृष्ण्यमेत्य चत्वारिंशत्संस्कारसंपन्नः सर्वतो विरक्तश्चित्तशुद्धिमेत्याऽऽशासूयेर्ष्याहंकारं दग्ध्वा साधनचतुष्टयसंपन्नः संन्यस्तुमर्हतीत्युपनिषत्॥**

---

+ 'पारिव्राज्यस्वरूपक्रमं नो ब्रूहि' इति नारदप्रार्थितपरमेष्ठिन इदं वाक्यम्।

⇧ निर्दिष्टपूर्वपञ्चविंशतिवत्सरात्मकगुरुकुलवासे कर्तव्यकर्मेत्थंभावकालावधिबोधकोऽयं पुनः प्रयुक्तः पञ्चविंशतिवत्सरशब्दः इति भाति।

(१) नापउ. २।१.

'भो नारद' इति तं स्वाभिमुखीकृत्य क्रमेण संन्यासविधिमुपदिशतीत्याह – भो इति। सत्संप्रदायस्थमित्याद्याचार्यविशेषणम्। श्रोत्रियम् अधीतसाङ्गोपाङ्गस्वाध्यायतदर्थम्। पञ्चविंशतिवत्सरं सदारो गुरुकुलवासं कृत्वा 'त्रिषवणमुदकोपस्पर्शी चतुर्थकालपानभक्तः स्यात्' इति श्रुतेः। निकिरविरहितेत्यत्र निरतां(?त) किरं बीजावापनं यत्र तन्निकिरं गोधूमशालीश्यामाकादि तद्विरहितं नीवारतृणतण्डुलादि तदाश्रितकर्मोचितकृत्यं देवपित्राद्युद्देशेन हव्यकव्यादिकम्। दृष्टम् ऐहिकं श्रावणम् आमुष्मिकं तत्र वैतृष्ण्यम् इहामुत्रभोगवितृष्णत्वम्। चत्वारिंशत्संस्कारसंपन्न इत्याद्युक्तार्थम्। शिष्टं स्पष्टम्। इत्युपनिषच्छब्दो द्वितीयोपदेशसमाप्त्यर्थः। विवरण.

संन्यासानधिकारिणः

**[1]अथ षण्डः पतितोऽङ्गविकलः स्त्रैणो बधिरोऽर्भको मूकः पाषण्डश्चक्री लिङ्गी वैखानसहरद्विजौ भृतकाध्यापकः शिपिविष्टोऽनग्निको वैराग्यवन्तोऽप्येते न संन्यासार्हाः। संन्यस्ता यद्यपि महावाक्योपदेशे नाधिकारिणः। पूर्वसंन्यासी परमहंसाधिकारी॥**

**परेणैवाऽऽत्मनश्चापि परस्यैवाऽऽत्मना तथा।**
**अभयं समवाप्नोति स परिव्राडिति स्मृतिः॥**
**षण्डोऽथ विकलोऽप्यन्धो बालकश्चापि पातकी।**
**पतितश्च परद्वारी वैखानसहरद्विजौ॥**
**चक्री लिङ्गी च पाषण्डी शिपिविष्टोऽप्यनग्निकः।**
**द्वित्रिवारेण संन्यस्तो भृतकाध्यापकोऽपि च।**
**एते नार्हन्ति संन्यासमातुरेण विना क्रमम्॥**

संन्यासानधिकारिणं निरूपयति – अथेति। शिपिविष्टः विकसितशेफ इत्यर्थः। उक्तार्थवैपरीत्येन यः सर्वभूताभयदः यस्य सर्वाणि भूतान्यभयं दास्यन्ति सोऽयं संन्यासाधिकारीत्याह – पूर्वेति। केयं स्मृतिः? इत्यत्र। 'अनाश्रितः कर्मफलं कार्यं कर्म करोति यः। स संन्यासी च योगी च न निरग्निर्न चाक्रियः॥' (भगी. ६।१) इति स्मृत्यनुरोधेन साध्यसाधनैषणापरित्यागपूर्वकं निष्कामकर्मानुष्ठाता द्विजः पूर्वसंन्यासी। सोऽयं परमहंसाश्रमाधिकारी। तद्विपरीता(?तोऽन)धिकार्यपि श्रूयते मन्त्रद्वयेन – षण्ड इति। विवरण.

आसन्नमरणस्यैव आतुर-
संन्यासेऽधिकारः

**आतुरकालः कथमार्यसंमतः?**
**प्राणस्योत्क्रमणासन्नकालस्त्वातुरसंज्ञिकः।**
**नेतरस्त्वातुरः कालो मुक्तिमार्गप्रवर्तनः॥**

आतुरसंन्यासः कथं विद्वत्संमतो भवति? इत्याक्षिप्य तत्राष्टश्राद्धादिकर्मलोपेऽपि संन्याससिद्धिकरप्रैषमन्त्रालोपादातुरसंन्यासोऽपि विद्वत्संमतो भवतीत्याह – आतुरकाल इति। प्राणस्योत्क्रमणासन्नकालः प्राणोत्क्रमणपूर्वभाविकाल एवेत्यर्थः। विवरण.

संन्यासाधिकारसंपादकं
वैराग्यादि

**यदा मनसि संजातं वैतृष्ण्यं सर्ववस्तुषु।**
**तदा संन्यासमिच्छन्ति पतितः स्याद्विपर्यये॥**
**विरक्तः प्रव्रजेद्धीमान्सरक्तस्तु गृहे वसेत्।**
**सरागो नरकं याति प्रव्रजन् हि द्विजाधमः॥**

स्वातिरिक्तवस्तुवैतृष्ण्यं संन्यासहेतुः। यत्र कुत्रापि सतृष्णो यदि संन्यस्यति तस्य नरकपातः स्यादित्याह – यदेति। विवरण.

**यस्यैतानि सुगुप्तानि जिह्वोपस्थोदरं करः।**
**संन्यसेदकृतोद्वाहो ब्राह्मणो ब्रह्मचर्यवान्॥**
**संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया।**
**प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिताः॥**
**प्रवृत्तिलक्षणं कर्म ज्ञानं संन्यासलक्षणम्।**
**तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिह बुद्धिमान्॥**

यस्य जिह्वादिकं स्ववशे वर्तते, इतः परमलमिति यस्य संसारविरक्तिरुदेति, यस्य च ज्ञानं कैवल्यसाधनं भवति, सोऽयं व्रती गृही वनी वा संन्यसेदित्याह – यस्येति। यस्मादेवं – तस्मात्। विवरण.

**यदा तु विदितं तत्त्वं परं ब्रह्म सनातनम्।**
**तदैकदण्डं संगृह्य सोपवीतं शिखां त्यजेत्॥**
**परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि।**
**सर्वैषणाविनिर्मुक्तः स भैक्षं भोक्तुमर्हति॥**
**पूजितो वन्दितश्चैव सुप्रसन्नो यथा भवेत्।**
**तथा चेत्ताड्यमानस्तु तदा भवति भैक्षभुक्॥**

(१) नापउ. ३।१-५, १२-२७, ७७.

**अहमेवाक्षरं ब्रह्म वासुदेवाख्यमद्वयम्।**
**इति भावो ध्रुवो यस्य तदा भवति भैक्षुभुक्॥**
**यस्मिञ्छान्तिः शमः शौचं सत्यं संतोष आर्जवम्।**
**अकिंचनमदम्भश्च स कैवल्याश्रमे भवेत्॥**
**यदा न कुरुते भावं सर्वभूतेषु पापकम्।**
**कर्मणा मनसा वाचा तदा भवति भैक्षभुक्॥**
**दशलक्षणकं धर्ममनुतिष्ठन्समाहितः।**
**वेदान्तान्विधिवच्छ्रुत्वा संन्यसेदनृणो द्विजः॥**
**धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।**
**ह्रीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्॥**
**अतीतान्न स्मरेद्भोगान्न तथाऽनागतानपि।**
**प्राप्तांश्च नाभिनन्देद्यः स कैवल्याश्रमे वसेत्॥**
**अन्तःस्थानीन्द्रियाण्यन्तर्बहिष्ठान्विषयान्बहिः।**
**शक्नोति यः सदा कर्तुं स कैवल्याश्रमे वसेत्॥**
**प्राणे गते यथा देहः सुखं दुःखं न विन्दति।**
**तथा चेत्प्राणयुक्तोऽपि स कैवल्याश्रमे वसेत्॥**

विद्वत्संन्यासमाह – यदेति। यस्य स्वानुरक्तिस्वातिरिक्तविरक्तिसमत्वादिकं नैजं भवति स यतितामर्हतीत्याह – परमात्मनीत्यादिना। अकिंचनं स्वातिरेकेण किंचिदस्तीति यन्मनो न मनुते तदकिंचनम्। किंच, यदेति। पुनर्भङ्ग्यन्तरेण विद्वत्संन्यास उच्यते – दशेति। अनृणः 'ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणः।' (तैसं. ६।३।१०।५) इति श्रुतेः। दशलक्षणकं धर्ममित्यंशं श्रुतिरेव व्याकरोति – धृतिरिति। भूतादिकालत्रयावच्छिन्नभोगानिच्छुर्मोक्षाश्रमे वसेदित्याह – अतीतानिति। निगृहीतान्तर्बाह्यवृत्तिर्मोक्षाश्रमे वसेदित्याह – अन्तरिति। किं बहुना? – प्राण इति।

विवरण.

संन्यासग्रहणे मन्दवैराग्यस्य आश्रमक्रमापेक्षा,
तीव्रवैराग्यस्य तदनपेक्षा

**अप्रमत्तः कर्मभक्तिज्ञानसंपन्नः स्वतन्त्रो वैराग्यमेत्य ब्रह्मचारी गृही वानप्रस्थो वा मुख्यवृत्तिका चेद्ब्रह्मचर्यं समाप्य गृही भवेद्गृहाद्वनी भूत्वा प्रव्रजेत्। यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा। अथ पुनरव्रती वा व्रती वा स्नातको वाऽस्नातको वोत्सन्नाग्निरनग्निको वा यदहरेव विरजेत्तदहरेव प्रव्रजेत्॥**

यथोक्तलक्षितवृत्त्यादेर्यदहरेव वान्ताशनमूत्रपुरीषादिवत् स्वातिरिक्तप्रपञ्चविरतिरुदेति तदा तदहरेव प्रव्रेजत्, यदि विरतिर्मन्दा तदाऽऽश्रमक्रमानुसारेण परिव्रजेदित्याह – अप्रमत्त इति। यदि स्वात्ताश्रमपरिग्रहे मन्दविरक्त्या तत्र मुख्यवृत्तिका चेत् ब्रह्मचर्यं समाप्य गृही भवेत्, यदि वा इतरथा तीव्रतरविरतिरुदेति तदा ब्रह्मचर्यादेव प्रव्रजेत्। विरजेत् तीव्रतरविरागी स्यात्।

....'ब्रह्मचर्यं समाप्य' इत्यारभ्य ('तदहरेव प्रव्रजेत्') इत्यन्तं जाबालोपनिषदि चतुर्थखण्डे जनकयाज्ञवल्क्यसंवादे प्रायशः प्रतिपदं व्याख्यातम्।

विवरण.

ज्ञानवैराग्यान्यतर - तदुभयसत्त्व - क्रमैः
चतुर्विधाः संन्यासिनः
तल्लक्षणानि च

**[१]अथ हैनं पितामहं नारदः पप्रच्छ। भगवन्, सर्वकर्मनिवर्तकः संन्यास इति त्वयैवोक्तः, पुनः 'स्वाश्रमाचारपरो भवेत्' (नापउ. ४।३९) इत्युच्यते। ततः पितामह उवाच। शरीरस्य देहिनो जाग्रत्स्वप्नसुषुप्तितुर्यावस्थाः सन्ति। तदधीनाः कर्मज्ञानवैराग्यप्रवर्तकाः पुरुषा जन्तवस्तदनुकूलाचाराः सन्ति। 'तथैव चेद्भगवन् संन्यासाः कतिभेदाः? तदनुष्ठानभेदाः कीदृशाः? तत्त्वतोऽस्माकं वक्तुमर्हसि' इति। तथेत्यङ्गीकृत्य तं पितामहेन॥**

कर्मत्यागकर्माचरणयोः विरोधं मन्यमानो नारदः पृच्छतीत्याह – अथेति। पितामहं नारदः पप्रच्छ। किमिति – भगवन्निति। नारदेनैवं पृष्टः सन् प्रश्नोत्तरं भगवानाह – तत इति। ततः पितामह उवाच। किमित्यत्र – शरीरस्येति। देहत्रयावच्छिन्नजीवस्य जाग्रदाद्यवस्थाचतुष्टयवत्त्वेन कर्मभक्तिवैराग्यज्ञानसंभवात्। एवमवस्थाचतुष्टयावच्छिन्नप्राणिनः तदनुकूलाचारा भवन्तीति स्वाश्रमाचारपरो भवेदित्युक्तम्। स्वाश्रमाचारसंपत्तिस्तु व्रतिगृहिवनिसेव्यश्रौतस्मार्तकर्मसामान्यसंन्यासपूर्वकं प्राणधारणोपयोगिपरिग्रहश्रवणादिसाधनसंपत्तिरित्यर्थः। एकस्यैव सर्वकर्मसंन्यासपूर्वकं स्वाश्रमाचारपरत्वमुपपद्यते। नारदेन यत् पृष्टं तत् तथेत्यङ्गीकृत्य तं प्रति पितामहेनैवमुक्तम्।

विवरण.

(१) नापउ. ५।१-१८, २२-२३.

**संन्यासभेदैराचारभेदः कथमिति चेत् — तत्त्वतस्त्वेक एव संन्यासः अज्ञानेनाशक्तिवशात्कर्मलोपतश्च त्रैविध्यमेत्य वैराग्यसंन्यासो ज्ञानसंन्यासो ज्ञानवैराग्यसंन्यासः कर्मसंन्यासश्चेति चातुर्विध्यमुपागतः॥**

किमिति — 'संन्यासभेदैः आचारभेदः कथमिति चेत्' इत्येवं मन्यसे यदि तदा शृण्वेतत्। स केन भिद्यत इत्यत्र — अज्ञानेनेति। त्रैविध्यमेत्य, वर्तते विद्वद्विविदिषा(?ष्वा)तुरभेदात्। स पुनश्चातुर्विध्यमुपगत इत्याह — वैराग्येति। विवरण.

**तद्यथेति। दुष्टमदनाभावाच्चेति विषयवैतृष्ण्यमेत्य प्राक्पुण्यकर्मवशात्संन्यस्तः स वैराग्यसंन्यासी॥**

तथैव प्रतिपाद्यते सर्वानर्थहेतुदुष्टमदनाभावाच्चेति। चशब्दतस्तत्प्रतीत्यभावो द्योत्यते। विषयसामान्यवैतृष्ण्यमेत्य प्राक्पुण्यकर्मवशात् संन्यस्तः स वैराग्यसंन्यासी। स्वातिरिक्तनश्वरहेयबुद्ध्या यः सर्वत्यागः स वैराग्यसंन्यास इत्यर्थः। विवरण.

**शास्त्रज्ञानात्पापपुण्यलोकानुभवश्रवणात्प्रपञ्चोपरतः क्रोधेर्ष्यासूयाहंकाराभिमानात्मकसर्वसंसारं निर्वर्त्य (?निवर्त्य) दारैषणाधनैषणालोकैषणात्मकदेहवासनां शास्त्रवासनां लोकवासनां च त्यक्त्वा वमनान्नमिव प्रकृतीयं सर्वमिदं हेयं मत्वा साधनचतुष्टयसंपन्नो यः संन्यस्यति स एव ज्ञानसंन्यासी॥**

ज्ञानसंन्यासस्वरूपमाह — शास्त्रेति।

विवरण.

**क्रमेण सर्वमभ्यस्य सर्वमनुभूय ज्ञानवैराग्याभ्यां स्वरूपानुसंधानेन जातरूपधरो भवति सोऽयं ज्ञानवैराग्यसंन्यासी॥**

विशिष्टज्ञानवैराग्यसंन्यासमाह — क्रमेणेति। क्रमेण वेदान्तजातं सर्वमभ्यस्य सर्वमनुभूय सर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति ज्ञानम्, ब्रह्मातिरिक्तसर्वस्यासंभवालोचनं वैराग्यम्, ताभ्यां ज्ञानवैराग्याभ्यां स्वरूपानुसंधानेन सर्वं विस्मृत्य यो जातरूपधरो भवति सोऽयं ज्ञानवैराग्यसंन्यासी इत्यर्थः। विवरण.

**ब्रह्मचर्यं समाप्य गृही भूत्वा वानप्रस्थाश्रममेत्य वैराग्याभावेऽप्याश्रमक्रमानुसारेण यः संन्यस्यति स कर्मसंन्यासी॥**

**ब्रह्मचर्येण संन्यस्य संन्यासाज्जातरूपधरो वैराग्यसंन्यासी। विद्वत्संन्यासी ज्ञानसंन्यासी। विविदिषासंन्यासी कर्मसंन्यासी॥**

कर्मसंन्यासस्वरूपं विशदयति — ब्रह्मचर्यमिति। विधिवत् ब्रह्मचर्यं समाप्येति। विषयानभिज्ञतया ब्रह्मचर्यसंन्यस्तं स्तौति — ब्रह्मचर्येणेति। तस्य सर्वात्मभावारूढतया पश्यद्दृष्टिवैचित्र्यात् सर्वरूपत्वमुपपद्यत इत्यर्थः। विवरण.

कर्मसंन्यासद्वैविध्यम्

**कर्मसंन्यासोऽपि द्विविधः निमित्तसंन्यासोऽनिमित्तसंन्यासश्चेति। निमित्तस्त्वातुरः, अनिमित्तः क्रमसंन्यासः। आतुरः सर्वकर्मलोपः प्राणस्योत्क्रमणकालसंन्यासः स निमित्तसंन्यासः। दृढाङ्गो भूत्वा सर्वं कृतकं नश्वरमिति देहादिकं सर्वं हेयं प्राप्य॥ हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्। नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतुजा अद्रिजा ऋतं बृहत्॥ ब्रह्मव्यतिरिक्तं सर्वं नश्वरमिति निश्चित्य क्रमेण यः संन्यस्यति स संन्यासोऽनिमित्तसंन्यासः॥**

निमित्तानिमित्तभेदेन कर्मसंन्यासस्य द्वैविध्यमाह — कर्मेति। निमित्तानिमित्तशब्दार्थमाह — निमित्तस्त्वातुरः, अनिमित्तः क्रमसंन्यास इति। निमित्तसंन्यासार्थं विशदयति — आतुर इति। अनिमित्तस्वरूपमाह — दृढाङ्ग इति। 'ऋतं बृहत्' इति मन्त्रानुरोधेन ब्रह्मैवर्तं ब्रह्मव्यतिरिक्तं सर्वं नश्वरम्। विवरण.

कुटीचकादयः षड्विधाः संन्यासिनः
तल्लक्षणानि च

**संन्यासः षड्विधो भवति — कुटीचको बहूदको हंसः परमहंसस्तुरीयातीतोऽवधूतश्चेति॥**

कतिविधः संन्यासः? इत्यत्र कुटीचकादिभेदेन षड्विधः इत्याह — संन्यास इति। तत् कथम्? कुटीचक इति। विवरण.

**कुटीचकः शिखायज्ञोपवीती दण्डकमण्डलुधरः कौपीनकन्थाधरः पितृमातृगुर्वाराधनपरः पिठरखनित्रशिक्यादिमन्त्रसाधनपर एकत्रान्नादनपरः श्वेतोर्ध्वपुण्ड्रधारी त्रिदण्डः॥**

**बहूदकः शिखादिकन्थाधरस्त्रिपुण्ड्रधारी कुटीचकवत्सर्वसमो मधुकरवृत्त्याऽष्टकवलाशी॥**

**हंसो जटाधारी त्रिपुण्ड्रोर्ध्वपुण्ड्रधारी असंक्लृप्तमाधूकरान्नाशी कौपीनखण्डतुण्डधारी।**

**परमहंसः शिखायज्ञोपवीतरहितः पञ्चगृहेष्वेकरात्रान्नादनपरः करपात्री एककौपीनधारी शाटीमेकामेकं वैणवं दण्डमेकशाटीधरो वा भस्मोद्धूलनपरः सर्वत्यागी॥**

तेषां लक्षणं क्रमेण स्पष्टयति – कुटीचक इति। त्रिपुण्ड्रोर्ध्वपुण्ड्रधारी त्रिपुण्ड्रम् ऊर्ध्वपुण्ड्रं वा यथासंभवं धरति नोभयमित्यर्थः। असंक्लृप्तमाधूकरान्नाशी अस्य गृहेऽद्य माधूकरं मे स्यादिति संकल्परहितः।

विवरण.

**तुरीयातीतो गोमुखः फलाहारी, अन्नाहारी, चेद्गृहत्रये, देहमात्रावशिष्टो दिगम्बरः कुणपवच्छरीरवृत्तिकः॥**

**अवधूतस्त्वनियमोऽभिशस्तपतितवर्जनपूर्वकं सर्ववर्णेष्वजगरवृत्त्याऽऽहारपरः स्वरूपानुसंधानपरः॥**

गोमुखः गोवत् यदृच्छालब्धान्नमुखग्रसनात्। तथा च वक्ष्यति – 'आस्येन तु यदाहारं गोवन्मृगयते मुनिः' इति। कुणपवच्छरीरवृत्तिकः यथा कुणपो निश्चेष्ट तथा निर्विकल्पकसमाधिकवलितव्यापृतित्वात्।

विवरण.

जीवत आतुरसंन्यासिनः कर्तव्यम्

**आतुरो जीवति चेत्क्रमसंन्यासः कर्तव्यः॥**

यद्यातुरो जीवति तेन किं कर्तव्यमित्यत आह – आतुर इति। गुरुमुखतः प्रणवमहावाक्यादिस्वीकार एव क्रमसंन्यासः। न त्वष्टश्राद्धादिः, तस्य प्रेषोच्चारणसमकालमक्रियत्वात्। विवरण.

आतुरादिसप्तविधसंन्यासानां फलानि

**आतुरकुटीचकयोर्भूर्लोकभुवर्लोकौ बहूदकस्य स्वर्गलोको हंसस्य तपोलोकः परमहंसस्य सत्यलोकः तुरीयातीतावधूतयोः स्वात्मन्येव कैवल्यं स्वरूपानुसंधानेन भ्रमरकीटन्यायवत्॥**

**यं यं वाऽपि स्मरन्भावं त्यजत्यन्ते कलेवरम्।**
**तं तमेव समाप्नोति नान्यथा श्रुतिशासनम्॥**

ज्ञानाविकलकुटीचकादीनां प्राप्यमुच्यते – आतुरेति। यदि सविशेषज्ञानी तदा तस्य परमहंसस्य सत्यलोकः। यदि निर्विशेषब्रह्मज्ञानिनौ तुर्यातीतावधूतौ भवतः तदा तयोः तुर्यातीतावधूतयोः स्वात्मन्येव कैवल्यम्। यत एवं स्वरूपानुसंधानेन भ्रमरकीटन्यायवत् ब्रह्मभावापत्तिर्भवति अत एव स्वस्वरूपानुसंधानं सदा कार्यमित्यर्थः। किमर्थं सदा स्वरूपानुसंधानं कर्तव्यमित्याकाङ्क्षायां निर्विशेषज्ञानिनो ज्ञानसमकालमेव मुक्तत्वेऽपि सविशेषज्ञानिनस्तदभावात् सदा स्वरूपानुसंधानं कर्तव्यमित्याह – यमिति। चरमदशायां यं यं वाऽपीति। तथा च स्मृतिरपि – 'अन्तकाले च मामेव स्मरन् मुक्त्वा कलेवरम्। यः प्रयाति त्यजन् देहं स याति परमां गतिम्।' (भगी. ८।५) इति।

विवरण.

संसारदोषदर्शनं परंपरया संन्यासाधिकारसंपादकम्

**[१]संसारदोषदृष्ट्यैव विरक्तिर्जायते सदा।**
**विरक्तस्य तु संसारात्संन्यासः स्यान्न संशयः॥**

आश्रमसमुच्चयविकल्पौ, संन्यासाधिकारी

**[२]अथ पितामहः स्वपितरमादिनारायणमुपसमेत्य प्रणम्य पप्रच्छ। 'भगवन्, त्वन्मुखाद्वर्णाश्रमधर्मक्रमं सर्वं श्रुतं विदितमवगतम्। इदानीं परमहंसपरिव्राजकलक्षणं वेदितुमिच्छामि। कः परिव्रजनाधिकारी? कीदृशं परिव्राजकलक्षणा(?णम्)? कः परमहंसः? परिव्राजकत्वं कथम्? तत्सर्वं मे ब्रूहि' इति। स होवाच भगवानादिनारायणः॥**

ब्रह्मनारायणप्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था। पितामहः विश्वभूः, नारायणः विश्वपालकः, ताभ्यामाविर्भूतोऽर्थः कीदृशो भवतीति आख्यायिकामवतारयति – अथेति। अथ ब्रह्मक्षत्रादिब्रह्मचारिगृहस्थादिधर्मश्रवणानन्तरम्। काश्यपादिनवप्रजापतयः सर्वलोकपितरः। यस्तेषामपि पिता स सर्वलोकपितामहः। स्वपितरमादिनारायणं कार्यसत्वे स्वयमादि, सर्वाभिन्ननिमित्तोपादानकारणत्वात्, वस्तुतो यत्र कार्यकारण-

(१) नापउ. ६।२४.
(२) पपउ. १-२.

कलना नास्त्यरमिति नारं कार्यकारणकलनासंभवप्रबोधसिद्धनिष्प्रतियोगिकब्रह्ममात्रावस्थानलक्षणविदेहकैवल्यम् तदेवायनं स्वरूपं यस्य सोऽयमादिनारायणः। तं स्वाज्ञदृष्ट्या मूर्तिमदवस्थितम्, 'अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः। परं भावमजानन्तो ममाव्ययमनुत्तमम्॥' (भगी. ७।२४) इति स्मृतेः। तमुपसमेत्य दण्डवत् प्रणम्य पप्रच्छ। किमिति? भगवन्निति। सर्वं यथावत् श्रुतम्। परमहंसपरिव्राजकलक्षणं यथावत् वेदितुमिच्छामि। तत्कृतप्रश्नमङ्गीकृत्य स होवाच भगवानादिनारायणः। विवरण.

**सद्गुरुसमीपे सकलविद्यापरिश्रमज्ञो भूत्वा विद्वान्सर्वमैहिकामुष्मिकसुखश्रमं ज्ञात्वैषणात्रयवासनात्रयममत्वाहंकारादिकं वमनान्नमिव हेयमुपगम्य मोक्षमार्गैकसाधनो ब्रह्मचर्यं समाप्य गृही भवेद्गृहाद्वनी भूत्वा प्रव्रजेत्। यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा। अथ पुनरव्रती वा व्रती वा स्नातको वाऽस्नातको वोत्सन्नाग्निरनग्निको वा यदहरेव विरजेत्तदहरेव प्रव्रजेत् इति। सर्वसंसारेषु विरक्तो ब्रह्मचारी गृही वानप्रस्थो वा पितरं मातरं कलत्रमाप्तबन्धुवर्गं तदभावे शिष्यं सहवासिनं वाऽनुमोदयित्वा......॥**

तत्कृतप्रश्नेष्वादौ परिव्रजनाधिकारिणं निरूपयति — सदिति। न कदाऽपि संसारमण्डले सुखलेशोऽस्तीत्यवगम्य दाराद्येषणात्रयदे(?यं दे)हादि वासनात्रयदा(?यं दा)रादौ शरीरे च रूढमूलं ममत्वाहंकारादिकं वमनान्नमिव हेयमुपगम्य स्वातिरिक्तास्तित्वभ्रममोक्षमार्गैकसाधनः। 'ब्रह्मचर्यं समाप्य गृही भवेत्।' (जाउ.४) जाबालोपनिषद्युक्तार्थमेतत्। यदि सर्वसंसारेषु विरक्तो भवति तदा ब्रह्मचारी गृही वानप्रस्थो वा आदौ पित्राद्यनुमोदनं कृत्वा संन्यसेदित्याह — पितरमिति। अनुमोदयित्वा प्रवजेदित्यर्थः।

विवरण.

क्रमेण चातुराश्रम्यम्, त्यागरूपसंन्यासोत्तरमप्यग्नेरपरिग्रहः

**'ब्रह्मचर्याश्रमे खिन्नो गुरुशुश्रूषणे रतः।**
**वेदानधीत्यानुज्ञात उच्यते गुरुणाऽऽश्रमी॥**
**दारमाहृत्य सदृशमग्निमाधाय शक्तितः।**
**ब्राह्मीमिष्टिं यजेत्तासामहोरात्रेण निर्वपेत्॥**
**संविभज्य सुतानर्थैर्ग्राम्यकामान्विसृज्य च।**
**चरेत वनमार्गेण शुचौ देशे परिभ्रमः॥**
**वायुभक्षोऽम्बुभक्षो वा विहितानोत्तरः फलैः।**
**स्वशरीरे समारोपः पृथिव्यां नाश्रुपातकाः।**
**सह तेनैव पुरुषः कथं संन्यस्त उच्यते॥**
**सनामधेयस्तु स किं यस्मिन्संन्यस्त उच्यते।**
**तस्मात्फलविशुद्धाङ्गी संन्यासं सहतेऽर्चिमान्॥**
**अग्निवर्णं निष्क्रामति वानप्रस्थं प्रपद्यते।**
**लोकाद्भार्यया सहितो वनं गच्छति संयतः॥**
**त्यक्त्वा कामान्संन्यसति भयं किमनुपश्यति।**
**किं वा दुःखं समुद्दिश्य भोगांस्त्यजति सुस्थितान्॥**
**गर्भवासभयाद्भीतः शीतोष्णाभ्यां तथैव च।**
**गुहां प्रवेष्टुमिच्छामि परं पदमनामयमिति॥**
**संन्यस्याग्निं न पुनरावर्तनम्। यन्मन्युर्जायामावहदिति। अथाध्यात्ममन्त्रान् जपेत्।**

प्रथमत आश्रमक्रमेण ब्रह्मचारिगृहस्थवनस्थलक्षणद्वारा संन्यासपीठिकामाह — ब्रह्मेति। वेदं वेदौ वेदांश्चेत्येकशेषः। अधीत्य स्थितः सन्गुरुणाऽनुज्ञातः सन्दारानग्नीन्परिगृह्याऽऽश्रमी गृहस्थ इत्युच्यते। शक्तित इति। अग्निष्टोमादिसंस्कारान्संपाद्येति शेषः। स आश्रमी संन्यासविधये ब्राह्मीं पूर्वोक्तामिष्टिं यजेत् कुर्यात्। तासां देवतानां प्रीतयेऽहोरात्रेण निर्वपेत्, अहोरात्रमुपोष्य ततो निर्वपेत्। इदं हि द्व्यहसाध्यं कर्म। तत्र च जागरणादिकं कुर्यात्। संविभज्येति। सुतान् पुत्रान् अर्थैः संविभज्य विभक्तधनान्कृत्वा ग्राम्यकामान् स्त्रीसङ्गादीन्विसृज्य चरेत वनचर्येण। वनमार्गेणेति क्वचित्पाठः। वनचर्यया चरेत चरेत् विचरेत्। साग्निकश्चेद्द्वादश रात्रीः पयसा होमभक्षौ वनेऽभिनिर्वर्त्य ततो ब्रह्मेष्टिं कृत्वा समारोप्य चरेदिति द्रष्टव्यम्। शुचौ पवित्रे देशे तीर्थादौ परिभ्रमतीति परिभ्रमः सन् तस्मिन्काले वायुमात्राहारोऽम्बुमात्राहारो वा भवेत्। 'भिक्षार्थं प्रविशेद्ग्रामम्' इत्यादिपक्षस्य दीक्षाविषयत्वात् अस्य च अद्यापि 'दीक्षामुपेयात्' इति वक्ष्यमाणत्वेन दीक्षाया अवृत्तत्वात्।

(१) असंउ. २-३.

फलैः वृक्षादिभवैर्विहितम् अनस्य प्राणस्य उत्तरं येन। प्राणेनोक्तं 'किं मे दास्यसि' इति। तत्र फलदानमेवोत्तरं विदधातीति विहितानोत्तरः फलैः। शक्तितारतम्येन पक्षत्रयपरिग्रहः। विविधानोत्तरफलैरिति पाठे उत्तरफलैः स्वर्गादिभिः न विविधा। विशेषेण विधत्ते करोति यत्नं विविधा। उत्तरफलोद्देशेन प्रयत्नमकुर्वन्। अग्निमुपसमाधायेत्युक्तम्। तस्याग्नेः का प्रतिपत्तिरित्यत आह – स्वशरीरे समारोप इति। स्वदेहे कोष्ठाग्नौ बाह्याग्नीनां समारोपः। यतः परमहंसदीक्षायामुदराग्नौ लोकाग्नीनां परमहंसोपनिषदि समारोपो विहितः। पृथिव्यां नाश्रुपातका इति। पुत्रादयो भूमौ नाश्रु पातयन्ति। ननु 'जरामर्यं वा एतत्सत्रम्' इति श्रुतेः कथमग्नेः परित्यागः? इत्यत आह – सहेति। तेन अग्निना सहैव वर्तमानः पुरुषः कथं संन्यस्तः कृतसंन्यास उच्यते? नैवोच्यत इत्यर्थः। ननु तर्हि कथमग्निशब्दमेवाभिचिन्तयेदित्योंकाराग्नौ ध्येयेऽपरित्यक्ते संन्यासः? अग्नित्वाविशेषात्। अत आह – सनामधेयस्तु स किं यस्मिन्संन्यस्त उच्यत इति। यस्मिन्प्रणवाग्नौ सति पुमान्संन्यस्त उच्यते स प्रणवाग्निस्तु किं सनामधेयः? नैव नामधेयवान्। यथा आहवनीयादिः शब्दवाच्यः, नैवमसौ शब्दवाच्यः। प्रणवाग्नेर्ब्रह्मार्थत्वात् ब्रह्मप्रतीकत्वाद्वा ब्रह्मातिरिक्तत्वं नाभिमतम्, ब्रह्म च न शब्दवाच्यम्। तेन संन्यासे तस्य परित्यागो न भवतीत्यर्थः। ननु तथाऽपि स्वरूपेण तस्य दृश्यान्तर्भूतत्वात्कथं न संन्यासविरोधित्वम्? इति शङ्कामुपसंहारव्याजेन परिहरति – तस्मात्फलविशुद्धाङ्गीति। फलेन ब्रह्माख्येन विशुद्धः संसारातीतो योऽङ्गी संसारातीतफलप्रदो यः प्रधानमोंकारः अर्चिमान् अर्चिष्मानग्निः स संन्यासं सहते संन्यासविरोधी न भवतीत्यर्थः। ननु तथाऽप्यग्निहोत्रादिसाधितस्य तत्तल्लोकप्राप्तिहेतुभूतस्य सुकृताख्यस्य तेजसः क्व प्रतिपत्तिः? न हि तत्सुकृतं संन्यासिनि तिष्ठति, तत्तल्लोकप्राप्तिलक्षणफलाभावात्। अत आह – अग्निवर्णमिति। अग्नेर्वर्ण इव वर्णो यस्य तदग्निवर्णं सुकृतं तेजः संन्यासिनो निष्क्रामति निर्याति। क्व याति? स्वाव्यवहितं वानप्रस्थं प्रपद्यते। संन्यासाधिकारिणोऽकृतसंन्यासस्य ये लोकास्ते संन्यासे सति वानप्रस्थस्य भवन्तीत्यर्थः। 'सुकृतमस्य सुजना दुष्कृतं दुर्जना उपजीवन्ति' इति श्रुत्युक्तेः अत्रापि प्रत्यासन्ना भक्तिमन्तश्चेति बोद्धव्यम्। ननु वानप्रस्थोऽपि मुक्तिफलभाक् कस्मान्न भवति? इत्याह – लोकादिति। वानप्रस्थः प्रकरणाल्लभ्यते। वानप्रस्थः संयतोऽपि लोकात् ग्रामादिभ्यो भार्यया सहितो वनं गच्छति। भार्यया सहेत्युच्चैः पठनीयम्। यतो भार्यया सहितस्ततः कृतसंयमोऽपि लोकानेव गच्छति, न तु स्वस्थो भवतीत्यर्थः। लोकानित्येव क्वचित्पाठः। इदानीं मध्यस्थः संन्यासफलं जिज्ञासुः पृच्छति – त्यक्त्वेति। कामान् विषयांस्त्यक्त्वा संन्यसति पुरुषः संसारे किं भयमनुपश्यति, आलोचयति वा? अथवा किं दुःखं समुद्दिश्य हेयत्वेन मनसि निश्चित्य सुस्थितान्सम्यगवस्थितान्भोगांस्त्यजति? इति। श्रुतिस्तस्योत्तरत्वेन संन्यासप्रयोजनमाह – गर्भेति। संसारे यद्यपि पुण्यातिशयं करोति, तेन नरकं न प्रतिपद्यते। तथाऽपि क्षीणे पुण्येऽवतरणमावश्यकमिति गर्भवासभयं परिहर्तुमशक्यम्। तेन ततो भीतः । तथा शरीरिणः पुण्यवतोऽपि शीतोष्णादिद्वंद्वदुःखमपरिहार्यमित्याह – शीतेति। भीतः सन्निति हेतोः संन्यसतीति। किम्? अनामयं यत्परं पदं तदेव गुहां संवृतस्थानं ब्रह्माख्यं प्रवेष्टुमिच्छामीति हेतोः। संन्यासकाले 'त्यक्त्वा' इति मन्त्रो गुरुणा पठनीयः प्रश्नरूपेण। 'गर्भ' इत्यादि शिष्येणेति विधिरूहनीयः। त्यक्त्वेति मन्त्रे सर्वत्र प्रथमपुरुषस्थाने मध्यमो द्रष्टव्यः। संन्यस्य पुनरङ्गीकारे दोषमाह – संन्यस्येति। अग्निं संन्यस्य पुनरावर्तनं पुनः परिग्रहो न कर्तव्यः। कस्मादित्याशङ्कायां 'स्त्रिया अभावात्' इत्युत्तरिते साऽपि कस्मान्नाङ्गीक्रियते? इत्याशङ्क्याऽऽह – मन्युरिति। मन्युनामा रुद्रगणोऽयं संन्यास(?सि)पत्नीमावहत् गृहीतवानिति हेतोः। संन्यासिभार्यायां मन्योरधिकार इत्यस्मादेव वाक्यादवसीयते। अयं संन्यासस्त्यागरूपः, न तु दीक्षारूपः तस्मिन् सति निषिद्धत्वात् पुनरङ्गीकारशङ्काभावात्। तर्ह्यग्निशुश्रूषाद्यभावे किं तस्य कार्यम्? अत आह – अध्यात्ममन्त्रान् जपेदिति।

नादीपिका.

चत्वार आश्रमाः तदवान्तरभेदाः
तल्लक्षणानि च

[1]अथातश्चत्वार आश्रमाः षोडशभेदा भवन्ति। तत्र ब्रह्मचारिणश्चतुर्विधा भवन्ति – गायत्रो ब्राह्मणः प्राजापत्यो बृहन्निति। य उपनयनादूर्ध्वं त्रिरात्रमक्षारलवणाशी गायत्रीमन्त्रे स गायत्रः। योऽष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यं चरेत्प्रतिवेदं द्वादश वा यावद्ग्रहणान्तं वा वेदस्य स ब्राह्मणः। स्वदारनिरत ऋतुकालाभिगामी सदा परदारवर्जी प्राजापत्यः। अथवा चतुर्विंशतिवर्षाणि गुरुकुलवासी ब्राह्मणोऽष्टाचत्वारिंशद्वर्षवासी च प्राजापत्यः। आ प्रायणाद्गुरोरपरित्यागी नैष्ठिको बृहन्निति॥

[2]गृहस्था अपि चतुर्विधा भवन्ति – वार्ताकवृत्तयः शालीनवृत्तयो यायावरा घोरसंन्यासिकाश्चेति। तत्र वार्ताकवृत्तयः कृषिगोरक्षवाणिज्यमगर्हितमुपयुञ्जानाः शतसंवत्सराभिः क्रियाभिर्यजन्त आत्मानं प्रार्थयन्ते। शालीनवृत्तयो यजन्तो न याजयन्तः, अधीयाना नाध्यापयन्तः, ददतो न प्रतिगृह्णन्तः, शतसंवत्सराभिः क्रियाभिर्यजन्त आत्मानं प्रार्थयन्ते। यायावरा यजन्तो याजयन्तोऽधीयाना अध्यापयन्तो ददतः प्रतिगृह्णन्तः शतसंवत्सराभिः क्रियाभिर्यजन्त आत्मानं प्रार्थयन्ते। घोरसंन्यासिका उद्धृतपरिपूताभिरद्भिः कार्यं कुर्वन्तः प्रतिदिवसमाहृतोञ्छवृत्तिमुपयुञ्जानाः शतसंवत्सराभिः क्रियाभिर्यजन्त आत्मानं प्रार्थयन्ते॥

वानप्रस्था अपि चतुर्विधा भवन्ति – वैखानसा उदुम्बरा वालखिल्याः फेनपाश्चेति। तत्र वैखानसा अकृष्टपच्यौषधिवनस्पतिभिर्ग्रामबहिष्कृताभिरग्निपरिचरणं कृत्वा पञ्चमहायज्ञक्रियां निर्वर्तयन्त आत्मानं प्रार्थयन्ते। उदुम्बराः प्रातरुत्थाय यां दिशमभिप्रेक्षन्ते तदाहृतोदुम्बरबदरनीवारश्यामाकैरग्निपरिचरणं कृत्वा पञ्चमहायज्ञक्रियां निर्वर्तयन्त आत्मानं प्रार्थयन्ते। वालखिल्या जटाधराश्चीरचर्मवल्कलपरिवृताः कार्तिक्यां पौर्णमास्यां पुष्पफलमुत्सृजन्तः शेषानष्टौ मासान् वृत्त्युपार्जनं कृत्वाऽग्निपरिचरणं कृत्वा पञ्चमहायज्ञक्रियां निर्वर्तयन्त आत्मानं प्रार्थयन्ते। फेनपा उन्मत्तकाः शीर्णपर्णफलभोजिनो यत्र यत्र वसन्तोऽग्निपरिचरणं कृत्वा पञ्चमहायज्ञक्रियां निर्वर्तयन्त आत्मानं प्रार्थयन्ते॥

परिव्राजका अपि चतुर्विधा भवन्ति – कुटीचरा बहूदका हंसाः परमहंसाश्चेति। तत्र कुटीचराः स्वपुत्रगृहेषु भिक्षाचर्यं चरन्त आत्मानं प्रार्थयन्ते। बहूदकास्त्रिदण्डकमण्डलुशिक्यपक्षजलपवित्रपात्रपादुकासनशिखायज्ञोपवीतकौपीनकाषायवेषधारिणः साधुवृत्तेषु ब्राह्मणकुलेषु भैक्षाचर्यं चरन्त आत्मानं प्रार्थयन्ते। हंसा एकदण्डधराः शिखावर्जिता यज्ञोपवीतधारिणः शिक्यकमण्डलुहस्ता ग्रामैकरात्रवासिनो नगरे तीर्थेषु पञ्चरात्रं वसन्त एकरात्रद्विरात्रकृच्छ्रचान्द्रायणादि चरन्त आत्मानं प्रार्थयन्ते। परमहंसा नदण्डधरा मुण्डाः कन्थाकौपीनवाससोऽव्यक्तलिङ्गा अव्यक्ताचारा अनुन्मत्ता उन्मत्तवदाचरन्तस्त्रिदण्डकमण्डलुशिक्यपक्षजलपवित्रपात्रपादुकासनशिखायज्ञोपवीतानां त्यागिनः शून्यागारदेवगृहवासिनो न तेषां धर्मो नाधर्मो न चानृतं सर्वंसहा सर्वसमाः समलोष्टाश्मकाञ्चना यथोपपन्नचातुर्वर्ण्यभैक्षाचर्यं चरन्त आत्मानं मोक्षयन्त आत्मानं मोक्षयन्त इति॥

गृहस्थस्य गृहकामनासत्त्वा-
सत्त्वाभ्यां वानप्रस्थ्या-
स्वीकारस्वीकारौ

[1]गृही वनं प्रविशेत्। यदि गृहमेव कामयेत तदा यावज्जीवमग्निहोत्रं जुहुयात्॥

ब्राह्मणस्य संन्यासाधिकारः

[2]ब्राह्मणाः प्रव्रजन्ति॥

---

(१) आश्रउ.१; सम. १०९ (अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यम्) एतावदेव, श्रुतिः; कृभ. १२८८ (अष्टचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यम्) एतावदेव, श्रुतिः.

(२) आश्रउ. २-४.

(१) मभा. ३।२० जाबालश्रुतिवाक्यम्; स्मृच. १।१७१ जाबालिः; पमा. १।४५९ (गृही वनं प्रविशेत्०) कामयेत (कामयेत्) जाबालिः; मपा. ११२ (यदि गृहमेव कामयते तदा यावज्जीवम्) एतावदेव, जाबालश्रुतिः; मुक्ता. १२१ (गृही वनं प्रविशेत्०) जाबालिः; संप्र. ५५१ येत त (येत्त) जाबालश्रुतिः.

(२) मिता. ३।५६-५७ श्रुतिः; मवि. ६।३८ श्रुतिः; मपा. ३६६ जाबालश्रुतिः : ३६८ श्रुतिः : ३७० जाबालश्रुतिः : ३७२ (=); मुक्ता. १७६ श्रुतिः; सिन्धु. २१३० जाबालश्रुतिः; वीमि. ३।५६-५७ श्रुतिः; यप्र. ३२ आरण्यकश्रुतिः; भाच. ६।३७ (ब्राह्मणः प्रव्रजति) श्रुतिः.

ब्रह्मचर्याश्रमप्रशंसा

[1]**ब्रह्मचर्येण विन्दते॥**

विन्देत् प्राप्नुयात् ब्रह्मलोकमिति शेषः।

मच. २।२४४

संन्यासफलम्

[2]**यदि मृत्योः परं शान्तमनामयं शाश्वतं पदमिच्छुरसि तत् परमहंसो भव॥**

[3]**त्याग एव हि सर्वेषां मोक्षसाधनमुत्तमम्।**
**त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक्परं पदम्॥**

## आश्वलायनगृह्यसूत्रम्

ब्रह्मचर्याश्रमकालावधिः

[4]**द्वादश वर्षाणि वेदब्रह्मचर्यम्॥**

द्वादश वर्षाणीति कालनिर्देशः। द्वादश वर्षाणि वेदब्रह्मचर्यं भवति। वेदब्रह्मचर्यमिति। अथ वेदग्रहणं किमर्थं क्रियते? कथं वेदमात्रस्यैवायं कालनियमः स्यादिति। तेन महानाम्न्यादीनां व्रतानामूर्ध्वं द्वादशभ्यः प्रयोगो भवति। एवं कृते उपनयनात् प्रभृति षोडशे वर्षे गोदानं सिद्धं भवति। वेदग्रहणादयमर्थः साध्यते। इतरथा हि वेदग्रहणं न क्रियेत। एवं तावदेके प्रतिपन्नाः। अन्ये जन्मनः प्रभृति षोडशे वर्षे गोदानमिच्छन्ति द्वादशस्वेवान्तर्भूतम्। कस्मात्? तन्मध्यपतितत्वात्। महानाम्न्यादीनां चापृथग्भावात् तदङ्गत्वाच्च वेदैकदेशत्वाच्च। तस्मात् सहैतैः काण्डव्रतैः कालनियमः। यदि चैतानि द्वादशसु न गण्यन्ते उत्तरस्याप्यसंख्यानं प्राप्नोति 'त्रिरात्रं द्वादशरात्रं संवत्सरं वा' (आगृ. १।२२।१७) इत्यस्य। तत्र को दोषः? संवत्सरपक्षे सप्तदशे वर्षे गोदानं प्राप्नोति। एष दोषः उपनयनात्प्रभृतीच्छताम्। तेनायं पक्षो नाऽऽदरणीयः। जन्मनः प्रभृति षोडशे वर्षे भवति। अनियतकालक्रमत्वाच्च वेदव्रतानाम्। ननु चैवमुच्यमाने वेदग्रहणमपार्थकम्। नेत्युच्यते। वेदग्रहणं क्रियते कथमेकस्य द्वादश वर्षाणि ब्रह्मचर्यं प्रसज्येत। एवं चोद्यमाने द्वयोश्चतुर्विंशतिस्त्रयाणां षट्त्रिंशच्चतुर्णामष्टाचत्वारिंशत्। एवं शास्त्रान्तरदृष्टो विधिर्वेदग्रहणेन प्रदर्शितो भवति। तस्मादारब्धव्यं वेदग्रहणम्।

*देभा.

**ग्रहणान्तं वा॥**

(१) वेदग्रहणान्तं वा ब्रह्मचर्यं भवति। तस्मात् प्रागूर्ध्वं च द्वादशभ्यो वर्षेभ्यः स्नानं भवति। एवंब्रुवताऽऽचार्येण त्रिविधं स्नानं प्रदर्श्यते – विद्याव्रतस्नानं विद्यास्नानं व्रतस्नानमिति। यो हि द्वादश वर्षाणि ब्रह्मचर्यव्रतं कृत्वाऽधीत्य विद्यां स्नानं करोति असौ विद्याव्रतस्नातकः। यः प्रागेव विद्यामधीत्य स्नाति स विद्यास्नातकः। यः पुनर्द्वादश वर्षाणि ब्रह्मचर्यं कृत्वाऽनधीत्य विद्यां स्नाति स व्रतस्नातकः। स तु कांचिद् विद्यामुत्सृज्य स्नानं करोति। ग्राम्या आरण्येति उभयलक्षणा च विद्या भवति। तत्र महानाम्न्यादीनां नित्यमध्ययनम्। कस्मात्? येन रहस्ये ब्रूते – यो हि नाधीते एतां विद्यामन्यां वाऽधीयानोऽपि बह्वीं विद्यां यः स्नानं करोति नैवायं स्नातको भवतीति। तस्मादवश्यमध्ययनं महानाम्न्यादीनां कर्तव्यम्। ग्राम्यां तूत्सृजति विद्यामशक्त्या।

×देभा.

(२) वेदग्रहणान्तं वा ब्रह्मचर्यं भवति प्रागूर्ध्वं वा द्वादशभ्यः। एवं ब्रुवता त्रिविधं स्नानं प्रदर्शितं भवति – विद्यास्नानं व्रतस्नानं विद्याव्रतस्नानमिति। प्राग्द्वादशभ्यो वेदमधीत्य यः स्नाति स विद्यास्नातकः। यस्तु द्वादश वर्षाणि ब्रह्मचर्यं कृत्वाऽनधीतवेदः स्नाति स व्रतस्नातकः। यस्तु पुनर्द्वादश वर्षाणि ब्रह्मचर्यं कृत्वाऽधीतवेदः स्नाति स विद्याव्रतस्नातकः। ननु 'विद्यान्ते गुरुमर्थेन निमन्त्र्य कृतानुज्ञातस्य वा स्नानम्' (आगृ. ३।९।४) इति वक्ष्यति। अतः कथं व्रतस्नानस्य संभवः? उच्यते। विद्यान्त इति न विद्यासमाप्तौ स्नानं चोद्यते। किं तर्हि? विद्याया अन्ते, न मध्ये। तेन व्रतस्नातकोऽपि मध्यमुत्सृज्य अन्तम् आरण्यकम् अधीत्य स्नायात्। रहस्ये चाऽऽरण्यकं प्राधान्येन स्नाननिमित्तं

---

(१) **मच.** २४४ विन्दते (विन्देत्) श्रुतिः; **मच.** ५।१५९ श्रुतिः.

(२) **मपा.** ३७२ भव (भवाऽऽह) पैङ्गिरहस्ये; **बाल.** ३।५६-५७ पृ. ९६ पैङ्गिरहस्योपदेशः.

(३) **मुक्ता.** १७५ श्रुतिः; **यसं.** १९ भाल्लवीयश्रुतिः.

(४) **आगृ.** १।२२।२-३; **पुम.** ४४४.

* नावृ. देभावत्। अना. देभागतम्।

× अना. देभागतम्।

चोद्यते '8नेदमनधीयन्त्स्नातको भवति' (ऐआ. ५।३।३।११) इत्यादिना।

नावृ.

## हिरण्यकेशिगृह्यसूत्रम्

ब्रह्मचर्याश्रमकालावधिः

**[1]अष्टाचत्वारिंशद्वर्षाणि चतुर्विंशतिं द्वादश यावद्ग्रहणं वा॥**

कियन्तं कालमेतानि व्रतानि चरति? उच्यते — अष्टाचत्वारिंशदिति। अष्टाचत्वारिंशच्चतुर्विंशतिं वा द्वादश वर्षाणि वा यावदध्ययनं व्रतचर्या भवति। एकस्य द्वयोस्त्रयाणां चतुर्णां वाऽध्ययने विकल्पेनैते विकल्पा इति केचित्। अपरे प्रतिवेदं द्वादशेति। तत्र त्रयाणामध्ययने षट्त्रिंशद्भवन्ति, धर्मेषूक्तत्वात्। यावद्ग्रहणं तु सर्वत्र विशेषः। तस्मिन्नपि पक्षे द्वादशसूर्ध्वं यावद्ग्रहणं वा, 'द्वादशावरार्ध्यम्' (हिध. २६।१।४९) इति धर्मे वचनात्। अन्य आहुः — विनिवेशे विकल्पा एते, तुल्यविकल्पत्वे 'कृष्णकेशोऽग्नीनादधीत' इति श्रुत्या विरोधादेकार्थीयादीनामनधिकृतानामष्टाचत्वारिंशद्वर्षाणि षट्त्रिंशतं चतुर्विंशतिं द्वादश यावद्ग्रहणं वा। अधिकृतानामिति किमर्थम्? एतेषां व्रतानां कालस्य चातिक्रमणं क्रियते। ननु धर्मेष्वेव सिद्धान्येतानि कालश्च। यथा 'नानुद्देश्यं भुञ्जीत' (हिध. २६।१।५५) 'अङ्गानि न प्रक्षालयीत' (हिध. २६।१।६१) 'नाप्सु श्लाघ्यमानः स्नायात्' (हिध. २६।१।६३) 'अपररात्रमुत्थाय गुरोस्तिष्ठन्प्रातरभिवादमभिवादयीत' (हिध.२६।२।१२) 'सदा निशायां गुरुं संभावयेत्तस्य पादौ प्रक्षाल्य संवाह्यानुज्ञातः संविशेत्' (हिध. २६।२।२७) इति, 'अष्टाचत्वारिंशद्वर्षाणि, पादोनम्, (अर्धेन,) त्रिभिर्वा' (हिध. २६।१।४५, ४६, ४८) इति। सत्यं सिद्धम्, वक्ष्यति 'गुरुप्रसादनीयानि कर्माणि स्वस्त्ययनमध्ययनं संधृतिरिति, ततोऽन्यानि निवर्तन्ते' (हिध. २६।२।९-१०) इति केषांचिदनित्यता। तस्मादिहैकेषां वचनं नित्यार्थम्, कालस्य वचनं विनिवेशविकल्पार्थम्। स चोक्तो विनिवेशः।

मातृवृ.

## हिरण्यकेशिगृह्यशेषसूत्रम्

संन्यासाधिकारिणः

**[1]अथातः संन्यासविधिं व्याख्यास्यामः। सोऽत एव ब्रह्मचर्यवान् प्रव्रजतीत्येकेषाम्। अथ शालीनयायावराणामनपत्यानाम्। विधुरो वा। प्रजाः स्वधर्मे प्रतिष्ठाप्य वा। सप्तत्या ऊर्ध्वं संन्यासमुपदिशन्ति। वानप्रस्थस्य संसारकर्मविरामे। एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयान्। तस्यैवाऽऽत्मा पदवित्तं विदित्वा न कर्मणा लिप्यते पापकेन (तैब्रा. ३।१२।९।७) इति। अपुनर्भवं नयतीति नित्यः। महत्त्वं गमयतीति महिमा।... आत्मानमात्मन आश्रमादाश्रममुपनीय ब्रह्मभूतो भवतीति विज्ञायते। अथाप्युदाहरन्ति — 'आश्रमादाश्रमं गत्वा हुतहोमो जितेन्द्रियः। भिक्षाबलिपरिश्रान्तः पश्चाद्भवति भिक्षुकः॥' इति। स एष भिक्षुरानन्त्याय॥**

## मानवगृह्यसूत्रम्

ब्रह्मचर्याश्रमस्य कालावधिः

फलं च

**[2]एतेन धर्मेण द्वादश चतुर्विंशतिं षट्त्रिंशतमष्टाचत्वारिंशतं वा वर्षाणि यो ब्राह्मणो राजन्यो वैश्यो वा ब्रह्मचर्यं चरति मुण्डः शिखाजटः सर्वजटो वा मलजुरबलः कृशः स्नात्वा स सर्वं विन्दते यत्किंचिन्मनसेच्छतीति॥**

'एतेन धर्मेण' इत्यादि 'यत्किंचिन्मनसेप्सति' इत्येतत्सूत्रम्। यः स इत्यन्वयः। एतेन मार्गवासस्त्वादिना व्रतकलापेन द्वादश चतुर्विंशतिं षट्त्रिंशतमष्टचत्वारिंशतं वा वर्षाणि। वर्षाणीति प्रत्येकं संबध्यते — द्वादश वा वर्षाणि चतुर्विंशतिं वा वर्षाणीति एवमुक्तयोः संख्या-

---

8 वृत्तिकारेणायमिदंशब्दः कृत्स्नारण्यकपरोऽभिप्रेयते इति स्पष्टम्। सायणाचार्यैस्तु महाव्रतव्याख्यानरूपपञ्चमारण्यकान्ते प्रकृतवाक्यात्प्राक् अध्यापकनियमाद्युपदेशोपक्रमे 'तदिदमहर्नान्तेवासिने' इति महाव्रतग्रन्थस्यैवेदंशब्देन परामृष्टत्वात् प्रकृतवाक्यगतस्तत्पूर्वोत्तरवाक्यगताश्च सर्व इदंशब्दा महाव्रतग्रन्थमात्रपरा व्याख्याताः।

(१) **हिगृ.** १९।२।५५.

(१) **हिगृशे.** ८।७.

(२) **मागृ.** १।२।६.

कल्पयोः। यो ब्राह्मणो राजन्यो वैश्यो वेति। वाशब्दः प्रत्येकमभिसंबध्यते। ब्राह्मणादिग्रहणं नियममाह। तेन शूद्रस्योपनयनादि न भवति। ब्रह्मणः वेदस्य चर्यं चरणम् अध्ययनं चरति कुरुते। चरतिः क्रियासामान्य-वाची। चर्या(?र्य)शब्देन भावसाधनेन विशेषाभिधानम्। यथा 'पाकं पचति' इत्यत्र पाकं करोतीत्यर्थः। अथवा ब्रह्म वेदः। तदध्ययनाङ्गानि व्रतान्यपि ब्रह्मोच्यते। चर्या(?र्य)म् अनुष्ठानं चरति कुरुते व्रतप्राधान्य-पक्षः।..... एवंरूपः साक्षात्स ब्राह्मणादिः वेदाद्युक्तं सर्वं विन्दते लभते यत्किंचिन्मनसेच्छति। सर्वत्वमाधि-कारिकम्। एवमनुष्ठितब्रह्मचर्यो यः स्नाति स काम्यादिकर्मस्वधिकारी, नान्य इति। तस्यैव गार्हस्थ्ये अधिकारः। न पुनः खेचरत्वादि मनसेच्छया लभते, न संहाद्रष्टा(?)दि वा। यथा संयत इति वक्तव्ये यन्मन-सेच्छतीति वाचोयुक्त्या योगशास्त्रोक्तं चरितव्रतस्यैवेति दर्शयति। द्वादशवर्षादिक्रमं प्रतिवेदं केचित् मन्यन्ते। ब्रह्मचर्यं च ब्रह्मार्थं व्रतानि ब्रह्मेति व्रतानां मन्द-संस्कारत्वं पक्षे वर्णितम्, न पुनरास्ताम् (?)।

अष्टाभा.

## भारद्वाजगृह्यसूत्रम्

ब्रह्मचर्याश्रमकालावधिः

[१]**अथास्याष्टाचत्वारिंशद्वर्षाणि पुराणं वेदब्रह्मचर्यं संप्रदिशन्ति। आ वेदाध्यनादित्येक आहुः। आ गोदानकर्मण इत्येके॥**

## काठकगृह्यसूत्रम्

ब्रह्मचर्याश्रमस्य कालावधिः

फलं च

[२]**द्वादश चतुर्विंशतिं षट्त्रिंशतमष्टाचत्वारिंशतं वा वर्षाणि यो ब्रह्मचर्यं चरति मलञ्जुरबलः कृशः सर्वं स विन्दते स्नात्वा यत्किंचिन्मनसेच्छत्येतेनैव धर्मेण साध्वधीते॥**

(१) यस्त्रैवर्णिकः एतेनैव धर्मेण पूर्वोक्तधर्मकला-पेनोपलक्षितः सन् स साधु यथास्थानकरणवर्ण-स्वरमधीते, विपर्यये दोषश्रवणात् 'मन्त्रो हीनः स्वरतो वर्णतो वा' इत्यादौ, स स्नात्वा स्नातकधर्मान्निर्वर्त्या-वबुद्धवेदार्थः कृतदारसंग्रहो जातपुत्रः कृष्णकेशः कृता-ग्न्याधानो यत्किंचन कामयते स्वर्गपशुपुत्रादिकं फलं तत्सर्वं सम्यगवबुध्य (श्रौत)स्मार्तकर्मानुष्ठानद्वारेण विन्दते लभते। अन्यथा त्वविदुषोऽपरिपूर्णं काम्यकर्मा-नुष्ठानं निष्फलम्, काम्यानां सदाऽनुष्ठानशक्त्या स्वाभीष्टत्वात् (?)। यथोक्तम् – 'स सर्वं विन्दते स्नात्वा' इति। नैष्ठिकापेक्षया तु 'एतेनैव धर्मेण साध्वधीते' इत्यधीत एव, न स्नायादित्यर्थः। परिशिष्टं यथासंभवं योज्यम्। कियन्तं कालमधीते? शक्तिप्रज्ञा-व्यवसायादिकमपेक्ष्य प्रतिवेदं द्वादश वर्षाणि ब्रह्मचर्यं चरन्। तेनैकत्र वेदे द्वादश वर्षाणि परिश्रमः कर्तव्यः, द्वयोश्चतुर्विंशतिम्, त्रिषु षट्त्रिंशतम्, चतुर्ष्वष्टाचत्वा-रिंशतम्। नैष्ठिकब्रह्मचर्यापेक्षं चात्राष्टाचत्वारिंशद्वर्षं वेद-चतुष्टयस्याध्ययनं बोद्धव्यं कर्मानुष्ठानानधिकृतपङ्ग्वा-दिविषयं च। अध्ययनस्य च दृष्टार्थत्वादविशेषेण विधाने हि 'जातपुत्रः कृष्णकेशोऽग्नीनादधीत' इत्यादि नोपपद्येत, वेदाध्ययनव्याकरणाद्यवगममूलतदर्थावबोध-व्यग्रत्वेनैव पुरुषायुषपर्यवसानेनाऽऽश्रमान्तराणामनव-काशप्रसङ्गात्। तस्मादिदं तात्पर्यम् – आश्रमान्तरार्थिना सर्वथा प्रज्ञाद्यनुसारेण वेदान् वेदौ वेदं वेदैकदेशं वाऽधीत्याधिगम्य च सहधर्मचारिणीपरिग्रहपूर्वकगृहस्था-श्रमादिकमनुष्ठातव्यमिति। देव.

(२) एवं ब्रह्मचारी द्वादश चतुर्विंशतिं षट्त्रिंशत-मष्टाचत्वारिंशतं वा वर्षाणि प्रतिवेदं द्वादश तदर्धं पादं ग्रहणान्तम्, स्मृतिदर्शनात्। यो ब्रह्मचर्यं चरति स्नात्वा स सर्वं विन्दत इति।... स्वाध्यायफलं घृतकुल्यादि, काम्यफलं पुत्रपश्वन्नादि, यत्किंच मनसा प्रार्थयते तदित्थमधीतवेदः अविकल्पं प्राप्नोति। एतेनैव धर्मेण यदधीते साधु भवति शोभनमित्यर्थः। आवि.

## वाराहगृह्यसूत्रम्

ब्रह्मचर्याश्रमस्य कालावधिः फलं च

[१]**एतेन धर्मेण द्वादशवर्षाण्येकवेदे ब्रह्मचर्यं चरेत्।**

(१) **भागृ.** १।९; **मुक्ता.** ११९ अथास्याष्टा (अष्टा) दिशन्ति। आ (तिशक्त्या).

(२) **कागृ.** २।४.

(१) **वागृ.** ६।२९-३०.

**चतुर्विंशति द्वयोः, षट्त्रिंशति त्रयाणाम्, अष्टाचत्वारिंशति सर्वेषाम्। यावद्ग्रहणं वा॥**

**मलज्वरबलः कृशः स्नात्वा स सर्वं लभते यत्किंचिन्मनसेप्सितमिति॥**

## आग्निवेश्यगृह्यसूत्रम्

ब्रह्मचर्यकालावधिः, वानप्रस्थ्यसंन्यासयोरधिकारिणः

[1]**अष्टाचत्वारिंशद्वर्षाणि द्वादश यावद्ग्रहणं वा॥**

[2]**अत ऊर्ध्वं वानप्रस्थविधिं व्याख्यास्यामः। अनवद्यं गृहधर्मं चरित्वा यज्ञान् यजति। पुत्रमुत्पाद्य संस्कृत्य वेदमध्याप्य वृत्तिं विधाय गुणवति पुत्रे कुटुम्बभारं नियोज्य उत्तरायणे पूर्वपक्षे पुण्ये नक्षत्रे कुशचीरचर्मवल्कलवासा जटी कृष्णाजिनोत्तरीयः कृतप्रस्थानलिङ्गोऽग्निमात्मसमारोपणं कृत्वा सपत्नीको वाऽप्यपत्नीको वा वनमाश्रयेत्।.... अथवा तृतीयमायुर्भागं वानप्रस्थव्रतं चरित्वा चतुर्थमायुर्भागं परिव्रजेद्वा॥**

[3]**आदावेव विकल्पेन ब्रह्मचारी यतिर्भवेत्॥**

## पारस्करगृह्यसूत्रम्

ब्रह्मचर्यकालावधिः

[4]**अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यं चरेत्॥**

**द्वादश द्वादश वा प्रतिवेदम्॥**

**यावद्ग्रहणं वा॥**

(१) चतुर्णामपि वेदानामष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यं चरेत्। एकमेव व्रतम्। द्वादश वर्षाणि प्रतिवेदं चरेत्। एवं चत्वारि व्रतानि। यावत् गृहीतो वेदस्तावच्चरेत्। भर्तृभा.

(२) अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यं चरेत्। अस्मिन्पक्षे चतुर्णामपि वेदानामेक एव व्रतादेशः, सर्वा वेदाहुतयो हूयन्ते। द्वादश द्वादश वा प्रतिवेदं ब्रह्मचर्यचरणम्। अत्र यथास्वं वेदाहुतयः। यावद्ग्रहणं वा वेदस्य वेदयोर्वेदानां वा ब्रह्मचर्यचरणम्। *कभा.

(३) अष्टाभिरधिकानि चत्वारिंशत् अष्टाचत्वारिंशत्, तानि अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यं वेदग्रहणार्थं ब्रह्मचर्यमुक्तलक्षणं चरेत् अनुतिष्ठेत्। अनुकल्पमाह – तावदशक्तौ द्वादश द्वादश वर्षाणि प्रतिवेदं वेदे वेदे। ब्रह्मचर्यं चरेदित्यनुवर्तते। तत्राप्यशक्तौ यावद्ग्रहणं यावद्वेदस्य वेदयोर्वेदानां वा ग्रहणम् आचार्यात्पाठतोऽर्थश्च स्वीकरणं तावद्वा ब्रह्मचर्यं चरेत्। #हभा.

(४) अथवा प्रतिवेदं द्वादशद्वादशवर्षपर्यन्तं ब्रह्मचर्यं चरेत्। अयमर्थः – एकं वेदं समाप्य समावर्तनं कृत्वा पुनर्द्वितीयवेदग्रहणं यावत् ब्रह्मचर्यं चरित्वा स्नात्वा एवं वेदान्तरेऽपि ब्रह्मचर्यं चरेत्। $गभा.

(५) 'द्वादश .... ग्रहणं वा' सूत्रयोर्ब्रह्मचर्यं चरेदित्यनुकर्षः। अध्ययनसमयमनुरुणद्धि ब्रह्मचर्यमिति सूत्रणार्थः। विभा.

[1]**वेदं समाप्य स्नायात्॥**

(१) स्नानशब्देन समावर्तनसंस्कार उच्यते। वेदं समाप्य कुर्यात्। ⇧भर्तृभा.

(२) एवं हि श्रूयते 'वेदमधीत्य स्नायात्' इति। कभा.

(३) वेदं मन्त्रब्राह्मणात्मकं समाप्य सम्यक् पाठतोऽर्थतश्च अन्तं नीत्वा स्नायात् वक्ष्यमाणेन विधिना स्नानं कुर्यात्। ⇩हभा.

[2]**ब्रह्मचर्यं वाऽष्टाचत्वारिंशकम्॥**

[3]**द्वादशकेऽप्येके॥**

(१) कुर्वन्ति। यथाऽष्टाचत्वारिंशकं तथा वेदब्रह्मचर्यं चरेत्। द्वादश द्वादश वा प्रतिवेदम्। द्वादश वर्षाणि वेदब्रह्मचर्यम्। त्रीणि त्रीणि वा प्रतिवेदमिति।

---

* जभा. कभावत्। संग. कभा-हभा-गभागतम्।

(१) **आग्निगृ.** १।१।४.

(२) **आग्निगृ.** २।७।१०.

(३) **आग्निगृ.** ३।१०।४

(४) **पागृ.** २।५।१३-१५; **संग.** ६९४; **संदी.** २।७५.

# शेषं कभावत्। संदी. हभावत्।

$ शेषं हभावत्।

⇧ गभा, भर्तृभावत् हभावच्च।

⇩ संग., संदी. हभावत्।

(१) **पागृ.** २।६।१; **निप्र.** २।१२ (वेदमधीत्य स्नायात्); **संग.** ७२४, ७२५; **पुम.** २९८ निप्रवत् (=); **संदी.** २।८०, ८१.

(२) **पागृ.** २।६।२; **संग.** ७२४; **संदी.** २।८१.

(३) **पागृ.** २।६।३; **संग.** ७२४; **संदी.** २।८२.

मीमांसकास्तु अष्टाचत्वारिंशतं पक्षं(नानुमन्यन्ते), आधानश्रुतिविरोधात् 'जातपुत्रः कृष्णकेशोऽग्नीनादधीत' इति। न च विकल्पः, (अ)तुल्यत्वात्। प्रत्यक्षमेकं श्रुतिवचनम्।8 भर्तृभा.

(२) ब्रह्मचर्यं वेति। वर्षे विकल्पः। द्वादशकेऽप्येके स्नानमिच्छन्ति। *कभा.

(३) अथवा ब्रह्मचर्यं व्रतमष्टाचत्वारिंशकम् अष्टाचत्वारिंशद्वर्षं निर्वर्त्य समाप्य अवसानं प्रापय्य गुरुणाऽनुमतः स्नायादिति गतेन संबन्धः। द्वादशकेऽप्येके। एके सूत्रकारा द्वादशकेऽपि द्वादशवर्षसमाप्ये व्रते चरिते स्नायादिति मन्यन्ते। तत्रापि गुरुणाऽनुज्ञातः। अत्रासूत्रितमपि 'उभयं वेदं व्रतं च समाप्य वा स्नायात्' इत्यनुषज्यते। यतः पूर्वं स्नातकस्य त्रैविध्यमुक्तम्। $हभा.

(४) .....'प्रत्यक्षमेकं श्रुतिवचनम्, कल्प्यमपरम्। कल्प्यप्रत्यक्षयोः प्रत्यक्षं बलवत्' इति भर्तृयज्ञभाष्ये। द्वाद...प्येके। द्वादशवार्षिके व्रते समाप्तेऽप्येके स्नानमिच्छन्ति। अन्ये तु वेदसमाप्त्युत्तरं स्नानमिच्छन्ति। #गभा.

(५) पक्षान्तरमाह – ब्रह्म ... शकमिति। ब्रह्मचर्यपदमाग्नेयादिव्रतपरम्, 'वेदं व्रतानि वा' इत्युक्तेः। कीदृशं तदत आह – 'अष्टाचत्वारिंशकमिति। अष्टाचत्वारिंशद्वर्षावच्छिन्नमित्यर्थः। अत्रापि स्नायादित्यनुषङ्गः। वेदव्रतयोः संकुचिताध्ययनाचरणपक्षमतमाह – द्वादशकेऽप्येक इति। द्वादशवर्षावच्छिन्नं वेदाध्ययनं व्रतानुष्ठानं चेत्यर्थः। एतन्मते एकमेव वेदमधीत्य स्नायादित्यवधेयम्। विभा.

(६) अथ वा ब्रह्मचर्यव्रतमष्टाचत्वारिंशकम् अष्टाचत्वारिंशद्वर्षं निर्वर्त्य(? द्वर्षनिर्वर्त्यं) समाप्य अवसानं प्राप्य गुरुणाऽनुज्ञातः स्नायादिति संबन्धः। वेदान् वेदौ वेदं वा प्रतिवेदं द्वादशाब्दानीति न्यायेनाष्टाचत्वारिंशद्वर्षाणि ब्रह्मचर्यं भवति। यदा त्रीन् तदा षट्त्रिंशत्, यदा द्वौ तदा चतुर्विंशतिः, यदा त्वेकं तदा द्वादशेति व्याख्येयम्, न तु वेदं वेदं प्रतीति कमनीयम्। तथा प्रत्येकस्मिन् वेदेऽष्टाचत्वारिंशद्वर्षाणीति न्यायेन चतुर्षु वेदेषु द्विनवत्युत्तरं शतं वर्षाणि ब्रह्मचर्यमापद्येत, तच्चासंभवमिति, शतायुष्ट्वविरोधात्।

संग. ७२४

8 इतः परो ग्रन्थस्त्रुटित इति गदाधरभाष्यात्प्रतीयते।

* जभा. कभागतम्।

$ संदी हभावत्।

# शेषं भर्तृभावत् हभावच्च।

## गोभिलगृह्यसूत्रम्

### गार्हस्थ्याधिकारी

**[1]ब्रह्मचारी वेदमधीत्य॥**

(१) समाप्तेष्वपि व्रतेषु ब्रह्मचारी सन् वेदं वेदशेषम् अधीत्य पठित्वा। एवं च अङ्गादीनां ब्रह्मचर्यादप्यूर्ध्वमध्ययने न दोषः। भनाभा.

(२) वेदमित्यावश्यकत्वाभिप्रायेण। तथा च मनुः – 'वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम्। अविप्लुतब्रह्मचर्यो गृहस्थाश्रममाविशेत्॥' (मस्मृ. ३।२) इति। वेदशब्दोऽयं साङ्गस्य वेदस्याभिधायकोऽङ्गानामेव वेति स्वभाष्ये चन्द्रकान्त आहान्यमतोपन्यासेन।

मृदुला.

**उपन्याहृत्य गुरवेऽनुज्ञातो दारान्कुर्वीत॥**

(१) ततः किं कुर्यादित्यत आह – उपन्याहृत्येति। गुरुदक्षिणां गुरवे उपन्याहृत्य, निशब्दप्रयोगात् नीचैः क्षितिगतशिरा भूत्वा उपाहृत्य निवेद्य, तेन च गृहवासायानुज्ञातो दारान् कुर्वीत। यथा तदधस्तादेव व्याख्यातं 'पुण्ये नक्षत्रे' (गोगृ. २।१।१) इत्यत्र। 'दारान् कुर्वीत' इत्यनेनात्र कन्याप्रार्थनमेव विधीयते, न विवाहः। कुतः? स्नानोत्तरकालभावित्वाद्विवाहस्य। तथा च मनुः – 'गुरुणाऽनुमतः स्नात्वा समावृत्तो यथाविधि। उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम्॥' (मस्मृ. ३।४) इति। यद्येवं तर्हि कस्माद्विपर्ययेणोपन्यासः? उच्यते – प्राक् स्नानात्कन्याप्रार्थनाविधानार्थं विपर्ययः क्रियते। इतरथा अनुपलभ्यैव कन्यां स्नानं कुर्वतः किंचित्कालमनाश्रमित्वमस्य स्यात्, तदनिष्टम्। उक्तं च – 'अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः।' (दस्मृ. १।१०) इति, 'नाव्रतो ब्राह्मणः स्यात्' इति च। तस्मात्

(१) गोगृ. ३।४।१-२.

मृश्यमानेषु परिव्राजकोऽपि परामृष्टस्ततश्चतुर्णामप्याश्रमाणां परामृष्टत्वाविशेषादनाश्रमित्वानुपपत्तेश्च यः कश्चिच्चतुर्ष्वाश्रमेषु ब्रह्मसंस्थो भविष्यति। अथ न परामृष्टस्ततः परिशिष्यमाणः परिव्राडेव ब्रह्मसंस्थ इति सेत्स्यति। तत्र तपःशब्देन वैखानसग्राहिणा परामृष्टः परिव्राडपीति केचित्। तदयुक्तम्। न हि सत्यां गतौ वानप्रस्थविशेषणेन परिव्राजको ग्रहणमर्हति। यथाऽत्र ब्रह्मचारिगृहमेधिनावसाधारणेनैव स्वेन स्वेन विशेषणेन विशेषितावेवं भिक्षुवैखानसावपीति युक्तम्। तपश्चासाधारणो धर्मो वानप्रस्थानाम्, कायक्लेशप्रधानत्वात्, तपःशब्दस्य तत्र रूढेः। भिक्षोस्तु धर्म इन्द्रियसंयमादिलक्षणो नैव तपःशब्देनाभिलप्यते। चतुष्ट्वेन च प्रसिद्धा आश्रमास्त्रित्वेन परामृश्यन्त इत्यन्याय्यम्। अपि च, भेदव्यपदेशोऽत्र भवति – 'त्रय एते पुण्यलोकभाज एकोऽमृतत्वभाक्' इति। पृथक्त्वे चैष भेदव्यपदेशोऽवकल्पते। न ह्येवं भवति – 'देवदत्तयज्ञदत्तौ मन्दप्रज्ञौ, अन्यतरस्त्वनयोर्महाप्रज्ञ इति। भवति त्वेवम् – 'देवदत्तयज्ञदत्तौ मन्दप्रज्ञौ, विष्णुमित्रस्तु महाप्रज्ञः' इति। तस्मात् पूर्वे त्रय आश्रमिणः पुण्यलोकभाजः, परिशिष्यमाणः परिव्राडेवामृतत्वभाक्। कथं पुनर्ब्रह्मसंस्थशब्दो योगात्प्रवर्तमानः सर्वत्र संभवन्परिव्राजक एवावतिष्ठेत? रूढ्यभ्युपगमे चाऽऽश्रममात्रादमृतत्वप्राप्तेर्ज्ञानानर्थक्यप्रसङ्ग इति। अत्रोच्यते – ब्रह्मसंस्थ इति हि ब्रह्मणि परिसमाप्तिरनन्यव्यापारतारूपं तन्निष्ठत्वमभिधीयते। तच्च त्रयाणामाश्रमाणां न संभवति, स्वाश्रमविहितकर्माननुष्ठाने प्रत्यवायश्रवणात्। परिव्राजकस्य तु सर्वकर्मसंन्यासात्प्रत्यवायो न संभवत्यननुष्ठाननिमित्तः। शमदमादिस्तु तदीयो धर्मो ब्रह्मसंस्थताया उपोद्बलकः, न विरोधी। ब्रह्मनिष्ठत्वमेव हि तस्य शमदमाद्युपबृंहितं स्वाश्रमविहितं कर्म, यज्ञादीनि चेतरेषाम्। तद्व्यतिक्रमे च तस्य प्रत्यवायः। तथा च 'न्यास इति ब्रह्मा, ब्रह्मा हि परः, परो हि ब्रह्मा, तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयत्' (नाउ. ७८), 'वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः' (मुउ. ३।२।६, नाउ. १२।३, कैउ. १।३) इत्याद्याः श्रुतयः, स्मृतयश्च – 'तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः' (भगी. ५।१७) इत्याद्या ब्रह्मसंस्थस्य कर्माभावं दर्शयन्ति। तस्मात्परिव्राजकस्याऽऽश्रममात्रादमृतत्वप्राप्तेर्ज्ञानानर्थक्यप्रसङ्ग इत्येषोऽपि दोषो नावतरति। तदेवं परामर्शेऽपीतरेषामाश्रमाणां पारिव्राज्यं तावद्ब्रह्मसंस्थतालक्षणं लभ्यतैव। अनपेक्ष्यैव जाबालश्रुतिमाश्रमान्तरविधायिनीमयमाचार्येण विचारः प्रवर्तितः। विद्यत एव त्वाश्रमान्तरविधिश्रुतिः प्रत्यक्षा – 'ब्रह्मचर्यं परिसमाप्य गृही भवेद्गृही भूत्वा वनी भवेद्वनी भूत्वा प्रव्रजेत्। यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा' (जाउ. ४) इति। न चेयं श्रुतिरनधिकृतविषया शक्या वक्तुम्, अविशेषश्रवणात्, पृथग्विधानाच्चानधिकृतानाम् – 'अथ पुनरेव व्रती वाऽव्रती वा स्नातको वाऽस्नातको वोत्सन्नाग्निरनग्निको वा' (जाउ. ४) इत्यादिना। ब्रह्मज्ञानपरिपाकाङ्गत्वाच्च पारिव्राज्यस्य नानधिकृतविषयत्वम्। तच्च दर्शयति – 'अथ परिव्राड्विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही भैक्षाणो ब्रह्मभूयाय भवति' (जाउ. ५) इति। तस्मात्सिद्धा ऊर्ध्वरेतसामाश्रमाः, सिद्धं चोर्ध्वरेतःसु विधानाद्विद्यायाः स्वातन्त्र्यमिति।

शंकर.

उत्तराश्रमिणः पूर्वाश्रमप्रत्यवरोहणनिषेधः

**तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः॥**

सन्त्यूर्ध्वरेतस आश्रमा इति स्थापितम्। तांस्तु प्राप्तस्य कथंचित्ततः प्रच्युतिरस्ति नास्ति वेति संशयः। पूर्वकर्मस्वनुष्ठानचिकीर्षया वा रागादिवशेन वा प्रच्युतोऽपि स्यात्, विशेषाभावादिति। एवं प्राप्त उच्यते – तद्भूतस्य तु प्रतिपन्नोर्ध्वरेतोभावस्य न कथंचिदप्यतद्भावः न ततः प्रच्युतिः स्यात्। कुतः? नियमातद्रूपाभावेभ्यः। तथाहि – 'अत्यन्तमात्मानमाचार्यकुलेऽवसादयन्' (छाउ. २।२३।१) इति, 'अरण्यमियादिति पदं ततो न पुनरेयादित्युपनिषत्' इति, 'आचार्येणाभ्यनुज्ञातश्चतुर्णामेकमाश्रमम्। आ विमोक्षाच्छरीरस्य सोऽनुतिष्ठेद्यथाविधि॥' इति चैवंजातीयको नियमः प्रच्युत्यभावं दर्शयति। यथा च 'ब्रह्मचर्यं समाप्य गृही भवेत्', 'ब्रह्मचर्यादेव प्रव्रजेत्' (जाउ.४) इति चैवमा-

दीन्यारोहरूपाणि वचांस्युपलभ्यन्ते, नैवं प्रत्यवरोहरूपाणि। न चैवमाचाराः शिष्टा विद्यन्ते। यत्तु पूर्वकर्मस्वनुष्ठानचिकीर्षया प्रत्यवरोहणमिति तदसत्, 'श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्' (भगी. ३।३५) इति स्मरणात्, न्यायाच्च – यो हि यं प्रति विधीयते स तस्य धर्मः, न तु यो येन स्वनुष्ठातुं शक्यते, चोदनालक्षणत्वाद्धर्मस्य। न च रागादिवशात्प्रच्युतिः, नियमशास्त्रस्य बलीयस्त्वात्। जैमिनेरपीत्यपिशब्देन जैमिनिबादरायणयोरत्र संप्रतिपत्तिं शास्ति प्रतिपत्तिदार्ढ्याय।

शंकर.

चतुर्णामप्याश्रमाणां श्रौतत्वादनुष्ठेयत्वम्

**मौनवदितरेषामप्युपदेशात्॥**

यथा मौनं गार्हस्थ्यं चैतावाश्रमौ श्रुतिमन्तावेवमितरावपि वानप्रस्थगुरुकुलवासौ। दर्शिता हि पुरस्ताच्छ्रुतिः – 'तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयः' (छाउ. २।२३।१) इत्याद्या। तस्माच्चतुर्णामप्याश्रमाणामुपदेशाविशेषात्तुल्यवद्विकल्पसमुच्चयाभ्यां प्रतिपत्तिः। इतरेषामिति द्वयोराश्रमयोर्बहुवचनं वृत्तिभेदापेक्षयाऽनुष्ठातृभेदापेक्षया वेति द्रष्टव्यम्।

शंकर.

## गौतमः

ब्रह्मचर्यकालः

**[1]द्वादश वर्षाण्येकवेदे ब्रह्मचर्यं चरेत्॥**

(१) अथ कियन्तं कालमेवं वर्तेतेत्याह – द्वादशेति। एकवेदमध्येष्यमाणो द्वादशवर्षाण्यभिहितरूपं ब्रह्मचर्यं चरेत् कुर्यात्। ब्रह्मचर्यशब्देन यमनियमकलाप उच्यते, ब्रह्मार्थत्वात्।

मभा.

(२) कियन्तं कालमित्यत आह – द्वादशेति। यद्यप्येकैकस्य वेदस्य बह्व्यः शाखाः – एकविंशतिधा बह्वृचः, एकशतं यजुःशाखाः, सहस्रवर्त्मा सामवेदः, नवधाऽऽथर्वणो वेद इति, तथाऽपि तत्र तत्र वेदे पूर्वैरध्ययनानुष्ठानाभ्यां परिगृहीता यावती शाखा तावत्यत्र वेदशब्देन विवक्षिता। य एकं वेदमधीते स द्वादश वर्षाणि गुरुकुले ब्रह्मचर्यं चरेत्।

गौमि.

**[1]प्रति द्वादश वा॥**

(१) प्रतिवेदं वा द्वादश वर्षाणि ब्रह्मचर्यं चरेत्।

मभा.

(२) यस्तु चतुरो वेदानध्येतुं शक्तः स प्रति द्वादश 8प्रतिवेदे द्वादश वर्षाणीत्यर्थः। यथाऽऽहाऽऽपस्तम्बः – 'उपेतस्याऽऽचार्यकुले ब्रह्मचारिवासोऽष्टाचत्वारिंशद्वत्सराणि'(आध. १।२।११-१२) इति।

गौमि.

**[2]सर्वेषु ग्रहणान्तं वा॥**

सर्वेषु वेदेषु यावतैव कालेनाध्ययनमभिनिर्वर्तयेत्। तावन्तमेव कालं ब्रह्मचर्यं चरेत्, तस्य तदर्थत्वात्। सर्वग्रहणं यद्येकमधीयीत, यदि वा द्वौ, यदि वा सर्वानित्येवमर्थम्। तथा च मनुः – 'वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम्।' (मस्मृ. ३।२) इति। सोऽयमुक्तावधेरूर्ध्वमर्वाग्वाऽपवादः।

*मभा.

आश्रमसमुच्चयविकल्पौ मतभेदेन

**[3]तस्याऽऽश्रमविकल्पमेके ब्रुवते॥**

(१) तस्य चाव(?वि)शीर्णव्रतस्येत्यर्थः।

विश्व. १।४९

(२) एवं कृतनियमस्य कृतविद्यस्य च – तस्येति। तस्य अखण्डितब्रह्मचर्यस्य। तथा च मनुः – 'वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम्। अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेत्॥' (मस्मृ. ३।२) इति। एवं च विप्लुतस्योपपातकप्रायश्चित्तं द्रष्टव्यम्। शूद्रपर्युदासार्थं वा तद्ग्रहणम्, आश्रमधर्माभिमानं मा भूत्तस्यापीति। वीप्सार्थं वा तस्य तस्येति, ब्राह्मणस्य

---

(१) गौध. २।५२; गौमि. २।५१; मुक्ता. ११९.

8 अव्ययीभावत्वेऽपि 'तृतीयासप्तम्योर्बहुलम्' (पासू. २।४।८४) इति पाक्षिकः सप्तम्या अम्भावाभावः।

* गौमि. मभागतम्।

(१) गौध. २।५३; गौमि. २।५२ वा+(सर्वेषु); मुक्ता. ११९.

(२) गौध. २।५४; गौमि. २।५३ (सर्वेषु०); मुक्ता. ११९.

(३) गौध. ३।१; विश्व. १।४९, ५०; मेधा. २।६ (एके ब्रुवते०); उ. २।२११२; स्मृच. १।१७५; चका. ७८४; मुक्ता. १७२; संप्र. ५६३.

क्षत्रियस्य वैश्यस्य चेति। तद्ग्रहणमन्तरेणाप्यधिकारादेवैतत्सिद्धमिति चेन्न, स्मृत्यन्तराभासाशङ्कानिवृत्त्यर्थत्वात्। एवं हि स्मृत्यन्तरं प्रतिभाति – 'एष वोऽभिहितो धर्मो ब्राह्मणस्य चतुर्विधः।' (मस्मृ. ७।९७) इति। तत्र ब्राह्मणस्यैवायं चतुर्विधो धर्मः, इतरयोरेकविध इत्याशङ्का स्यादिति। तर्हि तत्कथमिति चेत्, तत्र ब्राह्मणग्रहणं प्रदर्शनार्थम्। तत्कथं गम्यत इति चेत् 'त्रयाणामेव वर्णानां चत्वार आश्रमाः' इति स्मृत्यन्तरदर्शनात्। तथा चाऽऽपस्तम्बः – 'सर्वेषामुपनयनप्रभृति समानमाचार्यकुले वासः। सर्वेषामनूत्सर्गो विद्यायाः। बुद्ध्वा कर्माणि यत्कामयेत्तदारभेत' (आध. २।२१।३-५) इति। एके ब्रुवते – तुल्यफलत्वादाश्रमविकल्पः। द्विविधं हि फलम् – अभ्युदयरूपं निःश्रेयसरूपं चेति, तदन्यतमेनैव लभ्यत इति। तथा च श्रुतिः – 'त्रयो धर्मस्कन्धाः। यज्ञोऽध्ययनं दानमिति प्रथमः। तप एव द्वितीयः। तृतीयमाचार्यकुले वसनम्। एतानारुह्य ब्रह्मलोकं गच्छति। ब्रह्मसंस्थोऽमृतत्वमेति॥' (छाउ. २।२३।१) इति। अर्थस्तु – त्रयो धर्मस्याऽऽश्रयाः, यज्ञोऽध्ययनं दानमिति गृहस्थनिर्देशः, तप एवेति वानप्रस्थपरिव्राजकयोर्धर्मः, आचार्यकुलवसनं ब्रह्मचारिणः। एतानारुह्येति ब्रह्मचार्याश्रमं गृहस्थाश्रमं वानप्रस्थाश्रमं परिव्राजकाश्रमं वा सम्यगास्थायेत्यर्थः। यस्तेषां ब्रह्मसंस्थो ब्रह्मनिष्ठो ज्ञानी अमृतत्वं मोक्षमेति गच्छतीति। ततश्च सर्वेषामपि ब्रह्मलोकप्राप्तिप्रतिपादनात् तुल्यफलतैवोक्ता। तथा जाबालश्रुतावपि तुल्यफलतैव श्रूयते – 'ब्रह्मचर्यं समाप्य गृही भवेत्। गृही भूत्वा वनी भवेत्। वनी भूत्वा प्रव्रजेत्। यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वा। ब्रह्मलोकं गच्छति' (जाउ. ४) इति। मनुरप्याह – 'सर्वेऽपि क्रमशस्त्वेते यथाशास्त्रं निषेविताः। यथोक्तकारिणं विप्रं नयन्ति परमां गतिम्॥ (मस्मृ. ६।८८) इति। अत्रापिशब्दादेकोऽपि द्रष्टव्यः। आपस्तम्बोऽप्याह – 'चत्वार आश्रमा गार्हस्थ्यमाचार्यकुले वसनं मौनं वानप्रस्थ्यमिति। तेषु सर्वेषु यथोपदेशमव्यग्रं वर्तमानः क्षेमं गच्छति' (आध. २।२१।१-२) इति। तेन तुल्यफलत्वाद्विकल्प इति।

ननु तुल्यत्वे सति ब्रह्मचर्येणैवोभयविधफलप्राप्तेरितराश्रमविधानानर्थक्यप्रसङ्ग इति। उच्यते – यो यस्यानुष्ठाने समर्थः तस्य तदाश्रमप्रतिपत्त्यर्थमितराश्रमविधानमिति। जन्मान्तरवासनया वा इष्टाश्रमप्रतिपत्त्यर्थम्। श्रुतिरपि – 'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च' (बृउ. ४।४।२) इति। यावज्जीवश्रुतिरपि गृहस्थस्यार्थिनः शक्तिविषये द्रष्टव्या। एवं गृहीते व्युत्थानश्रुतिरप्युपपद्यते – 'एतं वै तमात्मानं विदित्वा पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति' (बृउ. ४।४।२२) इति। इतरथा हि भिक्षाचर्यमिति संन्यासोपदेशो नोपपद्यत इति। जायमानश्रुत्याऽपि यज्ञादीनामवश्यकर्तव्यता प्रतिपाद्यते गृहस्थस्य, न तु जायमानस्यैव, ऋणत्रयसंबन्धस्यात्यन्तासंभवात्, 'ब्रह्मचर्यादेव प्रव्रजेत्' (जाउ. ४) इति श्रुतिविरुद्धत्वात्, 'सोऽत एव ब्रह्मचर्यात्प्रव्रजति' यमिच्छेत्तमावसेत्' इत्यादिस्मृतेर(? स्मृति) विरुद्धत्वाच्च, अर्थवादानां च कार्यशेषत्वात्। ततश्च पदार्थोऽप्येवं ग्रहीतव्यः – गृहस्थो जायमानः पूर्ववासनया गार्हस्थ्यं प्रविष्टः। ब्राह्मणग्रहणं क्षत्रियवैश्ययोरुपलक्षणम्। त्रिभिः ऋणैः संबध्यते – यज्ञेन देवेभ्य ऋणी भवति, अतो यज्ञः कर्तव्यः, प्रजया पितृभ्यः, अतः प्रजोत्पादनं कर्तव्यम्; ब्रह्मचर्येण ऋषिभ्यः, अतः पर्वादौ ब्रह्मचर्यरक्षणं कर्तव्यमिति। एवं गृहीते सर्वत्र श्रुतिस्मृत्योरविरोधो भवति। एकेग्रहणान्न तु गौतमः, तस्य तु समुच्चयो मतः। कथमवगम्यते? 'ऐकाश्रम्यं त्वाचार्याः' (गौध. ३।३६) इति बाधपक्षस्यापि परमतत्वेन निर्देशात्, 'प्रागुत्तमात्त्रय आश्रमिणः' (गौध. २८।५०) इति च लिङ्गात्, प्रागुत्तमाश्रमात्त्रयस्याभावात्। विकल्पपक्षे गौतमस्तावदेवं मन्यते – 'यज्ञेन देवानाप्नोति वैराजं तपसा पुनः। संन्यासाद्ब्रह्मणः स्थानं वैराग्यात्प्रकृतौ लयम्॥' इति भिन्नफलत्वेनोपदेशात्, जाबालश्रुतावपि 'अन्यतममारुह्य' इत्यनुक्त्वा 'एतानारुह्य' इति समुच्चयाभिप्रायेणोक्तत्वात् ब्रह्मलोकप्राप्तेरपि समुच्चयफलत्वेनोपदिष्टत्वात्, जाबालश्रुतावपि प्राधान्येन पूर्वं समुच्चयपक्षस्यैवाभिहितत्वात्, 'सर्वेऽपि क्रमशः' (मस्मृ. ६।८८) इत्यस्मिन् मनुवाक्येऽपिशब्दस्य समुच्चयार्थत्वात्, आपस्तम्बवाक्येऽपि 'तेषु सर्वेषु'(आध. २।२१।२) इति बहु-

वचनात् नैकस्मिन्नेव वर्तमानः, किंतु सर्वेष्वेव वर्तमान इत्यभिप्रायेणोक्तत्वात्, इतराश्रमविधानस्य चास्मिन्पक्षे सुतरामुपपद्यमानत्वात्, ऋणत्रयश्रुतेरपि यथार्थ एवोपपद्यमानत्वात्, 'पूर्वप्रज्ञा च' (बृउ. ४।४।२) इति श्रुतेरपि विद्याभिप्रायेणोपपद्यमानत्वात्, यावज्जीवश्रुतेरपि 'गृही वनं प्रविशेद्यदि गृहमेव कामयेत तदा यावज्जीवमग्निहोत्रं जुहुयात्' इति जाबालश्रुतिवाक्ये अनित्यत्वदर्शनात्, अस्मिन् पक्षे व्युत्थानश्रुतेरपि सुतरामुपपद्यमानत्वात्, 'चतुर्थमायुषो भागम्' (मस्मृ. ४।१) इत्यनेनापि मनुना समुच्चयपक्षमेवाऽऽश्रित्योक्तत्वात् समुच्चयपक्ष एव श्रेयानिति। अत एव विकल्पबाधपक्षौ परमतत्वेनोपन्यस्तौ। एवं च 'यमिच्छेत्तमावसेत्। इत्यादिवाक्यानि विकल्पाचार्य(? र)दर्शनेनोक्तानीति द्रष्टव्यानि। असमर्थो यः समुच्चयानुष्ठाने अन्धपङ्गुत्वादिदोषेण निःस्वत्वादिना वा तेन विकल्पपक्षोऽप्याश्रयणीय इत्यभिप्रायेण 'ब्रुवते' इत्यर्थसिद्धस्याप्युपन्यासः। अथवा योऽध्यात्मज्ञानी तेन विकल्पपक्ष आश्रयणीयः, इतरेण समुच्चयपक्ष इति। कुतः? अनुष्ठानस्य विज्ञानोत्पत्तिः प्रयोजनम्। तस्मिन्नुत्पन्ने यत्र क्वाप्याश्रमे स्थितस्य पुरुषार्थः सिध्यतीति। आश्रमग्रहणं संव्यवहारार्थं 'वर्णानाश्रमांश्च' (गौध. १।१।९) इत्यादौ। मभा.

(३) तस्य एवमधीतवेदस्य ब्रह्मचारिणो वक्ष्यमाणाश्चत्वार आश्रमा विकल्प्यन्ते इत्येके आचार्या ब्रुवते, अन्ये तु समुच्चीयन्ते इति। तत्राऽऽपस्तम्बः 'तेषु सर्वेषु यथोपादेशमव्यग्रो वर्तमानः क्षेमं गच्छति' (आध. २।२१।२) इति, 'बुद्ध्वा कर्माणि यत्कामयेत तदारभेत' (आध. २।२१।५) इति च। तथा च ब्रह्मचर्याश्रममुक्त्वा 'अत एव ब्रह्मचर्यवान्प्रव्रजति' (बौध. २।१७।२) इति बौधायनः। मनुना तु समुच्चयो दर्शितः — 'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्। अनपाकृत्य मोक्षं तु व्रजमानः पतत्यधः॥ सर्वेऽपि क्रमशस्त्वेते यथाशास्त्रं निषेविताः। यथोक्तकारिणं विप्रं नयन्ति परमां गतिम्॥' (मस्मृ. ६।३५, ८८) इति। गौमि.

(४) अयं तु विकल्पो व्रतचर्याश्रमव्यतिरिक्तविषयः। चका. ७८४

चत्वार आश्रमाः

**[1]ब्रह्मचारी गृहस्थो भिक्षुर्वैखानसः॥**

(१) के पुनस्त आश्रमा इत्यत आह — ब्रह्मचारीति। ब्रह्मचर्यं चरतीति, ब्रह्मण एव वा विषये निःस्पृहश्चरतीति ब्रह्मचारी। गृहं पत्नी, तत्संयोगाद्गृहस्थः। भिक्षाशीलत्वाद्भिक्षुः। विखनसा प्रोक्तं शास्त्रं वैखानसम्। तद्विधिना वर्तते इति वैखानसः। विसमासः एषामेव पृथक्त्वज्ञापनार्थः। यथाऽऽहोशना — 'द्वौ ब्रह्मचारिणावुपकुर्वाणो नैष्ठिकश्चेति, द्वौ वैखानसौ सपत्नीको विपत्नीकश्चेति, द्वौ संन्यासिनौ भिक्षुसंन्यासी वेदसंन्यासी चेति, बहुधा गृहस्थः शालीनयायावरादिभेदेन' इत्यादि। ननु च स्मृत्यन्तरे वैखानसमभिधाय भिक्षुरित्युक्तः, इह किमर्थं क्रमभेदः? इति। उच्यते — 'प्रागुत्तमात्त्रय आश्रमिणः' (गौध. २८।५०) इत्यत्र वैखानसवर्जनार्थः क्रमभेदः। तस्य ग्रामप्रवेशनप्रतिषेधादेव सिद्धमिति चेन्न, अर्थिनामरण्यगमनस्यापि संभवात्। तथा च स्मृत्यन्तरम् — 'चातुर्वैद्यो विकल्पी च नैरुक्तो धर्मपाठकः। ब्रह्मचारी गृही भिक्षुः पर्षदेषा दशावरा॥' इति। केचित्तु — 'प्राजापत्यां निरुप्येष्टिं सर्ववेदसदक्षिणाम्। आत्मन्यग्नीन्समारोप्य ब्राह्मणः प्रव्रजेद्गृहात्॥' (मस्मृ. ६।३८) इति स्मृत्यन्तरमवलम्ब्य गार्हस्थ्यादेव संन्यासः कर्तव्य इत्येवमर्थः क्रमभेद इति वर्णयन्ति। तत्पूर्वसूत्रेणैव प्रतिपादितमुत नेति भूसुरैर्विचारणीयम्। मभा.

(२) के पुनस्त आश्रमाः? — ब्रह्मचारीति। यद्यप्यसौ पूर्वमपि ब्रह्मचर्याश्रम उक्तस्तथाऽपि प्रपित्सितनैष्ठिकब्रह्मचारित्वमत्र विवक्षितम्। भिक्षुः संन्यासी। वैखानसः वानप्रस्थः, वैखानसप्रोक्तेन मार्गेण वर्तत इति। तेन स आश्रमः प्राधान्येन दर्शितः। *गौमि.

गृहस्थोत्पादितस्यैवाऽऽश्रमाधिकारः

**[2]तेषां गृहस्थो योनिरप्रजनत्वादितरेषाम्॥**

---

* क्रमभेदविषये मभावत्।

(१) **गौध.** ३।२; **मेधा.** १२।१११.

(२) **गौध.** ३।३; **मच.** ३।५० (गृहस्थ एवैषां योनिः) एतावदेव : ६।८७ (एषा गृहस्यैका योनिः) एतावदेव; **मुक्ता.** १६७.

व्रतस्थ एव कन्यां प्रार्थयित्वा विवाहसंनिधौ यत्पुण्यमहस्तत्र स्नात्वा अथ दारान् कुर्वीत।

भनाभा.

(२) उप गुरुसमीपे निभृतं विनीतं यथा स्यात्तथा गुरवे गुर्वर्थम्, तादर्थ्ये चतुर्थी, आहृत्य आनीय। दक्षिणामिति शेषः। अस्योत्तरेण संबन्धः। अत्र मनुः – 'न पूर्वं गुरवे किंचिदुपकुर्वीत धर्मवित्। स्नास्यंस्तु गुरुणाऽऽज्ञप्तः शक्त्या गुर्वर्थमाहरेत्॥' (मस्मृ. २।२४५) इति। धर्मवित् गुरुदक्षिणादानधर्मज्ञो ब्रह्मचारी स्नानात्पूर्वं किंचित् गोवस्त्रादिधनं गुरवे नावश्यं दद्यात्। यदि तु यदृच्छातो लभते तदा गुरवे दद्यादेव। अत एव स्नानात्पूर्वं गुरवे दानमाहाऽऽपस्तम्बः – 'यदन्यानि द्रव्याणि यथालाभमपहरति दक्षिणा एव ताः। स एव ब्रह्मचारिणो यज्ञो नित्यव्रतम्'(आध. १।४।३-४)इति। स्नास्यन् पुनर्गुरुणाऽऽज्ञप्तो यथाशक्ति धनिनं याचित्वाऽपि प्रतिग्रहादिनाऽपि गुरवेऽर्थमाहृत्यावश्यं दद्यादित्यर्थः। उपकुर्वाणस्यायं विधिः, नैष्ठिकस्य स्नानासंभवादिति बोध्यम्।

गुरुणा गृहवासाय अनुज्ञातः। तथा च मनुः – 'गुरुणाऽनुमतः स्नात्वा समावृत्तो यथाविधि। उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम्॥' (मस्मृ. ३।४) इति। दारानिति। स्नानात्प्रागेव कन्यां प्रार्थयेदित्यर्थः। तेन नाऽऽश्रमक्रमविरोधः संभवति। तथा च कात्यायनः – 'यदि दत्ता भवेत्कन्या वाचा सत्येन केनचित्। सोऽन्त्यां समिधमाधास्यन्नादधीतैव नान्यथा॥' इति। अन्यथा कन्यामप्राप्य। समावर्तने कृते तदुत्तरं कन्यालाभविलम्बेऽनाश्रमित्वं स्यात्, तच्चानिष्टम्। तथा च मनुः – 'अनाश्रमी न तिष्ठेत दिनमात्रमपि द्विजः। आश्रमेण विना तिष्ठन्प्रायश्चित्तीयते हि सः॥' इति। तस्मात् व्रतस्थ एव कुतश्चित् कन्यां प्राप्य पुण्यदिने स्नात्वा तदुत्तरदिने विवाहं कुर्यादिति वर्तुलार्थः। कात्यायनः – 'अनूढैव तु सा कन्या पञ्चत्वं यदि गच्छति। न तदा व्रतलोपः स्यात्तेनैवान्यां समुद्वहेत्॥ अथ चेन्न लभेतान्यां याचमानोऽपि कन्यकाम्। तमग्निमात्मसात्कृत्वा क्षिप्रं स्यादुत्तराश्रमी॥' तेनैव कृतान्तिमसमिदाधानाग्निनैव।

मृदुला.

## खादिरगृह्यसूत्रम्

### गार्हस्थ्याधिकारी

**'ब्रह्मचारी वेदमधीत्योपन्याहृत्य गुरवेऽनुज्ञातो दारान्कुर्वीत॥**

ब्रह्म वेदः, वेदाध्ययनार्थानि गोदानादीनि व्रतानि अग्नीन्धनादीनि च स्मृतिकारैरुक्तानि लक्षणया ब्रह्मेत्युच्यन्ते। तान्यनुतिष्ठन्नेकां शाखामधीत्याध्ययनप्रयोगमर्थनिश्चयपर्यन्तं षडङ्गं परिसमाप्य उप गुरुसमीपं निष्पाद्य स्वयं गुरवेऽभिलषितद्रव्यमार्जयित्वा तत् गुरुसमीपमाहृत्य गुरवे आचार्याय दत्त्वा तेनैव गुरुणा त्वं विवाहं स्नानं च कुर्वित्यनुज्ञातः सन् दारान् कुर्वीत भार्यां कुर्वीत। यथाऽऽत्मानं प्रति भार्या भवति तथा कुमारीं संस्कुर्यादित्यर्थः। दारानिति बहुत्वपुंस्त्वे अविवक्षिते, आविष्टलिङ्गवचनत्वात्। एवं वृत्त्यर्थेऽध्यापने। अदृष्टार्थे तु गुरुदक्षिणामदत्त्वाऽप्यनुज्ञामात्रादेव विवाहः, 'सहस्रं श्वेतं चाश्वं प्रदायानुज्ञातो वा' इति श्रुतेः। तदर्थं च 'उपन्याहृत्य गुरवेऽनुज्ञातो वा' इति वाशब्दं केचिदध्याहरन्ति। दक्षिणात्वान्नोदकपूर्वमिदं दानम्।

अपरा व्याख्या वाशब्दाध्याहारेण – ब्रह्मचारी वेदं वाऽधीत्येति। द्वादशवार्षिकं षट्त्रिंशदाब्दिकं तदर्धिकं पादिकं वा ब्रह्मचारी व्रतं ब्रह्म (? ब्रह्म व्रतं) तच्चरित्वा वेदं सकलमनधीत्यापि विवाहः अथवा व्रतं चरित्वा वेदं सकलमधीत्य विवाह इति। अस्मिन् व्याख्याने नार्थावबोधपर्यन्तमध्ययनम्। केचिदाहुः – 'षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैविद्यकं व्रतम्। तदर्धिकं पादिकं वा ग्रहणान्तिकमेव वा॥' (मस्मृ. ३।१) इत्यस्मिन्मानवे श्लोके वेदत्रयार्थत्वेन षट्त्रिंशदादेरुक्तत्वात्, 'वेदानधीत्य वेदौ वा वेदं वाऽपि' (मस्मृ. ३।२) इति चानेनैवोक्तत्वात्, वेदह्रासवशात् काले ह्रासोऽप्युक्त एवेति त्रिवर्षादिचरणमप्यनुज्ञातमेवेति। तद्युक्तमयुक्तं वेति विचारणीयम्। ब्रह्मचारीत्यस्यापरा व्याख्या – वेदव्रतानि चत्वारि गोदानं व्रातिकम् आदित्यव्रतं माहानाम्निकमित्येतानि, गोदानं व्रातिकमादित्यव्रतं माहानाम्निकमौपनिषदमित्येतानि (पञ्च) वा ब्रह्म, तच्चरित्वा

(१) खागृ. १।३।१.

विवाह इति। अस्यार्थस्य न्यायमूलत्वं केचिदाहुः — ब्रह्मचारिव्रतानि पुरुषसंस्कारार्थानि नाध्ययनाङ्गानि, पुरुषोद्देशेन विधानात्। अतस्तद्विधिपर्यवसाननिबन्धनोऽयं व्रतस्नानोपदेशः। अध्ययनविधिरपि न विचारपर्यन्तः, रागत एव तत्सिद्धेः। अतस्तन्निबन्धनो वेदस्नानोपदेश इति। तदिदं मीमांसकैर्नेष्यते। वाक्यशेषात्सिद्धे कुर्वीतेति नान्दीमुखादेरुपसंग्रहणार्थम्। रुद्रवृ.

## जैमिनिगृह्यसूत्रम्

ब्रह्मचर्यकालावधिः, गार्हस्थ्यविधिः

**[1]द्वादश वर्षाणि वेदब्रह्मचर्यं जननात्प्रभृतीत्येके यावदध्ययनं वा॥**

वेदार्थं ब्रह्मचर्यं यदुपनयन आदिष्टं तद्द्वादश वर्षाणि चरितव्यम्। जननादित्येक इति। तथा चोपनीय षड्वर्षाणीत्यर्थः। सप्तमे ह्युपनीयते। यावदध्ययनमिति। ब्रह्मचर्यचरणमिति शेषः। श्रीव्या.

**[2]स्नात्वा मातापितरौ परिचरेत्। तदधीनः स्यात्। ताभ्यामनुज्ञातो जायां विन्देत॥**

## छन्दोगसूत्रम्

त्रैवर्णिकानां संन्यासाधिकारः

**[3]त्रयाणामधिकृतिः॥**

**+[4]ऋणत्रयमपाकृत्य निर्ममो निरहंकृतिः। ब्राह्मणः क्षत्रियो वाऽथ वैश्यो वा प्रव्रजेद्गृहात्॥**

**[5]त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमाः॥**

(१) एतच्चाऽऽश्रमचतुष्टयं ब्राह्मणादिवर्णत्रयस्य वेदितव्यम्। अत एव कल्पानां सूत्रकारः — 'त्रयाणां वर्णानां चत्वार आश्रमाः' इति।

*स्मृच. १।१७६

(२) 'त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमाः' इति छन्दोगसूत्रस्यायमर्थः — त्रयाणां वर्णानां यथोचितं चत्वार आश्रमा इति। औचित्यं च श्रुतिविरोधाद्ब्राह्मणस्यैव तुर्याश्रमाधिकारविधौ नान्यथा। 'त्रैवर्णिकानां संन्यासो विद्यते नात्र संशयः। शिखायज्ञोपवीतानां त्यागपूर्वैकदण्डयुक्॥' इति ब्रह्माण्डपुराणवचनमपि छन्दोगसूत्रेण समानार्थः(?र्थम्)।

मपा. ३७०

## प्रसवोत्थानपरिशिष्टम्

आश्रमसमुच्चयविकल्पौ

**[1]प्रसवोत्थानम्॥**

**अथ जनको वैदेहः समिद्दर्भपाणिर्भगवन् याज्ञवल्क्य संन्यासमप्यनुब्रूहीति होवाच॥**

जनक इति। अयं च याज्ञवल्क्यशिष्यो जनकः आदिवैदेहः शालाङ्कसंज्ञो रत्नमिश्रसंज्ञो वा, स्कन्दपुराणे नागरखण्डे अध्यायः २७८ इत्यत्र तथोल्लेखात्। (समिद्)दर्भपाणिरिति। 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' (मुउ. १।२।१२) इति मुण्डकात्। भगवन्निति। 'उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम्। वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति॥' (विष्णु. ६।५।७८) इत्युक्तलक्षणः। संन्यासमिति। 'न्यासस्त्याग इति प्रोक्तः सम्यक्त्वं तस्य चेदृशम्। सर्वथा सर्वदा सर्वं सर्वत्र त्यजनं स्मृतम्। तच्च मुख्यं परे हंसे जघन्यमपरत्र हि॥' इत्यात्मपुराणे संन्यासशब्दार्थ उक्तः।

विप.

**स होवाच — ब्रह्मचर्यं समाप्य गार्हस्थ्यं कुर्यात्ततो वैखानसं ततः पारिव्राज्यम्॥**

**एष आश्रमाणां श्रुतिस्मृतिविहितक्रमः॥**

---

+ अस्य वचनस्य मपाव्याख्यानं प्रकरणारम्भे संगृहीते। तदीयशास्त्रार्थे (वका. पृ. १९३३) बालव्याख्यानं चास्मिन्नेव प्रकरणे याज्ञवल्क्यस्य 'वनाद्गृहाद्वा' इति वचने द्रष्टव्यम्।

(१) **जैगृ.** १।१८.

(२) **जैगृ.** १।२०.

(३) **मपा.** ३६५ छन्दोगसूत्रकारः.

(४) **अप.** ३।६० वाऽथ (वाऽपि) पृ. ९६६ स्मृत्यन्तरम्; **पमा.** १।५३५ स्मृत्यन्तरम्; **मपा.** ३६५ उत्त., छन्दोगसूत्रकारः : ३७१ स्मृत्यन्तरम् : ३७२ उत्त., (–); **सिन्धु.** २१३५ उत्त., कूर्मपुराणम्; **विपा.** ५।४९५ उत्त., कूर्मपुराणम्; **यप्र.** ३४ स्मृत्यन्तरम्; **बाल.** ३।५६-५७ पृ. ९५ अपरार्के.

(५) **मिता.** ३।५६-५७ सूत्रकारवचनम्; **स्मृच.** १।१७६ (वेदमधीत्य॰) कल्पानां सूत्रकारः; **मपा.** ३७० छन्दोगसूत्रम्; **मुक्ता.** १७६ (वेदमधीत्य॰) सूत्रकारादिवचनम्; **संम.** ४३ (वेदमधीत्य॰) कठसूत्रम्; **संप्र.** ५६४ (वेदमधीत्य॰) काठकगृह्यम्; **यप्र.** ३४ छन्दोगसूत्रम्.

* संम. स्मृचवत्।

(१) **प्रप.** १.

श्रुतीति। 'ब्रह्मचर्यं परिसमाप्य गृही भवेद्गृही भूत्वा वनी भवेद्वनी भूत्वा प्रव्रजेत्' (जाउ. ४) इति जाबालोपनिषच्छ्रुतेः। स्मृतीति। 'वनाद्गृहाद्वा कृत्वेष्टिं सार्ववेदसदक्षिणाम्। प्राजापत्यां तदन्ते तानग्नीनारोप्य चाऽऽत्मनि॥ अधीतवेदो जपकृत्पुत्रवानन्नदोऽग्निमान्। शक्त्या च यज्ञकृन्मोक्षे मनः कुर्यात्तु नान्यथा॥' (यास्मृ. ३।५६-५७) इति याज्ञवल्क्यस्मृतौ। विप.

[1]**अपरे त्वाहुः – वाजसनेयिनां पुरुषमेधादुत्तरकालं पक्षः, अग्नेः परित्यागविधानदर्शनात्, 'अथाऽऽत्मन्नग्नी समारोह्योत्तरनारायणेनाऽऽदित्यमुपस्थायानपेक्षमाणो8ऽरण्यमभिप्रेयात्तदेव मनुष्येभ्यस्तिरोभवति' इति श्रुतत्वात्। परित्यक्तेष्वग्निषु न चाऽऽश्रमव्यतिरिक्तायां लक्षणमाश्रमव्यवस्थाभावादर्थात्पारिव्राज्यं 'ब्रह्मचर्यादेव परिव्रजेन्मनुष्येभ्यो वनाद्गृहाच्च' इति॥**

पक्ष इति। पक्षः संन्यासग्रहणावसर इति यावत्। दर्शनादिति। 'त्रैधातव्यन्ते समारोह्याऽऽत्मन्नग्नी सूर्यमुपस्थायाद्भ्यः संभृत इत्यनुवाकेनानपेक्षमाणोऽरण्यं गत्वा न प्रत्येयात्॥ ग्रामे वा विवत्सन्नरण्योः॥' (काश्रौ. २१।१।१७-१८) इति। उत्तरेति। उत्तरनारायणसूक्तम् 'अद्भ्यः संभृतः' इति षड्चोऽनुवाकः। श्रुतत्वादिति। 'अथाऽऽत्मन्नग्नी....' इत्यादि(ः) 'तिरोभवति' इत्यन्ता (शब्रा. १३।६।२।२०) शातपथी श्रुतिः। लक्षणमिति। आश्रमव्यतिरिक्तायामवस्थायां लक्षणं दीक्षाचिह्नादि नास्ति, अतस्तदर्थं संन्यासग्रहणमेवाऽऽवश्यकमित्यर्थः। पारिव्राज्यमिति। पारिव्राज्यं नाम संन्यासः। ब्रह्मचर्यादिति। 'यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा। अथ पुनरव्रती वा व्रती वा, स्नातकोऽस्नातको वा, उत्सन्नाग्निरनग्निको वा, यदहरेव विरजेत्तदहरेव प्रव्रजेत्' (जाउ. ४) इति जाबालश्रुतिः। मनुष्येभ्य इति। मनुष्येभ्य इत्यनेन लक्षणया 'अव्रती व्रती' इत्यादीनां ग्रहणम्। विप.

**अपरे त्वाहुः – जाबालश्रुतौ स्पष्टमेतद्गृहीतपारिव्राज्यो ब्रह्मचर्यादेव प्रव्रजेदेव, 'एतमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति' इति वचनाद्गृहाच्चेति प्रसिद्धम्॥**

जाबालेति। जाबालश्रुतौ जाबालोपनिषदि चतुर्थ्यां कण्डिकायाम्। वचनादिति। बृहदारण्यकोपनिषद्गतात् (बृउ. ३।५।१) वचनात्। विप.

## यज्ञपार्श्वपरिशिष्टम्

अनाश्रमित्वनिषेधः

[1]**अनाश्रमी न तिष्ठेत क्षणमेकमपि द्विजः।**
**यद्याश्रमी(? मं) विना तिष्ठेत्प्रायश्चित्ती भवेत्तु सः॥**

## ब्रह्मसूत्राणि

ऊर्ध्वरेतसां नैष्ठिकत्ववानप्रस्थ्यसंन्यासाश्रमाणां श्रुतिसिद्धत्वात्सर्वैरनुष्ठेयत्वम्

[2]**परामर्शं जैमिनिरचोदना चापवदति हि॥**

'त्रयो धर्मस्कन्धाः' (छाउ. २।२३।१) इत्यादयो ये शब्दा ऊर्ध्वरेतसामाश्रमाणां सद्भावायोदाहृताः न ते तत्प्रतिपादनाय प्रभवन्ति, यतः परामर्शमेषु शब्देष्वाश्रमान्तराणां जैमिनिराचार्यो मन्यते, न विधिम्। कुतः? न ह्यत्र लिङादीनामन्यतमश्चोदनाशब्दोऽस्ति। अर्थान्तरपरत्वं चैषु प्रत्येकमुपलभ्यते। 'त्रयो धर्मस्कन्धाः' इत्यत्र तावत् 'यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव द्वितीयो

8 शतपथब्राह्मणपुस्तके अत्रोद्धृतशतपथवाक्ये "अरण्यं गच्छेत्। तदेव तत्रैव मनुष्येभ्यस्तिरोभवति अन्तर्धीयते। ग्रामं न पुनः प्रविशति, वन एव वैखानसवृत्तेन वर्तत इत्यर्थः" इति सायणभाष्यम्, तत्रत्यैव "अत्र देवयाज्ञिकाः – चतुर्थाश्रमे हि, 'भिक्षार्थी ग्रामं प्रविशेत्' इति विहितत्वात् 'न प्रत्येयात्' इति विरुध्यते। अतः पाक्षिकस्तृतीयाश्रमपरिग्रह एवायम्, न चतुर्थस्येति" इति संपादकीयटिप्पण्या बोधितं देवयाज्ञिकमतं च प्रकृतपरिशिष्टविरुद्धम्, शातपथश्रुतेः पारिव्राज्यपरत्वस्य परिशिष्टेन स्पष्टं व्याख्यातत्वात्। परिशिष्टपक्षे 'मनुष्येभ्यस्तिरोभवति' इत्यस्य प्रायिकत्वेन वा, पूर्वाश्रमीयपितृत्वपुत्रत्वादीन् मनुष्यसंबन्धानानुसंधत्ते इत्यर्थपरत्वेन वा सूपपादत्वात्। देवयाज्ञिकाक्षेपः सुपरिहरः। किंच, शतपथश्रुतिगतमनुष्यशब्दस्य 'अव्रती व्रती वा' इत्यादिकोट्यन्तरपरत्वायोगात् 'ब्रह्मचर्यादेव०' इतिपरिशिष्टवाक्यगतमनुष्यशब्दस्य कोट्यन्तरपरत्वेनात्रत्यं व्याख्यानं न युज्यते।

(१) **प्रप.** २.

(१) **यप.** १।३६.

(२) **ब्रसू.** ३।४।१८-२०, ४०, ४९.

ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्। सर्व एते पुण्यलोका भवन्ति' इति परामर्शपूर्वकमाश्रमाणामनात्यन्तिकफलत्वं संकीर्त्याऽऽत्यन्तिकफलतया ब्रह्मसंस्थता स्तूयते – 'ब्रह्मसंस्थोऽमृतत्वमेति' (छाउ. २।२३।१) इति। ननु परामर्शेऽप्याश्रमा गम्यन्त एव। सत्यं गम्यन्ते, स्मृत्याचाराभ्यां तु तेषां प्रसिद्धिः, न प्रत्यक्षश्रुतेः। अतश्च प्रत्यक्षश्रुतिविरोधे सत्यनादरणीयास्ते भविष्यन्ति, अनधिकृतविषया वा। ननु गार्हस्थ्यमपि सहैवोर्ध्वरेतोभिः परामृष्टं 'यज्ञोऽध्ययनं दानमिति प्रथमः' इति। सत्यमेवम्, तथापि तु गृहस्थं प्रत्येवाग्निहोत्रादीनां कर्मणां विधानाच्छ्रुतिप्रसिद्धमेव हि तदस्तित्वम्। तस्मात्स्तुत्यर्थ एवायं परामर्शः, न चोदनार्थः। अपि च, अपवदति हि प्रत्यक्षा श्रुतिराश्रमान्तरम् 'वीरहा वा एष देवानां योऽग्निमुद्वासयते', 'आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः' (तैउ. १।११।१) 'नापुत्रस्य लोकोऽस्तीति तत्सर्वे पशवो विदुः' इत्येवमाद्या। तथा 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' (छाउ. ५।१०।१) 'तपःश्रद्धे ये ह्युपवसन्त्यरण्ये' (मुउ. १।२।११) इति च देवयानोपदेशः, नाऽऽश्रमान्तरोपदेशः। संदिग्धं चाऽऽश्रमान्तराभिधानम् 'तप एव द्वितीयः' (छाउ. २।२३।१) इत्येवमादिषु। तथा 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' (बृउ. ४।४।२२) इति लोकसंस्तवोऽयम्, न पारिव्राज्यविधिः। ननु 'ब्रह्मचर्यादेव प्रव्रजेत्' इति विस्पष्टमिदं प्रत्यक्षं पारिव्राज्यविधानं जाबालानाम्। सत्यमेवमेतत्। अनपेक्ष्य त्वेतां श्रुतिमयं विचार इति द्रष्टव्यम्।

शंकर.

**अनुष्ठेयं बादरायणः साम्यश्रुतेः॥**

अनुष्ठेयमाश्रमान्तरं बादरायण आचार्यो मन्यते, वेदे श्रवणात्। अग्निहोत्रादीनां चावश्यानुष्ठेयत्वात्तद्विरोधादनधिकृतानुष्ठेयमाश्रमान्तरमिति हीमां मतिं निराकरोति गार्हस्थ्यवदेवाऽऽश्रमान्तरमप्यनिच्छता प्रतिपत्तव्यमिति मन्यमानः। कुतः? साम्यश्रुतेः। समा हि गार्हस्थ्येनाऽऽश्रमान्तरस्य परामर्शश्रुतिर्दृश्यते – 'त्रयो धर्मस्कन्धाः' (छाउ. २।२३।१) इत्याद्या। यथेह श्रुत्यन्तरविहितमेव गार्हस्थ्यं परामृष्टमेवमाश्रमान्तरमपीति प्रतिपत्तव्यम्। यथा च शास्त्रान्तरप्राप्तयोरेव निवीतप्राचीनावीतयोः परामर्श उपवीतविधिपरे वाक्ये। तस्मात्तुल्यमनुष्ठेयत्वं गार्हस्थ्येनाऽऽश्रमान्तरस्य। तथा 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' (बृउ. ४।४।२२) इत्यस्य वेदानुवचनादिभिः समभिव्याहारः, 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' (छाउ. ५।१०।१) इत्यस्य च पञ्चाग्निविद्यया। यत्तूक्तम् 'तप एव द्वितीयः' (छाउ. २।२३।१) इत्यादिष्वाश्रमान्तराभिधानं संदिग्धमिति। नैष दोषः, निश्चयकारणसद्भावात्। 'त्रयो धर्मस्कन्धाः' (छाउ. २।२३।१) इति हि धर्मस्कन्धत्रित्वं प्रतिज्ञातम्। न च यज्ञादयो भूयांसो धर्मा उत्पत्तिभिन्नाः सन्तोऽन्यत्राऽऽश्रमसंबन्धात्रित्वेऽन्तर्भावयितुं शक्यन्ते। तत्र यज्ञादिलिङ्गो गृहाश्रम एको धर्मस्कन्धो निर्दिष्टः, ब्रह्मचारीति च स्पष्ट आश्रमनिर्देशः, तप इत्यपि कोऽन्यस्तपःप्रधानादाश्रमाद्धर्मस्कन्धोऽभ्युपगम्येत? 'ये चेमेऽरण्ये' (छाउ. ५।१०।१) इति चारण्यलिङ्गाच्छ्रद्धातपोभ्यामाश्रमगृहीतिः। तस्मात्परामर्शेऽप्यनुष्ठेयमाश्रमान्तरम्।

शंकर.

**विधिर्वा धारणवत्॥**

विधिर्वाऽयमाश्रमान्तरस्य, न परामर्शमात्रम्। ननु विधित्वाभ्युपगमे एकवाक्यताप्रतीतिरुपरुध्येत। प्रतीयते चात्रैकवाक्यता – पुण्यलोकफलास्त्रयो धर्मस्कन्धाः, ब्रह्मसंस्थता त्वमृतत्वफलेति। सत्यमेतत्। सतीमपि त्वेकवाक्यताप्रतीतिं परित्यज्य विधिरेवाभ्युपगन्तव्यः, अपूर्वत्वात्, विध्यन्तरस्यादर्शनात्, विस्पष्टाच्चाऽऽश्रमान्तरप्रत्ययाद्गुणवादकल्पनयैकवाक्यत्वयोजनानुपपत्तेः। धारणवत्। यथा 'अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयति' इत्यत्र सत्यामप्यधोधारणेनैकवाक्यताप्रतीतौ विधीयत एवोपरिधारणम्, अपूर्वत्वात्। तथा चोक्तं शेषलक्षणे – 'विधिस्तु धारणेऽपूर्वत्वात्' (जैसू. ३।४।१(७)) इति। तद्वदिहाप्याश्रमपरामर्शश्रुतिर्विधिरेवेति कल्प्यते। यदाऽपि परामर्श एवायमाश्रमान्तराणां तदाऽपि ब्रह्मसंस्थता तावत्संस्तवसामर्थ्यादवश्यं विधेयाऽभ्युपगन्तव्या। सा च किं चतुर्ष्वाश्रमेषु यस्य कस्यचिदाहोस्वित्परिव्राजकस्यैव? इति विवेक्तव्यम्। यदि च ब्रह्मचार्यन्तेष्वाश्रमेषु परा-

चतुर्णामप्याश्रमाणां गृहस्थः कारणम्, अप्रजनत्वादितरेषां ब्रह्मचार्यादीनाम्। वैखानसार्था हेतूक्तिः, ब्रह्मचारिणो ब्रह्मचर्यरक्षणादेव सिद्धत्वात्, भिक्षोरप्यूर्ध्वरेतस्त्वविधानात्। एवं च वैखानसस्य सपत्नीकत्वपक्षेऽपि ब्रह्मचर्यरक्षणं कर्तव्यम्। अधिकारादेव सिद्धे तेषां ग्रहणं गृहस्थोत्पन्नानामेव तेषां धर्मेऽधिकार इत्येवमर्थम्। तथा च शातातपः – 'चण्डालाः प्रत्यवसिताः परिव्राजकतापसाः। तेषां जातान्यपत्यानि चण्डालैः सह वासयेत्॥' इति। 'तेषां गृहस्थ एव योनिः' इत्युक्ते एवकारादेवेतरेषां ब्रह्मचर्यरक्षणे सिद्धे एवमभिधानमेषां पुनर्निवृत्तिर्मा भूदिति। यदि ते गार्हस्थ्यं प्रति निवृत्ता भवेयुः तदा ते चण्डाला भवन्ति। कुतः? उदाहृतशातातपवचनात्। तत्र चण्डाला भवन्ति प्रत्यवसिताः प्रतिनिवृत्ता ये परिव्राजक(? काः,) तापसाः नैष्ठिकवैखानसाः, तस्मात्तेषां जातान्यपत्यानि चण्डालैः सह वासयेद्राजा ग्रामो वेत्यर्थः।

+मभा.

ब्रह्मचर्यगार्हस्थ्ये इत्येतौ द्वावेवाऽऽश्रमौ,
चतुर्षु गार्हस्थ्यस्य प्राधान्यं
व्याख्यातृमतभेदेन

***'ऐकाश्रम्यं त्वाचार्याः प्रत्यक्षविधानाद्गार्हस्थ्यस्य॥**

(१) गार्हस्थ्योत्तराश्रमबाधश्च गौतमेन दर्शितः – ऐकाश्रम्यमिति। मिता. ३।५६-५७

(२) वैखानसस्योक्त्वा इदानीमेकीयमतेनाऽऽश्रमबाधपक्षं वक्तुकाम आह – ऐकाश्रम्यमिति। एकाश्रमे भवमैकाश्रम्यम्। तुशब्दोऽवधारणे। गार्हस्थ्यस्येति कर्मणि षष्ठी। गार्हस्थ्यमेवाऽऽचार्या इच्छन्ति। कुतः? प्रत्यक्षविधानात् उपलब्धश्रुतिविधानादित्यर्थः। यद्यपि 'गृहस्थो भवेत्' इत्येवं न विहितम्, तथाऽप्यग्निहोत्रादिगृहस्थसाध्यक्रियाविधानात्तस्यैव विधानं द्रष्टव्यम्।

मभा.

(३) उक्ता आश्रमाः, तेषां विकल्पसमुच्चयावपि दर्शितौ, तेषां प्राधान्यं दर्शयति – ऐकाश्रम्यमिति। तुशब्दो विशेषवाची। सर्वेषु वेदशास्त्रेतिहासपुराणेषु गृहस्थधर्मा एवाग्निहोत्रादयः प्राचुर्येण विधीयन्ते। ततः सर्व एवाऽऽचार्या गार्हस्थ्यस्य ऐकाश्रम्यं प्राधान्यं मन्यन्ते। तत्राशक्तानामितराश्रमधर्मा विधीयन्ते। प्रत्यक्षविधानात् इतराश्रमाणां प्रत्यक्षेणोपजीव्यत्वात्।

×गौमि.

(४) यत्तु गौतमेनोक्तम् – 'ऐकाश्रम्यं .... द्गार्हस्थ्यस्य' इति, तद्गार्हस्थ्यस्य श्रैष्ठ्यप्रतिपादनपरम्, इतरेषामपि 'ब्रह्मचर्यं परिसमाप्य गृही भवेत्। गृही भूत्वा वनी भवेत्। वनी भूत्वा प्रव्रजेत्।' (जाउ. ४), 'अष्टमे वर्षे ब्राह्मणमुपनयीत' इत्यादिप्रत्यक्षश्रुतिविहितत्वेनाविशेषात्। अत एव वसिष्ठः – 'गृहस्थ एव यजते गृहस्थस्तप्यते तपः। चतुर्णामाश्रमाणां च गृहस्थश्च विशिष्यते॥' (वाध. ८।१४)। मनुरपि – 'सर्वेषामपि चैतेषां वेदस्मृतिविधानतः। गृहस्थ उच्यते श्रेष्ठः स त्रीनेतान्बिभर्ति हि॥ यथा नदीनदाः सर्वे सागरे यान्ति संस्थितिम्। तथैवाऽऽश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम्॥' (मस्मृ. ६।८९-९०)।

स्मृच. १।१७४-१७५

(५) 'ऐकाश्रम्यं तु प्रत्यक्षविधानादृगृहस्थस्य' इत्युक्तवता गौतमेन गार्हस्थ्यस्य प्रत्यक्षश्रुतिसिद्धत्वमुक्त्वा आश्रमान्तराणां स्मार्तत्वेन दौर्बल्यमुक्तम्।

गप. ७

## वृद्धगौतमः

गार्हस्थ्यस्य संन्यासस्य च प्रशंसा

**[1]'अविप्लुतब्रह्मचर्यैर्गृहस्थाश्रममाश्रितैः।
पञ्चयज्ञपरैर्धर्मः स्थाप्यते पृथिवीतले॥**

**[2]'यतिर्गुरुर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः।
यद्गृहस्थार्जितं पापं ज्ञानतोऽज्ञानतोऽपि वा।**

---

+ गौमि., मुक्ता. मभागतम्।

* अस्य वचनस्य मेधाव्याख्यानं 'वेदोऽखिलो धर्ममूलम्' (मस्मृ. २।६) इति मनुवचने (वका. पृ. ९०) द्रष्टव्यम्।

(१) **गौध.** ३।३६; **विश्व.** १।५०, ३।४५; **मेधा.** २।६; **मिता.** ३।५६-५७; **गौमि.** ३।३५; **उ.** २।२१।१ स्मृत्यन्तरम् : २।२३।९ : २।२४।१४ (प्रत्यक्षविधानाद्गार्हस्थ्यस्य॰) (=); **स्मृच.** १।१७४; **पमा.** १।५२३ ऐका (एका); **गप.** ७ (आचार्याः॰) गार्हस्थ्यस्य (गृहस्थस्य); **मुक्ता.** १६७ त्वाचार्याः (चाऽऽचार्याः) : १७२ गौतमबौधायनौ; **संप्र.** ५६३; **बौवि.** २।११।३६.

× मुक्ता., संप्र. गौमिवत्।

(१) **वृगौसं.** ७७७.

(२) **वृगौसं.** ८२१.

**निर्दहिष्यति तत्सर्वमेकरात्रोषितो यतिः॥**
**दुर्वृत्ता वा सुवृत्ता वा ज्ञानिनोऽज्ञानिनोऽपिवा।**
**गृहस्थैर्यतयः पूज्याः परत्र हितकाङ्क्षिभिः॥**
**एकदण्डी त्रिदण्डी वा शिखी मुण्डी तथैव च।**
**काषायमात्रसारोऽपि यतिः पूज्यो युधिष्ठिर॥**
**अपूजितो गृहस्थैर्वा तथा चाप्यवमानितः।**
**यतिः सर्वातिथिर्वाऽपि नरके पातयिष्यति॥**
**तस्माच्च यतयः पूज्या मद्भक्ता मत्परायणाः।**
**मयि संन्यस्तकर्माणः परत्र हितकाङ्क्षिभिः॥**

## हारीतः

प्रजापतेः सकाशादाश्रमोत्पत्तिः

[1]**'स चतुर्धाऽऽत्मानं विधाय ब्रह्मचर्येण ब्रह्मयज्ञैस्तपसा ध्यानेन चाऽऽत्मानमश्राम्यत्तदाऽऽश्रमा अभवन्॥**

प्रजापतिरित्यनुवृत्तौ हारीतः — स चतुर्धेति।

ब्रक. २६९

ब्रह्मचारिणो द्वैविध्यम्, तत्र नैष्ठिक-
लक्षणम्, ब्रह्मचर्यप्रशंसा

[2]**'द्विविध एव ब्रह्मचारी भवति — उपकुर्वाणको नैष्ठिकश्च। तयोरुपकुर्वाणको व्याख्यातः। निष्ठां चेद्गच्छेदा शरीरनिपाताद्गुरुमन्वासीत, तदभावे गुरुपत्न्याम्, तदभावे गुरुपुत्रे, गुरुपुत्राभावेऽग्निमेव परिचरेत्॥**

(१) गुरुसमीपेऽर्थज्ञानपर्यन्तं स्वाध्यायस्वरूपं प्रयोजनं (च) कुर्वाणो वसतीति उपकुर्वाणकः।

ब्रक. २७२

(२) ननु ब्रह्मचारिद्वैविध्ये 'चत्वार आश्रमाः' (आध. २।२१।१) इत्यापस्तम्बादिवचनं बाध्येत। मैवम्, संकल्पभेदमात्रेण नित्यकाम्याग्निहोत्रवदनयोरभेदोपपत्तेः। अत एव दक्षः — 'द्वितीयो नैष्ठिकश्चैव तस्मिन्नेवाऽऽश्रमे स्थितः।' (दस्मृ. १।७) इति। 'तस्मिन्नेवाऽऽश्रमे' इति वदन् तद्धर्मातिदेशमाह। अत एव गौतमः — 'तत्रोक्तं ब्रह्मचारिणः' (गौध. ३।४) इति। तत्रोपकुर्वाणप्रकरणे यदुक्तमग्नीन्धनभैक्षचर्यादिकं तन्नैष्ठिकस्यापि भवतीत्यर्थः।

स्मृच. १।१७२

(३) उपकुर्वाणः गार्हस्थ्याभिकामः।

संप्र. ५५१

**'क्षीरं पिबन्ति मधु ते पिबन्ति**
**सोमं पिबन्ति ह्यष्ट तेन सार्धम्(?)।**
**मृत्योः पुरस्तादमृता भवन्ति**
**ये ब्राह्मणा ब्रह्मचर्यं चरन्ति॥**

यत्तु हारीतेनोक्तम् — 'मृत्योः परस्तादमृता भवन्ति ये ब्राह्मणा ब्रह्मचर्यं चरन्ति॥' इति, तद्ब्रह्मविन्नैष्ठिकविषयम्, 'सर्वे ते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेति' इति श्रुतेः। सर्व एते चत्वार आश्रमिणः कर्म कुर्वाणाः पुण्यलोका भवन्ति। यः पुनरेषां मध्ये ब्रह्मसंस्थः ब्रह्मनिष्ठः सः अमृतत्वम् अपुनरावृत्तिलक्षणं फलमेति।

*स्मृच. १।१७०

गृहस्थभेदाः तल्लक्षणानि च,
यायावरत्वफलम्

[2]**'द्विविधमपि गृहस्थं प्राहुः — शालीनं यायावरं च। शालीनात्पुण्यतरो यायावरः श्रेयान्। सर्वावस्थासु बह्व्योऽस्य शाला इति शालीनः, शालावानिति वा शालीनः, शालायामात्मवृत्तिभिर्लीन' इति वा शालीनः॥**

शालाः गृहाणि। शालावान् शय्यां सुखासिकाम्(?)।

+गृक. १६९

(१) **ब्रक.** २६९.

(२) **अप.** १।५० पृ. ७१ ध एव ब्र (धो ब्र) (भवति०) र्वाणको (र्वाणो) दुगुरुमन्वा (दुगुरावा) पुत्रे (पुत्रं) मेव परि (मेवोप); **ब्रक.** २७१; **स्मृच.** १।१७२ (द्विविधो ब्रह्मचारी उपकुर्वाणो नैष्ठिकश्च) एतावदेव; **संप्र.** ५५१ स्मृचवत्.

* मुक्ता. स्मृचवत्।

\+ गृर. गृकवत्।

(१) **ब्रक.** २७२ दमृता (दमृतं); **स्मृच.** १।१७० पुरस्ता (परस्ता) उत्त.; **मुक्ता.** १२१ पुरस्तादमृता (परस्तादमृतो) ब्राह्मणा (ब्रह्मणा) उत्त.; **संप्र.** ५५०-५५१ पुर (पर) उत्त.

(२) **गृक.** १६८-१६९ मपि (मेव) वस्थासु (रम्भेषु) शालावानिति...यामात्म (शालावानात्म); **गृर.** ४१५ लीन इति वा (लीनः); **निप्र.** २।२६२ मपि (मेव) वस्थासु (रम्भेषु) बह्व्योऽस्य शाला इति शालीनः (शाला विद्यतेऽस्य इति शालीनः) (शालावानिति... इति वा शालीनः० ); **वीमि.** १।१२७ मपि (मेव) स्थं प्राहुः (स्थमाहुः) (श्रेयान्। सर्वावस्थासु०) शालावानिति वा... इति वा शालीनः (शालाया इति वा शालीनः).

**[1]स द्विविधः — गृह्यशालीनस्त्रेताशालीनश्चेति। 8गृह्यशालीनो जातपुत्रायाऽऽधानं संवत्सराद्वा शुश्रूषावान्। स एव द्विविधः — संपन्नवृत्तिरसंपन्नवृत्तिश्चेति। तयोरसंपन्नवृत्तिः श्रेयान् स व्याख्यातः। संपन्नवृत्तिर्याजनवृत्तिः कृषिवृत्तिश्च॥**

(१) गृह्यशालीनः गृह्यशालावान्। त्रेताशालीनः गार्हपत्या(द्यः)ग्नित्रयशालावान्। जातपुत्रायाऽऽधानम्, कुर्युरिति शेषः। जातपुत्रायाऽऽधानमित्यत्र जातपुत्रशब्दः प्रथमाबहुवचनान्तः। शाकल्यमताश्रयणेन याकारपाठः। संवत्सराद्वा शुश्रूषावान् यः। यः शुश्रूषावान् गृह्याग्निपरिचरणवान् भवति, संवत्सरादूर्ध्वमाधानं कुर्यादित्यर्थः। सकृदा(सःकृता)धानः। असंपन्नः(?न्नवृत्तिः) शिलोञ्छादिवृत्तिः। स व्याख्यातः सोऽपि (अ)संपन्नवृत्तिः 'दारानाहृत्याग्नीनाधाय' इत्यादिना कथितः। संपन्नः संपन्नवृत्तिः। +गृक. १६९

(२) (असंपन्नवृत्तिः) उञ्छशिलवृत्तिरित्यर्थः। संपन्नवृत्तिश्च (उञ्छशिल?) भैक्ष्यायाचिताध्यापनयाजनकृषिवाणिज्यवृत्तिरिति। निप्र. २।२६२

**[2]शालीनादात्मवृत्तियापनाद्वर इति यायावरः। दश दश रात्रीर्वसन् प्रयातीति यायावरः। δपरास्वष्टसु वृत्तिषु वरयाऽऽत्मानं यापयतीति यायावरः॥**

8 ग्रन्थोऽयं व्याकुलः। तथाहि — 'गृह्यशालीनो' इत्यस्मात्परम्, 'गृह्याग्निशालावान्। त्रेताशालीनो गार्हपत्याद्यग्नित्रयशालावान्।' इत्यर्थको ग्रन्थ उच्छिन्न इति कल्प्यते, अग्रिमवैकल्पिकाधानकालोक्तेस्त्रेताशालीनविषयत्वात्, उक्तग्रन्थोच्छेदाकल्पने त्रेताशालीनस्याव्याख्यातत्वेन न्यूनत्वापाताच्च।

+ गृर. गृकगतम्।

δ प्रथमायां व्युत्पत्तौ शालीनापेक्षया यायावरस्य वरत्वं यायावरशब्दगतवरशब्दबोध्यम्, तत्प्रयोजकवृत्तिवरत्वमार्थिकम्; अस्यां व्युत्पत्तौ तु वृत्तेर्वरत्वं यायावरशब्दगतवरशब्दबोध्यम्, तत्प्रयुक्तं यायावरवरत्वमार्थिकमित्युभयोर्भेदः। यापनस्य यायाशब्दबोध्यत्वमुभयत्र समानम्।

(१) **गृक.** १६९ नश्चेति (नश्च) शुश्रूषावान् + (यः) वृत्तिश्चेति (वृत्तिश्च) संपन्नवृत्तिर्या (संपन्नो या); **गृर.** ४१५; **निप्र.** २।२६२ (स द्विविधः संपन्नवृत्तिरसंपन्नवृत्तिश्च। तयोरसंपन्नवृत्तिः श्रेयान्।) एतावदेव.

(२) **गृक.** १७३ शालीनादात्म (शीलेनाऽऽत्म) परास्वष्टसु वृत्तिषु वरयाऽऽ (स्वराष्ट्रस्ववृत्तिषु वरया वरयाऽऽ); **गृर.** ४१९; **निप्र.** २।२६२(शालीनात्मवृत्तियापनतया यायावरः। दश दश रात्रीर्वा वसन् यातीति यायावरः। वरासु वा वक्ष्यमाणासु वृत्तिषु यापयत्यात्मानमिति वा यायावरः॥); **वीमि.**१।१२७ (दश रात्रीर्वसन् प्रयातीति यायावरः।) एतावदेव.

**[1]स द्विविधः — कृतप्रस्थानोऽकृतप्रस्थानश्च। यस्य विधिवद्वपनं कारयित्वा आग्नेयीं प्रातरुदिते वैश्वानर्येष्ट्या मन्त्रतो दिग्द्रव्यादीन् प्रतिष्ठापयन्ति स कृतप्रस्थानः। अथ यस्य विधिवद्वापनं कृत्वाऽऽग्नेय्यां (?यीं) प्रातरुदिते वैश्वदेव्येष्ट्या मन्त्रतो दिग्द्रव्यादीन् प्रवर्तयन्ति सोऽकृतप्रस्थानः॥**

(१) यापनात् संकोचनात्। अष्ट वक्ष्यमाणाः उञ्छाद्या वृत्तयः। वापनमाग्नेयी चेष्टिः पूर्वेद्युः कार्या। प्रातरुदिते तु वैश्वानर्येष्ट्या 'इमां दिशं व्रजेदेव(?) द्रव्यं व्रीहीन् यवानाहरत' इति यस्य दिग्द्रव्यादीन् प्रतिष्ठापयन्ति व्यवस्थापयन्ति ऋत्विजः स कृतप्रस्थानः। अकृतप्रस्थानस्तु यस्य पूर्ववद्वापनादि कारयित्वा प्रातरुदिते वैश्वदेव्येष्ट्या 'अस्यां दिशि तिष्ठत, इदं व्रीह्यादिद्रव्यमाहार्यं त्वया' इति दिग्द्रव्यादीन् प्रवर्तयन्ति आदिशन्ति ऋत्विजः स तथा।

गृक. १७५

(२) 'आत्मवृत्तियापानात्' इत्यत्र यापनं संकोचः। अष्ट वृत्तयः अत्रैवाग्रे। वापनं आग्नेयी चेष्टिः पूर्वदिने कार्ये। प्रातरुदिते तु वैश्वानर्या इष्ट्या 'इमां दिशं व्रज, इदं द्रव्यं यवान् व्रीहीन् वा आहर' इति यस्य दिग्द्रव्यादीनि प्रतिष्ठापयन्ति ऋत्विजः स कृतप्रस्थानः। अकृतप्रस्थानस्तु यस्य पूर्ववद्वापनादि कारयित्वा प्रातरुदिते वैश्वदेवेष्ट्या 'अस्यां दिशि तिष्ठ, इदं द्रव्यं महार्यन्त्वेतत्'(?माहार्यं त्वया) इति दिग्द्रव्यादीनि प्रवर्तयन्ति आदिशन्ति ऋत्विजः।

गृर. ४२०

**[2]ब्रह्मवदस्य ऋषित्वं संपद्यते। स प्रथमया एनसो**

(१) **गृक.** १७३ आग्नेयीं (आग्नेय्यां) द्वापनं (द्वपनं) कृत्वाऽऽग्नेय्यां (कृत्वा); **गृर.** ४१९ द्वपनं कारयित्वा आग्नेयीं (द्वापनं कृत्वाऽऽग्नेय्यां) दीन् प्रति (दीनि प्रति) मन्त्रतो दिग्द्रव्यादीन् प्रव (दिग्द्रव्यादि मन्त्रतो न प्रव); **निप्र.** २।२६२ (यस्य ऋत्विजः वपनपूर्वं पूर्वेद्युराग्नेयीं कारयित्वा प्रातर्वैश्वानरीं कारयित्वा इमां दिशं व्रज इदं द्रव्यमाहरेति व्यवस्थापयन्ति स कृतप्रस्थानः। अकृतप्रस्थानश्च यस्य ऋत्विजः वपनं कारयित्वा प्रातर्वैश्वदेवेनेष्ट्वा अस्यां दिशि इदं व्रीह्यादिद्रव्यं तिष्ठतीति कथयन्ति न स्वयं गच्छन्ति॥).

(२) **गृक.** १७३-१७४; **गृर.** ४१९ प्रथमया (प्रथमेष्ट्या) (परे च ब्रह्मणि स्थितो भवति。).

**विमुच्यते। द्वितीयया देवेभ्यः प्रकाशः समानलोकश्च भवति। तृतीयया ब्रह्मर्षित्वं संपद्यते। परे च ब्रह्मणि स्थितो भवति॥**

प्रथमा आग्नेयी, द्वितीया वैश्वानरी, तृतीया वैश्वदेवी। देवेभ्यः प्रकाशः द्योतमानः भवतीत्यर्थः।

*गृक. १७५-१७६

वानप्रस्थभेदाः

[1]**वानप्रस्थो द्विविधो भवति – स्वानुज्ञायिकोऽनुप्रस्थायिकश्चेति॥**

**स्वानुज्ञायिकश्चतुर्विधः – एकवृत्तिः संप्रक्षालक आत्मवृत्तिरहिंसकश्च॥**

[2]**अनुपस्थापि(?प्रस्थायि)कश्चतुर्विधः – अर्धमाससंचयी चातुर्मास्यषाण्मास्यसांवत्सरादित्येकः(?)॥**

संन्यासिभेदाः संन्यासप्रशंसा च

[3]**चतुर्विधा भिक्षवस्तु प्रोक्ताः सामान्यलिङ्गिनः।**
**तेषां पृथक् पृथग्ज्ञानं वृत्तिभेदात्कृतं च तत्॥**
[4]**कुटीचको बहूदको हंसश्चैव तृतीयकः।**
**चतुर्थः परमो हंसो यो यः पश्चात्स उत्तमः॥**

आद्यः पुत्रादिना कुटीं कारयित्वा तत्र गृहे वा वसन् काषायवासाः शिखोपवीतत्रिदण्डवान् बन्धुषु स्वगृहे वा भुञ्जान आत्मज्ञो भवेत्। एतदत्यन्ताशक्तपरम्। द्वितीयस्तु बन्धून् हित्वा सप्तागाराणि भैक्षं चरन् पूर्वोक्तवेषः स्यात्। हंसस्तु पूर्वोक्तवेषोऽप्येकदण्डः, 'एकं तु वैणवं दण्डं धारयेन्नित्यमादरात्।' इति स्कान्दात्। विष्णुरपि – 'यज्ञोपवीतं दण्डं च वस्त्रं जन्तुनिवारणम्। तावान् परिग्रहः प्रोक्तो नान्यो हंसपरिग्रहः॥'

चतुर्थोऽपि स्कान्दे – 'परहंसस्त्रिदण्डं च रज्जुं गोवालनिर्मिताम्। शिखां यज्ञोपवीतं च नित्यं कर्म परित्यजेत्॥'। δसिन्धु २१३६-२१३७

* गृर. गृकवत्।
δ विपा., बाल. सिन्धुवत्।
(१) **मोक.** २२-२३.
(२) **मोक.** २३.
(३) **पमा.** १।५४०; **मर.** ६२० दात्कृतं च तत् (दाः कृताः श्रुतौ).
(४) **पमा.** १।५४० कुटीचको (कुटीचरो); **मर.** ६२० दको (दश्च); **सिन्धु.** २१३६; **विपा.** ५।४९५ श्चैव (श्चाथ) यो यः (यश्च); **बाल.** ३।६० पृ. ९९.

[1]**सर्वेषामाश्रमाणां तु संन्यासी ह्युत्तमाश्रमी।**
**स एवात्र नमस्यः स्याद्भक्त्या सन्मार्गवर्तिभिः॥**
[2]**ब्रह्मिष्ठः परमो हंसः साक्षान्नारायणः स्मृतः।**
**यतिं यः पूजयेन्नित्यं विष्णुस्तेन प्रपूजितः॥**
[3]**सर्वेषामपराधानां यतिनिन्दा गरीयसी।**
**यतिर्नारायणः साक्षात्तस्मात्तां परिवर्जयेत्॥**

अनाश्रमिमरणं निरर्थकाश्रमः

मिथ्याश्रमश्च नरकहेतवः,

आश्रमफलानि

[4]**अनाश्रमी व्यपेतश्च आश्रमी च निरर्थकः।**
**मिथ्याश्रमी च सर्वे वै निरयं यान्ति मानवाः॥**

अनाश्रमी व्यपेतः अनाश्रमी सन्यो व्यपेतः भू-(?मृ)तः। निरर्थकः स्वाश्रमोक्तकर्मानुष्ठानरहितो लिङ्गमात्रधारी। मिथ्याश्रमी दम्भार्थमाश्रमधर्मान् योऽनुतिष्ठति। ब्रक. २६९

[5]**सर्वेष्वाश्रमेष्वाचार(व)न्तः पुण्यश्लोका भवन्ति। सैषाऽऽश्रमनिःश्रेणिर्यया देवाः स्वपितरश्चामृतत्वमगच्छन्। प्रथमपुण्यो ब्रह्मचारी ब्रह्मचर्यनिष्ठो ब्रह्म सिद्धिमवाप्नोति। द्विपुण्यो गृहाश्रमनिष्ठो भूयो महिमानं ब्रह्मलोकमवाप्नोति। आश्रमानुपूर्वो वानप्रस्थः प्रतिष्ठो भय(?भूय) स्तरमहिमानं ब्रह्मलोकम्। आश्रमादाश्रमं गच्छन् भिक्षुराशु सिद्धिं विन्देत। नैष्ठिको ब्रह्मचारिणां श्रेष्ठतमः। यायावरो गृहस्थानाम्। आनुप्रस्थिको वानप्रस्थानाम्। चातुराश्रम्यसिद्धो यतीनाम्॥**

द्विपुण्यः द्वे पुण्ये आश्रमद्वयकर्मणी यस्य स तथा। सिद्धिः ब्रह्मप्राप्तिः। ब्रक. २६८

[6]**अनेन विधिना यो हि आश्रमानुपसेवते।**
**स सर्वलोकान्निर्जित्य ब्रह्मभूयाय कल्पते॥**

(१) **मुक्ता.** २०६; **यसं.** १२८.
(२) **मुक्ता.** २०६; **यसं.** १२८ यतिं यः पू (यस्तं संपू).
(३) **यसं.** १३०.
(४) **ब्रक.** २६९ वै (ते); **स्मृच.** १।१७६; **संप्र.** ५६४.
(५) **ब्रक.** २६८.
(६) **ब्रक.** २७१ (अनेन विधिना यो हि ब्रह्मचर्यं निषेवते। सर्वलोकान्विनिर्जित्य ब्रह्मलोकाय कल्पते॥); **स्मृच.** १।१७४ भूयाय (लोकाय); **संम.** ४३ स्मृचवत्; **संप्र.** ५६२ लोका (कामा).

## वृद्धहारीतः

संन्यासिप्रशंसा

**[1]यतिर्यस्य गृहे भुङ्क्ते तस्य भुङ्क्ते हरिः स्वयम्।**
**हरिर्यस्य गृहे भुङ्क्ते तस्य भुङ्क्ते जगत्त्रयम्॥**

अनाश्रमित्वनिषेधः

**8[2]गृहस्थो वा वनस्थो वा यतिर्वाऽपि भवेद्द्विजः।**
**अनाश्रमी न तिष्ठेत यावज्जीवं द्विजोत्तमः॥**

## बौधायनः

ब्रह्मचर्याश्रमावधिः

**[3]अष्टाचत्वारिंशद्वर्षाणि पौराणं वेदब्रह्मचर्यम्॥**

(१) पौराणं पुरातनैर्मन्वादिभिर्वाऽऽचरितम्।

ब्रक. २६३

(२) अथ ब्रह्मचर्यं प्रस्तूयते – तच्च समिदाधानं भिक्षाचरणमाचार्योक्तकरणं स्वाध्यायाध्ययनं चेति। तच्चैतत् 'ब्राह्मणो वै ब्रह्मचर्यमुपयच्छंश्चतुर्धा भूतानि' (बौध. १।४।९) इत्यत्र स्पष्टीकरिष्यति। तत्कियन्तं कालं चरितव्यमित्यत आह – अष्टेति। पुरातनं पुराणम् (एव) पौराणं कृतयुगपुरुषचरितम्। किं तत्? वेदस्वीकरणार्थं ब्रह्मचर्यम्। उपनयनात्प्रभृत्यष्टाचत्वारिंशद्वर्षपरिमितं च तत्। इदानींतनैरपि कर्तव्यमिति वाक्यशेषः। यद्वा, पौराणं पुराणैर्मन्वादिभिर्दृष्टमाचरितं च। अथवा, अनादित्वात् पुराणः वेदः, तत्र भवं पौराणम्। यद्वा, प्रसिद्धेतिहासपुराणप्रभवम्।

बौवि.

**[4]चतुर्विंशतिं द्वादश वा प्रतिवेदम्॥**

(१) तस्यैव परिमाणान्तरमाह – चतुर्विंशतिमिति। वर्षाणीत्यनुवर्तते। वाशब्दश्च प्रत्येकमभिसंबध्यते।

बौवि.

(२) अस्यार्थः – वेदान्वेदौ वेदं वा प्रतीति प्रतिवेदम्। तथा च – 'वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम्।' (मस्मृ. ३।२) इत्येतद्वैकल्पिकपक्षाश्रयणेन यदा चतुरो वेदानधीते तदा प्रतिवेदं द्वादशाब्दानीति न्यायेनाष्टाचत्वारिंशद्वर्षाणि ब्रह्मचर्यं भवति, यदा त्रीन् तदा षट्त्रिंशत्(?तम्), यदा द्वौ तदा चतुर्विंशतिः(?तिम्), यदा त्वेकं तदा द्वादशेति व्याख्येयम्, न तु वेदं वेदं प्रतीति शङ्कनीयम्। तथा सत्येकस्मिन् वेदेऽष्टाचत्वारिंशद्वर्षाणीत्येवं न्यायेन चतुर्षु वेदेषु द्विनवत्युत्तरं शतं वर्षाणि ब्रह्मचर्यमापद्येत। तच्चासंभवि, शतायुष्ट्वविरोधात्। अत एव देवलः – 'अतः परमष्टाचत्वारिंशद्वार्षिकीं वेदचर्यामधितिष्ठेदशक्तश्चेत्षट्त्रिंशद्वार्षिकीं चतुर्विंशतिवार्षिकीं द्वादशवार्षिकीं वेति।'

संप्र. ५५६-५५७

**[1]संवत्सरावमं वा प्रतिकाण्डम्॥**

(१) काण्डं काण्डं प्रति संवत्सरार्धम्।

ब्रक. २६३

(२) प्राजापत्यादीनां पञ्चानामपि काण्डानामेकैकस्मिन् काण्डे संवत्सरावमं वा संवत्सरावधिकमित्यर्थः। प्रतिशब्दो वीप्सार्थः। *बौवि.

**[2]ग्रहणान्तं वा॥**

यावता कालेन वेदस्वीकरणं भवति तावन्तं कालम्। एते च विकल्पाः सामर्थ्यापेक्षया द्रष्टव्याः। एतदुक्तं भवति – यावद्वेदस्वीकरणं तदर्थावबोधश्च न जायते तावन्नाऽऽश्रमान्तरप्रवेशाधिकार इति। तावदधीतवेदैराश्रमान्तरप्रवेशः कार्यः, स त्वधीतवेदा(?देना)विप्लुतब्रह्मचर्येण च कार्यः। आह च – 'वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम्। अविप्लुतब्रह्मचर्यो गृहस्थाश्रममाविशेत्॥' (मस्मृ. ३।२) इति। तथा च श्रुतिः – 'आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे' (छाउ. ८।१५।१) इत्यादि। बौवि.

---

8 प्रकृतविधुरविषयमेतत्।

(१) वृहास्मृ. ८।८९-९०; यप्र. १०६ पुराणान्तरे.

(२) वृहास्मृ. ११।२१७.

(३) बौध. १।३।१; ब्रक. २६३; स्मृच. १।१६६; चका. ७७९ (पौराणं॰) चर्यम् + (आचरेत्); मुक्ता. ११९ (पौराणं॰) चर्यम् + (चरेत्); संप्र. ५५६ अष्टा (अष्ट) शेषं मुक्तावत् .

(४) बौध. १।३।२; ब्रक. २६३; स्मृच. १।१६६; चका. ७७९ शतिं (शति); मुक्ता. ११९ शतिं + (वा); संप्र. ५५६ (षट्त्रिंशत् चतुर्विंशतिर्द्वादश वा प्रतिवेदम्).

* मुक्ता. बौविगतम्।

(१) बौध. १।३।३; ब्रक. २६३ रावमं (रार्धं); चका. ७७९ रावमं (रार्धं) (काण्डम्॰); मुक्ता. ११९.

(२) बौध. १।३।४; ब्रक. २६३; चका. ७७९ (ग्रहणाद्वा); मुक्ता. ११९.

**[1]जीवितस्यास्थिरत्वात्॥**

(१) ब्रह्मचर्ये 'ग्रहणान्तं वा' इत्यत्र हेतुः 'जीवितस्यास्थिरत्वात्' इति। ब्रक. २६३

(२) अधुना ग्रहणान्तपक्षमेव स्थापयितुं हेतुमाह — जीवितस्येति। पौराणिकादिवेदब्रह्मचर्यचरणं न कार्यम्, श्रौतस्य कर्मणोऽग्निहोत्रादेर्विच्छेदप्रसङ्गात्। किमिति विच्छेदः? जीवितस्यास्थिरत्वात्। बौवि.

(३) ग्रहणान्तपक्ष एव युक्त इत्यत्र हेतुः — जीवितस्येति। मुक्ता. ११९

**[2]कृष्णकेशोऽग्नीनादधीतेति श्रुतिः॥**

ननु कश्चित्कर्ता तावन्तं कालं जीवेदिति तेनैवाग्निहोत्रादि करिष्यते। तस्मान्न पूर्वेषां पक्षाणां त्यागो युक्त इत्याशङ्क्य श्रुतिविरोधमेव दर्शयति — कृष्णकेश इति। अनया श्रुत्या विरोधात्स्मार्तानां पूर्वेषां पक्षाणां त्यागः। बौवि.

स्नातकावस्थायां दीप्तिरपि

ब्रह्मचर्यफलम्

**[3]यथा ह वा अग्निः समिद्धो रोचत एवं ह वा एष स्नात्वा रोचते य एवं विद्वान् ब्रह्मचर्यं चरतीति ब्राह्मणम्॥**

न केवलं ब्रह्मचर्यानुष्ठाने ब्रह्मचारिणो वेदग्रहणमेव फलम्, किं तर्हि? स्नातकावस्थायां दीप्तिरपीत्याह — यथेति। रोचते दीप्यते। बौवि.

चातुराश्रम्यखण्डनपूर्वकमैका-

श्रम्यस्थापनम्

**[4]तस्य ह वा एतस्य धर्मस्य चतुर्धा भेदमेक आहुरदृष्टत्वात् 'ये चत्वारः' इति, कर्मवादः॥**

एवं तावद्गार्हस्थ्यमुक्तम्। अधुनाऽस्यैव प्रशंसा — तस्येति। योऽसौ धर्मः श्रुतिस्मृतिशिष्टागमैः प्रसिद्धः, तस्यैतस्य धर्मस्य चातुर्विध्यमाश्रमचतुष्टयकृतमिति एके ऋषय आहुः। किमिति? यावत् दृष्टत्वान्मन्त्रार्थस्य तैः, यं दृष्ट्वैवमाहुः तस्यैतत्प्रतीकग्रहणं 'ये चत्वारः' (तैसं. ५।७।२।३) इति। चत्वारोऽप्याश्रमाः देवलोकयानाः पन्थानः इत्येव सत्यम्। अयं तावन्मन्त्रः कर्मवादः कर्मभेदमेव करोति, नाऽऽश्रमभेदम्। बौवि.

**ऐष्टिकपाशुकसौमिकदार्वीहोमाणाम्॥**

कानि पुनस्तानि कर्माणीत्याह — ऐष्टिकेति। स्वार्थ एवात्र तद्धितः। बौवि.

**तदेषाऽभिवदति — 'ये चत्वारः पथयो देवयाना अन्तरा द्यावापृथिवी वियन्ति। तेषां यो अज्यानिमजीतिमावहात्तस्मै नो देवाः परिदत्तेह सर्वे॥' (तैसं. ५।७।२।३-४) इति॥**

तत् कर्मचातुर्विध्यम् ऋक् एषा अभिवदति। कथम्? ऋषिर्वामदेवः, त्रिष्टुप्छन्दः, नवसस्यानि देवता। अज्यानिहोमे तदुपधाने च विनियोगः। य इमे चत्वारः पथयः पन्थानः देवः देवलोकः, 'भीमः, भीमसेनः' इतिवत्। तद्गमनहेतवः ऐष्टिकादयः द्यावापृथिव्योः अन्तरा मध्ये वियन्ति विविधं गच्छन्ति, विदिता इत्यर्थः। तेषामिति कर्मणि षष्ठी। तानि(?तान्)। अज्यानिमजीतिम्, क्रियाविशेषणे। अज्यानिम् अहानिम् अविगुणम् अजीतिं मध्यं य आवहात् आवहेत् अनुतिष्ठेत्, तस्मै नः अस्माकं मध्ये सस्यानि हे सर्वे देवाः, परिदत्त प्रयच्छत, श्रौतकर्मानुष्ठाने निःश्रेयसं दत्तेति मन्त्रार्थः। तदेतदैकाश्रम्ये सत्युपपद्यते, नाऽऽश्रमचातुर्विध्ये। कथम्? तदा हि(?तथा हि -) गृहस्थ एव स्यात्। तत्र च गृहस्थो वैदिकैः कर्मभिरधिक्रियते, नेतरे। तदेतदैकाश्रम्ये उपपन्नं भवति। ननु भेदपक्षेऽपि गृहस्थो वैदिकानि करोत्येव। सत्यम् अल्पविषयत्वं तदा शास्त्रस्य स्यात्। सर्वाधिकारं चेदं कर्मशास्त्रं विना कारणेन न बाधितुं युक्तम्।

किंच, बहुद्रव्यव्ययप्रयाससाध्यं कर्मजातं परित्यज्य पारिव्राज्यकान्येवाऽऽस्कन्दयेयुः पुरुषाः। यतस्तेनापि निःश्रेयसं लभन्ते, 'अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्' इति न्यायात्। ततश्च प्रत्यक्षश्रुतानामग्निहोत्रादिवाक्यानामप्रामाण्यमेवाऽऽपद्येत। तस्मादेषां चातुर्विध्यमेषाऽभिवदतीत्युपगन्तव्यम्। बौवि.

---

(१) **बौध.** १।३।५; **ब्रक.** २६३; **चका.** ७७९; **मुक्ता.** ११९.

(२) **बौध.** १।३।६; **ब्रक.** २६३ श्रुतिः (श्रुतेः); **चका.** ७७९ ब्रकवत्; **मुक्ता.** १९ : ११९ श्रुतिः (श्रुतिरपि).

(३) **बौध.** १।४।१०; **संर.** २८७ चरतीति + (हि).

(४) **बौध.** २।११।११-१४.

**ब्रह्मचारी गृहस्थो वानप्रस्थः परिव्राजक इति॥**

अमुमेवार्थमाऽध्यायपरिसमाप्तेः पूर्वोत्तरपक्षभङ्ग्या प्रदर्शयितुमाश्रमचातुर्विध्यं तावदुपन्यस्यति स्म — ब्रह्मचारीति। ब्रह्मचार्यत्र नैष्ठिको गृह्यते, नोपकुर्वाणः।

बौवि.

[1]**ऐकाश्रम्यं त्वाचार्या अप्रजननत्वादितरेषाम्॥**

नैवं भविष्यतीति वदन्तः अत्र ब्रूमः — ऐकाश्रम्यमिति। तुशब्दः पक्षं व्यावर्तयति। यदुक्तं 'चतुर्धा भेदमेक आहुः' (बौध. २।११।११) इति, तन्न, ऐकाश्रम्यम् एकश्चासावाश्रमश्च तद्भावः ऐकाश्रम्यम्। तच्च गार्हस्थ्ये, नैव परिव्रज्यादीनामन्यतम इत्याचार्यो मन्यते स्म। कुतः? अप्रजननत्वादितरेषां पारिव्राज्यादीनाम्, प्रत्यक्षश्रुतिविधानाच्च गार्हस्थ्यस्य 'प्रजातन्तुं मा व्यवच्छेत्सीः' (तैउ. १।११) 'तस्मात्प्रजननं परमं वदन्ति' (नाउ. ७९) इत्येवमादिना। तथा 'यावज्जीवं जुहुयात्' 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' (ईउ. २) 'तं यज्ञपात्रैर्दहन्ति' इति च। नन्वितरेषामपि प्रत्यक्षश्रुतिविधानमस्ति। तथा च छान्दोग्ये धर्मस्कन्धश्रुतिः — 'त्रयो धर्मस्कन्धाः। यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयः' (छाउ. २।२३।१) इति। तपःशब्देनात्र तापसपरिव्राजकयोर्ग्रहणम्। सत्यम्, यद्यत्र विधिप्रत्ययोऽस्ति। स तावन्नास्ति। नाप्यध्याहारः, अनुपपत्तेरभावात्, प्रणवस्य स्तुत्यर्थत्वात्तेषामुपादानस्य। तस्मादैकाश्रम्यमेव साधीयः। अपि च अप्रजननत्वादितरेषाम्। प्रजननमत्र पुत्रोत्पत्तिः। सा चेतरेषां नास्ति। तया चावश्यं भवितव्यमित्युक्तं 'प्रजातन्तुम्' इत्यादिश्रुतिप्रदर्शनेनेति।

बौवि.

[2]**तत्रोदाहरन्ति — प्राह्लादिर्ह वै कपिलो नामाऽसुर आस। स एतान्भेदांश्चकार देवैः सह स्पर्धमानस्तान् मनीषी नाऽऽद्रियेत॥**

(१) **बौध**. २।११।२९; **मुक्ता**. १६७ जननत्वा (जनत्वा) : १७२ (ऐकाश्रम्यं त्वाचार्याः प्रत्यक्षविधानात् गार्हस्थ्यस्य) गौतमबोधायनौ.

(२) **बौध**. २।११।३०-३६.

8आह — यदि न श्रुतिप्रभवा इतरे त्रय आश्रमाः, किंप्रभवास्तर्हि? रागद्वेषादिमत्पुरुषबुद्धिप्रभवा इत्याह — तत्रेति। सैषा श्रौतगार्हस्थ्यस्य प्रशंसा, स्मार्तेतराश्रमाभावादेव। प्रह्लादस्यापत्यं प्राह्लादिः। भेदान् आश्रमाणाम्। देवस्पर्धयाऽसुरेण यस्मात्कृता आश्रमभेदाः तस्मात् तान् मनीषी नाऽऽद्रियेत्। मनीषी मनस्वी प्राज्ञ इत्यनर्थान्तरम्।

**अदृष्टत्वात्, 'ये चत्वारः' इति कर्मवाद ऐष्टिकपाशुकसौमिकदार्वीहोमाणाम्॥**

निगमनार्थः पुनरुपन्यासः। अतोऽप्रजननत्वादितरेषां प्रत्यक्षश्रुतिविधानाच्च गार्हस्थ्यस्यैकाश्रम्यमेव निःश्रेयसकरम्। उक्तं च — 'गृहस्थोऽपि विमुच्यते' (यास्मृ. ३।२०५) इति। बौवि.

**तदेषाऽभ्यनूच्यते — 'एष नित्यो महिमा ब्राह्मणस्य। न कर्मणा वर्धते नो कनीयान्। तस्यैवाऽऽत्मा पदवित्तं विदित्वा। न कर्मणा लिप्यते पापकेन॥' (तैब्रा. ३।१२।९८७) इति॥**

स्यादेतत् δनैव हि कर्मणां मोक्षोपायत्वमस्ति, प्रमाणाभावात्। न तावत्प्रत्यक्षं प्रमाणम्, विद्यमानोपलम्भनत्वात्तस्य। नाप्यनुमानम्, संबन्धग्रहणाभावात्। न खल्वपि शब्दः। कथम्? लौकिकस्तावत्, मूलज्ञानाभावादसमर्थः। वेदवाक्यानि पुनः प्रातिस्विकफलदायीनि कर्माणीति(?यिकर्मपराणि) श्रूयन्ते। यदपि 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' (आपश्रौ. ८।१।१) इति, तदेतदपि चिरेण क्षयमालोच्य

8 आहेति पदं पूर्वसूत्रव्याख्यानान्ते मुद्रितमस्ति। तत्र तन्नान्वेति, अत्र चान्वेतीत्यत्रानुकृष्टमस्माभिः।

δ "'स्यादेतत्' इत्यादिः 'ब्रह्मविदाप्नोति परम्' इति" इत्यन्तोऽयं ग्रन्थः पूर्वसूत्रव्याख्यानशेषत्वेन मुद्रितोऽस्तीति महदाश्चर्यम्। तथाहि — ग्रन्थोऽयं पूर्वपक्षविषयः। पूर्वसूत्रं सिद्धान्तविषयम्। न हि पूर्वपक्षग्रन्थस्य सिद्धान्तसूत्रव्याख्यानशेषत्वं संभवति। प्रकृतसूत्रं पूर्वपक्षविषयम्। तच्च 'तदेषाऽभ्यनूच्यते' इति प्रमाणोपन्यासपरेण वाक्येनोपक्रान्तम्। न हि अप्रकृते प्रमेये प्रमाणोपन्यासो युज्यते, नापि सूत्रकाराणां तादृशी रीतिर्दृष्टचरा। तथा च प्रत्यवस्थानमिदं युक्तिरीतिविरुद्धमित्यवगम्य, सूत्रकारबुद्धिस्थितं च पूर्वपक्षप्रमेयमर्थापत्त्या प्रकल्प्य तदनुवादरूपेणानेन ग्रन्थेन व्याख्यात्रा प्रमेयस्य प्रकृतत्वं संपादितम्। अतोऽयं ग्रन्थः प्रकृतसूत्रव्याख्यानोपक्रम एवेति न संदिग्धम्। अतोऽस्माभिरत्रानुकृष्टः।

भवतीति, यथा नक्तं संस्थापनवचनं 'असंस्थितो हि तर्हि यज्ञः' इति चिरेण संस्थामालोच्य, तद्वदेवाऽऽपाततः। न कृत्स्नेभ्योऽपि वेदकर्मभ्यो मोक्ष इतीदृशं वाक्यमस्ति। यद्यप्यस्ति तथाऽपि तदन्यार्थत्वेन नेतुं शक्यते। उपमानादि तु दूरोत्सारितम्। यच्च भगवद्गीतासु वचनम् — 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' (भगी. ३।२०) इति, तदपि सिद्धे सत्युपायत्वे कर्मणोऽवधारणं ब्रूयात्। तदेवाद्याप्यसिद्धम्। अतस्तदप्यन्यार्थमेव। तस्मात्कर्मणां न मोक्षोपायत्वे प्रमाणमस्ति। अस्ति तु ज्ञानस्य 'ब्रह्मविदाप्नोति परम्' (तैउ. २।१) इति।

अधुना केवलज्ञानात् कर्मरहितादेव मुक्तिरित्यस्मिन्नर्थे ऋगप्यस्तीत्याह — तदिति। वामदेव ऋषिः काण्डऋषिर्वा। त्रिष्टुप्छन्दः। ज्ञानप्रशंसा। एष आत्मेति संबध्यते। नित्यो महिमेति पदद्वयं स्वयमेव न्यासविधौ विवरिष्यति 'अपुनर्भवं नयतीति नित्यः, महदेनं गमयतीति महिमा' (बौध. २।१७।९, १०) इत्यत्र। यद्वा नित्यः सर्वदा सः, महिमा महान् सर्वत्रास्तीति स एष परमात्माऽभिप्रेतः। ब्राह्मणस्येति जात्यवच्छिन्नः सोपाधिकः क्षेत्रज्ञवर्ती च तयोरव्यतिरेकार्थः। परमात्मा न कर्मणा अग्निहोत्रादिना वर्धते तत्फलभुग्भवति। अतस्ततोऽन्यः कर्ता भोक्ता च। तथा नो अपि (न?) कनीयान् कर्मणा ब्रह्महत्यादिना निकृष्टः नरकभाग्भवतीत्यर्थः। यतोऽसौ पापमपि न करोति तस्मादेव तस्य ब्राह्मणस्य सोपाधिकस्य। एवशब्दः पादपूरणः, अवधार्याभावात्। तस्य आत्मा परमात्मा पदवित्। पद्यते गम्यतेऽनेनार्थ इति वेदः पदम्। अत एव 'नावेदविन्मनुते तं बृहन्तम्' (तैब्रा. ३।१२।९।७) इत्युक्तम्। सततमात्मानमभेदेन विदित्वा न कर्मणा लिप्यते पापकेन शुभेन च। तदुक्तम् — 'सम्यग्दर्शनसंपन्नः कर्मभिर्न स बध्यते' इति। तथा — 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥' (मुउ. २।२।८) इति। बौवि.

**स यद्ब्रूयात् — 'येन सूर्यस्तपति तेजसेद्धः पिता पुत्रेण पितृमान्योनियोनौ। नावेदविन्मनुते तं बृहन्तं सर्वानुभूमात्मानं सांपराये॥' (तैब्रा. ३।१२।९।७) इति॥**

एवं स्पष्टभाषिणा केवलज्ञानवादिना यः पर्यनुयुक्तः स ब्रूयात् परिहारत्वेनाधस्तनीमृचमित्यर्थः। सत्यमाह भवान् यदि केवलादेव ज्ञानात्सर्वभेदप्रत्ययनिबर्हणान्मोक्ष इति, न त्वेतदेवम्। अपि कर्मणः। ननु 'एष नित्यो महिमा' इत्युक्तम्। सत्यम्, ज्ञानात्। तत्तु न कर्म निषेधति। ननु कर्मणां मोक्षं प्रत्यनुपायत्वात् निषेधत्येवेत्युक्तम्। मोक्षानभिज्ञः कर्मद्वेषी देवानांप्रियः। मोक्षेऽपि ना(?मोक्षो नामा)ऽऽत्मनः शरीरपरिग्रहाभावः। स च प्रागभावः प्रध्वंसाभावो वा? न तावदात्मज्ञानेन शरीरं प्रध्वस्तम्, प्रत्यक्षविरोधात्। तदुक्तं 'बुद्धे चेत्क्षेमप्रापणमिहैव न दुःखमुपलभेत' इति। अथ मन्यसे सुखदुःखोपभोगार्थानि देहारम्भकाणि पुण्यापुण्यान्यदृष्टानि कर्माणि क्षीयन्त इति। तदुक्तम् — 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' (मुउ. २।२।८) इति। तदपि न, न हि कर्म क्षीयते फलमदत्त्वेत्याहुः। ननु प्रायश्चित्तेन क्षीयत इति त्वयाऽभ्युपगतमेव। नैतदेवम्, न हि तत्रापि चान्द्रायणादिभिः पापकर्म प्रध्वंस्यते। दुःखानुभवप्रकारोऽयं वाचनिकः, यथौषधपानम्, यथा चोपवासादिना शुष्कगात्रो ज्वरादिना नाभिभूयते, तद्वदेतदपि। तदा मोक्ष(? मोक्षः)प्रागभाव इति वदामः। सुखदुःखोपभोगार्थं देहग्रहणम्। तच्च(? ततश्च) (सुखदुःखं च?) काम्यप्रतिषिद्धासेवया नित्यनैमित्तिककर्मानुष्ठानाच्च मोक्षसिद्धिः। आहुश्च मीमांसकाः — 'नित्यनैमित्तिके कुर्यात्प्रत्यवायजिघां(?जिहा)सया। मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः॥' (श्लोकवार्तिकम्) इति। तद्धेतुकमा(?तुः कर्मा)त्मज्ञानम्, तदर्थानि चोपनिषद्वाक्यानि। एवमुपपद्यमाने नान्यथा कल्पयितुं युक्तम्। न चाऽऽत्मानं मोक्षयेदेवेति(? मोक्षायैवेति) वेदेन चोद्यते 'आत्मा ज्ञातव्य इत्येतन्मोक्षार्थं न च चोद्यते। कर्मप्रसिद्धिसिद्ध्यर्थ(?प्रवृत्तिहेतुत्वम्) आत्मज्ञानस्य लभ्यते॥' (श्लोकवार्तिकम्) कथं तर्हि? अयं परिहारः — 'येन सूर्यः' इति ज्ञानकर्मसमुच्चयाभिधानात्. साजात्येन तत् यद्यत्स्यात्। (योनियोनौ) प्रजनने प्रजनन इत्यर्थः। ईदृक्कर्म मोक्षायालं भवतीत्यभिप्रायः। अतो न अवेदवित् अवेदार्थवित् तत्कर्मकृच्च मनुते जानाति कर्मठः परमात्मानं बृहन्तं

सर्वानुभवितारं सांपराये अपवर्गे। निमित्तसप्तम्येषा।
बौवि.

**'इमे ये नार्वाङ् न परश्चरन्ति न ब्राह्मणासो न सुते — करासः। त एते वाचमभिपद्य पापया सिरीस्तन्त्रं तन्वते अप्रजज्ञयः॥' (ऋसं.१०।७१।९) इति॥**

अवेदविन्न मनुते न जानाति इत्येतदुक्तं विस्तरेण। किं च — इम इति। बृहस्पत्यार्षत्रि(? र्षं त्रि)ष्टुप्छन्दः। अज्ञाननिन्दया ज्ञानकर्मप्रशंसा। यत्तदोर्व्यत्यासः कर्तव्यः। इमे जना वाचं वेदम् अभिपद्य अधीत्य पापया वाक्प्रतिरूपया धीराः तमसि शेत इति सिरीः शरीरं तन्वते विस्तारयन्ति वेदविप्लवादिना पोषयन्तीत्यर्थः। तत्र-(?तन्त्रं) कर्म अप्रजज्ञयः अजानन्तः अवेदार्थज्ञा इति यावत्। एते नार्वाङ् न अर्वाञ्चः नापि पराञ्चः चरन्ति उभयभ्रष्टा इत्यर्थः। न ते ब्राह्मणाः नापि सुतेकरासः सुतस्याकर्तारः अभिषवाद्यकर्तारः अयष्टारः। अप्रजज्ञयो यद्यपि तन्तुं(? तन्त्रं) तन्वते तथापि न सुतेकरासो भवन्ति। बौवि.

**'प्रजाभिरग्ने अमृतत्वमश्याम्'(ऋसं. ५।४।१०) 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः' (तैसं. ६।३।१०।५) इति। एवमृणसंयोगादीन्यसंख्येयानि भवन्ति॥**

किंच — प्रजाभिरिति। अमृतत्वं जननमरणशून्यत्वम्, मुक्तिरित्यनर्थान्तरम्। आश्रमभेदे सति कथमेवं ब्रूयात्? ऋणवान्। 'अनन्तराः पुत्राणां लोकाः' 'ऋणमस्मिन् संनयति' 'ज्योत्स्ना ह पुत्रं परमे व्योमन्' 'न प्रजात्वति गुणः' इत्यादि। तस्मादप्यैकाश्रम्यमेव ज्यायः।
बौवि.

**'त्रयीं विद्यां ब्रह्मचर्यं प्रजातिं श्रद्धां तपो यज्ञमनुप्रदानम्। य एतानि कुर्वते तैरित्सह स्मो रजो भूत्वा ध्वंसतेऽन्यत्प्रशंसन्'॥ इति॥**

त्रयाणां वेदानां समाहारस्त्रयी। ब्रह्मचर्यमित्यपावरणे। तैरेव सह सार्धं स्मः भवामः, नान्यैरन्यतरोपासकैर्वा। यस्त्वन्यतरदेवोपास्ते ज्ञानं कर्म वा प्रशंसन् स रजो भूत्वा प्रध्वंसते। रजः पापं रजस्वलेति यथा। यद्वा रजः सूक्ष्माणि चूर्णानि। यथा तानि क्वचिदपि नावतिष्ठन्ते तद्वन्नाऽऽस्पदं लभते। अथवा गुणो रजः 'सत्त्वं रजस्तम इति' (भगी. १४।५) इति। अस्मिन् पक्षे मतुपो लोपो द्रष्टव्यः। आहोपुरुषिकयाऽन्यतरदेव प्रशंसन् रजस्वलो भूत्वा ध्वंसते। तस्मात् ज्ञानकर्मसमुच्चयः साधीयान्।

नन्वाश्रमभेदो नास्तीत्युक्तम्, किमिदं प्रलप्यते त्रयीं विद्यामिति? अविवेकापराधोऽयम्, नाऽऽयुष्मतो दोषः। श्रौते नास्तीत्युक्तम्, न पुनः स्मार्तेऽपि नास्तीति। असंख्येयानि स्मृतिवाक्यानि सन्ति 'ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा, वनाद्वा' 'तस्याऽऽश्रमविकल्पमेके ब्रुवते' (गौध. ३।१) इति। आह च आश्रमसमुच्चयम् 'द्वितीयमायुषो भागम्' (मस्मृ. ५।१६९) 'तृतीयम्' (मस्मृ. ६।३३) इति। तथा चाऽऽपस्तम्बः — 'चत्वार आश्रमा गार्हस्थ्यमाचार्यकुलं मौनं वानप्रस्थ्यम्' (आध. २।२१।१) इति। तत्र भेदे सति आश्रमाणां बाधो विकल्पः समुच्चयो वा संभवति। तत्र मानवे बाधपक्षः सहेतुकः प्रतिपादितः — 'सर्वेषामपि चैतेषां वेदश्रुतिविधानतः। गृहस्थ उच्यते श्रेष्ठः स त्रीनेतान् बिभर्ति हि॥' (मस्मृ. ६।८९)। वेदश्रुत्या हि गृहस्थस्य स्त्र्य(?स्त्र्यु)पादानप्रभृत्या श्मशानकरणात्सर्वं विधीयते स्मृत्या। भाष्यकारोऽपि बहु मन्यते स्मास्य च गृहस्थाश्रमस्य वेदे श्रुतिविधानतः श्रैष्ठ्यवचनात्तदविरोधे-नाऽऽश्रमान्तरप्रतिपत्तिरवगम्यते इति वदन्। गौतमोऽपि तुशब्देनेतरौ पक्षौ व्यावृत्य सहेतुकममुं पक्षमेवोपसंहृतवान् — 'ऐकाश्रम्यं त्वाचार्याः प्रत्यक्षविधानाद्गार्हस्थ्यस्य' (गौध. ३।३६) इति। आचार्याभिप्रायस्तु विस्तरेण प्रदर्शितः। तस्मात्सूक्तं - 'ये चत्वारः पथयो देवयानाः' इति कर्मवादः, नाऽऽश्रमवाद इति।
बौवि.

संन्यासस्याधिकारः इतिकर्तव्यता च

**[1]अथातः संन्यासविधिं व्याख्यास्यामः॥**

(१) संन्यासविधिं चतुर्थाश्रमेतिकर्तव्यताम्।
मोक. ३७

(२) सम्यक् न्यासः प्रतिग्रहाणां संन्यासः। विधिः विधानमितिकर्तव्यता। बौवि.

---

(१) **बौध.** २।१७।१; **अप.** ३।५५-५६ पृ. ९४७; **मोक.** ३३.

**[1]सोऽत एव ब्रह्मचर्यवान् प्रव्रजतीत्येकेषाम्॥**

(१) ब्रह्मचर्यवान् अविप्लुतब्रह्मचर्यः। एकेषाम्, दर्शनमिति शेषः। मोक. ३७

(२) स इति सर्वनाम्ना निर्दिश्यते। स च गर्भाधानादिसंस्कारैः संस्कृतः अधीतवेदः चीर्णव्रतो गृहस्थाश्रमप्राप्तियोग्यो गृह्यते। तत्राऽपि दृष्टानुश्रविकविषयवितृष्णस्य ब्रह्मविदो ब्रह्मचर्यादेव संन्यासेऽधिकारः, नान्यस्य। इदमपरं तस्य विशेषणं ब्रह्मचर्यवानिति। अतश्च विप्लुतब्रह्मचर्यस्यापि चरितनिर्वेषस्य गृहस्थसंन्यासवनाश्रमाधिकारः। प्रव्रजति प्रकर्षेण व्रजति, न प्रत्यावर्तते इत्यर्थः। तत्र दोषामाह — 'चाण्डालाः प्रत्यवसिताः परिव्राजकतापसाः। तेषां जातान्यपत्यानि चाण्डालैः सह वासयेत्॥' (दस्मृ. ४।२०) (संवासात्?) तत्र प्रायश्चित्तं संवर्त आह — 'संन्यस्य दुर्मतिः कश्चित्प्रत्यापत्तिं व्रजेत्तु यः। स कुर्यात्कृच्छ्रमश्रान्तं षाण्मासात्प्रत्यनन्तरम्॥' (संस्मृ. १७१-१७२) इति। एतदेकेषां मतम्। बौवि.

**[2]अथ शालीनयायावराणामनपत्यानाम्॥**

अथ परेषामाह — अथ शालीनेति। शालीनया(?ना या)यावरा इति च गृहस्थानामेव केनचिद्वृत्तिविशेषेण संज्ञामुत्तरस्मिन्नध्याये वक्ष्यति। अनपत्याश्चेदेतेऽपि प्रव्रजेयुः। बौवि.

**[3]विधुरो वा॥**

(१) विधुरे मृतभार्ये पुरुषे संन्यासमुपदिशन्ति इत्यन्वयः। मोक. ३७

(२) एवमथ सापत्यानामपि — विधुर इति। स्वस्मिन् संजात इति शेषः। विधुरः मृतभार्यः भार्यान्तरोपादानासमर्थश्च गृह्यते।

बौवि.

(१) **बौध.** २।१७।२; **अप.**३।५५-५६ पृ. ९४७; **मभा.** ३।१ (सोऽत एव ब्रह्मचर्यात्प्रव्रजति) स्मृतिः; **मोक.** ३३; **गौमि.** ३।१ सोऽत (अत) (एकेषाम्॰); **मुक्ता.** १७२ सोऽत (अत).

(२) **बौध.** २।१७।३; **अप.** ३।५५-५६ पृ. ९४७; **मोक.** ३३; **मुक्ता.** १७२.

(३) **बौध.** २।१७।४; **अप.** ३।५५-५६ पृ. ९४७ (विधुरे व); **मोक.** ३३ (विधुरे वा); **बौवि.** मोकवत्पाठः संभवति; **मुक्ता.** १७२.

**[1]प्रजाः स्वधर्मे प्रतिष्ठाप्य वा॥**

सांप्रतमविधुरस्यापि सापत्यस्याऽऽह — प्रजा इति। स्वयमसमर्थस्याग्निहोत्रादिषु समर्थापत्यस्याधिकारः।

बौवि.

**[2]सप्तत्या ऊर्ध्वं संन्यासमुपदिशन्ति॥**

अयमपरः कालनियमः पूर्वैः समुच्चीयते विकल्पार्थो वैराग्यापेक्षया — सप्तत्या इति। प्रायशः सप्तत्या ऊर्ध्वमेव भार्याः निवृत्तरजस्काः, गार्हस्थ्यधर्मानुष्ठानासामर्थ्यं वा भवतीति मत्वोक्तं सप्तत्या ऊर्ध्वमिति।

बौवि.

**वानप्रस्थस्य वा कर्मविरामे॥**

(१) कर्मविरामे कर्मानुष्ठानसामर्थ्योपरमे।

मोक. ३७

(२) विरामः अवसानम् असामर्थ्यम् आश्रमविहितधर्मानुष्ठाने। अस्यामवस्थायां प्रव्रज्य अप्रव्रज्य वा वानप्रस्थेनापि ध्यानपरायणेन भवितव्यं वानप्रस्थान्तरेभ्य एव भैक्षमाददानेन। उक्तावस्थाव्यतिरिक्तावस्थासु कृतोऽपि संन्यासोऽकृत एव भवति।

बौवि.

**[3]एष नित्यो महिमा ब्राह्मणस्य**
**न कर्मणा वर्धते नो कनीयान्।**
**तस्यैवाऽऽत्मा पदवित्तं विदित्वा**
**न कर्मणा लिप्यते पापकेनेति॥**

(१) एष इति। 'येन सूर्यस्तपति' इति श्रुत्या अभिहितस्याऽऽत्मनो व्यपदेशः। ब्राह्मण्यस्य संबन्धीति शेषः। अनेन ब्राह्मणस्य संन्यासेऽधिकार इति दर्शयति। स च नित्य आत्मा न कर्मणा वर्धते पुण्येन, नो कनीयान्, पापेनेति शेषः। तस्यैव परब्रह्मण आत्मा स्वरूपं पदवित्। पद्यते गम्यतेऽनेनेति पदमत्र वेदः।

मोक. ३७

(१) **बौध.** २।१७।५; **अप.** ३।५५-५६ पृ. ९४७ प्रजाः (प्रजां); **मोक.** ३३ अपवत्; **मुक्ता.** १७२ अपवत्.

(२) **बौध.** २।१७।६-७; **अप.** ३।५५-५६ पृ. ९४७; **मोक.** ३३; **मुक्ता.** १७२.

(३) **बौध.** २।१७।८-१०; **अप.** ३।५५-५६ पृ. ९४७; **मोक.** ३३.

(२) संप्रत्युक्तलक्षणानामप्यनात्मविदां संन्यासाधिकाराभावं दर्शयितुमृचं पठति – एष नित्य इति। सैषाऽऽश्रमचातुर्विध्यप्रस्तावे (बौध.२।११।३२) अस्माभिर्व्याख्याता। तं विदित्वेत्येतदत्रोपयुज्यते। बौवि.

**अपुनर्भवं नयतीति नित्यः॥**

अस्यामृचि नित्यो महिमेति पदद्वयमस्ति। तत्तावदुपपादयति – अपुनर्भवमिति। पुनर्भवः पुनर्जन्म, तदभावं नयतीति नित्यः, पदविन्या(?वित्संन्या)सेनेत्यर्थः। बौवि.

**महदेनं गमयतीति महिमा॥**

स्पष्टार्थमेतत्। बौवि.

***[1]आत्मानमात्मनाऽऽश्रमादाश्रममुपनीय ब्रह्मपूतो भवतीति विज्ञायते॥**

(१) ब्रह्मशब्देन सावित्र्यत्रोच्यते। पूतः विधूतपापः भवत्येवेत्यर्थः। मोक. ३७

(२) एवम् – आत्मानमिति। आश्रमान्तरमिति वचनात्त्रिवृत्प्राशनेनैव संन्यासः कृत इत्येतदेकीयं दर्शनम्। बौवि.

[2]**अथाप्युदाहरन्ति –**

**'आश्रमादाश्रमं गत्वा हुतहोमो जितेन्द्रियः।**

**भिक्षाबलिपरिश्रान्तः पश्चाद्भवति भिक्षुकः॥' इति॥**

(१) पुनराश्रमग्रहणेन सावित्र्यनुप्रवेशादूर्ध्वं पुनरावृत्त्यभाव उच्यते। मोक. ३७

(२) अथापरेषाम् – आश्रमादिति। न केवलं त्रिवृत्प्राशनादेव भिक्षुकः। किं तर्हि? वक्ष्यमाणैर्होमादिभिरपि। भिक्षुकः इति 'संज्ञायां कन्' (पासू. ५।३।७५) इति कन्प्रत्ययः। बौवि.

[3]**स एष भिक्षुरानन्त्याय॥**

(१) कल्पत इति शेषः। मोक. ३७

(२) अनन्त एवाऽऽनन्त्यम्, स चाऽऽत्मा, तद्भावाय भवतीत्यर्थः। बौवि.

वेदसंन्यासिकलक्षणम्

[1]**एवमेवैष आ शरीरविमोक्षणाद्वृक्षमूलिको वेदसंन्यासिकः॥**

वेदसंन्यासिको गृहस्थः एव कृतकरणीयोऽभिधीयते। न हि वेदसंन्यासोऽस्ति, शास्त्रविरोधात्। अतस्तदर्थानुष्ठानाय प्रतिग्रहादीनां वृत्तिकर्मणां संन्यासो यस्येत्यर्थः। अवसन्नशरीरो जरसा कृतसंप्रतिविधानो वा पुत्रोपहृतवृत्तिस्तस्याऽयमुपदेशः – आ शरीरविमोक्षणात् वृक्षमूलिक इति। अथ यस्तावत्समर्थो गृहात् प्रव्रज्यायाः तस्य यथाशास्त्रं सैव भवति। असमर्थस्य पुनरुत्सृष्टाग्नेः शास्त्राद्वा इयमेव व्यवस्थोच्यते। प्रव्रज्या च वैकल्पिकी। एवं प्रव्रज्यानन्तरमुपदेशो युज्यत इति। आह च – 'वेदसंन्यासिकानां तु कर्मयोगं निबोधत।' (मस्मृ. ६।८६) इत्यभिप्रायः कृतविधानो वा आसीताऽऽमृतदर्शनादिति(?)8 । एवमिति वक्ष्यमाणं प्रणवध्यानं परामृश्यते। एतदुक्तं भवति – परमसंयमवान् परमात्मध्यानैकावलम्बनः पुत्रैश्वर्ये सुखमासीतेति। बौवि.

[2]**वेदो वृक्षस्तस्य मूलं प्रणवः॥**

वृक्षमूलिक इत्युक्तं तत्राऽऽह – वेदो वृक्ष इति। वृक्षो व्रश्चनात् पापस्य। प्रणवपूर्वत्वाद्वेदारम्भस्य मूलव्यपदेशः। बौवि.

शालीनयायावरचक्रचरलक्षणानि

[3]**शालाश्रयत्वाच्छालीनत्वम्। वृत्त्या वरया यातीति यायावरत्वम्। अनुक्रमचरणाच्चक्रचरत्वम्॥**

---

* 'आत्मानमात्मना' इत्ययमंशः संपादकैः टीकांशत्वेन प्रमादात्परिगृहीतः।

(१) **बौध.** २।१७।१५; **अप.** ३।५५-५६ पृ. ९४७ श्रममुप (श्रमान्तरमुप) पूतो (भूतो); **मोक.** ३४.

(२) **बौध.** २।१७।१६; **अप.** ३।५५-५६ पृ. ९४७; **मोक.** ३४ हुत (कृत).

(३) **बौध.** २।१७।१७; **अप.** ३।५५-५६ पृ. ९४७; **मोक.** ३४.

8 अत्र 'प्रायः कृतविधानो....मृतदर्शनात्।' इत्यर्धश्लोकः प्रतिभासते।

(१) **बौध.** २।१८।२९; **मोक.** ५५ मेवैष (मेव) न्यासिकः (न्यासी); उ. २।२१।१० (वृक्षमूलिको वेदसंन्यासी) एतावदेव; **मुक्ता.** १९८ (वृक्षमूलिको भवेत्संन्यासी) एतावदेव; **यसं.** ७१ उवत्; **यप्र.** ५४, ७१ (वृक्षमूलकोविदः संन्यासी) एतावदेव.

(२) **बौध.** २।१८।३०; **मोक.** ५५; **उ.** २।२१।१०; **यसं.** ७१ स्तस्य मूलं प्रणवः (प्रणवस्तस्य मूलम्); **यप्र.** ५४, ७१ यसंवत्.

(३) **बौध.** ३।१।३; **गृक.** १७७ (शालाश्रयत्वाच्छालीनत्वम्। अनुक्रमचरणाच्चक्रचरत्वम्। वृत्त्या वरया यातीति यायावरत्वम्); **गृर.** ४२२ (शालाश्रयत्वाच्छालीनत्वम्)। (अनुक्रमणाचरणाच्चक्रचरत्वम्। वृत्त्या वरया यातीति यायावरत्वम्।); **निप्र.** २।२६३.

अन्वर्थसंज्ञा एताः। विस्तीर्णाभिः शालाभिर्युक्ताः शालीनाः। यथा – 'जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस। स ह सर्वत आवसथान् मापयांचक्रे सर्वत एव मेऽन्नमत्स्यन्तीति' (छाउ. ४।१)। तद्वदेतेऽपीति। खप्रत्ययो मत्वर्थीयः। अनुक्रमेण चरणम् अनुक्रमचरणम्। यायावराणामेवैषा संज्ञा। अनुक्रमचरणं नाम विप्रक्षत्रियविशां गेहेषु पूर्वस्य पूर्वस्याभावे उत्तरोत्तरचरणम्। वृत्त्या वरया उत्कृष्टया यापयत्यात्मानमिति। णिचो लोपोऽत्र द्रष्टव्यः।

बौवि.

वानप्रस्थभेदाः सलक्षणाः

[1]**अथ वानप्रस्थस्य द्वैविध्यम्॥**

वक्ष्यत इति शेषः। तच्च वृत्तिविशेषकृतम्।

बौवि.

[2]**पचमानका अपचमानकाश्चेति॥**

तदाह – पचमानका इति। अग्निपक्वाशिनः अनग्निपक्वाशिनश्चेति सूत्रार्थः। बौवि.

[3]**तत्र पचमानकाः पञ्चविधाः – सर्वारण्यका वैतुषिकाः कन्दमूलभक्षाः फलभक्षाः शाकभक्षाश्चेति॥**

अत्राप्याह (?तत्रापि भेदानाह) – तत्रेति। एते पचमानकप्रभेदाः। बौवि.

[4]**तत्र सर्वारण्यका नाम द्विविधाः द्विविधमारण्यमाश्रयन्तः – इन्द्रावसिक्ता रेतोवसिक्ताश्चेति॥**

अरण्ये भवमारण्यम्। तच्च द्विविधम् – वल्ल्यादयो मृगादयश्च। तत्र वल्ल्यादिभक्षा इन्द्रावसिक्ताः। इन्द्रेण देवेन पर्जन्यरूपिणा वृष्ट्या सिक्ताः वर्धिताः वल्ल्यादयः। उक्तं चाऽऽचार्येण – 'अथास्य कर्मणस्सा-(?रसा)नुप्रदानं पितृ(?वृत्र) वधो या च का च बलिप्रकृति (?लकृति) रिन्द्रकर्मैव तत्' (नि. ७।१०) इति। तथा रेतोवसिक्ताः मृगमांसाशिनः। रेतसा हि हेतुभूतेन अवसिक्तानि मांसानि। तदाश्रयात् सर्वारण्यकानां च द्वैविध्यम्।

[1]**तत्रेन्द्रावसिक्ता नाम वल्लीगुल्मलतावृक्षाणामानयित्वा श्रपयित्वा सायं प्रातरग्निहोत्रं हुत्वा यत्यतिथिव्रतिभ्यश्च दत्त्वाऽथेतरच्छेषभक्षाः॥**

तदिदानीं प्रपञ्चयति – तत्रेति। भवेयुरित्यध्याहार्यम्। वल्ल्यादीनां फलानि आनयित्वा आनीय। यतयः भिक्षुकाः। अतिथयः प्रसिद्धाः। व्रतिनः ब्रह्मचारिणः। वल्ल्यादिफलानामग्निहोत्रद्रव्यत्वेन विधानात् नित्यानां पयआदिद्रव्याणां निवृत्तिः। इतरद्भक्षाः शेषभक्षाश्चेति विग्रहः। इतरद्भक्षाः इति सिद्धे शेषभक्षा इति वचनं अग्निहोत्रशेषे यात्रा(?यत्यादि)निर्यातितशेषे च वैश्वदेवप्राप्त्यर्थम्। इतरदपि शेषं कृत्वा भक्षयेदित्यर्थः।

बौवि.

[2]**रेतोवसिक्ता नाम मांसं व्याघ्रवृकश्येनादिभिरन्यतमेन वा हतमानयित्वा श्रपयित्वा सायं प्रातरग्निहोत्रं हुत्वा यत्यतिथिव्रतिभ्यश्च दत्त्वाऽथेतरच्छेषभक्षाः॥**

अथेतरानाह – रेतोवसिक्ता इति। अस्यापि पूर्वैव व्याख्या। बौवि.

**वैतुषिकास्तुषधान्यवर्जं तण्डुलानानयित्वा श्रपयित्वा सायं प्रातरग्निहोत्रं हुत्वा यत्यतिथिव्रतिभ्यश्च दत्त्वाऽथेतरच्छेषभक्षाः॥**

अथ पचमानकानां द्वितीयानाह – वैतुषिका इति। तुषधान्यवर्जद्रव्याहरणस्य प्रयोजनं तत्स्वीकारोऽपि कथं नु नाम स्यादिति। बौवि.

[3]**कन्दमूलफलशाकभक्षाणामप्येवमेव॥**

अथेतरान् त्रीन् समुच्चित्याऽऽह – कन्दमूलेति। एवमिति आनयित्वेत्यादीति शेषः। बौवि.

**पञ्चैवापचमानकाः – उन्मज्जकाः प्रवृत्ताशिनो 8मुखेनाऽऽदायिनस्तोयाहारा वायुभक्षाश्चेति॥**

---

(१) **बौध**. ३।३।१; **मोक**. २२.

(२) **बौध**. ३।३।२; **मोक**. २२ का अपच (काश्चापच) श्चेति (श्च).

(३) **बौध**. ३।३।३; **मोक**. २२ का वैतुषिकाः कन्द (कवैतुषिककन्द) क्षाश्चेति (क्षा इति).

(४) **बौध**. ३।३।४; **मोक**. २२ द्विविध (विविध).

8 वाक्येन संज्ञात्वाप्रतीतेरार्षोऽयमलुक्समास इति प्रतिपत्तव्यम्, शालीनादिवदेतासामप्यन्वर्थसंज्ञात्वस्य युक्तत्वात्। अत एववाग्रे 'मुखेनादायिप्रभृतीनाम्' इति व्याख्यातृप्रयासः सुसाधः। तथा 'संज्ञासिद्धम्' इति व्याख्यात्रा संज्ञात्वं स्पष्टमुक्तम्।

(१) **बौध**. ३।३।५; **मोक**. २२ वल्ली (वल्लि) (श्रपयित्वा॰) व्रतिभ्य (प्रभृतिभ्य).

(२) **बौध**. ३।३।६-७.

(३) **बौध**. ३।३।८-१०; **मोक**. २२.

इदानीमपचमानकप्रकारभेदविधित्सयाऽऽह — पञ्चैवेति। एते भेदाः। बौवि.

**तत्रोन्मज्जका नाम लोहाश्मकरणवर्जम्॥**

तेषां परस्परवैलक्षण्यं प्रतिपादयन्नाह — तत्रेति। लोहकरणं दर्व्यादि। अश्मकरणमप्येवमाकृतिकमेव किंचित्। काष्ठान्येव करणमादान (? माददानाः, ? मदने) इत्यर्थः। बौवि.

**(१)हस्तेनाऽऽदाय प्रवृत्ताशिनः॥**

भक्षयन्तीति वाक्यसमाप्तिः। बौवि.

**(२)मुखेनाऽऽदायिनो मुखेनाऽऽददते॥**

पशुवदित्यभिप्रायः। बौवि.

**(३)तोयाहाराः केवलं तोयाहाराः॥**

केवलशब्दादुपदंशादिस्थानेऽपि तोयस्यैव प्रवेशः कर्तव्यः। बौवि.

**(४)वायुभक्षा निराहाराश्च॥**

वायुभक्षा इत्येतावदेवोच्यमाने वाङ्मुखादायिवत् द्वयोः कारणताशङ्काऽपि स्यादिति मत्वा निराहाराश्चेत्युक्तम्। मुखेनाऽऽदायिप्रभृतीनां त्रयाणां संज्ञासिद्धमपि संदेहनिवृत्त्यर्थं वृत्तिविवरणमाचार्येण कृतम्। वानप्रस्थसंन्यासभेदः किमर्थमाचार्यकृत इति असावेव प्रष्टव्यः। यद्वा उक्तव्यतिरिक्तवृत्तिनिषेधार्थम्। बौवि.

नैष्ठिकवानप्रस्थसंन्यासिलक्षणानि

**(५)ब्रह्मचारिणोऽत्यन्तमात्मानमुपसंगृह्याऽऽचार्यकुले श्राम्यन्ति। एके सवनेषूपस्पृशन्तो वन्येनान्येनैकाग्निं जुह्वानाः। संन्यस्यैके कर्माणि॥**

ब्रह्मचारिणो नैष्ठिकाः आत्मानं शरीरमुपसंगृह्य संनिरुध्य आचार्यकुले श्राम्यन्ति इति संबन्धः। श्राम्यन्ति तपः कुर्वन्ति। एके वानप्रस्थाः। सवनेषु प्रातरादिषु। उपस्पृशन्तः स्नास्यन्तः। वन्येन नीवारादिना। एके संन्यासिनः योगनिष्ठाः। कर्माणि अग्निसाध्यानि। संन्यस्य परित्यज्य।...... श्राम्यन्तीति संबन्धः। ब्रक. २६६

क्षत्रियवैश्ययोः संन्यासनिषेधः काषायादिलिङ्गधारणमात्रनिषेधो वा व्याख्यातृमतभेदेन

**8(१)मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम्। राजन्यवैश्ययोर्नेति दत्तात्रेयमुनेर्वचः॥**

(१) अत्र विप्रस्यैवाधिकारः, 'ब्राह्मणाः प्रव्रजन्ति' इति जाबालश्रुतेः।....माधवस्तु — 'ब्राह्मणः क्षत्रियो वाऽथ वैश्यो वा प्रव्रजेद्गृहात्' इति कौर्माद्युक्तेर्वर्णत्रयस्याप्यधिकारः। पूर्ववाक्यं तु काषायदण्डादिनिषेधार्थम्, 'मुखजाना....मुनेर्वचः॥' इति बौधायनोक्तेरिति पक्षान्तरमाह। तत्त्वं तु कुटीचकादिपरमेव तदिति। सिन्धु. २१३०, २१३५

[माधवस्त्विति। अत्रायमस्वरसः — यद्यपि सुरेश्वरवार्तिके एव 'त्रयाणामविशेषेण संन्यासः श्रूयते श्रुतौ। पदोपलक्षणार्थं स्याद्ब्राह्मणग्रहणं तदा॥' इति, 'प्रत्ययार्थात्म्यविज्ञानस्वभावश्चेत्समर्थ्यते। उत्थानं यस्य यस्य स्यात्स स व्युत्थातुमर्हति॥' इति द्विजानां संन्यास उक्तः, तथापि भाष्यकृद्भिर्ब्राह्मणस्यैव संन्यासेऽधिकारोक्तेः स एव युक्तः। न च क्वचित्सामान्यशब्दश्रवणबलात्सर्वत्र ब्राह्मणशब्दस्य द्विजपरत्वं सांप्रतम्, 'पुरोडशं चतुर्धा करोति' 'आग्नेयं चतुर्धा करोति' इत्यत्रेव सामान्यस्य विशेषे उपसंहारात्। न तु विपरीतम्, अभिधात्र्यश्रुतेः। द्विजशब्दस्य ब्राह्मणपरत्वे च न कोऽपि बाधः। किंच, क्षत्रियादिसंन्यासनिषेधानां 'मुखजानाम्' इति वचनमालम्ब्य काषायादिनिषेधपरत्वप्रयुक्तलक्षणापत्तेः। 'मुखजानाम्' इत्यनेनापि हि अङ्गनिषेधमुखेन क्षत्रियादीन् प्रति प्रधानमेव बाध्यते, ज्ञानार्थतया काम्ये संन्यासे सर्वाङ्गोपसंहारेणैवाधिकारात्। तत एवाऽऽतुरवाक्यस्याप्यप्रवृत्तिः, सजातीययोरातुरानातुरयोरधिकारसिद्धेः। एतेन

---

(१) **बौध.** ३।३।११; **मोक.** २२ नाऽऽदाय (नाऽऽदायिनः).
(२) **बौध.** ३।३।१२; **मोक.** २२.
(३) **बौध.** ३।३।१३; **मोक.** २२ केवलं तो (केवलतो).
(४) **बौध.** ३।३।१४; **मोक.** २२ राश्च (राश्चेति).
(५) **ब्रक.** २६६.

8 पमा., मर., यप्र. इत्येतेषां व्याख्यानि एतत्प्रकरणादौ संगृहीतेषु तत्तच्छास्त्रार्थेषु द्रष्टव्यानि।

(१) **पमा.** १।५३६ मुखजा (ब्राह्मणा) दत्तात्रे (तत्राऽऽत्रे); **मर.** ६१५ स्मृत्यन्तरे; **सिन्धु.** २१३५; **विपा.** ५।४९५; **यप्र.** ३३ स्मृत्यन्तरम्.

'मुखजानाम्' इति वाक्यस्य कुटीचकादिपरत्वमप्ययुक्तम्, पारहंस्यस्याप्यननुमतत्वादिति।

कृभ.२१३५-२१३६]

(२) अत्र देशाचारतो व्यवस्था वा।

$विपा. ५।४९५

स्त्रीणामपि संन्यासाधिकार
इति मतम्

[1]**स्त्रीणां चैके॥**

(१) .....'स्त्रीणां चैके' इति बौधायनेन स्त्रीणामपि प्रव्रज्यास्मरणात्। +मिता ३।५८

(२) एकग्रहणाद्बौधायनस्यापि स्त्रीणां पारिव्राज्यं नापेक्षितम्। मवि. ६।९७

## आपस्तम्बः हिरण्यकेशिधर्मसूत्रं च

ब्रह्मचर्यकालावधिः

[2]**उपेतस्याऽऽचार्यकुले ब्रह्मचारिवासः॥**

निरूपितमुपनयनम्। अथाध्ययनविधिः — उपेतस्येति। एवं यथाविध्युपेतस्य ब्रह्मचारिणः सत आचार्यकुले वासो भवति। ब्रह्म वेदः, तदर्थं व्रतं चरतीति ब्रह्मचारी। अध्ययनाङ्गानि व्रतानि चरता आचार्यकुले वस्तव्यमित्युक्तं भवति। उ.

[3]**अष्टाचत्वारिंशद्वर्षाणि॥**

(१) तत्र कालः — अष्टेति। चतुर्णां वेदानामध्ययनकाल एषः। प्रतिवेदं द्वादश। उ.

(२) यस्तु चतुरो वेदानध्येतुं शक्तस्तस्याष्टचत्वारिंशदिति बोध्यम्। यथाऽऽपस्तम्बः — 'उपेतस्याऽऽचार्यकुले ब्रह्मचारिवासोऽष्टाचत्वारिंशद्वत्सरान्' इति। एवं च अथर्वणस्त्रयीनिष्कर्षत्वादेतद्व्रतेनैव व्रतसिद्धिरिति नारायणोक्तौ मूलं मृग्यम्।

*चमव्या. ४७

[1]**पादूनम्॥**

स एव कालः पादूनं वा प्रत्येतव्यः। पादेनोनं पादूनम्। पररूपं कतन्तवत्। षट्त्रिंशद्वर्षाणि। प्रतिवेदं नव। +उ.

[2]**अर्धेन॥**

ऊनमिति समस्तमप्यपेक्षते। चतुर्विंशतिवर्षाणि। प्रतिवेदं षट्। +उ.

[3]**त्रिभिर्वा॥**

(१) पादैरूनमिति प्रकरणाद्गम्यते। द्वादश वर्षाणि। प्रतिवेदं त्रीणि। उ.

(२) त्रिभिः पादैरूनम्, द्वादश वर्षाणीत्यर्थः। एतच्चाशक्तौ वेदितव्यम्। तथा च देवलः — 'अतः परमष्टाचत्वारिंशद्वार्षिकीं वेदव्रतचर्यामातिष्ठेदशक्तश्चेच्चतुर्विंशतिवार्षिकीं द्वादशवार्षिकीं वा' इति। एतदपि प्रतिवेदाभिप्रायम्। यदाह बोधायनः — 'अष्टाचत्वारिंशद्वर्षाणि पौराणं वेदब्रह्मचर्यं चतुर्विंशतिं द्वादश वा प्रतिवेदम्' (बौध. १।३।१-२) इति।

✡स्मृच. १।१६६

[4]**द्वादशावरार्ध्यम्॥**

अवरार्ध्यशब्दोऽवरमात्रेत्येतस्मिन्नर्थे वर्तते। द्वादशवर्षाणि अवरमात्रा यथा भवति तथा ब्रह्मचारिणा गुरुकुले वस्तव्यम्। पूर्वेणैव सिद्धे यो ब्रह्मचार्यति-

---

$ शेषं सिन्धुवत्।

+ मुक्ता. मितानुवादः।

(१) **मिता.** ३।५८; **मवि.** ६।९७; **मुक्ता.** १८८ चैके (चैकः); **यप्र.** ६१.

(२) **आध.** १।२।११; **हिध.** २६।१।४४ चारिवासः (चारिणो वासः); **उ.** १।१।६; **गौमि.** २।५२; **स्मृच.** १।१६६; **चका.** ७७८; **चमव्या.** ४७; **मुक्ता.** ११९ वासः (वासाः); **संम.** ४१ चारिवासः (चारिणि); **संप्र.** ५५७ (एतस्याऽऽचार्यकुले ब्रह्मचारिणः).

(३) **आध.** १।२।१२; **हिध.** २६।१।४५; **गौमि.** २।५२ द्वर्षाणि (द्वत्सराणि); **स्मृच.** १।१६६; **चका.** ७७८; **चमव्या.** ४७ द्वर्षाणि (द्वत्सरान्); **मुक्ता.** ११९; **संम.** ४१ चमव्यावत्; **संप्र.** ५५७ (वर्षाणि ०).

* संम. चमव्यागतम्।

+ संप्र. उवत्।

✡ चका. स्मृचवत्। मुक्ता., संप्र. स्मृचगतम्।

(१) **आध.** १।२।१३; **हिध.** २६।१।४६ (पादोनम्); **स्मृच.** १।१६६; **चका.** ७७८ हिधवत्; **मुक्ता.** ११९; **संप्र.** ५५७ हिधवत्.

(२) **आध.** १।२।१४; **हिध.** २६।१।४७ (अर्धोनम्); **स्मृच.** १।१६६; **चका.** ७७८; **मुक्ता.** ११९; **संप्र.** ५५७ हिधवत्.

(३) **आध.** १।२।१५; **हिध.** २६।१।४८; **स्मृच.** १।१६६; **चका.** ७७८; **मुक्ता.** ११९; **संप्र.** ५५७.

(४) **आध.** १।२।१६; **हिध.** २६।१।४९; **चका.** ७७८ रार्ध्यम् (रार्धम्); **मुक्ता.** ११९.

मेधावितया चतुरोऽपि वेदानितोऽल्पीयसा कालेन गृह्णाति तेनाप्येतावन्तं कालं गुरुकुले वस्तव्यम्। 'विद्यया स्नाति' (आध. १।३०।१) इत्येतस्मिन्नपि पक्षे नातित्वरितेन स्नातव्यमित्येवमर्थमिदमारभ्यते। एतेन एकस्य वेदस्य त्रीणि वर्षाणि ब्रह्मचर्यमवश्यंभावीत्यर्थात्सिद्धम्। मनुरप्याह – 'षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैविद्यकं व्रतम्। तदर्धिकं पादिकं वा ग्रहणान्तिकमेव वा॥ (मस्मृ. ३।१) इति। उ.

नैष्ठिकब्रह्मचर्यम्

**[1]स य एवं प्रणिहितात्मा ब्रह्मचार्यत्रैवास्य सर्वाणि कर्माणि फलवन्त्यवाप्तानि भवन्ति यान्यपि गृहमेधे॥**

'आचार्याधीनः स्यात्' (आध. १।२।१९) इत्यारभ्य यस्य नियमा उक्ताः स ब्रह्मचारी एवम् उक्तेन प्रकारेण प्रणिहितात्मा प्रकर्षेण निहितः आचार्यकुले स्थापितः आत्मा येन स तथोक्तः। प्रकर्षश्च आत्मनस्तत्रैव शरीरन्यासः। वक्ष्यति 'आचार्यकुले शरीरन्यासः' (आध. २।२१।६) इति। अस्यैवंविधस्य ब्रह्मचारिणः अत्रैव ब्रह्मचर्याश्रमे सर्वाणि फलवन्ति ज्योतिष्टोमादीनि कर्माण्यवाप्तानि भवन्ति। तत्फलावाप्तिरेव तदवाप्तिः। यान्यपि कर्माणि गृहमेधे गृह्यशास्त्रे विवाहाद्यष्टकान्तानि, तान्यवाप्तानि भवन्ति। तदेवं नैष्ठिकब्रह्मचारिविषयमिदं सूत्रम्। उ.

चत्वार आश्रमाः, तत्र ब्रह्मचर्याश्रमो नित्यः, अन्ये वैकल्पिकाः

**[2]चत्वार आश्रमा गार्हस्थ्यमाचार्यकुलं मौनं वानप्रस्थ्यमिति॥**

(१) 'सर्वाश्रमाणां समयपदानि' (आध. १।२३।६) इत्युक्तं पुरस्तात्। के पुनस्ते आश्रमाः? इत्यत आह – चत्वार इति। आश्राम्यन्त्येषु श्रेयोर्थिनः पुरुषा इत्याश्रमाः। एषा सामान्यसंज्ञा। गृहे तिष्ठति कुटुम्बरक्षणपर इति गृहस्थः। तस्य भावो गार्हस्थ्यम्। स एक आश्रमः। आचार्यकुलम्, तत्र वासो लक्षणया। सोऽप्येकः। 'मनु अवबोधने'। मनुते इति मुनिः ज्ञानपरः। तस्य भावो मौनम्। सोऽपरः। वनं प्रतिष्ठते इति वनप्रस्थः। स एव वानप्रस्थः। प्रज्ञादित्वादण्। तस्य भावो वानप्रस्थ्यम्। इतिशब्दः परिसमाप्त्यर्थः, एतावन्त एवाऽऽश्रमा इति। चतुर्णामेवोपदेशेऽपि चत्वार इति वचनम् 'ऐकाश्रम्यं त्वाचार्याः प्रत्यक्षविधानाद्गार्हस्थ्यस्य' (गौध.३।३६) इति स्मृत्यन्तरोक्तं मा ग्राहीदिति। उ.

(२) एवं 8क्रमे स्थिते यदापस्तम्बेनोक्तम् 'चत्वार आश्रमाः .... ' इति, तत्रोद्देशमात्रे तात्पर्यम्, न क्रमे। संम. ४३

**[1]तेषु सर्वेषु यथोपदेशमव्यग्रो वर्तमानः क्षेमं गच्छति॥**

(१) तुल्यफलत्वाद्विकल्पः। मभा. ३।१

(२) तेषु आश्रमेषु चतुर्ष्वपि यथाशास्त्रमव्यग्रः समाहितमना भूत्वा यो वर्तते, स क्षेमम् अभयं पदं गच्छति। अनेनाऽऽश्रमविकल्प उक्तो वेदितव्यः। निःश्रेयसार्थिनाऽन्यतमस्मिन्नाश्रमे यथाशास्त्रमवहितेन वर्तितव्यमिति। तथा च गौतमः – 'तस्याऽऽश्रमविकल्पमेके ब्रुवते' (गौध. ३।१) इति। *उ.

(३) तेषु सर्वेषु वर्तमान इति समुच्चयो दर्शितः। चका. ७८३

**[2]सर्वेषामुपनयनप्रभृति समान आचार्यकुले वासः॥**

---

(१) **आध**. १।४।२९; **हिध**. २६।१।१४८ चार्यत्रैवास्य सर्वाणि कर्माणि फलवन्त्यवा (चारी भवत्यत्रैवास्य सर्वाणि फलवन्ति कर्माण्यवा); **ब्रक**. २१९.

(२) **आध**. २।२१।१; **हिध**. २७।५।१०९ प्रस्थ्य (प्रस्थ); **मभा**. ३।१ कुलं (कुले वसनं); **स्मृच**. १।१७३; **चका**. ७८३ (चत्वार आश्रमा गार्हस्थमाचार्यकुलवासः संन्यासो वानप्रस्थमिति॥); **पमा**. १।५२६ प्रस्थ्यमिति (प्रस्थम्); **मपा**. ११२ (चत्वार आश्रमाः) एतावदेव; **बौवि**. २।११।३६; **मुक्ता**. १२१ मपावत्; **संम**. ४२ मपावत् : ४३ हिधवत्; **संप्र**. ५५२ मपावत् : ५६२ गार्हस्थ्यमा (गृहस्थस्या) कुलं (कुले) प्रस्थ्य (प्रस्थ).

8 ब्रह्मचर्यगार्हस्थ्यवानप्रस्थ्यसंन्यासरूपे क्रमे इत्यर्थः।

* मुक्ता. उगतम्।

(१) **आध**. २।२१।२; **हिध**. २७।५।११०; **मभा**. ३।१ व्यग्रो (व्यग्रं); **गौमि**. ३।१; **स्मृच**. १।१७३; **चका**. ७८३ क्षेमं (आश्रमं); **मुक्ता**. १६८ (सर्वेषु॰) : १७२; **संप्र**. ५६२ (तेषु यथोपदेशं सम्यग्वर्तमानः क्षेमं गच्छति॥).

(२) **आध**. २।२१।३; **हिध**. २७।५।१११ वासः (ब्रह्मचारिवासः); **मभा**. ३।१ मान आ (मानमा).

उपनयनप्रभृति य आचार्यकुले वासः अष्टाचत्वारिंशद्वर्षादीनामन्यतमः स सर्वेषामाश्रमाणां समानः। उ.

[1]**सर्वेषामनूत्सर्गो विद्यायाः॥**

अनूत्सर्गः छान्दसो दीर्घः। विद्याया अनूत्सर्गोऽपि सर्वेषामाश्रमाणां समानः। तस्मादाचार्यकुले वासः समान इति। उ.

[2]**बुद्ध्वा कर्माणि यत्कामयेत तदारभेत॥**

प्रत्याश्रमं यानि कर्माणि विहितानि तानि बुद्ध्वा 'गृहस्थस्यैतानि कर्तव्यानि, एषामननुष्ठाने प्रत्यवायः, फलं चेदमेषाम्, एतानि शक्यान्यनुष्ठातुम्, नैतानि' इत्याचार्यादुपश्रुत्य यत्कर्म फलं वा कामयेत तदारभेत तमाश्रमं प्रतिपद्येतेति। उ.

नैष्ठिकब्रह्मचर्यम्

[3]**यथा विद्यार्थस्य नियम एतेनैवाऽऽन्तमनूपसीदत आचार्यकुले शरीरन्यासो ब्रह्मचारिणः॥**

तत्र गार्हस्थ्यस्य पूर्वमेव प्रपञ्चितत्वादध्ययनानन्तरं प्रतिपित्सितस्याऽऽचार्यकुलस्य (?कुलवासस्य) स्वरूपमाह — यथेति। यथा विद्यार्थस्य उपकुर्वाणस्य ब्रह्मचारिणः 'अथ ब्रह्मचर्यविधिः' (आध. १।२।१८) इत्यारभ्याग्नीन्धनादिनियम उक्तः, अतस्तेनैव (?एतेनैव) नियमेनाऽऽन्तमा शरीरपातात् अनूपसीदतः उपसदनमेवानूपसदनम्, तत्कुर्वतः आचार्यकुले शरीरन्यासः (शरीरस्य) परित्यागः भवति ब्रह्मचारिणः नैष्ठिकस्य। तत्रैवाऽऽमरणात्तिष्ठेत्, नाऽऽश्रमान्तरं गच्छेत्, यदि तमेवाऽऽश्रममात्मनः क्षेमं मन्येतेति। मनुः — 'आचार्ये तु खलु प्रेते गुरुपुत्रे गुणान्विते। गुरुदारे सपिण्डे वा गुरुवद्वृत्तिमाचरेत्॥ एषु त्वविद्यमानेषु स्थानासनविहारवान्। प्रयुञ्जानोऽग्निशुश्रूषां साधयेद्देहमात्मनः॥ एवं चरति यो विप्रो ब्रह्मचर्यमविप्लुतः। स गच्छत्युत्तमं स्थानं न चेहाऽऽजायते पुनः॥' (मस्मृ. २।२४७-२४८) इति। # उ.

ब्रह्मचर्यात्संन्यासः वानप्रस्थ्यं वा, गार्हस्थ्याद्वानप्रस्थ्यं सपत्नीकस्यैकाकिनो वा

[1]**अथ परिव्राजः॥**

(१) एषणात्रयं परित्यज्य यो व्रजति स परिव्राट्। तस्य धर्मा वक्ष्यन्ते। अप. ३।५७ पृ. ९५८

(२) अथ अनन्तरं परिव्राजो धर्म उच्यते। दृष्टादृष्टार्थान् सर्वानिवाऽऽरम्भान् परित्यज्याऽऽत्मलाभाय संन्यासाश्रमं परिव्रजतीति परिव्राट् संन्यासी। उ.

[2]**अत एव ब्रह्मचर्यवान् प्रव्रजति॥**

(१) अत एव आचार्यकुलवासात् ब्रह्मचर्यवान् अविप्लुतब्रह्मचर्यः प्रव्रजति। अप. ३।५७ पृ. ९५८

(२) अत एव ब्रह्मचर्याश्रमादेव ब्रह्मचर्यवान् अविप्लुतब्रह्मचर्यः प्रव्रजति परिव्रज्यां कुर्यात् यदि तथैव पक्वकषायो भवति। श्रूयते च — 'ब्रह्मचर्यादेव प्रव्रजेद् गृहाद्वा वनाद्वा' इति, 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' (जाउ. ४) इति च। अत्र केचिदाहुः — 'अत एव' इति वचनात् गृहाश्रमं प्रविष्टस्य तत्परित्यागेनाऽऽश्रमान्तरप्राप्तिराचार्यस्याऽनभिमतैवेति लक्ष्यते। तत्रायमभिप्रायः — दारपरिग्रहे सति 'यावज्जीवमग्निहोत्रं जुहुयात्' इति श्रुत्या विरुध्यते, स कथं प्रव्रजेत्? इति। तस्मात्सत्यपि वैराग्ये काम्यस्य कर्मणः परित्यागेन नित्यानि नैमित्तिकानि च कर्माणि कुर्वन् प्रतिषिद्धानि वर्जयन् गृहस्थ एव मुच्यत इति। तथाऽऽह याज्ञवल्क्यः — 'न्यायार्जितधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः। श्राद्धकृत्सत्यवादी च गृहस्थोऽपि विमुच्यते॥' (यास्मृ. ३।२०५) इति। अथ योऽनाहिताग्निस्तस्य विरक्तस्य मुन्याश्रम-

---

(१) **आध**. २।२१।४; **हिध**. २७।५।११३ मनू (मनु); **मभा**. ३।१.

(२) **आध**. २।२१।५ येत (यते); **हिध**. २७।५।११२; **मभा**. ३।१ येत तदारभेत (येत्तदारभेत्); **गौमि**. ३।१; **पमा**. १।५२६ (यत्कामयेत तदारभेत) एतावदेव; **यसं**. १ (तदारभेत ०) स्मृतौ.

(३) **आध**. २।२१।६; **हिध**. २७।५।११४-११५ मनूपसीदत आचार्य (मनुप्रयुञ्जानस्य वाऽऽचार्य) न्यासो ब्रह्मचारिणः (व्यासः। इति ब्रह्मचारिवासः); **उ**. १।४।२९ (आचार्यकुले शरीरन्यासः) एतावदेव; **मुक्ता**. १२१.

\# मुक्ता. उगतम्।

(१) **आध**. २।२१।७; **हिध**. २७।५।११६; **अप**. ३।५७ पृ. ९५८.

(२) **आध**. २।२१।८; **हिध**. २७।५।११७; **अप**. ३।५७ पृ. ९५८ प्रव्रजति (परिव्रजति).

प्रवेशे को विरोधः? ऋणश्रुतिविरोधः – 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः' (तैसं. ६।३।१०।५) इति। मनुरपि 'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्। अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः॥' (मस्मृ. ६।३५) इति। मोक्षः मोक्षाश्रमः। नन्वेवं ब्रह्मचर्यादपि प्रव्रज्या नोपपद्यते। अथ तत्र 'यदहरेव विरजेत्' इति श्रुत्या युक्तं प्रव्रजितुं तदा विरक्तस्य गार्हस्थ्यादपि भविष्यति। स्मर्यते च – 'प्राजापत्यां निरुप्येष्टिं सर्ववेदसदक्षिणाम्। आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद्गृहात्॥' (मस्मृ. ६।३८) इति। तथा यो गृहस्थो वृद्धो मृतभार्यः पुनर्दारक्रियायामसमर्थः तस्यापि युज्यते प्रव्रज्या। तस्मात् 'यदहरेव विरजेत्' इत्येष एव कालः प्रव्रज्यायाः, सर्वमन्यदविरक्तस्येति युक्तम्। एवकारस्तु सूत्रे श्रुत्यनुसारेण प्रयुक्तः। यथा 'गृहाद्वा वनाद्वा' इति ब्रुवाणैव श्रुतिः 'ब्रह्मचर्यादिव प्रव्रजेत्' इत्याह – तथेति। उ.

[१]**अथ वानप्रस्थः।**

अनन्तरं वानप्रस्थाश्रम उच्यते। उ.

**अत एव ब्रह्मचर्यवान् प्रव्रजति॥**

(१) अत एव ब्रह्मचर्यात्। मोक. १५

(२) प्रव्रजति प्रकर्षेण व्रजति अपुनःप्रवेशाय वनं प्रतिष्ठित इति। तथा च गौतमः – 'ग्रामं च न प्रविशेत्' (गौध. ३।३३) इति। गतमन्यत्। उ.

[२]**अथ वानप्रस्थस्यैवाऽऽनुपूर्व्यमेक उपदिशन्ति॥**

अथेति पक्षान्तरोपन्यासे। पूर्वं ब्रह्मचर्यादिव वनप्रवेश उक्तः। एके त्वाचार्यास्तस्यैव वानप्रस्थस्य आनुपूर्व्यं कर्म उपदिशन्ति। उ.

[३]**विद्यां समाप्य दारं कृत्वाऽग्नीनाधाय कर्माण्यारभते सोमावराध्यानि यानि श्रूयन्ते॥**

(१) सोमावराध्यानि सोमयागात् प्राचीनानि दर्शपूर्णमासादीनि। मोक. १५

(२) कथम् – विद्यामिति। ब्रह्मचर्ये स्थितो विद्यां समाप्य गृहस्थश्च भूत्वाऽग्नीनाधाय कर्माणि कुर्यात्। कानि? सोमावराध्यानि। अवरार्धं पश्चार्धम्, तत्र भवोऽवरार्ध्यः, सोमः अवरार्ध्यः येषां तानि सोमावराध्यानि सोमान्तानि हविर्यज्ञाख्यानि। चातुर्मास्यादीन् हविर्यज्ञान् सोमं चेत्यर्थः। यानि श्रूयन्ते श्रुतौ विहितानि। उ.

[१]**गृहान्कृत्वा सदारः सप्रजः सहाग्निभिर्बहिर्ग्रामाद्वसेत्॥**

अथ ग्रामाद्बहिः अरण्ये गृहान् कृत्वा सकुटुम्बः सहैव चाग्निभिर्ग्रामाद्बहिः वसेत्। अस्मिन् पक्षे प्रागुक्तम् 'एकाग्निः' (आध. २।२१।२०) इत्येतन्नास्ति। उ.

**एको वा॥**

अथवा पुत्रेषु भार्यां निक्षिप्य स्वयमेक एव वसेत्। अस्मिन्पक्षे 'प्राजापत्यां निरुप्येष्टिम्' (मस्मृ. ६।३८) इति परिव्राज उक्तेन न्यायेन श्रौतानग्नीनात्मनि समारोप्य श्रामणकेनाग्निमाधाय एकाग्निर्भवेत्। उ.

नैष्ठिकत्ववानप्रस्थ्यसंन्यासानां
गार्हस्थ्यात्प्रशस्तत्वमिति
मतम्

[२]**अथ पुराणे श्लोकावुदाहरन्ति –**

[३]**अष्टाशीतिसहस्राणि ये प्रजामीषिर ऋषयः।**
**दक्षिणेनार्यम्णः पन्थानं ते श्मशानानि भेजिरे॥**

निरूपिता आश्रमाः। अथेदानीं पक्षप्रतिपक्षरूपेण तेषामेव प्राधान्यमप्राधान्यं च निरूप्यते – अथ पुराण इति। अष्टाशीतिसहस्राणि ये गृहस्था ऋषयः प्रजामीषिरे प्रजातिमभ्यनन्दन् ते अर्यम्णो यः दक्षिणेन पन्थाः दक्षिणायनमार्गः तं प्राप्य छान्दोग्योक्तेन

(१) आध. २।२१।१८-१९; हिध. २७।५।१२७-१२८; मोक. १४.

(२) आध. २।२२।६; हिध. २७।५।१३६; मोक. १४; बाल. १।१५९ पृ. ४२२.

(३) आध. २।२२।७; हिध. २७।५।१३७ रभते (रभेत); मोक. १४ दारं (दारान्).

(१) आध. २।२२।८-९; हिध. २७।५।१३८-१३९; मोक. १४.

(२) आध. २।२३।३; हिध. २७।५।१५८.

(३) आध. २।२३।४; हिध. २७।५।१५९ भेजिरे(कल्पते).

(छाउ. ५।१०।३-५) धूमादिमार्गेण गत्वा पुनरपि संभूय श्मशानानि भेजिरे मरणं प्रतिपेदिरे। 'जायस्व म्रियस्व' इत्याजीवं जीवभावमापेदिर इति गृहस्थानां निन्दा। उ.

**अष्टाशीतिसहस्राणि ये प्रजां नेषिर ऋषयः।**
**उत्तरेणार्यम्णः पन्थानं तेऽमृतत्वं हि कल्पते॥**

ये तु प्रजातिं नाभ्यनन्दन् ते उत्तरायणमार्गेण अर्चिरादिमार्गेण (छाउ. ५।१०।१-२) गत्वा अमृतत्वम्, विभक्तिव्यत्ययः, अमृतत्वाय कल्पते, वचनव्यत्ययः, कल्पन्ते समर्थाः संपद्यन्ते। उ.

**'इत्यूर्ध्वरेतसां प्रशंसा॥**

गृहस्थादन्ये त्रयोऽपि ऊर्ध्वरेतसः। तेषामेषा प्रशंसेति। उ.

**अथापि संकल्पसिद्धयो भवन्ति॥**

पुनरपि तेषामेव प्रकारान्तरेण प्रशंसा — अथापीति। अथापि अपि च संकल्पादेव सिद्धयो भवन्ति तेषामूर्ध्वरेतसाम्। उ.

**यथा वर्षं प्रजादानं दूरेदर्शनं मनोजवता यच्चान्यदेवंयुक्तम्॥**

तत्रोदाहरणम् — यथेति। यदि महत्यामनावृष्टौ सत्यां 'वर्षतु देवः' इति ते कामयेरन् तदा कामवर्षी पर्जन्यो भवति। यदि वा कंचिदपुत्रमनुगृह्णीयुः 'पुत्रोऽस्य जायताम्' इति, स पुत्रवानेव भवति। यदि वा चोलेष्ववस्थितास्तदैव हिमवन्तं दिदृक्षेरन्, तथैव तद्भवति। मनस इव जवो येषां ते मनोजवाः, तेषां भावो मनोजवता। यदि कामयेरन् 'अमुं देशमियत्यामेव कालकलायां प्राप्नुयाम्' इति, ततो यावता कालेन मनस्तं देशं प्राप्नोति तावता तं देशं प्राप्नुयुरिति। यच्चान्यदेवंयुक्तं रोगिणामारोग्यादि तदपि संकल्पादेव तथा भवति। उ.

**तस्माच्छ्रुतितः प्रत्यक्षफलत्वाच्च विशिष्टानाश्रमानेतानेके ब्रुवते॥**

यस्मादेवम् — तस्मादिति। तस्मात् श्रुतितः 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' (जाउ. ४) इत्यादिश्रुत्यनुगतत्वात् उक्तेन प्रकारेण प्रत्यक्षफलत्वाच्च एतान् ऊर्ध्वरेतसामाश्रमान् विशिष्टान् गार्हस्थ्यादुत्कृष्टान् एके ब्रुवत इति। उ.

गार्हस्थ्यमेवाऽऽश्रमान्तरेभ्यः
प्रशस्तमिति मतम्

**'त्रैविद्यवृद्धानां तु वेदाः प्रमाणमिति निष्ठा, तत्र यानि श्रूयन्ते व्रीहियवपश्वाज्यपयःकपालपत्नीसंबन्धान्युच्चैर्नीचैः कार्यमिति तैर्विरुद्ध आचारोऽप्रमाणमिति मन्यन्ते॥**

त्र्यवयवा विद्या त्रिविद्या त्रयो वेदाः। तां ये पाठतश्चार्थतश्च विदन्ति ते त्रैविद्याः। तेषु पक्वज्ञानाः त्रैविद्यवृद्धाः। तेषां वेदशास्त्रविदां 'वेदाः एव प्रमाणमतीन्द्रियेऽर्थे' इति निष्ठा निर्णयः। यथाऽऽह भगवान् जैमिनिः — 'चोदनालक्षणोऽर्थो धर्मः' (जैसू. १।१।२) इति, 'प्रत्यक्षमनिमित्तम्' (जैसू. १।१।४) इति च। ततश्च तत्र वेदे यानि कर्माणि श्रूयन्ते। किंलक्षणानि? व्रीहियवादिभिः संबद्धानि 'उच्चैः ऋचा क्रियते, उपांशु यजुषा' इत्येवंप्रकाराणि, तैः विरुद्धः आचारः प्रमाणं न भवतीति मन्यन्ते। एतदुक्तं भवति — सर्वेषु वेदेषु सर्वासु च शाखासु अग्निहोत्रादीनि विश्वसृजामयनपर्यन्तानि कर्माण्येव तात्पर्य(विषय)तया विधीयन्ते। अतो गार्हस्थ्यमेव श्रेष्ठम्। ऊर्ध्वरेतसां त्वाश्रमास्तद्विरुद्धाः नैव आश्रयणीयाः, यदि वेदाः प्रमाणमिति। तथा च गौतमः — 'ऐकाश्रम्यं त्वाचार्याः प्रत्यक्षविधानाद्गार्हस्थ्यस्य' (गौध. ३।३६) इति। एवं गार्हस्थ्यं प्रशस्यते। *उ.

**'यत्तु श्मशानमुच्यते नानाकर्मणामेषोऽन्ते पुरुषसंस्कारो विधीयते॥**

'श्मशानानि भेजिरे' इति निन्दां परिहरति — यत्त्विति। यत्तु गृहस्थानां श्मशानं श्रूयते स एष नानाकर्मणामग्निहोत्रादीनामन्ते पितृमेधाख्यः पुरुषसंस्कारो विधीयते, न तु पिशाचा भूत्वा श्मशानमेव सेवन्त इति। #उ.

(१) **आध.** २।२३।५-८; **हिध.** २७।५।१६०-१६२.

* मुक्ता. उगतम्।

\# मुक्ता. उवत्।

(१) **आध.** २।२३।९; शेषः स्थलादिनिर्देशः वर्णाश्रमधर्मकाण्डस्य प्रथमभागे (वका. पृ. ६५) द्रष्टव्यः।

(२) **आध.** २।२३।१०; **हिध.** २७।५।१६४; **मुक्ता.** १६७ श्मशान (स्मशान).

**[1]ततः परमनन्त्यं फलं स्वर्ग्यशब्दं श्रूयते॥**

कुत इत्याह – तत इति। ततः परं श्मशान-कर्मणोऽनन्तरम् अनन्त्यम् अपरिमितं स्वर्गशब्दवाच्यं फलं श्रूयते 'स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकमेति' इति। अनन्त्यं स्वर्ग्यमिति यकारश्छान्दसः उपजनः, अपपाठो वा। 8उ.

**[2]अथाप्यस्य प्रजातिममृतमाम्नाय आह – 'प्रजामनु प्रजायसे तदु ते मर्त्यामृतम्' इति॥**

पुनरपि गार्हस्थ्यमेव प्रकारान्तरेण स्तौति – अथेति। अथापि अपि च अस्य गृहस्थस्य प्रजातिं प्रजासंतानम् अमृतम् अमरणम् आम्नायः वेदः आह – हे मर्त्य मरणधर्मन्, प्रजां जायमानामनु त्वं प्रजायसे त्वमेव प्रजारूपेण जायसे। तदेव ते मरणधर्मिणः अमृतम् अमरणम् इति। न त्वं म्रियसे, यतस्त्वं प्रजारूपेण तिष्ठसीति। $उ.

**[3]अथापि स एवायं विरूढः पृथक्प्रत्यक्षेणोपलभ्यते दृश्यते चापि सारूप्यं देहत्वमेवान्यत्॥**

उपपन्नं चैतदित्याह – अथापीति। अपि च स एवायं पृथग्विरूढः प्रत्यक्षेणोपलभ्यते स एव द्विधाभूत इव लक्ष्यते। दृश्यते हि सारूप्यं द्वयोः, देहमात्रं तु भिन्नम्। देहत्वमिति स्वार्थिकस्त्वः।

** उ.

**[4]ते शिष्टेषु कर्मसु वर्तमानाः पूर्वेषां सांपरायेण कीर्तिं स्वर्गं च वर्धयन्ति॥**

यदि पुत्ररूपेणावस्थानम्, किमेतावता? इत्याह – त इति ते पुत्राः शिष्टेषु चोदितेषु कर्मसु वर्तमानाः अवस्थिताः पूर्वेषां पितृपितामहादीनां सांपरायेण परलोकेन संबद्धानां कीर्तिं स्वर्गं च वर्धयन्ति – 'अस्यायं पुत्र एवंकर्मा, अस्यायं पौत्रः' इति, स्वर्गं च वर्धयन्ति। कीर्तिमतां हि स्वर्गवासः श्रूयते। #उ.

**[1]एवमवरोऽवरः परेषाम्॥**

एवम् अनेन प्रकारेण अवरोऽवरः परेषां कीर्तिं स्वर्गं च वर्धयति। #उ.

**[2]आ भूतसंप्लवात्ते स्वर्गजितः॥**

(१) भूतसंप्लवः महाप्रलयः। आ तस्मात् ते पुत्रिणः स्वर्गजितो भवन्ति। उ.

(२) भूतसंप्लवः महाभूतप्रलयः।

⇧मुक्ता. १६८

**पुनः सर्गे बीजार्था भवन्तीति भविष्यत्पुराणे॥**

(१) ते च – पुनरिति। प्रलयानन्तरं सर्गः, तत्र संसारस्य बीजार्थाः प्रजार्थाः प्रजापतयः भवन्तीति भविष्यत्पुराणे श्रूयते। उ.

(२) संसारबीजार्थाः प्रजाः।

×मुक्ता. १६८

**अथापि प्रजापतेर्वचनम्॥**

अपि च प्रजापतेरपि वाक्यमस्मिन्नर्थे भवति। गार्हस्थ्यमेव वरिष्ठमिति। ⇩उ.

**'त्रयीं विद्यां ब्रह्मचर्यं प्रजातिं श्रद्धां तपो यज्ञमनुप्रदानम्। य एतानि कुर्वते तैरित्सह स्मो रजो भूत्वा ध्वंसतेऽन्यत्प्रशंसन्॥' इति॥**

(१) त्रयीं विद्यां त्रयाणां वेदानामध्ययनम्। ब्रह्मचर्यम् अष्टाचत्वारिंशदादिकम्। प्रजातिं प्रजोत्पादनम्। श्रद्धाम् आस्तिक्यम्। तपः उपवासादि। यज्ञम् अग्निहोत्रादिकं सोमयागान्तम्। अनुप्रदानम् अन्तर्वेदि बहिर्वेदि च दानम्। ये एतानि कर्माणि कुर्वते तैरित् तैरेव सह वयं स्मः त एवास्माकं सहायाः। अन्यत्तु ऊर्ध्वरेतसामा-

---

8 मुक्ता. उगतम्।

$ मुक्ता. उवत्।

**मुक्ता. उवत्।

(१) आध. २।२३।११; हिध. २७।५।१६५ [(ततः परमनन्त्यफलमपरिमिता(? तं) स्वर्गशब्दं श्रूयते)]; मुक्ता. १६७ स्वर्ग्यशब्दं (स्वर्गशब्दः).

(२) आध. २।२४।१; हिध. २७।५।१६६; मुक्ता. १६७.

(३) आध. २।२४।२; हिध. २७।५।१६७ अथापि + (च); मुक्ता. १६७ ते चापि (तेऽपि च).

(४) आध. २।२४।३; हिध. २७।५।१६८ कीर्तिं (कीर्तिः); मुक्ता. १६७.

# मुक्ता. उवत्।

⇧ शेषम् उवत्।

× शेषम् उवत्।

⇩ मुक्ता. उवत्।

(१) आध. २।२४।४; हिध. २७।५।१६९ वरोऽवरः (परोऽपरः); मुक्ता. १६७.

(२) आध. २।२४।५-८; हिध. २७।५।१७०-१७३; मुक्ता. १६७.

श्रमादिकं प्रशंसन् पुरुषः रजः पांसुः भूत्वा ध्वंसते नश्यति। इतिशब्दो वचनसमाप्त्यर्थः। उ.

(२) ब्रह्मचर्यम् अनिषिद्धकाले स्त्रीसंगमनम्।

×मुक्ता.१६८

[1]**तत्र ये पापकृतस्त एव ध्वंसन्ति, यथा पर्णं वनस्पतेः, न परान् हिंसन्ति॥**

यथैवं तर्हि शिष्टेषु वर्तमानाः पुत्राः पूर्वेषां कीर्तिं स्वर्गं च वर्धयन्ति, तथा प्रतिषिद्धेषु वर्तमानाः अकीर्तिं नरकं च वर्धयेयुः, तत्राऽऽह — तत्रेति। तत्र प्रजासंताने ये पापस्य कर्तारः त एव ध्वंसन्ते, न परान् पित्रादीन् हिंसन्ति। यथा यदेव पर्णं वनस्पतेः कीटादिभिर्दूषितं तदेव पतति, न वनस्पतिं शाखान्तरं वा पातयति, तद्वत्। *उ.

**नास्यास्मिँल्लोके कर्मभिः संबन्धो विद्यते तथा परस्मिन् कर्मफलैः॥**

एतदेवोपपादयति — नास्यास्मिन्निति। अस्येति सामान्यापेक्षमेकवचनम्। अस्य पित्रादेः पूर्वपुरुषस्य अस्मिन् लोके पुत्रकृतैः कर्मभिः संबन्धो न विद्यते। दृष्टान्तोऽयम्। यथा पुत्रकृतेषु कर्मसु पित्रादेः कर्तृत्वं नास्ति, तथा परस्मिन्नपि लोके कर्मफलैरपि संबन्धो नास्तीत्यर्थः। $उ.

[2]**तदेतेन वेदितव्यम्॥**

यदुक्तं ये पापकृतस्त एव ध्वंसन्ति, न परान् हिंसन्तीति, तत् अर्थरूपम् एतेन वक्ष्यमाणेन हेतुना वेदितव्यम्। $उ.

[3]**प्रजापतेर्ऋषीणामिति सर्गोऽयम्॥**

प्रजापतेः हिरण्यगर्भस्य ऋषीणां च मरीच्यादीनाम् अयं सर्गः देवादिस्तिर्यगन्तः। ते चाध्वस्ता एव स्वे स्वे पदे वर्तन्ते। यदि च पुत्राः पापकृतः स्वयं ध्वंसमानाः परानपि ध्वंसयेयुः तदैतन्नोपपद्यते — पुण्यकृतः सुखेनाद्यापि वर्तन्ते इति। #उ.

[1]**तत्र ये पुण्यकृतस्तेषां प्रकृतयः परा ज्वलन्त्य उपलभ्यन्ते॥**

अत्रोदाहरणमाह — तत्रेति। तत्र स्वर्गे ये पुण्यकृतः वसिष्ठादयः तेषां प्रकृतयः शरीराणि पराः उत्कृष्टाः ज्वलन्त्यः दीप्यमानाः उपलभ्यन्ते, दिवि यथा सप्तर्षिमण्डलम्। श्रूयते च — 'सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणि' इति। इदमपि प्रमाणं न पुत्राणां ध्वंसे पूर्वेषां प्रध्वंस इति। #उ.

[2]**स्यात्तु कर्मावयवेन तपसा वा कश्चित्सशरीरोऽन्तवन्तं लोकं जयति संकल्पसिद्धिश्च स्यान्न तु तज्ज्यैष्ठ्यमाश्रमाणाम्॥**

कर्मावयवेन पूर्वार्जितानां कर्मणामेकदेशेन भुक्तशेषेण तपसा वा तीव्रेण कश्चित् ऊर्ध्वरेताः सह शरीरेणान्तवन्तं लोकं जयतीति यत्तत् स्यात् संभवेदपि, यच्च संकल्पादेव सिद्धिः स्यादिति तदपि स्यात्, न तु तदाश्रमाणां ज्यैष्ठ्यकारणमिति। तदेवम् 'ऐकाश्रम्यं त्वाचार्याः' इत्ययमेव पक्षः स्थापितः। अन्ये मन्यन्ते — सर्वे आश्रमा दूषिता भूषिताश्च। ततः 'तेषु सर्वेषु यथोपदेशमव्यग्रो वर्तमानः क्षेमं गच्छति'(आध. २।२१।२) इत्येतदेव स्थितमिति। ×उ.

ब्रह्मचारिणा इष्टैः सह संमन्त्र्याऽऽश्रमान्तरं ग्राह्यम्

[3]**रातिना संभाष्य यथार्थं गच्छति॥**

कृतसमावर्तनो ब्रह्मचारी रातिना इष्टेन संभाष्य 'ब्रह्मचर्यादेव व्रजेत्' इति शास्त्रेण संन्यासः कर्तव्यो वा उत गार्हस्थ्यमङ्गीकर्तव्यं वेत्यालोच्य यथार्थम् अनतिक्रम्य यथाधिकारं गच्छतीत्यर्थः।

आन. ४८१

× शेषम् उवत्।

* मुक्ता. उवत्।

$ मुक्ता. उवत्।

(१) आध. २।२४।९-१०; हिध. २७।५।१७४-१७५; मुक्ता. १६८.

(२) आध. २।२४।११; मुक्ता. १६८.

(३) आध. २।२४।१२; हिध. २७।५।१७६ (अथापि प्रजापतेर्ऋषीणामित्ययं सर्गः); मुक्ता. १६८.

# मुक्ता. उवत्।

× मुक्ता. उवत्।

(१) आध. २।२४।१३; हिध. २७।५।१७७ (तत्र ये पुण्यकृतः०); मुक्ता. १६८.

(२) आध. २।२४।१४; हिध. २७।५।१७८ अशुद्धः पाठः; मुक्ता. १६८.

(३) आन. ४८१.

## वैखानसधर्मसूत्रम्

आश्रमाश्चत्वारस्तेषां वर्णभेदेन व्यवस्था च,
आश्रमावान्तरभेदाः सलक्षणाः,
आश्रमसमुच्चयः

[1]ब्राह्मणस्याऽऽश्रमाश्चत्वारः। क्षत्रियस्याऽऽद्यास्त्रयः। वैश्यस्य द्वावेव॥

तदाश्रमिणश्चत्वारः – ब्रह्मचारी गृहस्थो वानप्रस्थो भिक्षुरिति॥

[2]ब्रह्मचारिणश्चतुर्विधाः – गायत्रो ब्राह्मः प्राजापत्यो नैष्ठिक इति॥

गायत्र उपनयनादूर्ध्वं त्रिरात्रमक्षारलवणाशी गायत्रीमधीत्या सावित्रव्रतसमाप्तेरत्र व्रतचारी॥

ब्राह्मः सावित्रव्रतादूर्ध्वमनभिशस्तापतितानां गृहस्थानां गृहेषु भैक्षाचरणं वेदव्रतचरणं च कृत्वा द्वादश समा विंशतिसमा वा गुरुकुले स्थित्वा वेदान्वेदौ वेदं वा सूत्रसहितमध्ययनं कृत्वा गार्हस्थ्यानुसरणं कुर्यात्॥

*प्राजापत्यः स्नात्वा नित्यकर्मब्रह्मचर्यशीलो नारायणपरायणो वेदवेदाङ्गार्थान्विचार्य दारसंग्रहणं करोति॥

प्राजापत्ये त्रिसंवत्सरादूर्ध्वं न तिष्ठेदित्यृषयो वदन्ति॥

नैष्ठिकः काषायं धातुवस्त्रमजिनं वल्कलं वा परिधाय जटी शिखी वा मेखली दण्डी सूत्राजिनधारी ब्रह्मचारी शुचिरक्षारलवणाशी यावदात्मनो विप्रयोगस्तावद्गुरुकुले स्थित्वा निवेदितभैक्षभोजी भवति॥

* अत्राऽऽश्रमिणामवान्तरभेदास्तद्व्याख्यानं च प्रक्रान्तम्। अस्मात्सूत्रात् प्राजापत्यः स्नातकः प्रतीयते। तथा च स्नातकस्यात्र प्रतीयमानमाश्रमित्वं स्मृत्यन्तरैर्विरुध्यते, तेषु स्नातकस्यानाश्रमित्वप्रसिद्धेः। तदिदं स्मृत्यन्तरविरुद्धमपि स्नातकस्यैवाऽऽश्रमित्वं विखनोभिमतम्, यथाकथंचिदविरोधो वाऽभिमतः? तदेतन्निर्णेयम्। अविरोधश्च द्विधा संभवति। तत्र सत्यप्याश्रमिप्रकरणे ब्रह्मचारित्वसाधर्म्यादनाश्रम्यपि स्नातकोऽत्र प्रसङ्गाद्व्याख्यात इत्येका विधा। अथापरा – 'वेदवेदाङ्गार्थान्विचार्य स्नात्वा दारसंग्रहणं करोति' इत्यन्वयः। वेदवेदाङ्गार्थविचारमात्रं ब्राह्माद्विशेषः। तेन उपनयनप्रभृति त्रिरात्रव्रतावच्छेदेन गायत्रः, ततो द्वादशवार्षिकादिवेदवेदाङ्गाक्षरग्रहणावच्छेदेन ब्राह्मः, ततः परं समावर्तनात्प्राक् त्रैवार्षिकवेदवेदाङ्गार्थग्रहणावच्छेदेन प्राजापत्य इत्यर्थपरत्वं सूत्रस्येति।

(१) वैध. १।१.
(२) वैध. १।३.

[1]गृहस्थाश्चतुर्विधाः वार्तावृत्तिः शालीनवृत्तिर्यायावरो घोराचारिकश्चेति॥

वार्तावृत्तिः कृषिगोरक्ष्यवाणिज्योपजीवी॥

शालीनवृत्तिर्नियमैर्युतः पाकयज्ञैरिष्ट्वाऽग्नीनाधाय पक्षे पक्षे दर्शपूर्णमासयाजी चतुर्षु चतुर्षु मासेषु चातुर्मास्ययाजी षट्सु षट्सु मासेषु पशुबन्धयाजी प्रतिसंवत्सरं सोमयाजी च॥

यायावरो हविर्यज्ञैः सोमयज्ञैश्च यजते याजयत्यधीतेऽध्यापयति ददाति प्रतिगृह्णाति षट्कर्मनिरतो नित्यमग्निपरिचरणमतिथिभ्योऽभ्यागतेभ्योऽन्नाद्यं च कुरुते॥

घोराचारिको नियमैर्युक्तो यजते न याजयत्यधीते नाध्यापयति ददाति न प्रतिगृह्णात्युञ्छवृत्तिमुपजीवति नारायणपरायणः सायंप्रातरग्निहोत्रं हुत्वा मार्गशीर्षज्येष्ठमासयोरसिधाराव्रतं वनौषधिभिरग्निपरिचरणं करोति॥

[2]गृहस्थः सपत्नीकः पञ्चाग्निभिस्त्रेताग्निभिर्वा गृहाद्वनाश्रमं यास्यन्नाहिताग्निरनाहिताग्निश्चौपासनमरण्यामारोप्य गृहे मथित्वा श्रामणकीयविधानेनाऽऽधायाऽऽघारं हुत्वा श्रामणकाग्निमादाय तृतीयमाश्रमं गच्छेत्॥

[3]वानप्रस्थाः सपत्नीका अपत्नीकाश्चेति॥

सपत्नीकाश्चतुर्विधाः – औदुम्बरो वैरिञ्चो वालखिल्यः फेनपश्चेति॥

[4]अपत्नीका बहुविधाः – कालाशिका उद्दण्डसंवृत्ता अश्मकुट्टा उदग्रफलिनो दन्तोलूखलिका उञ्छवृत्तिकाः संदर्शनवृत्तिकाः कपोतवृत्तिका मृगचारिका हस्तादायिनः शैलफलकादिनोऽर्कदग्धाशिनो बैल्वाशिनः कुसुमाशिनः पाण्डुपत्राशिनः

(१) वैध. १।५.
(२) वैध. १।६.
(३) वैध. १।७.
(४) वैध. १।७.

**कालान्तरभोजिन एककालिकाश्चतुष्कालिकाः कण्टकशायिनो वीरासनशायिनः पञ्चाग्निमध्यशायिनो धूमाशिनः पाषाणशायिनोऽभ्यवगाहिन उदकुम्भवासिनो मौनिनश्चावाक्शिरसः सूर्यप्रतिमुखा ऊर्ध्वबाहुका एकपादस्थिताश्चेति विविधाचारा भवन्तीति विज्ञायते॥**

**[1]अथ भिक्षुका मोक्षार्थिनः कुटीचका बहूदका हंसाः परमहंसाश्चेति चतुर्विधा भवन्ति॥**

**ब्राह्मणानां चातुराश्रम्यं क्षत्रियाणां त्र्याश्रम्यं वैश्यानां द्व्याश्रम्यं विहितम्॥**

***तत्फलं हि सकामं निष्कामं चेति द्विविधं भवति॥**

**[2]संन्यासक्रमः। सप्तत्यूर्ध्वं वृद्धोऽनपत्यो विधुरो वा जन्ममृत्युजरादीन्विचिन्त्य योगार्थी यदा स्यात्तदाऽथवा पुत्रे भार्यां निक्षिप्य परमात्मनि बुद्धिं निवेश्य वनात्संन्यासं कुर्यात्॥**

## वसिष्ठः

चत्वार आश्रमाः, आश्रमविकल्पः,
गृहस्थभेदौ, गार्हस्थ्यप्रशंसा

**[3]चत्वार आश्रमाः॥**

**[4]ब्रह्मचारिगृहस्थवानप्रस्थपरिव्राजकाः॥**

**[5]तेषां वेदमधीत्य वेदौ वेदान्वाऽविशीर्णब्रह्मचर्यो यमिच्छेत्तमावसेत्॥**

---

*सकामनिष्कामफलस्वरूपविवरणं वर्णाश्रमधर्मकाण्डस्य प्रथमभागे धर्मतत्त्वविचारप्रकरणे (वका. पृ. ४३३) द्रष्टव्यम्।

(१) **वैध.** १।९.

(२) **वैध.** २।६.

(३) **वाध.** ७।१; **अप.** १।१ पृ. ३ : ३।४४ पृ. ९४०; **ब्रक.** २६५; **स्मृच.** १।१७५; **चका.** ७८४; **पमा.** १।४५९-४६०, ५२६; **चमव्या.** ४८; **संप्र.** ५६२; **बाल.** १।४९-५० पृ. १६८.

(४) **वाध.** ७।२; **अप.** १।१ पृ.३; **ब्रक.** २६५; **स्मृच.** १।१७५; **चका.** ७८४ (ब्रह्मचारी गृहस्थो वानप्रस्थः परिव्राजकः॥); **पमा.** १।४६०, ५२६; **संप्र.** ५६२.

(५) **वाध.** ७।३; **विश्व.** १।४९ (अवशीर्णब्रह्मचर्यो यमिच्छेत्तमावसेत्) एतावदेव : १।५०, ३।४५, ३।५६-५७ (यमिच्छेत्तमावसेत्) एतावदेव, (-); **मिता.** ३।४५ (अविप्लुतब्रह्मचर्यो यमिच्छेत्तु तमावसेत्) एतावदेव, (-); **अप.**

(१) इत्यकृतगार्हस्थ्योऽपि वनवासेऽधिक्रियत एव।
मिता. ३।४५

(२) ब्रह्मचर्यानन्तरमपि वानप्रस्थो भवेदित्याह वसिष्ठः — तेषामिति। अप. ३।४४ पृ. ९४०

(३) अविशीर्णब्रह्मचर्यः अविप्लुतब्रह्मचर्यः।
ब्रक. २६५

(४) वेदं वेदौ वेदान्वेति फलभूयस्त्वाभिप्रायम्। वेदमधीत्याविप्लुतब्रह्मचर्यस्तेषामाश्रमाणां मध्ये यमिच्छेत्तम् आवसेत् आश्रयेत् तत्रैव निष्ठां यायादित्यर्थः।
✡स्मृच. १।१७५

(५) असमुच्चयपक्षे त्वकृतगार्हस्थ्योऽपि वानप्रस्थ्येऽधिक्रियते। तदाह वसिष्ठः — 'चत्वार आश्रमा .... वसेत्' इति।
पमा. १।५२६

**[1]ब्रह्मचार्याचार्यं परिचरेदा शरीरविमोक्षणात्॥**

**[2]आचार्ये च प्रेतेऽग्निं परिचरेत्॥**

**[3]विज्ञायते ह्यग्निराचार्यस्तवेति॥**

---

✡ चका. स्मृचवत्। मुक्ता. स्मृचगतम्।

३।४४; **मभा.** ३।१(यमिच्छेत्तमावसेत्) एतावदेव, द्विवारम्, स्मृतिः; **ब्रक.** २६५ वेदमधीत्य (वेदं समधीत्य) वसेत् (विशेत्); **स्मृच.** १।३५, १।१७२ (यमिच्छेत् कर्तुं तमाविशेत्) एतावदेव, (-) : १।१७५ वेदौ + (वा); **चका.** ७८४ चर्यो यमि (चर्यमि) वसेत् (विशेत्); **पमा.** १।४६० वाऽविशीर्ण (वा चीर्ण) : १।५२६ वेदौ वेदान्वाऽविशीर्ण (वेदं विदित्वा चीर्ण); **चमव्या.** ४८ (यमिच्छेत्तमावसेत्) एतावदेव; **मुक्ता.** ७३ (यमिच्छेत्कर्तुं तमाविशेत्) एतावदेव (-) : १७२ (चीर्णब्रह्मचर्यो यमिच्छेत्तमावसेत्) एतावदेव; **संप्र.** ५६३ (वेदौ०); **यसं.** १ चमव्यावत्, स्मृतौ; **बाल.** १।४९-५० पृ. १६८ चमव्यावत्; **कृभ.** ९८७ चमव्यावत् (-).

(१) **वाध.** ७।४; **अप.** १।५० पृ. ७२ र्याचार्यं (र्याश्रमं); **ब्रक.** २६५; **पमा.** १।४५८ चार्याचार्यं परिच (चर्यं च); **प्रपा.** २४३ (ब्रह्मचर्यं चरेद्धीमाना शरीरविमोक्षणात्।); **चमव्या.** ४८; **विपा.** २।५०४ प्रपावत्; **बाल.** १।४९-५० पृ. १६८ पमावत्.

(२) **वाध.** ७।५; **अप.** १।५० पृ. ७२; **ब्रक.** २६५; **पमा.** १।४५८; **प्रपा.** २४३ (आचार्ये तु खलु प्रेते अग्निं परिचरेत्स्वयम्।); **चमव्या.** ४८; **विपा.** २।५०४ (आचार्ये तु खलु प्रेते तत्तनयादावग्निं परिचरेत्); **बाल.** १।४९-५० पृ. १६८.

(३) **वाध.** ७।६; **ब्रक.** २६५.

**[1]गृहस्थ एव यजते गृहस्थस्तप्यते तपः।**
**चतुर्णामाश्रमाणां तु गृहस्थश्च विशिष्यते॥**

वसिष्ठेन गार्हस्थ्यस्य स्तुतिरुक्ता— गृहस्थ इति।
संम. ४३

**[2]यथा नदीनदाः सर्वे समुद्रे यान्ति संस्थितिम्।**
**एवमाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम्॥**
**[3]यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः।**
**एवं गृहस्थमाश्रित्य सर्वे जीवन्ति भिक्षुकाः॥**
**[4]द्विविधो हि गृहस्थो यायावरः शालीनश्चेति।**
**तत्रासंयतो यायावरः। शालीनस्तु प्रेष्यचतुष्पद-धनधान्यादियुक्तः॥**

शालीनस्यापि चातुर्विध्यमुक्तं मनुना — 'षट्कर्मैको भवत्येषां त्रिभिरन्यः प्रवर्तते। द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रेण जीवति॥' (मस्मृ. ४।९)।
विपा. ३।२।२४७

## विष्णुः

### नैष्ठिकब्रह्मचर्यविधिः

**[5]ततो गुरुकुल एव वा जन्मनः शेषं नयेत्॥**

नैष्ठिकं प्रत्याह — तत इति। तत इति वेदस्वीकरणादित्येव परामृश्यते, न संनिहितमपि स्नानम्। पञ्चमी-कल्पनात् ऊर्ध्वमित्यनुषज्यते, अपेक्षितत्वात्। तेन वेदाध्ययनानन्तरं न स्नायात्, किंतु गुरुकुले एवाऽऽयुः-शेषं नयेत्। वै.

**तत्राऽऽचार्ये प्रेते गुरुवद्गुरुपुत्रे वर्तेत॥**

तत्र गुरुकुलावासे क्रियमाणे आचार्यश्चेत्प्रमीयेत तदा गुरुपुत्रे गुरुवत् वर्तितव्यम्। वै.

**गुरुदारेषु सवर्णेषु वा॥**

गुरुपुत्रे प्रेते गुरुदारेषु। दारशब्दोपादानं बह्वीषु अन्य-तमप्राप्त्यर्थम्। सवर्णग्रहणमसवर्णनिरासाय। वाशब्दो वृद्धादिग्रहणाय, 'तदभावे वृद्धे सब्रह्मचारिण्यग्नौ वा' (गौध. ३।८) इति गौतमीयात्। वै.

**तदभावेऽग्निशुश्रूषुर्नैष्ठिको ब्रह्मचारी स्यात्॥**

गुरुदाराद्यभावे अग्निमेव शुश्रूषेत् समिदाधानादिना। ब्रह्मचारी वेदोद्धरणशीलश्च नैष्ठिकः, यावज्जीविको ब्रह्मचर्यनियमो निष्ठा, तद्वान् नैष्ठिकः स्यात्, 'गुरोः कर्मशेषेण जपेत्' (गौध. ३।६) इति गौतमीयात्।
वै.

**एवं चरति यो विप्रो ब्रह्मचर्यमतन्द्रितः।**
**स गच्छत्युत्तमं स्थानं न चेहाऽऽजायते पुनः॥**

नैष्ठिक्यफलमाह — एवमिति। एवम् उक्तरीत्या यो विप्रः अतन्द्रितः अनलसः सन् ब्रह्मचर्यं चरति स उत्तमं स्थानम्, स्थीयतेऽस्मिन् जगदिति स्थानं ब्रह्म गच्छति प्राप्नोति, 'ब्रह्मलोकमवाप्नोति' (यास्मृ. १।५०) इति योगिस्मरणात्। ब्रह्मैव लोको ब्रह्मलोक इति व्याख्येयम्, 8अन्यथा अपुनरावृत्तिस्मरणविरोधात्। तामेवाऽऽह — न चेह संसारे पुनः आजायते प्रभवति इति। विप्रग्रहणात् ब्राह्मणस्यैव नैष्ठिकत्वम्, नान्येषाम्। अन्ये तु प्रक्रमात् त्रैवर्णिकानामित्याहुः।
वै.

### गार्हस्थ्यप्रशंसा

**[1]ब्रह्मचारी यतिर्भिक्षुर्जीवन्त्येते गृहाश्रमात्॥**

ब्रह्मचारी प्रथमाश्रमी। यतिः संन्यासी। भिक्षुः भिक्षामात्रोपजीवी अन्योऽपि विद्यार्थ्यादिः, 'ब्रह्मचारी यतिश्चैव विद्यार्थी गुरुपोषकः। अध्वगः क्षीणवृत्तिश्च

---

(१) **वाध.** ८।१४; **निक.** २०९; **स्मृच.** १।१७५ तु (च); **गृर.** ३०६ तु गृहस्थश्च (च गृहस्थस्तु); आद. ९७ स्थश्च (स्थस्तु); **मुक्ता.** १६९ आदवत्; **संम.** ४३ पूर्वार्धे (गृहस्थ एव प्रव्रजेद्गृहस्थः स्तूयते यतः।) शेषम् आदवत्; **संप्र.** ५६४ स्तप्यते तपः (स्तपते ततः) शेषम् आदवत्; **आप्र.** ४५७ आदवत्, उत्त.

(२) **वाध.** ८।१५; **निक.** २०९ समुद्रे (सागरे) मनुवसिष्ठौ; **आप्र.** ४५७ निकवत्.

(३) **वाध.** ८।१६; **निक.** २०९; **उ.** १।१४।१ भिक्षुकाः (भिक्षवः) (=); **गृर.** ३०६; **प्रपा.** २८९ स्मृत्यन्तरम्; **आप्र.** ४५७ भिक्षुकाः (जन्तवः); **संर.** ३८५ एवं (तथा) स्मृत्यन्तरम्; **आभू.** १२ आप्रवत् (=) : ३२२ भिक्षुकाः (भिक्षवः) (=).

(४) **विपा.** ३।२।२४७.

(५) **विस्मृ.** २८।४३-४७.

8 हिरण्यगर्भरूपकार्यब्रह्मणो लोकं गतानाम् 'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नाऽवर्तन्ते।' (छाउ. ४।१५।६), 'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्॥' इत्यादिश्रुतिस्मृतिभिरपुनरावृत्तेरुक्तत्वात् 'ब्रह्मणो लोकः' इति पक्षे अपुनरावृत्तिस्मरणविरोधोक्तिरियं चिन्त्या। ब्रह्मसूत्रकार्याधिकरणे (ब्रसू. ४।३।७-१४) सोऽयमर्थः शांकरभाष्ये विस्तरेण प्रसाधितः।

(१) **विस्मृ.** ५९।२६-२८.

षडेते भिक्षुकाः स्मृताः॥' (अत्रिसं. १६५) इति व्यासोक्तेः। एते गृहस्थगृहानीतभिक्षयैव जीवन्ति। वै.

**गृहस्थ एव यजते गृहस्थस्तप्यते तपः।**
**प्रददाति गृहस्थश्च तस्माच्छ्रेष्ठो गृहाश्रमी॥**

गृहस्थस्यार्थवादमाह – गृहस्थ इति। यज्ञेषु गृहस्थस्यैवाधिकारः, भार्यासाध्यत्वात्तेषाम्। तपःसु कृच्छ्रचान्द्रायणादिषु गृहस्थ एवाधिक्रियते, 'गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः। अपत्यस्यैव चापत्यं तदाऽरण्यं समाश्रयेत्॥' (मस्मृ. ६।२) इति तस्यैवारण्याश्रयणेन तपोविधानात्। आश्रमसमुच्चये चैतत्। दानेष्वपि गृहस्थ एवाधिकारी, तस्यैव धनसंग्रहविशेषात्। यद्यपि ब्रह्मचारिणोऽपि रिक्थादिसंभवेन दानमस्त्येव, तथाप्यत्र भिक्षादानातिथिभोजनादौ गृहस्थ एवाधिकारीति तदभिप्रायोऽत्र दानशब्द इति न विरोधः। तस्मात् सर्वाश्रमिभ्यो गृहस्थः श्रेष्ठः। वै.

**ऋषयः पितरो देवा भूतान्यतिथयस्तथा।**
**आशासते कुटुम्बिभ्यस्तस्माच्छ्रेष्ठो गृहाश्रमी॥**

ऋषयः वानप्रस्थाः, 'ग्रामादाहृत्य वा ग्रासानष्टौ भुञ्जीत वाग्यतः।' (यास्मृ. ३।५५) इति स्मरणात्। पितरः श्राद्धे। देवाः यज्ञादौ। भूतानि श्वादीनि, 'शुनां च पतितानां च श्वपचां पापरोगिणाम्। वायसानां क्रिमीणां च शनकैर्निक्षिपेद्भुवि॥' (मस्मृ. ३।९२) इति मानवात्। अतिथयः वक्ष्यमाणाः। एते सर्वे कुटुम्बिभ्यः गृहस्थेभ्य एव स्वस्ववृत्तिमाशासते। तस्मात् स श्रेष्ठः। वै.

वानप्रस्थ्येऽधिकारः, तच्च भार्यया
सह विना वा

**'गृही वलीपलितदर्शने वनाश्रयो भवेत्॥**

एवं गृहस्थधर्मानुक्त्वा इदानीं चतुर्नवतितमेन क्रमप्राप्तान् वानप्रस्थधर्मानाह – गृहीति। गृहीति गार्हस्थ्यानन्तर्यनियमायाधिकारिनिर्देशः। एतच्चाऽऽश्रमसमुच्चयाभिप्रायेण, 'तेषु सर्वेषु यथोपदेशमव्यग्रो वर्तमानः क्षेमं गच्छति।' (आध. २।२१।२) इति आपस्तम्बस्मरणात्। विकल्पे तु 'अविप्लुतब्रह्मचर्यो यमिच्छेत्तु तमावसेत्॥' (मस्मृ. ३।२) इति ध्येयम्। अत्रोभयत्रापि यत्तच्छब्दाभ्यामाश्रमस्यैव परामर्शः। वलीपलितदर्शन इति कालनियमः। 8वनाश्रय इति देशनियमः, 'ग्रामं च न प्रविशेत्' (गौध. ३।३३) इति गौतमीयात्। वै.

**अपत्यस्य चापत्यदर्शने वा॥**

कालान्तरमप्याह – अपत्यस्येति। अपत्यं पुत्रः, तस्यापत्यं पौत्रः, तस्य दर्शने वा। चकारादायुषस्तृतीयभागे वा, 'वनेषु तु विहृत्यैवं तृतीयं भागमायुषः' (मस्मृ. ६।३३) इति मानवीयात्। वै.

**पुत्रेषु भार्यां निक्षिप्य तयाऽनुगम्यमानो वा॥**

तत्राधिकारिविशेषणमाह – पुत्रेष्विति। पुत्रे पुत्रयोः पुत्रेषु वा भार्यां सवर्णामसवर्णां वा अवश्यभरणीयामदत्तस्त्रीधनां भरणार्थं निक्षिप्य, दत्तस्त्रीधनां तु पारतन्त्र्याय। यद्यपीदं द्वयमपि प्राप्तमेव, तथापि नियमार्थं पुनर्वचनम्। निक्षेपश्चायं भार्यानुमतौ। अननुमतौ तु तयाऽनुगम्यमानः सहितो वा वनं गच्छेत्। तयेति कुटुम्बोपलक्षणम्, 'गृहान् हित्वा सदारः सप्रजः सहाग्निभिर्बहिर्ग्रामाद्वसेत्।' (आध. २।२२।८) इति आपस्तम्बीयात्। सप्रजः यस्यापत्यस्य मातरं विना जीवनासंभवः तेन सहित इत्यर्थः। जीवद्भार्यस्येदम्, मृतभार्यस्य तु केवलस्यैव वनवासः, 'एको वा' (आध. २।२२।९) इति आपस्तम्बीयात्। वै.

संन्यासाधिकारः संन्यासग्रहणविधिश्च

**'अथ त्रिष्वाश्रमेषु पक्वकषायः प्राजापत्यामिष्टिं कृत्वा सर्ववेदसं दक्षिणां दत्त्वा प्रव्रज्याश्रमी स्यात्॥**

वनस्थधर्मोक्त्यनन्तरं क्रमप्राप्तान् संन्यासिधर्मान् षण्णवतितमाध्यायेनाऽऽह – अथेति। संन्यासिधर्मप्रस्तावाय अथशब्दः, आनन्तर्यस्य पाठेनैव सिद्धेः। त्रिष्वाश्रमेष्वित्यनेन आश्रमसमुच्चयोऽभिप्रेतः। तत्र विषयदोषदर्शनेन पक्वकषायः निवृत्तविषयवासनः। अनेन

(१) विस्मृ. ९४।१-३.

8 अत्र वनाश्रयशब्दस्य यौगिकरूढत्वमाश्रित्य तेन योगेन देशनियमः रूढ्या च वानप्रस्थत्वं विशेषणत्वेन बोध्यते, न केवलं यौगिकत्वमाश्रित्य देशनियम इत्यास्थेयम्। अन्यथा 'गृही सन् वनमाश्रयेत्' इत्यर्थपरत्वमापद्येत, न त्वाश्रमान्तरप्रवेशः प्रतीयेत, आश्रमान्तरनिर्देशाभावादिति प्रतीमः।

(१) विस्मृ. ९६।१.

आश्रमविकल्पोऽपि द्योतितः, ब्रह्मचर्यादावपि वैराग्येण विषयवासनानिवृत्तिसंभवात्। तदेतदुभयं जाबालश्रुतौ श्रूयते — 'ब्रह्मचर्यं परिसमाप्य गृही भवेत्। गृही भूत्वा वनी भवेत्। वनी भूत्वा प्रव्रजेत्। यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद् गृहाद्वा वनाद्वा' (जाउ. ४) इति। प्रजापतिदेवताकामिष्टिं कृत्वा, प्राजापत्यं स्थालीपाकं वा, 'य एवाऽऽहिताग्नेः पुरोडाशः स एवानाहिताग्नेः स्थालीपाकः' इति परिशिष्टवचनात्। तस्यां च सर्वं वेदः इति सर्ववेदसं सर्वं धनं दक्षिणां दत्त्वा बोधायनाद्युक्तविधिना प्रव्रज्याश्रमी संन्यासी स्यात्, प्रपरिपूर्वस्य व्रजतेः त्यागार्थत्वात्। अत्र च ब्राह्मणस्यैवाधिकार इति मनुः — 'आत्मन्यग्निं समारोप्य ब्राह्मणः प्रव्रजेद्गृहात्' (मस्मृ. ६।३८) इत्युपक्रम्य 'एष वोऽभिहितो धर्मो ब्राह्मणस्य चतुर्विधः' (मस्मृ. ६।९७) इत्युपसंहारात्। 'त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमाः' इति सूत्रवचनात् 'त्रैवर्णिकानामित्यन्ये।' त्रैवर्णिकस्त्रीणामपीति बोधायनः, 'स्त्रीणां चैके' इति स्मरणात्। वै.

कुब्जादीनां नैष्ठिकत्वं नित्यम्

***'कुब्जवामनजात्यन्धक्लीबपङ्ग्वार्तरोगिणाम्।**
**व्रतचर्या भवेत्तेषां यावज्जीवमनंशतः॥**

(१)एतच्च नैष्ठिकत्वं कुब्जादीनां नित्यमित्याह विष्णुः — कुब्जेति। अनंशतः अंशाभावादित्यर्थः। संग्रहकारोऽपि — 'पङ्ग्वादीनामनंशत्वादसामर्थ्याच्च शास्त्रतः। नियतं नैष्ठिकत्वं स्यात्कर्मस्वनधिकारतः॥' इति। नन्वेवं तर्हि कुब्जादीनामेव नैष्ठिकत्वमस्तु, नेतरेषाम्। मैवम्, 'यदि त्वात्यन्तिकं वासं रोचयेत गुरोः कुले। युक्तः परिचरेदेनमा शरीरविमोक्षणात्॥' (मस्मृ. २।२४३) इति पाक्षिकत्वप्रतिपादकमनुवचनविरोधात्। न हि कुब्जादीनां पाक्षिकं नैष्ठिकत्वमस्ति। ननु च यदीतरेषामपि नैष्ठिकत्वमस्ति, तर्हि 'यावज्जीवमग्निहोत्रं जुहुयात्' इति गृहस्थधर्मप्रतिपादिका श्रुतिर्बाध्येत। मैवम्, नैष्ठिकत्वस्य पाक्षिकत्वेन विषयान्तरसंभवात्। ये हि स्त्रीरागवशाद्गार्हस्थ्यमेव कामयन्ते तद्विषयेयं यावज्जीविका श्रुतिरित्यविरोधः। तथा च जाबालिः — 'गृही वनं प्रविशेत्। यदि गृहमेव कामयेत तदा यावज्जीवमग्निहोत्रं जुहुयात्' इति। युक्तं चैतत्, अन्यथा 'यमिच्छेत्तमाविशेत्', 'यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत्' (जाउ. ४) इत्यादयो बाध्येरन्। ननु च स्मार्तनैष्ठिकत्वस्य श्रौताग्निहोत्रादिना बाध एवास्तु। मैवम्, तस्यापि 'ब्रह्मचार्याचार्यकुलवासी द्वितीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयेत्' (छाउ. २।२३।१) इत्येतच्छ्रुतिमूलत्वेनाविशेषात्। अतो न ब्रह्मचारिद्वैविध्यमपहातुं शक्यम्। उक्तं च हारीतेन — 'द्विविधो ब्रह्मचारी — उपकुर्वाणो नैष्ठिकश्च' इति। ननु ब्रह्मचारिद्वैविध्ये 'चत्वार आश्रमाः' (आध. २।२१।१) इत्यापस्तम्बादिवचनं बाध्येत। मैवम्, संकल्पभेदमात्रेण नित्यकाम्याग्निहोत्रवदनयोरभेदोपपत्तेः।

$स्मृच.१।१७१-१७२

(२)यत्तु 'कुब्जवामन... न संशयः॥' इति विष्णुवचनान्नैष्ठिकत्वं कुब्जादिमात्रविषयकमिति, तन्न, 'चत्वार आश्रमाः' इत्युपक्रम्य 'यमिच्छेत्तमावसेत्' (वाध. ७।१-३) इति वसिष्ठेनोच्यमानस्य गृहस्थताया ऐच्छिकत्वस्यासंगत्यापत्तेः। भविष्यत्पुराणेऽपि — 'गार्हस्थ्यमिच्छन्भूपाल कुर्याद्दारपरिग्रहम्। ब्रह्मचर्येण वा कालं नयेत्संकल्पपूर्वकम्। वैखानसो वाऽपि भवेत्परिव्राडथवेच्छया॥' इति। वैखानसः वानप्रस्थः। तस्माद्रागिविषयकं गार्हस्थ्यम्, विष्णुवाक्यं तु नीरागमात्रोपलक्षकमिति। नैष्ठिकत्वं तु ब्राह्मणस्यैव, न तु क्षत्रियादेः, 'एवं चरति यो विप्रो ब्रह्मचर्यमविप्लुतः। स गच्छत्युत्तमं स्थानं न चेह जायते पुनः।' (मस्मृ. २।२४९) इति मनुवाक्ये विप्रपदेन क्षत्रियादिव्युदासादिति नारायणः।

δचमव्या. ४८

* अस्य वचनस्य पमा. व्याख्यानं मपा. व्याख्यानं च 'अनेन विधिना देहम्' (यास्मृ. १।५०) इति याज्ञवल्क्यवचने द्रष्टव्यम्।

(१) **अप.** १।५० पृ. ७२; **स्मृच.** १।१७१; **पमा.** १।४५९ मनंशतः (मसंशयम्); **मपा.** १११ व्रत (ब्रह्म); **चमव्या.**४८ वमनंशतः (वं न संशयः); **मुक्ता.** १२१ चमव्यावत्; **संम.** ४२; **संप्र.** ५५१; **बाल.** १।४९-५० पृ. १६८ चमव्यावत्.

$ मुक्ता., संप्र. स्मृचगतम्।

δ बाल. चमव्यावत्।

(३) केषांचिन्नैष्ठिकब्रह्मचर्यमेवेत्याह विष्णुः — 'कुब्जवामन ... मनंशतः' इति अत्रानंशत इति हेतुं वदता दृष्टमूलत्वमुक्तम्। अतः प्रतिग्रहादिना द्रव्यसद्भावे भवत्येव विवाहः। दृष्टं च धृतराष्ट्रे।

संम. ४१-४२

संन्यासप्रशंसा

[1]संन्यस्तमिति यो ब्रूयात्प्राणैः कण्ठगतैरपि।
न तत्क्रतुशतैः पुण्यं प्राप्तुं शक्नोति मानवः॥
[2]एकरात्रोषितस्यापि यतेर्या गतिरुच्यते।
न सा शक्या गृहस्थेन प्राप्तुं क्रतुशतैरपि॥
[3]संन्यस्तं तु द्विजं दृष्ट्वा स्थानाच्चलति भास्करः।
एष मे मण्डलं भित्त्वा परं ब्रह्माधिगच्छति॥

## लघुविष्णुः

आश्रमाणामवान्तरभेदाः तल्लक्षणानि च, आश्रमसमुच्चयविकल्पौ, आरूढपतितत्वस्य स्वरूपं निषेधश्च, ब्राह्मणस्यैव संन्यासेऽधिकारः

[4]वेदस्वीकरणे हृष्टो गुर्वधीनो गुरोर्हितः।
निष्ठां तत्रैव यो गच्छेन्नैष्ठिकः स उदाहृतः॥
गृहस्थधर्ममाकाङ्क्षन्गुरुगेहादुपागतः।
अनेनैव विधानेन कुर्याद्दारपरिग्रहम्॥
[5]चतुष्प्रकारं भिद्यन्ते गृहिणो धर्मसाधकाः।
वृत्तिभेदेन सततं ज्यायांस्तेषां परः परः॥
कुसूलधान्यको वा स्यात्कुम्भीधान्यक एव वा।
त्र्यैहिको वाऽपि भवेत्सद्यःप्रक्षालकोऽथ वा॥

8'गृहस्थो ब्रह्मचारी वा वनवासं यदाऽऽचरेत्।
चीरवल्कलधारी स्यादकृष्टान्नाशनो मुनिः॥
चतुष्प्रकारं भिद्यन्ते मुनयः संशितव्रताः।
अनुष्ठानविशेषेण श्रेयांस्तेषां परः परः॥
वार्षिकं वन्यमाहारमाहृत्य विधिपूर्वकम्।
वनस्थधर्ममातिष्ठन्नयेत्कालं जितेन्द्रियः॥
भूरिसंवार्षिकश्चायं वनस्थः सर्वकर्मकृत्।
आदेहपतनं तिष्ठेत्काङ्क्षन्मोक्षं दृढव्रतः॥
षण्मासांस्तु ततश्चान्यः पञ्चयज्ञक्रियापरः।
काले चतुर्थे भुञ्जानो देहं त्यजति धर्मतः॥
त्रिंशद्दिनार्थमाहृत्य वन्यान्नानि मुनिव्रतः।
निर्वर्त्य सर्वकार्याणि स्याच्च षष्ठान्नभोजनः॥
दिनार्थमन्नमादाय पञ्चयज्ञक्रियारतः।
सद्यःप्रक्षालको नाम चतुर्थः परिकीर्तितः॥
एवमेते हि वै मान्या मुनयः संशितव्रताः॥
[2]यथोत्तमानि स्थानानि प्राप्नुवन्ति दृढव्रताः।
ब्रह्मचारी गृहस्थो वा वानप्रस्थो मुनिस्तथा।
विरक्तः सर्वकामेषु पारिव्राज्यं समाचरेत्॥
[3]आत्मन्यग्नीन्समारोप्य दत्त्वा वाऽभयदक्षिणाम्।
चतुर्थमाश्रमं गच्छेद्ब्राह्मणः प्रव्रजन्गृहात्॥
[4]चतुर्विधा भिक्षुकाः स्युः कुटीचकबहूदकौ।
हंसः परमहंसश्च पश्चाद्यो यः स उत्तमः॥
[5]भिक्षाटनादिकेऽशक्तो यतिः पुत्रेषु संन्यसेत्।
कुटीचक इति ज्ञेयः परिव्राट्त्यक्तबान्धवः॥
[6]त्रिदण्डं कुण्डिकां चैव भिक्षाधारं तथैव च।
सूत्रं तथैव गृह्णीयान्नित्यमेव बहूदकः॥

---

(१) मुक्ता. १७४ शतैः पुण्यं (शतेनापि); सिन्धु. २१४९; यसं. १८ उत्तरार्धे (न तत्क्रतुसहस्रेण फलं प्राप्नोति मानवः॥) स्मृतिः : २० मुक्तावत्; बाल. ३।६० पृ. १०० उत्तरार्धे (स भित्त्वा मण्डलं भानोः परं ब्रह्माधिगच्छति॥) स्मृतिः, तत्रैव मुक्तावत्, अङ्गिराः.

(२) मुक्ता. १७५; सिन्धु. २१४९ चतुर्थचरणे (आतुरोऽपि च संन्यसेत्); यसं. २०; बाल. ३।६० पृ. १०० अङ्गिराः.

(३) यसं. २०.

(४) लविस्मृ. ११२४, २५-२६.

(५) लविस्मृ. २।१६-१७.

8 श्लोकोऽयमाश्रमविकल्पसूचकत्वादत्र संगृहीतो धर्मविषयकोऽपि।

(१) लविस्मृ. ३।१, ११-१७.

(२) लविस्मृ. ४।१; यसं. १५४ प्रथमार्धं नास्ति। स्थो मुनिस्तथा (स्थोऽथ वा पुनः) कामेषु (कामेभ्यः) चरेत् (हितः) (=).

(३) लविस्मृ. ४।२.

(४) लविस्मृ. ४।११; बाल. ३।६० पृ. ९८ (चतुर्धा भिक्षयेद्भिक्षां कुटीचकबहूदके। हंसः परमहंसश्च श्रेयश्चैषां यथोत्तरम्॥) विष्णुस्मृतिः.

(५) लविस्मृ. ४।१५; बाल. ३।६० पृ. ९८ केऽशक्तो (कं सर्वं) व्राट्त्यक्तबा (व्राजकबा) विष्णुस्मृतिः.

(६) लविस्मृ. ४।१६; बाल. ३।६० पृ. ९८ प्रथमचरणे (त्रिदण्डो गुरवे चैव) बहूदकः (समाहितः) विष्णुस्मृतिः.

**[1]त्यक्त्वा पुत्रादिकं सर्वं योगमार्गव्यवस्थितः।**
**इन्द्रियाणि मनश्चैव कर्षन्हंसोऽभिधीयते॥**
**[2]आत्मनिष्ठः स्वयं युक्तस्त्यक्तसर्वपरिग्रहः।**
**चतुर्थोऽयं महानेषां ध्यानभिक्षुरुदाहृतः॥**
**[3]ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा।**
**उत्तमां वृत्तिमाश्रित्य पुनरावर्तयेद्यदि॥**
**आरूढपतितो ज्ञेयः सर्वधर्मबहिष्कृतः।**
**निन्द्यश्च सर्वदेवानां पितॄणां च तथोच्यते॥**
**त्यक्त्वा लोकांश्च वेदांश्च विषयाणीन्द्रियाणि च।**
**आत्मन्येव स्थितो यस्तु प्राप्नोति परमं पदम्॥**
**[4]आश्रमास्तु त्रयः प्रोक्ता वैश्यराजन्ययोस्तथा।**
**पारिव्राज्याश्रमप्राप्तिर्ब्राह्मणस्यैव चोदिता॥**

## शङ्खः

गार्हस्थ्यप्रशंसा, गृहस्थस्य वानप्रस्थ्येऽ-
धिकारविशेषः, वानप्रस्थ्ये
भार्यासाहित्यविकल्पः,
संन्यासग्रहण-
विधिः

**[5]वानप्रस्थो ब्रह्मचारी यतिश्चैव तथा द्विजः।**
**गृहस्थस्य प्रसादेन जीवन्त्येते यथाविधि॥**
**गृहस्थ एव यजते गृहस्थस्तप्यते तपः।**
**ददाति च गृहस्थश्च तस्माच्छ्रेष्ठो गृहाश्रमी॥**
**[6]गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः।**
**अपत्यस्यैव चापत्यं तदाऽरण्यं समाश्रयेत्॥**
**पुत्रेषु दारान्निक्षिप्य तया वाऽनुगतो वनम्।**
**एवं नीत्वा वने कालं द्विजो ब्रह्माश्रमी भवेत्॥**
**[7]कृत्वेष्टिं विधिवत्पश्चात्सर्ववेदसदक्षिणाम्।**
**आत्मन्यग्नीन्समारोप्य द्विजो ब्रह्माश्रमी भवेत्॥**

(१) **लविस्मृ.** ४।१९; **बाल.** ३।६० पृ. ९८ चतुर्थचरणे (हर्षे हंसो विधीयते) उत्त., विष्णुस्मृतिः.

(२) **लविस्मृ.** ४।२३; **बाल.** ३।६० पृ. ९८ प्रथमचरणे (आत्मा दृष्टसमायुक्तस्) महानेषां ध्यान (महान् तेषां धान्य) विष्णुस्मृतिः.

(३) **लविस्मृ.** ४।३२-३३, ३५.

(४) **लविस्मृ.** ५।१३.

(५) **शंस्मृ.** ५।५-६.

(६) **शंस्मृ.** ६।१-२, ७.

(७) **शंस्मृ.** ७।१.

## शङ्खलिखितौ

ब्रह्मचर्यादेव पारिव्राज्यमित्यैकाश्रम्यमिति
मतं तदुपपादनं च

**[1]ऊर्ध्वरेतस एवैके पारिव्राज्यमिच्छन्ति, न गृहस्थवानप्रस्थयोः। पूर्वस्यानुच्छेदादुभयधर्मोपपत्तेरुत्तरस्यानपेक्ष्यत्वादैकाश्रम्यम्॥**

ऊर्ध्वरेतस एव इत्यत्र हेतुः पूर्वस्य इत्यादि। तस्याऽऽचार्यपूर्वस्योर्ध्वरेतस्त्वस्य पारिव्राज्येऽप्यनुच्छेदात्। उभयधर्मोपपत्तेः उभयत्र प्रथमचतुर्थाश्रमयोः ये धर्माः यमनियमादयः तेषामुपपत्तेः संभवात्, उत्तरस्य गार्हस्थ्यस्य परिपक्वकषायेणानपेक्षणीयत्वात् ऐकाश्रम्यम् आद्यान्तिमयोराश्रमयोरेकरूपत्वम्।

ब्रक. २६७

**चतुर्विंशकमष्टाचत्वारिंशकं वा ब्रह्मचर्यम्। तद्गुरवे समाधेयम्। नैष्ठिकमात्मज्ञानसंस्थम्। पूर्वोत्तरयोरेकज्ञानमनारम्भत्वात्। आचार्य(?र)श्रान्तः यन्त्री शुद्धिमाप्नोतीत्येवं ह्याह –**

**तपसा भावितात्मानः सत्यधर्मपरायणाः।**
**ब्रह्मणैवोपसंपन्ना ब्राह्मणा ब्रह्मलौकिकाः॥**
**न च्यवन्ते पुनस्तस्माच्छुद्धा धर्मतपोमयाः।**
**लोकास्तेजोमयास्तेषां ये चरन्त्यूर्ध्वरेतसः॥**

चतुर्विंशकं चतुर्विंशतिपरिमितम्। एवम् अष्टाचत्वरिंशकम्। गुरवे गुर्वाराधनाय समाधेयम् अनुष्ठेयम्। आत्मज्ञानसंस्थम् आत्मज्ञानप्रतिष्ठितम्। पूर्वोत्तरयोः आद्यचतुर्थयोः एकज्ञानम् एकत्वेन ज्ञानम् अनारम्भत्वात् ऋत्विक्साध्यारम्भयज्ञपरत्वाभावात् यन्त्री यन्त्रवान्। यन्त्राणि यमनानि चतुर्थकालभोजनादीनि।

ब्रक. २६७-२६८

समुच्चयपक्षे वानप्रस्थ्यपारिव्राज्ययोरधिकार-
विशेषः, पारिव्राज्याधिकारे सति
कालक्षपणनिषेधः

**[2]पुत्रानुत्पाद्य संस्कृत्य वेदमध्याप्य वृत्तिं विधाय**

(१) **ब्रक.** २६७.

(२) **विश्व.** १।१२७ (अत ऊर्ध्वं पुत्रानुत्पाद्य.... क्रतुप्रस्थानलिङ्गो वृत्तिविशेषानुक्रमः श्रेयान् यायावराणां वार्तामुपास्य वनमाश्रयेत्) एतावदेव, शङ्खः; **अप.** ३।४४ पृ. ९४०; **मोक.** १२-१३ मध्याप्य + (तेभ्यो) षाननुक्रमेत् (षार्थमुत्क्रामेत्) यणे पूर्व (यणपूर्व); **पमा.** १।५२६.

**दारैः संयोज्य गुणवति पुत्रे कुटुम्बमावेश्य कृतप्रस्थानलिङ्गो वृत्तिविशेषाननुक्रमेत्। क्रमशो यायावराणां वृत्तिमुपास्य वनमाश्रयेदुत्तरायणे पूर्वपक्षे॥**

(१) गार्हस्थ्याद्वानप्रस्थाश्रमं गच्छतो विशेषमाहतुः शङ्खलिखितौ — पुत्रानिति।

अप. ३।४४ पृ. ९४०

(२) एतच्चाऽऽश्रमसमुच्चयपक्षे द्रष्टव्यम्। असमुच्चयपक्षे त्वकृतगार्हस्थ्योऽपि वानप्रस्थ्येऽधिक्रियते। तदाह वसिष्ठः — 'चत्वार आश्रमा ब्रह्मचारिगृहस्थवानप्रस्थपरिव्राजकाः। तेषां वेदमधीत्य वेदं विदित्वा चीर्णब्रह्मचर्यो यमिच्छेत्तमावसेत्' इति।

पमा. १।५२६

[१]**वनवासादूर्ध्वं शान्तस्य परिणतवयसः कामतः प्रव्रज्या। तमेवाग्निमात्मन्यारोप्य व्यपगतभयलोभमोहक्रोधशोकद्रोहमदमत्सरः कालं नानुचिन्तयेदनवस्थितत्वान्मनसः। श्रद्धा ह्यनियता भवति। तस्मान्न श्वः श्वः समुपासीत। तदहरेव संन्यसेत्सर्वारम्भपरिग्रहानुत्सृज्य॥**

## महाभारतम्

### ब्रह्मचर्यफलम्

[२]**उत्पाद्य पुत्राननृणांश्च कृत्वा**
**वृत्तिं च तेभ्योऽनुविधाय कांचित्।**
**स्थाने कुमारीः प्रतिपाद्य सर्वा**
**अरण्यसंस्थो मुनिवद्बुभूषेत्॥**
[३]**धर्मादयो द्वादश यस्य रूप-**
**मन्यानि चाङ्गानि तथा बलं च।**

(१) **अप.** ३।५५-५६ पृ. ९४७; **मोक.** ३१ प्रव्रज्या (परिव्रज्य) व्यपगत (अपगत) समुपा (उपा); **मनु.** ६।३३ (वनवासादूर्ध्वं शान्तस्य परिगतवयसः पारिव्राज्यम्) एतावदेव; **चका.** ८०९ प्रव्रज्या। तमे (परिव्रजनमे) मत्सरः कालं नानुचिन्तयेदनवस्थितत्वान्म (मत्सरकलत्रस्योचितवेदनावस्थितम) श्रद्धा ह्यनियता (श्रद्धाद्यनियतं) तस्मान्न श्वः श्वः समुपासीत। तदह (तस्मात्तदहरेवोपासीत यदह).

(२) **भा.** ५।३७।३५; **भामु.** ५।३७।३९ संस्थो मुनिवद्बु (संस्थोऽथ मुनिर्बु); **मोक.** १२ कांचित् (किंचित्) संस्थो मुनिवद्बु (मासाद्य मुनिर्बु).

(३) **भामु.** ५।४४।१७.

**आचार्ययोगे फलतीति चाऽऽहु-**
**र्ब्रह्मार्थयोगेन च ब्रह्मचर्यम्॥**

यस्य ब्रह्मचर्यस्य रूपं स्वरूपभूता इत्यर्थः। अन्यानि चाङ्गानि आसनप्राणजयादीनि। बलं योगे नित्योद्युक्तता। ब्रह्मार्थः वेदार्थः कर्मब्रह्मणी, तयोर्योगेन अधिगमेन ब्रह्मचर्यं फलतीत्यर्थः। नीटी.

[१]**एवं वसन्सर्वतो वर्धतीह**
**बहून्पुत्रांल्लभते च प्रतिष्ठाम्।**
**वर्षन्ति चास्मै प्रदिशो दिशश्च**
**वसन्त्यस्मिन्ब्रह्मचर्ये जनाश्च॥**

वसन् ब्रह्मचर्ये इति शेषः। सर्वतः सर्वैः प्रकारैः। वर्धति वर्धते। वर्षन्ति धनैरिति शेषः। नीटी.

**एतेन ब्रह्मचर्येण देवा देवत्वमाप्नुवन्।**
**ऋषयश्च महाभागा ब्रह्मलोकं मनीषिणः॥**
[२]**गन्धर्वाणामनेनैव रूपमप्सरसामभूत्।**
**एतेन ब्रह्मचर्येण सूर्यो अह्नाय जायते॥**
[३]**आकाङ्क्ष्यार्थस्य संयोगाद्रसभेदार्थिनामिव।**
**एवं ह्येते समाज्ञाय तादृग्भावं गता इमे॥**

रसभेदः पारदगुटिकाविशेषश्चिन्तामणिसंचिन्तितवस्तुप्रदम् अर्थयन्ते तेषां रसभेदार्थिनां यथा आकाङ्क्ष्यस्य लिप्सितस्यार्थस्य संयोगः प्राप्तिः, ततो यादृक् भावो भवति एवमेव एते देवादयः समाज्ञाय ब्रह्मचर्यमुपेत्य तादृग्भावं सत्यसंकल्पत्वाच्चिन्तितवस्तुप्रदत्वं गताः। नीटी.

[४]**य आशयेत्पाटयेच्चापि राजन्**
**सर्वं शरीरं तपसा तप्यमानः।**
**एतेनासौ बाल्यमत्येति विद्वान्**
**मृत्युं तथा रोधयत्यन्तकाले॥**

सर्वं चतुष्पाद्ब्रह्मचर्यं य आश्रयेत् शरीरं च पावयेत्। बाल्यं रागद्वेषादिराहित्यं वेदान्तार्थानां युक्तिपूर्वक-

(१) **भा.** ५।४४।१३-१४; **भामु.** ५।४४।१९-२०.

(२) **भा.** ५।४४।१५; **भामु.** ५।४४।२१ सूर्यो अ (सूर्यो ऽप्य).

(३) **भामु.** ५।४४।२२.

(४) **भा.** ५।४४।१६; **भामु.** ५।४४।२३ आशयेत्पाटये (आश्रयेत्पावये) एतेनासौ (एतेन वै) मत्येति (मभ्येति) रोधय (स जय).

मनुचिन्तनेन तत्त्वनिश्चयं वा। अन्तकाले इत्यनेन यावज्जीवमुक्तप्रकारे बाल्ये तिष्ठेदिति दर्शितम्। यथोक्तम् – 'शक्नोतीहैव यः सोढुं प्राक् शरीरविमोक्षणात्। कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः॥' (भगी. ५।२३) इति।

नीटी.

गार्हस्थ्यप्रशंसा

**[1]आपत्काले हि संन्यासः कर्तव्य इति शिष्यते।**
**जरयाऽभिपरीतेन शत्रुभिर्व्यंसितेन च॥**

ननु संन्यास एव नः श्रेयानित्युक्तम्, तत आह – आपदिति। व्यंसितेन दुर्गतिं प्रापितेन।

नीटी.

**[2]तस्मादिह कृतप्रज्ञास्त्यागं न परिचक्षते।**
**धर्मव्यतिक्रमं चेदं मन्यन्ते सूक्ष्मदर्शिनः॥**

इह क्षत्रयोनौ त्यागं 'चरन् भैक्ष्यं मुनिः' इत्युक्तविधं संन्यासं न परिचक्षते न प्रशंसन्ति। तत्र हेतुः – धर्मेति। 'मुखजानामयं धर्मो वैष्णवं लिङ्गधारणम्। बाहुजातोरुजातानां नायं धर्मो विधीयते॥' इति स्मृतेः क्षत्रियस्य मौण्ड्यादिकं निषिद्धम्, तस्याऽऽचरणे धर्मव्यतिक्रमोऽस्त्येवेति भावः।

नीटी.

**अर्जुन उवाच –**
**[3]अत्रैवोदाहरन्तीममितिहासं पुरातनम्।**
**तापसैः सह संवादं शक्रस्य भरतर्षभ॥**

एवं संन्यासः श्रेयानिति धर्मस्य पक्षः, गार्हस्थ्यं श्रेय इति भीमस्य पक्षः तत्र आद्यस्य श्रैष्ठ्यं मत्वाऽनधिकारिकृतसंन्यासापेक्षया गार्हस्थ्यमेव श्रेय इत्याख्यायिकामुखेन समर्थयन्नर्जुन उवाच – अत्रैवेत्यादिना।

नीटी.

**केचिद्गृहान्परित्यज्य वनमभ्यगमन्द्विजाः।**
**अजातश्मश्रवो मन्दाः कुले जाताः प्रवव्रजुः॥**

प्रवव्रजुः पुनर्गृहं प्रति न गन्तव्यमिति प्रकर्षेण गता इत्यर्थः। नीटी.

**[1]धर्मोऽयमिति मन्वाना ब्रह्मचर्ये व्यवस्थिताः।**
**त्यक्त्वा गृहान्पितॄंश्चैव तानिन्द्रोऽन्वकृपायत॥**
**[2]तानाबभाषे भगवान्पक्षी भूत्वा हिरण्मयः।**
**सुदुष्करं मनुष्यैश्च यत्कृतं विघसाशिभिः॥**

विघसाशिभिः महायज्ञावशिष्टभोजिभिः।

नीटी.

**[3]पुण्यं च बत कर्मैषां प्रशस्तं चैव जीवितम्।**
**संसिद्धास्ते गतिं मुख्यां प्राप्ता धर्मपरायणाः॥**

**ऋषय ऊचुः –**
**[4]अहो बतायं शकुनिर्विघसाशान्प्रशंसति।**
**अस्मान्नूनमयं शास्ति वयं च विघसाशिनः॥**

शास्ति ज्ञापयति। विगतः घसः अन्नं यस्य तदन्नं विघसं शीर्णतृणपर्णफलादिकम्, तददनशीलास्तु वयमेव अतो विघसाशिनः श्रेयांसः स्म इति मेनिरे इत्यर्थः।

नीटी.

**शकुनिरुवाच –**
**नाहं युष्मान्प्रशंसामि पङ्कदिग्धान्रजस्वलान्।**
**उच्छिष्टभोजिनो मन्दानन्ये वै विघसाशिनः॥**

पङ्कदिग्धान् रजस्वलानित्यागन्तुकस्वाभाविकदोषयुक्तत्वमुक्तं क्रमेण। उच्छिष्टभोजिन इति। प्रायेण शीर्णतृणपर्णफलानि मृगकीटपक्ष्युच्छिष्टानि भवन्ति, तद्भोजिनः। मन्दान् मूढान्। नीटी.

**ऋषय ऊचुः –**
**[5]इदं श्रेयः परमिति वयमेवाभ्युपास्महे।**
**शकुने ब्रूहि यच्छ्रेयो भृशं वै श्रद्दधाम ते॥**

ते तव, वच इति शेषः। नीटी.

**शकुनिरुवाच –**
**[6]यदि मां नाभिशङ्कध्वं विभज्याऽऽत्मानमात्मना।**
**ततोऽहं वः प्रवक्ष्यामि याथातथ्यं हितं वचः॥**

(१) भा. १२।१०।१७; भामु. १२।१०।१७ च (वा).
(२) भा. १२।१०।१८; भामु. १२।१०।१८ चेदं (चैव).
(३) भा. १२।११।१-२; भामु.

(१) भा. १२।११।३; भामु. १२।११।३ द्वितीयचरणे (समृद्धा ब्रह्मचारिणः) गृहान् (भ्रातॄन्).
(२) भा. १२।११।४; भामु.
(३) भा. १२।११।५; भामु. १२।११।५ च बत कर्मैषां (भवति कर्मेदं) संसिद्धा (सिद्धार्था).
(४) भा. १२।११।६-७; भामु.
(५) भा. १२।११।८; भामु. १२।११।८ वै (ते) धाम ते (धामहे).
(६) भा. १२।११।९-११; भामु.

श्रद्दधानोऽन्यो वक्ताऽऽत्मा, शङ्किताऽन्यो मन्ताऽऽत्मे(ती?)त्यात्मन्येवायं विभागः विषमभागद्वयम्। यदि धूर्ता न भविष्यथेत्यर्थः।

नीटी.

**ऋषय ऊचुः –**

**शृणुमस्ते वचस्तात पन्थानो विदितास्तव।**
**नियोगे चैव धर्मात्मन्स्थातुमिच्छाम शाधि नः॥**

पन्थानः श्रेयोमार्गाः। नीटी.

**शकुनिरुवाच –**

**चतुष्पदां गौः प्रवरा लोहानां काञ्चनं वरम्।**
**शब्दानां प्रवरो मन्त्रो ब्राह्मणो द्विपदां वरः॥**
**[1]मन्त्रोऽयं जातकर्मादि ब्राह्मणस्य विधीयते।**
**जीवतो यो यथाकालं श्मशाननिधनादिति॥**

मन्त्रः मन्त्रोक्तसंस्कारः। श्मशानेति पदं यतिनिधनव्यावृत्त्यर्थम्। नीटी.

**[2]कर्माणि वैदिकान्यस्य स्वर्ग्यः पन्थास्त्वनुत्तमः।**
**अथ सर्वाणि कर्माणि मन्त्रसिद्धानि चक्षते॥**

कर्माणि स्वर्ग्यः पन्था इति न चेत्तर्हि कथं मे मत्समक्षं मदर्थं वा कर्माणि चक्रिरे प्राञ्चः? स्वर्गार्थिन इति शेषः। अतस्तानि स्वर्ग्याण्येवेति भावः। मन्त्रसिद्धानि मन्त्रैः प्रकाशितानि।

नीटी.

**[3]आम्नायदृढवादीनि तथा सिद्धिरिहेष्यते।**
**मासार्धमासा ऋतव आदित्यशशितारकम्॥**

दृढवादी दृढनिश्चयः पुमान्यथाऽऽत्मानम् इति एति, गुणाभाव आर्षः, यद्देवतारूपं जानीते 'अयमहमस्मि साम्बशिवः' इति, तथैवेह लोके शास्त्रे वा सिद्धिः तत्तद्देवतातादात्म्यरूपा इष्यते, 'तं यथा यथोपासते तथैतः प्रेत्य भवन्ति' (मुद्गउ. ३।३) इति श्रुतेः। "अथाऽऽगमः – 'यां यां देवतां निराह तस्यास्तस्यास्ताद्भाव्यमनुभवति" इति स्मृतेश्च। तत्र कतिप्रकारा सिद्धिरित्यत आह – मासेति। माघादिभिर्मासैः, शुक्लैरर्धमासैः, शिशिरादिभिर्ऋतुभिश्च आदित्यमार्गप्राप्तिरूपा एका सिद्धिः क्रममुक्तिस्थानभूतब्रह्मलोकावाप्तिफला। तथा श्रावणादिभिर्मासैः, कृष्णैरर्धमासैः, वर्षादिभिर्ऋतुभिः शशिमार्गप्राप्तिरूपा द्वितीया सिद्धिः पुनरावृत्तिस्थानभूतस्वर्गलोकावाप्तिफला। तथा मार्गद्वयानपेक्षा आध्यात्मिकमाधिभौतिकं वा विमुक्तमुपासीनानां देहान्ते तारकब्रह्मावाप्तिरूपा तृतीया सद्योमुक्तिफला। तथा च श्रुतयः – 'स एतान्ब्रह्म गमयति' (छाउ. ४।१५।६), 'न स (? च) पुनरावर्तते' (छाउ. ८।१५।१) इति, तथा 'एतमेवाध्वानं पुनर्निवर्तते (? न्ते)' (छाउ. ५।१०।५) इति, तथा 'अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृतीभूत्वा मोक्षीभवति' (जाउ. १) इति च क्रमेण ज्ञेयाः। नीटी.

**[1]ईहन्ते सर्वभूतानि तद्दत्तं कर्मसञ्ज्ञिनाम्।**
**सिद्धिक्षेत्रमिदं पुण्यमयमेवाऽऽश्रमो महान्॥**

तदिदम् आदित्यशशितारकात्मकं सिद्धित्रयं कर्मसंज्ञितं कर्मफलत्वेनाभिहितम् ईहन्ते कामयन्ते सर्वभूतानि। तस्मात् कर्माधिकारस्थानं गार्हस्थ्यमेव सिद्धिक्षेत्रं पुण्यश्चायमाश्रमो महांश्च। नीटी.

**[2]अथ ये कर्म निन्दन्तो मनुष्याः कापथं गताः।**
**मूढानामर्थहीनानां तेषामेनस्तु विद्यते॥**

अन्यथा दोषमाह – अथेति। निन्दन्तः निन्दां कृत्वा कापथं त्वदुक्तं त्यागमार्गं ये गतास्तेषाम् एनः पापं विद्यते। नीटी.

**देववंशान्पितृवंशान्ब्रह्मवंशांश्च शाश्वतान्।**
**संत्यज्य मूढा वर्तन्ते ततो यान्त्यश्रुतीपथम्॥**

आदित्यशशितारकाख्यसिद्धित्रयानादरे दुर्गतिमाह – देवेति। वंश इव वंशः अर्चिरादिपर्वोपेतत्वान्मार्गः। देववंशः देवयानमार्गः। तथा पितृवंशः पितृयानमार्गः, ब्रह्मवंशः ब्रह्मावाप्तिमार्गः। तत्प्राप्त्युपायबहुत्वात्प्रत्येकं

---

(१) **भा.** १२।११।१२; **भामु.** १२।११।१२ दि ब्रा (दिर्ब्रा) तो यो (तोऽपि) दिति (द्भिः).

(२) **भा.** १२।११।१३; **भामु.** १२।११।१३ अथ सर्वाणि क (कथं मे सर्वक) चक्षते (चक्रिरे).

(३) **भा.** १२।११।१४; **भामु.** १२।११।१४ प्रथमचरणे (आत्मानं दृढवादीति).

(१) **भा.** १२।११।१५; **भामु.** १२।११।१५ द्वितीयचरणे (तदिदं कर्मसंज्ञितम्).

(२) **भा.** १२।११।१६-१७; **भामु.**

बहुवचनम्। एषां त्यागेन अश्रुतीपथं क्षुद्रदन्दशूकादियोनिं यान्ति। श्रुतीति दैर्घ्यमार्षम्। नीटी.

[1]'एतद्वोऽस्तु तपो युक्तं ददानीत्यृषिचोदितम्।
तस्मात्तदध्यवसतस्तपस्वि तप उच्यते॥

एतत् कर्म वः युष्माकम् अस्तु। तच्च तपोयुक्तम् उपासनायुक्तम्। उपासना चात्र द्विविधा – अध्यात्मम् अधियज्ञं च। तत्र यज्ञाङ्गेऽश्वादौ विराट्दृष्टिरूपा '(उषा) वा अश्वस्य मेध्यस्य शिरः' (बृउ. १।१।१) इत्यादिना विहिताऽन्त्या। आद्या त्वविमुक्तोपासना 'सोऽविमुक्त उपास्यः' (जाउ. २) इत्युपक्रम्य 'कतमच्चास्य स्थानं (भवतीति) भ्रुवोर्घ्राणस्य च यः संधिः' (जाउ. २) इत्यादिना विहिता। एतेन द्विविधाऽप्युपासना कर्मसमुच्चितैव कर्तव्येति दर्शितम्। किं भूतम् एतत्कर्म? ददामीति ऋषिणा मन्त्रेण चोदितम्। तथा चेन्द्रवाक्यं कर्मकाण्डे – 'देहि मे, ददामि ते' (तैसं. १।८।४।१) इति। देवतोद्देशन द्रव्यत्यागरूपं दानं कुरु, तुभ्यं चाहं पुत्रपशुवर्गादिकं फलं दास्यामीति मन्त्रार्थः। यस्मादेवं तस्मात्तत्र तत्र मार्गे व्यवस्थानं निष्ठापूर्विका स्थितिः तदेव तपस्विनां तप उच्यते, नान्यत्कायशोषणादि। नीटी.

[2]'देववंशान्पितृवंशान्ब्रह्मवंशांश्च शाश्वतान्।
संविभज्य गुरोश्चर्यां तद्वै दुष्करमुच्यते॥

अङ्गोपास्तियुक्तं वा केवलं वा विमुक्तोपास्तियुक्तं वा देववंशादिशब्दोपलक्षितं कर्म गुरोः चर्यां परिचर्यां संविभज्य परस्पराविरोधेन दिननाडीविभागेन नित्यं क्रियमाणं दुष्करं दुःसाध्यम् उच्यते विद्वद्भिः। इत्थमेव कर्तव्यमिति भावः। नीटी.

[3]'देवा वै दुष्करं कृत्वा विभूतिं परमां गताः।
तस्माद्गार्हस्थ्यमुद्वोढुं दुष्करं प्रब्रवीमि वः॥

एतदेव परकृत्या द्रढयति – देवा इति। नीटी.

तपः श्रेष्ठं प्रजानां हि मूलमेतन्न संशयः।
कुटुम्बविधिनाऽनेन यस्मिन्सर्वं प्रतिष्ठितम्॥

तपः कर्मैव प्रजानां मूलम् अतः श्रेष्ठम् यतः अनेन छान्दोग्यदृष्टेन कुटुम्बविधिना 'कुटुम्बे शुचौ देशे स्वाध्यायमधीयानः' (छाउ. ८।१५।१) इत्यादिना यस्मिन्गृहस्थकर्मणि सर्वं प्रतिष्ठितम्। तथा च सूत्रम् – 'कृत्स्नभावात्तु गृहिणोपसंहारः' (ब्रसू. ३।४।४८) इति। सर्वेषामाश्रमाणां धर्मा गृहे एव सन्ति न त्वन्यत्रेति हेतोश्छान्दोग्ये 'कुटुम्बे' इत्यादिश्रुत्या गृहिणैव विद्योपसंहारः कृत इति सूत्रार्थः। नीटी.

[1]'एतद्विदुस्तपो विप्रा द्वन्द्वातीता विमत्सराः।
तस्माद्व्रतं मध्यमं च लोकेषु तप उच्यते॥

व्रतं ब्रह्मचर्याद्युपेतमध्ययनं मध्यमं च, तद्रहितं यज्ञादि च तपःशब्देनोच्यते। नीटी.

[2]'दुराधर्षं पदं चैव गच्छन्ति विघसाशिनः।
सायं प्रातर्विभज्यान्नं स्वकुटुम्बे यथाविधि॥

तयोर्द्वितीयं स्तौति – दुराधर्षमिति। विघसाशिपदं व्याचष्टे – सायमिति सार्धेन। नीटी.

[3]'दत्त्वाऽतिथिभ्यो देवेभ्यः पितृभ्यः स्वजनस्य च।
अवशिष्टानि येऽश्नन्ति तानाहुर्विघसाशिनः॥
[4]'तस्मात्स्वधर्ममास्थाय सुव्रताः सत्यवादिनः।
लोकस्य गुरवो भूत्वा ते भवन्त्यनुपस्कृताः॥

अनुपस्कृताः निःसंशयाः। नीटी.

[5]'त्रिदिवं प्राप्य शक्रस्य स्वर्गलोके विमत्सराः।
वसन्ति शाश्वतीर्वर्षा जना दुष्करकारिणः॥
[6]'ततस्ते तद्वचः श्रुत्वा तस्य धर्मार्थसंहितम्।
उत्सृज्य नास्तिकगतिं गार्हस्थ्यं धर्ममाश्रिताः॥

---

(१) भा. १२।११।१८; भामु. १२।११।१८ (एतद्वोऽस्तु तपोयुक्तं ददामीत्यृषिचोदितम्। तस्मात्तत्तद्व्यवस्थानं तपस्वितप उच्यते॥).

(२) भा. १२।११।१९; भामु. १२।११।१९ न्पितृवंशान्ब्रह्म (न्ब्रह्मवंशान्पितृ).

(३) भा. १२।११।२०-२१; भामु.

(१) भा. १२।११।२२; भामु. १२।११।२२ द्व्रतं (द्व्रतं) च (तु).

(२) भा. १२।११।२३; भामु.

(३) भा. १२।११।२४; भामु. १२।११।२४ जनस्य (जनाय).

(४) भा. १२।११।२५; भामु.

(५) भा. १२।११।२६; भामु. १२।११।२६ तीर्वर्षा ज (तान्वर्षाञ्ज).

(६) भा. १२।११।२७; भामु. १२।११।२७ श्लोकादौ (अर्जुन उवाच) द्वितीयचरणे (धर्मार्थसहितं हितम्) नास्तिकगतिं (नास्तीति गता) धर्ममा (समुपा).

ते तरुणाः संन्यासचिकीर्षवः। उत्सृज्य नास्तीति गताः आश्रमान्तरे सिद्धिर्नास्तीति तदुत्सृज्य गता इति योज्यम्। नीटी.

[1]**विशाखयूपे देवानां सर्वेषामग्नयश्चिताः।**
**तस्माद्विद्धि महाराज देवान्कर्मपथि स्थितान्॥**

विशाखयूपे क्षेत्रविशेषे देवानां देवैः अग्नयः अग्निस्थापनार्थानि स्थण्डिलानि चिताः इष्टकाभी रचिताः अद्यापि दृश्यन्ते। तेन देवत्वमपि कर्मफलमेवेत्यर्थः, 'कर्मणा पितृलोको विद्यया देवलोकः' (बृउ. १।५।१६) इति श्रुतेः। चयनाश्रितविद्याबलात् ब्रह्मलोकं गता ये तेऽत्र देवाः, तथा (अग्नेः?) केवलकर्मणा स्वर्लोकं गता ये तेऽत्र पितर इति बोध्यम्।
नीटी.

[2]**अनास्तिका नास्तिकानां प्राणदाः पितरश्च ये।**
**तेऽपि कर्मैव कुर्वन्ति विधिं पश्यस्व पार्थिव।**
**वेदवादापविद्धांस्तु तान्विद्धि भृशनास्तिकान्॥**

अनास्तिकानाम् आस्तिक्यशून्यानामपि। पाठान्तरे स्पष्टोऽर्थः। प्राणदाः वृष्टिद्वारा अन्नप्रदाः, 'अन्नं ह प्राणः' (तैउ. ३।१) इति श्रुतेः। विधिम् 'अग्निं वा अकामयत' इत्याद्यग्न्यादिभावस्य कर्मसाध्यत्वज्ञापकम्। वेदवादः अपविद्धः त्यक्तः यैस्तान्।
नीटी.

[3]**न हि वेदोक्तमुत्सृज्य विप्रः सर्वेषु कर्मसु।**
**देवयानेन नाकस्य पृष्ठमाप्नोति भारत॥**

देवयानेन मार्गेण। पृष्ठम् उपरिभागं ब्रह्मलोकमित्यर्थः। नीटी.

[4]**अत्याश्रमानयं सर्वानित्याहुर्वेदनिश्चयाः।**
**ब्राह्मणाः श्रुतिसंपन्नास्तान्निबोध जनाधिप॥**

अयं गृहाश्रमः सर्वानाश्रमान् अति अतिक्रान्तः तेभ्यः श्रेष्ठ इत्यर्थः। तान् ब्राह्मणान् गत्वा निबोध बुध्यस्व। नीटी.

(१) **भा.** १२।१२।३; **भामु.** १२।१२।३ आदौ 'नकुल उवाच' इत्यधिकम्, चतुर्थचरणे (देवाः कर्मफले स्थिताः).

(२) **भा.** १२।१२।४; **भामु.** १२।१२।४-५ का नास्तिकानां (कानां भूतानां) पश्यस्व (संप्रेक्ष्य).

(३) **भा.** १२।१२।५; **भामु.**

(४) **भा.** १२।१२।६; **भामु.** १२।१२।६-७ जना (नरा).

[1]**वित्तानि धर्मलब्धानि क्रतुमुख्येष्ववासृजन्।**
**कृतात्मसु महाराज स वै त्यागी स्मृतो नरः॥**

अवासृजन् समार्पयन्। कृतात्मा जितचित्तः अहंममाभिमानशून्य इत्यर्थः। स त्यागी, सात्त्विक इति शेषः। नीटी.

[2]**आश्रमांस्तुलया सर्वान्धृतानाहुर्मनीषिणः।**
**एकतस्ते त्रयो राजन्गृहस्थाश्रम एकतः॥**

[3]**समीक्षते तु योऽर्थं वै कामं स्वर्गं च भारत।**
**अयं पन्था महर्षीणामियं लोकविदां गतिः॥**

आश्रमान्तरे स्वर्ग एवास्ति, न कामः, गार्हस्थ्ये तूभयमस्तीति अयमेव मार्गो गतिश्चेत्यर्थः।
नीटी.

[4]**इति यः कुरुते भावं स त्यागी भरतर्षभ।**
**न यः परित्यज्य गृहान्वनमेति विमूढवत्॥**

आवश्यकमेवेदं ममेतिभावं कृत्वा यः सङ्गफलेप्सारहितः करोति स त्यागी, नान्य इत्यर्थः।
नीटी.

[5]**पितृदेवातिथिकृते समारम्भोऽत्र शस्यते।**
**अत्रैव हि महाराज त्रिवर्गः केवलं फलम्॥**

अत्र गार्हस्थ्ये। नीटी.

[6]**एतस्मिन्वर्तमानस्य विधौ विप्रनिषेविते।**
**त्यागिनः प्रसृतस्येह नोच्छित्तिर्विद्यते क्वचित्॥**

इह विधौ प्रसृतस्य निष्ठावतः।
नीटी.

[7]**असृजद्धि प्रजा राजन्प्रजापतिरकल्मषः।**
**मां यक्ष्यन्तीति शान्तात्मा यज्ञैर्विविधदक्षिणैः॥**

(१) **भा.** १२।१२।७; **भामु.** १२।१२।७-८ कृतात्मसु (कृतात्मा स).

(२) **भा.** १२।१२।११; **भामु.** १२।१२।१२ एकतस्ते (एकतश्च).

(३) **भा.** १२।१२।१२; **भामु.** १२।१२।१३ प्रथमचरणे (समीक्ष्य तुलया पार्थ).

(४) **भा.** १२।१२।१३; **भामु.** १२।१२।१४.

(५) **भा.** १२।१२।१७; **भामु.** १२।१२।१८.

(६) **भा.** १२।१२।१८; **भामु.** १२।१२।१९ द्वितीयचरणे (विधावप्रतिषेधिते).

(७) **भा.** १२।१२।१९; **भामु.** १२।१२।२० शान्तात्मा (धर्मात्मा).

**[1]वीरुधश्चैव वृक्षांश्च यज्ञार्थं च तथौषधीः।**
**पशूंश्चैव तथा मेध्यान्यज्ञार्थानि हवींषि च॥**
**[2]गृहस्थाश्रमिणस्तच्च यज्ञकर्म विरोधकम्।**
**तस्माद्गार्हस्थ्यमेवेह दुष्करं दुर्लभं तथा॥**

तच्च कर्म गृहस्थाश्रमिणः विरोधकं निगडवद्विशेषेण रोधकम्। नीटी.

आश्रमक्रमः गार्हस्थ्यप्रशंसा च

**[3]चतुष्पदी हि निःश्रेणी कर्मण्येषा प्रतिष्ठिता।**
**तां क्रमेण महाबाहो यथावज्जय पार्थिव॥**

चतुष्पदी चतुराश्रमी। नीटी.

**[4]तस्मात्पार्थ महायज्ञैर्यजस्व बहुदक्षिणैः।**
**स्वाध्याययज्ञा ऋषयो ज्ञानयज्ञास्तथाऽपरे॥**
**कर्मनिष्ठांस्तु बुध्येथास्तपोनिष्ठांश्च भारत॥**

तामेवाऽऽह – स्वाध्यायेति। क्रमाद्ब्रह्मचारियति-गृहस्थवानप्रस्थान् बुध्यस्वेत्यर्थः। नीटी.

**[5]शास्त्रदृष्टः परो धर्मः स्मृतो गार्हस्थ्य आश्रमः॥**

गार्हस्थ्यं गृहस्थस्यायं गार्हस्थ्यस्तम्। नीटी.

**[6]स्वधर्मं चर धर्मज्ञ यथाशास्त्रं यथाविधि।**
**न हि गार्हस्थ्यमुत्सृज्य तवारण्यं विधीयते॥**

तव क्षत्रियत्वात्। अरण्यं संन्यासः। नीटी.

**[7]गृहस्थं हि सदा देवाः पितर ऋषयस्तथा।**
**भृत्याश्चैवोपजीवन्ति तान्भजस्व महीपते॥**
**[8]वयांसि पशवश्चैव भूतानि च महीपते।**
**गृहस्थैरेव धार्यन्ते तस्माज्ज्येष्ठाश्रमो गृही॥**

(१) **भा.** १२।११।२०; **भामु.** १२।११।२१ यज्ञार्थं च (यज्ञार्थं वै).
(२) **भा.** १२।११।२१; **भामु.** १२।११।२२.
(३) **भा.** १२।२०।४; **भामु.** १२।२०।४ कर्मण्येषा (ब्रह्मण्येव).
(४) **भा.** १२।२०।५-६; **भामु.** १२।२०।५-६ निष्ठांस्तु (निष्ठांश्च) भारत (पार्थिव).
(५) **भा.** १२।२३।२; **भामु.** १२।२३।२ स्मृतो (स्थितो) स्थ्य आश्रमः (स्थ्यमाश्रितः).
(६) **भा.** १२।२३।३; **भामु.**
(७) भा. १२।२३।४; **भामु.** १२।२३।४ र ऋष (रोऽतिथ) भजस्व (भरस्व).
(८) **भा.** १२।२३।५; **भामु.** १२।२३।५ महीपते (जनाधिप) ज्येष्ठाश्रमो गृही (च्छ्रेष्ठो गृहाश्रमी).

**[1]सोऽयं चतुर्णामेतेषामाश्रमाणां दुराचरः।**
**तं चराविमनाः पार्थ दुश्चरं दुर्बलेन्द्रियैः॥**

दुर्बलानि जितानि च तानि इन्द्रियाणि तैः। नीटी.

**[2]चरितब्रह्मचर्यो हि प्रजायेत यजेत च।**
**पितृदेवमहर्षीणामानृण्यायानसूयकः॥**

प्रजायेत पुत्रादीनुत्पादयेत् आनृण्याद्धेतोः। नीटी.

**[3]स यज्ञशीलः प्रजने निविष्टः**
**प्राग्ब्रह्मचारी प्रविभक्तपक्षः।**
**आराधयन्स्वर्गमिमं च लोकं**
**परं च मुक्त्वा हृदयव्यलीकम्॥**

प्रजने प्रजोत्पादने। हृदयव्यलीकं हृत्स्थम् अप्रियं शोकमनृतं वा ममत्वाद्यध्यासं मुक्त्वा स्वर्गमिमं च लोकं परं परमात्मानं वा आराधयेत्। नीटी.

ब्राह्मणस्य चत्वार आश्रमाः, वानप्रस्थ्याधिकारः, आश्रमविकल्पः, गार्हस्थ्यप्रशंसा

**[4]वानप्रस्थं भैक्षचर्यां गार्हस्थ्यं च महाश्रमम्।**
**ब्रह्मचर्याश्रमं प्राहुश्चतुर्थं ब्राह्मणैर्वृतम्॥**
**[5]जटाकरणसंस्कारं द्विजातित्वमवाप्य च।**
**आधानादीनि कर्माणि प्राप्य वेदमधीत्य च॥**
**[6]सदारो वाऽप्यदारो वा आत्मवान्संयतेन्द्रियः।**
**वानप्रस्थाश्रमं गच्छेत्कृतकृत्यो गृहाश्रमात्॥**

पाठक्रमो न विवक्षितः। चतुर्थं संन्यासम्, तं च जटाधारणसंस्कारम्। 'अव्याप्य च' इति चो भिन्नक्रमः। चात् मुण्डिनं च वदन्ति। द्विजातित्वमवाप्य, वेदमधीत्य, आधानादीनि कर्माणि प्राप्य वानप्रस्थाश्रमं गच्छेदित्यन्वयः। नीटी.

(१) **भा.** १२।२३।६; **भामु.** १२।२३।६ चराविमनाः (चराद्य विधिं).
(२) **भा.**१२।२८।५४; **भामु.** १२।२८।५५ महर्षी (मनुष्या) यानसू (दनसू).
(३) **भा.** १२।२८।५५; **भामु.** १२।२८।५६ विभक्तपक्षः (विविक्तचक्षुः) यन्स्वर्ग (येत्स्वर्ग).
(४) **भा.** १२।६१।२; **भामु.** १२।६१।२ भैक्षचर्यां (भैक्ष्यचर्यं).
(५) **भा.** १२।६१।३; **भामु.** १२।६१।३ करण (धरण).
(६) **भा.** १२।६१।४; **भामु.**

[1]**तत्राऽऽरण्यकशास्त्राणि समधीत्य स धर्मवित्।**
**ऊर्ध्वरेताः प्रजायित्वा गच्छत्यक्षरसात्मताम्॥**

आरण्यकानां वानप्रस्थानां शास्त्राणि शासनानि समधीत्य सम्यगनुष्ठानेन प्राप्य। अक्षरसात्मतां कैवल्यम्। नीटी.

[2]**एतान्येव निमित्तानि मुनीनामूर्ध्वरेतसाम्।**
**कर्तव्यानीह विप्रेण राजन्नादौ विपश्चिता॥**

एतानि द्विजत्वावाप्त्यादीनि। एवशब्दः प्रकारान्तरं मोक्षप्राप्तौ वारयति।

नीटी.

**चरितब्रह्मचर्यस्य ब्राह्मणस्य विशां पते।**
**भैक्षचर्यास्वधीकारः प्रशस्त इह मोक्षिणः॥**

'ब्रह्मचर्यदेव प्रव्रजेत्' (जाउ.४) इति श्रुतेर्मध्यममाश्रमद्वयमनित्यमित्याह — चरितेति।

नीटी.

[3]**एवं हि यो ब्राह्मणो यज्ञशीलो**
**गार्हस्थ्यमध्यावसते यथावत्।**
**गृहस्थवृत्तिं प्रविशोध्य सम्यक्**
**स्वर्गे विशुद्धं फलमाप्नुते सः॥**

वृत्तिं जीविकां प्रविशोध्य शुद्धां कृत्वा, न्यायागतेन धनेन जीवन्नित्यर्थः।

नीटी.

**तस्य देहपरित्यागादिष्टाः कामाऽक्षया मताः।**
**आनन्त्यायोपतिष्ठन्ति सर्वतोऽक्षिशिरोमुखाः॥**

तस्य गृहस्थस्य देहपरित्यागात् समाहितश्चेदिहैव देहाभिमानत्यागात्, असमाहितस्य मरणानन्तरम् इष्टाः कामाः विषयाः हार्दाकाशे स्वर्गे वा उपतिष्ठन्ति। कामाः अक्षया इति च्छेदः। संधिरार्षः। सर्वतोक्षिशिरोमुखा इत्येनन कामानां किंकराणामिव वश्यत्वमुक्तम्। यत्र यत्र देशे काले वा योग्यमयोग्यं वा संकल्पयति तत्सर्वं सद्य उपतिष्ठतीत्यर्थः।

नीटी.

(१) **भा.** १२।६१।५; **भामु.** १२।६१।५ प्रजायित्वा (प्रव्रजित्वा).
(२) **भा.** १२।६१।६-७; **भामु.**
(३) **भा.** १२।६१।१६-१७; **भामु.**

**भीष्म उवाच —**

[1]**ब्राह्मणस्येह चत्वार आश्रमा विहिताः प्रभो।**
**वर्णास्ताननुवर्तन्ते त्रयो भरतसत्तम॥**

उक्तविशेषणविशिष्टा ब्राह्मणस्यैव धर्मा इत्याशयेनाऽऽह — ब्राह्मणस्येति। एतेन गृहस्थस्यापि ब्राह्मणस्य हिंस्रो धर्मः कामकार एव, न विधिचोदित इति दर्शितम्। वक्ष्यति च मोक्षधर्मेषु 'पशुयज्ञैः कथं हिंस्रैर्मादृशो यष्टुमर्हति' इति। त्रयो हिंसापरा वर्णास्तान्नानुवर्तन्ते। नीटी.

[2]**सेव्यं तु ब्रह्म षट्कर्म गृहस्थेन मनीषिणा।**
**कृतकृत्यस्य चारण्ये वासो विप्रस्य शस्यते॥**

[3]**तस्माद्धर्मो विहितो ब्राह्मणस्य**
**दमः शौचं चाऽऽर्जवं चापि राजन्।**
**तथा विप्रस्याऽऽश्रमाः सर्व एव**
**पुरा राजन्ब्रह्मणा वै निसृष्टाः॥**

शूद्रवैश्यक्षत्रियाणां चातुराश्रम्याधिकारः सविशेषः

*[4]**शुश्रूषाकृतकृत्यस्य कृतसंतानकर्मणः।**
**अभ्यनुज्ञाप्य राजानं शूद्रस्य जगतीपते॥**

[5]**अल्पान्तरगतस्यापि दशधर्मगतस्य वा।**
**आश्रमा विहिताः सर्वे वर्जयित्वा निराशिषम्॥**

[6]**भैक्षचर्यां न तु प्राहुस्तस्य तद्धर्मचारिणः।**
**तथा वैश्यस्य राजेन्द्र राजपुत्रस्य चैव हि॥**

* एतेषां मेधाव्याख्यानम् 'एष वोऽभिहितो' (मस्मृ. ६।९७) इति मनुवचने (वका. पृ. २०४१) द्रष्टव्यम्।
(१) **भा.** १२।६२।२; **भामु.** १२।६२।२ स्येह (स्य तु) र आश्र (रस्त्वाश्र) स्ताननु (स्तान्नानु) भरत (भारत).
(२) **भा.** १२।६३।२; **भामु.**
(३) **भा.** १२।६३।७; **भामु.** १२।६३।७ शौचं चाऽऽ (शौचमा).
(४) **भा.** १२।६३।१२; **भामु.** १२।६३।१२ प्रथमचरणे (शुश्रूषोः कृतकार्यस्य) ज्ञाप्य राजानं (ज्ञातराजस्य); **मेधा.** ६।९७ (शुश्रूषाकृतकृत्यस्य) एतावदेव; **शूशि.** ५१.
(५) **भा.** १२।६३।१३; **भामु.**; **मेधा.** ६।९७ शिषम् (मिषम्) उत्त.; **शूशि.** ५१ अल्पान्तर (स्वधर्मानु) दश (देश).
(६) **भा.** १२।६३।१४; **भामु.** १२।६३।१४ भैक्ष (भैक्ष्य) न तु (ततः); **शूशि.** ५२ प्राहुस्तस्य तद्धर्म (प्राहुः स्वस्य सद्धर्म) पू..

(१) निराशिषमिति संन्यासं विहाय त्रयोऽप्याश्रमा भवन्तीत्यर्थः। ब्रह्मचारित्वे च भैक्षचर्या न कार्या। अन्ये त्वपि तु शुद्धा आश्रमान्तरधर्मा अनुष्ठेया इति यावत्। शुशि. ५२

(२) शुश्रूषोः वेदान्तेष्वनधिकारात्पुराणद्वारा आत्मानं श्रोतुमिच्छोः, कृतकार्यस्य यावच्छरीरसामर्थ्यं सेवितत्रैवर्ण्यस्य, कृतसंतानकर्मणः जातपुत्रस्य, अभ्यनुज्ञातः राज्ञा इत्यभ्यनुज्ञातराजः तस्य, अल्पान्तरगतस्य आचारनिष्ठया त्रैवर्णिकसमस्य, दशधर्मगतस्येति मत्तप्रमत्तादीन्प्रकृत्य 'दश धर्मं न जानन्ति' (भामु. ५।३३।१०१) इत्युक्तेरत्र योगधर्मा(न?)भिज्ञस्य ग्रहणम्, तस्यापि आश्रमाः सर्वे विहिताः। शूद्रोऽपि नैष्ठिकं ब्रह्मचर्यं वानप्रस्थं(?स्थ्य) वा सकलविक्षेपककर्मत्यागरूपं संन्यासं वाऽनुतिष्ठेदेव। निराशिषं शान्तिदान्त्यादिकल्याणगुणर(?स)हितम्। भैक्ष्यचर्यां पारिव्राज्यं तस्य शूद्रस्य तद्धर्मचारिणः तान्पूर्वोक्तान् स्वधर्मान् चरतीति तथाभूतस्य, तथा वैश्यस्य राजपुत्रस्य च भैक्षचर्यां प्राहुरित्यन्वयः। नीटी.

**[१]कृतकृत्यो वयोतीतो राज्ञः कृतपरिश्रमः।**
**वैश्यो गच्छेदनुज्ञातो नृपेणाऽऽश्रममण्डलम्॥**
**[२]वेदानधीत्य धर्मेण राजशास्त्राणि चानघ।**
**संतानादीनि कर्माणि कृत्वा सोमं निषेव्य च॥**
**पालयित्वा प्रजाः सर्वा धर्मेण वदतां वर।**
**राजसूयाश्वमेधादीन्मखानन्यांस्तथैव च॥**
**[३]समानीय यथापाठं विप्रेभ्यो दत्तदक्षिणः।**
**सङ्ग्रामे विजयं प्राप्य तथाऽल्पं यदि वा बहु॥**
**[४]स्थापयित्वा प्रजापालं पुत्रं राज्ये च पाण्डव।**
**अन्यगोत्रं प्रशस्तं वा क्षत्रियं क्षत्रियर्षभ॥**
**[५]अर्चयित्वा पितॄन्सम्यक्पितृयज्ञैर्यथाविधि।**
**देवान्यज्ञैर्ऋषीन्वेदैरर्चित्वा चैव यत्नतः॥**

**[१]अन्तकाले च संप्राप्ते य इच्छेदाश्रमान्तरम्।**
**आनुपूर्व्याऽऽश्रमान्राजन्गत्वा सिद्धिमवाप्नुयात्॥**
**[२]राजर्षित्वेन राजेन्द्र भैक्षचर्याध्वसेवया।**
**अपेतगृहधर्मोऽपि चरेज्जीवितकाम्यया॥**

राजा ऋषित्वेन मन्त्रार्थद्रष्टृत्वेन वेदान्तश्रवणकर्तृत्वेन हेतुना भैक्ष्यचर्याम्, इच्छेदिति पूर्वेण संबन्धः, न तु सेवया। श्रवणमकुर्वन्नान्नमात्रार्थमित्यर्थः। तत्कुर्वंस्तु जीवितकाङ्क्षया भैक्ष्यचर्यां चरेदेवेत्यर्थः। नीटी.

**[३]न चैतन्नैष्ठिकं कर्म त्रयाणां भरतर्षभ।**
**चतुर्णां राजशार्दूल प्राहुराश्रमवासिनाम्॥**

एतद्भैक्ष्यं नैष्ठिकं नित्यं त्रयाणां राजादीनाम्। तेषामाश्रमसंन्यासो नित्यो नास्ति, अपि तु विक्षेपककर्मत्यागरूपः काम्य एवास्तीत्यर्थः। स च चतुर्णामप्याश्रमाणामस्तीति प्राहुः। नीटी.

गार्हस्थ्यप्रशंसा

**[४]सर्वाश्रमपदे ह्याहुर्गार्हस्थ्यं दीप्तनिर्णयम्।**
**पावनं पुरुषव्याघ्र यं वयं पर्युपास्महे॥**

संन्यासफलम्

**[५]निष्क्रम्य वनमास्थाय ज्ञानयुक्तो जितेन्द्रियः।**
**कालाकाङ्क्षी चरन्नेवं ब्रह्मभूयाय कल्पते॥**

निष्क्रम्य, गृहादिति शेषः। संन्यस्येत्यर्थः। नीटी.

**[६]अभयं यस्य भूतेभ्यो भूतानामभयं यतः।**
**तस्य देहाद्विमुक्तस्य भयं नास्ति कुतश्चन॥**
**[७]शकुनीनामिवाऽऽकाशे जले वारिचरस्य वा।**
**यथा गतिर्न दृश्येत तथा तस्य न संशयः॥**

(१) **भा.** १२।६३।१५; **भामु.** १२।६३।१५ मण्डलम् (संश्रयम्).
(२) **भा.** १२।६३।१६-१७; **भामु.**
(३) **भा.** १२।६३।१८; **भामु.** १२।६३।१८ समानीय (आनयित्वा).
(४) **भा.** १२।६३।१९; **भामु.**
(५) **भा.** १२।६३।२०; **भामु.** १२।६३।२० रर्चित्वा चैव (रर्चयित्वा तु).

(१) **भा.** १२।६३।२१; **भामु.** १२।६३।२१ आनु (सोऽऽनु).
(२) **भा.** १२।६३।२२; **भामु.** १२।६३।२२ द्वितीयचरणे (भैक्ष्यचर्यां न सेवया).
(३) **भा.** १२।६३।२३; **भामु.** १२।६३।२३ भरतर्षभ (भूरिदक्षिण).
(४) **भा.** १२।६६।२९; **भामु.** १२।६६।३५ पदे ह्या (पदेऽप्या) वयं (धर्मं).
(५) **भा.** १२।१५४।२५; **भामु.** १२।१६०।२५ चरन्ने (चरत्ये).
(६) **भा.** १२।१५४।२६; **भामु.** १२।१६०।२६.
(७) **भा.** १२।१५४।२८; **भामु.** १२।१६०।२८ वा (च).

अनेन देवयानेनान्येन वा पथा गत इति न ज्ञायते, उत्क्रमणाभावात्, 'न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते ब्रह्मैव सन् ब्रह्माप्येति' (सुबालोपनिषत् ३) इति श्रुतेरिति भावः। नीटी.

[1]**गृहानुत्सृज्य यो राजन्मोक्षमेवाभिपद्यते।**
**लोकास्तेजोमयास्तस्य कल्पन्ते शाश्वतीः समाः॥**
**संन्यस्य सर्वकर्माणि संन्यस्य विधिवत्तपः।**
**संन्यस्य विविधा विद्याः सर्वं संन्यस्य चैव ह॥**
[2]**कामेषु चाप्यानावृत्तः प्रसन्नात्माऽऽत्मविच्छुचिः।**
**प्राप्येह लोके सत्कारं स्वर्गं समभिपद्यते॥**

कामे शुचिः सत्यकाम इत्यर्थः। अनावृत्तः सर्वत्र कामाचारभाक्। 'तस्य सर्वेषु लोकेषु कामचारो भवति' (छाउ. ७।२५।२) इति श्रुतेः शुचिः त्यक्तकामः सत्कारं सत्यसंस्कारत्वादिगुणयोगेन संमानम् इह प्राप्य स्वर्गम् अभिपद्यते विदेहकैवल्यकाले। नीटी.

आश्रमक्रमः गार्हस्थ्यप्रशंसा च

[3]**वेदानधीत्य ब्रह्मचर्येण पुत्र**
**पुत्रानिच्छेत्पावनार्थं पितृणाम्।**
**अग्नीनाधाय विधिवच्चेष्टयज्ञो**
**वनं प्रविश्याथ मुनिर्बुभूषेत्॥**

मुनिः ध्यानभिक्षुः। नीटी.

**भृगुरुवाच –**

[4]**पूर्वमेव भगवता लोकहितमनुतिष्ठता धर्मसंरक्षणार्थमाश्रमाश्चत्वारोऽभिनिर्दिष्टाः। तत्र गुरुकुलवासमेव तावत्प्रथममाश्रममुदाहरन्ति॥**

[5]**भवति चात्र श्लोकः –**
**गुरुं यस्तु समाराध्य द्विजो वेदमवाप्नुयात्।**
**तस्य स्वर्गफलावाप्तिः सिध्यते चास्य मानसम्॥**

मानसं मनः सिध्यते सत्यसंकल्पादिसिद्धिं प्राप्नोति। नीटी.

(१) **भा.** १२।१५४।२९-३०; **भामु.** १२।१६०।२९-३०.
(२) **भा.** १२।१५४।३१; **भामु.** १२।१६०।३१ प्रथमचरणे (कामे शुचिरनावृत्तः).
(३) **भा.** १२।१६९।६; **भामु.** १२।१७५।६.
(४) **भा.** १२।१८४।८; **भामु.** १२।१९१।८ भगवता + (ब्रह्मणा) (तावत्०).
(५) **भा.** १२।१८४।९; **भामु.** १२।१९१।९ मानसम् (मानसमिति).

[1]**गार्हस्थ्यं खलु द्वितीयमाश्रमं वदन्ति॥**

[2]**समावृत्तानां सदाराणां सहधर्मचर्याफलार्थिनां गृहाश्रमो विधीयते॥**

समावृत्तानां समापितगुरुकुलवास्तव्यानां स्नातकानां सहधर्मचर्यं(? धर्मं) 'सहोभौ चरतां धर्मम्' इति दम्पत्योः सहाधिकारिकं धर्मम्, तच्चर्याफलं पुत्रजन्म। नीटी.

[3]**तद्धि सर्वाश्रमाणां मूलमुदाहरन्ति॥**

[4]**गुरुकुलवासिनः परिव्राजका ये चान्ये संकल्पितव्रतनियमधर्मानुष्ठायिनस्तेषामप्यत एव भिक्षाबलिसंविभागाः प्रवर्तन्ते॥**

भिक्षा अतिथिभ्यः। बलिः भूमौ होमः। संविभागः पुत्रादिभ्यो विभजनम्।

नीटी.

[5]**अपि चात्र यज्ञक्रियाभिर्देवताः प्रीयन्ते निवापेन पितरो वेदाभ्यासश्रवणधारणेन ऋषयः। अपत्योत्पादनेन प्रजापतिरिति॥**

निवापेन पितृतर्पणेन। नीटी.

[6]**त्रिवर्गगुणनिर्वृत्तिर्यस्य नित्यं गृहाश्रमे।**
**स सुखान्यनुभूयेह शिष्टानां गतिमाप्नुयात्॥**

त्रिवर्गः धर्मार्थकामाः, तैः सहिता(? तानां) गुणानां सत्त्वरजस्तमसां निर्वृत्तिः कृतार्थता मुक्तिहेतोः सत्त्वपुरुषान्यताख्यातेर्जननान्नष्टाधिकारतेत्यर्थः। शिष्टानां 'तत्त्वमसि' इत्यादिवाक्यैर्गुरुभिरनुशिष्टानाम्।

नीटी.

[7]**उञ्छवृत्तिर्गृहस्थो यः स्वधर्मचरणे रतः।**
**त्यक्तकामसुखारम्भस्तस्य स्वर्गो न दुर्लभः॥**

(१) **भा.** १२।१८४।१०; **भामु.** १२।१९१।१०.
(२) **भा.** १२।१८४।१०; **भामु.** १२।१९१।१० सदाराणां (सदाचाराणां) सहधर्मचर्या (सह धर्मचर्य).
(३) **भा.** १२।१८४।१०; **भामु.** १२।१९१।१०.
(४) **भा.** १२।१८४।१०; **भामु.** १२।१९१।१० वासिनः (निवासिनः).
(५) **भा.** १२।१८४।१३; **भामु.** १२।१९१।१३ वेदा (विद्या).
(६) **भा.** १२।१८४।१७; **भामु.** १२।१९१।१७.
(७) **भा.** १२।१८४।१८; **भामु.** १२।१९१।१८ धर्मच (धर्माच). म्भस्तस्य स्वर्गो (म्भः स्वर्गस्तस्य).

उञ्छः कणश आदानम्, तेन वृत्तिः जीवनम् अस्य। कामसुखम् आरम्भाश्चेति द्वन्द्वः। नीटी.

**[1]यस्त्वेतां नियतश्चर्यां ब्रह्मर्षिविहितां चरेत्।**
**स दहेदग्निवद्दोषाञ्जयेल्लोकांश्च दुर्जयान्॥**

संन्यासप्रशंसा

**[2]मोक्षाश्रमं यः कुरुते यथोक्तं**
**शुचिः सुसंकल्पितबुद्धियुक्तः।**
**अनिन्धनं ज्योतिरिव प्रशान्तं**
**स ब्रह्मलोकं श्रयते द्विजातिः॥**

सुतरां संकल्पितमुक्ता संकल्पहीना बुद्धिर्यस्य। ब्रह्मैव लोकः ब्रह्मलोकः, तम्। नीटी.

आश्रमविकल्पसमुच्चयौ, गार्हस्थ्यप्रशंसा, आश्रममर्यादाः

**[3]अधीत्य वेदानखिलान्गुरुशुश्रूषणे रतः।**
**गुरूणामनृणो भूत्वा समावर्तेत यज्ञवित्॥**
**[4]आचार्येणाभ्यनुज्ञातश्चतुर्णामेकमाश्रमम्।**
**आ विमोक्षाच्छरीरस्य सोऽनुतिष्ठेद्यथाविधि॥**
**[5]प्रजासर्गेण दारैश्च ब्रह्मचर्येण वा पुनः।**
**वने गुरुसकाशे वा यतिधर्मेण वा पुनः॥**
**[6]गृहस्थस्त्वेव सर्वेषां चतुर्णां मूलमुच्यते।**
**तत्र पक्वकषायो हि दान्तः सर्वत्र सिध्यति॥**
**[7]प्रजावाञ्श्रोत्रियो यज्वा मुक्तो दिव्यैस्त्रिभिर्ऋणैः।**
**अथान्यानाश्रमान्पश्चात्पूतो गच्छति कर्मभिः॥**
**[8]ब्रह्मचर्येण वै लोकञ्जयन्ति परमर्षयः।**
**आत्मनश्च हृदि श्रेयस्त्वन्विच्छ मनसाऽऽत्मनि॥**

(१) भा. १२।१८५।२; भामु. १२।१९२।२.

(२) भा. १२।१८५।६; भामु. १२।१९२।६ यः कुरुते (यश्चरते) बुद्धियुक्तः (मुक्तबुद्धिः) द्विजातिः (मनुष्यः).

(३) भा. १२।२२६।३; भामु. १२।२३४।३.

(४) भा. १२।२२६।४; भामु. १२।२३४।४ सोऽनु (सोऽव).

(५) भा. १२।२२६।५; भामु. १२।२३४।५.

(६) भा. १२।२२६।६; भामु. १२।२३४।६ (गृहस्थस्त्वेष धर्माणां सर्वेषां मूलमुच्यते। यत्र पक्वकषायो हि दान्तः सर्वत्र सिध्यति॥).

(७) भा. १२।२२६।७; भामु. १२।२३४।७ द्वितीयचरणे (मुक्त एव ऋणैस्त्रिभिः) गच्छति (गच्छेत).

(८) भा. १२।२३४।६; भामु. १२।२४२।६ हृदि श्रेयस्त्वन्विच्छ (ततः श्रेयांस्यन्विच्छन्).

श्रेयांसि श्रेयोहेतून् यज्ञादीन् अन्विच्छन् 'विविदिषन्ति यज्ञेन' (बृउ. ४।४।२२) इति श्रुतेः। नीटी.

**[1]वने मूलफलाशी च तप्यन्सुविपुलं तपः।**
**पुण्यायतनचारी च भूतानामविहिंसकः॥**
**[2]विधूमे सन्नमुसले वानप्रस्थप्रतिश्रये।**
**काले प्राप्ते चरन्भैक्षं कल्पते ब्रह्मभूयसे॥**
**[3]गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः।**
**यथोक्तकारिणः सर्वे गच्छन्ति परमां गतिम्॥**

परमां गतिं मोक्षम्। तेन समुच्चितानामसमुच्चितानां वा आश्रमधर्माणां तत्त्वजिज्ञासाहेतुत्वमुक्तम्। नीटी.

**[4]एको य आश्रमानेताननुतिष्ठेद्यथाविधि।**
**अकामद्वेषसंयुक्तः स परत्र महीयते॥**

परत्र ब्रह्मणि विषये विधीयते ज्ञातुं योग्यः क्रियते। नीटी.

**[5]चतुष्पदी हि निःश्रेणी ब्रह्मण्येषा प्रतिष्ठिता।**
**एतामाश्रित्य निःश्रेणीं ब्रह्मलोके महीयते॥**

चतुष्पदी चातुराश्रम्यरूपा॥ नीटी.

**[6]आयुषस्तु चतुर्भागं ब्रह्मचार्यनसूयकः।**
**गुरौ वा गुरुपुत्रे वा वसेद्धर्मार्थकोविदः॥**
**[7]वेदव्रतोपवासेन चतुर्थे चाऽऽयुषो गते।**
**गुरवे दक्षिणां दत्त्वा समावर्तेद्यथाविधि॥**
**[8]धर्मलब्धैर्युतो दारैरग्नीनुत्पाद्य धर्मतः।**
**द्वितीयमायुषो भागं गृहमेधिव्रती भवेत्॥**

(१) भा. १२।२३४।७; भामु. १२।२४२।७.

(२) भा. १२।२३४।८; भामु. १२।२४२।८ भैक्षं (भैक्ष्यं).

(३) भा. १२।२३४।१३; भामु. १२।२४२।१३ प्रथमचरणे (ब्रह्मचारी गृहस्थश्च) कारिणः (चारिणः).

(४) भा. १२।२३४।१४; भामु. १२।२४२।१४ य आश्रमानेताननु (वाऽप्याश्रमानेतान्योऽनु) मही (विधी).

(५) भा. १२।२३४।१५; भामु. १२।२४२।१५ माश्रित्य (मारुह्य).

(६) भा. १२।२३४।१६; भामु. १२।२४२।१६.

(७) भा. १२।२३४।२८; भामु. १२।२४२।२८-२९.

(८) भा. १२।२३४।२९; भामु. १२।२४२।३० धर्मतः (यत्नतः) मेधिव्रती भवेत् (मेधी भवेद्व्रती).

**[1]स्वर्गलोको गृहस्थानामुदारमनसां हितः।**
**स्वर्गो विमानसंयुक्तो वेददृष्टः सुपुष्पितः॥**

सुपुष्पितः रमणीयः। नीटी.

**[2]स्वर्गलोके गृहस्थानां प्रतिष्ठा नियतात्मनाम्।**
**ब्रह्मणा विहिता श्रेणिरेषा यस्मात्प्रमुच्यते।**
**द्वितीयं क्रमशः प्राप्य स्वर्गलोके महीयते॥**

एषा गार्हस्थ्यं योनिः स्वर्गस्य कारणं यस्मात् तस्मात्। द्वितीयं गार्हस्थ्यम्। नीटी.

**[3]गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः।**
**अपत्यस्यैव चापत्यं वनमेव समाश्रयेत्॥**
**[4]तृतीयमायुषो भागं वानप्रस्थाश्रमे वसेत्॥**
**[5]जरया च परिधूनो व्याधिना च प्रपीडितः।**
**चतुर्थे चाऽऽयुषः शेषे वानप्रस्थाश्रमं त्यजेत्।**
**सद्यस्कारां निरूप्येष्टिं सर्ववेदसदक्षिणाम्॥**

सद्यस्काराम् एकाहसाध्याम् इष्टिं प्राजापत्यां त्रैधातवीं वा सर्ववेदसदक्षिणां सर्वस्वदक्षिणाम्। सर्वान्वेदान्सदक्षिणानित्यपपाठः। नीटी.

**[6]आत्मयाजी सोऽऽत्मरतिरात्मक्रीडात्मसंश्रयः।**
**आत्मन्यग्नीन्समारोप्य त्यक्त्वा सर्वपरिग्रहान्॥**

आत्मयाजी जीवच्छ्राद्धादिकृत्। आत्मरतिः आत्मनिष्ठः। संधिरार्षः। आत्मक्रीडश्च आत्मसंश्रयश्च न तु स्त्र्यादिक्रीडो राजाद्याश्रयः।

नीटी.

**[7]सद्यस्क्रांश्च यजेद्यज्ञानिष्टीश्चैवेह सर्वदा।**
**सदैव याजिनां यज्ञादात्मनीज्या निवर्तते॥**

तीव्रतरवैराग्याभावे तु पक्षान्तरमाह — साद्यस्कान् सद्य एव क्रियन्ते तान् ब्रह्मयज्ञादीन् इष्टीश्च दर्शपूर्णमासमित्रविन्दादीः ताभिस्तावद्यजेत् यदैव यस्मिन्नेव काले याजिनां यज्वनां यज्ञात् कर्ममयादन्य आत्मनीज्या आत्मयज्ञो योगाभ्यासः प्रवर्तते तावदेवं तान् कुर्यादित्यर्थः। यथोक्तं भगवता — 'आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते। योगारूढस्य तस्यैव शमः कारणमुच्यते॥' (भगी. ६।३) इति। नीटी.

(१) भा. १२।२३५।२५; भामु. १२।२४३।२७.

(२) भा. १२।२३५।२६; भामु. १२।२४३।२८ लोके (लोको) श्रेणि (योनि) त्प्रमुच्यते (द्वितीयते).

(३) भा. १२।२३६।४; भामु. १२।२४४।४ समाश्र (तदा श्र).

(४) भा. १२।२३६।५; भामु. १२।२४४।५.

(५) भा.१२।२३६।२२; भामु. १२।२४४।२२-२३.

(६) भा. १२।२३६।२३; भामु. १२।२४४।२४.

(७) भा. १२।२३६।२४; भामु. १२।२४४।२५ सद्यस्क्रांश्च (साद्यस्कांश्च) सदैव (यदैव) निवर्तते (प्रवर्तते).

**[1]केशलोमनखान्वाप्य वानप्रस्थो मुनिस्ततः।**
**आश्रमादाश्रमं सद्यः पूतो भवति कर्मभिः॥**

वाप्य वापयित्वा। नीटी.

**[2]अभयं सर्वभूतेभ्यो यो दत्त्वा प्रव्रजेद्द्विजः।**
**लोकास्तेजोमयास्तस्य प्रेत्य चाऽनन्त्यमश्नुते॥**

**शुक उवाच —**

**[3]वर्तमानस्तथैवात्र वानप्रस्थाश्रमे यथा।**
**योक्तव्योऽऽत्मा यथा शक्त्या परं वै काङ्क्षता पदम्॥**

पूर्वत्र 'साद्यस्क्रांश्च यजेद्यज्ञान्' इति श्लोकद्वयेन वानप्रस्थस्यापि वैश्वानरात्मोपासनमुक्तं तत्कर्मव्यग्रस्य दुःशकमिति मन्वानः पृच्छति वर्तमान इति। यथा यथावत् आत्मा कथं योक्तव्यः संधिरार्षः। परं वेद्यं ब्रह्म। नीटी.

**व्यास उवाच —**

**[4]प्राप्य संस्कारमेताभ्यामाश्रमाभ्यां ततः परम्।**
**यत्कार्यं परमार्थार्थं तदिहैकमनाः शृणु॥**

उत्तरमाहार्धेन प्राप्येति। एताभ्यामाश्रमाभ्यां ब्रह्मचर्यगार्हस्थ्याभ्यां संस्कारं चित्तशुद्धिं प्राप्याऽऽत्मा योक्तव्य इति पूर्वेणान्वयः। चित्तशुद्धौ सत्यां वानप्रस्थाद्याश्रमेऽपि योगमभ्यस्येदित्यर्थः। ऋजुमार्गमाह — यदितिसार्धेन।

नीटी.

**[5]कषायं पाचयित्वा तु श्रेणिस्थानेषु च त्रिषु।**
**प्रव्रजेच्च परं स्थानं परिव्रज्यामनुत्तमाम्॥**

(१) भा.१२।२३६।२६; भामु. १२।२४४।२७ सद्यः (पुण्यं) भवति (गच्छति).

(२) भा. १२।२३६।२७; भामु. १२।२४४।२८ यो दत्त्वा (दत्त्वा यः).

(३) भा. १२।२३७।१; भामु. १२।२४५।१ उत्तरार्धे (योक्तव्योऽऽत्मा कथं शक्त्या वेद्यं वै काङ्क्षता परम्॥).

(४) भा. १२।२३७।२; भामु. १२।२४५।२ र्थार्थं (र्थं तु).

(५) भा. १२।२३७।३; भामु. १२।२४५।३ त्वा तु (त्वाऽऽशु) चतुर्थचरणे (पारिव्राजमनुत्तमम्); मोक. ३१ कषायं (काषायं) च (तु); यसं. २ जेच्च (जेत्तु) चतुर्थचरणे (पारिव्राज्यमनुत्तमम्) मनुः.

(१) श्रेणिस्थानेषु च त्रिषु ब्रह्मचर्याद्याश्रमेषु। मोक. ३१

(२) कषायं चित्तदोषं पाचयित्वा विश्लथं कृत्वा। स्थानेषु आश्रमेषु अनुत्तमम्। इदं मतं श्रेष्ठमित्यर्थः। नीटी.

आश्रमप्रशंसा

[1]**धर्ममेकं चतुष्पादमाश्रितास्ते नरर्षभाः।**
**तं सन्तो विधिवत्प्राप्य गच्छन्ति परमां गतिम्॥**
[2]**गृहेभ्य एव निष्क्रम्य वनमन्ये समाश्रिताः।**
**गृहमेवाभिसंश्रित्य ततोऽन्ये ब्रह्मचारिणः॥**
[3]**धर्ममेतं चतुष्पादमाश्रमं ब्राह्मणा विदुः॥**

तमिति सार्धः श्लोकः। तं सदाचारं सन्तो गृहेभ्यो निष्क्रम्यैव संन्यासं कृत्वैव विधिवत्प्राप्य परमां गतिं गच्छन्ति। विधिवदित्यादि सर्वत्र योज्यम्। चतुर्ष्वप्याश्रमेषु उक्तरूपसदाचारवतां मोक्षोऽस्तीत्यर्थः। नीटी.

संन्यासप्रशंसा

[4]**अभयं सर्वभूतेभ्यो दत्त्वा यः प्रव्रजेद्गृहात्।**
**लोकास्तेजोमयास्तस्य तथाऽऽनन्त्याय कल्पते॥**

लोकाः विषयाः तेजोमयाः तैजसान्तःकरणमयाः, 'सत्यकामः सत्यसंकल्पः' (छाउ. ८।१।५) इति श्रुतेः। तथा विदेहकैवल्यकाले आनन्त्याय वाङ्मनसातीतप्रत्यगात्मप्राप्तये कल्पते, प्रव्रज्येति शेषः। नीटी.

गार्हस्थ्यप्रशंसा

[5]**यथा नदीनदाः सर्वे सागरे यान्ति संस्थितिम्।**
**एवमाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम्॥**

आश्रमसमुच्चयविधिः

[6]**अधीत्य वेदांस्तपसा ब्रह्मचारी**
**यज्ञाञ्शक्त्या संनिसृज्येह पञ्च।**
**वनं गच्छेत्पुरुषो धर्मकामः**
**श्रेयश्चित्वा स्थापयित्वा स्ववंशम्॥**

आश्रमत्रयधर्मः प्रज्ञाप्राप्तावुपाय इत्याह — अधीत्येति। श्रेयःस्थित्वा श्रेयः(? यसि) अत्यर्थं तिष्ठति संनद्धो भवतीति श्रेयःस्थित्वा मोक्षकामः। 'आतो मनिन्क्वनिपश्च'(पासू. ३।२।७४) इति क्वनिबन्तोऽयं शब्दः। नीटी.

**जनक उवाच —**

[1]**यत्कार्यं ब्राह्मणेनेह जन्मप्रभृति तच्छृणु।**
**कृतोपनयनस्तात भवेद्वेदपरायणः॥**

यत्कार्यमित्यादिना 'व्रती भूत्वा गृही भवेद्गृही भूत्वा वनी भवेद्वनी भूत्वा प्रव्रजेत्' (जाउ. ४) इति श्रुत्युक्तः क्रमसमुच्चयपक्षो दर्शितः। नीटी.

[2]**तपसा गुरुवृत्त्या च ब्रह्मचर्येण चाभिभो।**
**देवतानां पितॄणां चाप्यनृणश्चानसूयकः॥**
[3]**वेदानधीत्य नियतो दक्षिणामपवर्ज्य च।**
**अभ्यनुज्ञामथ प्राप्य समावर्तेत वै द्विजः॥**
[4]**समावृत्तस्तु गार्हस्थ्ये सदारो नियतो वसेत्।**
**अनसूयुर्यथान्यायमाहिताग्निस्तथैव च॥**
[5]**उत्पाद्य पुत्रपौत्रं तु वन्याश्रमपदे वसेत्।**
**तान्येवाग्नीन्यथाशास्त्रमर्चयन्नतिथिप्रियः॥**
[6]**स वनेऽग्नीन्यथान्यायमात्मन्यारोप्य धर्मवित्।**
**निर्द्वन्द्वो वीतरागात्मा ब्रह्माश्रमपदे वसेत्॥**

वीतरागात्मा विरक्तचित्तः। ब्रह्माश्रमः संन्यासाश्रमः तदेव पदं पट्टस्थानं तत्र। नीटी.

[7]**अहं कस्य कुतो वाऽहं कः को मे ह भवेदिति।**
**प्रयोजनमतिर्नित्यमेवं मोक्षाश्रमी भवेत्॥**

(१) भा. १२।२६२।१९; भामु. १२।२७०।२२-२३ पूर्वार्धे (व्यस्तमेकं चतुर्धा हि ब्राह्मणा आश्रमं विदुः।).
(२) भा. १२।२६२।२०-२१; भामु. १२।२७०।२३-२४.
(३) भा. १२।२६२।२१.
(४) भा. १२।२६९।२०; भामु. १२।२७८।२२.
(५) भा. १२।२८४।३९; भामु. १२।२९५।३९.
(६) भा. १२।२८६।३०; भामु. १२।२९७।३० वेदांस्त (वेदं त) निसृज्येह (निगृह्येह) श्रेयश्चित्वा (श्रेयः स्थित्वा).

(१) भा. १२।३१३।१४; भामु. १२।३२६।१४.
(२) भा. १२।३१३।१५; भामु. १२।३२६।१५ चाभिभो (वा विभो) णश्चान (णो ह्यन).
(३) भा. १२।३१३।१६; भामु. १२।३२६।१६.
(४) भा. १२।३१३।१७; भामु. १२।३२६।१७ वृत्तस्तु (वृत्तश्च) द्वितीयचरणे (स्वदारनिरतो वसेत्).
(५) भा. १२।३१३।१८; भामु. १२।३२६।१८ तान्येवा (तानेवा).
(६) भा. १२।३१३।१९; भामु. १२।३२६।१९.
(७) भा. १२।३४७।१९; भामु. १२।३५९।१९ वाऽहं (वाऽपि) श्रमी भवेत् (श्रमे वसेत्).

ब्रह्मचर्यप्रशंसा

**[1]ब्रह्मचर्यस्य तु गुणाञ्शृणु मे वसुधाधिप।**
**आ जन्ममरणाद्यस्तु ब्रह्मचारी भवेदिह।**
**न तस्य किंचिदप्राप्यमिति विद्धि जनाधिप॥**
**[2]ब्रह्मचर्यं दहेद्राजन्सर्वपापान्युपासितम्।**
**ब्राह्मणेन विशेषेण ब्राह्मणो ह्यग्निरुच्यते॥**
**[3]प्रत्यक्षं च तवाप्येतद्ब्राह्मणेषु तपस्विषु।**
**बिभेति हि यथा शक्रो ब्रह्मचारिप्रधर्षितः।**
**तद्ब्रह्मचर्यस्य फलमृषीणामिह दृश्यते॥**

संन्यासिवानप्रस्थयोरवान्तरभेदाः

**[4]चतुर्विधा भिक्षवस्ते कुटीचरकृतोदकः।**
**हंसः परमहंसश्च यो यः पश्चात्स उत्तमः॥**

कुटीचकबहूदकौ त्रिदण्डिनौ, एको गृहे वसति, अपरस्तीर्थान्यटति। इतरौ एकदण्डिनौ। तयोराद्यः आश्रमधर्मनियतः, परो निस्त्रैगुण्य इति तेषां भेदः। नीटी.

***[5]फेनपानां..... वालखिल्याः ... चक्रचराः सोमलोकचराः संप्रक्षालाश्मकुट्टाश्च दन्तोलूखलिनः सोमपानां ... ऊष्मपाणां...॥**

आश्रमक्रमः

**[6]ब्रह्मचारिकमेवाऽऽहुराश्रमं प्रथमं पदम्।**
**गार्हस्थ्यं तु द्वितीयं स्याद्वानप्रस्थमतः परम्।**
**ततः परं तु विज्ञेयमध्यात्मं परमं पदम्॥**

आत्मानमधिकृत्य प्रवृत्तमाश्रममध्यात्मं संन्यासं परं पदमाहुरिति पूर्वेणान्वयः। नीटी.

वानप्रस्थ्ये त्रैवर्णिकानामेवाधिकारः, गार्हस्थ्यस्य आश्रमाणां संन्यासस्य च प्रशंसा

**[1]फलमूलानिलभुजां मुनीनां वसतां वने।**
**वानप्रस्थं द्विजातीनां त्रयाणामुपदिश्यते॥**
**सर्वेषामेव वर्णानां गार्हस्थ्यं तद्विधीयते।**
**श्रद्धालक्षणमित्येवं धर्मं धीराः प्रचक्षते॥**

श्रद्धा आस्तिक्यबुद्धिः सैव धर्मस्य मुख्यं लक्षणं ज्ञापकम्। श्रद्धाहीनं सर्वं व्यर्थमित्यर्थः। नीटी.

**[2]इत्येते देवयाना वः पन्थानः परिकीर्तिताः।**
**सद्भिरध्यासिता धीरैः कर्मभिर्धर्मसेतवः॥**

देवयानाः देवयानमार्गप्राप्त्युपायाः। नीटी.

**[3]संन्यासी ज्ञानसंयुक्तः प्राप्नोति परमां गतिम्।**
**अतीतोऽद्वन्द्वमभ्येति तमोमृत्युजरातिगम्॥**

द्वन्द्वं मानापमानादि। अतीतः अतिक्रान्तः। नीटी.

**#[4]आश्रमाणां च गार्हस्थ्यं सर्वेषां नात्र संशयः॥**

आश्रमक्रमः

**[5]गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः।**
**चत्वार आश्रमाः प्रोक्ताः सर्वे गार्हस्थ्यमूलकाः॥**

उक्तानां ब्रह्मचर्यादीनां संन्यासान्तानां चतुर्णामाश्रमाणां प्रत्येकमवान्तरभेदाश्चतुर्विधाः। तदुक्तं महाभारते – ब्रह्मचारीति। तत्र चातुर्विध्यं +कात्यायनस्मृतेर्व्याचक्षते। पमा. १।५६७

---

*वानप्रस्थमुनिधर्मनिरूपणप्रसङ्गेन एते प्रकाराः निर्दिष्टाः। एषां धर्मप्रतिपादकाः संपूर्णश्लोकाः 'वानप्रस्थधर्माः' इत्यस्मिन् प्रकरणे द्रष्टव्याः।

(१) **भा.**१३।७४।३४; **भामु.** १३।७५।३४-३५ तु गुणाञ्शृणु मे (च गुणं शृणु त्वं) जना (नरा).

(२) **भा.** १३।७४।३६; **भामु.** १३।७५।३७.

(३) **भा.** १३।७४।३७; **भामु.** १३।७५।३८-३९ च तवाप्ये (हि तथा ह्ये).

(४) **भा.** १३।१२९।२९; **भामु.** १३।१४१।८९ चरकृतोदकः (चकबहूदकौ); **समु.** १२७ चरकृतोदकः (चकबहूदकाः) हंसः (हंसाः) हंसश्च (हंसाश्च); **अप.** ३।५६ पृ.९५१ वस्ते (वस्तु) कृतोदकः (बहूदकौ); **मोक.** ३२ वस्ते (वस्तु) शेषं भामुवत्; **ममु.** ६।८६ पूर्वार्धे (चतुर्धा भिक्षवस्तु स्युः कुटीचरबहूदकौ।).

(५) **भा.** १३।१२९।३६-४५; **भामु.** १३।१४१।९६-१०५.

(६) **भा.** १४।३५।३०; **भामु.** १४।३५।४०.

\# अत्र प्रकरणात् आदिरिति शेषः। मूलभूतमित्यर्थः।

\+ एतद्वचनमस्मिन्नेव प्रकरणे कात्यायने (वका. पृ. २०४९-२४५०) द्रष्टव्यम्।

(१) **भा.** १४।३५।३२-३३; **भामु.** १४।३५।४२-४४.

(२) **भा.** १४।३५।३४; **भामु.** १४।३५।४४ इत्येते (इत्येवं).

(३) **भा.** १४।४३।२५; **भामु.** १४।४३।२७ तोऽद्वन्द्व (तो द्वन्द्व) तिगम् (तिगः).

(४) **भा.** १४।४४।१६; **भामु.** १४।४४।१७ गार्हस्थ्यं सर्वेषां (सर्वेषां गार्हस्थ्यं).

(५) **भा.** १४।४५।१३; **भामु.**; **पमा.** १।५६७ प्रथमचरणे (ब्रह्मचारी गृहस्थश्च) चतुर्थचरणे (एकैकस्य चतुर्विधाः॥).

**[१]गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ वा पुनः।**
**य इच्छेन्मोक्षमास्थातुमुत्तमां वृत्तिमाश्रयेत्॥**

संन्यासप्रशंसा

**ब्रह्मोवाच –**

**[२]संन्यासं तप इत्याहुर्वृद्धा निश्चितदर्शिनः।**
**ब्राह्मणा ब्रह्मयोनिस्था ज्ञानं ब्रह्म परं विदुः॥**

**[३]अविदूरात्परं ब्रह्म वेदविद्याव्यपाश्रयम्।**
**निर्द्वन्द्वं निर्गुणं नित्यमचिन्त्यं गुह्यमुत्तमम्॥**

**[४]ज्ञानेन तपसा चैव धीराः पश्यन्ति तत्पदम्।**
**निर्णिक्ततमसः पूता व्युत्क्रान्तरजसोऽमलाः॥**

**[५]तपसा क्षेममध्वानं गच्छन्ति परमैषिणः।**
**संन्यासनिरता नित्यं ये ब्रह्मविदुषो जनाः॥**

**[६]तपः प्रदीप इत्याहुराचारो धर्मसाधकः।**
**ज्ञानं त्वेव परं विद्म संन्यासस्तप उत्तमम्॥**

आश्रमसमुच्चयः संन्यासविषये तदपवादश्च,
आतुरसंन्यासः

**[७]आश्रमादाश्रमं गच्छेदित्ययं तूदितो विधिः।**
**नित्यं हि मृत्युरागच्छन्न क्रमं संप्रतीक्षते॥**

**[८]अनेन क्रमयोगेन परिव्रजति यो द्विजः।**
**स विधूयेह पाप्मानं परं ब्रह्माधिगच्छति॥**

**[९]उत्पन्ने संकटे घोरे चौरव्याघ्रादिसंकटे।**
**भयभीतस्य संन्यासमङ्गिरा मुनिरब्रवीत्॥**

(१) **भा.** १४।४६।१७; **भामु.**; **मुक्ता.** १७२ च वानप्रस्थोऽथ (वा वानप्रस्थोऽपि) मास्थातु (मादातु); **यसं.** २१ वा पुनः (भिक्षुकः) (–).

(२) **भा.** १४।४७।१; **भामु.** १४।४७।१ दर्शिनः (वादिनः).

(३) **भा.** १४।४७।२; **भामु.** १४।४७।२ अविदूरात्परं (अतिदूरात्मकं) न्त्यं गुह्य (न्त्यगुण).

(४) **भा.** १४।४७।३; **भामु.** १४।४७।३ तत्पदम् (तत्परम्) तमसः (मनसः).

(५) **भा.** १४।४७।४; **भामु.** १४।४७।४ मैषिणः (मेश्वरम्) ब्रह्मविदुषो (च ब्रह्मविदो).

(६) **भा.** १४।४७।५; **भामु.** १४।४७।५ उत्तरार्धे (ज्ञानं वै परमं विद्यात्संन्यासं तप उत्तमम्॥).

(७) **मोक.** १२.

(८) **मोक.** ६४ क्रमेण महाभारतम्.

(९) **पमा.** १।५३२; **मर.** ६१५; **मुक्ता.** १७४ द्वितीयचरणे (चोरव्याघ्रादिगोचरे) अङ्गिराः; **सिन्धु.** २१४८ दिसंकटे (दिगोचरे) भय (भव) स्मृत्यर्थसारे; **विपा.** ५।५०४ मुक्तावत् (–); **यसं.** ४ दिसंकटे (दिगोचरे) अङ्गिराः; **बाल.** ३।६० पृ. १०० मुक्तावत्, दत्तात्रेयः; **कृभ.** २१३० चौर (तथा).

**[१]यद्यातुरः स्यान्मनसा वाचा वा संन्यसेद्द्विजः॥**

संन्यासप्रशंसा

**[२]सुवृत्तो वा प्रवृत्तो वा अध्वगः श्रान्त एव वा।**
**काषायदण्डमात्रेण यतिः पूज्यो युधिष्ठिर॥**

**[३]एकदण्डी त्रिदण्डी वा शिखी मुण्डित एव वा।**
**काषायमात्रसारोऽपि यतिः पूज्यो युधिष्ठिर॥**

## हरिवंशः

आश्रमक्रमः, संन्यासप्रशंसा, गार्हस्थ्येऽपि
संन्यासफलम्

**[४]पादा धर्मस्य चत्वारो यैरिदं धार्यते जगत्।**
**ब्रह्मचर्येण व्यक्तेन गृहस्थेन च पावने॥**

धर्मपादरूपाश्चत्वार आश्रमा अपि ब्रह्मैवेत्याह – पादा इति द्वाभ्याम्। व्यक्तेन स्वाध्यायरूपेण व्यानरूपेण व्यक्तेन एकः पादः। गृहस्थेन गृहस्थाश्रमेण पावने गृहे स्थितेन च द्वितीयः पादः। समासैकदेशस्यापि गृहस्य विशेषणं पावने इति, आर्षत्वात्।

नीटी.

**गुरुभावेन वाक्येन गुह्यगामिनगामिना।**
**इत्येते धर्मपादाः स्युः स्वर्गहेतोः प्रचोदिताः॥**

गुरुभावेन तपोभारगौरवेण च वानप्रस्थाश्रमेण तृतीयः पादः। वाक्येन तत्त्वमस्यादिना कीदृशेन? गुह्यगामिना आत्मतत्त्वप्रतिपादकेन। तथा नगामिना, नगम् अचलं कूटस्थं ब्रह्म, 'संन्यासाद्ब्रह्मणः स्थानम्' इति स्मृतेः, मेरुपृष्ठं वा, ततत्प्री(?) आमयति गमयतीति नगामि, तेन नगामिना कूटस्थवस्तुप्रापकेण विचारध्यानाभ्यां वस्तुप्रतिपत्त्यर्थेन वाक्येन चतुर्थः पादो धर्मस्य भवतीत्यर्थः। स्वर्गो भोगापवर्गाख्यं सुखम्।

नीटी.

**न्यायाद्धर्मेण गुह्येन सोमो वर्धति मण्डले।**
**ब्रह्मणो ब्रह्मचरणाद्वेदा वर्तन्ति शाश्वताः॥**

(१) **मुक्ता.** १८२ द्विजः (त्तदा) (–); **सिन्धु.** २१४८ स्मृत्यर्थसारे; **विपा.** ५।४९५ द्विजः (दिति).

(२) **समु.** १३१; **आपा.** ८२ उत्त., (–).

(३) **पमा.** १।५५२ शेषः स्थलादिनिर्देशः 'वर्णसामान्यधर्माः' (वका. पृ.१७२४) इत्यस्मिन् प्रकरणे द्रष्टव्यः.

(४) **हरिमु.** ३।१७।३०-३३.

एवं यष्टव्यदेवतादिष्वातुराश्रम्यान्तानां ब्रह्मत्वं भावनार्थमुक्तम्। इदानीं तुर्याश्रमयोग्यं योगं प्रस्तोष्यन् तुर्याश्रमधर्ममेव स्तौति द्वाभ्याम् – न्यायादिति। न्यायात् वेदान्तन्यायो(पो)द्बलितश्रवणमननात्मकविचाराधिगमात्। गुह्यधर्मो योगः तेन च मण्डले ब्रह्माण्डगोले सोमः चन्द्राधिष्ठेयं मनः विवर्धति। आध्यात्मिकपरिच्छेदाभिमानं त्यक्त्वा समष्ट्यभिमानं धत्ते इत्यर्थः। एवं ब्रह्मणो वेदादेव प्रमाणभूतात् ब्रह्मचरणं ब्रह्मचर्यायोगस्तस्मात् शाश्वता अपि वेदाः वर्तन्ति निवर्तन्ते गच्छन्ति बाध्यन्ते इत्यर्थः। 'अत्र पिताऽपिता' इत्यादि 'लोका अलोका वेदा अवेदाः' (बृउ.४।३।२२) इति श्रुतेः वेदस्यापि बोधात्प्रागेव प्रामाण्यम्, सति तु बोधे बाध एवेत्यर्थः। वर्तन्ति(?तिः) नैघण्टुके गत्यर्थेषूपपद्यते(? षु पठ्यते)।

नीटी.

**गृहस्थानभिवाक्येन तृप्यन्ति पितरस्तथा।**
**ऋषयोऽपि च धर्मेण नगस्य शिरसि स्थिताः॥**

किंच, वाक्येन पूर्वोक्तो गु(?क्तगु)ह्येत्यादिविशेषणेन युक्तान् गृहस्थानपि अभिलक्ष्य पित्रादयस्तुष्यन्ति। धर्मेण योगेन। नगस्य मेरोः। एतेन योगधर्मे गृहस्थादेरप्यधिकारोऽस्तीति दर्शितम्। तथा च स्मृतिः –'न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः। श्राद्धकृत्सत्यवादी च गृहस्थोऽपि विमुच्यते॥ स ह्याश्रमैर्विजिज्ञास्यः सर्वैरप्येवमेव तु। द्रष्टव्यस्त्वथ श्रोतव्यो मन्तव्यश्चोपपत्तिभिः॥' (यास्मृ. ३।२०५, १९१) इत्यादिका।

नीटी.

गार्हस्थ्यसंन्यासयोरधिकारः

**[1]नावेदविद्वानागच्छेन्नापि रौद्रं व्रतं चरेत्।**
**न च त्यागेन गच्छेत गृहधर्मं न च त्यजेत्॥**

अवेदविद्वान् गृहधर्मं न आगच्छेत् कृत्स्नं वेदमप्राप्य गार्हस्थ्यं न कुर्यादित्यर्थः। न च त्यागेन परिव्राजेन (?पारिव्राज्येन) गच्छेत म्रियेत। एतच्च मनुनाऽप्युक्तम् – 'अनधीत्य द्विजो वेदाननुत्पाद्य सुतानपि। अनिष्ट्वा शक्तितो यज्ञैर्मोक्षमिच्छन्व्रजत्यधः'॥ (मस्मृ. ६।३७) इति। एतच्चाविरक्तविषयम्, 'ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा... यदहरेव विरजेत्तदहरेव प्रव्रजेत्' (जाउ. ४) इति श्रुतिविरोधात्।

नीटी.

**नैव गच्छेत दुःस्थानमप्राप्तो वेदसंचयम्।**
**ऋचश्च संचयः पूर्वः सामगानां च भारत॥**

नापि वेदग्रहणात् प्राक् संन्यस्येदित्याह – नैवमिति। दुःस्थितं स्थानम् अनिकेतत्वमित्यर्थः। वेदसंचयस्यापीयत्तामाह – ऋच इति। बह्वृचानां सामगानाम्, चाद्यजुर्वेदिनामपि, ऋच एव संचयः। साम्नां यजुषां चाप्यृक्ष्वेवान्तर्भाव इत्यर्थः।

नीटी.

**ये चापि पुत्रिणो न स्युः श्रुत्वाऽपि प्राप्नुयुः फलम्।**
**ब्राह्मणास्तपसा श्रान्ता गुरोश्च परिचर्यया॥**

पुत्रिणो न स्युः गार्हस्थ्यं न चक्रुरित्यर्थः। श्रुत्वा, वेदान्तानिति शेषः। फलं ज्ञानम्।

नीटी.

गार्हस्थ्यप्रशंसा

**[2]कश्चायमाश्रमो नाम विहाय च गृहाश्रमम्।**
**गृहस्थ एव धर्मात्मा गृहस्थो धर्मवित्तमः।**
**गृहस्थो धर्मरूपस्तु गृहस्थो वर्ण एव च॥**
**गृहस्थश्च सदा माता प्राणिनां जीवनं सदा॥**

आश्रमक्रमः संन्यासप्रशंसा च

**[3]चत्वार आश्रमाः पूर्वमृषिभिर्विहिता 8नृपौ।**
**ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः॥**
**तेषामग्र्यश्चतुर्थोऽयमाश्रमो भिक्षुकः स्मृतः।**
**आस्ते तस्मिन्महाबुद्धिः स हि पुण्यतरः स्मृतः॥**

## वाल्मीकिरामायणम्

गार्हस्थ्यप्रशंसा

**[3]चतुर्णामाश्रमाणां हि गार्हस्थ्यं श्रेष्ठमाश्रमम्।**
**आहुर्धर्मज्ञ धर्मज्ञास्तं कथं त्यक्तुमर्हसि॥**

---

(१) हरिमु. ३।२४।१०-१२.

8 हंसडिम्भकावत्र संबोध्यौ।

(१) हरिमु. ३।१०७।२१-२३.

(२) हरिमु. ३।१०८।१३-१४.

(३) वारा. २।९८।५८; वाराकु. २।१०६।२२ आहु (प्राहु).

## मनुः

अब्राह्मणगुरौ अननूचानब्राह्मणगुरौ च नैष्ठिकत्वनिषेधः, नैष्ठिकत्व-फलम्

**[1]नाब्राह्मणे गुरौ शिष्यो वासमात्यन्तिकं वसेत्।
ब्राह्मणे चाननूचाने काङ्क्षन्गतिमनुत्तमाम्॥**

(१) अब्राह्मणे गुरौ वासोऽध्ययनाय पूर्वेणोक्तो नैष्ठिकस्यापि प्राप्तो विशेषेण निषिध्यते। आत्यन्तिकं वासं यावज्जीविकं न वसेत् न कुर्यात्। वासं वसेदिति। सामान्यविशेषभावाद्वासं वसेदिति संबन्धः कल्प्यः। गुरुविषयो वासस्तं वसेत्। समाप्ताध्ययनोऽन्यत्र गच्छेत्। ननु चाध्ययनमात्रमनुज्ञातम्, आत्यन्तिकस्य वासस्य कुतः प्राप्तिः? नैष दोषः। गुरौ तस्य वास उक्तः। अध्यापयिता च गुरुरुक्तः। अतो भवत्याशङ्का। ब्राह्मणे वाऽननूचाने। वाशब्दोऽप्यर्थः। ब्राह्मणोऽपि यदि अनूचानः वृत्ताभिजनसंपन्नः न भवति, न च व्याख्यानाध्ययनशीलः। अनुवचनेनैतेऽपि गुणा लक्ष्यन्ते यतोऽननुवक्तर्यर्थाभावादेवावासः सिद्धः। गतिरत्र सुखातिशयप्राप्तिर्विवक्षिता। अनुत्तमा यस्या अन्योत्तमा नास्ति, तां काङ्क्षन् परमात्मानन्दरूपं मोक्षम्। *मेधा.

(२) यद्यापदि क्षत्रियादिर्गुरुर्भवति तदा तत्र नाऽऽत्यन्तिकवासः, तथा ब्राह्मणेऽप्यध्यापनमकुर्वाणे। यदाह मनुः — 'नाब्राह्मणे...॥' इति।

अप. १।५० पृ. ७२

**[2]आ समाप्तेः शरीरस्य यस्तु शुश्रूषते गुरुम्।
स गच्छत्यञ्जसा विप्रो ब्रह्मणः सद्म शाश्वतम्॥**

(१) अञ्जसा आत्मज्ञानेनेत्यर्थः।

विश्व. १।५०

(२) नैष्ठिकब्रह्मचर्यस्य फलविधिरयम्। शरीरस्य समाप्तिः जीवितत्यागः। आ ततः कालात् यो गुरुं शुश्रूषते परिचरति स गच्छति विप्रः ब्रह्मणः सद्म सदनं स्थानं शाश्वतम्, न पुनः संसारं प्रतिपद्यत इति यावत्। अञ्जसा अक्लिष्टेन मार्गेण, न गत्यन्तरेण तिर्यक्प्रेतमनुष्यादिजन्मना व्यवधीयते। ब्रह्मशब्देन चेतिहासदर्शने देवविशेषश्चतुर्वक्त्रः, तस्य सद्म स्थानविशेषः दिवि विद्यते। 8वेदान्तवादिनां तु ब्रह्म परमात्मा, तस्य सद्म स्वरूपमेव, तद्भावापत्तिः। मेधा.

(३) अस्य फलमाह — आ समाप्तेरिति। यावच्छरीरं यो गुरुं परिचरति स ब्रह्मलोकं आ महाप्रलयादनश्वरं अञ्जसा स्पष्टेन मार्गेण गत्यन्तराव्यवहितेन गच्छति। विप्रग्रहणं प्रदर्शनार्थम्, त्रयाणां प्रकृतत्वात्।

गोरा.

(४) अञ्जसा शीघ्रम्। ब्रह्मणः हिरण्यगर्भस्य। शाश्वतम् अविच्युतम्। मवि.

(५) अस्य फलमाह — आ समाप्तेरिति। समाप्तिः शरीरस्य जीवनत्यागः तत्पर्यन्तं यो गुरुं परिचरति स तत्त्वतो ब्रह्मणः सद्म रूपम् अविनाशि प्राप्नोति। ब्रह्मणि लीयत इत्यर्थः। ममु.

(६) ननु नैष्ठिकब्रह्मचर्याङ्गीकारे गार्हस्थ्यं निर्विषयं स्यात्। तन्न, गार्हस्थ्यस्य रागिविषयत्वात्। तदाह जाबालिः — 'यदि गृहमेव कामयेत्तदा यावज्जीवमग्निहोत्रं जुहुयात्' इति। अत्र केचित् नैष्ठिकब्रह्मचर्यं कुब्जादिविषयं मन्वाना गार्हस्थ्यस्य तदितरविषयतामाहुः। उदाहरन्ति च तत्र विष्णुवचनम् — 'कुब्जवामनजात्यन्धक्लीबपङ्ग्वार्तरोगिणाम्। व्रतचर्या भवेत्तेषां यावज्जीवमसंशयम्॥' इति। तन्न, नैष्ठिकब्रह्मचर्यस्य कुब्जादिष्वेव नियतत्वे समर्थं प्रत्यैच्छिकत्वमुच्यमानं विरुध्येत। ऐच्छिकत्वं च वसिष्ठेन दर्शितम् — 'चत्वार आश्रमाः। ब्रह्मचारिगृहस्थवानप्रस्थपरिव्राजकाः। तेषां

---

* गोरा., मवि., स्मृच., ममु., मच., नन्द., भाच., बाल. मेधागतम्।

(१) **मस्मृ.** २।२४२; **मेधा.** चाननू (वाऽननू); **गोरा.** मेधावत्; **अप.** १।५० पृ. ७२; **ब्रक.** २७४; **स्मृच.** १।१६८ मेधावत्; **पमा.** १।४५८; **मपा.** १०९; **प्रपा.** २४३ प्रथमचरणे (ब्राह्मणे च गुरौ शिष्ये?) वसेत् (चरेत्) चाननू (चाप्यनू) गति (मति); **चमव्या.** ४७ वसेत् (चरेत्) शेषं मेधावत्; **संप्र.** ५४९ चतुर्थचरणे (काङ्क्षंस्तु गतिमुत्तमाम्) शेषं मेधावत्; **बाल.** १।४९-५० पृ. १६७ मेधावत्.

(२) **मस्मृ.** २।२४४; **विश्व.** १।५० समाप्तेः श (निपाताच्छ); **मेधा.** ३।१ पू.; **ब्रक.** २७४; **स्मृच.** १।१७०; **ममु.** २।२४९ प्रथमचरणमात्रम्; **पमा.** १।४५९; **प्रपा.** २४३; **मुक्ता.** १२०; **विपा.** २।५०४; **संप्र.** ५५० षते गु (षयेद्गु) सद्म शाश्वतम् (शाश्वतं पदम्); **बाल.** १।४९-५० पृ. १६७.

8 वेदान्तवादिनामपि 'ब्रह्मलोकमभिसंपद्यते, न च पुनरावर्तते' (छाउ. ८।१५।१) इत्याद्युपनिषद्वचनेषु हिरण्यगर्भापरपर्यायं देवविशेषरूपं ब्रह्म संप्रतिपन्नमेव।

वेदमधीत्य वेदौ वेदान् वा चीर्णब्रह्मचर्यो यमिच्छेत्तमावसेत्' (वाध. ७।१-३) इति। भविष्यत्पुराणेऽपि – 'गार्हस्थ्यमिच्छन् भूपाल कुर्याद्दारपरिग्रहम्। ब्रह्मचर्येण वा कालं नयेत्संकल्पपूर्वकम्। वैखानसो वाऽपि भवेत्परिव्राडथवेच्छया॥' इति। तस्मात् रागिविषयत्वेनैव गार्हस्थ्यं व्यवस्थापनीयमिति।

पमा. १।४५९-४६०

(७) सद्म स्थानं शाश्वतम्, द्विपरार्धकालस्थायित्वात्। अञ्जसा तत्त्वतः, न स्तुतिमात्रम्, 'ब्रह्मचर्येण विन्देत्' इति श्रुतेः। विन्देत् प्राप्नुयात्। ब्रह्मलोकमिति शेषः।

मच.

**'एवं चरति यो विप्रो ब्रह्मचर्यमविप्लुतः।**
**स गच्छत्युत्तमस्थानं न चेहाऽऽजायते पुनः॥**

(१) एवमिति नैष्ठिकवृत्तिं प्रत्यवमृशति। एवं यो ब्रह्मचर्यं चरति अविप्लुतः अस्खलः स प्राप्नोत्युत्तमस्थानं धाम परमात्मप्राप्तिलक्षणम्। न चेह पुनर्जायते न संसारमापद्यते, ब्रह्मरूपं संपद्यत इति। मेधा.

(२) 'आ समाप्तेः शरीरस्य' इत्युक्तमप्येतन्नैष्ठिकफलाविप्लुतिविधानार्थमुपसंहारार्थम्(? र्थं चा) नूद्यते। उक्तेन रूपेण योऽस्खलन्नैष्ठिकब्रह्मचर्यं चरति स ब्रह्मलोकं गच्छति, न च संसारे जायते, महाप्रलये ब्रह्मणा सह युज्यते। विप्रग्रहणं प्रदर्शनार्थम्, त्रयाणां प्रकृतत्वात्।

§गोरा.

(३) एवं नैष्ठिकधर्मेण। विप्रपदं विप्रस्यैव नैष्ठिकधर्मः नान्येषामित्येतदर्थम्। अविप्लुतः अभग्नव्रतः ब्रह्मलोकं प्रागुक्तं प्राप्योत्तमं स्थानं मोक्षास्पदं गच्छति अत एव न इह संसारे पुनराजायत इति।

मवि.

(४) 'आ समाप्तेः शरीरस्य' इत्यनेन यावज्जीवमाचार्यशुश्रूषाया मोक्षलक्षणं फलम्। इदानीमाचार्ये मृतेऽपि एवमित्यनेनानन्तरोक्तविधिना आचार्यपुत्रादीनामप्यग्निपर्यन्तानां शुश्रूषको यो नैष्ठिकब्रह्मचर्यमखण्डितव्रतोऽनुतिष्ठति स उत्तमं स्थानं ब्रह्मण्यात्यन्तिकलयलक्षणं प्राप्नोति। न च इह संसारे कर्मवशादुत्पत्तिं लभते।

ममु.

(५) एतेष्वाचार्यादिषु नैष्ठिकस्य ब्रह्मसद्मप्राप्तिरित्युपसंहरति – एवमिति। अविप्लुतब्रह्मचर्यः अप्रच्युतव्रतः। इहेति विशेषणात् मानवान्तरे जायते, यदि तत्र श्रवणादि कृतं तदा मुच्यते(?)। तथा च स्मृतिः – 'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्॥' इति। प्रतिसंचरे प्रलये। कृतात्मानः कृतसाक्षात्काराः।

मच.

(६) एतच्च नैष्ठिकब्रह्मचर्यं कलौ न कार्यम्, कलिवर्ज्येषु परिगणनात्। *चमव्या. ४९

(७) अत्राविप्लुतब्रह्मचर्यत्वं नाम धीपूर्वरेतःसेकहीनत्वम्। तच्च मनुना दर्शितम् – 'भुक्त्वा स्पृष्ट्वा च दृष्ट्वा च श्रुत्वा घ्रात्वा च यो नरः। न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रियः॥' (मस्मृ. २।९८) इति।

आन. ४८७-४८८

(८) अथोपकुर्वाणं प्रत्याह – एवमिति। अविप्लुतः। अस्कन्नरेतस्कः। नन्द.

ब्रह्मचर्यकालावधिः

**8[1]षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैवेदिकं व्रतम्।**
**तदर्धिकं पादिकं वा ग्रहणान्तिकमेव वा॥**

§ भाच. गोरागतम्।

(१) मस्मृ. २।२४९; मेधा. चेहाऽऽजा (चेह जा); गोरा. मेधावत्; ब्रक. २७४ प्लुतः (प्लुतम्) मस्थानं (मं स्थानं); उ. २।२१।६ मस्थानं (मं स्थानं); चमव्या. ४८ मस्थानं (मं स्थानं) चेहाऽऽजा (चेह जा); मुक्ता. १२० उवत्; आन. ४८७ चमव्यावत्; भाच. मेधावत्; बाल. १।४९-५० पृ. १६८ उवत्.

* शेषं मवि. अनुवादः। बाल. चमव्यावत्।

8सर्वेषु मूल-टीका-निबन्धपुस्तकेषु अयमेव पाठो मुद्रितः। मेधाभाष्ये आदावयं पाठो मुद्रितः, अन्ते च 'षाट्त्रिंशदाब्दिकम्' इति पाठान्तरं मुद्रितम्। श्रीगङ्गानाथझामहोदयैरपि पाठान्तरमिदं निर्दिष्टम्। वस्तुतः 'परिमाणान्तस्यासंज्ञाशाणयोः' (पासू. ७।३।१७) इत्युत्तरपदवृद्धिविधायकसूत्रे परिमाणशब्देन कालपरिमाणं न ग्राह्यमिति 'संख्यायाः संवत्सरसंख्यस्य च' (पासू. ७।३।१५) इत्यत्र संवत्सरग्रहणेन ज्ञापितत्वात् आदिवृद्ध्या 'षाट्त्रिंशदाब्दिकम्' इति पाठ एव साधुः यद्युपलभ्येत। यावन्नोपलभ्यते तावत् षट्त्रिंशदब्दशब्दस्य विशेषरूपेण सामान्यरूपेण वाऽनुशतिकादिगणे पाठं प्रकल्प्योभयपदवृद्ध्या 'षाट्त्रिंशदाब्दिकम्' इति पाठस्य साधुत्वमभ्युपेतव्यम्।

(१) मस्मृ. ३।१; मेधा. व्याख्यानशेषे 'षाट्त्रिंशदाब्दिकम्' इति पाठो मुद्रितः २।१६५ निर्देशमात्रम् : ४।१ (ग्रहणान्तिकम्) एतावदेव : ४।३१ निर्देशमात्रम्; अप. १।३६ पृ. ६७ वेदिकं (विद्यकं); उ. १।२।१६ अपवत्; स्मृच. १।१६६; चका. ७७९ वेदिकं (विद्यकं) तृतीयचरणे (तदर्धे पादिकं वाऽपि); पमा. १।४५७-४५८ दाब्दिकं (दाद्विकं); मपा. ९७ चर्यं (कार्यं) वेदिकं (वेद्यकं) मेव वा (मेव च); चमव्या. ४६ मेव वा (मेव च); मुक्ता. ११८ चमव्यावत्; संप्र. ५५७ तद (तदा) शेषम् अपवत्; संकौ. १६५ तृतीयचरणे (तदर्धं पादिकं वाऽपि) शेषम् अपवत्.

(१) द्विविधो ब्रह्मचारी पूर्वत्र प्रतिपादितः नैष्ठिक उपकुर्वाणश्चेति । 'आ समाप्तेः शरीरस्य यस्तु शुश्रूषते गुरुम्।' (मस्मृ. २।२४४) इत्यनेन नैष्ठिकब्रह्मचर्यमुक्तम्। 'आ समावर्तनात्' (मस्मृ. २।१०८) इति पक्षान्तरमपि सूचितम्। तत्र नैष्ठिकस्य नामधेयस्य प्रतिलम्भेनैव निमित्तवता अवधिशेषः सुगमितः – निष्ठां समाप्तिं गच्छति नैष्ठिकः। श्रुत्यैव कालो विहितः 'आ समाप्तेः' इति। उपकुर्वाणस्य 'अनेन क्रमयोगेन' 'तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः। वेदः कृत्स्नोऽधिगन्तव्यः' (मस्मृ. २।१६४-१६५) इति संख्याया अविवक्षायां चैकद्वित्रिचतुःपञ्चषट्सप्तादिशाखाध्ययनं यथाशक्तिप्राप्तं नियम्यते। त्रैवेदिकं व्रतं चर्यम्। त्रयाणां वेदानां समाहारस्त्रिवेदी, तद्ग्रहणप्रयोजनं त्रैवेदिकम्। ग्रहणक्रिया वृत्तावन्तर्भवति, वेदाधिगमस्य प्राग्विहितत्वात्। व्रतं ब्रह्मचारिधर्मकलापः। चर्यं चरितव्यम्। कृत्यो विधौ। एवमा(?एधआ)हरणादीनां ग्रहणान्ततायां प्राप्तायामाह – षट्त्रिंशदाब्दिकमिति। गृहीतेऽपि वेदे कालः पूरयितव्यः। यदि स्वाध्यायाध्ययनविध्यर्थो धर्मः, तस्य च स्वाध्यायविधेर्ग्रहणे निवृ(?र्वृ)त्तिः, किमर्था तर्हि द्वादशवार्षिकी ग्रहणोत्तरकालं व्रतचर्यानुवृत्तिः? अत्यल्पमिदमुच्यते। दर्शपूर्णमासादिष्वप्याग्नेयादियागेभ्यः पराञ्चि यान्यङ्गानि तत्राप्येतद्वक्तव्यम्। समस्ताङ्गानुष्ठान एवाऽऽरादुपकारकाद्यङ्गयुक्ताद्विशिष्टक्रमकाद्विध्यर्थसंपद्यवगतायां परिचोदनाशब्दादेव विधिसंबन्धोपगमो यतः। अथ महतो लघीयांसस्तदर्धिकपादिकग्रहणावधयः पक्षाः सन्ति। तेषु सत्सु कः खलु महाप्रयासमतिचिरकालं तावद्द्वादशवार्षिकं व्रतचरणमाद्रियेत? इति चेत्, फलभूमार्थिनोऽङ्गभूयस्त्वमनुष्ठास्यन्ति। तदुक्तम् – 'प्रयत्नविशेषात्फलविशेषेण भवितव्यम्' इति। ननु च नार्थावबोधादृते ग्रहणद्वारेण स्वाध्यायाध्ययनस्य किंचिदपरं फलमस्ति। एवं ह्याहुः – 'न तस्याध्ययनमात्रं तत्रभवन्तो याज्ञिकाः फलं समामनन्ति' इति। तथा 'दृष्टो हि तस्यार्थः कर्मावबोधनं नाम' इति शबरभाष्ये। तस्य च न कश्चिद्विशेषो दृश्यते। यद्येवं ग्रहणकालेऽप्यन्तरेण व्रतधर्मानुष्ठानं ग्रहणानुष्ठानप्रसङ्गः। कश्चैवमाह – 'अर्थावबोधार्थः स्वाध्यायविधिः' इति? स्वाध्यायविधिः स्वार्थ एव। नान्यस्यान्यार्थतायां प्रमाणमस्ति। अर्थावबोधो हि ग्रहणे सति वस्तुस्वभावत उत्पद्यते, न विधितः। अथ किं स्वर्गादिफलार्थिनोऽयं विधिः? एतदपि कथं भविष्यति? का तर्हीयं वाचोयुक्तिः – फलविशेषेणेति। एषा वाचोयुक्तिः। संस्कारविधिस्तावदयं स्वाध्यायप्रधानः, तस्य स्वाध्याये कर्मण्युत्पन्नत्वात्। संस्कारविधयश्च न साक्षादधिकारमर्हन्ति, किंतु संस्कार्यद्वारेण साधिकारविध्यन्तरमनुप्रविशन्ति। यथा 'व्रीहिम(? हीन)वहन्ति' इति दर्शपूर्णमासाधिकारविषयाग्नेयादियागसाधनभूतपुरोडाशप्रकृतिव्रीहितुषकणविप्रमोचनादिसंस्कारद्वारेण दर्शपूर्णमासापूर्वसंबन्धमनुभवति अवघातः, न तन्निरपेक्षः स एव कर्तव्यतया प्रतीयते। एवमिह वेदस्य संस्कार्यत्वं नान्यत्राशेषभूतस्य निर्वहति। दृष्टः स्वाध्यायाध्ययनानन्तरमर्थावबोधः। अत इदमध्ययनमर्थावबोधपर्यन्तमवघात इव तण्डुलनिष्पत्तिपर्यन्तः। एतावांस्तु विशेषः – प्रकरणेऽधीतत्वादवघातो झटिति लब्धाधिकारविध्यन्तरसंबन्धः। अयं त्वनारभ्याधीतत्वादवबोधपर्यवसायी सकलफलकर्मानुष्ठानोपयोगितया गम्यमानोऽधिकारः। तथा विध्यर्थनिर्वृत्तिरेव फलविशेषोऽभिप्रेतः। विधेर्हि पुरुषार्थत्वं व्युत्पन्नावगमम्, तत्साक्षाद्भवतु वा परम्परया वेति न विशेषः। गम्यमानाधिकारत्वाच्च स्वतन्त्र एवायं विधिः स्वात्मानमनुष्ठापयति, यद्यपि नित्यकामश्रुतिष्वर्थावबोध उपयुज्यते। ये त्वर्थावबोधद्वारेण ज्योतिष्टोमादिविध्येककार्यत्वमिच्छन्ति, तत्फलस्यैव च प्रयत्नविशेषादतिशयमाहुः, तेषामाचार्यकरणविधिना किमपराद्धम्? येन महता यत्नेन तदेककार्यता निषिध्यते। अप्रामाण्यं वेदस्य भवतीति चेत्, अस्तु। न प्रयोजनवशेन युक्तिसामर्थ्यायातोऽर्थो हातुं शक्यते। युक्तिस्तु युक्त्यन्तरेण बलीयसा बाध्यते – 'आचार्यकरणविध्येककार्यत्वे त्वस्य विधिरूपतैव हीयते, स्वार्थस्याविवक्षितत्वात्'। तत्तुल्यं ज्योतिष्टोमाद्यनुप्रवेशेऽपि। यदा तु स्वतन्त्रोऽयं विधिः स्वार्थानुष्ठापकस्तत्समानस्कन्धस्तदा स्वयमेवेतिकर्तव्यतया युक्तोऽनुष्ठीयते। तत्र ये विकल्पिताः कल्पा लघीयांसो गरीयांसश्च, तेषां लघीयसा सिद्धे गरीय-

सामनुष्ठानं विध्यर्थ एव विशेषमावहति। यथाऽऽधाने 'एका देया तिस्रो देया' इत्यादि। अनुष्ठिते चास्मिन्विधौ स्वसामर्थ्याच्छ्रुतो वा भवतु प्रतीयमानो वा कल्प्यो वा, प्रमाणभेदोऽयम्, न संबन्धभेदः। सर्वथोभयतःस्पर्शतो न मुच्यामहे — यद्यस्य विधिः स्वार्थानुष्ठापको ज्योतिष्टोमाद्युपकारकत्वं च।

ननु किमिदं पूर्वापरविरुद्धं प्रलप्यते? प्रागुक्तम् — न साक्षात्संस्कारविधयोऽधिकारसंम्बन्धिनः, इदानीं तु — स्वतन्त्र एवायं विधिः स्वार्थानुष्ठापक इति। यथाऽयं विशेषश्रुतेनान्वयिना न संबध्यते, गम्यमानस्त्वधिकारः संस्कारविधीनामप्यविरुद्धः इति। नायं 'विशेषो यद्यस्य विधिप्रयुक्तमनुष्ठानमर्थावबोधांश इष्यते। पाठमात्रस्याऽऽचार्यविधिप्रयुक्तत्वात्संस्कारविधीनामधिकारसंबन्धोऽभ्युपगतः स्यात्। अथ विध्यन्तरोपकारकत्वात्तत्प्रयुक्तमनुष्ठानम्, तथा सत्यधिकृतस्याध्ययनं स्यात्, नाधीतवेदस्याधिकारः। तदा च शूद्रस्याधिकारो दुर्निवारः। न चाध्ययनानन्तरं वेदार्थश्रवणं प्राप्नोति। यदैव हि यदृच्छया कुतश्चिदधिगतं भवति — 'ज्योतिष्टोमनाम कर्म वैदिकं स्वर्गफलम्' इति, तदैव तदितिकर्तव्यतां शिक्षेत्, तत्काल एव च तदुपयोगिनो मन्त्रान्याजमानानधीयीत।

अत्र केचिदाश्रयिन्यायेन (जैसू. ४।१।१८) परिहरन्ति — यथैव हि स्विष्टकृदादय उभयरूपाः संस्कारार्थकर्मतया, एवं स्वाध्यायाध्ययनमप्यभिधानविनियोगानुसारितया क्रियाफलावबोधदर्शनेन च संस्कारकर्म फलवत्कर्मार्थकर्म(?वदर्थकर्म च)। अतः साधिकारत्वसिद्धिः। कः पुनरधिकारी? उपनीतस्त्रैवर्णिको माणवक इति ब्रूमः। ब्रह्मचारिधर्मेषु ह्येतदाम्नायते। लिङादयो ह्यविनाभूतनियोज्यार्थविध्यर्थप्रतिपादकाः। तत्र विशेषाकाङ्क्षायां क्वचिच्छब्दसमर्पितो विशेषो भवति — 'स्वर्गकामो यावज्जीवमग्निहोत्रं जुहोति', क्वचिदश्रुतोऽप्यन्विताभिधानसामर्थ्यबलेन कल्प्यो विश्वजिदादिषु, क्वचित्प्रकरणाद्वस्तुसामर्थ्याद्विध्यन्तरपर्यालोचनयाऽपि च प्रतीयते। तदेतदिह सर्वमस्ति। प्रकृतो ब्रह्मचारी। वस्तुसामर्थ्येन चार्थावबोध उपजायते। स च सर्वविधिषूपयुज्यते, विदुषोऽधिकारात्।

तदिदमपरे न मृष्यन्ति। संस्कारविधित्वेनैवास्य प्रतीयमानाधिकारता। यतः संस्कारकर्माणि संस्कार्यार्थतयाऽनुष्ठीयन्ते। यदि च संस्कार्ये न दृश्येत विशेषस्ततः सक्तुवत्संस्काररूपता हीयेत। अस्ति चात्र फलवत्कर्मावबोधलक्षणो विशेषः। यत्तु 'स्विष्टकृदादिवत्' इति तत्प्रकृतिप्रत्ययविज्ञानागम्यत्वरूपहानितया युक्तोभयरूपता।

तस्मात्स्थितं स्वतन्त्रोऽयं विधिर्माणवकस्येति। अतश्च स्वत एवानुष्ठेयः, नावघातादिवद्दर्शपूर्णमासाद्यधिकारनियोगाक्षेपेण। एवमनेकवेदाध्ययनमपि द्रष्टव्यम्। तत्रापि ह्येकेन वेदेन निर्वृत्ते विध्यर्थे किमित्यनेकवेदाध्ययनम्? फलभूम्ना तु युज्यते। फलं च पूर्ववत्, न तु वाक्यशेषाधीतं पयोदध्यादि। एवं स्थिते एकवेदाध्यायिनः स्वशाखानधीतानां मन्त्राणां कर्मोपयोगिनां कर्मानुष्ठानकाले सामर्थ्यात्तदाक्षिप्तमध्ययनमनुज्ञातं भवति, यद्यप्यधीतवेदस्याधिकारे "अधीत" इति।

अन्ये तु 'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयः' इति निष्कारण इत्येतस्याधिकारपदतां मन्यन्ते। निष्कारणः कारणं प्रयोजनम् अनुद्दिश्य नित्यकर्मवत्कर्तव्यम्। न ह्यस्याधिकारसमर्पकत्वमन्तरेण विषयद्वारेण क्रियाकारकतद्विशेषणत्वादिनाऽन्वयः संभवति। तस्मात्सत्यपि संस्कारविधित्वे गम्यमानाधिकारत्वं श्रूयमाणाधिकारत्वं वाऽविरुद्धम्।

अपरे तु संस्कारविधित्वादनधिकारतामेव ज्यायसीं मन्यन्ते। अनुष्ठानविशेषलाभार्थो ह्यधिकार उपास्यते। स चेह संस्कार्यविशेषदर्शनादेव सिद्धः। संस्कारविधयः प्रयोजनापेक्षाः। क्रियाफलमेवात्र विधिसाध्यम्। तच्च कर्मस्थं ग्रहणलक्षणं दृश्यत एवाविरुद्धम्।

अश्रुते विभागे स्मृत्यन्तराद्विभागावगतिः 'प्रतिवेदं ब्रह्मचर्यं द्वादशाब्दानि' इति। के पुनरत्र त्रयो वेदा अभिप्रेताः? ऋग्वेदो यजुर्वेदः सामवेद इति। अथ किं नाऽऽथर्वणो वेद इति? क एवमाह? किंत्वत्र यथाश्रुतसंस्कार्यत्वनिबर्हणायामर्थावबोधनिष्ठतया तस्य विधेरनुष्ठानलाभः। अवबोधो हि सकलकर्मानुष्ठानोपयोगीति। आथर्वणश्चाभिचाराद्युपदेशबहुलः। तस्मान्न ज्योतिष्टोमादिकर्माणि विधीयन्ते, नापि तेषां किंचि-

दङ्गम्। त्रय्यैव हौत्राध्वर्यवौद्गात्रादिसकलतदङ्गपरिसमाप्तिः। प्रधानोत्पत्तिविधयश्च त्रय्यामेव ज्योतिष्टोमादीनां सन्ति। ब्रह्मत्वमपि त्रय्यामेव विद्यते। त्रिशब्दश्च संख्यावचनः। न च संख्याशब्दाः कंचिद्धर्ममेकमनपेक्ष्य प्रवर्तन्ते। अतो येषामेवेह कार्योपदेशपरता त एव त्रिशब्देनाभिगदितुं शक्यन्ते। न चाऽऽथर्वणस्य तत्कार्यानुप्रवेशः। न तत्र प्रधानविधयो ज्योतिष्टोमादीनाम्, नाङ्गविधयः। श्येनादिष्वभिचारयज्ञेषु त एवर्त्विजः सैवान्याऽपीतिकर्तव्यता। विशेषोऽपि यः सोऽपि त्रय्यामेवोपदिष्टः। अत ऋग्यजुर्भ्यामृक्सामभ्यां चैकत्र कर्मणि समावेशाभावात्त्रिवेदीव्यपदेशानुपपत्तेर्नाऽऽथर्वणस्येह ग्रहणम्। स्वाध्यायशब्दवाच्यत्वात्त्वध्ययनविधेस्तद्विषयत्वमविरुद्धम्।

तदर्धिकम्। षट्त्रिंशत्संख्या प्रत्यवमृश्यते। ततोऽर्धमष्टादशवर्षाणि। अत्रापि विभागकल्पना षड्वर्षाणि। अत्रापि पादिकम्। पादश्चतुर्भागभागिनी सैव संख्या। नववर्षाणि तेषां चतुर्थो भागः। प्रतिवेदं त्रीणि। कथं पुनस्त्रिभिर्वर्षैर्वेदः शक्यो ग्रहीतुम्?। भवति कश्चिन्मेधावितमः। अपर आह — न ग्रहणस्वरूपप्रयुक्ता धर्माः, किं तर्हि तद्विषयेण विधिना प्रयुज्यन्ते। तत्रानिवृ(?र्वृ)त्ते ग्रहणे यदि कानिचिदहानि नियमानुपालनमध्ययनकाले क्रियते तावत्संपाद्यत एव शास्त्रार्थः। भवेत्स्वाध्यायविध्यर्थं तावतैवाङ्गकलापानुष्ठानम्। असमाप्तग्रहणस्य तद्व्रतनिवृत्तौ व्रतस्नातकव्यपदेशः। अतः कालविशेषविधानं युक्तम्। त्रिभिर्वर्षैः विना न व्रतस्नातको भवति। तद्यद्यपि स्नानं वेदसमाप्ताविति केचित्स्मरन्ति, तथापि तदर्थव्रतसमाप्तावपि प्रयोग उपचाराद्युक्त एव।

तदयुक्तम्। सत्यपि विधिप्रयुक्ते यावदध्ययनभावितैव व्रतानां युक्ता। अध्ययनसंयोगेन हि तानि चोद्यन्ते। यावदध्ययनं भवितुमर्हन्ति। वचनादेव हि त्रिसांवत्सरी व्रतचर्या प्रागपि ग्रहणाद्यद्येतत्पृथग्वाक्यम्। अथ तु 'ग्रहणान्तिकमेव' इति σएकं वाक्यम्, ततो नास्त्यगृहीते वेदे व्रतनिवृत्तिः। एवकारेणैवमेव पक्षमनुमन्यते। यदि नास्त्यगृहीते वेदे तन्निवृत्तिः, कथं तर्हि 'व्रतस्नातकः' 'वेदस्नातकः' इति भेदेन व्यपदेशः? 8चतुर्थे वक्ष्यामः। षट्त्रिंशदब्दाः समाहृताः षट्त्रिंशदब्दम्, तत्र भवं षाट्त्रिंशदाब्दिकम्। एवं त्रैवेदिकम्। तदर्धपरिमाणं तदर्धिकम्। एवं पादिकम्, ग्रहणान्तिकमिति। सर्वत्र 'अत इनिठनौ' (पासू. ५।२।१४५) इति मत्वर्थीयः। न तु यस्य यत्परिमाणं तत्तस्यास्तीति शक्यतेऽपदेष्टुम्।

*मेधा.

(२) उपकुर्वाणकब्रह्मचारिणो गार्हस्थ्याधिकारात् कियदवधिनि ब्रह्मचर्ये कृते गार्हस्थ्यमाश्रयणीयमित्यत आह — षट्त्रिंशदाब्दिकमिति। षट्त्रिंशद्वर्षसंभवं गुरुगृहे ऋग्यजुःसामाख्यवेदत्रयविषयं प्रतिशाखं द्वादशवर्षाणि व्रतं नियमसमूहश्चरितार्थम् (?चरितव्यम्)। तदर्धिकं चाष्टादश प्रतिशाखं षडिति, पादिकं वा नव प्रतिशाखं त्रीणीति, यावता वा कालेनोक्तावधेरूर्ध्वमधो वा वेदान् गृह्णीयात्तावत्कालं चरितव्यम्। नियमफलापेक्षो विकल्पः, 'नियमेनाधीतं वीर्यवत्तरं भवति' इति श्रुतेः। अत्र चाथर्ववेदस्य 'नेता एते अथर्वाङ्गिरसी' इत्यादिश्रुतेः

σ पूर्वोक्तैः प्रतिवेदं द्वादशाब्दादिकालविधायकवाक्यैरेकवाक्यतापन्नमित्यर्थः, पूर्वं पूर्वपक्ष्यभिमतपृथग्वाक्यत्वस्योक्तत्वात्। एवं च पूर्वोक्तानां द्वादशाब्दादिकालानां वेदग्रहणसमाप्त्यवच्छिन्नत्वलाभात् द्वादशाब्दादिषु त्रिष्वपि पक्षेषु वेदसमाप्तिरावश्यकीति व्रतकालात्प्राक् ग्रहणसमाप्तावपि तदुत्तरकालं व्रतानुवृत्तिर्भवतीति स्वाभिमतोऽर्थः सिध्यति। पृथग्वाक्यत्वे तु पूर्वोक्तद्वादशाब्दादिपक्षेभ्यो ग्रहणान्तिकत्वपक्षस्य पृथक्त्वात् पूर्वोक्तद्वादशाब्दादिपक्षाश्रयणे वेदग्रहणस्यासमाप्तत्वेऽपि वर्षत्रयाद्यवधौ पूर्णे व्रतसमाप्तिर्भवति, वेदग्रहणं तु तदुत्तरकालमनुवर्तते इति पूर्वपक्ष्यभिमतार्थ आपद्यते। अत एव 'चतुर्थमायुषो भागम्' इति चतुर्थप्रथमश्लोकव्याख्याने "ग्रहणान्तिकम्' इत्यवध्यन्तरस्य ब्रह्मचर्ये विहितत्वात्" इत्यत्र ग्रहणान्तिकत्वावच्छिन्नद्वादशाब्दादिरूपमेवावध्यन्तरं ग्राह्यम्, न केवलं ग्रहणान्तिकत्वरूपम्। तेन न व्याख्यानयोर्विरोधः।

8 इदमाश्वासनं चतुर्थाध्यायव्याख्यानावसरे विस्मृतमिति भाति। 'वेदविद्याव्रतस्नातान्' (मस्मृ. ४।३१) इत्यत्र अत्रत्यव्याख्यानादधिकं न किंचिदप्युक्तम्, येन वेदस्नातकव्रतस्नातकयोर्वैलक्षण्यं स्पष्टं प्रतीयेत। उभयत्रत्यव्याख्यानानुरोधेनैवमभिप्राय उन्नीयते — वेदग्रहणसमाप्त्यव्यवहितोत्तरकाले कृतस्नानः वेदस्नातकः, वेदग्रहणसमाप्तिव्यवहितोत्तरकाले कृतस्नानः व्रतस्नातक इत्युभयोर्वैलक्षण्यम्। वेदस्नातकव्रतस्नातकयोरुभयोरपि वेदग्रहणसमाप्तिव्रतसमाप्त्युत्तरकालीनस्नानकत्वे समानेऽपि अव्यहितव्यवहितेतिस्नानविशेषणाभ्यां वैलक्षण्यसिद्धिः। मेधातिथिनाऽन्यव्याख्यातृसंमतवेदव्रतोभयस्नातकरूपभेदस्यानङ्गीकारादेव न तत्रातिव्याप्तिः। तेन वेदस्नातको विद्यास्नातको व्रतस्नातकश्चेति त्रयो भेदाः पूर्वोक्तचतुर्थाध्यायश्लोके वर्णिताः।

* अप., स्मृच., चका., मपा., मुक्ता., भाच. मेधागतम्।

'श्रुतीरथर्वाङ्गिरसीः' इत्यादिस्मृतेश्च वृद्धव्यवहारे चेतरवेदवन्निरुपपदवेदशब्दप्रयोगात् 'अङ्गानि वेदाश्चत्वारः' इति धर्मः तेष्वपि (?धर्मस्थानेष्वपि) चतुर्षु (वेदशब्द) – व्यवहारात् सत्यपि शान्त्यादिप्रयोजनत्वेन प्रायेण दृष्टार्थत्वात् 'ऋग्वेदेनैव हौत्रमकुर्वत यजुर्वेदेनाऽऽध्वर्यवं सामवेदेनोद्गीथम्। यदेव त्रय्यै विद्यायै संश्लेषं (?शुक्रं) तेन ब्रह्मत्वम्' (शब्रा. ११।५।८।४) इति श्रुतेस्त्रय्यैव क्रियापरिसमाप्तेः (अ)ग्रहणम्।

गोरा.

(३) ग्रहणान्तिकमेव वेति एकैकस्य त्रिभ्य ऊर्ध्वमनियमः, न प्रागित्यर्थो द्रष्टव्यः।

×उ. १।२।१६

(४) क्रमप्राप्तं गार्हस्थ्याश्रमधर्मं प्रक्रमते – षट्त्रिंशदाब्दिकमिति। षट्त्रिंशद्वर्षनिर्वर्त्यं वेदत्रयाध्ययनार्थं व्रतं ब्रह्मचर्याश्रमनियतधर्मरूपं चर्यं चरणीयम्। 'नियमेनाधीतं वीर्यवत्तरं भवति' इति श्रुतेः एकदेशस्यापि व्रतेनाध्ययने प्राशस्त्यात् अशक्तस्य तदर्धिकम् अष्टादशाब्दिकं वा नवाब्दिकमिति त्रिःप्रकारं व्रतं स्नानम्(?व्रतस्नानं कर्तुमिच्छतः)। केवलविद्यास्नानं कर्तुमिच्छतो ग्रहणान्तिकम्। अर्थादुभयनिष्पत्तौ विद्याव्रतस्नानसिद्धिरिति स्फुटत्वात् नोक्तम्। आथर्वणिकस्य तु 8त्रयीनिष्कर्षत्वात् एतद्व्रतेनैव व्रतसिद्धिरिति मन्तव्यम्।

मवि.

(५) पूर्वत्र 'आ समाप्तेः शरीरस्य' (मस्मृ. २।२४४) इत्यनेन नैष्ठिकब्रह्मचर्यमुक्तम्, न तत्रावध्यपेक्षा। 'आ समावर्तनात्' (मस्मृ. २।१०८) इत्यनेन चोपकुर्वाणकस्य सावधि ब्रह्मचर्यमुक्तम्। अतस्तस्यैव गार्हस्थ्याधिकारः। तत्र कियदवधिविधौ ब्रह्मचर्ये तस्य गार्हस्थ्यमित्यपेक्षायामाह – षट्त्रिंशदाब्दिकमिति। त्रयो वेदाः ऋग्यजुःसामाख्याः, तेषां समाहारस्त्रिवेदी, तद्विषयं व्रतं स्वगृह्योक्तनियमसमूहरूपं षट्त्रिंशद्वर्षं यावद्गुरुकुले चरितव्यम्। षट्त्रिंशदाब्दिकमिति षट्त्रिंशदब्दशब्दात् 'कालाट्ठञ्' (पासू. ४।३।११) अस्मिंश्च पक्षे 'समं स्यादश्रुतत्वात्' (जैसू. १०।३।५३) इति न्यायेन प्रतिवेदशाखं द्वादशवर्षाणि व्रताचरणम्। तदर्धिकमष्टादश वर्षाणि। तत्र प्रतिवेदशाखं षट्। पादिकं नव वर्षाणि। तत्र प्रतिवेदशाखं त्रीणि। यावता कालेनोक्तावधेरूर्ध्वमधो वा वेदान्गृह्णाति तावत्कालं वा व्रताचरणम्। विषमशिष्टत्वेऽपि पक्षाणाम् 'एका देया, तिस्रो देयाः, षड्देयाः' इतिवन्नियमफले न्यूना-(धिकत्वा)पेक्षो विकल्पः। तथा च श्रुतिः – 'नियमेनाधीतं वीर्यवत्तरं भवति' इति। ग्रहणान्तिकपक्षसंदर्शनात्पूर्वोक्तपक्षत्रये ग्रहणादूर्ध्वमपि व्रतानुष्ठानमवगम्यते। अथर्ववेदस्यर्ग्वेदांशत्वेऽपि 'ऋग्वेदं यजुर्वेदं सामवेदमथर्वाणं चतुर्थम्' (छाउ. ७।१।२) इति छान्दोग्योपनिषदि चतुर्थवेदत्वेन कीर्तनात् 'अङ्गानि वेदाश्चत्वारः' इति विष्णुपुराणादिवाक्येषु च पृथङ्निर्देशाच्चतुर्थवेदत्वेऽपि प्रायेणाभिचाराद्यर्थत्वाद्यज्ञविद्याया-मनुपयोगाच्चानिर्देशः। तथाहि 'ऋग्वेदेनैव हौत्रं कु(?त्रमकु)र्वन्यजुर्वेदेनाऽऽध्वर्यवं सामवेदेनौद्गात्रं यदेव त्रय्यै विद्यायै सूक्तं (?शुक्रं) तेन ब्रह्मत्वम्' इति श्रुतेस्त्रयीसंपाद्यत्वं यज्ञानां ज्ञायते। अयं च मानवस्त्रैवेदिकव्रतचर्याविधिर्नाथर्ववेदव्रतचर्यां निषेधयति, तत्परत्वे वाक्यभेदप्रसङ्गाच्छ्रुत्यन्तरे वेदमात्रे व्रतश्रवणाच्च। यदाह योगियाज्ञवल्क्यः – 'प्रतिवेदं ब्रह्मचर्यं द्वादशाब्दानि पञ्च वा' (यास्मृ. १।३६)।

ममु.

(६) ब्रह्मचर्येणैव निष्ठां समाप्तिं मरणं गतो नैष्ठिक इति समाख्ययैव गार्हस्थ्यनिवृत्तिः सिद्धा। उपकुर्वाणस्य गार्हस्थ्यं तद्ब्रह्मचर्यस्य कालविकल्पं चाऽऽह – षट्त्रिंशदिति द्वाभ्याम्। वेदार्थानुष्ठाने स एव मुख्याधिकारीति। मानं पूर्वं वेदादीत्युक्तम्, अधुना मेयं वक्तव्यमिति मानमेययोः संगतिः। त्रैवेदिकं त्रयाणां वेदानां समाहारस्त्रिवेदी, तद्ग्रहणप्रयोजनं त्रैवेदिकं व्रतं विशेष्यम्। षट्त्रिंशत्संवत्सरैरदृष्टार्थैर्वेदत्रयस्य 'सर्वशाखाप्रत्ययमेकं कर्म' इति न्यायात् शाखात्रयस्याध्ययनमवश्यं भावीति, मेधागतवैजात्यात्तदर्धिकमष्टादशवर्षसाध्यं पादिकं नववर्षसाध्यं 'समं स्यादश्रुतत्वात्' इत्यादिन्यायेन वा प्रतिशाखं स्वतन्त्रमदृष्टार्थं गृहीतेऽपि वेदे व्रतमिति विशेषणम्। तथा च द्वादश षट् त्रीणि वर्षाणि वेदव्रताचरणम्। अत एवोक्तम्-

× शेषं मेधागतम्।

8 अथर्वणः इत्यादिः।

'तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः' (मस्मृ. २।१६५) इति। दुर्मेधसो नियमव्यावृत्तिमाह — ग्रहणान्तिकमेव वेति। एतद्व्रतजातं निर्विघ्नताध्ययनसमाप्त्यर्थमिति भट्टपादाः।

मच.

(७) वेदत्रयाध्ययनार्थं व्रतं ब्रह्मचर्याश्रमधर्मरूपं चर्यं चरणीयम्। तथा च प्रतिवेदं द्वादशाब्दानामिति फलितम्। यस्तु चतुरो वेदानध्येतुं शक्तः तस्याष्टचत्वारिंशदिति बोध्यम्। यथाऽऽपस्तम्बः — 'उपेतस्याऽऽचार्यकुले ब्रह्मचारिवासोऽष्टाचत्वारिंशद्वत्सरान्' (आध. १।२।११-१२) इति। एवं च 'अथर्वणस्त्रयीनिष्कर्षत्वादेतद्व्रतेनैव व्रतसिद्धिः' इति नारायणोक्तौ मूलं मृग्यम्। तदर्धिकमित्यादि। प्रतिवेदं षाड्वा(?व)र्षिकं त्रैवा(?व)र्षिकं वेत्यर्थः। तदेतत्संगृहितं दीपिकायाम् — 'प्रतिवेदं ब्रह्मचर्यं वर्षाणि द्वादशाथवा षट्त्रीणि ग्रहणान्तं वा' इति।

✡चमव्या. ४६-४७

(८) वेदत्रयाध्ययनपक्षे षट्त्रिंशदाब्दिकं ब्रह्मचर्यं कार्यम्। वेदद्वयाध्ययनपक्षे अर्धिकम्। अष्टाचत्वारिंशदाब्दिकस्यार्धं चतुर्विंशतिवार्षिकमिति यावत्, पूर्वोक्तानेकवाक्यैकवाक्यत्वात्। एवं पादिकमपि व्याख्येयम्। षट्त्रिंशदाब्दिकस्यार्धपादविवक्षायां अष्टादशाब्दं नवाब्दं च ब्रह्मचर्यमापद्येत। न च तत्कयाऽपि स्मृत्या संवदति। एतेनार्धिकपदे प्रतिवेदं षट् षट् वर्षाणि, पादिकपदे प्रतिवेदं त्रीणि त्रीणि वर्षाणि ब्रह्मचर्यं चरेदिति चन्द्रिकाचमत्कृतमपि परास्तम्।

संप्र. ५५७

(९) कृत्स्नवेदसंग्रहणार्थं त्रिशब्दः 'पञ्च पाण्डवाः' इत्यत्र पञ्चशब्दवत्। 8मन्त्रत्रैविध्यनिबन्धनं हि वेदानां त्रित्वम्। तेन चतुर्थोऽपि वेदमन्त्रो मन्त्रात्मा (?वेदः ऋङ्मन्त्रात्मा) त्रिशब्देन संगृह्यते। व्रतं चर्यं चरितव्यम्।

*नन्द.

✡ संकौ. चमव्यागतम्।

8 ऋचो यजूंषि सामानीति मन्त्रत्रैविध्यम्। तत्र नियतपादाक्षरत्वे समानेऽपि प्रगीयमानत्वाप्रगीयमानत्वाभ्याम् ऋक्साममन्त्रयोर्भेदः। किंचात्र ऋक्त्वादीनां न वेदविभाजकत्वम्, ब्राह्मणेषु तदभावात् व्रतं विनैव ब्राह्मणाध्ययनापत्तेः। किंतु ऋगादिमन्त्राणां वेदविभाजकत्वम्, मन्त्रब्राह्मणोभयात्मकस्य वेदस्य एकदेशभूतैरपि मन्त्रैर्मन्त्रवत्त्वोपपत्तेः।

* शेषं मेधागतम्।

**'वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम्।**
**अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेत्॥**

(१) त्रैवेदिकमध्ययनं उक्तम्। एकद्विवेदाध्ययनमप्राप्तं विकल्प्यते। वेदशब्दः शाखावचनो व्याख्यातः। तिस्रः शाखा अधीयीत, द्वे एकां वा एकैकस्माद्वेदात् (एकामिति), न तु एकस्मादेव। त्रयी त्रिविद्या इति पठ्यते। अधीत्य गृहीत्वा वेदमुक्तया व्रतचर्यया गृहस्थाश्रममावसेत्। गृहस्थाश्रमस्य स्वरूपं वक्ष्यति — 'उद्वहेत द्विजो भार्याम्' (मस्मृ. ३।४) इत्यादि। आवसेत् अनुतिष्ठेत्। अनेकार्था धातवः। आङ् मर्यादायां वर्तते। कृतदारपरिग्रहो रूढ्या गृहस्थ उच्यते। गृहशब्दो दारवचनः, तत्र तिष्ठति। तस्य यो विहितः पदार्थसमूहो विधिनिषेधात्मकः स आश्रमशब्देनोच्यते। यथा उपनीतस्य ब्रह्मचर्याश्रमः आ समावर्तनात्, कृतविवाहस्य गार्हस्थ्यमिति। अविप्लुतम् अखण्डितं ब्रह्मचर्यं स्त्रीसंप्रयोगनिवृत्तिः यस्य स एवमुच्यते। वाक्यभेदश्चात्र द्रष्टव्यः आख्यातव्यवहारेण (?ताध्याहारेण), अविप्लुतब्रह्मचर्यो भवेत्, गृहस्थाश्रमं च प्रतिपद्येत। एकवाक्यतायां कदाचन विप्लवे गार्हस्थ्याधिकार एव हीयेत। अद्य(?थ) पुनः पुरुषार्थतया विधानेन तदतिक्रमे प्रायश्चित्तेन युज्यते, न तु अधिकारी न भवति। अधीत्य आवसेदिति च पौर्वापर्यमात्रं विवक्षितम्, न अध्ययनसमनन्तरभाविता विवाहस्य। ल्यप्कार्यात् पौर्वापर्यवि(?र्यभि)धानात् आनन्तर्यं न शब्दार्थः। अतश्च

(१) **मस्मृ.** ३।२; **विश्व.** १।३६ पृ. ५१ पू.; **मिता.** १।३६ निर्देशमात्रम्, (—); **मभा.** २।५४ पू. : ३।१; **गृक.** १ मावसेत् (माविशेत्); उ. १।३०।१; **चदा.** ६८०; **चका.** ७८५ गृकवत्, क्रमेण बृहस्पतिः; **गृर.** ४ गृकवत्; **मपा.** १३१ मावसेत् (माश्रयेत्); **प्रपा.** २४३ पू., याज्ञवल्क्यः; **दीक.** १।३६; **मर.** ५ गृकवत्; **बौवि.** १।३।४ गृकवत् (—); **शूक.** २८ पू., स्मृतिः; **संम.** ३३ पू., (—); **विपा.** २।५०३ पू., योगीश्वरः; **वीमि.** १।३६; **संप्र.** ५०५ पू. : ५५६ पू., (—); **बाल.** १।३६ उत्त.; **पुम.** ४४५ गृकवत्, क्रमेण बृहस्पतिः; **संर.** ३०३ पू., (—) : ३६२ उत्त., (—) : ३६८ यथाक्रमम् (समाहितः) मावसेत् (माविशेत्); **कृभ.** ९८५ पू.

स्वाध्यायाध्ययनविवाहयोरन्तराले व्याकरणादिशास्त्र-श्रवणं वेदार्थज्ञानार्थं लभ्यते। विद्वानेव हि गार्हस्थ्येऽधिक्रियते, न यथा अध्ययनविधौ मूर्खः। यद्यपि बाल्यावस्थायां तिर्यक्समानधर्मा स्वमधिकारं प्रतिपत्तुम् असमर्थः, तथापि पित्रा आचार्येण वा अनुष्ठाप्यते। वस्तुतः तयोरेवाधिकारः। अपत्यानुशासने पितुरधिकारः अपत्योत्पत्तिविधेः तावता अभिनिर्वर्त्यत्वात्। अनुशासनं च विधिनिषेधाधिकारद्वयप्रतिपादनम्। तत्र यत् प्रतिपाद्यमानोऽपि नावबुध्यते, तदन्ध इव हस्तग्राहिकया कार्यते। यथा अग्निसंस्पर्शकूपादिपातात् गाढहस्तावष्टम्भादिना धार्यते, एवमदृष्टादपि मद्यपानादेः। यथा वा अनिच्छन् औषधपानादौ प्रवर्त्यते, एवं शास्त्रीयेष्वपि पदार्थेषु। यदा तु ईषद्व्युत्पन्नः, तदा एवं नियुज्येत — 'इदमिदं कर्तुमर्हसि' इति। एवं सति अधीतवेदो माणवकः पित्रा आचार्येणैव एवं प्रतिबोधयितव्यः — 'गृहीतवानसि वेदं त्वम्, इदानीं तदर्थजिज्ञासायाम् अधिक्रियसे, ततस्तदङ्गानि श्रोतुमर्हसि' इति। एतावता पितुः अपत्योत्पादनाधिकारनिवृ(?वृ)त्तिः। तदुक्तम् — 'कियता पुनरुत्पादितो भवति यावता स्वयमधिगतकृत्यो भवति' इति। अतः स्थितमेतत् — नाधीत्यैव विवाहः यावद्वेदार्थो नाधिगतः। एवं च पदयोजना कर्तव्या — अधीत्य अध्ययने निवृ(?वृ)त्तेऽपि अविप्लुतब्रह्मचर्यः स्यात्। प्राप्तायां च नि(?चानि)वृत्तौ पुनर्वचनं नियमान्तराणां मधुमांसवर्जनादीनां निवृत्तिपरम्। तेन यावदध्ययनं तावत्सर्वे नियमा अनुष्ठातव्याः। समाप्ते तु अध्ययने अर्थावबोधकाले स्त्रीनिवृत्तिरेव करणीया, स्त्रीसेवा न विधातव्या। ब्रह्मचर्यशब्दो यद्यपि ब्रह्मग्रहणार्थं यद्व्रतग्रहणं तत्र व्युत्पाद्यते, तथापि स्त्रीनिवृत्तिपर एवास्य तत्र प्रयोग इति दर्शयिष्यामः। यथाक्रमं य एव अध्येतॄणां पाठक्रमः प्रसिद्धस्तेनैव, प्रथमं चतुःषष्टिः ततो ब्राह्मणं पितृपितामहाद्यभिजन — प्रबन्धोपक्रमं भवति। न हि ईदृशे अर्थे वक्तारो न कुलेन न शीलेन न क्रमेण, इति। एतेन च एतत्प्रतिपादितं भवति — या एव पित्रादिभिः शाखा अधीता सा न त्याज्या इति।

मेधा.

(२) 'वेदः कृत्स्नोऽधिगन्तव्यः' इति एकशाखाध्ययनेनैव स्वाध्यायनिर्वृत्तौ पुण्यातिशयापेक्षया — वेदानिति। शाखात्रयं द्वयं चैकां वा स्वशाखापूर्वक्रमेण मन्त्रब्राह्मणपौर्वापर्यस्थितिक्रमेण च अधीत्य अखण्डितब्रह्मचर्यः असंजातस्त्रीसंप्रयोगः गार्हस्थ्यं प्रतिपद्यते।

गोरा.

(३) विद्यास्नानपक्षे शक्त्यपेक्षो विकल्पः। यथाक्रमम्, वेदत्रयाध्ययनपक्षे ऋग्वेदादिक्रमेणैव, 8(द्वि)वेदाध्ययने तु यच्छाखीयसंस्कारैः संस्कृतः तस्या एव आदौ अध्ययनमित्यर्थः।

मवि.

(४) अविप्लुतब्रह्मचर्य इति। पूर्वविहितस्त्रीसंयोगमधुमांसभक्षणवर्जनरूपब्रह्मचर्यानुवादोऽयं प्रकृष्टाध्ययनाङ्गत्वख्यापनार्थः। पुरुषशक्त्यपेक्षश्चायम् एकद्वित्रिशाखाध्ययनविकल्पः। यद्यपि व्रतानि वेदाध्ययनं च नित्यवदुपदिशता मनुना उभयस्नातक एव श्रेष्ठत्वादभिहितः, तथापि स्मृत्यन्तरात् अन्यस्नातकोऽपि बोद्धव्यः।

*ममु.

(५) शाखामात्राध्ययनमवश्यंभावीति त्रिंशदधिकैकादशशतशाखानां वेदचतुष्टयपरिमाणत्वात् पुरुषायुषमध्येऽपि अध्येतुमशक्यत्वात् वेदशब्दः शाखापरः, 'सर्वशाखाप्रत्ययमेकं कर्म' इति न्यायात् 'सर्वशाखाविधित्वं च सिद्धमध्येतृभेदतः' इति भट्टस्वरसात्। .....वेदत्रयसाध्यत्वात् सर्वकर्मणाम् अतो न प्रवेशः अथर्ववेदस्य। अत एव वेदानधीत्येति यथाक्रमं स्वशाखानुक्रमेणाधीत्य।

मच.

गार्हस्थ्यप्रशंसा

**[1]यथा वायुं समाश्रित्य वर्तन्ते सर्वजन्तवः।**
**तथा गृहस्थमाश्रित्य वर्तन्ते सर्व आश्रमाः॥**

8अत्र श्रीमण्डलीकपुस्तके 'वेदाध्ययने' इति निर्विशेषणः अशुद्धः पाठो मुद्रितः। तत्र 'एकवेदाध्ययने' इति स्वमत्या शोधितः पाठो भारतीयविद्याभवनपुस्तकसंपादकैर्मुद्रापितः। सेयम् 'एक' इतिवेदविशेषणकल्पना न मनोहरा, निर्मूलत्वात्। न हि एकवेदानेकशाखाध्ययने प्रमाणमुपलभ्यते, न वा व्याख्यानान्तरसंवादः। प्रत्युत मेधातिथिना एकवेदानेकशाखाध्ययनस्य प्रत्याख्यानात्तद्विरोध एव। किंच, वेदद्वयाध्ययने क्रमानुक्त्या न्यूनत्वापत्तिः। 'द्वि' इतिवेदविशेषणकल्पनायां तु न कश्चिद्दोषः।

* शेषं मेधावत् गोरावत् च।

(१) **मस्मृ.** ३।७७; **मेधा.** वर्तन्ते सर्वजन्तवः (सर्वे जीवन्ति जन्तवः) सर्व आश्रमाः (इतराश्रमाः); **गोरा.** मेधावत्; **भाच.** सर्व आश्रमाः (इतराश्रमाः).

(१) अपरेण प्रकारेण महायज्ञानामवश्यकर्तव्यतां दर्शयति – यथेति। वायुः प्राणः, तमाश्रित्य सर्वे जीवन्ति। न ह्यप्राणस्य जीवितमस्ति। प्राणधारणमेव जीवनम्। जन्तुशब्दः प्राणिमात्रवचनः। सर्वग्रहणं देवर्षीणामप्यतिशययुक्तानां वाय्वायत्तमेव जीवनम्। एवं गृहस्थः प्राणतुल्यः सर्वाश्रमिणाम्। अतः सर्वोपजीवनीयेन भवितव्यमिति विध्यर्थः। इतरग्रहणाद्यद्यपि गृहस्थादन्ये आश्रमिणः प्रतीयन्ते, तथापि न गृहस्थप्रतिषेधार्थमेतत्। स्नातकस्य हि विशेषेणाऽतिथ्यादि दानं विहितम्। तस्मादितरग्रहणं गृहस्थाश्रमतुल्यतार्थम्। न च श्रूयते नाऽऽत्मनाऽऽत्मनि वर्तन्ते शरीरकुटुम्बस्थितिं प्राप्नुवन्ति। इतरे च ते आश्रमाः इतराश्रमाः इति समासः। +मेधा.

(२) यथा प्राणवाय्ववलम्बनेन सर्वप्राणिनो जीवन्ति एवं गृहस्थाश्रमम् आश्रित्य अवलम्ब्य आश्रमान्तराणि ध्रियन्ते। ✡गोरा.

(३) वायुं प्राणम् अन्नादिपाकविहरणहेतुम्।
मवि.

(४) 'यथा वै क्षुधिता बाला मातरं पर्युपासते। एवं सर्वाणि भूतानि अग्निहोत्रमुपासते॥' इति श्रुत्या अत्राग्निहोत्रोपलक्षितं गृहस्थाश्रमं प्राकरणिकत्वात्तौति–यथेति। वायुं प्राणम्। तद्दत्तभिक्षोपजीवित्वात् ब्रह्मचारिसंन्यासिनाम्, वानप्रस्थस्याविरक्तस्य पूर्वं गृहस्थविद्याद्युपयोगित्वात्, विरक्तस्य तु 'गृहमेधिषु च' (मस्मृ. ६।२७) इत्यादिवक्ष्यमाणरीत्या गृहस्थोपजीवित्वाच्च।
मच.

**[1]यथा नदीनदाः सर्वे समुद्रे यान्ति संस्थितिम्।**
**एवमाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम्॥**
**[2]यस्मात्त्रयोऽप्याश्रमिणो ज्ञानेनान्नेन चान्वहम्।**
**गृहस्थेनैव धार्यन्ते तस्माज्ज्येष्ठाश्रमो गृही॥**

(१) यस्मात्त्रयोऽप्याश्रमिणो ज्ञानेन वेदार्थव्याख्यानजन्येन अन्नेन च धार्यन्ते उपक्रियन्ते गृहस्थेन तस्माज्ज्येष्ठः श्रेष्ठः आश्रमः गृहम्। गृहीति पाठे बहुव्रीहिः, गृहमिति पाठे विशेषणसमासः ज्येष्ठाश्रम इति। अत्रापि गृहस्थैरेवेत्यौचित्यानुवादः। न वानप्रस्थादीनामध्यापनादिप्रतिषेधः। वानप्रस्थस्य तावद्विहितम् 8एतत् 'एतानेव महायज्ञान्निर्वपेत्' (मस्मृ. ६।५) इति। प्रव्रजितस्य यद्यपि 'समो भूतेषु, हिंसानुग्रहयोरनारम्भी' (गौध. ३।२४-२५) इत्यनुग्रहः प्रतिषिद्धस्तथापि वेदार्थव्याख्यानं भिक्षुशास्त्रे विहितम्। ज्ञानवैराग्यभावनाभ्यासातिशयविधानाच्च तयोर्नातिप्रयत्नो वेदार्थव्याख्याने। ब्रह्मचारिणः स्वार्थलोपान्नाध्यापकत्वम्, भैक्षवृत्त्युपदेशाच्च कुतोऽन्नदानम्? अतो गृहस्थानामेव प्रायेण तत्संभवादेवमुक्तम् – गृहस्थैरेव।
मेधा.

(२) यस्मात् गृहस्थव्यतिरिक्तास्त्रयोऽप्याश्रमिणो वेदार्थोपदेशान्नदानाभ्यां गृहस्थैरेवोपक्रियन्ते तस्मात् श्रेष्ठाश्रमो गृहस्थः। +गृहा पत्नी, मेधः यज्ञः, गृहाधीनः मेधः यस्य गृहमेधी। गृहायां तिष्ठन्तीति गृहस्थाः। गृहा अस्यास्तीति गृही। ✡गोरा.

(३) एतदेव व्युत्पादयति – यस्मादिति। गृहस्थस्यैवाध्यापनाधिकारात् त्रयोऽपि ज्ञानेन, वनस्थस्यापि भिक्षाभ्रमणोपदेशात् त्रयोऽप्यन्नेन च धार्यन्त इत्यर्थः। ज्येष्ठो गुरुतया पोषकतया च।
मवि.

(४) ज्येष्ठः आश्रमः यस्य स तथेति बहुव्रीहिः।
σ ममु.

(५) तमेव पुनः श्रेष्ठत्वेन स्तौति – यस्मादिति। ज्ञानेन वेदविद्योपादानेन। त्रयोऽपि ब्रह्मचारिवानप्रस्थसंन्यासिनः। श्रेष्ठ इति ज्येष्ठ इति वाऽतिशयोक्तिः

---

\+ नन्द., भाच. मेधागतम्।

✡ ममु. गोरावत्।

(१) **मस्मृ.** ३।७७ इत्यस्यानन्तरं प्रक्षिप्तोऽयं श्लोकः.

(२) **मस्मृ.** ३।७८; **मेधा.** स्थेनैव (स्थैरेव) गृही (गृहम्) 'गृही' इत्यपि पाठः : ६।८९ (ज्ञानेनान्नेन च) एतावदेव; **गोरा.** स्थेनैव (स्थैरेव); **निक.** २०९ चतुर्थचरणे (तस्माच्छ्रेष्ठो गृहाश्रमी) शेषं गोरावत्; **ममु.** गोरावत्; **आप्र.** ४५७ ष्ठाश्रमो गृही (ष्ठो गृहाश्रमी); **भाच.** गोरावत्.

8 अन्नदानेनाऽऽश्रम्यन्तरधारणमित्यर्थः। अत एव पञ्चमहायज्ञान्तर्गतम् अतिथिभोजनरूपमनुष्ययज्ञमभिप्रेत्य 'एतानेव' इति वचनं प्रमाणीकृतम्।

\+ मूलेऽसतो गृहमेधशब्दस्येदं व्याख्यानम्। गृहशब्दः स्त्रीलिङ्गैकवचनः वाचस्पत्यशब्दकल्पद्रुमादिकोशेषु नोपलभ्यते।

✡ भाच. गोरागतम्।

σ शेषं गोरागतम्।

सर्वान्नाधिकारार्था। अत्रैषां परस्परोपकारकता निरस्ता। मच.

(६) ज्ञानेन ज्ञानप्रदानेन, अध्यापनेनेति यावत्। अनेन ज्ञाप्यते गृहस्थादेवानापद्यध्येतव्यमिति। नन्द.

**[1]स संधार्यः प्रयत्नेन स्वर्गमक्षयमिच्छता।**
**सुखं चेहेच्छता नित्यं योऽधार्यो दुर्बलेन्द्रियैः॥**

(१) सः गृहाश्रमः प्रयत्नेन संधार्यः अनुष्ठेयः अक्षयस्वर्गकामेनेह च सुखमिच्छता। अत्यन्तं यस्य सुखस्यान्तो नास्ति। अत्यन्तशब्दो नित्यतां गमयति। य आश्रमः अधार्यः अशक्यो धारयितुं दुर्बलेन्द्रियैः। एतदुक्तं भवति – यतः स्त्रीसंभोगसुसंस्कृतभोजनादि गृहस्थस्यावश्यंभावि, ततश्चेन्द्रियाणां विषयासक्तौ दोषः। अत उच्यते – प्रयत्नेन आश्रमान्तरेभ्यो धारयितव्यः। अत्रापि महानिन्द्रियसंयमः। अनृतौ न गन्तव्यम्, परदारा न गन्तव्याः, शेषान्नं भोक्तव्यम्। विषयसंनिधाने यो नियमः स दुष्करः। स्वर्गमक्षयमिति। नानेन सर्वेषां गृहस्थकर्मणां स्वर्गफलतोच्यते, केषांचिन्नित्यत्वात्केषांचित्फलान्तरश्रवणात्। येऽप्यश्रुतफलाः स्वर्गफलतया कल्प्यन्ते तेषामपि केवलानामनुवादे न कश्चिद्विशेषणे हेतुः। तस्माद्विहिताभिप्रेतफलानुवादोऽयम्। न चाधिकारान्तरमिदम्। तेषामेव यावज्जीविकं स्वर्गकामस्येति च शक्यं वक्तुम्। सुखं चेहेच्छतेत्यविधेयेन तुल्यत्वावगमात्। न हीह सुखकामेनेत्येतच्छक्यं कर्मफलतया ज्ञातुम्, विशेषस्यानिर्देशात्। सर्वा हि प्रीतिर्ग्रामपुत्रादिलाभैर्विशेषैरवच्छिन्ना प्रतीयते। अनवच्छेदेन प्रीतिमात्रं चेत्स्वर्ग एव। न च तस्यैहिकत्वम्। तस्माद्दृष्टसुखाप्तिकामानुवादोऽयम्। अनिकेता ह्यन्य आश्रमिणो वृक्षमूलनिकेतनाः, परगृहवासिनो दुःखमासते। तस्मादयं तावदनुवादः, तत्तुल्यतयाऽयमप्यनुवाद एव। मेधा.

(२) यत एवमतः – स संधार्यो गृहस्थेनेति। सः गृहस्थाश्रमः स्वर्गसंबन्धम् अनन्तम् इहलोके सुरतसंभोगस्वाद्वन्नादिसुखम् अनन्तमिच्छता प्रयत्नेन अनुष्ठेयः। असंयतेन्द्रियैर्धारयितुं न शक्यः। इति गृहस्थाश्रमफलकथनम्। σगोरा.

(३) दुर्बलेन्द्रियैः असंयतेन्द्रियैः, असंयतेन्द्रियाणां स्वाधीनविषयलाभे सति नियतधर्मानुष्ठानासंभवात्। तस्माच्छ्रेष्ठो गृहाश्रमी। +निक. २०९-२१०

(४) अक्षयं चिरभोग्यम्। अधार्यः धारयितुमशक्यः। मवि.

(५) अत एव गार्हस्थ्याश्रमे यत्न आस्थेय इत्याह – स इति। सः गार्हस्थ्यधर्मः संधार्यः अनुष्ठेयः। अक्षय्यमिच्छता, 'यत्कर्तव्यं तदनया सह' इत्युक्तेः। इह च सुखं स्त्र्यधीनमित्यनुभवसिद्धम्। अधार्य इति च्छेदः। दुर्बलेन्द्रियैः असंयतेन्द्रियैः। मच.

(६) यत एवं तस्माद्गृहस्थाश्रम एव धार्यः, नाऽऽश्रमान्तराणि पञ्चयज्ञरहितानीत्यभिप्रायेणाऽऽह – स इति। प्रयत्नेन आपद्यपि। नन्द.

(७) अधार्यः धारयितुं न योग्य इत्यर्थः। •भाच.

आयुर्भागभेदेनाऽऽद्याश्रमयोर्व्यवस्था

**⇧[1]चतुर्थमायुषो भागमुषित्वाऽऽद्यं गुरौ द्विजः।**
**द्वितीयमायुषो भागं कृतदारो गृहे वसेत्॥**

(१) अनियतपरिमाणत्वादायुषश्चतुर्थभागव्यवस्थाविधानमाश्रमिणामनुपपन्नम्, अतः श्लोकोऽयं विहिताश्रमकालानुवादार्थः। यद्यपि च 'शतायुर्वै पुरुषः' (ऐब्रा. ७।७) इत्येतदपेक्षया कथंचिदुपपद्येतापि, तथापि स्वप्रकरणे 'ग्रहणान्तिकम्' (मस्मृ. ३।१) इति अवध्यन्तरस्य ब्रह्मचर्ये विहितत्वात्, 'गृहस्थस्तु यदा पश्येत्'

---

(१) **मस्मृ.** ३।७९; **मेधा.** ता नित्यं (ताऽत्यन्तं); **निक.** २०९ मेधावत्; **मच.** मक्षय (मक्षय्य).

σ मगु. गोरागतम्।
+ शेषं मेधागतम्।
• शेषं गोरागतम्।
⇧ अस्य मभाव्याख्यानमस्मिन्नेव प्रकरणे गौतमस्य 'तस्याऽऽश्रमविकल्पमेके ब्रुवते' (गौध. ३।१) इति वचने (वका. पृ. १९७६) द्रष्टव्यम्।

(१) **मस्मृ.** ४।१; **मभा.** ३।१ **प्रथमचरणमात्रम्; गृक.** ४३५ कृतदारो (कृतोद्वाहो); **स्मृच.** १।१७४; **चका.** ७८३-७८४ त्वाऽऽद्यं गुरौ द्विजः (त्वा स्वगुरोर्द्विजः) **गृहे वसेत् (वसेद्गृहे); गप.** ६।४५८ उत्त., (–); **संम.** ४३ गमुषित्वा (गं वसित्वा) **रौ द्विजः** (रोः कुले); **संप्र.** ५६२; **यप्र.** ३२ त्वाऽऽद्यं गुरौ द्विजः (त्वा स्वगुरोर्गृहे) गृहे वसेत् (वसेद्गृहे).

(मस्मृ. ६।२) इति गार्हस्थ्येऽपि कालान्तरप्रतिपत्तेरनुवादतैवानुमीयते। चतुर्थमाद्यमायुषो भागम्। जन्मापेक्षमाद्यत्वम्। गुरौ उषित्वा ब्रह्मचर्यं कृत्वा ततो द्वितीयं चतुर्थमायुषो भागं कृतविवाहो गृहे वसेत्। गृहस्थाश्रममनुतिष्ठेत्। मेधा.

(२) ब्रह्मचर्यपूर्वकं गृहाश्रममनुतिष्ठतो वक्ष्यमाणा वृत्तयो भवन्तीत्येतत्प्रतिपादयितुमुक्तं ब्रह्मचर्यकालं वक्ष्यमाणं च गार्हस्थ्यकालमनुवदितुमाह – चतुर्थमिति। वक्ष्यमाणमाश्रमसमुच्चयपक्षमाश्रितो ब्राह्मणः आद्यमायुश्चतुर्भागात् (?गं) प्राक् 'षट्त्रिंशदाब्दिकम्' (मस्मृ. ३।१) इत्यादिविशेषनोदनादूनातिरिक्तमपि गुरुकुले आसित्वा ततो द्वितीयमायुश्चतुर्थभागम् 'गृहस्थस्तु यदा पश्येद्वलीपलितम्' (मस्मृ. ६।२) इत्यादिवक्ष्यमाणविशेषादूना(द्य?)धिकमपि कृतभार्यो गार्हस्थ्यमनुतिष्ठेत्। न चास्य कालसमर्पणार्थत्वं युक्तम्, अनियतत्वेन आयुषोऽस्य साकाङ्क्षत्वात्।

गोरा.

(३) यावदायुः पुंसस्तस्य चतुर्थभागः आद्यो यावत्समाप्यते तावदित्यर्थः। एतच्च षट्त्रिंशदाब्दिकाद्युक्तपक्षैः सह वैकल्पिकम्। गुराविति। ब्रह्मचर्याश्रम इत्यर्थः। द्वितीयम् आद्यचतुर्थभागानन्तरचतुर्थभागम्।

मवि.

(४) मनुस्तु सकलसमुच्चये कालव्यवस्थामाह – चतुर्थमिति। 'शतायुर्वै पुरुषः' इति श्रुत्याऽभिहितायुषश्चतुर्थो भागः पञ्चविंशतिवर्षाणीत्यर्थः।

αस्मृच. १।१७४

(५) 'चतुर्थमायुषो भागमाद्यम्' इत्युक्तं ब्र(?क्तब्र)ह्मचर्यकालोपलक्षणार्थम्, अनियतपरिणामत्वादायुषश्चतुर्थभागस्य दुर्ज्ञानत्वात्। ×ममु.

(६) चतुर्थभागं पञ्चविंशतिवत्सरान्, 'शतायुर्वै पुरुषः' इति श्रुतेः। ब्रह्मचर्यम् उषित्वा समाप्य इति, 'ब्रह्मचर्यं समाप्य गृही भवेत्, गृही भूत्वा वनी भवेत्' (जाउ.४) इत्यादिश्रुतेः। तत्र शाब्दी संगतिः।

मच.

α चका. स्मृचवत्। यप्र. चकानुवादः।

× शेषं मेधागतं गोरागतं च।

(७) अत्र 'शतायुर्वै पुरुषः' इति श्रुतेः पञ्चविंशतिवर्षपर्यन्तमेकैकस्मिन्नाश्रमेऽवस्थातव्यमिति निबन्धकृतः। एवं क्रमे स्थिते यदापस्तम्बेनोक्तम् 'चत्वार आश्रमा गार्हस्थ्यमाचार्यकुलं मौनं वानप्रस्थ्यम्' (आध. २।२१।१) इति, तत्रोद्देशमात्रे तात्पर्यम्, न क्रमे।

संम. ४३

(८) एवं पञ्चमहायज्ञविधानमुक्तम्। इदानीं पूर्वाध्यायान्ते प्रतिज्ञातं गृहस्थस्य ब्राह्मणस्य वृत्त्युपायं विवक्षुंस्तस्य गार्हस्थ्यस्य कालं तावत् वयसा विभजन्नाह – चतुर्थमिति। आयुषो वर्षशतपरिमाणस्याऽऽद्यश्चतुर्भाग उपनयनात्प्राक् सप्त वर्षाणि पश्चादष्टादश इत्येवं पञ्चविंशतिवर्षकम् (? कः)। पूर्वोक्तेषु षट्त्रिंशदाब्दिकादिषु कल्पेष्वाश्रमसमुच्चयानुष्ठाने समीचीनस्तदधिकाराख्योऽयं कल्पः सामर्थ्याद्गम्यते। न ह्यनुपनीतस्य गुरुकुलवासो भवति। गुरावुषित्वा द्वितीयमायुषश्चतुर्थं भागं कृतदारो गृहे वसेत्। ब्रह्मचर्यकालस्य पुनरुपन्यासो गार्हस्थ्यस्य कालविवक्षार्थः। नन्द.

(९) गुरौ गुरुसमीपे उषित्वा वासं कृत्वा वेदाध्ययनं कृत्वा। ×भाच.

संन्यासेन चित्तशुद्धिः

**'संन्यासेन द्विजोत्तमः8॥**

(१) संन्यासः षष्ठे वक्ष्यते। तेन द्विजोत्तमाः शुद्धा भवन्ति। (न?) कथंचिन्मानसापचारे। यदविदुषा चिन्तितं सूक्ष्मप्राणिवधादि तदेषामपनीयते।

*मेधा.

(२) संन्यासेन पारिव्राज्येन। द्विजोत्तमः विप्रः।

मवि.

(३) द्विजोत्तमः ब्राह्मणः। संन्यासमुपक्रम्य, 'ब्राह्मणाः पुत्रैषणायाश्च....स ब्राह्मणः केन स्यात्' (बृउ. ३।५।१) इति श्रुतेः, 'पारिव्राज्यदर्शनाच्च' इति भाष्योक्तेश्च संन्यास एवासाधारणः संस्कारो विप्रस्येति।

मच.

× शेषं मेधागतं स्मृचगतं च।

8 शुध्यतीत्यनुवृत्तम्।

* गोरा., ममु. मेधागतम्।

(१) **मस्मृ.** ५।१०८; **मेधा.** द्विजोत्तमः (द्विजोत्तमाः); **गोरा.** मेधावत्; **पमा.** १।५३३; **मुक्ता.** १७५, ४७५; **यप्र.** ३३; **कृभ.** २१३४.

(४) संन्यासेन सङ्गत्यागेन। नन्द.

(५) संन्यासः प्रव्रज्या द्विजन्मनां मानसो(?सा)पचारे शुद्धिकृत्। भाच.

गृहस्थस्य वानप्रस्थ्यप्रवेशयोग्यता, वानप्रस्थ्ये भार्यायाः साहित्य-राहित्यविकल्पः

**'द्वितीयमायुषो भागं कृतदारो गृहे वसेत्॥**

(१) द्वितीयमायुर्भागं कृतभार्यः गृहस्थाश्रममनुतिष्ठेत्। *गोरा.

(२) द्वितीयभागे पुनः आधानपुत्रोत्पत्तियज्ञानां च संभवे, असंभवे त्वधिकमपि कालं गृहे वसेत् गार्हस्थ्याश्रमे वर्तेत। ब्राह्मण इति प्राधान्यादुक्तम्। मवि.

**'एवं गृहाश्रमे स्थित्वा विधिवत्स्नातको द्विजः।**
**वने वसेत्तु नियतो यथावद्विजितेन्द्रियः॥**

(१) गृहोपलक्षित आश्रमः गृहाश्रमः। गृहाः दाराः। तत्र स्थित्वा तमनुष्ठाय वने वसेदिति विधिः। स्थित्वेति क्त्वाप्रत्ययेन पौर्वकाल्यं गार्हस्थ्यस्य वनवासाद्दर्शयति। क्रमेणाऽऽश्रमः कर्तव्यः। कृतगार्हस्थ्यो वनवासेऽधिक्रियते। समुच्चयपक्षमाश्रित्यैतदुक्तम्। अन्यथाऽविप्लुतब्रह्मचर्यादपि वनवासो विद्यत इत्येदपि वक्ष्यते। विजितेन्द्रियः पक्वकषायः, क्षीणराग इत्यर्थः। एवं — विधिवत् - यथावदितिपदानि वृत्तपूरणानि। तानि प्राक् तत्र तत्र व्याख्यातानि। एतावद्विधीयते — गार्हस्थ्यं कृत्वा वनवास आश्रयितव्यः। मेधा.

(२) कृतसमावर्तनो द्विज उक्तप्रक्रियो यथाशास्त्रं गृहाश्रममनुष्ठाय ततो नियतः कृतनिश्चयः विशेषेण यतेन्द्रियः सन् यथावत् वक्ष्यमाणप्रकारेण यथाऽर्हति तथा वानप्रस्थाश्रममनुतिष्ठेत्। गोरा.

(३) क्रमप्राप्तौ वनस्थयतिधर्मौ वक्तव्यौ। तत्र वनस्थधर्मं तावत्प्रक्रमते — एवं गृहाश्रम इति। यथावत् वक्ष्यमाणविधिना वने वसेत् नियतः तपःस्वाध्यायादिनियमाख्ययोगाङ्गयुक्तः। विजितेन्द्रियः ब्रह्मचर्यरूपयमवान्। तेनैकदेशेन (अ)हिंसास्तेयापरिग्रहसत्यान्यपि यमान्तराणि गृह्यन्ते। मवि.

(४) आश्रमसमुच्चयपक्षाश्रितो द्विजातिः.... जितेन्द्रियः परिपक्वकषायः इत्यर्थः। *ममु.

(५) 'गृही भूत्वा वनी भवेत्' इति श्रुतिसंगतिः। स्नातकः उक्तस्नातकधर्मवान्। 'न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते। गृहं च गृहिणीशून्यमरण्यसदृशं विदुः॥' तयोपलक्षितमाश्रमम्। स्थित्वा तदुचितधर्मं संपाद्य। मच.

**'गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः।**
**अपत्यस्यैव चापत्यं तदाऽरण्यं समाश्रयेत्॥**

(१) यदुक्तं त्यक्तविषयोपभोगगर्धोऽधिक्रियते इति, तदेव दर्शयति — गृहस्थ इति। वली त्वक्शैथिल्यम्। पलितं केशपाण्डुर्यम्। अपत्यस्यापत्यं पुत्रस्य पुत्र इत्याहुः। सत्यपि दुहितुरपत्ये दौहित्रे, पुत्रस्यापि कन्यायां नैवं विधिमिच्छन्ति शिष्टाः। अन्ये तु शिरःपालित्यं पौत्रोत्पत्तिं च वयोविशेषलक्षणार्थमाहुः। यस्य कथंचित्पालित्यं न भवेत्सोऽपि वार्धक्ये वनं समाश्रयेत्। यथैव जातपुत्रः कृष्णकेशस्तु आधानेऽधिक्रियते, एवं जातपौत्रः पलितशिराः। तदाऽपि पुत्रजन्म कृष्णकेशता च वयोविशेषोपलक्षणार्थमेव। नातिशीघ्रं नातिचिरमित्यर्थस्योपलक्षणत्वे तु प्रमाणं वक्तव्यम्। ×मेधा.

(२) अयं च वनप्रवेशो जराजर्जरकलेवरस्य जातपौत्रस्य वा। यथाऽऽह मनुः — गृहस्थस्त्विति। मिता. ३।४५

(३) तृतीयायुर्भागे वनगमनं दर्शयित्वा कालान्तरमप्याह — गृहस्थ इति। वलीपलितं मिलितं यदा पश्येदिति द्वितीयकालः। अपत्यस्यापत्यं पौत्रं यदा पश्येदिति तृतीयः प्रकारः। मवि.

---

* ममु. गोरावत्।

(१) मस्मृ. ५।१६९; मवि. द्वितीयमायुषो (द्वितीयं ब्राह्मणो); गप. ६ (=).

(२) मस्मृ. ६।१; मेधा. ६।९७ पू.; गप. ६ (वने वसेत्) एतावदेव (=); मुक्ता. १६९.

* शेषं गोरावत्।

× गोरा., भाच. मेधागतम्।

(१) मस्मृ. ६।२; मेधा. ४।१ प्रथमचरणमात्रम्; मिता. ३।४५ चापत्यं (वाऽपत्यं); ममु. ४।१ प्रथमचरणमात्रम्; पमा. १।५२५; गप. ४५८; संम. ८३; विपा. ५।४९३.

(४) गृहस्थो यदाऽऽत्मदेहस्य त्वक्शैथिल्यं केशधावल्यं पुत्रस्य पुत्रं च पश्यति तथाविधवयोवस्थया विगतविषयरागतया वनमाश्रयेत्। ममु.

(५) आत्मनः देहस्थवली चर्मशैथिल्यं पलितं केशधावल्यम्। एतद्रागक्षयोपलक्षकम्। अपत्यस्येत्यादिकं संभवद्विषयम्। मच.

**[1]संत्यज्य ग्राम्यमाहारं सर्वं चैव परिच्छदम्।**
**पुत्रेषु भार्यां निक्षिप्य वनं गच्छेत्सहैव वा॥**

(१) व्रीहियवमयमन्नं ततः प्रभृति नाश्नीयादित्येतत् संत्यज्येति उच्यते। तदुक्तं 'मूलाशी' इत्यादि। परिच्छदः गवाश्ववस्त्रासनशय्यादिः। यदि भार्याया इच्छा तदा सहगमनम्, अन्यथा एकाकिनः। अन्ये तु तरुणीं निक्षिप्य वृद्धया सहेति वर्णयन्ति। सत्यां भार्यायामयं विधिः पुत्रेषु निक्षेपः वनगमनं वा। असत्यामपि मृतायां वनवास आपस्तम्बादिभिः स्मर्यते — पुनराधान इत्यत्र यस्येन्द्रियचापल्यं नास्ति स वानप्रस्थः। इतरः पुनर्दारान्परिगृह्णीयादिति व्यवस्था।

+मेधा.

(२) ग्राम्याहारं गोधूमतिलादिकम्। च पुनः सर्वं परिच्छदमपि गोभू(तिल?)हिरण्यादि। पक्षान्तरम् — पतिपरिचर्याभिलाषेण स्वयमपि वनं गन्तुमिच्छति तर्हि तया पत्न्यैव सह वनं गच्छेत्। भाच.

वानप्रस्थस्य चतुर्थाश्रमप्रवेशयोग्यता

**[2]वनेषु च विहृत्यैवं तृतीयं भागमायुषः।**
**चतुर्थमायुषो भागं त्यक्त्वा सङ्गान्परिव्रजेत्॥**

(१) इतः प्रभृति चतुर्थाश्रममतिः। तृतीयं भागमिति। केचित्कालं स्थित्वेत्यर्थः, यावता कालेन तपः सुतप्तं भवति, विषयाभिलाषश्च सर्वो निवृत्तः। न हि मुख्यतृतीय आयुषो भाग एवानेन शक्यो ज्ञातुम्। न हि वर्षशतापेक्षाऽऽश्रमाणाम्, यतो वलीपलिता(पत्या)-पत्योत्पत्ती तृतीयाश्रमप्रतिपत्तौ काल उक्तः। न च सर्वस्य पञ्चाशद्वर्षदेशीयस्य तदुत्पद्यते। उक्तं चान्यत्र 'तपसि ऋद्धे परिव्रजेत्' इति।

ननु च यथाऽन्येषामाश्रमाणां कालो विवृतः — ग्रहणान्तं ब्रह्मचर्यम्, वलीपलिताद्यवधि गार्हस्थ्यम्, नैवमिह कश्चित्परिच्छेदहेतुरस्ति, यदि यथाश्रुतं तृतीयो भागः (न) समाश्रीयेत। यच्च 'तपसि ऋद्धे' इति, तत्रापि कालापेक्षा युक्तैव। न ज्ञायते कियता तपसा ऋद्धिर्भवति। अतः कालपरिच्छेदो वचनार्हः।

उक्तमत्र — न शतवर्षापेक्षया तृतीयायुर्भागनिश्चयः संभवति। उक्तश्च कालः — कायपाके प्रव्रज्या प्रतिपत्तव्या। यावता तपसा यावति च वयसि पुनर्मदवृद्धिर्नाऽऽशङ्क्यते तदा परिव्रजेत्। विहृत्य आसित्वा, यथोक्तं विधिमनुष्ठायेति यावत्। सङ्गत्यागश्च ×ममतापरिग्रहः एकारामता। मेधा.

(२) एवम् उक्तरीत्या तृतीयमायुर्भागं वानप्रस्थानुष्ठानार्थं वने उषित्वा ततश्चतुर्थमायुर्भागं पूर्वावस्थानादतिशयेन रागादीन् त्यक्त्वा चतुर्थाश्रममनुतिष्ठेत् वक्ष्यमाणाश्रमसमुच्चयपक्षे। गोरा.

(३) विहृत्य अटित्वा, यथोक्तविधिमनुष्ठायेति यावत्। परिव्रजेत् संन्यासविधिना क्षपयेत्।

मोक. ३०

(४) अथ यतिधर्मानाह — वनेष्विति। विहृत्य क्षपयित्वेत्युक्त्वा (?त्वेति क्त्वा) प्रयोगेण पक्वकषायस्य वानप्रस्थचर्यया कष्टावपाके सत्येव यत्याश्रमेऽधिकार इति दर्शितम्। अत्रापि तृतीयं भागमिति तावता कालेन तावद्वैराग्योत्पत्तिसंभवे। अन्यथा तु यावज्जीवमपि वन एव वसेत्। सङ्गान् परिग्रहान्। परिव्रजेत् गृहादि परित्यज्य व्रजेत्। मवि.

(५) यस्य तु मरणाभावस्तस्याऽऽह — वनेष्वित्यादि। अनियतपरिमाणत्वादायुषस्तृतीयभागस्य दुर्विज्ञानात्तृतीयमायुषो भागमिति रागक्षयावधि वानप्रस्थका-

+ गोरा., मोक., मवि., ममु., मच. मेधागतम्।

(१) मस्मृ. ६।३; मेधा. ६।९ तृतीयचरणमात्रम्, ६।१६ प्रथमचरणमात्रम्; मिता. ३।४६ पू.; मोक. १३; पमा. १।५२५; गप. ४६० भार्यां (दारान्) हैव (दैव) उत्त., स्मृतिः; मुक्ता. १६९; संम. ८३ पू.; बाल. ३।४५ पृ. ८७.

(२) मस्मृ. ६।३३; अप. ३।५५-५६ पृ. ९५० च विहृत्यैवं (तु विगृह्यैवं) सङ्गान् परिव्र (सङ्गं परित्य) वायुपुराणम्; मोक. ३० वनेषु च (वनेषु तु); स्मृच. १।१७४ मोकवत्; चका. ७८४; पमा. १।५३० मोकवत्; मर. ६१३ मोकवत्; मुक्ता. १७१ मोकवत्; संम. ४३; संप्र. ५६२ सङ्गान् (सङ्गं); यप्र. ३२ त्यैवं (त्यैव); बाल. ३।५६-५७ पृ. ९५ षु च विहृ (ष्वथ विह).

× 'ममताया अपरिग्रहः' इति विग्रहोऽत्राभिप्रेतः।

लोपलक्षणार्थम्। अत एव शङ्खलिखितौ — 'वनवासादूर्ध्वं शान्तस्य परिगतवयसः पारिव्राज्यम्' इत्याचख्यतुः। एवं वनेषु विहृत्य एवं विधिवद्दुश्चरतपोनुष्ठानप्रकारेण वानप्रस्थाश्रमं विषयरागोपशमनाय कंचित्कालमनुष्ठाय, चतुर्थमायुषो भागम् इति, शेषायुःकाले सर्वथा विषयसङ्गांस्त्यक्त्वा परिव्राजकाश्रममनुतिष्ठेत्। ⇧ममु.

(६) अविरक्तस्यापि चतुर्थे वयस्यवश्यं संन्यास इत्याह — वनेष्विति। चतुर्थमायुषो भागं प्राप्य परिव्रजेदित्यन्वयः, 'वनी भूत्वा प्रव्रजेत्' (जाउ.४) इति श्रुतेः। विरक्तस्य तु क्रमोत्क्रमाभ्यां संन्यासः, 'अव्रती वा व्रती वा उच्छिन्नाग्निरनुच्छिन्नाग्निको वा यदहरेव विरजेत्तदहरेव प्रव्रजेत्। यदि चेतरथा ब्रह्मचर्यादेव प्रव्रजेद्वनाद्वा गृहाद्वा' (जाउ. ४) इत्यादिश्रुतिशतैश्च संन्यासस्य विहितत्वात्। अयं त्वविरक्तो ब्रह्मलोकेप्सुः 'संन्यासाद्ब्रह्मणः स्थानम्' इति श्रवणात्।

मच.

**'आश्रमादाश्रमं गत्वा हुतहोमो जितेन्द्रियः।**
**भिक्षाबलिपरिश्रान्तः प्रव्रजन्प्रेत्य वर्धते॥**

(१) समुच्चयपक्षमुपोद्वलयति — आश्रमादाश्रममिति। गृहस्थाश्रमाद्वानप्रस्थाश्रमं गत्वा हुतहोमः उभयोरप्याश्रमयोः, यदा जितेन्द्रियस्तदा परिव्रजेत्। प्रेत्य वर्धते मृत्वा विभूत्यतिशयं प्राप्नोति। भिक्षाबलिदानेन परिश्रान्तः चिरम्। आश्रमधर्मानुवादोऽयम्।

+मेधा.

(२) पूर्वोक्तेष्वाश्रमेषु यथाक्रमं पूर्वस्मात्पूर्वस्मादनन्तरमाश्रममनुष्ठाय यथासंभवमाश्रमेषु हुतहोमो जितेन्द्रियो भिक्षाबलिदानश्रान्तः सन् प्रव्रज्यामनुतिष्ठन् परलोके वर्धते मोक्षप्राप्त्याऽऽनन्दमयं ब्रह्मे(?ह्मैती)त्येवमृद्ध्यतिशययुक्तो भवति।

×गोरा.

(३) अत्र वनवासानन्तरं पारिव्राज्याभिधानेन गृहस्थस्य पारिव्राज्याधिकारो नास्तीति प्रसञ्जितां शङ्कां निराचष्टे — आश्रमादिति। न केवलं ब्रह्मचर्ये वर्तमानस्य तादृशवैराग्यादि, तस्य चर्णत्रयापाकरणसंभवात्तमाश्रमं त्यक्त्वा गृहस्थाश्रमगमनमवश्यम्। न तु गृहस्थस्य ऋणापाकरणमाश्रमान्तरसाध्यम् अतोऽस्य विरागस्यानन्तरमेव पारिव्राज्यं संभवतीति तात्पर्यम्। हुतहोम इति यज्ञैक(यज्ञरूपैक)देशाभिधानेन यज्ञस्वाध्यायापत्यैर्ऋणत्रयापाकरणमुक्तम्। जितेन्द्रियः अभ्युत्थापितवैराग्यः। तेन 'जितेन्द्रियोऽहम्' इति यदि गृहस्थो मन्यते तदा तदैव परिव्रजेत्, अन्यथा वनवासेन जितेन्द्रियतां प्राप्येत्यर्थः। भिक्षादानबलिदानाभ्यां कर्मकलापो लक्ष्यते। तेन श्रान्तः तत्करणासमर्थः। एतेन तच्छक्तौ तत्कुर्वतैवाऽऽत्मा जिज्ञास्य इति दर्शितम्। प्रेत्य वर्धते लिङ्गदेहावच्छिन्नस्तदवच्छेदन्यासोद्भवं विभुत्वं लभते। मवि.

(४) आश्रमात् वानप्रस्थान्तादाश्रमं तेष्वन्तर्गतं ब्रह्मचर्याद्यन्यतमम्। तेषु हुतो होमो बहुधा श्रौतलौकिकाग्निषु येन सः, अतःपरं न होष्यतीत्यर्थः। भिक्षाबलिपरिश्रान्तः ब्रह्मचर्ये भिक्षया, गार्हस्थ्यवानप्रस्थ्ययोर्बलिदानेन परिश्रान्तः। भिक्षारूपबलेरभिमतत्वाद्वा श्रान्तः, 'व्युत्थायाथ भिक्षाचर्यमस्ति' इति श्रुतेः। तथाविध एव प्रेत्य सुखी स्यात्। मच.

(५) हुतहोमः कृतसमिदाधानाग्निहोत्रहोमः। भिक्षाबलिपरिश्रान्तः भिक्षाचरणवैश्वदेवबलिहरणाभ्यां परिश्रान्तः। आश्रमादाश्रमं गत्वा ब्रह्मचर्याश्रमाद्गार्हस्थ्यं ततो वानप्रस्थाश्रमं गत्वेत्यर्थः। मुक्ता. १७१

(६) इयमेवाऽऽश्रमप्राप्तिरुचिता, नान्येत्याह — आश्रमादिति। हुतहोमः.... भिक्षाबलिपरिश्रान्तः.... आभ्यां विशेषणाभ्यामाश्रमत्रयविहितं कर्म लक्ष्यते।

×नन्द.

(७) भिक्षाबलिपरिश्रान्तः भिक्षाबलिभ्यां रहितः संचयरहितः, हुतहोमः शिखासूत्रपरित्यागे कृतहोमः, एतादृशः प्रव्रजेत्(?व्रजन्) प्रेत्य परलोके वर्धते मोक्षं प्राप्नोति। लिङ्गदेहाद्यनवछिन्नविभुत्वं मोक्ष(?मुक्त)त्वम्, एवं यत्तत्प्राप्नोतीत्यर्थः। भाच.

---

⇧ नन्द., भाच. ममुगतम्।

+ मोक. मेधागतम्।

× ममु. गोरावत्।

**(१) मस्मृ.** ६।३४; **अप.** ३।५५-५६ पृ. ९५० गत्वा हु (गच्छेद्धु) वायुपुराणम्; **मोक.** ३०; **मुक्ता.** १७१; **बाल.** ३।५६-५७ पृ. ९५ दाश्रमं (दाश्रमे) बलि (वलि).

× शेषं मुक्तावत्।

आश्रमसमुच्चयपक्षे अपाकृतर्णत्रयस्यैव संन्यासेऽधिकारः

**×'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्।**
**अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः॥**

(१) अपाकरणम् ऋणसंशुद्धिः। मनो मोक्षे निवेशयेत्। मोक्षशब्देन प्रव्रज्याश्रमो लक्ष्यते। तत्र प्राधान्येन मोक्षैकफलतोच्यते, न तथाऽन्येष्वाश्रमेषु। अतो मोक्षः परिव्रज्या। ✡मेधा.

(२) तथा आश्रमसमुच्चयपक्षाङ्गीकरणे सति ऋणानि त्रीण्यपाकृत्य मनो मोक्षे नियोजयेदिति। उत्तरश्लोकवक्ष्यमाणानि त्रीणि ऋणानि संशोध्य ततः प्रव्रज्याद्वारेण मोक्षविषये मनो नियोजयेत्। तानि पुनरसंशोध्य साक्षेपोऽयं प्रव्रज्यामनुतिष्ठन् नरकं व्रजति। गोरा.

(३) मोक्षः मोक्षाश्रमः। उ. २।२१।८

(४) उक्तमर्थं स्फुटयति — ऋणानीति। मोक्षे मोक्षसाधने चतुर्थाश्रमे। अधो व्रजति प्रत्यवायोत्पत्त्या पूर्वाश्रमेऽप्यनधिकृतो भवति। न चैवं 'ब्रह्मचर्यादेव प्रव्रजेद्वनाद्गृहाद्वा' (जाउ.४) इति श्रुत्या विरोधः, तस्याः पूर्वजन्माभ्यासवशादित्या(?दा)त्यन्तिकवैराग्यपुरुषविषयत्वात्। तदाह देवलः — 'यस्यैतानि सुगुप्तानि जिह्वोपस्थोदरं गिरः। संन्यसेदकृतोद्वाहो ब्राह्मणो ब्रह्मचर्यवान्॥' इति। यस्तु नात्यन्तं वीतरागः स मन्दाधिकारः। तद्विषयाणि च अनपाकृतर्णत्रयसंन्यासनिषेधकमन्वादिवचनानि। यथा भारते — 'कषायं पाचयित्वा च श्रेणिस्थानेषु च त्रिषु। प्रव्रजेच्च परं स्थानं यत्र गत्वा न शोचति॥' (भा. १२।२३७।३) इति। यस्तूत्कटरागस्तद्विषयम् 'ऐकाश्रम्यं त्वाचार्याः प्रत्यक्षविधानाद्गार्हस्थ्यस्य' (गौध. ३।३६) इति। ऐकाश्रम्यं गार्हस्थ्यरूपैकाश्रमित्वमेव रागिणां युक्तमित्याचार्याः। रागिणा(?ण)मधिकृत्य गार्हस्थ्यस्य प्रत्यक्षतः श्रुतौ विधानादित्यर्थः। मवि.

(५) मोक्षे मोक्षान्तरङ्गे परिव्रज्याश्रमे। ×ममु.

(६) मोक्षैकफलत्वात् ज्ञानमेव चात्र मोक्षशब्देनोच्यते। अत एव मोक्षं सेवमान इत्युक्तिः। चका. ८०८

(७) ऋणत्रयं श्रुत्या दर्शितम् — 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवाञ्जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः, एष वा अनृणी यः पुत्री यज्वा ब्रह्मचारिवासी' (तैसं. ६।३।१०।५) इति। पमा. १।५३२

(८) वेदाध्ययनपुत्रोत्पादनयज्ञानुष्ठानैर्ऋषिपितृदेवानामृणानि अपाकृत्य शोधयित्वा। +मच.

(९) मोक्षं मोक्षसाधनं संन्यासाश्रमम्। अनेन पूर्वोक्तश्चतुराश्रमसमुच्चयपक्षः पाक्षिक इति द्योतयति। तथा च याज्ञवल्क्यः — 'वनाद्गृहाद्वा कृत्वेष्टिं सार्ववेदसदक्षिणाम्। प्राजापत्यां तदन्ते तानग्नीनारोप्य चाऽऽत्मनि। अधीतवेदो जपकृत्पुत्रवानन्नदोऽग्निमान्। शक्त्या च यज्ञकृन्मोक्षे मनः कुर्यात्तु नान्यथा॥' (यास्मृ. ३।५६-५७) इति। मुक्ता. १७१

(१०) 'ऋणानि...॥' इति मनूक्तेर्मुक्तिप्राप्तये आत्मोपासनां कुर्यात्। विपा. ३।२।३७३

(११) यस्य दृष्टानुश्रविकविषयेष्वादावेव वैराग्यं न जायते स एतत्सर्वं यथाशास्त्रं कृत्वा संन्यसेत्, नान्यथेति श्लोकयोरर्थः, अन्यथा 'ब्रह्मचर्यादेव प्रव्रजेत्' इत्यादिप्रत्यक्षवेदवचनविरोधादप्रामाण्यप्रसङ्गात्। 'व्रजत्यधः' इति मोक्षादर्वाङ्मुमुक्षुः सत्यलोकादिषु प्रवर्तत

× अस्य वचनस्य मिताव्याख्यानमस्मिन्नेव प्रकरणे याज्ञवल्क्यस्य 'अधीतवेदः' (यास्मृ. ३।५७) इति श्लोके (वका. पृ. २०४६) द्रष्टव्यम्।

✡ मोक. मेधागतम्। यप्र. मेधावत् यसंग्रन्थानुवादश्च।

(१) **मस्मृ.** ६।३५; **गोरा.** निवेशयेत् (नियोजयेत्); **मिता.** ३।५६-५७; **अप.** ३।५५-५६ पृ. ९५० नो व्रज (नः पत) वायुपुराणम्; **मोक.** ३०; **उ.** २।२१।८; **गौमि.** ३।१ सेवमानो व्रज (व्रजमानः पत); **चका.** ८०८; **पमा.** १।५३२; **मुक्ता.** १७१ :१७३ निर्देशमात्रम्। (=); **विपा.** ३।२।३७३ मोक्षं तु सेवमानो (तान्येव मोक्षमिच्छन्); **वीमि.** ३।५६-५७ मोक्षं (मोक्षे); **यसं.** ३; **यप्र.** ३२ ऋणानि त्रीण्य (ऋणत्रयम); **कृभ.** २१२९.

× शेषं गोरावत्।

+ शेषं गोरागतं मविगतं च।

इत्यर्थः, 'न हि कल्याणकृत् कश्चिद्दुर्गतिं तात गच्छति' (भगी. ६।४०) इति भगवद्वचमात्।

यसं. ३

(१२) ब्रह्मचर्यगार्हस्थ्ये कृत्वा वानप्रस्थ(?स्थ्य)-मकृत्वाऽपि संन्यासः कर्तव्यः, नान्यथेत्याह — ऋणानीति। ɸनन्द.

(१३) अपाकृत्य परिहृत्य। तु पुनः। अनपाकृत्य अनपाहृत्य। ⇑भाच.

**'अधीत्य विधिवद्वेदान्पुत्रांश्चोत्पाद्य धर्मतः।**
**इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत्॥**

(१) कानि पुनस्तानि त्रीणि ऋणानि? अत आह— अधीत्येति। 'त्रिभिर्ऋणैर्ऋणवाञ्जायते यज्ञेन देवेभ्यः प्रजया पितृभ्यः स्वाध्यायेनर्षिभ्यः' (तैसं. ६।३।१०) इति श्रुत्यनुवादिनी स्मृतिरियम्। ननु च 'गृही भूत्वा प्रव्रजेत्...अथवेतरथा ब्रह्मचर्यादेव प्रव्रजेत्' (जाउ.४) इति जाबालश्रुतिः। उच्यते। उत्पत्तिमात्रमाश्रित्योक्त-मुदाहरति। तत्रेदं विरुध्यते 'अनुत्पाद्य तथा प्रजाम्' इति। यद्येषा श्रुतिरस्ति किंतर्हि? इदमुच्यते — प्रत्यक्षविधानाद्गार्हस्थ्यस्येति। प्रव्रजेदिति तेन तु प्रव्रजितेनेमानि कर्माणि कर्तव्यान्यनया वेतिकर्तव्य-तयेत्येतन्नास्ति। गृहस्थस्य त्वग्निहोत्रादीनि साङ्गकलापा-न्याम्नातानीत्येतदभिप्रायमेतत्। ये त्वेतां श्रुतिमदृष्ट्वा स्मार्ता एव नैष्ठिकादयस्ते च गृहस्थाश्रमेण प्रत्यक्ष-श्रुतिविधानेन बाध्यन्ते, ये च क्लीबाद्यनधिकृतविषय-तया स्मृतिवाक्यानामर्थवत्तां वर्णयन्ति, तेषामभिप्रायं न विद्मः। यदि तावत् आज्यावेक्षणविष्णुक्रमाद्यङ्गाशक्तौ श्रौतेषु नाधिक्रियते यस्तथाविधाङ्गयुक्तं कर्म संपादयितुं समर्थस्तं प्रत्यधिकारश्रुतीनामर्थवत्त्वे जाते न तदसमर्थमपि कुर्वीत इति। यद्येवं स्मार्तेष्वपि नैष्ठिकस्य गुर्वर्थमुदकुम्भाद्याहरणं भैक्षपरिचरणम्, पारिव्राज्येऽपि 'न द्वितीयामपि रात्रिं ग्रामे वसेत्' इति कुतः पङ्ग्वन्धयोः स्मार्तकर्मक्रमाधिकारः उपनयनं चैषामस्ति लिङ्गम्। तत् एषां विवाहार्थनम्(?र्थम्) 'यद्यर्थिता तु दारैः' (मस्मृ. ९।२०३) इति। यद्यप्युपनयनमादित्य-दर्शनम् 'अग्नि(?ग्निं)प्रदक्षिणं परीत्य' (पागृ. २।३।१) इति च विहितम्, यतो नानुपनीतस्य विवाहसंभवः, व्रात्यत्वात्, अतो यावच्छक्यं गुरुशुश्रूषणं विगुणमपि ब्रह्मचर्यमेवमस्ति। क्लीबस्य तु 8प्रकृतेरनुपनेयतैव। स च पतितश्च न क्वचिदधिकृतः। तस्मादनधिकृतविषयं पारिव्राज्यं नैष्ठिकता चेति न मनःपरितोषमादधाति। सत्यम्, उदितहोमनिन्दावद्भविष्यति समुच्चयपक्षमाश्रित्य 'अनपाकृत्य' इति निन्दावचनम्, न पुनः प्रतिषेध एव। अथवा यदाऽकृत(?दा कृत)दारपरिग्रहस्य प्रव्रज्याया-मधिकार इत्येवमेतन्नेयम्। मेधा.

(२) तानि ऋणानि दर्शयति — अधीत्येति। 'त्रिभिर्ऋणवाञ्जायते मुनष्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः स्वाध्यायेन ऋषिभ्यः' इति ब्रूयात् (?श्रूयते)। यथाशास्त्रं वेदानधीत्य पुत्रांश्च पर्वगमनानृतुरिरंसा-वर्जमृतुकालादिगमनधर्मेणोत्पाद्य यज्ञैश्च ज्योतिष्टोमा-दिभिर्यथाशक्ति इष्ट्वा ततो मोक्षोपायप्रव्रज्याख्ये मनो नियोजयेत्। गोरा.

(३) धर्मतः यथोक्तकन्याविवाहादृतुगमनादित्यर्थः। ×मवि.

(४) मोक्षान्तरङ्गे चतुर्थाश्रमे। γमम्.

(५) यदि निवेशयेत् एतान् कृत्वैवेत्यर्थः। §मच.

(६) 'अधीत्य विधिवद्वेदान्पुत्रानुत्पाद्य धर्मतः' इत्यादीनि वचनानि यस्य ऐहिकामुष्मिकभोगेष्वादावेव वैराग्यं न जायते तद्विषयाणीति स्मृतिरत्नादावभिहितम्। अन्ये त्वध्ययननियोगनिवृत्त्युत्तरकालं यस्य पुरुषस्य यदा वैराग्यं जायते तस्याऽऽश्रमिणोऽनाश्रमिणो वा तदैव संन्यास इति वदन्ति। तथा च जाबालश्रुतिः — 'अथ

ɸ शेषं मविगतं मचगतं च ।

⇑ शेषं मचगतम्।

(१) **मस्मृ.** ६।३६; **गोरा.** वेश (योज); **अप.** ३।५५-५६ पृ. ९५० वायुपुराणम्; **मोक.** ३०; **चका.** ८०८ इष्ट्वा च (इष्ट्वा तु); **पमा.** १।५३२ पुत्रांश्चो (पुत्रानु); **मुक्ता.** १७१ : १७३ पमावत्, पृ., (=); **यसं.** ३; **बाल.** ३।५६-५७ पृ. ९५.

8 स्वभावादित्यर्थः।

× शेषं गोरागतम्।

γ शेषं गोरावत्। भाच. गोरागतम्।

§ शेषं मविगतम्।

पुनरव्रती व्रती वा स्नातको वाऽस्नातको वोत्सन्नाग्निरनग्निको वा यदहरेव विरजेत्तदहरेव प्रव्रजेत्' (जाउ. ४) तथा 'यद्यातुरः स्यान्मनसा वाचा वा संन्यसेत्' इति। मुक्ता. १७३

(७) उक्तमेवार्थमादरार्थं श्लोकद्वयेन प्रपञ्चयति। नन्द.

**'अनधीत्य द्विजो वेदाननुत्पाद्य तथा सुतान्।**
**अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन्व्रजत्यधः॥**

(१) यज्ञैः आहिताग्निर्नित्यैः पशुसोमैः। मेधा.

(२) वेदाध्ययनप्रजोत्पादनयज्ञानुष्ठानान्यकृत्वा द्विजो मोक्षमिच्छन् नरकं व्रजति। ✡गोरा.

(३) अस्य व्यतिरेकमाह — अनधीत्येति। मोक्षगार्हस्थ्ये(?) तिष्ठन्नेव स्वाध्याये यज्ञादिषु चर्णत्रयापाकरणबुद्ध्याऽप्रवर्तमानो ब्रह्मचर्यान्मोक्ष इत्यभिमानादृतुगमनादिगार्हस्थ्यनियतधर्मेभ्यो निवृत्तः प्राणायामादियोगाङ्गान्यनुतिष्ठन्नित्यर्थः। मवि.

(४) समुच्चयपक्षमाश्रित्येतरपक्षनिन्दावचनम्, न पुनः प्रतिषेधः, उदितानुदितहोमवत्। अन्यथा 'यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत्' (जाउ.४) इति प्रत्यक्षजाबालश्रुतिविरोधः स्यात्। 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवाञ्जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः। एष वा अनृणो यः पुत्री यज्वी ब्रह्मचारिवासी' इत्येतत्तैत्तिरीयश्रुतिवचनमपि समुच्चयपक्षाश्रयमेव। चका. ८०८-८०९

(५) विपक्षे त्वाह — अनधीत्येति। उक्तान्यननुष्ठायाधो व्रजतीत्यन्वयः। अर्थवादात्मकश्लोकद्वयम्। मच.

(६) द्विजः न क्षत्रियादिः। तथा च श्रुतिः — 'ब्राह्मणः प्रव्रजति' इति। भाच.

### सर्वभूताभयदानर्णत्रयापाकरणपूर्वकस्य संन्यासस्य फलम्

**'यो दत्त्वा सर्वभूतेभ्यः प्रव्रजत्यभयं गृहात्।**
**तस्य तेजोमया लोका भवन्ति ब्रह्मवादिनः॥**

(१) गार्हस्थ्यनिन्दया चतुर्थाश्रमप्रशंसा। यज्ञे हि पशवो हन्यन्ते। 'प्ररोहधर्मकाश्चेतनाः' इति दर्शने तृणौषधीनां छेद इत्येतद्भूतभयम्। तत् गृहात्प्रव्रजितस्य समारोपिताग्नेर्नास्तीत्युक्तम् — अभयं सर्वभूतेभ्यो दत्त्वेति। अनेनाशुष्काणां तृणपलाशानामनुपादानमाह। तेजोमयाः नित्यप्रकाशाः। उदयास्तमयौ यत्राऽऽदित्यस्य न विभाव्येते। यथोक्तम् 'अत ऊर्ध्वमादित्यो नैवोदेति न वाऽस्तमेति' इति 8उपनिषत्स्वित्येवमाहुर्वचांसि। मेधा.

(२) यः सर्वभूतेभ्योऽभयं दत्त्वा गृहादेव प्रव्रजति तस्य ब्रह्मस्वरूपनिरूपणार्थोपनिषदादिशास्त्रनिष्ठस्य नित्यप्रकाशका लोका भवन्ति। गोरा.

(३) गृहादिति ग्रामस्थितादरण्यस्थिताद्वेत्यर्थः। तेजोमया लोकाः ब्रह्मलोकगतास्तदेकदेशाः, 'संन्यासाद्ब्रह्मणः स्थानम्' इति पुराणेष्वभिधानात्। ब्रह्मवादिनः ब्रह्मविषयश्रौतज्ञानवतः। तेनाऽऽत्मन्यसाक्षात्कृतेऽपि संन्यासमात्राद्ब्रह्मलोकप्राप्तिरुक्ता। मवि.

(४) यः सर्वेभ्यो भूतारब्धेभ्यः स्थावरजङ्गमेभ्योऽभयं दत्त्वा गृहाश्रमात्प्रव्रजति तस्य ब्रह्मप्रतिपादकोपनिषन्निष्ठस्य सूर्याद्यालोकरहिता हिरण्यगर्भादिर्लोकास्तत्तेजसैव प्रकाशा भवन्ति, तानाप्नोतीत्यर्थः। ममु.

(५) तादृशे संन्यासे 'यो दत्त्वा' इति फलवादः। अभयं दत्त्वेत्यन्वयः। तस्य 'अहं ब्रह्मास्मि' इति

---

✡ ममु. गोरावत्।

(१) **मस्मृ.** ६।३७; **विश्व.** ३।५६-५७ तथा सुतान् (तथाऽऽत्मजान्); **मेधा.** ६।३६ (अनुत्पाद्य तथा प्रजाम्) एतावदेव; **गोरा.** वेदान (वेदम) सुतान् (सुतम्); **अप.** ३।५५-५६ पृ. ९५० था सुतान् (थाऽऽत्मजान्) चैव यज्ञैश्च (च तथा यज्ञैः) वायुपुराणम्; **मोक.** ३० वेदान (वेदम) शेषं विश्ववत्; **चका.** ८०८ यज्ञैश्च(यज्ञेषु) शेषं मोकवत्; **पमा.** १।५३२ द्विजो वे (गुरोर्वे) शेषं विश्ववत्; **गप.** ४५९ चैव यज्ञैश्च मो (विधिवद्यज्ञैर्मो) शेषं मोकवत्, (-); **मुक्ता.** १७१ यज्ञैश्च (यज्ञैस्तु) शेषं विश्ववत्; **कृभ.** २१३० पमावत्.

8 अस्माद्व्याख्यानात् "ब्रह्मवादिनः उपनिषत्सु 'यो दत्त्वा ... लोका भवन्ति' इत्येवं वचांसि आहुः" इत्येवमन्वयं मेधातिथिरभिसंधत्ते इति प्रतीयते।

(१) **मस्मृ.** ६।३९; **गोरा.** तेजोमया (ते तैजसा); **मुक्ता.** १७५; **सिन्धु.** २१४९; **यसं.** २० वादिनः (वेदिनः); **बाल.** ३।५६-५७ पृ. ९५, ३।६० पृ. १००.

ब्रह्मवादिनः। तेजोमयाः स्वप्रकाशाः लोकाः।

मच.

(६) ब्रह्मवेदिनः सगुणब्रह्मविद इत्यर्थः, तेजोमयलोकसंबन्धात्, कर्तृत्वादेरबाधितत्वात् भयाशङ्काभावाच्च। न हि परब्रह्मविदस्तेजोमयलोकसंबन्धो भयाशङ्का वा स्यात्, 'ब्रह्मैव सन्ब्रह्माप्येति' (बृउ. ४।४।६) 'न बिभेति कुतश्चन' (तैउ. २।९) इत्यादिश्रुतेः।

यसं.२०

(७) गृहनिष्क्रमणात् पूर्वमेव सर्वभूतेभ्योऽभयं दातव्यमित्याह — यो दत्त्वेति। नन्द.

**[1]यस्मादण्वपि भूतानां द्विजान्नोत्पद्यते भयम्।**
**तस्य देहाद्विमुक्तस्य भयं नास्ति कुतश्चन॥**

(१) एष एवार्थः पुनरुक्तः। देहाद्विमुक्तस्य वार्तमानिकं शरीरं यस्य पततीत्यर्थः।

मेधा.

(२) यस्य द्विजस्य सकाशाद्भूतानां सूक्ष्ममपि भयं नोत्पद्यते तस्य सांप्रतिकशरीरपातादनन्तरं कस्माच्चिदपि भयं न भवति। ×गोरा.

(३) एतत् प्रपञ्चयति — यस्मादिति। देहाद्विमुक्तस्य मृतस्य भयं नास्ति नित्याभयत्वाद्ब्रह्मलोकस्य।

मवि.

(४) 'येषां नोऽयमात्माऽयं लोकः' इति श्रुतेः किमु वाच्यं परत्र तेजोमया लोका इति? इहैव जीवन्मुक्तः स इत्याह — यस्मादिति। द्विजात् कृतसंन्यासात्। कुतश्चन यमात् राजादेश्च 'न बिभेति कुतश्चन' (तैउ. २।९) इति श्रुतेः। मच.

(५) अभयप्रदानस्य फलान्तरमाह — यस्मादिति। न केवलमिदमभयदानं संन्यासिन एव धर्मः, किंतु सर्वस्यापीति सूचितम्।

नन्द.

**[2]अनेन क्रमयोगेन परिव्रजति यो द्विजः।**
**स विधूयेह पाप्मानं परं ब्रह्माधिगच्छति॥**

(१) क्रमेण योगः अनुष्ठानम्। आत्मज्ञानकर्मणोः समुच्चये यः क्रम उक्तस्तेन ऋणापाकरणं कृत्वेत्यर्थः। विधूय पाप्मानमश्व इव रोमरजांसि तथैवाऽऽत्मविद्यया। यथोक्तम् — 'यथा पुष्करपलाश आपो न श्लिष्यन्त्येवमेतद्विदि पापं कर्म न श्लिष्यति' (छाउ. ४।१४।३) इति। परं ब्रह्माधिगच्छति तद्रूपः संपद्यते। निवृत्तभेदग्रह इति विद्याश्रमफलविधिः।

मेधा.

(२) उक्तेनाऽऽश्रमसंबन्धेन यो द्विजः प्रव्रज्यामाश्रयति, इहैव लोके कल्मषं निर्दह्य क्षयात् परं ब्रह्मरूपं संपद्यते। गोरा.

(३) क्रमयोगेन ऋणत्रयापाकरणपूर्वकम्।

मवि.

(४) परं ब्रह्म प्राप्नोति ब्रह्मसाक्षात्कारेणोपाधिशरीरनाशाद्ब्रह्मण्यैक्यं गच्छति।

*ममु.

(५) अत आह — अनेनेति। 'ब्रह्मचर्यं समाप्य गृही भवेत्, गृही भूत्वा वनी भवेत्, वनी भूत्वा प्रव्रजेत्' (जाउ. ४) इति। मच.

(६) एवं प्रतिपादितस्य यत्याश्रमस्य फलमाह— अनेनेति। अनेन उक्तेन यत्याश्रमधर्मकर्मानुष्ठानेन चातुराश्रम्यक्रमयोगेनेति। नन्द.

(७) इह शरीरं विधूय परं ब्रह्माधिगच्छति।

भाच.

आश्रमसमुच्चयः तत्र गार्हस्थ्यप्रशंसा च

**[1]ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा।**
**एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः॥**

(१) 8ननु च संन्यासिककर्माणि वक्ष्यामीति

---

× ममु., भाच. गोरावत्।

(१) मस्मृ. ६।४०; मुक्ता. १७५ पूर्वार्धे (यस्मादपीह भूतानां भयं नोत्पद्यते क्वचित्।); यसं. २०; बाल. ३।५६-५७ पृ. ९५.

(२) मस्मृ. ६।८५; मेधा. ३।१ प्रथमचरणमात्रम्; बाल. ३।५६-५७ पृ. ९५.

* शेषं गोरावत्।

8'वेदसंन्यासिकानां तु कर्मयोगं निबोधत' इति पूर्वश्लोकोत्तरार्धे प्रतिज्ञा। अत्र निर्दिष्टो वेदसंन्यासस्य गार्हस्थ्यान्तर्भावः पक्षः गोरादिभिः पूर्वश्लोकव्याख्यानेऽङ्गीकृतः, प्रव्रज्यान्तर्भावपक्षः कुल्लूकादिभिः स्वीकृतः। वेदसंन्यासस्यानाश्रमरूपत्वमिति स्वपक्षो मेधातिथिनाऽत्र स्थापितः।

(१) मस्मृ. ६।८७; ब्रक. २६८; मोक. ६५; स्मृच. १।१७३; चका. ७८२; पमा. १।४३६; संम. ४२ स्थो यतिस्तथा (स्थश्च भिक्षुकः); बाल. पृ. ८७, ३।४५,३।५६-५७ पृ. ९४; पुम. ४४५; कृभ. २१२९ स्थो यतिस्तथा (स्थोऽथ भिक्षुकः).

प्रतिज्ञयाऽऽश्रमानुक्रमणमप्रकृतम्। केचिदाहुः — न (वेद)संन्यास आश्रमान्तरम्, अत्रैवान्तर्भावोऽस्येति दर्शयितुम्। स च कस्मिन्? गृहस्थेऽन्तर्भावितः। गृहे हि वासस्तस्य। अन्यैस्तु प्रव्रज्यायाम्, सङ्गत्यागसामान्यात्। अतो(? वस्तुतो) नास्यान्तर्भावे प्रयोजनम्। पुरुषधर्मैर्यतिधर्मैश्च न यागादावधिकरिष्यति। वैशेषिकैश्च स्वशब्दविधानात्। अनाश्रमित्वात् 'संवत्सरमनाश्रमी' इति प्रायश्चित्तप्रसङ्गादिति चेत्, वचनेनैवास्या व्यवस्थाया विहितत्वात्कुतः प्रायश्चित्तप्राप्तिः तस्माद्गृहस्थादितुल्यतया संन्यासिकं प्रशंसितुमाश्रमान्तरसंकीर्तनम्। तच्च समुच्चयं द्रढयितुम्। गृहस्थानामव(?मिव) स्थितिरेषामित्यर्थः। गृहस्थः प्रभवः स्थितिहेतुरेषामिति विग्रहः। मेधा.

(२) एवं च गृहस्थवेदत्वेन (?विशेषत्वेन) वेदसंन्यासिकस्य चातुराश्रम्यान्तर्भावादाश्रमाणां चतुस्त्रिद्विसमुच्चयविकल्पबाधपक्षान् दर्शयितुं तावदिष्ट(?तच्चतुष्ट्व)माह — ब्रह्मचारीति। य एते ब्रह्मचार्या(?चर्या)दय आश्रमिणः पृथगुक्ता एते गृहस्थजन्याः। एवं च गृहस्थव्यतिरिक्ताश्रमिभिः शास्त्रव्यतिक्रमेण ज्ञातानां नास्ति हस्त(?गृहस्थ)चर्याद्याश्रमाधिकारः (?)।

गोरा.

(३) तत्र गार्हस्थ्यमेव तावत् स्तौति — ब्रह्मचारीति। एते गृहस्थप्रभवाः, गृहस्थस्यैवापत्योत्पादकत्वात् अनुत्पन्नानां चाऽऽश्रमायोगात्।

मवि.

(४) अथाऽऽश्रमसमुच्चयविकल्पौ। तत्र समुच्चयं प्रकृत्याऽऽह मनुः — ब्रह्मचारीति। गृहस्थप्रभवाः तदनुजीविनः इत्यर्थः। ϕस्मृच. १।१७३

(५) इदानीं वेदसंन्यासिकस्य प्रतिज्ञाते कर्मयोगेऽनन्तरं वक्तुमुचितेऽपि वेदसंन्यासिकः (न) पञ्चमाश्रमी निराश्रमी वा, चत्वार एवाऽऽश्रमा नियता इति दर्शयितुमुक्तानाश्रमाननुवदति — ब्रह्मचारीति। ब्रह्मचर्यादयो य एते पृथगाश्रमा उक्ता एते चत्वार एव गृहस्थजन्या भवन्ति। ममु.

ϕ चका., पुम. स्मृचवत्। कृभ. स्मृचगतम्।

(६) तत्र उपनयनेन संस्कृतः ब्रह्मचारी।

×पमा. १।४३६

(७) कुटीचकाख्यानां वेदसंन्यासिकत्वेन पञ्चमाश्रमत्वं प्राप्तमिति शङ्का स्यात्तदर्थमुक्तानाश्रमाननुवदति — ब्रह्मचारीति। एषां नैष्ठिकोपकुर्वाणषट्कर्मत्रिकर्मवालखिल्यफेनपकुटीचकबहूदकाद्यवान्तरभेदेऽपि चत्वार एव त इति। गृहस्थप्रभवाः गृहस्थमाश्रित्यैव प्रकर्षेण ते भवन्ति। गृहस्थस्यापि शिलोञ्छनादिवृत्तिर्गृहस्थमाश्रित्यैव भवति। यद्वा गृहस्थस्यैव सर्वे चत्वारः पुत्राः, तदन्येषां पुत्राभावादिति। तथा च गौतमसूत्रम् — 'एषा गृहस्यैका योनिः' ('?तेषां गृहस्थो योनिः') (गौध. ३।३) इति। मच.

(८) गृहस्थप्रभवाः गृहस्थोपजीविनः। अश्वस्तनव्रतादीनां गृहस्थानामपि गृहस्थोपजीवित्वाच्चतुर्णां ग्रहणम्।

संम. ४३

(९) न केवलं चतुर्थाश्रम एव वेदसंन्यासिकस्य परमगतिप्राप्त्युपायः, किंतु यः कश्चिदप्याश्रम इति श्लोकद्वयेनाऽऽह — ब्रह्मेति। ब्रह्मचारी ब्रह्मचर्यम्। भावप्रधाननिर्देशः। एवमुत्तरत्रापि। गृहस्थप्रभवाः गार्हस्थ्यमूलाः। अनेन गार्हस्थ्यस्य श्रैष्ठ्यं सूचितम्।

नन्द.

**'सर्वेऽपि क्रमशस्त्वेते यथाशास्त्रं निषेविताः।**
**यथोक्तकारिणं विप्रं नयन्ति परमां गतिम्॥**

(१) सर्वेऽपि चत्वारोऽपि। अपिशब्दात् त्रयो द्वावेक एव इत्येतदुक्तशास्त्रानतिक्रमेणानुष्ठिताः सन्तो यथोक्तानुष्ठातारं विप्रं ब्रह्मप्राप्तिलक्षणां गतिं प्रापयन्ति। समुच्चयविकल्पपक्षाणां 'ब्रह्मचर्यं परिसक्त (?समाप्य)' इत्यादिश्रुतिमूलं(?लत्वं) दर्शितम्। बाधपक्षेऽपि 'जरामर्यं वा एतत्सत्रं यदग्निहोत्रं जुहोति यद्दर्शपूर्णमासाभ्यां यजते' इत्यादिश्रुतिमूलत्वम्। एवं च समुच्चयविकल्पबाधपक्षाणां सर्वेषां श्रुतिमूलत्वाद्यथारुच्यन्यतमपक्षा-

× शेषं स्मृचगतम्।

(१) **मस्मृ.** ६।८८; **ब्रक.** २६८; **मोक.** ६५ स्त्रं निषेविताः (स्त्रमनुष्ठिताः); **गौमि.** ३।१; **स्मृच.** १।१७३; **चका.** ७८२ स्त्वेते (श्चैते) शास्त्रं नि (शास्त्रनि); **मुक्ता.** १७१ शास्त्रं नि (शास्त्रनि) दक्षः; **संम.** ४२.

नुष्ठानम्। नैष्ठिकत्वस्यापि श्रुतिमूलत्वं दर्शितम्। एवं च यत् कैश्चिन्नैष्ठिकत्वादीनां स्मार्तत्वाद्गार्हस्थ्येन श्रौतेन बाधः, गार्हस्थ्येऽप्यनधिकृतम् अन्धा(गार्हस्थ्यानधिकृतान्धा)दिविषयता चेत्युक्तम्, तदसत्, सर्वेषां प्रत्यक्षश्रुतिमूलत्वस्य दर्शितत्वात्।

γगोरा.

(२) सर्वेऽपि क्रमशः, न व्युत्क्रमेण। यथाशास्त्रम्, न तु स्वेच्छया। आश्रमधर्मपरिग्रहेण यथोक्तकारिणं मोक्षानुगुणत्वेनोक्तानां क्रमान्नैष्ठिकधर्मवेदसंन्यासमहाप्रस्थानध्यानाभ्यासानां कर्तारं परमां गतिं मोक्षं नयन्ति, न तु यत्याश्रममात्रम्। तथा च सर्वप्रभवत्वान्मोक्षहेतुत्वाद्गार्हस्थ्यं प्रशस्ततरमित्यर्थः।

मवि.

(३) क्रमश इत्यनेनाऽऽश्रमप्रातिलोम्यं प्रतिषिद्धमित्याह। अत एव दक्षः — 'त्रयाणामानुलोम्यं स्यात्प्रातिलोम्यं न विद्यते। प्रातिलोम्येन यो याति न तस्मात्पापकृत्तमः॥' (दस्मृ. १।८) इति। अत एव मृतभार्येण पुनर्विवाहासामर्थ्ये न ब्रह्मचारिणा भवितव्यमित्याह स एव — 'यो गृहाश्रममास्थाय ब्रह्मचारी भवेत्पुनः। न यतिर्न वनस्थश्च स सर्वाश्रमवर्जितः॥' (दस्मृ. १।९) इति।

×स्मृच. १।१७३

(४) सर्वे धर्माः ब्रह्मचर्यादयः। क्रमशः उक्तक्रमेण। निषेविताः अनुष्ठिताः। यथोक्तकारिणं यथाविध्याश्रमचतुष्टयानुष्ठातारम्। विप्रमिति मनुवचनाद्विप्रदेहस्यैव संन्यासात्मज्ञानान्मुक्तिः, 'ब्राह्मणा विविदिषन्ति' 'ब्राह्मणाः पुत्रैषणायाश्च' 'स ब्राह्मणः केन स्यात्' इति। ब्राह्मणश्रुतेः, 'गर्भस्थो वामदेवः प्रतिपेदे' इति मन्त्रलिङ्गात्, श्वेतकेतुभृग्वादिसंवादात्। काश्यादिमृतानामप्यन्येषां तात्कालिकविप्रदेहोऽनुमेय इति। परमामिति विशेषणान्मोक्षाख्याम्।

मच.

(५) यथोक्तकारिणम्, न तु यथोक्तफलैषिणम्।

नन्द.

γ ममु. गोरागतम्।
× चका. स्मृचवत्। संम. स्मृचगतम्।

***'सर्वेषामपि चैतेषां वेदश्रुतिविधानतः।**
**गृहस्थ उच्यते श्रेष्ठः स त्रीनेतान्बिभर्ति हि॥**

(१) इदमयुक्तं वर्तते। वेदशास्त्रश्रुत्या गार्हस्थ्यस्य विधानं प्रतिज्ञायते, इतरेषां च भर्तव्यत्वम्। गार्हस्थ्यस्य प्रत्यक्षश्रुतिविधाने नैवाऽऽश्रमान्तराणां सद्भावः। संनिहिततपःस्मृतिभ्यो बलीयसी श्रुतिः। अथोच्येत — नैवायमभिसंबन्धः क्रियते — वेदश्रुत्या विधानादिति। अयमभिसंबन्धः सत्यपि चैतस्मिन् (?चैतेषां) विधाने गृहस्थस्य श्रैष्ठ्यं तद्भरणनिमित्तं 'स त्रीनेतान्' इत्यनेन प्रतिपाद्यते। तत्र वक्तव्यं कथम् आश्रमान्तराणां श्रुतत्वात्(?त्वम्)? श्रौतत्वे च स्पष्टेयं स्मृतिर्विरुध्यते — 'प्रत्यक्षविधानाद्गार्हस्थ्यस्य' इत्यादिना(?का)। न च संबन्धान्तरसंभवः। अथोच्येत — 'गृही भूत्वा वनी भवेत्, वनी भूत्वा प्रव्रजेत्' (जाउ.४) इति जाबालश्रुतिमपेक्ष्य सर्वाण्येव श्रुतानीति, स्मृतिविरोधस्तावदपरिहृत एव। किंच, नैषा श्रुतिर्विधात्री। न ह्येतत् श्रुतम् — एवं वने वा विहर्तव्यम्, इमानि वनस्थेनैव कर्माणि कर्तव्यानि, इमानि प्रव्रजितेनेति। यथाऽऽधानात्प्रभृत्याचरमेष्टि सर्वं गृहस्थकर्म प्रत्यक्षमुक्तम्, नैवमाश्रमान्तराणाम्। केवलं नाममात्रं श्रूयते 'गृही (?वनी) भूत्वा' इत्यादि। तस्मात्पूर्वापरविरुद्धं गार्हस्थ्यं मूलमाश्रमाणामिवोपदिश्यते।

अत्रोच्यते — सत्यमाधानात्प्रभृति गृह(स्थ)कर्माणि प्रत्यक्षश्रुतानि कृतदारपरिग्रहस्य। तत्र विवाहे प्रयुक्तिनिरूपणात्(?क्तिर्निरूपणीया—) किं कर्मश्रुतिभिः प्रयुज्यते अग्निहोत्रादिभिः स्वाहाधिकारः श्रुते(?दौ सहाधिकारश्रुते)रर्थापत्त्योत्पत्तिविधिना, उत दृष्टेन पुरुषार्थेन? ननु रागः स्त्रीमात्रं प्रयुङ्क्ते, न विवाहम्। येन विना यन्न निष्पद्यते तत्तस्य प्रयोजकमिति न्यायः। रागिणां च स्त्रीमात्रेण गृह्यकर्मनिर्वृत्तिः। किमिति विवाहमपेक्षेरन्?

* अस्य वचनस्य बौवि. व्याख्यानमस्मिन्नेव प्रकरणे बौधायनस्य 'त्रयीं विद्यां॰'(बौध. २।११।३६) इति वचने (वका. पृ. १९८५) द्रष्टव्यम्।

(१) **मस्मृ.** ६।८९; **ब्रक.** २६८ श्रुति (स्मृति); **मोक.** ६५ ब्रकवत्; **स्मृच.** १।१७५ ब्रकवत्; **बौवि.** २।११।३६; **मुक्ता.** १६५ षामपि (षामेव); **संम.** ४३ चैतेषां (वैतेषां) शेषं ब्रकवत्; **संप्र.** ५६३ सर्वेषा (चतुर्णा) श्रुति (स्मृति); **आन.** ५५० श्रेष्ठः (सद्भिः) शेषं मुक्तावत्; **बाल.** ३।५६-५७ पृ. ९४ ब्रकवत्.

सत्यम्, यदि वचनान्तरे स्त्रीमात्रे गमनं न निषिद्धं स्यात्। समानेऽपि सर्वत्र वेदा(?भोगा)धिगमने शास्त्रतो गम्यागम्यविवेकः। अतश्च धीरप्रकृतीनां न विवाहमन्तरेण स्वार्थसंपत्तिरिति युक्तैव वेदस्य प्रयोजका(?कृत्वा)शङ्का। यद्येवं सर्वस्य न प्रयोजकानि सन्ति। सर्वेषां तस्मिन्सत्यर्थनिवृत्तौ किं तेन निरूपितेन? योऽस्ति विवाहप्रयोजकः सोऽस्तु। आश्रमान्तराणि प्रत्यक्षविधाने गार्हस्थ्यस्य कथमुपपद्यन्त इत्येतदधिकृता(?तम्) विवाहप्रयुक्तिचिन्ता तु केनांशेन संगच्छते? उच्यते – यावदुक्तं सर्वेषामर्थसिद्धिरिति। सत्यम्। एकेन प्रयुक्तावन्यस्य प्रसङ्गादुपकारसिद्धौ न पृथक्प्रयोक्तृ(त्व?) कल्पना। यथा व्रीहयः पुरुषार्थेन जीवनेन प्रयुक्ताः कर्मसु विनियुज्यन्ते। न कर्मणि(?भिः) धनार्जनं प्रयुज्यते, यथा वा विद्या सत्यप्यवैद्यस्यानधिकारे न प्रयुज्यते, स्वाध्यायविधिनैव तत्सिद्धेः। एवमिह कामतः प्रवृत्तिसिद्धेर्न कर्मश्रुतयः प्रयोक्तव्याः(? योक्त्र्यः)। तेनाकृतविवाहमपि कृत्यकर्म(?तेन कृतविवाहमधिकृत्य कर्म)विधय उपपत्स्यन्ते। अतश्च यो ब्रह्मचर्य एव कथंचित्परिपक्वकषायः स न 8विवक्ष्यते। ततः स द्वि(?सद्वि)तीयत्वाभावान्नाधिकरिष्यते। अतश्च श्रौतेष्वनधिकारात्तादृशस्याऽऽश्रमान्तरताऽऽ(?न्तरमा)पत्स्येत।

अन्ये मन्यन्ते – नायं धनतुल्यो विवाहः। यथा धनेन विना जीवनमनुपपन्नमिति, स वै जीवेद्धनतः, एवं न स्त्रियमन्तरेण जीवनाभाव इति। अत एव न दृष्टं नि(?उप)यमिनः प्रयोजनं संभवतीति धर्माधिकारार्थोऽपि प्रयुक्तो विवाहः। अवश्यं चैतदेवं विज्ञेयमधिकारोत्पत्त्यर्थे यत्नः कर्तव्य इति। इतरथा हि कृतोत्सर्गस्याशुचित्वादधिकारापनये ✡जननादि शुद्धकालावस्थे च संपादयतो न नित्यकर्मातिक्रमः स्यात्। ततश्च केनार्थेन मृता(?मृदा)दिशुद्धौ क्लेशमादध्यात् तदपि विहितमेवेति चेत्, एवं तावन्मात्रस्यातिक्रमः, न पुनर्विधिसहस्त्रस्य।

8 वहेर्लृट्। विवाहं करिष्यते इत्यर्थः।

✡ 'प्रजननादिशुद्धिमसंपादयतः' इत्यर्थपरा, अथवा 'संध्यावन्दनादि अशुद्धिकाले असंपादयतः' इत्यर्थपरा शुद्धिरत्रापेक्ष्यते।

अथोच्येत (?अत्रोच्यते) – कस्य पुनर्विधेरयं व्यापारः? यदधिकृतत्वसंपत्त्यर्थम् 'अधिकृतः स्याम्' इति पुरुषेण यत्नः कर्तव्य इत्युपदिशति। एता(? ये ता)वदग्निहोत्रादिविधयस्ते यस्याऽऽम्नायस्तद्विषयां कर्तव्यतां गमयन्ति, न त्वग्नीनामुत्पत्तिं प्रयुञ्जते। अग्नयोऽपि काम्येषु लिप्सया प्रवर्तमानेन तदधिकारसिद्ध्यर्थमाधीयन्ते। तथा हि, तेषु जातेष्वाहिताग्नित्वे यावज्जीवश्रुतयः। भार्यावतश्चाऽऽधानेऽधिकारः। यथैवाधिकारिणमात्मानं कर्तुमग्नीनाधत्ते, एवं भार्यामप्युपयच्छते। अतो न कस्यचिद्विधेरर्थः – 'विहतो यदि ना(?विवाहादिनाऽ)ग्निहोत्रादिष्वधिकारो जनयितव्यः। न विवाहविधिरेव स्वार्थकर्तव्यतामवगमयति नित्याग्निहोत्रादिश्रुतिवत्, संस्कारकर्मत्वादधिकारश्रवणाभावाच्च।

अत्र पूर्वे वदन्ति – ऋणत्रयापाकरणश्रुतिरस्ति 'जायमानो ब्राह्मणस्त्रिभिर्ऋणवाञ्जायते' इत्यादिः। एषा श्रुतिर्जातमात्रनिबन्धना न, (च?) अत्र जन्म द्वितीयमुपनयनाख्यमभिप्रेतम्, प्राक्ततस्तिर्यक्समानधर्मत्वात्। जन्मनि सति यावता कालेनाधिकारावगमो भवति तदेव ऋणश्रुत्या परिगृह्यते। ततश्च विदुषः सतः सत्यधिकारे यः कन्यां याचमानो न प्राप्नुयात्, यावत्सर्वतः पलितः, तस्य वानप्रस्थादावधिकारः । स ह्येतन्निश्चिनोति – यौवन एव कन्या सर्वथा याच्यते। कथयन्त्यन्ये – कृष्णकेशस्यैवाऽऽधानं श्रुतं भार्यामरणं वर्जयित्वा, न सर्वतः पलितेनाऽऽधातव्यमिति श्रुत्यर्थं व्याचक्षते – कर्मसंबन्धाद्गृहस्थः श्रेष्ठः, अत आश्रमस्यैव श्रैष्ठ्यमुक्तं भवति।

त्रीनेतानिति। इदमपरं श्रैष्ठ्यकारणं यदन्येषामाश्रमाणां भरणम्। तदुक्तं 'ज्ञानेनान्नेन च' (मस्मृ. ३।७८) इति। मेधा.

(२) सर्वेषामेव ब्रह्मचार्यादीनां मध्यात् गृहस्थबाहुल्येन साक्षाद्वेदवाक्यैः कर्मविधानाद्गृहस्थः श्रेष्ठ इति मन्वादिभिरुच्यते। स च यस्माद्ब्रह्मचारितापसयतीन् भिक्षादिनाऽभिपोषयति, यथोक्तम् – 'ज्ञानेनान्नेन चान्वहम्। गृहस्थैरेव धार्यन्ते' (मस्मृ. ३।७८) इति, तस्मादसौ श्रेष्ठः। # गोरा.

# आन. गोरागतं मुक्तागतं च। भाच. गोरागतम्।

(३) तदेव प्रकृतमाह — सर्वेषामिति। वेदे श्रुतितः शब्दाभिधानवृत्त्या गृहस्थस्य धर्माणामेव बाहुल्येन विधानदर्शनादितरधर्माणां तु क्वचिदेव विधानाद्बलवत्तात्पर्यं गार्हस्थ्यधर्म एव श्रुतेरित्यर्थः। श्रेष्ठत्वे हेत्वन्तरमाह — स त्रीनिति। त्रीनाश्रमान् बिभर्ति पुष्णाति। तस्माद्गृहस्थाश्रमे परोपकारबाहुल्यात्तस्य च सत्त्वशुद्धि(कर)त्वाद्गृहस्थ एव श्रेष्ठः।

मवि.

(४) प्रकृतवेदसंन्यासिकस्य गृहे पुत्रैश्वर्ये सुखे(?खं) वासं वक्ष्यति, तदर्थं गृहस्थोत्कर्षमाह — सर्वेषामिति।

*ममु.

(५) किंच — सर्वेषामिति। विधानमाचरंस्तेभ्यस्त्रीनेतान्बिभर्तीति कृत्वा श्रेष्ठः, वानप्रस्थस्यापि गृहस्थकालीनविद्याद्युपजीवित्वात्। मच.

(६) वेदश्रुतिविधानतः वेदश्रुत्या प्रत्यक्षेण विधानतः। वैदिकानामाधानादीनां कर्मणां गृहस्थमधिकृत्य विधानस्य प्रत्यक्षश्रुतिमूलत्वादित्यर्थः।

मुक्ता. १६५

(७) तथापि वेदसंन्यासिकस्य गृहस्थाश्रमः श्रेष्ठतर इत्याह — सर्वेषामिति। +नन्द.

**'यथा नदीनदाः सर्वे सागरे यान्ति संस्थितिम्।**
**तथैवाऽऽश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम्॥**

(१) एष एवार्थो दृष्टान्तेन दृढीक्रियते — यथेति। नद्यः गङ्गादयः। भिद्यादयो नदाः। केनचिदाधारसंनिवेशभेदेन रसभेदेन च नदीनदयोर्निर्देशभेदः। एकत्वविधानं तु रूढ्या। लिङ्गभेदो भार्यादारशब्दवत्। संस्थितिः आश्रयः। समुद्रो यथा सर्वजलाश्रय एवं गृहस्थः सर्वधर्मानधिकृतवान्। मेधा.

(२) यथा गङ्गाशोणाद्याः सर्वे नदीनदाः समुद्रेऽवस्थानं प्राप्नुवन्ति, एवं सर्व एव ब्रह्मचार्यादयः आश्रमिणः अन्नादिलाभार्थं गृहस्थविषयेऽवस्थितिं प्राप्नुवन्ति। ×गोरा.

(३) हेत्वन्तरमाह — यथेति। संस्थितिम् अवस्थानम्, ब्रह्मचर्यपूर्वकत्वादाश्रमान्तराणां तस्य च गृहस्थाश्रयणनियतत्वात्। अतो विश्वस्याऽऽश्रयणीयत्वादपि श्रेष्ठ इत्यर्थः। मवि.

(४) किंच — यथेति। संस्थितिं गृहस्थसमीपे इति कुल्लूकः। संस्थितिं मृतिं प्राप्य गृहस्थेष्वेव यान्ति जायन्त इति वाऽर्थः। गृहस्थे सति सम्यक्स्थितिं वा, (अ)त एव गृहस्थप्रभवा इत्युक्तम्। गृहस्थं सर्वधर्मेष्वधिकृत्यर्थमर्थवाद इति मेधातिथिः। मच.

(५) संस्थितिं प्रतिष्ठाम्। नन्द.

(६) संस्थितिम् एकत्र स्थितिम्। भाच.

वेदसंन्यासिकस्य परमगतिप्राप्तिः

**'एवं संन्यस्य कर्माणि स्वकार्यपरमोऽस्पृहः।**
**संन्यासेनापहत्यैनः प्राप्नोति परमां गतिम्॥**

(१) स्वकार्यम् आत्मोपासनं परमं प्रधानम् अस्येति स्वकार्यपरमः। अस्पृहः मनसाऽपि स्पृहा न क्वचित् कर्तव्या। मेधा.

(२) एवम् उक्तनी(?री)त्या कर्माणि अग्निहोत्रादीनि परित्यज्य आत्मज्ञानाख्यस्वकार्यप्रधानो विगताभिलाषकः संन्यासेनासंचेतितो(?सेन संचितो)त्पन्नं पापं निर्हृत्य ब्रह्मलोकं ज्ञाने वा सति मोक्षं प्राप्नोति।

गोरा.

(३) स्वकार्यपरमः स्वकर्तव्यनित्यकर्मविशेषस्वाध्यायमात्रपरः। अपहत्यैनः संसारे हेतुमधर्मम्। तदा(?द)नेन गृहस्थ एव धृत्यादिदशलक्षणधर्मानुष्ठानपरः स्वाध्यायनित्योऽनीहमानः पुत्रगृहे भुञ्जानो नित्यनैमित्तिककाम्यकर्मपरित्यागादविघ्नितात्मदृष्टिर्वेदान्तार्थपरिभावनया ब्रह्म भवतीति दर्शितम्। तत्र स्नानाचमनसंध्योपासनानि(?दि) स्वाध्यायाधिकारार्थमेवानुष्ठेयम्। 'संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु' इतिवचनेन हि संध्यानुष्ठानमपि

---

* शेषं गोरावत्।

\+ शेषं मुक्तावत्।

(१) **मस्मृ.** ६।९०; **निक.** २०९ तथैवा (एवमा) वसिष्ठो मनुश्च; **मोक.** ६५ सागरे (समुद्रे); **स्मृच.** १।१७५; **प्रकाश.** १।१४५ सागरे (समुद्रे) पू.; **मुक्ता.** १६५; **संप्र.** ५६३ नदाः (रयाः); **बाल.** ३।५६-५७ पृ. ९४; **प्रभा.** १।१४६ सर्वं प्रकाशवत्.

× ममु. गोरावत्।

(१) **मस्मृ.** ६।९६; **मोक.** ६५; **मुक्ता.** १६५ **कार्यप** (कार्ये प) हत्यैनः (हन्त्येनः); **बाल.** ३।५६-५७ पृ. ९५ **हत्यैनः** (कृत्यैनः).

शौचहेतुतया स्मर्यते। यमानां नियमानां च मध्ये यावत्स्वाध्यायाविरोधस्तावदनुष्ठेयम्। स्वाध्याये च क्रियमाणे निरन्तरं तदर्थोऽनुसंधेयः, अर्थज्ञानशून्यस्य तस्याल्पफलत्वादिति।

मवि.

(४)एवम् उक्तप्रकारेण वर्तमानोऽग्निहोत्रादिगृहस्थकर्माणि परित्यज्याऽऽत्मसाक्षात्कारस्वरूपस्वकार्यप्रधानः स्वर्गादावपि बन्धहेतुतया निःस्पृहः प्रव्रज्यया पापानि विनाश्य ब्रह्मसाक्षात्कारेण परमां गतिं मोक्षलक्षणां प्राप्नोति। ममु.

(५)स्वकार्यपरमः आत्मसाक्षात्कारप्रधान इति केचित्। तत्र 'पुत्रैश्वर्ये' (मस्मृ. ६।९५) इति वचनात् अविरक्ततया 'संन्यासाद्ब्रह्मणः स्थानम्' इत्युक्तेश्च तदुपायनारायणमन्त्रोपासनया सह स्वधर्मानुष्ठानपरो भवेदित्यर्थः। संन्यासेनापहत्य एनः पापम्, 'मनोवाक्कायकर्माणि मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा (नाउ. ६।६६)' इति मन्त्रलिङ्गादिति। परमां गतिं ब्रह्मलोकावाप्तिं प्राप्नोति। परमपदप्रयोगात् 'पुत्रैषणायाश्च' इति श्रुतेश्च। तत्राप्याश्रमे विरक्तः सन्परमहंससंन्यासं कृत्वा वा मोक्षावाप्तिरिति।

मच.

(६)अत्र संन्यासः काम्यकर्मत्यागः।

मुक्ता. १६५

(७)वेदसंन्यासिकस्य कर्मयोगानुष्ठाने फलमाह — एवमिति। स्वकार्यपरमः स्वस्य कार्य(?कार्ये)नियतः कर्मनिरतः। तत्फलेष्वस्पृहः। नन्द.

चातुराश्रम्यफलम्

**'एष वोऽभिहितो धर्मो ब्राह्मणस्य चतुर्विधः।**
**पुण्योऽक्षयफलः प्रेत्य** .............॥

(१)चतुर्विधो धर्मः चातुराश्रम्यम्। ब्राह्मणस्य सर्वमेतद्विहितम्। ननु च 'एवं गृहाश्रमे स्थित्वा विधिवत्स्नातको द्विजः' (मस्मृ. ६।१) इति द्विजग्रहणमुपक्रमे श्रुतम्। तस्य चानुपजातविरोधित्वात् त्रैवर्णिकार्थि-(?र्थ)ता निश्चिता। अतश्चेदं ब्राह्मणग्रहणं त्रैवर्णिकप्रदर्शनार्थमेव युक्तम्। यद्येकवाक्यता उपक्रमोपसंहारयोर्न स्यात् तदा नैवं स्यात्। एकवाक्यत्वे तु बलवदुपक्रमार्थः शक्यः प्रतिपत्तुम्। कृत्स्नवाक्यपर्यालोचनया योऽर्थः स निश्चीयते। अतो द्विजग्रहणं ब्राह्मणपरतयोपसंहर्तव्यम्। अस्ति ब्राह्मणस्य द्विजातित्वम्, न तु सर्वेषु द्विजातिषु ब्राह्मण्यम्। अत्रापि द्विजशब्दार्थे संभवति नान्वयिनि लक्षणा न्याय्या। तथा च महाभारते शूद्रस्यापि त्रय आश्रमाः श्रूयन्ते — 'शुश्रूषाकृतकृत्यस्य' इति उपक्रम्य 'आश्रमा विहिताः सर्वे वर्जयित्वा निरामिषम्' (भा. १२।६३।१२, १३)। पारिव्राज्यमित्यर्थः। नैव तस्यायमर्थः — सर्व आश्रमास्तु न कर्तव्याः। किं तर्हि? शुश्रूषयाऽपत्योत्पादनेन च सर्वाश्रमफलं लभते। द्विजातीन् शुश्रूषमाणो गार्हस्थ्येन सर्वाश्रमफलं लभते, परिव्राजकफलं मोक्षं वर्जयित्वा। अतो ब्राह्मणधर्म एव चातुराश्रम्यमिति सिद्धम्।

मेधा.

(२)एषः ब्रह्मचारिगृहस्थवानप्रस्थप्रव्रजितानुष्ठेयरूपः चतुःप्रकारः ब्राह्मणसंबन्धी पुण्यहेतुत्वात् पुण्यः ब्रह्मलोकापवर्गफलत्वात् परलोकेऽक्षयफलः धर्मः युष्माकमुक्तः। एवं चास्माद्ब्राह्मणग्रहणात् 'ब्राह्मणः प्रव्रजेद्गृहात्' (मस्मृ. ६।३८) इति चास्मात् 'ब्राह्मणाः प्रव्रजन्ति' इति श्रुतेर्ब्राह्मणस्यैव प्रव्रज्याधिकारः, न द्विजातिमात्रस्येत्यवसीयते। ×गोरा.

(३)उपसंहरति — एष व इति। चतुर्विधः आश्रमभेदात् ब्राह्मणस्यैव चतुर्विधः। अन्येषां तु द्विजातीनां त्रिविध एव, संन्यासे तेषामनधिकारात्। शूद्रस्य तु गार्हस्थ्य एवाधिकारादेकविध एव। ब्राह्मणस्येत्यत्र केचित् बौधायनेन परिव्राजकधर्मं प्रक्रम्य 'स्त्रीणां चैके' इति वचनात्पुंल्लिङ्गमविवक्षितमित्याहुः। एकग्रहणाद्बौधायनस्यापि स्त्रीणां पारिव्राज्यं नापेक्षितमिति विवक्षितमेव पुंल्लिङ्गमित्यन्ये। चतुर्विधोऽपि पुण्यः स्वर्गहेतुपुण्यजनकः अक्षयफलः मोक्षहेतुः।

मवि.

(४)अक्षयफलः अक्षयं द्विपरार्धकालपर्यन्तं स्थायि फलं यस्य सः। ɸ मच.

(१) मस्मृ. ६।९७; संप्र. ५६४ वोऽभि (वो वि) पू.

× ममु. गोरागतम्।
ɸ शेषं गोरागतम्।

## याज्ञवल्क्यः

ब्रह्मचर्यावधिः

**[1]प्रतिवेदं ब्रह्मचर्यं द्वादशाब्दानि पञ्च वा।**
**ग्रहणान्तिकमित्येके ......॥**

(१) कियान् पुनः काल एवं व्रतचर्यायाः? उच्यते — प्रतिवेदमिति। परिसमाप्यैकं वेदं वेदान्तरारम्भः। स चेच्छातः, न नैयमिकः। यथाऽऽह मनुः — 'वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम्।' (मस्मृ. ३।२) इति। ग्रहणान्तिकमित्येक इति। अत्रेतिकरणो हेत्वर्थः। वेदार्थत्वात् ब्रह्मचर्यस्य तत् ग्रहणान्तमेव युक्तमित्येके मन्यन्ते। विश्व.

(२) वेदग्रहणार्थं ब्रह्मचर्यावधिमाह — प्रतिवेदमिति। यदा विवाहासंभवे 'वेदानधीत्य वेदौ वा वेदं वा' इति प्रवर्तते तदा प्रतिवेदं वेदं वेदं प्रति ब्रह्मचर्यं पूर्वोक्तं द्वादश वर्षाणि कार्यम्। अशक्तौ पञ्च। ग्रहणान्तिकमित्येके वर्णयन्ति। मिता.

(३) ब्रह्मचर्यकालस्य परिमाणमाह — प्रतिवेदमिति। उक्तं ब्रह्मचर्यं तत् प्रतिवेदं प्रतिशाखं द्वादश वर्षाणि पञ्च वा वर्षाणि वेदस्वीकारान्तं वा कर्तव्यम्। अप.

(४) प्रतिवेदं स्वशाखोक्तव्रतम्। 'एका देया तिस्रो देयाः षड् देयाः' इति(वत्) पञ्चादेः फलभूमा कल्पनीयः। शक्त्यशक्तिभ्यां व्यवस्थेति कश्चित्। दीक.

(५) यावत् ग्रहणं स्वाधीनोच्चारणक्षमत्वं तावद्वा। संम. ४१

(६) ब्रह्मचर्यकालनियममाह — प्रतिवेदमिति। प्रतिशाखं स्वगृह्योक्तब्रह्मचारिव्रतं द्वादश पञ्च वा वर्षाणि कार्यम्। प्रतिवेदमित्यभिधानान्नानावेदाध्ययनमायाति। तदाह मनुः — 'वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम्। अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेत्॥' (मस्मृ. ३।२) अत्र वर्षवेदयोर्विकल्पः शक्त्यपेक्षया। फलभूमा कल्पनीय इति तु केचित्। ग्रहणान्तिकमिति। यावता कालेन शाखानां शाखयोः शाखाया वा अध्ययनं संपद्यते तावत्कालमित्यर्थः। पुरुषबुद्धितारतम्यापेक्षयोक्तकालादधिको न्यूनो वाऽध्ययनसमाप्तिकालो व्रतावधिरित्येके इत्यस्यार्थः। वीमि.

नैष्ठिकब्रह्मचर्यं तत्फलं च

***[1]नैष्ठिको ब्रह्मचारी तु वसेदाचार्यसंनिधौ।**
**तदभावेऽस्य तनये पत्न्यां वैश्वानरेऽपि वा॥**
**अनेन विधिना देहं साधयन्विजितेन्द्रियः।**
**ब्रह्मलोकमवाप्नोति न चेहाऽऽजायते पुनः॥**

संन्यासेन मानसपापेभ्यः शुद्धिः

**[2]संन्यासो वै द्विजन्मनाम्॥**

(१) संन्यासः प्रव्रज्या द्विजन्मनां मानसापचारे शुद्धिकृत्। +मिता.

(२) ब्राह्मणाश्च संन्यासेन पापात् शुध्यन्ति। दीक.

(३) द्विजन्मनां ब्राह्मणानां च मानसपापवतां संन्यासः प्रव्रज्या शुद्धिकृत्। वीमि.

वानप्रस्थ्ये पत्नीसाहित्यराहित्यविकल्पः

**[3]सुतविन्यस्तपत्नीकस्तया वाऽनुगतो वनम्।**
**वानप्रस्थो ब्रह्मचारी साग्निः सोपासनो व्रजेत्॥**

(१) एवं तावदाश्रमद्वयमभिहितम्। इदानीं गृहस्थाश्रममुपभुज्य वलीपलितवतो विद्यमानसंतानस्य विषयविरक्तस्य च क्रमप्राप्तस्तृतीयो वानप्रस्थाश्रम उच्यते। पूर्वं तु वेदानुवचनात्मकात् ब्रह्मचर्यादनन्तरं 'यमिच्छेत् तमावसेत्' इत्येवं न्यायागमानुसारेण व्युत्थानपक्षोऽ-

(१) **यास्मृ.** १।३६; **मेधा.** ३।१ (पञ्च वा०) पू. स्मृत्यन्तरम्; **ब्रक.** २६३; **स्मृच.** १।१६६; **ममु.** ३।१ पू.; **चका.** ७७९; **पमा.** १।४५७; **प्रपा.** २४३; **चमव्या.** ४६; **मुक्ता.** ११९; **संम.** ४१; **विपा.** २।५०३ योगीश्वरः; **संप्र.** ५५८; **पुम.** ४४४.

* व्याख्यानसंग्रहः ब्रह्मचारिधर्मान्तर्गते 'नैष्ठिकधर्माः' इत्यस्मिन् प्रकरणे द्रष्टव्यः।

\+ अप. मितागतम्।

(१) **यास्मृ.** १।४९-५० शेषः स्थलादिनिर्देशः ब्रह्मचारिधर्मान्तर्गते 'नैष्ठिकधर्माः' इत्यस्मिन्प्रकरणे द्रष्टव्यः।

(२) **यास्मृ.** ३।३२; **अप.** सो वै (सोऽथ); **मुक्ता.** १७५ अपवत्; **वीमि.** सो वै (सो हि); **यसं.** २० अपवत् : १५४ सो वै (सोऽपि) (-).

(३) **यास्मृ.** ३।४५; **विश्व.** वनम् (वने) सोपासनो व्रजेत् (सौपासनः क्षमी); **अप.** ३।४४; **मोक.** १३ सोपा (सौपा); **पमा.** १।५२४; **मुक्ता.** १६९ मोकवत्; **संम.** ८३; **विपा.** ५।४९२ वनम् (वने) सनो (यनो); **कृभ.** १२८८ (-).

भिहितः। तत्र समुच्चयपक्षस्त्विदानीमुच्यते। ननु च युक्तं यद्वैराग्यातिशयात् दाराहरणाद्यनपेक्षस्य व्युत्थायाऽऽश्रमान्तराङ्गीकरणम्। कृतदारस्य तु कामाकृष्टचेतसो यावज्जीवश्रुत्यवरुद्धस्य तद्विरोधितया चाप्रमाणीभूतस्मृत्यर्थानुसारिणी दुःश्लिष्टैवाऽऽश्रमान्तरप्रतिपत्तिः। अथ पुनर्वैराग्ययोगादेवेत्युच्यते। तदसत्, प्रतिपत्तिकाल एव हि शास्त्रार्थो निरूप्यते, न त्वनुष्ठीयमानप्रयोगमध्येऽपि। ननु च यथैव कामिनोऽधिकृतस्यापवृत्तकामस्य प्रयोगमध्येऽप्यनधिकारात् व्युत्थानम्, एवमत्रापि स्यात्। अपि च जीवतोऽपि प्रयोगपर्यन्त एवाधिकारः। तत्र पौर्णमास्यन्तरे पूर्वप्रारब्धप्रयोगपर्यवसानात् प्रयोगान्तरे च वैराग्यातिशयादधिकारानवगतेः। मैवम्, युक्तं हि कामिनः, फलं प्रति साधनभूत एव धात्वर्थेऽधिकारावगमात् वीतायां च फलेच्छायां तद्व्यावृत्तेः। जीवतः पुनर्न विध्यर्थादन्यत्र यागादेः साधनत्वम्। न च नियोज्यत्वव्यावृत्तिः, जीवनानपायात्। प्रयुक्तदारत्वाच्च न तद्वतोऽपि विशेषः पूर्ववदत्र कश्चिच्छक्यते वक्तुम्। प्रयोगभेदाभेदौ त्वधिकारहेत्वनपायादकिंचित्करावेव। अत्र(? अतः) श्रुतिविरोधात् क्रमेणायुक्त एव वनस्थाश्रमः। अत एव च गौतमेन 'ऐकाश्रम्यं त्वाचार्याः प्रत्यक्षविधानाद्गार्हस्थ्यस्य' (गौध. ३।३६) इत्युक्तम्। तत्रान्ये पुरुषमेधान्ते वनस्थाद्याश्रममाहुः, प्रत्यक्षचोदनानुसारात्। तथा हि – 'अथाऽऽत्मन्यग्नीन् समारोप्य' इति प्रकृत्य 'अनवेक्षमाणोऽरण्यं गच्छेत्' इत्यादि। तदप्यविशेषेणैव वनस्थादिस्मृत्यारम्भादनुपयोगिप्रायमेव। जरामर्यवचनं तु लिङ्गात् न्यायान्तरापेक्षव(च?) – नविध्यनुमानं प्रत्यक्षविधिविरोधात् 8। अतो (न) वक्तव्यमेतत्। अत्राभिधीयते – कामादिभिः प्रयुक्तदाराणां यावज्जीवश्रुतिरित्येतत् प्रागप्युक्तमेव। अपगतकामत्वे च तदप्रयुक्ता नैवाग्निहोत्रादिभिर्दाराः प्रयोक्तुं शक्याः। तदभावाच्च कृतदारेषु चरितार्थतया यावज्जीवश्रुत्यनधिकृतानां किमित्याश्रमान्तरं न स्यात्?

ननु चोत्पत्तिं विधयो न प्रयुञ्जते। उत्पन्नस्य तु दारादेः स्वोत्पत्तिहेत्वपायेऽपि स्वरूपानपायात् तदपेक्षत्वेऽप्यधिकारचोदनानामविरोध एव। न हि कामापाये दाराणामतथात्वम्, अन्यथाऽनेकपत्नीकस्यैकपत्नीविषयकामापगमादपत्नीकत्वप्रसङ्गात् स्मृतिविरोधोऽपि स्यात्।

नैव वयमुत्पत्तिनिमित्तत्वेन कामापायादपत्नी(क)त्वं ब्रूमः। किं तर्हि? स्वीकृतं हि स्त्री द्रव्यम्। स्वीकरणहेतुर्विवाहसंस्कारः। स्वीकरणं च द्रव्याणां यावत्कार्यं यावत्स्वरूपं वा स्वीकर्त्रभिप्रायानुसारेण। तत्र यद्यत्यन्तकामाकृष्टचेतनस्तदाऽऽदावेव यावज्जीवचोदनामालोच्य स्वरूपाश्रयत्वेनैवात्यन्तायोद्वाहकर्मणा स्वीकुर्यात्, ईषत्कामाकृष्टचेतनस्तु यावदर्थम्। आ वलीपलितसंभवात् संतानार्थतया वाऽऽपुत्रोत्पत्तेरेव स्वीकरणदारत्वात् (?स्वीकरणाद्दारत्वस्य) उक्तावध्यन्ततैव। दाराभावाच्चाकृतदारस्येव यावज्जीवश्रुतिरनियोक्त्र्येव। अतस्तद्विरोधोऽप्यनाशङ्कनीयः। स्वीकरणावधिव्यवस्थायां तु जीवनश्रुतेः कृतदाराधिकारत्वादेवौदासीन्यमित्यविरुद्धा क्रमेणापि चतुःसमुच्चयस्मृतिः। एवं च जरामर्यवचनमप्यपेक्षितावधिसमर्पकत्वात् स्मृतिमूलत्वेन सालम्बनं भवति, अन्यथा तु निरालम्बनत्वादनर्थकमेव स्यात्। गौतमीयमपि यावज्जीवपक्षाङ्गीकरणेनैव 'ऐकाश्रम्यं त्वाचार्याः' इति व्याख्येयम्। प्रत्यक्षेणैव कामेनाऽऽत्मसात्कृतदारान् प्रति तथैव विधानाद् गार्हस्थ्यस्येत्यभिप्रायः। एवं चावधिपर्यवसानात् दाराभाव एव। अतश्चास्मिन् पक्षे पुत्रादिषु तत्पालकत्वेनाधिकृतेषु स्वभार्याङ्गीकरण प्रवर्तिकेति(?) विषयभेदेन विकल्पसंभवात् अविशेषेणैव हि यावज्जीवश्रुतिः। पुरुषमेधयाजिनश्चेच्छयाऽरण्यगमनोपदेशादुभयोश्च प्रत्यक्षत्वात् विषयव्यवस्थाश्रयणमविरुद्धम्। सपत्नीकस्य तु वैखानसत्वं यायावरादिकल्पवच्छ्रुत्यविरुद्धमेव। अतश्चास्मिन्पक्षे साग्निकस्यैवारण्याश्रयणम्, न श्रामणकानुसारेणाग्न्याधानम्। यावज्जीवपक्षाङ्गीकरणे तु जरादिसंयोगात् भार्यामरणे वाऽपवृत्तकामस्य च तदसंभवे किं वनस्थाधिकारोऽस्तीति, उत्सन्नाभिलाषस्य तावत् दाराद्याहरणहेत्वभावादस्त्येव, इतरस्य तु विचार्यम्। अपर आह – उद्वाहकाल एव हि येनैव निरूपितं 'मयाऽऽश्रमान्तरमप्यास्थेयम्' इति, तस्य तदवधिक एव हि दारसंयोग इति तदनुसारी च जीवनाधिकारोऽपि तदैवापमृज्यते। येन त्वादावेवाऽऽमरणान्तः पत्नीसंयोगोऽवधृतः, तदनुसारेण

8 'अनुपयोगिप्रायम्' इति पूर्वतोऽनुवृत्तं शेषः।

चाऽऽमरणादेवाग्निहोत्राद्यधिकारः। तस्योत्सन्नाभिलाषित्वेऽपि च संकल्पानपगमाज्जीवनश्रुत्यवरुद्धस्य कुतस्तदाऽऽश्रमान्तरप्रतिपत्तिरिति। तथा च स्मरन्ति — 'पुनर्दारक्रियां कुर्यात् पुनराधानमेव च' इति। तदेतद्विचार्यम्। सर्वथाऽऽश्रमसमुच्चयोऽस्तीति नः पक्षः। स चैवमप्युपपन्नः। पूर्वोक्त एव तु ज्यायान् इति संप्रदायः। 'पुनर्दारक्रियाम्' इत्येतत्त्वप्रवृत्ताश्रमान्तरविषयमेवेत्येषा दिक्।

उभयथाऽपि च वनस्थाश्रमप्रवृत्तिमव्याहतां मन्यमानः प्रस्तौति — सुतेति। स्यादिति शेषः। तपो वेदविदां शुद्धिसाधनम्, क्षान्तिर्विदुषाम्(यास्मृ. ३।३३) इति, तदिदानीं प्रपञ्चयति। वानप्रस्थ इति विशेषाश्रमिणो नामधेयम्। स कदाचित् पूर्वोक्तन्यायानुसारेण सहैव पत्न्या वनं गच्छेत्, विन्यस्य वा सुतादिषु पत्नीम्। यदा च सपत्नीकस्तदा तयाऽनुगतोऽपि वने वसन् ब्रह्मचार्येव स्यादित्यभिप्रायः। पक्षान्तरे तु सामर्थ्यप्राप्तत्वादवाच्यमेवैतत्। साग्निरिति वैतानिकाभिप्रायम्। सौपासनः आवसथ्ययुक्तः। गतार्थमन्यत्।

विश्व.

(२) चतुर्णामाश्रमिणां मध्ये ब्रह्मचारिगृहस्थयोर्धर्माः प्रतिपादिताः। सांप्रतमवसरप्राप्तान्वानप्रस्थधर्मान्प्रतिपादयितुमाह — सुतेति। वने प्रकर्षेण नियमेन च तिष्ठति चरतीति वानप्रस्थः, वनप्रस्थ एव वानप्रस्थः। संज्ञायां दैर्घ्यम्। भाविनीं वृत्तिमाश्रित्य वनं प्रतिष्ठासुरिति यावत्। असौ सुतविन्यस्तपत्नीकः 'त्वयेयं भरणीया' इत्येवं सुते विन्यस्ता विक्षिप्ता पत्नी येन स तथोक्तः। यदि सा पतिपरिचर्याभिलाषेण स्वयमपि वनं जिगमिषति तदा तया अनुगतो वा सहितः। तथा ब्रह्मचारी ऊर्ध्वरेताः, साग्निः वैतानाग्निसहितः, तथा सोपासनः गृह्याग्निसहितश्च वनं व्रजेत्। सुतविन्यस्तपत्नीक इति वदता कृतगार्हस्थ्यो वनवासेऽधिक्रियत इति दर्शितम्। एतच्चाऽऽश्रमसमुच्चयपक्षमङ्गीकृत्योक्तम्। इतरथा 'अविप्लुतब्रह्मचर्यो यमिच्छेत्तु तमावसेत्' इत्यकृतगार्हस्थ्योऽपि वनवासेऽधिक्रियत एव। अयं च वनप्रवेशो जराजर्जरकलेवरस्य जातपौत्रस्य वा। यथाऽऽह मनुः — 'गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः। अपत्यस्यैव चापत्यं तदाऽरण्यं समाश्रयेत्॥' (मस्मृ. ६।२) इति। अयं च पुत्रेषु पत्नीनिक्षेपो विद्यमानभार्यस्य, मृतभार्यस्याप्यापस्तम्बादिभिः वनवासस्मरणात्। अतो यत् 'दाहयित्वाऽग्निहोत्रेण' (यास्मृ. १।८९) इति पुनराधानविधानं तदपरिपक्वकषायविषयम्। साग्निः सोपासनः इत्यत्रापि यदाऽर्धाधानं कृतं तदा श्रौताग्निभिर्गृह्येण च सहितो वनं व्रजेत्, सर्वाधाने तु श्रौतैरेव केवलम्, यदि कथंचिज्ज्येष्ठभ्रातुरनाहिताग्नित्वादिना श्रौताग्नयोऽनाहितास्तर्हि केवलं सोपासनो व्रजेदित्येवं विवेचनीयम्। अग्निनयनं च तन्निर्वर्त्याग्निहोत्रादिकर्मसिद्ध्यर्थम्। अत एव मनुः — 'वैतानिकं च जुहुयादग्निहोत्रं यथाविधि। दर्शमस्कन्दयन्पर्व पौर्णमासं च शक्तितः॥' (मस्मृ. ६।९) इति। ननु च पुत्रनिक्षिप्तपत्नीकस्य तद्विरहिणः कथमग्निहोत्रादिकर्मानुष्ठानं घटते? 'पत्न्या सह यष्टव्यम्' इति सहाधिकारनियमात्। सत्यमेवम्, किंत्वत्र पत्नीनिक्षेपविधिबलादेव तन्नैरपेक्ष्येणाधिकारः कल्प्यते। यथा हि रजस्वलायां 'यस्य व्रत्येऽहनि पत्न्यनालम्भुका स्यात्तामपरुध्य यजेत' (तैब्रा. ३।७।१।९) इत्यपरोधविधिबलात्तन्निरपेक्षता। यद्वा, वनं प्रतिष्ठमानमेव पतिं पत्न्यनुमन्यत इति न विरोधः। न च यथा ब्रह्मचारिणो विधुरस्य वा वनं प्रस्थितस्याग्निहोत्रादिपरिलोपस्तथा निक्षिप्तपत्नीकस्याप्यग्निहोत्राद्यभाव इति शङ्कनीयम्, अपाक्षिकत्वेन श्रवणात्। न च ब्रह्मचारिविधुरयोरप्यग्निसाध्यकर्मस्वनधिकारः, पञ्चममासादूर्ध्वमाहितश्रावणिकाग्नेस्तदधिकारदर्शनात्, 'वानप्रस्थो जटिलश्चीराजिनवासा न फालकृष्टमधितिष्ठेत्, अकृष्टं मूलफलं संचिन्वीत, ऊर्ध्वरेताः, क्ष्माशयः, दद्यादेव न प्रतिगृह्णीयात्, ऊर्ध्वं पञ्चभ्यो मासेभ्यः श्रावणिकेनाग्नीनाधायाऽऽहिताग्निर्वृक्षमूलको दद्याद्देवपितृमनुष्येभ्यः, स गच्छेत्स्वर्गमानन्त्यम्' (वाध. ९।१-१२) इति वसिष्ठस्मरणात्। चीरं वस्त्रखण्डो वल्कलं वा। न फालकृष्टमधितिष्ठेत् कृष्टक्षेत्रस्योपरि न निवसेत्। श्रावणिकेन वैदिकेन मार्गेण, न लौकिकेनेत्यर्थः।

*मिता.

* मोक., दीक., संम., वीमि. मितागतम्।

(३)कृतब्रह्मचर्यो गृहस्थाश्रमेऽधिकृत इति ब्रह्मचर्यानन्तरं गृहस्थाश्रम उक्तः। वानप्रस्थस्तु गृही ब्रह्मचारी वा भूत्वा भवतीति तदुभयाभिधानान्तरं वानप्रस्थाश्रममाह — सुतेति। वानप्रस्थः संकल्पितवानप्रस्थाश्रमः सुतेषु पत्नीं विन्यस्य निर्वाह्यतया निधाय, अथवा तया अनुगतः अन्वितः, ब्रह्मचारी मैथुनत्यागी, यदि सपत्नीको व्रजेत्तदाऽसौ साग्निः अग्निसहितः सोपासनश्च व्रजेत्। पत्नीस(?र)हितस्य गृहप्रव्रज्यामेवाऽऽह छागलेयः — 'पुत्रेषु भार्यां संस्थाप्य वनं गच्छेद्यथाविधि। अपत्नीकः समारोप्य ब्राह्मणः प्रव्रजेद्गृहात्॥' इति। अप.

(४)वानप्रस्थो बुभूषुः स्वस्य ब्रह्मचर्यनियमेन पत्न्या अनुपयोगात्तां रक्षणीयत्वेन पुत्रेषु निःक्षिप्य वनं व्रजेत्। यदा साऽपि नियता सती पतिशुश्रूषां कामयते, तदा तया सह वनं व्रजेत्। तस्मिन् पक्षे वैतानिकगृह्याभ्यामग्निभ्यां सह गच्छेत्। सुतनिक्षेपपक्षे त्वात्मनि अग्नीन् समारोप्य प्रव्रजेत्। तदाह छागलेयः — 'अपत्नीकः समारोप्य ब्राह्मणः प्रव्रजेद् गृहात्' इति। पमा. १।५२४-५२५

गृहस्थवानप्रस्थयोः संन्यासेऽधिकारः

**[१]वनाद्गृहाद्वा कृत्वेष्टिं सार्ववेदसदक्षिणाम्।**
**प्राजापत्यां तदन्ते तानग्नीनारोप्य चाऽऽत्मनि॥**
**[२]अधीतवेदो जपकृत्पुत्रवानन्नदोऽग्निमान्।**
**शक्त्या च यज्ञकृन्मोक्षे मनः कुर्यात्तु नान्यथा॥**

(१)एवं यथोक्तविध्यर्थानुष्ठानात् प्रतिषिद्धार्थोपेक्षणाच्चोत्पन्नवैराग्यतया संजातसम्यग्विज्ञानः परं ब्रह्माऽऽपिपयिषुः निरस्ताखिलसांसारिकसुखास्वादाभिलाषः स्वरुग्निवैकल्पिकत्वेन — गृहादिति। प्राजापत्येष्टिस्वरूपं समारोपणप्रकारश्च संन्यासविधानशास्त्रादेवावसेयम्। मोक्षे मनः कुर्यात् चतुर्थमाश्रममाश्रयेदित्यर्थः। तुशब्दोऽधीतवेदादिक्रमेणैवेत्यवधारणार्थः। नान्यथेति तु सामर्थ्यप्राप्तत्वात् प्रशंसार्थो नित्यानुवादः। तथा च स्वायंभुवम् 'अनधीत्य द्विजो वेदाननुत्पाद्य तथाऽऽत्मजान्। अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन् व्रजत्यधः॥' (मस्मृ. ६।३७) इति। नन्वनधीतवेदस्य कामं मा भूत् पारिव्राज्यम्, पुत्राद्यभावे तु को विरोधः? उक्तमेतद् 'रागिणामेव गार्हस्थ्यम्' इति। तद्यदि कृतदारोऽपि पुत्राद्युत्पत्तावप्रयत्यैव पारिव्राज्यमाश्रयेत् ततश्चोदनार्थातिक्रमात् मोक्षमिच्छन् व्रजत्यधः' (मस्मृ. ६।३७) इति युक्तमेव। वीतरागविषयतया तु 'यमिच्छेत् तमावसेत्' इत्युक्तमेव। स्पष्टमन्यत्। विश्व.

(२)वैखानसधर्माननुक्रम्य क्रमप्राप्तान्परिव्राजकधर्मान् सांप्रतं प्रस्तौति — वनादगृहाद्वेति। यावता कालेन तीव्रतपःशोषितवपुषो विषयकषायपरिपाको भवति, पुनश्च मदोद्भवाशङ्का नोद्भाव्यते, तावत्कालं वनवासं कृत्वा तत्समनन्तरं मोक्षे मनः कुर्यात्। वनगृहशब्दाभ्यां तत्संबन्ध्याश्रमो लक्ष्यते। मोक्षशब्देन च मोक्षैकफलकश्चतुर्थाश्रमः। अथवा गृहात् गार्हस्थ्यादनन्तरं मोक्षे मनः कुर्यात्। अनेन च पूर्वोक्तश्चतुराश्रमसमुच्चयपक्षः पाक्षिक इति द्योतयति। तथा च विकल्पो जाबालश्रुतौ श्रूयते — 'ब्रह्मचर्यं परिसमाप्य गृही भवेत्, गृही भूत्वा वनी भवेत्, वनी भूत्वा प्रव्रजेत्। यदि, वेतरथा ब्रह्मचर्यादेव प्रव्रजेत्, गृहाद्वा वनाद्वा' (जाउ.४) इति। तथा गार्हस्थ्योत्तराश्रमबाधश्च गौतमेन दर्शितः — 'ऐकाश्रम्यं त्वाचार्याः, प्रत्यक्षविधानाद्गार्हस्थ्यस्य' (गौध. ३।३६) इति। एतेषां च समुच्चयविकल्पबाधपक्षाणां सर्वेषां श्रुतिमूलत्वादिच्छया विकल्पः। अतो यत्कैश्चित्पण्डितंमन्यैरुक्तम् — 'स्मार्तत्वान्नैष्ठिकत्वादीनां गार्हस्थ्येन श्रौतेन बाधः, गार्हस्थ्यानधिकृतान्धक्लीबादिविषयता वा' इति, तत्स्वाध्यायाध्ययनवैधुर्यनिबन्धमित्युपेक्षणीयम्। किंच, यथा विष्णुक्रमणाज्यावेक्षणाद्यक्षमतया पङ्ग्वादीनां श्रौतेष्वनधिकारस्तथा स्मार्तेष्वप्युदकुम्भाहरणभिक्षाचर्यादिष्वक्षमत्वात्कथं पङ्ग्वादिविषयतया नैष्ठिकत्वाद्याश्रमनिर्वाहः अस्मिंश्चाऽऽश्रमे ब्राह्मणस्यैवाधिकारः, मनुः — 'आत्मन्यग्नीन्समारोप्य

(१) **यास्मृ.** ३।५६; **विश्व.** वनाद्गृहाद्वा (गृहाद्वनाद्वा) सार्व (सर्त्र); **अप.** ३।५५ विश्ववत्; **मोक.** ३१ सार्व (सर्व); **पमा.** १।५३० मोकवत्; **मर.** ६१४; **मुक्ता.** १७१; **सिन्धु.** २१२९; **संम.** ८४; **विपा.** ५।४९४ पत्यां (पत्यं); **बाल.** ३।६० पृ. ९९. दक्षिणाम् (दक्षिणम्) पत्यां (पत्यं).

(२) **यास्मृ.** ३।५७; **अप.** ३।५६ कुर्यात्तु (कुर्याच्च); **मोक.** ३१; **पमा.** १।५३०; **मर.** ६१४; **मुक्ता.** १७१; **सिन्धु.** २१२९; **संम.** ८४; **विपा.** ५।४९४; **यसं.** २; **बाल.** ३।६० पृ. ९९.

ब्राह्मणः प्रव्रजेद्गृहात्' (मस्मृ. ६।३८) तथा 'एष वोऽभिहितो धर्मो ब्राह्मणस्य चतुर्विधः' (मस्मृ. ६।९७) इत्युपक्रमोपसंहाराभ्यां मनुना ब्राह्मणस्याधिकारप्रतिपादनात्। 'ब्राह्मणाः प्रव्रजन्ति' इति श्रुतेश्चाग्रजन्मन एवाधिकारः, न द्विजातिमात्रस्य। अन्ये तु त्रैवर्णिकानां प्रकृतत्वात्, 'त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमाः' इति सूत्रकारवचनाच्च द्विजातिमात्रस्याधिकारमाहुः। यदा वनाद्गृहाद्वा प्रव्रजति तदा सार्ववेदसदक्षिणां सार्ववेदसी सर्वधनसंबन्धिनी दक्षिणा यस्याः सा तथोक्ता, तां प्रजापतिदेवताकामिष्टिं कृत्वा तदन्ते तान्वैतानानग्नीनात्मनि श्रुत्युक्तविधानेन समारोप्य, चशब्दात् 'उदगयने पौर्णमास्यां पुरश्चरणमादौ कृत्वा शुद्धेन कायेनाष्टौ श्राद्धानि निर्वपेत्, द्वादश वा' इति *बौधायनाद्युक्तं पुरश्चरणादिकं च कृत्वा तथाऽधीतवेदो जपपरायणो जातपुत्रो दीनान्धकृपणार्पितार्थो यथाशक्त्यन्नदश्च भूत्वाऽनाहिताग्निर्ज्येष्ठत्वादिना प्रतिबन्धाभावे कृताधानो नित्यनैमित्तिकान्यज्ञान् कृत्वा मोक्षे मनः कुर्यात् चतुर्थाश्रमं प्रविशेत्, नान्यथा। अनेनानपाकृतर्णत्रयस्य गृहस्थस्य प्रव्रजायामनधिकारं दर्शयति। यथाऽऽह मनुः — 'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्। अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः॥' (मस्मृ. ६।३५) इति। यदा तु ब्रह्मचर्यात्प्रव्रजति तदा न प्रजोत्पादनादिनियमः, अकृतदारपरिग्रहस्य तत्रानधिकारात्, रागप्रयुक्तत्वाच्च विवाहस्य। न च ऋणत्रयापाकरणविधिरेव दारानाक्षिपतीति शङ्कनीयम्, विद्याधनार्जननियमवदन्यप्रयुक्तदारसंभवे तस्यानाक्षेपकत्वात्। ननु 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवाञ्जायते, ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः' इति जातमात्रस्यैव प्रजोत्पादनादीन्यावश्यकानीति दर्शयति। मैवम्, न हि जातमात्रः अकृतदाराग्निपरिग्रहो यज्ञादिष्वधिक्रियते। तस्मादधिकारी जायमानो ब्राह्मणादिर्यज्ञादीननुतिष्ठेदिति तस्यार्थः। अतश्चोपनीतस्य वेदाध्ययनमेवाऽऽवश्यकम्, कृतदाराग्निपरिग्रहस्य प्रजोत्पादनमपीति निरवद्यम्।

ф मिता.

[एवं सिद्धान्तमुक्त्वैकदेशिमतमाह — अन्ये त्विति। सूत्रमाह — त्रयाणामिति। अपरार्केऽपि — 'ऋणत्रयमपाकृत्य निर्ममो निरहंकृतिः। ब्राह्मणः क्षत्रियो वाऽथ वैश्यो वा प्रव्रजेत् गृहात्' इति। धर्मविवृतावपि — 'ब्राह्मणः क्षत्रियो वैश्यस्ततो गच्छेद्वनं कृती। संन्यसेद्वाऽथवा शान्तः सर्वभूतदयापरः॥' इति। ननु क्षत्रियादेरेतन्निषेधपराण्यपि वाक्यानि वक्ष्यमाणानीति तेषां का गतिरिति चेत्, उच्यते — 'अबाधेनोपपत्तौ बाधो न न्याय्यः इति न्यायेन श्रुतिस्मृतिविरोधपरिहाराय विधिवाक्यानामाश्रमरूपविधौ तात्पर्यम्, निषेधवाक्यानां तु दण्डादिग्रहणमात्रनिषेधे तात्पर्यम्। तस्मात्क्षत्रियादेरपि तन्मात्रनिषेधः, नाऽऽश्रमनिषेधः। एवं च ब्राह्मणपदमात्रघटितानि वाक्यान्यप्युपलक्षणपरतया 'ब्रह्म वेदः तन्निष्ठस्तदध्ययनवान् ब्राह्मणः' इति व्युत्पत्तिपरतया वा नेयानीति न कोऽपि विरोधः, उक्तश्रुतौ तु बहुवचनाद्यर्थलाभोऽपि सुवच इत्येतन्मततात्पर्यम्।

'अत्र अन्ये तु' (इति?) इत्यनेनारुचिः सूचिता। सा चेत्थम् — 'श्रुतिस्मृतिविरोधे तु श्रुतिरेव बलीयसी। अतः श्रुत्यनुसारेण व्यवस्था च विधीयते॥' इत्युक्तेः 'ब्राह्मणः(?णाः) प्रव्रजति(?न्ति)' इति श्रुत्या ब्राह्मणत्वजातिप्रवृत्तिनिमित्तकब्राह्मणशब्दबोध्यब्राह्मणोद्देशेन प्रव्रज्या विधीयते, हविरुभयत्ववदुद्देश्यविशेषणस्याविवक्षिततत्वेऽपि हविर्वत् ब्राह्मणत्वस्योद्देश्यस्य विवक्षितत्वात्। न चोपलक्षणत्वम्, मानाभावात्। न च बहुवचनात्तदर्थलाभः, ब्रह्मचर्याद्याश्रमभेदभिन्नानां त्रयाणां संग्रहेण तस्य साफल्येऽन्यथानुपपत्त्यभावेनागतिकगत्याश्रयणस्यायुक्तत्वात्। न चोक्तव्युत्पत्त्या त्रयाणामपि ग्रहणम्, 'रूढिर्योगमपहरति' इति न्यायेन सकललोकतन्त्रप्रसिद्धब्राह्मणत्वजातिमात्रार्थस्य त्यागे मानाभावात् अन्यथा 'गच्छति गौः, इति व्युत्पत्त्या तेनान्यस्यापि तादृशस्य ग्रहणं यतस्तस्मात्क्षत्रियादिशब्दवदयमपि तथैवेति तत्रैव श्रुतितात्पर्यमिति तस्यैवाधिकारः। अत एव दत्तात्रेयोऽपि 'मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम्। बाहुजातोरुजातानामयं धर्मो न विद्यते' इति, 'गतिस्तुर्याश्रमे प्रोक्ता मुखजानां स्वयंभुवा' इति च लिङ्गधारणनिषेधमात्रपरत्वं तु नास्य

* बौधायनीयगृह्य - धर्म - श्रौतादिसूत्रेषु वचनमिदं नोपलभ्यते।

ф दीक., मर. मितागतम्।

युक्तम्, आश्रमसत्त्वे तल्लिङ्गाभावस्यान्यत्रादृष्टत्वात्, गत्यन्तरसंभवे तथा कल्पनानौचित्याच्च। धर्मविवृतावपि – 'संन्यसेद्ब्राह्मणः सम्यग्वानप्रस्थो भवेन्नृपः। वानप्रस्थो भवेद्वैश्य एवं वर्णक्रमः स्मृतः॥' इति। अस्यापि प्रागुक्तरीत्याऽर्थान्तरकरणं तु तत एवायुक्तम्। एतेन 'जायमानो वै ब्राह्मणः' इतिवदत्रापि श्रुतौ ब्राह्मणशब्दस्त्रैवर्णिकपर इत्यपास्तम्, 'ब्रह्मचर्येण' इत्यादिवाक्यशेषस्येवात्र कस्यचिद्गमकस्याभावात्, लब्धात्मिकाया रूढेः प्राबल्याच्च, अनुपपत्तेरभावेन लक्षणाया असंभवाच्च। नन्वेवमुक्तस्मार्तवचनानां का गतिरिति चेत्, शृणु। अप्रमाणानि तानि 'औदुम्बरी सर्वा वेष्टयितव्या' इतिवदिति केचित्। अन्ये तु – अपरार्कोक्तस्मृत्यन्तरस्य प्र(?स्थप्र)व्रजेदित्यस्य वानप्रस्थाश्रमं गच्छेदित्यर्थः। यद्यपि प्रव्रज्याशब्दस्य संन्यासे रूढिस्तथापि तिङन्तस्यान्यत्रापि प्रयोगात् श्रुत्यविरोधार्थत्वाच्चात्र एवमेव, अस्यापि वैराग्यहेतुकत्वात्, इत्याहुः। अपरे तु – यदा ब्राह्मणः स्ववृत्त्याऽजीवन् क्षत्रियवृत्तिमाश्रितवान्, तयाऽप्यजीवन्वैश्यवृत्तिम्, ततस्तामापदं निस्तीर्यापि न तां त्यजति, किंतु तत्रैवावस्थित इति तत्पदवाच्यो भवति, तदभिप्रायकम्। तत एतत्सूचनार्थमेवाथशब्दः, तेन तत्तदानन्तर्यप्रतिपादनात्, इत्याहुः। एतेन धर्मविवृतिवचनं छन्दोगसूत्रं च व्याख्यातम्। अन्त्ये 'यथोचितम्' इत्यध्याहारेणापि निर्वाहः। एवं मनुदत्तात्रेयवचनानुकल्प(?कूल्य)मपि बोध्यम्। एवंरीत्या अन्यान्यपि विरुद्धवचनानि व्याख्येयानि। 'शिखायज्ञोपवीतानां त्यागपूर्वकदण्डयुक्' इति ब्रह्माण्डपुराणस्थवचनमपि छन्दोगसूत्रसमानार्थम्। यत्तु(? स्तु) जडभरतं प्रति पैङ्गिरहस्योपदेशः 'यदि मृत्योः परं शान्तमनामयं शाश्वतं पदमिच्छुरसि तत्परमहंसो भव' इति, तत्रापि परमहंसः निर्मरणः भवेत्यर्थः। प्रैषोच्चारणपूर्वकमाश्रमग्रहणं तस्य हि क्वापि न श्रुतम्। या च जाबालश्रुतिर्जनकयाज्ञवल्क्यसंवादे, तत्र 'परमहंसका नाम संवर्तकारुणिश्वेतकेतुदुर्वासासौभरिमुनिदाल्भ्यजडभरतदत्तात्रेयरैवतकप्रभृतयः' इति, तत्रापि अहंकारममतयोरभावात्परमहंससादृश्येन परमहंसा इति व्यपदेशः तस्मात्सिद्धं ब्राह्मणस्यैवाधिकार इति दिगिति।

बाल. पृ. ९५-९७]

(३) ब्रह्मचारिणः प्रव्रजतोऽधीतवेदत्वमेव प्रव्रज्याधिकारे हेतुः, न प्रजादिसंपत्तिः। ... ननु 'सप्तत्या ऊर्ध्वं संन्यसेत्' इति विरुध्यते। मैवम्। रागात्कृतगार्हस्थ्यपरिग्रहस्य हि मन्दवैराग्यस्य स्मृत्यैष काल आहार्यं वै(? र्यवै)राग्यं प्रति विधीयते। अन्यथा 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' इति श्रुतिविरोधो दुष्परिहारः स्यात्। 8अप.

(४) एतदाश्रमसमुच्चयपक्षे। जाबालश्रुतौ त्वन्येऽपि पक्षा उक्ताः – 'यदि चेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा। अथ पुनरव्रती व्रती वा स्नातको वाऽस्नातको वोत्सन्नाग्निरनग्निको वा यदहरेव विरजेत्तदहरेव प्रव्रजेत्' (जाउ. ४) इति। अङ्गिराः – 'प्रव्रजेद्ब्रह्मचर्याद्वा प्रव्रजेद्वा गृहादपि। वनाद्वा प्रव्रजेद्विद्वानातुरो वाऽथ दुःखितः॥'। ηसिन्धु. २१२९

(यदा तु प्राग्भवीयसुकृतपरिपाकादिवशाद्बाल्य एव वैराग्योत्पत्तिस्तदाऽऽहजाबालश्रुतौ त्विति। इतरथा वैराग्ये। अथेति। तथा च संन्यासो ब्रह्मचर्यादिभिरेव ग्राह्य इति न नियमः, किंतु स्नातकविधुरादिभिरपीत्यर्थः। अव्रतीति। उपनयनस्यापि नापेक्षा शुकवामदेवादिवत् सुकृतपाकातिशयसत्त्वे। कृभ.)

(५) अग्न्यारोपादि गृहात्संन्यासे। वैराग्यं चाधिकारिविशेषणम्, 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' इति श्रुतेः। संम. ८४

(६) तदन्ते इष्टिकरणानन्तरं वैतानानग्नीनात्मनि श्रुत्युक्तविधानेन आरोप्य। कृत्वेत्यनेन मनः कुर्यादित्येत(त्प्रतिबन्धाद्यनिष्ट?)स्याऽऽनन्तर्यबोधनेऽपि नैष्टिकरणाग्निसमारोपणयोः पूर्वापरभावो बोधित इति तदन्त इत्यस्य नानर्थक्यम्। γवीमि.

## बृहद्योगियाज्ञवल्क्यः

संन्यासेन मनःशुद्धिः

... [1]**मनोदुष्टाः संन्यासेन द्विजोत्तमाः***॥

---

8 शेषं मितागतम्।

η विपा., बाल. सिन्धुवत्।

γ शेषं मितागतम्।

* शुध्यन्ति इति संबन्धः।

(१) बृयास्मृ. ११।४९.

वर्णभेदेनाऽऽश्रमव्यवस्था

**[1]चत्वारो ब्राह्मणस्योक्ता आश्रमाः श्रुतिचोदिताः।**
**क्षत्रियस्य त्रयः प्रोक्ता द्वावेको वैश्यशूद्रयोः॥**

(१) चतुर्थाश्रमे ब्राह्मणस्यैवाधिकारः। तथा च योगयाज्ञवल्क्यः – चत्वार इति। एतदेवाभिप्रेत्य काषायवस्त्रदण्डादिवैष्णवसंन्यासलिङ्गधारणं क्षत्रियादेर्निषिद्धं स्मृत्यन्तरे – 'मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम्। राजन्यवैश्ययोर्नेति दत्तात्रेयमुनेर्वचः॥' इति। मर. ६१५

(२) माधवस्तु – 'ब्राह्मणः क्षत्रियो वाऽथ वैश्यो वा प्रव्रजेद्गृहात्।' इति कौर्माद्युक्तेर्वर्णत्रयस्याप्यधिकारः। पूर्ववाक्यं तु काषायदण्डादिनिषेधार्थम्, 'मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम्। राजन्यवैश्ययोर्नेति दत्तात्रेयमुनेर्वचः॥' इति बौधायनोक्तेरिति पक्षान्तरमाह। तत्त्वं तु कुटीचकादिपरमेव तदिति। योऽपि 'संन्यासं पलपैतृकम्' इति कलौ निषेधः सोऽपि त्रिदण्डादिपर इत्युक्तं प्राक्।

सिन्धु. २१३५

[द्वाविति। द्वौ वैश्यस्य एकः शूद्रस्येत्यन्वयः। यत्तु 'चत्वार आश्रमाः प्रोक्तास्तेषु शूद्रस्तु नार्हति।' इति, तत्समन्त्रकविवाहनिषेधार्थम्। माधवस्त्विति। अत्रायमस्वरसः – यद्यपि सुरेश्वरवार्तिके एव 'त्रयाणामविशेषेण संन्यासः श्रूयते श्रुतौ। पदो(?परो)पलक्षणार्थं स्याद्ब्राह्मणग्रहणं तदा॥' इति, 'प्रत्ययार्था(?ग्याथा)त्म्यविज्ञानस्वभावश्चेत्समर्थ्यते। उत्थानं यस्य यस्य स्यात्स स व्युत्थातुमर्हति॥' इति द्विजानां संन्यास उक्तस्तथापि भाष्यकृद्भिर्ब्राह्मणस्यैव संन्यासे अधिकारोक्तेः स एव युक्तः। न च क्वचित्सामान्यशब्दश्रवणबलात् सर्वत्र ब्राह्मणशब्दस्य द्विजपरत्वं सांप्रतम्, 'पुरोडाशं चतुर्धा करोति' 'आग्नेयं चतुर्धा करोति' इत्यत्रेव सामान्यस्य विशेषे उपसंहारात्। न तु विपरीतम्, अभिधात्र्यश्रुतेः। द्विजशब्दस्य ब्राह्मणपरत्वे च न कोऽपि बाधः। किंच, क्षत्रियादिसंन्यासनिषेधानां 'मुखजानाम्' इति वचनमालम्ब्य काषायादिनिषेधपरत्वप्रयुक्तलक्षणापत्तेः। मुखजानामित्यनेनापि हि अङ्गनिषेधमुखेन क्षत्रियादीन् प्रति प्रधानमेव बाध्यते, ज्ञानार्थतया काम्ये संन्यासे सर्वाङ्गोपसंहारेणैवाधिकारात्। तत एव आतुरवाक्यस्याप्यप्रवृत्तिः, सजातीययोरातुरानातुरयोरधिकारसिद्धेः। एतेन 'मुखजानाम्' इति वाक्यस्य कुटीचकादिपरत्वमप्ययुक्तम्, पारमहंस्यस्याप्यननुमतत्वादिति।

कृभ. २१३५-२१३६]

## नारदः

गार्हस्थ्यप्रशंसा, विरक्तस्य ब्रह्मचर्यात्संन्यासः

**[1]सर्वाश्रमाणामाश्रेयो गृहस्थाश्रम उत्तमः॥**
**[2]प्रथमादाश्रमाद्वाऽपि विरक्तो भवसागरात्।**
**ब्राह्मणो मोक्षमन्विच्छंस्त्यक्त्वा सङ्गान्परिव्रजेत्॥**

## बृहस्पतिः

ब्रह्मचर्याविधिः

**[3]वेदानधीत्य विधिना समावृत्तोऽप्लुतव्रतः।**
**समानामुद्वहेत्पत्नीं यशःशीलवयोगुणैः॥**
**गुरुं वा समनुज्ञाप्य प्रदाय गुरुदक्षिणाम्।**
**सदृशानाहरेद्दारान् मातापितृमते स्थितः॥**
**वेदं वेदौ च वेदान्वा ततोऽधीत्य यथाविधि।**
**अविशीर्णब्रह्मचर्यो दारान्कुर्वीत धर्मतः॥**

गार्हस्थ्यप्रशंसा

**[4]आश्रमाणां समुत्पत्तिर्वर्धनं पालनं तथा।**
**गृहस्थाज्जायते सम्यक्तस्मात्सोऽभ्यधिकः स्मृतः॥**

विरक्तस्य ब्रह्मचर्यात्संन्यासः

**[5]संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया।**
**प्रव्रजेदकृतोद्वाहः परं वैराग्यमाश्रितः॥**

(१) **पमा.** १।५३४ योगियाज्ञवल्क्यः; **मर.** ६१५ योगयाज्ञवल्क्यः; **सिन्धु.** २१३४ वृद्धयाज्ञवल्क्यः; **विपा.** ५।४९५ याज्ञवल्क्यः; **वीमि.** १।५१ चोदिताः (देशिताः) योगी : ३।५४-५५ चोदिताः (दर्शिताः) योगिसंहितायाम्; **कृभ.** २१३४.

(१) **ज्योना.** २७।१; **ज्योनि.** १३१ श्रेयो (श्रयो); **संग.** १६७ माश्रेयो (माश्रेयं) श्रम उत्तमः (श्रममुत्तमम्).

(२) **पमा.** १।५३४.

(३) **चका.** ७८५.

(४) **निक.** २१० त्तस्मात् (त्तेन); **आप्र.** ४५७.

(५) **मुक्ता.** १७३; **यसं.** ४ जेदकृ (जन्त्यकृ) द्वाहः (द्वाहाः) माश्रितः (माश्रिताः).

## भृगुः

यतिप्रशंसा

[1]मौलौ तु सर्वे देवाश्च *येषां तिष्ठन्ति निश्चितम्।
अङ्गुष्ठाग्रे तु विष्णुश्च लक्ष्म्या सहापि तिष्ठति॥

## कात्यायनः

वाग्दत्ताया मृतौ अन्यकन्याया अलाभे
उत्तराश्रमस्वीकारः

[2]अथ चेन्न लभेतान्यां याचमानोऽपि कन्यकाम्।
तमग्निमात्मसात्कृत्वा क्षिप्रं स्यादुत्तराश्रमी॥

(१) आत्मसात्कृत्वा आत्ममयं कृत्वा, मन्त्रेणाऽऽत्मन्यारोप्येति यावत्। φगृक. ११४

(२) यदि चान्यां कन्यां प्रार्थयन्नपि न प्राप्नोति। अनेन ब्राह्मदैवादिविवाहव्यतिरेकेण याच्ञापूर्वकाप्रशस्तविवाहेनापि गार्हस्थ्याय यतनीयमित्युक्तम्। तदाऽऽहिताग्निः प्राजापत्येष्टिं कृत्वा तमग्निमात्मन्यारोप्य शीघ्रं चतुर्थाश्रमी स्यादिति।

+प्रकाश. १।१०२

आश्रमविकल्पः, वानप्रस्थ्ये भार्यासाहित्यराहित्यविकल्पः

[3]ब्रह्मचर्याद्गृहाद्वाऽपि वनाद्वा संन्यसेद्द्विजः।
पुत्रेषु भार्यां निक्षिप्य मृतपत्नीक एव वा॥

आश्रमाश्चत्वारः तेषामवान्तरभेदाश्च
सलक्षणाः

[4]ब्रह्मचारिगृहस्थवानप्रस्थपरिव्राजकाश्चत्वार आश्रमाः षोडशभेदा भवन्ति॥

तत्र ब्रह्मचारिणश्चतुर्विधा भवन्ति – गायत्रो ब्राह्मः प्राजापत्यो बृहन्निति॥

उपनयनादूर्ध्वं त्रिरात्रमक्षारलवणाशी गायत्रीमधीते स गायत्रः॥

अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यं चरेत्, प्रतिवेदं द्वादश द्वादश वा, यावद्ग्रहणान्तं वा वेदस्य स ब्राह्मः॥

8स्वदारनिरत ऋतुकालगामी सदा परदारवर्जितः स प्राजापत्यः॥ अथवा चतुर्विंशतिवर्षाणि गुरुकुलवासी ब्राह्मः॥

अष्टाचत्वारिंशद्वर्षवासी च प्राजापत्यः॥

आ प्रायणाद्गुरोरपरित्यागी स नैष्ठिको बृहन्निति॥

गृहस्था अपि चतुर्विधा भवन्ति – वार्ताकवृत्तयः शालीनवृत्तयो यायावरा घोरसंन्यासिकाश्चेति॥

तत्र वार्ताकवृत्तयः कृषिगोरक्षवाणिज्यमगर्हितमुपयुञ्जानाः शतसंवत्सराभिः क्रियाभिर्यजन्त आत्मानं प्रार्थयन्ते॥

शालीनवृत्तयो यजन्तो न याजयन्तोऽधीयाना नाध्यापयन्तो ददतो न प्रतिगृह्णन्तः शतसंवत्सराभिः क्रियाभिर्यजन्त आत्मानं प्रार्थयन्ते॥

यायावरा यजन्तो याजयन्तोऽधीयाना अध्यापयन्तो ददतः प्रतिगृह्णतः शतसंवत्सराभिः क्रियाभिर्यजन्त आत्मानं प्रार्थयन्ते॥

घोरसंन्यासिका उद्धृतपरिपूताभिरद्भिः कार्यं कुर्वन्तः प्रतिदिवसमाहृतोञ्छवृत्तिमुपयुञ्जानाः शतसंवत्सराभिः क्रियाभिर्यजन्त आत्मानं प्रार्थयन्ते॥

वानप्रस्था अपि चतुर्विधा भवन्ति – वैखानसा औदुम्बरा वालखिल्याः फेनपाश्चेति॥

तत्र वैखानसा अकृष्टपच्यौषधिवनस्पतिभिर्ग्रामबहिष्कृताभिरग्निपरिचरणं कृत्वा पञ्चमहायज्ञक्रिया निर्वर्तयन्त आत्मानं प्रार्थयन्ते॥

औदुम्बराः प्रातरुत्थाय यां दिशमभिप्रेक्षन्ते, तदाहृतोदुम्बरबदरनीवारश्यामाकैरग्निपरिचरणं कृत्वा पञ्चमहायज्ञक्रिया निर्वर्तयन्त आत्मानं प्रार्थयन्ते॥

वालखिल्या जटाधराश्चीरचर्मवल्कलपरिवृताः कार्तिक्यां पौर्णमास्यां पुष्पफलमुत्सृजन्तः शेषानष्टौ मासान्

---

* येषां यतीनामिति संबन्धः।

φ गृर. गृकवत्।

+ प्रभा. प्रकाशवत्।

(१) यसं. १३०.

(२) कास्मृ. १।८३; गृक. ११४ क्रमेण कात्यायनः; गृर. ९३ अथ (तथा) चतुर्थचरणे (प्रव्रज्यादुत्तराश्रमम्) क्रमेण कात्यायनः.

(३) मुक्ता. १७२; यसं. २ द्विजः (बुधः).

(४) पमा. १।५६७-५६८.

8 अयमब्रह्मचर्याश्रमी गृहस्थाश्रमी च सन्नपि ब्रह्मचर्यसाधर्म्यात् ब्रह्मचर्याश्रमिप्रकारेषु परिगणित इति समाधेयम्। अत एवारुच्या पक्षान्तरं वक्ष्यति।

वृत्त्युपार्जनं कृत्वाऽग्निपरिचरणं कृत्वा पञ्चमहायज्ञक्रिया निर्वर्तयन्त आत्मानं प्रार्थयन्ते॥

फेनपा जीर्णपर्णफलभोजिनो यत्र तत्र वा वसन्तोऽग्निपरिचरणं कृत्वा पञ्चमहायज्ञक्रिया निर्वर्तयन्त आत्मानं प्रार्थयन्ते॥

परिव्राजका अपि चतुर्विधा भवन्ति – कुटीचरा बहूदका हंसाः परमहंसाश्चेति॥

कुटीचराः स्वपुत्रगृहेषु भैक्षचर्यां चरन्त आत्मानं प्रार्थयन्ते॥

बहूदकास्त्रिदण्डकमण्डलुशिक्यपद्मजलपवित्रपादुकासनशिखायज्ञोपवीतकौपीनकाषायवेषधारिणः साधुवृत्तेषु ब्राह्मणकुलेषु भैक्षं चरन्त आत्मानं प्रार्थयन्ते॥

हंसा एकदण्डधराः शिखायज्ञोपवीतधारिणः शिक्यकमण्डलुहस्ता ग्रामैकरात्रवासिनो नगरे तीर्थेषु पञ्चरात्रमेकरात्रं द्विरात्रं कृच्छ्रचान्द्रायणादि चरन्त आत्मानं प्रार्थयन्ते॥

परमहंसा नाम एकदण्डधरा मुण्डाः कन्थाकौपीनवाससोऽव्यक्तलिङ्गा अव्यक्ताचारा अनुन्मत्ता उन्मत्तवदाचरन्तस्त्रिदण्डकमण्डलुशिक्यपद्मजलपवित्रपादुकासनशिखायज्ञोपवीतत्यागिनः शून्यागारदेवगृहवासिनो न तेषां धर्मो नाधर्मो वा न सत्यं नापि चानृतं सर्वसहाः सर्वसमाः समलोष्टाश्मकाञ्चना यथोपपन्नचातुर्वर्णे- (?र्ण्ये) भैक्षचर्यां चरन्त आत्मानं मोक्षयन्ते॥

## व्यासः

नैष्ठिकत्वम्, गार्हस्थ्यप्रशंसा, आश्रमसमुच्चयविकल्पौ, संन्यासाश्रमयोग्यता

[1]यस्तूपनयनादेतदा मृत्योर्व्रतमाचरेत्।
स नैष्ठिको ब्रह्मचारी ब्रह्मसायुज्यमाप्नुयात्॥
[2]गृहाश्रमात्परो धर्मो नास्ति नास्ति पुनः पुनः।
सर्वतीर्थफलं तस्य यथोक्तं यस्तु पालयेत्॥
[3]वेदमेकं समभ्यस्य कृत्वा वेदव्रतानि च।
गुरवे दक्षिणां दत्त्वाऽप्यशक्तस्तदनुज्ञया।
समावृत्योद्वहेत्कन्यां संन्यासमथवा व्रजेत्॥
[4]गार्हस्थ्यमिच्छन्व्रतिकः कुर्याद्दारपरिग्रहम्।
ब्रह्मचर्येण वा कालं नयेत्संकल्पपूर्वकम्।
वैखानसो वाऽपि भवेत्परिव्राडथवेच्छया॥
[5]ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथवा पुनः।
विरक्तः सर्वकामेभ्यः पारिव्राज्यं समाश्रयेत्॥
[6]चतुर्थमाश्रमं गच्छेद्ब्रह्मविद्यापरायणः।
त्रिदण्डी चैकदण्डी च सर्वसङ्गविवर्जितः॥
[7]एवं वनाश्रमे स्थित्वा तृतीयं भागमायुषः।
चतुर्थमायुषो भागं संन्यासेन नयेत्क्रमात्॥
प्राजापत्यां निरूप्येष्टिमाग्नेयीमथवा पुनः।
दान्तः पक्वकषायोऽसौ ब्रह्माश्रममुपाश्रयेत्॥
[8]यस्यैतानि सुगुप्तानि जिह्वोपस्थोदरं करः।
संन्यसेदकृतोद्वाहो ब्राह्मणो ब्रह्मचर्यवान्॥
परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि।
सर्वैषणाविनिर्मुक्तः स भैक्षं भोक्तुमर्हति॥
पूजितो वन्दितश्चैव सुप्रसन्नो यथा भवेत्।
तथा चेत्ताड्यमानस्तु तदा भवति भैक्षभुक्॥
[9]प्रवृत्तिलक्षणं कर्म ज्ञानं संन्यासलक्षणम्।
तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिह बुध्दिवान्॥
[10]ऋणत्रयमपाकृत्य निर्ममो निरहंकृतिः।
ब्राह्मणः क्षत्रियो वाऽथ वैश्यो वाऽथ व्रजेद्गृहात्॥

वर्णभेदेनाऽऽश्रमव्यवस्था, शक्तिवैराग्यतारतम्यानुसारेण संन्यासावान्तरभेदव्यवस्था, संन्यासप्रशंसा

चत्वार आश्रमाश्चैते ब्राह्मणस्य प्रकीर्तिताः।
गार्हस्थ्यं ब्रह्मचर्यं च वानप्रस्थत्रयः स्मृताः(?)॥
क्षत्रियस्यापि कथिता य आचारा द्विजस्य हि।
ब्रह्मचर्ये(? र्यं) च गार्हस्थ्यमाश्रमद्वितयं विशः॥
गार्हस्थ्यमुदितं चैकं शूद्रस्य परिकीर्तितम्॥

(१) व्यास्मृ. १।४१.
(२) व्यास्मृ. ४।२.
(३) मुक्ता. ११९; आन. ४८०-४८१.

(१) मुक्ता. १२१.
(२) यसं. २; यप्र. ३२.
(३) समु. १२६.
(४) मुक्ता. १७१.
(५) मुक्ता. १७३.
(६) मुक्ता. १७४; यसं. ५ णं कर्म (णो योगो).
(७) मुक्ता. १७६.

[१]विरक्तिर्द्विविधा प्रोक्ता तीव्रा तीव्रतरेति च।
सत्यामेव तु तीव्रायां न्यसेद्योगी कुटीचके॥
[२]शक्तो बहूदके तीव्रतरायां हंससंज्ञिते।
मुमुक्षुः परमे हंसे साक्षाद्विज्ञानसाधने॥

शक्तो बहूदक इत्यभिधानात्कुटीचकत्वा(? त्वस्या)-शक्तविषयत्वं सूचितम्। मर. ६२२

[३]यान्यतीतानि जन्मानि तेषु नूनं कृतं भवेत्।
यत्कृत्यं पुरुषेणेह नान्यथा ब्रह्मणि स्थितिः॥
तामासाद्य तु मुक्तस्य दृष्टार्थस्य विपश्चितः।
त्रिष्वाश्रमेषु को न्वर्थो भवेत्परमभीप्सतः॥

व्यासेन 'यान्यतीतानि' इत्यादिना विदुषो ब्रह्मणि स्थितस्य पारिव्राज्यं दर्शितम्। यसं. ६

[४]द्वे रूपे वासुदेवस्य चरं चाचरमेव च।
चरं संन्यासिनां रूपमचरं प्रतिमादिकम्॥
[५]यस्य संन्यसनादेव स्थानाच्चलति भास्करः।
कुलकोटिशतैः सार्धं प्राप्नोति परमं पदम्॥
षष्टिं कुलान्यतीतानि षष्टिमागामिकानि च।
नरकादुद्धरत्येव संन्यस्तोऽहमिति ब्रुवन्॥
[६]दिव्यतेजोमयः श्रीमान्सूर्यचन्द्राग्निमण्डलम्।
भित्त्वा प्रयाति संन्यासी स्वधर्मपरिपालनात्॥
[७]न सुखं देवराजस्य न सुखं चक्रवर्तिनः।
यादृशं वीतरागस्य मुनेरेकान्तवासिनः॥
[८]मोक्षाश्रमं यश्चरते यथोक्तं
शुचिः सुसंकल्पितबुद्धियुक्तः।
अनिन्धनं ज्योतिरिव प्रशान्तं
स ब्रह्मभावं व्रजते द्विजातिः॥

(१) पमा. १।५४० चके (चरः) पुराणे; मर. ६२२ स्मृत्यन्तरे; मुक्ता. १८३ द्विवि(श्च द्वि).
(२) पमा. १।५४० पुराणे; मर. ६२२ संज्ञिते (संज्ञिके) स्मृत्यन्तरे; मुक्ता. १८३.
(३) यसं. ६.
(४) मुक्ता. १७५; यप्र. ३३ (वासुदेवस्य द्वे रूपे चलं चाचलमेव च। संन्यासी तु चलं रूपमचलं प्रतिमात्मकम्॥) पुराणवचनम्.
(५) यसं. २१.
(६) मुक्ता. १७५; यसं. २१.
(७) यसं. ३१.
(८) मुक्ता. २०८.

## लघुव्यासः

आश्रमविकल्पः

[१]नैष्ठिको वा मुनिर्वाऽपि परिव्राजक एव वा।
यमिच्छेदाश्रमं यत्र (? योऽत्र) वसेत्तत्रैव संयतः॥

## देवलः

ब्रह्मचर्यावधिः

[२]अतः परमष्टाचत्वारिंशद्वार्षिकीं वेदचर्यामधितिष्ठे-दशक्तश्चेत्षट्त्रिंशद्वार्षिकीं चतुर्विंशतिवार्षिकीं द्वादश-वार्षिकीं वा॥

(१) एतदपि प्रतिवेदाभिप्रायम्।

स्मृच. १।१६६

(२) एतत् प्रतिवेदविषयम्। यदाह यमः — 'वसेद्-द्वादशवर्षाणि चतुर्विंशतिमेव वा। षट्त्रिंशतं वा वर्षाणि प्रतिवेदं व्रतं चरेत्॥'।

चका. ७७८

(३) अशक्तः चतुर्वेदाध्ययनाशक्तः। एवमुत्तरत्रापि व्याख्येयम्। एतच्चाऽऽचार्यकुले सता कार्यम्। तथा चाऽऽपस्तम्बः — 'एतस्याऽऽचार्यकुले ब्रह्मचारिणोऽष्टा-चत्वारिंशत्पादोनमर्धोनं त्रिभिर्वा' इति।

8संप्र. ५५७

## उशना

नैष्ठिकत्वम्, अन्यतमाश्रमविषय-मैकाश्रम्यम्

[३]यदि वाऽऽत्यन्तिकं वासं कर्तुमिच्छति वै गुरौ।
युक्तः परिचरेदेनमा शरीरविमोक्षणात्॥

8 संग. संप्रगतम्।
(१) ब्रक. २६६.
(२) ब्रक. २६३ श्चेत्षट्त्रिंशद्वार्षिकीं (श्चेद्वार्षिकी); स्मृच. १।१६६ वेदचर्यामधि (वेदव्रतचर्या मा) (षट्त्रिंशद्वार्षिकीं०); चका. ७७८ (अतः परमष्टाचत्वारिंशद्वार्षिकीं वेदव्रतचर्यामातिष्ठेत् अशक्तश्चेत् षट्त्रिंशद्वार्षिकीं चतुर्विंशतिवार्षिकीं चेति।); मपा. १६ वेदचर्यामधि (वेदव्रतचर्यामा) तिवार्षिकीं द्वादशवार्षिकीं वा (तिर्द्वादश वा प्रतिवेदम्); मुक्ता. ११९ (द्वादशवार्षिकीं०) शेषं स्मृचवत्; संप्र. ५५७; संग. ७२४ तिष्ठेद (तिष्ठेत्तद) विंशतिवा (विंशद्वा).
(३) औसं. ३।८३.

[1]**आचार्येणाभ्यनुज्ञातश्चतुर्णामेकमाश्रमम्।**
**आ विमोक्षाच्छरीरस्य सोऽनुतिष्ठेद्यथाविधि॥**

(१) एवं च यस्य समुच्चयानुष्ठानसामर्थ्यं नास्ति तस्यायं विकल्प इति मन्तव्यम्। आ विमोक्षादनुतिष्ठेदित्यनेन आश्रमिणा स्थातव्यमित्याह। अत एव दक्षः – 'अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः। आश्रमेण विना तिष्ठन्प्रायश्चित्ती यतो हि सः॥ जपे होमे तथा दाने स्वाध्याये वा रतः सदा। नासौ फलमवाप्नोति कुर्वाणोऽप्याश्रमाच्च्युतः॥' (दस्मृ. १।१०-११)। +स्मृच. १।१७६

(२) एतच्च नैष्ठिकाभिप्रायम्। केचित्तु गार्हस्थ्यस्यैव प्राधान्यमाहुः। तथा च गौतमः – 'ऐकाश्रम्यं त्वाचार्याः प्रत्यक्षविधानाद्गार्हस्थ्यस्य' (गौध. ३।३६) इति। संप्र. ५६३

आश्रमावान्तरभेदाः

[2]**द्वौ ब्रह्मचारिणावुपकुर्वाणो नैष्ठिकश्चेति। द्वौ वैखानसौ सपत्नीको विपत्नीकश्चेति। द्वौ संन्यासिनौ भिक्षुसंन्यासी वेदसंन्यासी चेति। बहुधा गृहस्थः शालीनयायावरादिभेदेन॥**

## प्रजापतिः

अनाश्रमित्वनिषेधः

... [3]**न स्थेयं दिनमेकं विनाऽऽश्रमम्॥**

संन्यासावान्तरभेदाः सलक्षणाः

[4]**तत्र परिव्राजका नाम चतुर्विधा भवन्ति। तत्र (? ते च) कुटीचरो बहूदको हंसः परमहंसश्चेति॥**

**कुटीचरो नाम – स्वगृहे वर्तमानो विगतकलुष आहिताग्निषु भिक्षां भुञ्जानो व्यपगतकामक्रोधलोभमोहाहंकारो यदात्मानुग्रहं कुरुते स कुटीचरो नाम॥**

**बहूदको नाम – ग्राम एकरात्रं नगरे पञ्चरात्रं प्राप्तं भोज्यं भुञ्जानः स बहूदको नाम॥**

**तत्र हंसो नाम – पर्वतगुहाश्रमदेवकुलारामवासी भिक्षार्थे ग्रामं प्रविशेत्स हंसो नाम॥**

**तत्र परमहंसो नाम – नदीपुलिनारण्यप्रदेशेषु तृणहरितशाद्वलेषु शयानोऽसंकुसुकश्चीरकौपीनकषायवान् यस्तु प्राणान् परित्यजति स परमहंसो नाम॥**

असंकुसुकः असंचयवान्।

अप. ३।५७ पृ. ९५२

## यमः

ब्रह्मचर्यावधिः नैष्ठिकत्वं च

[1]**वसेद्द्वादश वर्षाणि चतुर्विंशतिमेव वा।**
**षट्त्रिंशतं वा वर्षाणि प्रतिवेदं व्रतं चरेत्॥**

(१) एतत् त्रिवेदग्रहणाभिप्रायम्।

पमा. १।४५७

(२) यस्तु चतुरो वेदानध्येतुमिच्छति तस्याष्टाचत्वारिंशद्वर्षाणि यथाऽऽहाऽऽपस्तम्बः 'उपेतस्याऽऽचार्यकुले ब्रह्मचारिण्य(?णोऽ)ष्टाचत्वारिंशद्वत्सरान्' (आध. १।२।११) इति। अत्र च पक्षविकल्पे अध्ययनकाल एव 'वैकल्पिकानामादितोऽवधारणम्' इति न्यायेनैकः पक्षः परिग्रहीतव्यः। तस्मिंश्च द्वादशवर्षपक्षादौ परिगृहीते मध्ये गृहीतेऽपि वेदे कालः पूरयितव्य इति मेधातिथिः। संम. ४१

(३) अत्र प्रतिवेदशब्दः +पूर्ववद्व्याख्येयः।

संप्र. ५५७

(४) गुरुगृहे वसेदित्यर्थः। संग. ७२४

[2]**आ निपाताच्छरीरस्य ये चरन्त्यूर्ध्वरेतसः।**
**ते यान्ति ब्रह्मणः स्थानं जायन्ते न पुनर्भुवि॥**

[3]**वेदं वेदौ च वेदान्वा ततोऽधीत्य यथाविधि।**
**अविशीर्णब्रह्मचर्यो दारान् कुर्वीत धर्मतः॥**

एवं विशीर्णब्रह्मचर्यस्याकृतप्रायश्चित्तस्योत्तराश्रमेष्वनधिकारः सूचितो भवति। ×गृक. ४

---

+ चका., पुम. स्मृचगतम्।

(१) **स्मृच.** १।१७६; **चका.** ७८४-७८५ मोक्षा (मोका); **मुक्ता.** १७२ चकावत्; **संप्र.** ५६३; **पुम.** ४४५ चकावत्.

(२) **मभा.** ३।२.

(३) **प्रस्मृ.** ७७.

(४) **अप.** ३।५७ पृ. ९५२.

+ इदं व्याख्यानं बौधायनस्य 'चतुर्विंशतिं' इति वचने (वका. पृ. १९८१) द्रष्टव्यम्।

× गृर. गृकवत्।

(१) **स्मृच.** १।१६६; **चका.** ७७८-७७९; **पमा.** १।४५७; **चमव्या.** ४६; **मुक्ता.** ११८; **संम.** ४१ वेदं व्र (वेदव्र); **संप्र.** ५५७; **संग.** ७२४.

(२) **स्मृच.** १।१७०; **मुक्ता.** १२१; **संप्र.** ५५० भुवि (भवे).

(३) **गृक.** ३ शीर्ण (लुप्त) धर्मतः (धर्मवित्); **चका.** ७८५ बृहस्पतिः; **गृर.** ४.

आश्रमकालावधयः, वानप्रस्थ्ये भार्यासाहित्य-राहित्यविकल्पः

[1]**द्वितीयमायुषो भागमुषित्वा तु गृहे द्विजः।**
**तृतीयमायुषो भागं गृहमेधी वने वसेत्॥**

गृहस्थस्य वनप्रवेशावसरमाह यमः — द्वितीयमिति।

पमा. १।५२५

[2]**गृहमेधी यदा पश्येद्वलीपलितमात्मनः।**
**शिथिलत्वं च गात्राणां तदाऽरण्यं समाश्रयेत्॥**

[3]**उत्पाद्य धर्मतः पुत्रानिष्ट्वा यज्ञैश्च शक्तितः।**
**दृष्ट्वाऽपत्यस्य चापत्यं ब्राह्मणोऽरण्यमाश्रयेत्॥**

(१) ब्राह्मणग्रहणं द्विजोपलक्षणार्थम्।

अप. ३।४४ पृ. ९४०

(२) अत्र ब्राह्मणग्रहणं त्रैवर्णिकोपलक्षणार्थम्, 'उषित्वा तु गृहे द्विजः' इत्युपक्रमानुसारात्।

पमा. १।५२५

[4]**यज्ञाङ्गान्यग्निहोत्रं च धेनूरथ परिच्छदम्।**
**समादाय सदारो वा तदाऽरण्यं व्रजेद्विजः॥**

[5]**पुत्रे ज्येष्ठे गुणवति तत्कुटुम्बं निवेश्य च।**
**दारान्निक्षिप्य वा गच्छेन्निर्ममो विजितेन्द्रियः॥**

आश्रमविकल्पः

[6]**चीर्णवेदव्रतो विद्वान्ब्राह्मणो मोक्षमाश्रयेत्।**
**समः सर्वेषु भूतेषु चरेषु स्थावरेषु च॥**

[7]**पुनर्दारक्रियाभावे मृतभार्यः परिव्रजेत्।**
**वनस्थो धूतपापो वा परं पन्थानमाश्रयेत्॥**

[8]**उत्पन्नज्ञानविज्ञानो वैराग्यं परमं गतः।**
**प्रव्रजेद्ब्रह्मचर्यात्तु यदीच्छेत्परमां गतिम्॥**
**जातपुत्रो गृहस्थो वा विहितात्मा जितेन्द्रियः॥**

(१) **अप.** ३।४४ पृ.९४०; **मोक.** १२; **पमा.** १।५२५; **मुक्ता.** १६९ मनुः.

(२) **मोक.** १२.

(३) **अप.** ३।४४ पृ. ९४०; **मोक.** १२; **पमा.** १।५२५ माश्रयेत् (माविशेत्); **मुक्ता.** १६९ पमावत्, मनुः.

(४) **अप.** ३।४४ पृ. ९४०; **मोक.** १३.

(५) **मोक.** १३.

(६) **चका.** ८१० चतुर्थचरणे (कृतकृत्यः परिव्रजेत्); **मुक्ता.** १७२; **यसं.** २.

(७) **चका.** ८१० वनस्थो (वनाद्वा); **पमा.** १।५३३.

(८) **मुक्ता.** १७२ यदी (यदि); **यसं.**२.

प्रायश्चित्तरूपत्वं संन्यासस्य

[1]**ये च संतानजा दोषा ये च स्युः कर्मसंभवाः।**
**संन्यासस्तान् दहेत्सर्वांस्तुषाग्निरिव काञ्चनम्॥**

धर्मलोपेऽप्यनुतापवतस्तत्प्रायश्चित्तत्वेन संन्यासः संभवति। तथा च स्मृत्यन्तरम् — ये चेति।

पमा. १।५३३

आश्रमप्रशंसा

[2]**अनेन विधिना यो हि आश्रमानुपसेवते।**
**स सर्वलोकान्निर्जित्य ब्रह्मलोकाय कल्पते॥**

## दक्षः

ब्रह्मचर्यावधिः, द्विविधं ब्रह्मचर्यम्

[3]**स्वीकरोति यदा वेदं चरेद्वेदव्रतानि च।**
**ब्रह्मचारी भवेत्तावदूर्ध्वं स्नातो गृही भवेत्॥**

व्रतानि ब्रह्मचर्यम्। वेदस्वीकरणं वेदार्थविचारस्यापि प्रदर्शनार्थम्। अत एव स्मृत्यन्तरम् — 'वेदमधीत्य छन्दोविषयानर्थान्बुद्ध्वा स्नायात्' इति।

*स्मृच. १।१७७

[4]**द्विविधो ब्रह्मचारी स्यादाद्यो ह्युपकुर्वाणकः।**
**द्वितीयो नैष्ठिकश्चैव तस्मिन्नेवाऽऽश्रमे स्थितः॥**

(१) दक्षः 'तस्मिन्नेवाऽऽश्रमे' इति वदन् तद्धर्मातिदेशमाह। स्मृच. १।१७२

(२) तच्छब्दपरामर्शेनाऽऽश्रमाभेदं गमयति।

+संप्र. ५५२

* चका., पुम. स्मृचगतम्।

\+ शेषं स्मृचवत्।

(१) **पमा.** १।५३३ स्मृत्यन्तरम्; **मुक्ता.** १७५; **यप्र.** ३३ स्मृत्यन्तरे; **कृभ.** २१३३-२१३४ माधवोक्तस्मरणम्.

(२) **ब्रक.** २७० क्रमेण यमः.

(३) **दस्मृ.** १।६ चरेद्वे (धत्ते वे); **स्मृच.** १।१७७; **चका.** ७८० चरेद्वे (धत्ते वे) त्तावदूर्ध्वं स्नातो गृही (त्स्नातस्ततः पश्चाद्गृही) : ७८५ वेदं च (वेदांश्च); **मपा.** ९६ वेदं च (वेदांश्च) गृही भवेत् (भवेद्गृही); **मुक्ता.** ११९; **आन.** ४८०; **पुम.** ४४४-४४५ चका. ७८० वत्.

(४) **दस्मृ.** १।७ न्नेवाऽऽश्रमे (न्नेव व्रते); **स्मृच.** १।१७२ उत्त.; **मपा.** ११२ उत्त.; **मुक्ता.** १२० (द्विविधो ब्रह्मचारी तु दक्षशास्त्रे प्रपद्यते। उपकुर्वाणकः पूर्वो द्वितीयो नैष्ठिकः स्मृतः॥); **संम.** ४२ उत्त.; **संप्र.** ५५२ उत्त.

आश्रमप्रातिलोम्यनिषेधः

**[1]त्रयाणामानुलोम्यं स्यात्प्रातिलोम्यं न विद्यते।**
**प्रातिलोम्येन यो याति न तस्मात्पापकृत्तमः॥**

(१) आश्रमादाश्रमान्तरगमनेनोत्तरं परिगृह्य पूर्वं न परिगृह्णीयादिति स एवाऽऽह — त्रयाणामिति।

अप. १।५० पृ. ७३

(२) आनुलोम्यं ब्रह्मचारी गृहस्थो वानप्रस्थो यतिश्चेत्ययं क्रमः। प्रातिलोम्यम् उक्तवैपरीत्यम्।

ब्रक. २७०

(३) त्रयाणामिति ब्रह्मचर्योत्तरेषां ग्रहणम्, तस्याऽऽवश्यकत्वादित्यर्थः। संम. ४३

**[2]यो गृहाश्रममास्थाय ब्रह्मचारी भवेत्पुनः।**
**न यतिर्न वनस्थश्च स सर्वाश्रमवर्जितः॥**

(१) तेन मृतभार्येण पुनर्विवाहासामर्थ्येऽपि न ब्रह्मचारिणा भाव्यम्, तत्र च ब्रह्मचारिगृहाश्रमशब्दावुत्तरोत्तराश्रमिणः पूर्वपूर्वाश्रमानाश्रयणप्रतिपादनपरौ, अन्यथा 'प्रातिलोम्यं न विद्यते' इति ग्रहणमविवक्षितं स्यात्। चका. ७८२-७८३

(२) यदि गृही कथंचित् प्रत्यवरुह्य ब्रह्मचारी भवेत्, तदाऽसौ सर्वाश्रमबहिष्कृतः, आरूढपतितत्वात्। अतो न वनस्थादिभिराश्रमवासि(?चि)भिः शब्दैरभिलाप्यो भवति। अयं चावरोहाभाव उत्तरमीमांसायां तृतीयाध्याये वर्णितः। पमा. १।५३१

अनाश्रमित्वनिषेधः, आश्रमलक्षणानि

**[3]अनाश्रमी न तिष्ठेच्च क्षणमेकमपि द्विजः।**
**आश्रमेण विना तिष्ठन्प्रायश्चित्तीयते हि सः॥**

(१) **दस्मृ.** १।८ स्यात्प्रा (हि प्रा); **अप.** १।५० पृ. ७३; **ब्रक.** २७० लोम्येन यो (लोम्ये त्वधो); **स्मृच.** १।१७३; **चका.** ७८२; **पमा.** १।५३१; **मुक्ता.** १७२ प्रातिलोम्यं (प्रातिलोम्ये); **संम.** ४३ कृत्तमः (कृन्नरः); **संप्र.** ५६४; **कृभ.** २१३४.

(२) **दस्मृ.** १।९; **ब्रक.** २७० वनस्थ (गृहस्थ); **स्मृच.** १।१७३; **चका.** ७८२ स सर्वाश्रम (सर्वाश्रमवि); **पमा.** १।५३१; **संप्र.** ५६४ चकावत्.

(३) **दस्मृ.** १।१०; **समु.** ११४ (अनाश्रमे न तिष्ठेत दिनमेकमपि द्विजः। प्राजापत्यत्रयं कुर्याद्वत्सरं तु निराश्रमः॥) संवर्तदक्षौ; **मिता.** १।८९ च्च क्षण (त दिन) पू.; **अप.** १।५० पृ. ७३ न तिष्ठेच्च क्षण (नैव तिष्ठेदब्द); **मभा.** ९।११ च्च क्षण (त्तु दिन) पू.; **ब्रक.** २७० च्च क्षण (त्तु दिन) हि सः (द्विजः); **स्मृच.** १।१७६ च्च क्षण (त दिन) त्तीयते (त्ती यतो); **मपा.** १३४ च्च

(१) 'अनाश्रमी...' इति दक्षवचनस्य विधुरविषयत्वं द्रष्टव्यम्। तत्र दिनमेकमपीति, सति संभवे इति शेषः, पराधीनत्वात् कन्यालाभस्य। अथवा अनाश्रमी न तिष्ठेत्तु दिनमेकमपि, यत्नमकृत्वेति शेषः। तत्र पूर्वस्मिन्पक्षे संभवे सत्यकर्तुर्दोषः, असंभवे न दोषः, उत्तरस्मिन्पक्षे यत्नमकर्तुर्दोषः।

मभा. ९।११

(२) समावर्तनानन्तरं तु दारकरणपर्यन्तमनाश्रमित्वम्। तस्यैव 'तथैवानाश्रमे वासः'(यास्मृ. ३।२४१) इति उपपातकित्वम्। 'अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः'। इति दक्षोक्तिरपि तत्परैव। तस्य तु उपनयनात् पूर्वमिव केषुचित्कर्मसु स्नातकधर्मेष्वधिकारः।

गप. ७

(३) स+ च त्रिविधेनापि वेदव्रतोभयस्नातकेन समावर्तनादविलम्बेन कर्तव्यः, 'अनाश्रमी॰' इति दक्षवचनात्। चमव्या. ८५

(४) 'अनाश्रमी...' इति निषेधस्त्वविरागिणो विवाहनिवृत्तिनिषेधपरः। संर. ३७१

**[1]जपे होमे तथा दाने स्वाध्याये च रतः सदा।**
**नासौ फलमवाप्नोति कुर्वाणोऽप्याश्रमाच्च्युतः॥**

+ विवाह इत्यर्थः।

(त्तु) पू. (-); **प्रपा.** २९८ च्च क्षण (त दिन) स्मृत्यन्तरे : ३०२ च्च क्षण (त दिन); **निप्र.** ३८६ हि सः (द्विजः) उत्त. (-); **मच.** ५।१६८ च्च (त्तु) पू. स्मृतिः; **उत.** १४८ च्च क्षण (त्तु दिन) हि सः (त्वसौ); **प्रर.** ९७ तिष्ठेच्च (तिष्ठेत); **गभा.** ९६ च्च क्षण (त दिन) त्तीयते हि सः (नरः) (-); **चमव्या.** ८५ सर्वं मितावत्; **मुक्ता.** १२३ मितावत्; **सिन्धु.** ९८८ (अनाश्रमी न तिष्ठेत) एतावदेव (-); **विपा.** ३।१।६७२ सर्वं प्रपा. २९८ वत्; **वीमि.** १।५१ च्च क्षणमेक (त क्षणमात्र) हि सः (द्विजः); **संप्र.** ५६४ मितावत्; **संकौ.** १६७ सर्वं सिन्धुवत्; **आन.** ४९१ तिष्ठेच्च (तिष्ठेत) हि (तु); **बाल.** १।५२ पृ. १६९ सर्वं मभावत्; **संर.** ३७१ सर्वं मितावत्.

(१) **दस्मृ.** १।११; **अप.** १।५० पृ. ७३; **ब्रक.** २७० माच्च्युतः (मच्युतः); **स्मृच.** १।१७६ च (वा); **प्रपा.** ३०२ च (वा) शेषं ब्रकवत्; **उत.** १४८ फलमवा (फलं समा) शेषं प्रपावत्; **बौवि.** १।५।१ च रतः सदा (विप्रभोजने) शेषं ब्रकवत् (-); **विपा.** ३।१।६७३ च (वा) उत्तरार्धे (नासौ तत्फलमाप्नोति आश्रमेण बहिष्कृतः॥) स्मृत्यन्तरे; **संप्र.** ५६४ च रतः (वा ततः); **वीमि.** १।५ च रतः सदा (निरतोऽपि सन्); **संग.** १६७ उत्तरार्धे (नासौ तत्फलमाप्नोति ह्याश्रमेण बहिष्कृतः॥).

न च विवाहादि(?धि)कारिणामनाश्रमिणामेव जपतपःपरायणानामप्यवस्थानमुचितमित्याह दक्षः – 'अनाश्रमी... प्याश्रमाच्च्युतः॥'।

अप. १।५० पृ. ७३

[1]मेखलाजिनदण्डैश्च ब्रह्मचारीति लक्ष्यते।
गृहस्थो यष्टिवेदाद्यैर्नखलोमैर्वनाश्रमी॥
[2]त्रिदण्डेन यतिश्चैवं लक्षणानि पृथक्पृथक्।
यस्यैतल्लक्षणं नास्ति प्रायश्चित्ती न चाऽऽश्रमी॥
त्रिदण्डग्रहणमेकदण्डस्यापि प्रदर्शनार्थम्।

मपा. ३६७

गार्हस्थ्यप्रशंसा

[3]देवैश्चैव मनुष्यैश्च तिर्यग्भिश्चोपजीव्यते।
गृहस्थः प्रत्यहं यस्मात्तस्माज्ज्येष्ठो गृहाश्रमी॥
[4]त्रयाणामाश्रमाणां च गृहस्थो योनिरुच्यते।
सीदमानेन तेनैव सीदन्तीहेतरे त्रयः॥
[5]मूलं प्राणो भवेत्स्कन्धः स्कन्धाच्छाखाश्च पल्लवाः।
मूलेनैकेन नष्टेन सर्वमेव विनश्यति॥
[6]तस्मात्सर्वप्रयत्नेन रक्षणीयो गृहाश्रमी।
राज्ञा चान्यैस्त्रिभिः पूज्यो माननीयश्च सर्वदा॥

(१) दस्मृ. १।१२; अप. ३।५७ पृ. ९५३ दण्डैश्च (दण्डेन) वेदाद्यैर्नखलो (वेदाभ्यां नखरो) श्रमी (श्रितः) क्रमेण दक्षः; मपा. ३६६ दण्डैश्च (दण्डेन) लोमै(रोमै) श्रमी (श्रितः); मुक्ता. ४६६ दण्डैश्च (दण्डेन) लोमैर्वनाश्रमी (रोम्णा वनाश्रितः).

(२) दस्मृ. १।१३; विश्व. ३।६६ उत्त.; अप. ३।५७ पृ. ९५३ श्चैवं (श्चैव) न चा (स ना); पमा. १।५४८ द्वितीयचरणो नास्ति; मपा. ३६६ यतिश्चैवं (यतेश्चैव) पू.; मुक्ता. ४६६ श्चैवं (श्चात्र).

(३) दस्मृ. २।५७; निक. २१०; आद. ९७ च्छ्रेष्ठो (ज्येष्ठो); मुक्ता. १६५ च्छ्रेष्ठो (च्छ्रेयान्); आप्र. ४५६; संर. ३८४ (देवैश्चापि मनुष्यैश्च तिर्यग्योनिभिरेव च। गृहस्थः सेव्यते यस्मात्तस्माज्ज्येष्ठो गृहाश्रमी॥) स्मृतिः.

(४) दस्मृ. २।५८; निक. २१०; मुक्ता. १६५ त्रयाणा (चतुर्णां) च (तु) तेनैव (तेनेह) न्तीहेतरे (न्त्यन्येऽपि ते); आप्र. ४५६ हेतरे (हैव ते).

(५) दस्मृ. २।५९; निक. २१० नैकेन न (नैव विन); मुक्ता. १६५ मूलं प्रा (मूलप्रा) खाश्च प (खाः सप) नैकेन न (नैव विन) मेव वि (मेतद्धि); आप्र. ४५६ खाश्च (खेति) नैकेन न (नैव विन) मेव वि (मेतद्धि).

(६) दस्मृ. २।६०; निक. २१० गृहाश्रमी (गृही सदा); मुक्ता. १६५ माननीय (रक्षणीय) अशुद्धो ग्रन्थः; आप्र. ४५६ निकवत्.

अन्यैः त्रिभिः ब्राह्मणवैश्यशूद्रैः। पूज्यो धनादिभिः। माननीयः आसनाभिवादनादिभिः।

आप्र. ४५६

संन्यासाधिकारी, संन्यासप्रशंसा, गार्हस्थ्यप्रशंसा

[1]तस्मात्त्यक्तकषायेण कर्तव्यं दण्डधारणम्।
इतरस्तु न शक्नोति विषयैरभिभूयते॥
[2]त्रिदण्डव्यपदेशेन जीवन्ति बहवो जनाः।
यो हि ब्रह्म न जानाति त्रिदण्डार्हो भवेन्न सः॥
[3]आश्रमे तु यतिर्यस्य मुहूर्तमपि विश्रमेत्।
किं तस्यान्येन धर्मेण कृतकृत्योऽभिजायते॥
[4]संचितं यद्गृहस्थस्य पापमामरणान्तिकम्।
निर्दहत्येव तत्सर्वमेकरात्रोषितो यतिः॥
[5]अध्वश्रमपरिश्रान्तं यस्तु भोजयते यतिम्।
निखिलं भोजितं तेन त्रैलोक्यं सचराचरम्॥
यस्मिन्देशे वसेद्योगी ध्यायी योगविचक्षणः।
सोऽपि देशो भवेत्पूतः किं पुनस्तस्य बान्धवाः॥
[6]यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः।
तथा गृहस्थमाश्रित्य सर्वे जीवन्ति भिक्षवः॥

संन्यासानधिकारिणः, संन्यासप्रशंसा

[7]आरूढपतितापत्यं कुनखी श्यावदन्तकः।
क्षयक्षीणोऽङ्गविकलो न तु संन्यासमर्हति॥
[8]संप्रत्यवसितानां च महापातकिनां तथा।
व्रात्यानामभिशस्तानां संन्यासं नैव कारयेत्॥

(१) दस्मृ. ७।२८; अप. ३।५७ पृ. ९५३ त्यक्त (त्यक्त) रभिभू (रवही); मोक. ४१ त्यक्त (त्यक्त) इतरस्तु (इति यस्तु) रभिभू (रेव ही); मुक्ता. १७४ रभि (श्चाभि); यसं. ५ रभिभू (रपही).

(२) दस्मृ. ७।३१; मोक. ४१ चतुर्थचरणे (न त्रिदण्डार्हको हि सः).

(३) दस्मृ. ७।४२.

(४) दस्मृ. ७।४३ हस्थस्य (हस्थेन); सपु. १३१ क्रमेण पराशरः; पमा. १।५६६ हत्येव (हिष्यति); मर. ६४१ पमावत्.

(५) दस्मृ. ७।४४-४५.

(६) मुक्ता. १६५. एतत्सदृशश्लोकस्यान्यत्रोपलम्भेऽपि दक्षनाम्नोद्धृतश्लोकप्रघट्टके पठितत्वादत्र संगृहीतः।

(७) मुक्ता. १७३ तापत्यं (तो व्रात्यः) क्षयक्षीणो (क्षयी तथा); यसं. ५.

(८) यसं. ६.

**व्रतयज्ञतपोदानहोमस्वाध्यायवर्जितम्।**
**सत्यशौचाश्रमभ्रष्टं संन्यासं नैव कारयेत्॥**
**[1]संन्यस्यन्तं द्विजं दृष्ट्वा स्थानाच्चलति भास्करः।**
**एष मे मण्डलं भित्त्वा परं स्थानं प्रयास्यति॥**
**[2]संन्यस्तमिति यद्ब्रूयात्प्राणैः कण्ठगतैरपि।**
**त्रिंशत्परांस्त्रिंशदपरांस्त्रिंशच्च परतः परान्।**
**सद्यः संन्यसनादेव नरकात्त्रायते पितॄन्॥**

## संवर्तः

ब्रह्मचर्यप्रशंसा, समुच्चयपक्षे उत्तरोत्तराश्रमाधिकारिणः, संन्यासप्रशंसा, संन्यासभेदास्तेषां प्राशस्त्यतारतम्यं च, अनाश्रमित्वस्य निषेधः प्रायश्चित्तं च

**[3]एष धर्मः समाख्यातः प्रथमाश्रमवासिनाम्।**
**एवं संवर्तमानस्तु प्राप्नोति परमां गतिम्।**
**[4]अतो द्विजः समावृत्तः सवर्णां स्त्रियमुद्वहेत्॥**
समावृत्तः गुरुकुलादागत्य कृतस्नानाख्यसंस्कारः।
*गृक. ३

**[5]उषित्वैवं गृहे विप्रो द्वितीयादाश्रमात्परम्।**
**वलीपलितसंयुक्तस्तृतीयं तु समाश्रयेत्॥**
**[6]उषित्वैवं वने विप्रो विधिज्ञः सर्वकर्मसु।**
**चतुर्थमाश्रमं गच्छेज्जितक्रोधो जितेन्द्रियः॥**
**[7]संसेव्य चाऽऽश्रमान्सर्वाञ्जितक्रोधो जितेन्द्रियः।**
**ब्रह्मलोकमवाप्नोति वेदशास्त्रार्थविद्द्विजः॥**
**[8]भावितैः करणैश्चायं बहुसंसारयोनिषु।**
**आसादयति शुद्धात्मा मोक्षं वै चतुराश्रमे॥**

**[1]चतुर्विधा भिक्षवस्तु कुटीचकबहूदकौ।**
**हंसः परमहंसश्च यो यः पश्चात्स उत्तमः॥**
**[2]अनाश्रमे(? मी) न तिष्ठेत दिनमेकमपि द्विजः।**
**प्राजापत्यत्रयं कुर्याद्वत्सरं तु निराश्रमः॥**

## वृद्धशातातपः

संन्यासप्रशंसा

**[3]निगृहीतेन्द्रियग्रामो यत्र यत्र वसेद्यतिः।**
**तत्र तत्र कुरुक्षेत्रं नैमिषं पुष्करं तथा॥**

## पराशरः

संन्यासप्रशंसा, विरक्तविधुरादीनां संन्यासः, गार्हस्थ्यप्रशंसा

**[4]द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ।**
**परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः॥**

योगाभ्यासेनेश्वरमुपासीनः परिव्राजकोऽर्चिरादिमार्गेण ब्रह्मलोकं गच्छन् मार्गमध्ये वाय्वादित्यचन्द्राणां मण्डलानि क्रमेण भित्त्वा तत्र तेभ्य उत्तरोत्तराधिकेभ्यः छिद्रेभ्यो निर्गत्य क्रमेण विद्युदादिलोकान् संचरन् ब्रह्मलोकं प्राप्नोति। छिद्रनिर्गमनं वाजसनेयिब्राह्मणे श्रुतम् — 'स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति तस्मै स तत्र विजिहीते यथा उदुम्बरस्य खं तेन स ऊर्ध्वमाक्रमते स चन्द्रमसमागच्छति तस्मै स तत्र विजिहीते यथा दुन्दुभेः खं तेन स ऊर्ध्वमाक्रमते' (बृउ. ५।१०) इति।
+पमा. १।६२६

**[5]संन्यस्तं ब्राह्मणं दृष्ट्वा स्थानाच्चलति भास्करः।**
**एष मे मण्डलं भित्त्वा परं स्थानं प्रयास्यति॥**

(१) यद्यपि मण्डलस्याचेतनरश्मिसमूहरूपत्वात्तद्भेदेऽपि नास्ति काचिदादित्यस्य वेदना, तथापि

---

* गृर. गृकवत्।
(१) पमा. १।५६६; मर. ६४२ स्थानं प्रया (स्थानेऽत्र या).
(२) मोक. ४०; मुक्ता. १७५ प्रथमार्धं नास्ति; यसं. २० दप (दव) त्त्रायते (त्तारयेत्) प्रथमार्धं नास्ति.
(३) संस्मृ. ३२; गृक. ३ मवासिनाम् (मिणि द्विजे) पू.; गृर. ४ सर्वं गृकवत्.
(४) संस्मृ. ३३; गृक. ३ (अतः परं समावृत्तः कुर्याद्दारपरिग्रहम्॥); गृर. ४ गृकवत्.
(५) संस्मृ. १००.
(६) संस्मृ. १०४; मुक्ता. १७१ विप्रो विधिज्ञः (सम्यग्वितृष्णः) कर्मसु (वस्तुषु) जितक्रोधो (द्रुतहोमो).
(७) संस्मृ. १०८-१०९; मुक्ता. १७१.
(८) यसं. ४.

\+ विम. पमागतम्।
(१) मुक्ता. १८३.
(२) समु. ११४ दक्षसंवर्तौ.
(३) वृशास्मृ. ६१ यत्र वसेद्यतिः (तत्र वसेन्नरः) तत्र तत्र (तत्र तस्य) रं तथा (राणि च); मुक्ता. २०६ वसे (भवे) शातातपः; यसं. ९७.
(४) पस्मृ. ३।३१; मुक्ता. ६६, १७५.
(५) पस्मृ. ३।३३; मुक्ता. १७५.

पूर्वमत्यन्तनीचपदे वर्तमानस्येदानीमुच्चपदप्राप्तिश्चित्तक्लेशहेतुर्भवति। अत एव, भित्त्वा परं स्थानं प्रयास्यतीत्युक्तम्। एतदेवाभिप्रेत्य व्यास आह – 'क्रियावद्भिर्हि कौन्तेय देवलोकः समावृतः। न चैतदिष्टं देवानां मर्त्यैरुपरि वर्तनम्' (भा. १४।१९।५४) इति। मुमुक्षुपरिव्राजकदर्शनमात्रेण निष्पन्नस्य भास्करचलनस्योपन्यासाद्योगिनो यथोक्तफलं दृढीकृतं भवति।

पमा. १।६२७-६२८

(२) संन्यस्तं संन्यासयोगवन्तं ब्राह्मणमालोक्य भास्करो मण्डलाधिष्ठात्री देवता स्थानात् चित्तस्थैर्याच्चलति, चञ्चलचित्तो भवतीति यावत्। तत्र हेतुमाह – एष योगी मे मदधिष्ठितं मण्डलं भित्त्वा परं स्थानं ब्रह्मलोकाभिधं प्रयास्यतीति। एतच्चानिष्टं देवानां यन्मनुष्याणां स्वोपरि वर्तनमिति। अत एव व्यासः – 'क्रियावद्भिर्हि कौन्तेय देवलोकः समावृतः। न चैतदिष्टं देवानां मर्त्यैरुपरि वर्तनम्॥' (भा.१४।१९।५४) इति।

विम.

**[1]संदिग्धः सर्वभूतानां वर्णाश्रमविवर्जितः।**
**तं दृष्ट्वा शान्तमनसं स्पृहयन्ति दिवौकसः॥**
**[2]पारिव्राज्यं तु वैराग्यात्कर्तव्यं विधुरादिभिः।**
**विधिना तच्च कुर्वीत संन्यासमिह बुद्धिमान्॥**
**[3]भिक्षाभुजस्तु ये केचित्परिव्राड्ब्रह्मचारिणः।**
**तेऽप्यत्रैव प्रतिष्ठन्ते गार्हस्थ्यं तेन वै परम्॥**

## बृहत्पराशरः

ब्रह्मचर्यावधिः, वानप्रस्थ्ये
भार्यासाहित्यराहित्यविकल्पः,
चतुर्थाश्रमयोग्यता

**[4]द्वादशाब्दं व्रतं धार्यं षट्त्र्यब्दं तु श्रुतिं प्रति।**
**आदित्याब्दे त्यजेत्तद्वै दत्त्वा तु गुरवे वरम्॥**
**[5]अथ विप्रो वनं गच्छेद्विना वा सह भार्यया॥**

(१) **यसं.** ३६.
(२) **मुक्ता.** १७३ पारिव्राज्यं (परिव्रज्या) र्तव्यं (र्तव्या) ना तच्च (नैव च); **यसं.** ४.
(३) **मुक्ता.** १६५.
(४) **बृपसं.** ६।१६४.
(५) **बृपसं.** १२।९६ पृ. २४१.

**[1]विधाय विप्रो वनवासधर्मान्**
**सर्वानिमानुक्तविधिक्रमेण।**
**स शोध्य पापानि वपुर्विशोध्य**
**ब्रह्माधिगच्छेत्परमं द्विजेन्द्राः॥**
**आश्रमत्रयधर्मान्वा चरित्वा प्राग्द्विजास्ततः।**
**द्वयस्य वा ततः पश्चाच्चतुर्थाश्रममाचरेत्॥**
**द्विजाग्रजो यदा पश्येद्वलीपलितमात्मनः।**
**उपरामस्तथाऽक्षाणां क्षैण्यं कामस्य सद्द्विजाः॥**
**समीक्ष्य पुत्रं पौत्रं वा दृष्ट्वा वा दुहितुः सुतम्।**
**अधीत्य विधिवद्वेदान् कृत्वा यज्ञान्विधानतः॥**
**निश्चयं मनसः कृत्वा चतुर्थाश्रममाविशेत्।**
**प्राजापत्यां विधायेष्टिं वनाद्वा सद्मनोऽपि वा॥**
**[2]जितेन्द्रियो हि दण्डार्हो युवा न स्यात्तथा सरुक्।**
**युवा नीरुक्तथा भिक्षुरात्मवृद्धिप्रदूषकः॥**

संन्यासप्रशंसा

**एकरात्रं तु निवसेद्भिक्षुर्यस्य गृहाङ्गणे।**
**तस्य वै तारयेत्पूर्वान् विंशतिं पितृमातृतः॥**
**भिक्षुर्यस्यान्नभुग् ब्रह्मयोगाभ्यासरतो भवेत्।**
**परिणामश्च योगेन कृतकृत्यो गृही भवेत्॥**

आश्रमाणामवान्तरभेदाः
सलक्षणाः

**[3]अथातः संप्रवक्ष्यामि भेदमाश्रमसंभवम्।**
**ब्रह्मचर्यादिकानां तु याथातथ्यं निबोधत॥**
**चतुर्णामाश्रमाणां तु भेदो दृष्टो मनीषिभिः।**
**प्रत्येकशो वदाम्येनं शृणुध्वं द्विजसत्तमाः॥**
**ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा।**
**एतद्भेदान् प्रवक्ष्यामि शृणुध्वं पापनाशनम्॥**
**चतुर्धा ब्रह्मचारी स्याद्गायत्रो ब्रह्मस्तथा।**
**प्राजापत्यो बृहच्चेति लक्षणानि पृथक् पृथक्॥**
**अक्षारलवणाशी स्याद्गायत्र्यभ्यासतत्परः।**
**वर्तते भिक्षया नित्यं गायत्रोऽयं प्रकीर्तितः॥**
**चतुर्धा द्वादशाब्दानि योऽधीयानश्चतुःश्रुतीः।**
**भिक्षया ब्रह्मचर्येण तिष्ठेद्ब्राह्मः स उच्यते॥**

(१) **बृपसं.** १२।१२०-१२३ पृ. २४३.
(२) **बृपसं.** १२।१३८-१३९, १४०-१४२ पृ. २४४.
(३) **बृपसं.** १२।१४५-१७४ पृ. २४५-२४७.

गुरोर्वा गुरुपुत्रस्य तत्पत्न्या वाऽपि संनिधौ।
यो वसेदभ्यसञ्ज्ञानं ब्रह्मचारी स नैष्ठिकः॥
8ऋतुकालाभिगामी सन् परस्त्रीं पर्व वर्जयन्।
वेदानध्येति भिक्षाभुक् *प्राजापत्योऽयमुच्यते॥
गृहस्थस्तु चतुर्भेदो वार्ताशालीनवृत्तिकौ।
यायावरस्तथा वान्यो घोरसंन्यासिकस्तथा॥
कृषिगोरक्षवाणिज्यैः कुर्वन् सर्वाः क्रिया द्विजः।
विहितैरात्मविद्यैश्च वार्तावृत्तिः स उच्यते॥
ददात्यध्येति यजते याजयेन्न च पाठयेत्।
कुर्यात्कर्माप्रतिग्राही शालीनो ध्यानकृद्विजः॥
उक्तः सन् कारयेदन्यां(?न्यं) क्रियां कुर्यात्प्रतिग्रहम्।
पाठयेच्च तथाऽऽत्मानं यायावरः स उच्यते॥
तिष्ठेद्यश्च शिलोञ्छाभ्यामुद्धृताग्निश्च उच्यते।
आत्मविच्च क्रियाः कुर्यादुघोरसंन्यासिकः स्मृतः॥
वानप्रस्थश्चतुर्भेदो वैखानस उदुम्बरः।
वालखिल्यः फेनपो वा तल्लक्षणमथोच्यते॥
फलैर्मूलैरकृष्टान्नैरग्निकर्म वने वसन्।
कुर्यात्पञ्चमहायज्ञान् स वैखानस आत्मवित्॥
प्रातर्दृष्टदिगानीतैर्फलाकृष्टाशनेन्धनैः।
उदुम्बरो मतो ज्ञानी पञ्चयज्ञाग्निकर्मकृत्॥
चतुरो न्यासकृदग्निकार्यं कुर्वन्वने वसन्।
फलस्नेहैर्वनान्नैश्च बहुभिः श्रुतिचोदितैः॥
उद्धृत्य परिपूताद्भिस्तथाऽयाचितवृत्तिकः।
फलैर्वन्यैर्वनान्नैश्च फेनपः पञ्चयज्ञकृत्॥
+वनस्थो वालखिल्यो यो धत्ते वल्कलचीवरम्।
अग्निकार्यकृदात्मज्ञ ऊर्जान्ते संचितं त्यजन्॥
चतुर्भेदः परिव्राट् स्यात्कुटीचकबहूदकौ।
हंसाः परमहंसाश्च वक्ष्यन्ते ते पृथक् पृथक्॥
पुत्रस्य भ्रातृपुत्रस्य भ्रातृदौहित्रयोरपि।
तदुपान्तकुटीस्थो यः स भैक्ष्यवृत्तिभुग्द्विजः॥
प्रतिचर्याकृतः सोऽपि यो वासःपूतवारिपः।
तथा त्रिदण्डभृच्छान्त आत्मज्ञः स कुटीचकः॥

8 'चतुर्धा ब्रह्मचारी॰' इति श्लोकोक्तविषयक्रमानुसारेण अयं श्लोकः 'गुरोर्वा॰' इति श्लोकात्पूर्वमपेक्षितः।

* प्राजापत्यविषयककात्यायनवचने टिप्पणी द्रष्टव्या।

\+ 'वानप्रस्थश्चतु॰' इति श्लोकोक्तविषयक्रमानुसारेण अयं श्लोकः 'चतुरो न्यास॰' इति श्लोकात्पूर्वमपेक्षितः।

ज्ञेयो बहूदको नाम यः पवित्रितपादुकः।
शिखासनोपवीतानि धातुकाषायवस्त्रभृत्॥
साधुवृत्तिर्द्विजौकःसु भिक्षाभुगात्मचिन्तकः।
बहूदकस्त्वयं ज्ञेयो यः परिव्राट् त्रिदण्डभृत्॥
एकदण्डधरा हंसाः शिखोपवीतधारिणः।
वार्याधारकराः शान्ता भूतानामभयङ्कराः॥
वसन्त्येकक्षपां ग्रामे नगरे पञ्चशर्वरीः।
कर्षयन्तो व्रतैर्देहमात्मज्ञानरताः सदा॥
एकदण्डधरा मुण्डाः कन्थाकौपीनवाससः।
अव्यक्तलिङ्गिनोऽव्यक्ताः सर्वदैव च मौनिनः॥
शिखादिरहिताः शान्ता उन्मत्तवेषधारिणः।
भग्नशून्यामरौकःसु वासिनो ब्रह्मचिन्तकाः॥
एते परमहंसा वै नैष्ठिका ब्रह्मभिक्षवः।
उक्तास्तद्व्रतभेदज्ञैरात्मनः प्रार्थनाकराः॥
यो ब्रह्मचर्यव्रतचारिभेदो
भेदो गृहस्थस्य तथैव यश्च।
योऽरण्यवासिद्विजकर्मभेदो
यतेस्तथा नैष्ठिकमुक्तिभेदाः॥

## अत्रिः

संन्यासस्य भेदाः प्रशंसा च

[1]चतुर्विधो भिक्षुकः स्यात्कुटीचरबहूदकौ।
हंसः परमहंसश्च यो यः पश्चात्स उत्तमः॥

क्वचित्कुटीचक इति (? चकेति) पाठः। तत्राऽऽद्ययोर्द्वयोः शिखासूत्रधारणं पुत्रदत्तान्नभोजनं भवति। परन्तु सर्वव्यासङ्गान् विहायाध्यात्मविद्याऽभ्यसनीया। हंसस्तु पुत्रादीनां त्यागं कृत्वा वनादौ वसेत्। शिखासूत्रे वैकल्पिके। परमहंसो मुण्डः सूत्ररहितश्च। सर्वेषां ब्रह्मविद्याभ्यासस्तुल्यः। संम. ८४

[2]ब्रह्मचारिसहस्रं च वानप्रस्थशतानि च।
ψब्राह्मणानां हि कोट्यस्तु यतिरेको विशिष्यते॥
साक्षाद्विष्ण्वाकृतिर्विप्रो नमस्योऽयं सुरासुरैः।
वर्णाश्रमैः समस्तैश्च परहंसो द्विजोत्तमः॥

ψ ब्राह्मणत्वस्य ब्रह्मचारिवानप्रस्थव्यावृत्तत्वाभावादत्र 'गृहस्थानाम्' इति पाठो भवितुं युक्तः।

(१) संम. ८४ कुटीचर (कुटीचक) इत्यपि पाठः; यसं. १२७ कुटीचर (कुटीचक).

(२) यसं. १२७.

**द्वे रूपे वासुदेवस्य चलं चाचलमेव च।**
**चलं संन्यासिनां रूपमचलं प्रतिमादिकम्॥**
[1]**निर्द्वन्द्वो नित्यसत्त्वस्थः सर्वत्र समदर्शनः।**
**तुरीयः परमो हंसः साक्षान्नारायणो यतिः॥**
[2]**न तावन्मुच्यते दुःखाज्जन्ममृत्योश्च बन्धनात्।**
**यावन्न धारयेद्विप्रो वैष्णवं लिङ्गमादरात्॥**
[3]**प्रत्यग्ध्वान्तसमुच्छेदि ज्ञानमैकात्म्यनिष्ठितम्।**
**संन्याससाधनं प्रोक्तममृतत्वैकसाधनम्॥**

केवलेन संन्यासेन न मुक्तिः, नापि केवलेन ज्ञानेनेति। यदि केवलेन ज्ञानेन मुक्तिस्तर्हि याज्ञवल्क्यश्वेतकेतुप्रभृतीनां ज्ञानिनामपि संन्यासग्रहणानुपपत्तिः स्यात्। दृश्यते तस्मात्संन्यासज्ञानात्*मुक्तिरित्येतदाहात्रिः न तावदिति। यसं. १५४-१५५

## सुमन्तुः

संन्यासनिमित्तानि

[4]**आपत्काले तु संन्यासः कर्तव्य इति शिष्यते।**
**जरयाऽभिपरीतेन शत्रुभिर्व्यथितेन च॥**

## जाबालिः

निश्चितस्य संन्यासस्याकरणं संन्यासारूढस्य पातनं पतितस्य संन्यासारोपणं संन्यासे विघ्नोत्पादनं च प्रत्यवायनिमित्तानि

**संन्यासनिश्चयं कृत्वा पुनर्न च करोति यः।**
**स कुर्यात्कृच्छ्रमश्रान्तः षण्मासान्वृत्त्यनन्तरम्॥**
**संन्यासं पातयेद्यस्तु पतितं न्यासयेत्तु यः।**
**संन्यासविघ्नकर्ता च त्रीनेतान्पतितान्विदुः॥**

संन्यासानधिकारिणः, संन्यासप्रशंसा

**संप्रत्यवसितानां च महापातकिनां तथा।**
**व्रात्यानामभिशस्तानां संन्यासं नैव कारयेत्॥**
**व्रतयज्ञतपोदानहोमस्वाध्यायवर्जितम्।**
**सत्यशौचपरिभ्रष्टं संन्यासं नैव कारयेत्॥**
**चतुर्वेदस्तु यो विप्रः सोमयाजी शतक्रतुः।**
**तस्मादपि यतिः श्रेष्ठस्तिलपर्वतमन्तरम्8॥**

## पैठीनसिः

आश्रमगणना, गार्हस्थ्यप्रशंसा

**चत्वारो ह्याश्रमा ब्रह्मचारी गृहस्थो वानप्रस्थो भिक्षुकश्चेति। सर्वे ते गृहस्थमूलास्तदुपजीविनः॥**

(१) सर्व इति गृहस्थस्यैव पूजादिकर्तृत्वात्। गृर. ३०६

(२) गृहस्थमूला गृहस्थस्यैव पूज्योपादानाधिकारित्वात्। आद. ९७

## कण्वः

स्नातकत्वमर्यादा

[1]**स्नातकोऽब्दत्रयं न तिष्ठेत्॥**

## अङ्गिराः

आश्रमविकल्पः, वैराग्यातुरत्वादीनि संन्यासनिमित्तानि

[2]**संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया।**
**प्रव्रजत्यकृतोद्वाहः परं वैराग्यमाश्रितः॥**
[3]**प्रव्रजेद्ब्रह्मचर्याद्वा प्रव्रजेद्वा गृहादपि।**
**वनाद्वा प्रव्रजेद्विद्वानातुरो वाऽथ दुःखितः॥**

---

* अत्र न तत्पुरुषः किंतु समाहारद्वंद्वः

(१) **मुक्ता.** १९०; **यसं.** २६-२७.

(२) **मुक्ता.** १७६ वैष्णवं (विष्णवं); **यसं.** ४ : १५५ मृत्योश्च ब (संसारव) मादरात् (मुत्तमम्).

(३) **यसं.** १५५.

(४) **मुक्ता.** १७४ संन्यासः (संन्यासं); **यसं.** ५; **बाल.** ३।६० पृ. १०० तु (च) याऽभिप (या हि प) र्व्यथि (र्व्याधि) स्मृतिः.

8 प्रयोगोऽयमेवं साधनीयः — अन्तरमिवेति उपमानौपम्यवाचकपदे अध्याहार्ये। तिलपर्वतमिति पदं 'तिलपर्वतौ अवधिभूतौ अस्य स्तः' इत्यर्थे मत्वर्थीयार्शआद्यजन्तम्। तदर्थश्चाध्याहृतान्तरपदार्थविशेषणम्। श्रूयमाणान्तरपदं यतिविप्रावधिकोपमेयभूतान्तरवाचकम्। यतिविप्राववधिभूतौ प्रत्यासत्तिलभ्यौ। तिलपर्वतयोरन्तरमिव यतिविप्रयोरन्तरमित्यर्थः।

(१) **मभा.** ९।१.

(२) **पमा.** १।५३२; **मर.** ६१४-६१५; **यसं.** १५४ जत्य (जन्त्य) द्वाहः (द्वाहाः) श्रितः (श्रिताः) (=); **कृभ.** २१२९ सार (पार).

(३) **पमा.** १।५३२ चर्याद्वा प्रव्रजेद्वा (चर्येण प्रव्रजेच्च); **मर.** ६१५ पमावत्; **मुक्ता.** १७२ प्रव्रजे (संन्यसे) चर्याद्वा (चर्येण) वाऽथ (वा तु); **सिन्धु.** २१२९ : २१४८ प्रव्रजेद्व (संन्यसेद्व) प्रव्रजेद्वा (संन्यसेच्च) स्मृत्यर्थसारे; **विपा.** ५।४९४ व्रजेद्वा (व्रजेच्च); **यसं.** २ प्रव्रजे (संन्यसे) चर्याद्वा (चर्येण); **बाल.** ३।६० पृ. ९९ विपावत्.

(१) दुःखितः व्याधितश्चौरव्याघ्राद्युपद्रुतः(?द्रवतः) आतुरः मुमूर्षुः। ×पमा. १।५३२

(२) व्याधिचौरव्याघ्राद्युपद्रवेण मरणसंभावनायामपि यत्याश्रमस्वीकार उक्तोऽङ्गिरसा — संसारमिति।

मर. ६१४

**[1]वनवासात्परिश्रान्तः प्रव्रजेद्विधिपूर्वकम्।**
**व्याध्याविष्टो विरक्तो वा ब्रह्मवित्संन्यसेद्द्विजः॥**

वैराग्यमेव संन्यासनिमित्तं तेन विना संन्यासे पातित्यं च, मृतभार्यस्या-परभार्याया अलाभे संन्यासः

**[2]यदा मनसि संजातं वैतृष्ण्यं सर्ववस्तुषु।**
**तदा संन्यासमिच्छन्ति पतितः स्याद्विपर्यये॥**
**[3]विरक्तः संन्यसेद्विद्वाननिष्ट्वाऽपि द्विजोत्तमः॥**
**प्रकर्तुमथ शक्तोऽपि जुहोतियजतिक्रियाः॥**
**[4]अन्धः पङ्गुर्दरिद्रो वा विरक्तः संन्यसेद्द्विजः।**
**सर्वेषामेव वैराग्यं संन्यासे तु विधीयते॥**

अन्धपङ्ग्वोः संन्यासविधानं विरक्तिप्रशंसार्थम्, न पुनस्तत्प्राप्त्यर्थम्, 'आरूढपतितो व्रात्यः, कुनखी यावदन्तकः। क्षयी तथाऽङ्गविकलो न तु संन्यासमर्हति॥' (इति) दक्षस्मरणात्।

मुक्ता. १७३

**[5]पतेदेवाविरक्तो यः संन्यासं कर्तुमिच्छति।**
**पुनर्दारक्रियाभावे मृतभार्यः परिव्रजेत्॥**

संन्यासप्रशंसा

**[6]षष्टिं कुलान्यतीतानि षष्टिमागामिकानि च।**
**कुलान्युद्धरते प्राज्ञः संन्यस्तमिति यो वदेत्॥**

× सिन्धु., बाल. पमावत्। विपा. पमागतम्।

(१) **यसं.** १.

(२) **मुक्ता.** १७३; **यसं.** २ पर्यये (पर्ययात्).

(३) **मुक्ता.** १७३; **यसं.** ४ मथ श (मप्यश).

(४) **मुक्ता.** १७३; **संम.** ८४; **यसं.** ४ : १५४ (=).

(५) **मुक्ता.** १७३; **यसं.** ४ पतेदे (पतत्ये) भावे मृ (भावान्मृ).

(६) **मुक्ता.** १७५; **सिन्धु.** २१४८ षष्टिं (षष्टिः) षष्टिमागामिका (षष्टीनामधिका); **यसं.** २० : १५४ (=); **बाल.** ३।६० पृ. १००.

**[1]एकरात्रोषितस्यापि यतेर्या गतिरुच्यते।**
**न सा शक्या गृहस्थेन प्राप्तुं क्रतुशतैरपि॥**
**संन्यस्तमिति यो ब्रूयात्प्राणैः कण्ठगतैरपि।**
**न तत्क्रतुशतेनापि प्राप्तुं शक्नोति मानवः॥**
**[2]ये च संतानजा दोषा येऽपि स्युः कर्मसंभवाः।**
**संन्यासस्तान्दहेद्दोषांस्तुषाग्निरिव काञ्चनम्॥**
**[3]सूर्यखद्योतयोर्यद्वन्मेरुसर्षपयोरिव।**
**अन्तरं हि महद्दृष्टं तथा भिक्षुगृहस्थयोः॥**

## व्याघ्रपादः

ब्रह्मचर्यावधिः

**[4]पूर्णचत्वारिंशद्वर्षो गृही भवेत्॥**

## आश्वलायनः

चत्वार आश्रमा धर्महेतवः,आयुर्विभागैराश्रमव्यवस्था, अनाश्रमित्वनिषेधः, आश्रमसमुच्चयविकल्पौ, साधकत्वासाधकत्वाभ्यामाश्रमद्वैविध्यम्, वानप्रस्थ्ये ब्राह्मणक्षत्रिययोरधिकारः, संन्यासे ब्राह्मणस्यैवाधिकारः

**[5]धर्मस्य करणान्यष्टौ वर्णाश्चत्वार आश्रमाः।**
**प्रथमश्चाऽऽश्रमाणां च व्रती गुप्ता(?र्व)ग्निसेवकः॥**
**गृही द्वितीयो वनगस्तृतीयः कृच्छ्रसाधनः।**
**चतुर्थो भिक्षुरुद्दिष्टः सर्वसङ्गविवर्जितः॥**
**[6]एवं गुरौ वसन्विप्रो निभृतो व्याजवर्जितः।**
**चतुर्थमायुषो भागं ब्रह्मलोके महीयते॥**
**[7]स्नात्वैवं विधिना काले मासमात्रमपि द्विजः।**
**अनाश्रमी न तिष्ठेत सुस्वस्थः प्रयतात्मवान्॥**
**[8]स्नातः समुद्वहेत्कन्यां प्रव्रजेद्वा तदिच्छुकः।**
**वनस्थो वा भवेद्विप्रः सुस्वस्थो विधिना शुचिः॥**

(१) **बाल.** ३।६० पृ. १००.

(२) **यसं.** २० : १५४ (=).

(३) **यसं.** २०.

(४) **मभा.** ९।१.

(५) **आश्वस्मृ.** ३.

(६) **आश्वस्मृ.** ५.

(७) **आश्वस्मृ.** ५; **प्रपा.** २९७; **विपा.** ३।१।६६९ सुस्वस्थः (सुखस्थः) स्मृत्यन्तरे.

(८) **आश्वस्मृ.** ५ च्छुकः (च्छकः); **प्रपा.** २९८ च्छुकः (च्छतः) स्मृत्यन्तरे; **विपा.** ३।१।६७१-६७२ सुस्वस्थो (सुखस्थो) स्मृत्यन्तरे.

[1]द्वितीयमायुषो भागमेवं नीत्वा गृहे वसन्।
तृतीयमायुषो भागमरण्ये संवसन्नयेत्।
असाधकः साधकश्च गृहस्थो द्विविधः स्मृतः।
तथा व्रती वनस्थश्च नैष्ठिकः स्यात्तु साधकः॥
आश्रमान्तरमापन्नस्तेषां पूर्वाश्रमात्तु यः।
असाधकः स विज्ञेयो विविधा यतयस्तथा॥
असाधको गृहस्थस्तु भार्याग्निसहितो वनम्।
व्रजेत्काले सुताद्यैस्तु तृप्तैस्तृप्तोऽनुमोदितः॥
भार्यां पुत्रेषु निक्षिप्य व्रजेदर्धाग्निरेव वा॥
[2]वनमेवं वसेद्यस्तु पितृदेवातिथिप्रियः।
राजा वा ब्राह्मणो वाऽथ स मुक्तः सर्वकिल्बिषैः॥
वने म्रियेत स यदि वनवासी तु नैष्ठिकः।
ब्रह्मणो लोकमागत्य ब्रह्मवन्मोदते चिरम्॥
चतुर्थमायुषो भागमावसेद्भिक्षुकाश्रमे।
वानप्रस्थः सुनिर्विण्णो गृही वा प्रथमाश्रमी॥
मुख्याश्रमं द्विजाः प्राहुश्चतुर्णां भिक्षुकाश्रमम्।
विप्र एव वसेत्तस्मिन्सर्वसङ्गविवर्जितः॥

परमहंसप्रशंसा, हंसत्वपरमहंसत्वाभ्यां संन्यासिद्वैविध्यं तयोरवान्तरभेदाश्च सलक्षणाः, संन्यासप्रशंसा

[3]विद्यया वयसा युक्तो हंसस्त्वपि न तादृशः।
यादृशः परमो हंसो विशिष्टाचारलक्षणः॥
[4]हंसाश्चतुर्विधाः प्रोक्तास्तथा परमहंसकाः।
तेषां च वक्ष्यते भेदो यथावदिह भिक्षुणाम्॥
यज्ञोपवीतिनः सर्वे दण्डिनो जापकाः सदा।
भवन्ति हंसाश्चत्वारः शौचाचारपरायणाः॥
येन केनचिदाच्छन्नो येन केनचिदाश्रितः।
यत्र क्वचनवासी यो ज्ञानहंसः स वै स्मृतः॥
प्रातः प्राह्णे च मध्याह्ने सायं यश्चापराह्णके।
व्रतवत्स्नाति यो हंसो नित्यदा स बहूदकः॥
जरया वाऽऽमयाद्यैर्वा संयुक्तो विकलश्च वा।
कुटिं कृत्वा गृहाभ्याशे वसेद्यः स कुटीचकः॥

(१) आश्वस्मृ. २७.
(२) आश्वस्मृ. २८.
(३) आश्वस्मृ. ३४-३५.
(४) आश्वस्मृ. ३५.

गृहे वाऽथ गृहाभ्याशे पुत्रान्नैर्यश्च जीवति।
कुटीचकः स विज्ञेयो यतिर्हंसोऽपरोऽपि वा॥
त्रिदण्डी शिखया युक्तो देवर्षिपितृपूजकः।
अद्भिरेव यतिः सोऽपि नैकत्र वसतिर्भवेत्॥
लोभान्मोहाद्भयात्स्नेहान्नानिर्विण्णो यतिर्भवेत्।
यावन्निर्विण्णमापन्नः प्रव्रजेत्तावदेव सः॥
बहिःसूत्रविनिर्मुक्ताश्चान्तःसूत्रपरायणाः।
विशिखा दण्डिनः शान्ताः स्मृताः परमहंसकाः॥
मुख्यस्तेषां यतिर्योऽसौ ज्ञाननिष्ठः सुनिःस्पृहः।
द्वितीयस्तत्त्वनिष्ठश्च तृतीयः श्रवणप्रियः॥
चतुर्थो लिङ्गनिष्ठः स्यात्पञ्चमो नोपपद्यते।
एते चत्वार उद्दिष्टा यतयः परमहंसकाः॥
[1]सप्त पूर्वान्सप्त परान् पितॄन्नरकवासिनः।
सद्यः संन्यसनादेव तारयेद्ब्राह्मणः शुभः॥
अपरान् वा परांस्त्रिंशत् त्रिंशच्च पितरः परान्।
संन्यस्य संत्यजन्देहं नरकात्तारयेत्पितॄन्॥
ये भस्मनिष्ठा यतयो भैक्षाहारं(?रा) निराशिषः।
तेषां दर्शनमात्रेण पुनात्याश्वघवानपि॥
ग्रासमात्रान्नदानेन तेभ्यो भक्त्या पुमानिह।
मुच्यते पातकैः सर्वैः प्रणामेनापि वन्दनात्॥
वसन्ति यत्र ते भूमौ भस्मनिष्ठा जितेन्द्रियाः।
ध्यायिनो भिक्षवः शान्ता भैक्षाहाररता यताः॥
तत्र वाराणसी नाम क्षेत्राणामुत्तमोत्तमा।
भवेत्संनिहिता साक्षात्तेऽपि विश्वेश्वराः शिवाः॥
त्रिपुण्ड्रं भस्मना यस्तु सर्वाङ्गं वाऽपि धूलयेत्।
मन्त्रेण वै त्रिसंध्यायां भस्मनिष्ठः स हि स्मृतः॥
[2]एवं संन्यस्य यो विप्रस्त्यजेद्देहमनन्यधीः।
स याति शिवसायुज्यं ब्रह्मभूतः सुनिःस्पृहः॥

## लघ्वाश्वलायनः

गार्हस्थ्यप्रशंसा

[3]सर्वेषामाश्रमाणां च गृहस्थाश्रम उत्तमः।
तमेवाऽऽश्रित्य जीवन्ति सर्वे चैवाऽऽश्रमा इह॥

(१) आश्वस्मृ. ३९.
(२) आश्वस्मृ. ४२.
(३) लघ्वाश्वस्मृ. १५।१.

## बुधः

वानप्रस्थ्यसंन्यासग्रहणयोग्यता

**[1]कृतकृत्यस्य वानप्रस्थ्यम्॥**

**विरक्तस्य पारिव्राज्यम्॥**

## शौनकः

ब्रह्मचर्याविधिः

**[2]अधीत्य वेदशास्त्राणि कृत्वा वेदव्रतानि च।**

**चत्वारि गुरवे दत्त्वा यथाशक्ति च दक्षिणाम्॥**

**ततस्तेनाभ्यनुज्ञातः समावर्तनमाचरेत्॥**

तत्र च वेदव्रतयोः समाप्तिरुत्तमः पक्षः। अन्यतरसमाप्तिर्मध्यमः। तथा च याज्ञवल्क्यः — 'गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया। वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा॥' (यास्मृ. १।५१) इति। तदेतत्स्पष्टमाह हारीतः — 'त्रयः स्नातका भवन्ति विद्यास्नातको व्रतस्नातको विद्याव्रतस्नातकः' इति।

संप्र. ५६५

## पुलस्त्यः

आश्रमचतुष्टयम्

**[3]ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः।**

**उक्त आश्रमधर्मः .......... ॥**

## छागलेयः

वानप्रस्थ्ये पत्नीराहित्यं

ब्राह्मणस्य

**[4]पुत्रेषु भार्यां संस्थाप्य वनं गच्छेद्यथाविधि।**

**अपत्नीकः समारोप्य ब्राह्मणः प्रव्रजेद्गृहात्॥**

अत्र समारोप्येत्यस्य वनं गच्छेदित्यनेन व्यवहितेनान्वयो योज्यः। अग्नीनिति वाऽ(चा)ध्याहारः।

अप. ३।४४ पृ. ९३९-९४०

(१) बुस्मृ. ३४-३५.

(२) शौका. ११०।१-२; प्रपा. २८४; संप्र. ५६५.

(३) पुलस्मृ. ७.

(४) अप. ३।४४ पृ. ९३९; मोक. १४; पमा. १।५२५ उत्त.

## दत्तात्रेयः

संन्यासे ब्राह्मणस्यैवाधिकारः

***[1]मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम्।**

**बाहुजातोरुजातानामयं धर्मो न विद्यते॥**

वैष्णवलिङ्गधारणं संन्यासः।

मुक्ता. १७६

## पितामहः

संन्यासचातुर्विध्यम्, परमहंसप्रशंसा

**[2]चतुर्विधा भिक्षवस्तु प्रख्याता ब्रह्मणो मुखात्।**

**कुटीचरो बहूदको हंसश्चैव तृतीयकः॥**

**चतुर्थः परहंसश्च संज्ञाभेदैः प्रकीर्तिताः॥**

**[3]परः परमहंसस्तु तुर्याख्यः श्रुतिरब्रवीत्।**

**यमैश्च नियमैर्युक्तो विष्णुरूपी त्रिदण्डभृत्॥**

यदपि पितामहेनोक्तं 'परः परम...' इति, तदप्युक्तरीत्या वाग्दण्डाद्यभिप्रायम्।

पमा. १।५४९-५५०

**[4]तं दृष्ट्वा शान्तमनसं स्पृहयन्ति दिवौकसः।**

## कपिलः

संन्यासप्रशंसा

**[5]संन्यस्तमिति यो ब्रूयात्प्राणैः कण्ठगतैरपि।**

**सोऽक्षयांल्लभते लोकान्पुनर्जन्म न विद्यते॥**

## शाकलः

ब्रह्मचर्याविधिः, गार्हस्थ्यप्रशंसा

**[6]नियमेन ब्रह्मचर्यमब्दं १वाऽपि समाचरेत्॥**

* अस्य मपाव्याख्यानं प्रकरणादौ संगृहीते तदीयशास्त्रार्थे, बालव्याख्यानं याज्ञवल्क्यस्य 'वनाद्गृहाद्वा' (यास्मृ. ३।५६) इति वचने (वका. पृ. २०४६-२०४७) द्रष्टव्यम्।

(१) पमा. १।५३५ चतुर्थचरणे (नाथ धर्मो विधीयते) स्मृत्यन्तरे; मपा. ३६६; मुक्ता. १७६ यद्विष्णोर्लि (वैष्णवं लि) चतुर्थचरणे (नायं धर्मो विधीयते) अत्रिः; यसं. ४ मुक्तावत्, विष्णुः। १५४ मुक्तावत्, (-); बाल. ३।५६-५७ पृ. ९६.

(२) पमा. १।५४०; मर. ६२० प्रख्याता (व्याख्याता) चरो (चको).

(३) पमा. १।५४९.

(४) यसं. ३५.

(५) यसं. २०; बाल. ३।६० पृ. १०० अशुद्धो ग्रन्थः.

(६) शाका. ६५.

[1]सर्वेषामाश्रमाणां तु गृहस्थाश्रम एव हि।
श्रेष्ठः स्याद्भार्यया युक्तः तस्माद्भार्यां लभेद्विजः॥

## चतुर्विंशतिमतम्

ब्रह्मचर्याद्याश्रमत्रय-
मर्यादाः

[2]वेदानधीत्य यत्नेन पाठतो ज्ञानतस्तथा।
समावर्त्य सवर्णां तु लक्षण्यां स्त्रियमुद्वहेत्॥
[3]धर्मांश्च विविधान्कृत्वा स्वर्गमोक्षफलप्रदान्।
स्वधर्मं तु पुरा स्थाप्य वानप्रस्थो भवेत्ततः॥
[4]स्वधर्मान् विविधान् कृत्वा पश्चात्प्रव्रजितो भवेत्।
[5]चतुर्थमाश्रमं गच्छेद्ब्रह्मविद्यापरायणः॥

## वायुपुराणं ब्रह्माण्डपुराणं च

ब्रह्मकृता आश्रमतत्संज्ञातद्धर्मोत्पत्तिः,
गार्हस्थ्यप्रशंसा, सर्वेषामाश्रमाणां
श्रेयस्करत्वम्

[6]ततः स्थितेषु वर्णेषु स्थापयामास चाऽऽश्रमान्॥
[7]गृहस्थो ब्रह्मचारित्वं वानप्रस्थं सभिक्षुकम्।
आश्रमांश्चतुरो ह्येतान् पूर्वमास्थापयत्प्रभुः॥
[8]वर्णकर्माणि ये केचित्तेषामिह न कुर्वते।
कुतः कर्मक्षितिं प्राहुराश्रमस्थानवासिनः॥
[9]ब्रह्मा तान्स्थापयामास आश्रमान्नामनामतः।
निर्देशार्थं ततस्तेषां ब्रह्मा धर्मान् प्रभाषत।
प्रस्थानानि च तेषां वै यमांश्च नियमांश्च ह॥

(१) शाका. १००.
(२) चम. ४१.
(३) चम. ७१.
(४) चम. ७४.
(५) चम. ७५; मिता. ३।५८; विपा. ४।४९६.
(६) वायु. १।८।१६८; ब्रह्माण्ड. १।७।१६८ चाऽऽश्र (ह्याश्र).
(७) वायु. १।८।१६९; ब्रह्माण्ड. १।७।१६९ (गृहस्थो ब्रह्मचारी च वानप्रस्थो यतिस्तथा। आश्रमांश्चतुरो ह्येतान्पूर्ववत्स्थापयन्प्रभुः॥).
(८) वायु. १।८।१७०; ब्रह्माण्ड. १।७।१७० न कुर्वते (चतुर्भवः) उत्तरार्धे (कृतकर्मकृतावासा आश्रमादुपभुञ्जते॥).
(९) वायु. १।८।१७१; ब्रह्माण्ड. १।७।१७१-१७२ मान्नामनामतः (मान् भ्रामता मतः) निर्देशार्थं (निर्दिदेश) तृतीयार्धे (प्रस्थानानि तु तेषां च यमान्सनियमांस्तथा॥).

[1]चतुर्वर्णात्मकः पूर्वं गृहस्थश्चाऽऽश्रमः स्मृतः।
त्रयाणामाश्रमाणां च प्रतिष्ठा योनिरेव च॥
[2]सर्वे ते श्रेयसे प्रोक्ता आश्रमा ब्रह्मणा स्वयम्॥

आश्रमभेदेन प्राप्यलोकभेदाः

[3]अष्टाशीतिसहस्राणि ऋषीणामूर्ध्वरेतसाम्।
स्मृतं तु तेषां त(?य)त्स्थानं तदेव गुरुवासिनाम्॥
[4]सप्तर्षीणां तु यत्स्थानं स्मृतं तद्वै 8दिवौकसाम्।
प्राजापत्यं गृहस्थानां न्यासिनां ब्रह्मणः क्षयः।
योगिनाममृतं स्थानं नानाधीनां न विद्यते॥
[5]स्थानान्याश्रमिणां तानि ये स्वधर्मे व्यवस्थिताः॥

परमहंसफलम्

[6]आश्रमत्रयमुत्सृज्य प्राप्तस्तु परमाश्रमम्।
अतः संवत्सरस्यान्ते प्राप्य ज्ञानमनुत्तमम्।
अनुज्ञाप्य गुरुं चैव विचरेत्पृथिवीमिमाम्॥
[7]विशुद्धबुद्धिः समलोष्टकाञ्चनः
समस्तभूतेषु चरन्समाहितः।
स्थानं ध्रुवं शाश्वतमव्ययं सतां
परं स गत्वा न पुनर्हि जायते॥

आश्रमिणां साधुशब्द-
वाच्यत्वम्

[8]एवमाश्रमधर्माणां साधनात्साधवः स्मृताः।
गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः॥

8 स्वर्गवनाद्यनेकार्थको दिवशब्दोऽत्र वनपरः।
(१) वायु. १।८।१७२; ब्रह्माण्ड. १।७।१७२-१७३ श्चाऽऽश्रमः स्मृतः (स्याऽऽश्रमः स्थितः) चतुर्थचरणे (वृत्तियोनीति चैव हि).
(२) वायु. १।८।१८०.
(३) वायु. १।८।१८५; ब्रह्माण्ड. १।७।१८० तु तेषां तत् (तेषां तु यत्).
(४) वायु. १।८।१८६; ब्रह्माण्ड. १।७।१८१-१८२ दिवौक (वनौक) क्षयः (क्षयम्) ममृतं (मकृतं) नानाधीनां (तानाजित्वा).
(५) वायु. १।८।१८७; ब्रह्माण्ड. १।७।१८२ (स्थानान्याश्रमिणस्तानि ब्रह्मस्थानस्थितानि तु॥).
(६) वायु. १।१७।१-२.
(७) वायु. १।१८।२०.
(८) वायु. १।५९।२५; ब्रह्माण्ड. १।३२।२६ ऽथ भिक्षुकः (यतिस्तथा).

वानप्रस्थस्य संन्यासः

[1]एवं वनाश्रमे तिष्ठंस्तपसा दग्धकिल्बिषः।
चतुर्थमाश्रमं गच्छेत्संन्यस्य विधिना द्विजः॥

संन्यासे त्रैवर्णिकाधिकारः

✡ [2]त्रैवर्णिकानां संन्यासो विद्यते नात्र संशयः।
शिखायज्ञोपवीतानां त्यागपूर्वैकदण्डयुक्॥

## मार्कण्डेयपुराणम्

आश्रमसमुच्चयविकल्पौ

[3]ब्राह्मणो भार्गवः कश्चित्सुतमाह महामतिः।
कृतोपनयनं शान्तं सुमतिं जडरूपिणम्॥
वेदानधीष्व सुमते यथानुक्रममादितः।
गुरुशुश्रूषणे व्यग्रो भैक्षान्नकृतभोजनः॥
ततो गार्हस्थ्यमास्थाय चेष्ट्वा यज्ञाननुत्तमान्।
इष्टमुत्पादयापत्यमाश्रयेथा वनं ततः॥
वनस्थश्च ततो वत्स परिव्राण्निष्परिग्रहः।
एवमाप्स्यसि तद्ब्रह्म यत्र गत्वा न शोचसि॥
[4]कृतोपनयनः सम्यग्ब्रह्मचारी गुरोर्गृहे।
वसेत ...............................॥
एकं द्वौ सकलान्वाऽपि वेदान्प्राप्य गुरोर्मुखात्।
अनुज्ञातो वरां दत्त्वा दक्षिणां गुरवे ततः॥
गार्हस्थ्याश्रमकामस्तु गृहस्थाश्रममावसेत्।
वानप्रस्थाश्रमं वाऽपि चतुर्थं वेच्छयाऽऽत्मनः॥
तथैव वा गुरोर्गेहे द्विजो निष्ठामवाप्नुयात्॥
अपत्यसंततिं दृष्ट्वा प्राज्ञो देहस्य चाऽऽनतिम्।
वानप्रस्थाश्रमं गच्छेदात्मनः शुद्धिकारणात्॥
इत्येष पापशुद्ध्यर्थमात्मनश्चोपकारकः।
वानप्रस्थाश्रमस्तस्माद्भिक्षोस्तु चरमोऽपरः॥

गार्हस्थ्यप्रशंसा

मदालसोवाच —

[1]वत्स गार्हस्थ्यमास्थाय नरः सर्वमिदं जगत्।
पुष्णाति तेन लोकांश्च स जयत्यभिवाञ्छितान्॥
पितरो मुनयो देवा भूतानि मनुजास्तथा।
कृमिकीटपतङ्गाश्च वयांसि पशवोऽसुराः॥
गृहस्थमुपजीवन्ति ततस्तृप्तिं प्रयान्ति च।
मुखं चास्य निरीक्षन्ते अपि नो दास्यतीति वै॥

वानप्रस्थ्ये संन्यासे चाधिकारः

[2]धर्मांश्च विविधान्कृत्वा स्वर्गमोक्षफलप्रदान्।
स्वधर्मे तु प्रजाः स्थाप्य वानप्रस्थो भवेत्ततः॥
[3]कैवल्यं मनसा ध्यात्वा सर्वदुःखविवर्जितम्।
स्वधर्मविहितं कृत्वा पश्चात्प्रव्रजितो भवेत्॥

## विष्णुपुराणम्

आश्रमिणां गम्या लोकाः

[4]अष्टाशीतिसहस्राणां यतीनामूर्ध्वरेतसाम्।
स्मृतं तेषां तु यत्स्थानं तदेव गुरुवासिनाम्॥

यतीनामूर्ध्वरेतसां वालखिल्यानां स्थानं यत् तत् गुरुवासिनां नैष्ठिकब्रह्मचारिणाम्। वैच.

सप्तर्षीणां तु यत्स्थानं स्मृतं तद्वै वनौकसाम्।
प्राजापत्यं गृहस्थानां न्यासिनां ब्रह्मसंज्ञितम्॥

वनौकसां वानप्रस्थानां संन्यासिनां ब्राह्मणादीनां च विशेषं वक्तुं पूर्वोक्तमेव गृहस्थानाम् अनुवदति — प्राजापत्यमिति। ब्रह्मसंज्ञितं सत्यलोकस्थानम्, 'संन्यासाद्ब्रह्मणः स्थानम्' इति वचनात्। वैच.

योगिनाममृतं स्थानं तद्विष्णोः परमं पदम्।
एकान्तिनः सदा ब्रह्मध्यायिनो योगिनो हि ये॥
तेषां तु परमं स्थानं यत्तत्पश्यन्ति सूरयः॥

योगिनां ज्ञानिनाम्। तदेव स्पष्टयति — एकान्तिन इति। यद्वा योगिनां प्रतीकोपासकानाममृतं विष्णुपदं यतो गङ्गा आयाति। आश्रमिष्वेव एकान्तिनः अद्वैतध्यायिनः

✡अस्य वचनस्य मपा-यप्रव्याख्याने प्रकरणादौ संगृहीतयोस्तदीयशास्त्रार्थयोः बालव्याख्यानं च याज्ञवल्क्यीय 'वनाद्गृहा' इति वचनव्याख्याने द्रष्टव्यम्।

(१) अप. ३।५५-५६ पृ. ९४९ वायुपुराणम्; मोक. ३९ संन्यस्य वि (संन्यासवि) नरसिंहपुराणे; पमा. १।५३६ नृसिंहपुराणम्.

(२) मपा. ३७० ब्रह्माण्डपुराणम्; यप्र. ३४ ब्रह्माण्डपुराणम्; बाल. ३।५६-५७ पृ. ९६ उत्त., ब्रह्माण्डपुराणम्.

(३) मार्क. १०।१०-१३.

(४) मार्क. २५।११, १४-१६, २४, २७.

(१) मार्क. २६।३-५.

(२) समु. १२४.

(३) समु. १२७.

(४) विष्णु. १।६।३६-३८.

परब्रह्मनिदिध्यासनशीलाः तेषां परमं पदं ब्रह्मैव यत् सूरयो जीवन्मुक्ताः पश्यन्ति। शेषं समानम्।

वैच.

आश्रमसमुच्चयः, गार्हस्थ्यप्रशंसा, वानप्रस्थ्ये भार्यासाहित्यराहित्यविकल्पः, संन्यासफलम्

**और्व उवाच –**

**[1]बालः कृतोपनयनो वेदाहरणतत्परः।**
**गुरुगेहे वसेद्भूप ब्रह्मचारी समाहितः॥**
**गृहीतग्राह्यवेदश्च ततोऽनुज्ञामवाप्य वै।**
**गार्हस्थ्यमावसेत्प्राज्ञो निष्पन्नगुरुनिष्कृतिः॥**

गृहीतः ग्राह्यः ग्रहणार्हः वेदः येन सः। निष्पन्नगुरुनिष्कृतिः दत्तगुरुदक्षिणः। वैच.

**भिक्षाभुजश्च ये केचित्परिव्राड्ब्रह्मचारिणः।**
**तेऽप्यत्रैव प्रतिष्ठेते गार्हस्थ्यं तेन वै परम्॥**
**मृदाहरणकार्येण तीर्थस्नानाय च प्रभो।**
**अटन्ति वसुधां विप्राः पृथिवीदर्शनाय च॥**

अटन्ति भ्राम्यन्ति। वैच.

**अनिकेता ह्यनाहारा यत्र सायंगृहास्तु ते।**
**तेषां गृहस्थः सर्वेषां प्रतिष्ठा योनिरेव च॥**

अनिकेताः अगृहाः। अनाहाराः आहारार्थसंचयरहिताः। यत्र सायं तत्रैव गृहं येषां ते। प्रतिष्ठा आश्रयः। योनिः माता, सस्नेहमन्नदानादिना देहपोषणकृत्त्वात्।

वैच.

**यस्तु सम्यक्करोत्येवं गृहस्थः परमं विधिम्।**
**सर्वबन्धविमुक्तोऽसौ लोकानाप्नोत्यनुत्तमान्॥**

सर्वैर्बन्धैर्विमुक्तः सन्। वैच.

**वयःपरिणतौ राजन्कृतकृत्यो गृहाश्रमी।**
**पुत्रेषु भार्यां निक्षिप्य वनं गच्छेत्सहैव वा॥**

कृतं कृत्यं गृहोचितं येन सः। वैच.

**यस्त्वेतां नियतश्चर्यां वानप्रस्थश्चरेन्मुनिः।**
**स दहत्यग्निवद्दोषाञ्जयेल्लोकांश्च शाश्वतान्॥**

जयेत् प्राप्नुयात्। वैच.

**चतुर्थश्चाऽऽश्रमो भिक्षोः प्रोच्यते यो मनीषिभिः।**
**तस्य स्वरूपं गदतो मम श्रोतुं नृपार्हसि॥**

(१) **विष्णु**. ३।९।१, ७, ११-१३, १७-१८, २३-२४.

**[1]पुत्रद्रव्यकलत्रेषु त्यक्तस्नेहो नराधिप।**
**चतुर्थमाश्रमं स्थानं गच्छेन्निर्धूतमत्सरः॥**

चतुर्थमाश्रमं विश्रामहेतुम्। वैच.

**[2]मोक्षाश्रमं यश्चरते यथोक्तं**
**शुचिः स्वसंकल्पितबुद्धियुक्तः।**
**अनिन्धनं ज्योतिरिव प्रशान्तं**
**स ब्रह्मलोकं जयति द्विजातिः॥**

इदानीमाश्रमपालनस्य परमफलमाह – मोक्षेति। स्वस्मिन् ब्रह्मणि संकल्पितमिदं विश्वमितिबुद्धियुक्तः। ब्रह्मैव लोकस्तम्। अनिन्धनं विधूमम्, 'यथा ज्योतिर्विधूमम्' इत्यादिश्रुतेः। द्विजातिः इति पूर्वश्लोकस्थविप्रस्योक्तिः, 'गतिस्तुर्याश्रमे नास्ति बाहुजोरुजयोः क्वचित्। तुर्याश्रमे गतिः प्रोक्ता मुखजानां स्वयंभुवा॥' इति दत्तात्रेयोक्तेः, 'ब्राह्मणः प्रव्रजेद्गृहात्' इति यमसंवर्तबौधायनवचनाच्च।

वैच.

आश्रमसमुच्चयविकल्पौ

**[3]ततोऽनन्तरसंस्कारसंस्कृतो गुरुवेश्मनि।**
**यथोक्तविधिमाश्रित्य कुर्याद्विद्यापरिग्रहम्॥**

अनन्तरसंस्कारैः निष्क्रमणान्नप्राशनचौलोपनयनाख्यैः संस्कृतः। यथोक्तं गुरुशुश्रूषादिलक्षणं विधिमाश्रित्य।

वैच.

**गृहीतविद्यो गुरवे दत्त्वा च गुरुदक्षिणाम्।**
**गार्हस्थ्यमिच्छन्भूपाल कुर्याद्दारपरिग्रहम्॥**
**[4]ब्रह्मचर्येण वा कालं कुर्यात्संकल्पपूर्वकम्।**
**गुरोः शुश्रूषणं कुर्यात्तत्पुत्रादेरथापि वा॥**

(१) **विष्णु**. ३।९।२५; **चका**. ८०९ धिप (धिपः) मं स्थानं (मस्थानं); **मुक्ता**. १९२.

(२) **विष्णु**. ३।९।३१.

(३) **विष्णु**. ३।१०।१३; **अप**. १।५२ पृ. ७० दत्त्वा च (दत्त्वाऽथ); **ब्रक**. २६८; **चका**. ७८४ उत्त., वामनपुराणे; **दीक**. १।५१ च (तु); **मुक्ता**. १७२ विष्णुपुराणे, भविष्यत्पुराणेऽपि; **वीमि**. १।५१ दीकवत्.

(४) **विष्णु**. ३।१०।१४; **अप**. १।५२ पृ. ७९; **ब्रक**. २६९; **चका**. ७८४ कुर्यात्सं (नयेत्सं) पू., वामनपुराणे; **दीक**. १।५१ पूर्वार्धे (अथवा सकलं कालं नयेत्संकल्पपूर्वकम्।); **मुक्ता**. १७२ पू., विष्णुपुराणे, भविष्यत्पुराणेऽपि; **वीमि**. १।५१ उत्त.

मध्ये नैष्ठिकं ब्रह्मचर्यमाह — ब्रह्मचर्येणेति। वा अरुचौ, गार्हस्थ्यानिच्छायामित्यर्थः। कालं कुर्यात् नयेत्। वैच.

**[१]वैखानसो वाऽपि भवेत्प्रव्रजेद्वा यथेच्छया।**
**पूर्वसंकल्पितं यादृक्तादृक्कुर्यान्महिपते॥**

वैखानसः वानप्रस्थः। इच्छया आश्रमं गच्छेत्। 'यावज्जीवं ममायमेवाऽऽश्रमः' इति यदि पूर्वसंकल्पितं तदा तत्रैव तिष्ठेत्, नाऽऽश्रमान्तरं गच्छेत्। तत्रापि दृढविरक्तौ तु यतिः स्यादेव, 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' (जाउ. ४) इति श्रुतेः। वैच.

चातुराश्रम्यम्, अनाश्रमित्वनिषेधः

**[२]ब्रह्मचारी गृहस्थश्च वानप्रस्थस्तथाऽऽश्रमाः।**
**परिव्राड् वा चतुर्थोऽत्र पञ्चमो नोपपद्यते॥**
**यस्तु संत्यज्य गार्हस्थ्यं वानप्रस्थो न जायते।**
**परिव्राड्वाऽपि मैत्रेय स नग्नः पापकृन्नरः॥**

गार्हस्थ्यं परित्यज्य वानप्रस्थः परिव्राड् वा यो न जायते स च नग्नः। वैच.

विरक्तवानप्रस्थस्य संन्यासेऽधिकारः

**[३]दिव्यादिव्ये च भोगे तु विषये पञ्चलक्षणे।**
**दृष्टानुश्राविके चैव विरक्तः संन्यसेद्वनात्॥**

## विष्णुधर्मोत्तरपुराणम्

संन्यासप्रशंसा, आश्रमाणां फलानि

**+[४]आश्रमाणां चतुर्थश्च॥**
**[५]ब्रह्मचारिव्रतस्थानां ब्रह्मलोकं प्रजापतिः॥**
**प्राजापत्यं गृहस्थानां यथाविहितकारिणाम्।**
**स्थानं सप्तऋषीणां च तथैव वनवासिनाम्॥**
**यतीनामकृतं स्थानं यत्रेच्छागामिनां सदा॥**

नैष्ठिकत्वस्य विकल्पः फलं च, आश्रमकालमर्यादाः, आश्रमसमुच्चयः तत्फलं च, गार्हस्थ्यप्रशंसा

**[१]गुरवे दक्षिणां दत्त्वा स्नायाच्च तदनन्तरम्।**
**आ शरीरविमोक्षाद्वा वसेद्गुरुकुले सदा॥**
**नैष्ठिको ब्रह्मचारी च वायुभूतः खमूर्तिमान्।**
**तत्पदं समवाप्नोति यत्र गत्वा न शोचति॥**
**संपूज्य देवं गुरवे च दत्त्वा**
**धनं यथावत्परिपूर्णविद्यः।**
**गृहाश्रमी स्याद्विधिवन्नृसिंह**
**यत्रास्य लोकद्वितयं प्रदिष्टम्॥**

**पुष्कर उवाच —**

**[२]सुखं गृहाश्रमे स्थित्वा विधिवत्स्नातको द्विजः।**
**वने वसेत्तु नियतो यथावद्विजितेन्द्रियः॥**
**गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः।**
**अपत्यस्यैव चापत्यं तदाऽरण्यं समाश्रयेत्॥**

**पुष्कर उवाच —**

**[३]वनेषु च विहृत्यैवं तृतीयं भागमायुषः।**
**चतुर्थमायुषो भागं त्यक्तसङ्गः परिव्रजेत्॥**
**आश्रमादाश्रमं गत्वा हुतहोमो जितेन्द्रियः।**
**भिक्षाबलिपरिश्रान्तः प्रव्रजेद्व्रतवर्जितः॥**
**ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्।**
**अनपाकृत्य च ऋणं मोक्षमिच्छन्व्रजत्यधः॥**
**अधीत्य विधिवद्वेदान्पुत्रांश्चोत्पाद्य धर्मतः।**
**इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत्॥**
**अनधीत्य द्विजो वेदाननुत्पाद्य तथा सुतान्।**
**अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन्व्रजत्यधः॥**
**प्राजापत्यां निरुप्येष्टिं सर्ववेदां**
**स(? सार्ववेदस)दक्षिणाम्।**
**आत्मन्यग्नीन्समारोप्य प्रव्रजत्यभयं गृही॥**
**तस्य तेजोमया लोका भवन्ति ब्रह्मवादिनः।**

---

\+ विष्णोरात्मविभूतयः प्रक्रान्ताः।

(१) **विष्णु.** ३।१०।१५; **अप.** १।५२ पृ.७९ त्प्रव्रजेद्वा यथे (त्परिव्राडथवे) पू.; **ब्रक.** २६९ सर्वम् अपवत्; **चका.** ७८४ वाऽपि (वाऽथ) शेषम् अपवत् पू., वामनपुराणे; **दीक.** १।५१ त्प्रव्रजेद्वा यथे (त्परिव्राड्वाऽथवे) पू.; **मुक्ता.** १७२ अपवत् पू., विष्णुपुराणे, भविष्यत्पुराणेऽपि; **वीमि.** १।५१ सर्वम् अपवत्.

(२) **विष्णु.** ३।१८।३६-३७.

(३) **चका.** ८०९.

(४) **विध.**१।५६।३२.

(५) **विध.** १।१०७।५९-६१.

(१) **विध.** २।८६।१३-१५, १६.

(२) **विध.** २।१३०।३-४.

(३) **विध.** २।१३१।१-८, ५२, ५४-५७, ६३.

यस्मादण्वपि भूतानां द्विजा नोत्पद्यते भयम्।
तस्य देहाद्विमुक्तस्य भयं नास्ति कथंचन॥
अगारादभिनिष्क्रान्तः पवित्रोपचितो मुनिः।
समुपोढेषु काम्येषु निरपेक्षः परिव्रजेत्॥
अनेन क्रमयोगेण परिव्रजति यो द्विजः।
स विधूयेह पाप्मानं परं ब्रह्माधिगच्छति॥
ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा।
एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः॥
सर्वेऽपि क्रमशस्त्वेते यथाशास्त्रं निषेविताः।
यथोक्तकारिणं विप्रं नयन्ति परमां गतिम्॥
सर्वेषामेव चैतेषां वेदश्रुतिविधानतः।
गृहस्थ उच्यते श्रेष्ठः स त्रीनेतान्बिभर्ति हि॥
यथा नदीनदाः सर्वे सागरे यान्ति संस्थितिम्।
तथैवाऽऽश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम्॥
एवं संन्यस्य कर्माणि स्वकार्ये परमोऽस्पृहः।
संन्यासेनापहृत्येनं(? त्यैनः) प्राप्नोति परमां गतिम्॥
[1]गुरवे वचनं दत्त्वा स्नायाच्च तदनुज्ञया।
आ शरीरविमोक्षाद्वा वसेद्गुरुकुले द्विजः॥
एवं व्रतान्ते गुरवे च दत्त्वा
वरं यथावत्परिपूर्णविद्यः।
गृहाश्रमी स्याद्विधिवद्द्विजेन्द्रो
यत्रास्य लोकद्वितयं प्रदिष्टम्॥
[2]गृहस्थैर्धार्यते विप्रास्त्रैलोक्यं सचराचरम्॥
हंस उवाच –
[3]गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः।
अपत्यस्यैव चापत्यं तदाऽरण्यं समाश्रयेत्॥
एवं नीत्वा वने कालं द्विजो ब्रह्माश्रमी भवेत्॥
वने विमुच्याथ शरीरधातून्
प्राप्नोति लोकान्प्रपितामहस्य।
पुनात्यतीतान्पुरुषांश्च सप्त
भविष्यतो यानथ सप्त विप्राः॥
हंस उवाच –
[4]चतुर्थमायुषो भागमन्त्यं यत्याश्रमे वसेत्॥

(१) विध. ३।२२८।८-९.
(२) विध. ३।२३३।१३६.
(३) विध. ३।२३९।२, ८-९.
(४) विध. ३।२४०।१.

## श्रीमद्भागवतपुराणम्

गार्हस्थ्यप्रशंसा

[1]धर्मो ह्यत्रार्थकामौ च प्रजानन्दोऽमृतं यशः।
लोका विशोका विरजा यान्न केवलिनो विदुः॥
अत्र गार्हस्थ्ये। प्रजानन्दः पुत्रसुखम्। अमृतं मोक्षः। केवलिनः यतयः।

श्रीटी.

पितृदेवर्षिमर्त्यानां भूतानामात्मनश्च ह।
क्षेम्यं वदन्ति शरणं भवेऽस्मिन्यद्गृहाश्रमः॥
गृहाश्रम इति यदेतत्क्षेमार्हं शरणम् आश्रयं वदन्ति।

श्रीटी.

आश्रमविकल्पः, सधर्माश्रमफलम्

[2]उषित्वैवं गुरुकुले द्विजोऽधीत्यावबुध्य च।
त्रयीं साङ्गोपनिषदं यावदर्थं यथाबलम्॥
अङ्गैः शिक्षादिभिः उपनिषद्भिश्च सहितां वेदत्रयीमधीत्य अवबुध्य च तदर्थं च विचार्य यावदर्थं स्वाधिकारानुसारेण। श्रीटी.

दत्त्वा वरमनुज्ञातो गुरोः कामं यदीश्वरः।
गृहं वनं वा प्रविशेत्प्रव्रजेत्तत्र वा वसेत्॥
यदि ईश्वरः शक्तः तर्हि गुरोः कामम् अपेक्षितं वरं दत्त्वा यथाधिकारं गृहस्थाद्याश्रमं स्वीकुर्यात्प्रव्रजेत् वा तत्रैव वा वसेत्। नैष्ठिकः स्यादित्यर्थः।

श्रीटी.

एवंविधो ब्रह्मचारी वानप्रस्थो यतिर्गृही।
चरन्विदितविज्ञानः परं ब्रह्माधिगच्छति॥
चरन् एवमाचरन्। विदितं विज्ञानं विज्ञेयं येन सः।

श्रीटी.

आश्रमस्थानानि वैराजपुरुषाङ्गानि

[3]गृहाश्रमो जघनतो ब्रह्मचर्यं हृदो मम।
वक्षःस्थानाद्वने वासो न्यासः शीर्षणि संस्थितः॥
मम वैराजरूपस्य। हृदः वक्षसः अधस्तात्। ब्रह्मचर्यमिति नैष्ठिकाभिप्रायम्।

श्रीटी.

(१) भाग. ४।२५।३९-४०.
(२) भाग. ७।१२।१३-१४, १६.
(३) भाग. ११।१७।१४, ३०-३१, ३६-३८, ५५.

ब्रह्मचर्यावधिः, आश्रमविकल्पसमुच्चयौ,
वानप्रस्थ्ये भार्यासाहित्यराहित्य-
विकल्पः, वानप्रस्थ्यमर्यादा

**एवंवृत्तो गुरुकुले वसेद्भोगविवर्जितः।**
**विद्या समाप्यते यावद्बिभ्रद्व्रतमखण्डितम्॥**

एवंभूतं वृत्तं यस्य सः। श्रीटी.

**यद्यसौ छन्दसां लोकमारोक्ष्यन्ब्रह्मविष्टपम्।**
**गुरवे विन्यसेद्देहं स्वाध्यायार्थं बृहद्व्रतः॥**

एवमुपकुर्वाणकस्य धर्मानुक्त्वा नैष्ठिकस्य विशेषधर्मानाह — यदीति षड्भिः। असौ ब्रह्मचारी यदि छन्दसां लोकं महर्लोकं ततो ब्रह्मलोकम् आरोक्ष्यन् आरोढुमिच्छतीत्यर्थः। यद्वा, छन्दसां लोकमिति ब्रह्मलोकविशेषणम्, 'यत्र मूर्तिधराः कलाः' इत्युक्तत्वात्। तर्हि बृहद्व्रतः सन् बृहत् नैष्ठिकं व्रतं यस्य सः। विन्यसेत् समर्पयेत् अधिकस्वाध्यायार्थमधीतनिष्क्रयार्थं च। श्रीटी.

**एवं बृहद्व्रतधरो ब्राह्मणोऽग्निरिव ज्वलन्।**
**मद्भक्तस्तीव्रतपसा दग्धकर्माशयोऽमलः॥**

निष्कामनैष्ठिकस्य तु मोक्षं फलमाह — एवमिति। अमलः निष्कामः चेत् दग्धः कर्माशयः अन्तःकरणं यस्य तथाभूतः सन्मद्भक्तो भवति। श्रीटी.

**अथानन्तरमावेक्ष्यन्यथाजिज्ञासितागमः।**
**गुरवे दक्षिणां दत्त्वा स्नायाद्गुर्वनुमोदितः॥**

उपकुर्वाणस्य समावर्तनप्रकारमाह — अथेति। अनन्तरं द्वितीयाश्रमम् आवेक्ष्यन् प्रवेष्टुमिच्छन् यथा यथावत् विचारितवेदार्थः स्नायात् अभ्यङ्गादिकं कृत्वा समावर्तेतेत्यर्थः। श्रीटी.

**गृहं वनं वोपविशेत्प्रव्रजेद्वा द्विजोत्तमः।**
**आश्रमादाश्रमं गच्छेन्नान्यथा मत्परश्चरेत्॥**

तस्याधिकारानुरूपमाश्रमविकल्पसमुच्चयावाह — गृहमिति। सकामश्चेद्गृहम्, अन्तःकरणशुद्ध्यादिकामश्चेद्वनं प्रविशेत्। शुद्धान्तःकरणः स च द्विजोत्तमः ब्राह्मणः चेत् प्रव्रजेदित्यर्थः। यद्वा, आश्रमादाश्रमान्तरं गच्छेत्, अन्यथा अनाश्रमी(?मित्वं) प्रतिलोमं च नाऽऽचरेदित्यर्थः। अमत्पर इति वा छेदः, स्वभक्तस्य आश्रमनियमाभावस्य वक्ष्यमाणत्वात्। श्रीटी.

**कर्मभिर्गृहमेधीयैरिष्ट्वा मामेव भक्तिमान्।**
**तिष्ठेद्वनं वोपविशेत्प्रजावान्वा परिव्रजेत्॥**

अस्याप्याश्रमविकल्पमाह — कर्मभिरिति। गृहाश्रम एव तिष्ठेत्। यदि प्रजावांस्तर्हि प्रव्रजेद्वा। श्रीटी.

**[1]वनं विविक्षुः पुत्रेषु भार्यां न्यस्य सहैव वा।**
**वन एव वसेच्छान्तस्तृतीयं भागमायुषः॥**

क्रमप्राप्तान्वनस्थधर्मानाह — वनमिति। आयुषस्तृतीयं भागं पञ्चसप्ततिवर्षपर्यन्तम्। ततः परं क्षीणेन्द्रियस्येषद्विरागेऽपि संन्यासाधिकारः स्यादिति भावः। श्रीटी.

**यदाऽसौ नियमेऽकल्पो जरया जातवेपथुः।**
**आत्मन्यग्नीन्समारोप्य मच्चित्तोऽग्निं समाविशेत्॥**

एवं यावज्जीवं वर्तमानस्य मोक्षः। तृतीयभागावसाने तु मन्दविरागेऽपि संन्यासाधिकारः। यदि तु ततोऽर्वागेव स्वधर्माशक्तो भवेत्तदाऽपि सम्यगविरक्तो विरक्तो वा। तत्राविरक्तस्य कृत्यमाह — यदेति। जातो वेपथुः कम्पः देहे यस्य सः। श्रीटी.

**यदा कर्मविपाकेषु लोकेषु निरयात्मसु।**
**विरागो जायते सम्यङ्न्यस्ताग्निः प्रव्रजेत्ततः॥**

विरक्तं प्रति आह — यदेति। श्रीटी.

संन्यासे देवादिभिर्विघ्नोत्पादनम्

**विप्रस्य वै संन्यसतो देवा दारादिरूपिणः।**
**विघ्नान्कुर्वन्त्ययं ह्यस्मानाक्रम्य समियात्परम्॥**

संन्यासे विघ्ना भवन्ति, तानविगणय्य संन्यसेदेवेत्याशयेनाऽऽह — विप्रस्येति। केनाभिप्रायेण कुर्वन्ति तमाह — अयमिति। परं परं ब्रह्म। श्रीटी.

## लिङ्गपुराणम्

आश्रमिणां साधुशब्दवाच्यत्वम्,
आश्रमचतुष्टयम्

**[2]एवमाश्रमधर्माणां साधनात्साधवः स्मृताः।**
**गृहस्थो ब्रह्मचारी च वानप्रस्थो यतिस्तथा॥**
**[3]...चत्वार आश्रमाश्च तथैव च॥**

---

(१) भाग. ११।१८।१, ११-१२, १४.
(२) लिङ्ग. १।१०।१०-११.
(३) लिङ्ग. १।२३।२९.

क्रमेणाऽऽश्रमान्तरस्वीकाराधिकारिणः

**पितामह उवाच –**

**[1]आदौ वेदानधीत्यैव श्रद्धया च गुरोः सदा।**
**विचार्यार्थं मुनेर्धर्मान् प्रतिज्ञाय द्विजोत्तमाः॥**
**ग्रहणान्तं हि वा विद्वानथ द्वादशवार्षिकम्।**
**स्नात्वाऽऽहृत्य च दारान्वै पुत्रानुत्पाद्य सुव्रतान्॥**
**वृत्तिभिश्चानुरूपाभिस्तान्विभज्य सुतान्मुनिः।**
**अग्निष्टोमादिभिश्चेष्ट्वा यज्ञैर्यज्ञेश्वरं विभुम्॥**
**पूजयेत्परमात्मानं प्राप्यारण्यं विभावसौ।**
**मुनिर्द्वादशवर्षं वा वर्षमात्रमथापि वा॥**
**पक्षद्वादशकं वाऽपि दिनद्वादशकं तु वा।**
**क्षीरभुक् संयतः शान्तः सर्वान् संपूजयेत्सुरान्॥**
**इष्ट्वैवं जुहुयादग्नौ यज्ञपात्राणि मन्त्रतः।**
**अप्सु वै पार्थिवं न्यस्य गुरवे तैजसानि तु॥**
**स्वधनं सकलं चैव ब्राह्मणेभ्योऽविशङ्कया।**
**प्रणिपत्य गुरुं भूमौ विरक्तः संन्यसेद्यतिः॥**

## स्कन्दपुराणम्

प्रयत्नसाधितगार्हस्थ्यप्रशंसा

**[2]या बान्धवैः प्रदत्ता स्याद्वह्निद्विजसमागमे।**
**गार्हस्थ्यपालनं धन्यं तया साकं हि सर्वदम्॥**
**यथा प्रकृतिपुंयोगो यत्नेनापि परस्परम्।**
**साध्यमानो गुणाय स्यादगुणायाप्यसाधितः॥**
**एवं यत्नात्साध्यमानं स्वकं गार्हस्थ्यमुत्तमम्।**
**गुणाय महते भूयादगुणायाप्यसाधितम्॥**

आश्रमाश्चत्वारः, आश्रमाणां विकल्पसमुच्चयौ
अवान्तरभेदाः कालमर्यादाश्च,
आश्रमफलानि

**[3]ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा।**
**एत आश्रमिणः प्रोक्ताश्चत्वारो मुनिसत्तम॥**
**[4]संस्कारैः संस्कृतो यस्तु शुद्धयोनिर्द्विजातिताम्।**
**प्राप्तः स हि ब्रह्मचारी तद्धर्मानादितो ब्रुवे॥**

(१) लिङ्ग. १।२९।७०-७६.
(२) स्कन्द. १।२।१।५१-५३.
(३) स्कन्द. २।९।२१।१; पमा. १।४३६ स्थो यतिस्तथा (स्थोऽथ भिक्षुकः) उत्तरार्धे (एते क्रमेण विप्राणां चत्वारः पृथगाश्रमाः॥).
(४) स्कन्द. २।९।२१।२, १६-१८.

**एवंवृत्तो वसेत्तत्र यावद्विद्यासमापनम्।**
**ततो विरक्तो न्यासी स्याद्वर्णी वा नैष्ठिको भवेत्॥**
**अनधिकारिता प्रोक्ता नैष्ठिकव्रतिनां कलौ।**
**न संधाविति विज्ञेयं कलीति शब्दसंग्रहात्॥**
**वनी स्यादथवा ब्रह्मन्नविरक्तो भवेद्गृही॥**
**प्राजापत्यं च सावित्रं ब्राह्मं नैष्ठिकमेव च।**
**चतुर्विधं ब्रह्मचर्यं तत्रैकं शक्तितः श्रयेत्॥**
**[1]गृही बुभूषुर्गुरवे दक्षिणां स्वस्य शक्तितः।**
**दत्त्वा तदाज्ञयैवासौ समावर्तनमाचरेत्॥**
**ततः कुलोचितां योषां...विधिनोद्वहेत्॥**
**शिलादिजीविकावृत्तिभेदेन गृहिणो द्विजाः।**
**चतुर्विधाः प्रकीर्त्यन्ते तत्तन्नाम्ना च नारद॥**
**[2]तृतीय आयुषो भागे तृतीयाश्रम ईरितः॥**
**फेनपाश्चौदुम्बराश्च वालखिल्यास्तथैव च।**
**वैखानसेति कथिताश्चतुर्धा वनवासिनः॥**
**यथाशक्ति द्वादशाब्दानष्टौ वा चतुरो वने।**
**वसेद्द्वावेकमेवापि ततः संन्यासमाश्रयेत्॥**
**यदि स्यात्तीव्रवैराग्यं तर्हि न्यासो हितावहः।**
**वसेत्तत्रैवान्यथा तु यावज्जीवं वने द्विजः॥**
**कुटीचको बहूदश्च हंसः परमहंसकः।**
**एवं चतुर्धा कथितो यतिर्वैराग्यभेदतः॥**
**वर्णी यतिश्च धर्मस्थो ब्रह्मलोकमुपैति वै।**
**ऋषिलोकं वनस्थश्च गृहस्थः स्वर्गमाप्नुयात्॥**

गार्हस्थ्यप्रशंसा

**[3]वत्स गार्हस्थ्यमास्थाय नरः सर्वमिदं जगत्।**
**पुष्णाति तेन लोकांश्च स जयत्यभिवाञ्छितान्॥**
**पितरो मुनयो देवा भूतानि मनुजास्तथा।**
**क्रिमिकीटपतङ्गाश्च वयांसि पितरोऽसुराः॥**
**गृहस्थमुपजीवन्ति ततस्तृप्तिं प्रयान्ति च।**
**मुखं वाऽस्य निरीक्षन्ते अपो नो दास्यतीति च॥**
**[4]चतुर्णामप्याश्रमाणां कोऽतीव श्रेयसे सताम्।**
**यस्मिन्प्राप्नोति संक्षुण्णे परत्रेह च वा सुखम्॥**

(१) स्कन्द. २।९।२२।१-२, ५३.
(२) स्कन्द. २।९।२३।१, १२-१४, ३०, ४२.
(३) स्कन्द. ३।२।६।२-४.
(४) स्कन्द. ४।१०।४७.

संक्षुण्णे सम्यङ्निष्पादिते चीर्णे इत्यर्थः। रामा.

**[1]ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथ भिक्षुकः।**
**एते क्रमेण विप्राणां चत्वारः पृथगाश्रमाः।**
**एषामाधारभूतोऽसौ गृहस्थो नान्यथेति च॥**
**[2]देवैर्मनुष्यैः पितृभिस्तिर्यग्भिश्चोपजीव्यते।**
**गृहस्थः प्रत्यहं यस्मात्तस्माच्छ्रेष्ठो गृहाश्रमी॥**
**[3]ब्रह्मचर्यं हि गार्हस्थ्ये यादृक्कल्पनयोज्झितम्।**
**स्वभावचपले चित्ते क्व तादृग्ब्रह्मचारिणि॥**

गार्हस्थ्ये गृहाश्रमे यादृग्ब्रह्मचर्यं तादृग्ब्रह्मचारिणि स्वभावचपले चित्ते सति क्व कुत्रेत्यन्वयः। कीदृक्-कल्पनया बन्धनया प्रतारणयेति यावत्, उज्झितं त्यक्तम्। 'यद्वै कल्याणयोजितम्' इति क्वचित् पाठः। 'यद्वै कल्पेन योजितम्' इति चान्यत्र। रामा.

आश्रमावधयः, आश्रमविकल्पसमुच्चयौ,
अनाश्रमित्वनिषेधः, आश्रमलक्षणानि,
वानप्रस्थ्ये भार्यासाहित्य-
राहित्यविकल्पः

**[4]यावद्वेदमधीते च चरन्वेदव्रतानि च।**
**ब्रह्मचारी भवेत्तावदूर्ध्वं स्नातो गृही भवेत्॥**

वेदव्रतानि गुरुशुश्रूषादीनि। ऊर्ध्वं वेदपाठ-समाप्त्यनन्तरम्। रामा.

**प्रोक्तोऽसावुपकुर्वाणो द्वितीयस्तत्र नैष्ठिकः।**
**तिष्ठेत्तावद्गुरुकुले यावत्स्यादायुषः क्षयः॥**

असौ पूर्वोक्तः। रामा.

**गृहाश्रमं समाश्रित्य यः पुनर्ब्रह्मचर्यभाक्।**
**नासौ यतिर्वनस्थो वा स्यात्सर्वाश्रमवर्जितः॥**
**अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः।**
**आश्रमं तु विना तिष्ठन्प्रायश्चित्ती यतो हि सः॥**
**जपं होमं व्रतं दानं स्वाध्यायं पितृतर्पणम्।**
**कुर्वाणोऽथाऽऽश्रमभ्रष्टो नासौ तत्फलमाप्नुयात्॥**
**[1]मेखलाजिनदण्डाश्च लिङ्गं स्याद्ब्रह्मचारिणः।**
**गृहिणो वेदयज्ञादि नखलोम वनस्थिते॥**

वेदश्च यज्ञश्च आदिर्यस्य लिङ्गस्य चिह्नस्य तत्तथा। 8'वेदयष्ट्यादि' इति पाठश्चिन्त्यः। रामा.

**[2]त्रिदण्डादि यतेरुक्तमुपलक्षणमत्र वै।**
**एतल्लक्षणहीनस्तु प्रायश्चित्ती दिने दिने॥**

उपलक्षणं त्रिह्नम्। रामा.

**अधीत्य वेदान्वेदौ वा वेदं वाऽपि क्रमाद्विजः।**
**अप्रस्खलद्ब्रह्मचर्यो गृहाश्रममथाऽऽश्रयेत्॥**
**सदाचारो गृहे यद्वन्न तथाऽस्त्याश्रमान्तरे।**
**विद्याजातं पठित्वाऽन्ते गृहस्थाश्रममाश्रयेत्॥**
**गुरोरनुज्ञया स्नात्वा व्रतं वेदं समाप्य च।**
**उद्वहेत ततो भार्यां सवर्णां साधुलक्षणाम्॥**
**[3]उषित्वैवं गृहे विप्रो द्वितीयादाश्रमात्परम्।**
**वलीपलितसंयुक्तस्तृतीयाश्रममाविशेत्।**

वली त्वचः श्लथता, पलितं जरसा शौक्ल्यम्, ताभ्यां युतः। रामा.

**अपत्यापत्यमालोक्य ग्राम्याहारान्विसृज्य च।**
**पत्नीं पुत्रेषु संत्यज्य पत्न्या वा वनमाविशेत्॥**

वनवासमनिच्छन्तीं भार्यां पुत्रेषु समर्प्य, इच्छन्त्या तु सह वनं गच्छेदित्यर्थः। रामा.

---

(१) **स्कन्द.** ४।१०।४९ द्वितीयार्धं नास्ति; **पमा.** १।४३६ स्थो वा (स्थश्च) तृतीयार्धं नास्ति.

(२) **स्कन्द.** ४।१०।५०.

(३) **स्कन्द.** ४।१०।५३; **रामा.** द्वितीयचरणे (यद्वै कल्याणयोजितम्) इति (यद्वै कल्पेन योजितम्) इति च पाठौ.

(४) **स्कन्द.** ४।३६।३२-३६.

8 वस्तुतश्चिन्त्यतोक्तिरेवेयं चिन्त्या, 'वैणवीं धारयेद्यष्टिम् ...यज्ञोपवीतं वेदं च ....' (मस्मृ.४।३६) इति मनुना गृहस्थं प्रति वेदयष्टिधारणस्य विहितत्वात्। प्रत्युत 'वेदयज्ञादि' इत्ययमेव पाठश्चिन्त्यः। तथाहि – चिह्नशब्देन बाह्येन्द्रियग्राह्यम्, तत्रापि प्रायश्चक्षुर्ग्राह्यम् अर्थविशेषज्ञापकं वस्तु बोध्यते। ज्ञापकं च अजानानैरेवापेक्ष्यते। आश्रममजानानाः प्रायो गृहाद्बहिः रथ्यादिष्वेव संभवन्ति। न तत्र यज्ञस्योक्तं चिह्नत्वं संभवति। वेदशब्दोऽपि श्रुतिपरश्चेत् रथ्यादिषु संस्काररूपेण बुद्धिस्थितस्य वेदस्याप्युक्त-रीत्याऽऽश्रमचिह्नत्वं नोपपद्यते, ब्रह्मचारिणि व्यभिचाराच्च। यष्टि-शब्देन दण्डविशेषग्रहणान्न तस्या व्यभिचारः। अत एव मनुवचन-व्याख्यातृभिः सर्वैस्तत्र व्याख्यातो दर्भमुष्टिरित्येव वेदशब्दा-र्थोऽत्रापि ग्राह्यः।

(१) **स्कन्द.** ४।३६।३७; **रामा.** यज्ञा (यष्ट्या) इत्यपि पाठः.

(२) **स्कन्द.** ४।३६।३८, ७८, ८१, ८८.

(३) **स्कन्द.** ४।४१।१-२, १३-१५, ३०-३१, ३७.

**इत्थं वनाश्रमी विप्रो ब्रह्मलोके महीयते॥**

ब्रह्मलोके तपोलोके। रामा.

**अतिवाह्याऽऽयुषो भागं तृतीयमिति कानने।**
**आयुषस्तु तुरीयांशे त्यक्त्वा सङ्गान्परिव्रजेत्॥**

शक्तं विरक्तं प्रत्याह — अतिवाह्येति। इति एवंप्रकारेण। रामा.

**ऋणत्रयमसंशोध्य त्वनुत्पाद्य सुतानपि।**
**तथा यज्ञाननिष्ट्वा च मोक्षमिच्छन्व्रजत्यधः॥**

आश्रमसमुच्चयपक्षमाश्रित्याऽऽह — ऋणत्रयमिति। ऋषिपितृदेवानामृणत्रयमसंशोध्य। एतदेव विवृण्वन्नृणत्रयमेव दर्शयति — अनुत्पाद्येति। अपिशब्दाद्वेदाननधीत्य। तथा च मनुः — 'अनधीत्य द्विजो वेदाननुत्पाद्य तथा सुतान्। अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन् व्रजत्यधः॥' (मस्मृ. ६।३७) इति। एतदप्यसमञ्जसमेव, 'ब्रह्मचर्यादेव प्रव्रजेत्, यदहरेव विरजेत्तदहरेव प्रव्रजेत्' इत्यादिश्रुतिविरोधात्। तथा च सुरेश्वरवार्तिकम् — 'ब्रह्मचर्यादेवेत्यादिवाक्यानि शतशः श्रुतौ। श्रूयन्ते तु ऋणवचो विरोधात्स्यादपस्मृतिः॥' (बृउवार्तिक.१।५।२६७) इत्यादि। अथवैतदुभयं स्मृतिवाक्यमविरक्तपरम्।

रामा.

संन्यासप्रशंसा, समुच्चिताश्रमफलम्,
वानप्रस्थ्ये भार्याराहित्यम्,
वानप्रस्थ्यगार्हस्थ्ययोः
फले

**आश्रमे तु यतिर्यस्य मुहूर्तमपि विश्रमेत्।**
**किं तस्यानेकतन्त्रेण कृतकृत्यः स जायते॥**

अनेकतन्त्रेण अनेकशास्त्रोक्तविधानेनेत्यर्थः।

रामा.

**संचितं यद्गृहस्थेन पापमामरणान्तिकम्।**
**निर्धक्ष्यति हि तत्सर्वमेकरात्रोषितो यतिः॥**

निर्धक्ष्यति भस्मसात्करिष्यतीत्यर्थः। रामा.

**आश्रमांश्चतुरस्त्वेवं क्रमादासेव्य पण्डितः।**
**निर्द्वन्द्वस्त्यक्तसङ्गश्च ब्रह्मभूयाय कल्पते॥**

प्रकृतमुपसंहरति — आश्रमानिति।

रामा.

**[1]वनं गच्छेत्ततः पश्चाद्द्वितीयाश्रमसेवनात्॥**
**पुत्रेषु भार्यां निक्षिप्य सर्वसङ्गविवर्जितः।**
**इष्टांल्लोकानवाप्नोति न चेह जायते पुनः॥**
**[2]गृहस्थाश्रमिणां चैव स्वधर्मरतचेतसाम्।**
**इहलोकः परश्चैव जायते नात्र संशयः॥**

श्रीव्यासकृता आश्रमाणां विशेषतो
गार्हस्थ्यस्य प्रशंसा श्रीशुककृतस्तदपवादश्च

**व्यास उवाच —**

**[3]ब्रह्मचारी भवेत्पूर्वं गृहस्थश्च ततः परम्।**
**वानप्रस्थो यतिश्चैव ततो मोक्षमवाप्नुयात्॥**

**शुक उवाच —**

**ब्रह्मचर्येण चेन्मोक्षस्तत्षण्ढानां सदा भवेत्।**
**गृहस्थाश्रमिणां चेत्स्यात्तत्सर्वं मुच्यते जगत्॥**
**अथवा वनरक्तानां तन्मृगाणां प्रजायते॥**
**अथवा यतिधर्माणां यदि मोक्षो भवेन्नृणाम्।**
**दरिद्राणां च सर्वेषां तन्मुक्तिः प्रथमा भवेत्॥**

**व्यास उवाच —**

**गृहस्थधर्मरक्तानां नृणां सन्मार्गगामिनाम्।**
**इहलोकः परश्चैव मनुना संप्रकीर्तितः॥**

**श्रीशुक उवाच —**

**गृहगुप्तौ सुगुप्तानां बन्धानां बन्धुबन्धनैः।**
**मोहरागसमावेशात्सन्मार्गगमनं कुतः॥**

**व्यास उवाच —**

**कष्टं वने निवसतोऽत्र सदा नरस्य**
**नो केवलं निजतनुप्रभवं भवेच्च।**
**दैवं च पित्र्यमखिलं न विभाति कृत्यं**
**तस्माद्गृहे निवसताऽऽत्महितं प्रचिन्त्यम्॥**

**श्रीशुकदेव उवाच —**

**भावेन भावितमहातपसां मुनीनां**
**तिष्ठन्ति तावदखिलानि तपःफलानि।**
**यत्ते निकाशशरणाः पुरुषा न जातु**
**पश्यन्त्यसज्जनमुखानि सुखं तदेव॥**

(१) स्कन्द. ५।३।१२२।१२-१३.
(२) स्कन्द. ६।११२।१७.
(३) स्कन्द. ६।१४७।४८-६६.

व्यास उवाच –
गृहे परिग्रहः पुंसां गृहस्थाश्रमधर्मिणाम्।
इहलोके परे चैव सुखं यच्छति शाश्वतम्॥
श्रीशुक उवाच –
शीतं हुताशादपि दैवयोगा-
त्संजायते चन्द्रमसोऽपि तापः।
परिग्रहात्सौख्यसमुद्भवोऽत्र
भूतोऽभवद्भावि न मर्त्यलोके॥
व्यास उवाच –
सुपुण्यैर्लभ्यते कृच्छ्रान्मानुष्यं भुवि दुर्लभम्।
तस्मिँल्लब्धे न किं लब्धं यदि स्याद्गृहधर्मवित्॥
श्रीशुकदेव उवाच –
यदि स्याज्ज्ञानसंयुक्तो जन्मकालेऽत्र मानवः।
निजावस्थां समालोक्य तज्ज्ञानं हि विलीयते॥
व्यास उवाच –
8मुदितस्यापि पुत्रस्य गर्दभस्यार्भकस्य च।
भस्मलोलस्य लोकस्य शब्दोऽपि रटतो मुदे॥
श्रीशुक उवाच –
रसता सर्पता धूलिं लोके त्वशुचिना चिरम्।
मुनेऽत्र शिशुना लोकस्तुष्टिं याति स बालिशः॥
व्यास उवाच –
पुंनामाऽस्ति महारौद्रो नरको यममन्दिरे।
पुत्रहीनो व्रजेत्तत्र तेन पुत्रः प्रशस्यते॥
श्रीशुक उवाच –
यदि स्यात्पुत्रतः स्वर्गः सर्वेषां स्यान्महामुने।
शूकराणां शुनां चैव शलभानां विशेषतः॥
व्यास उवाच –
पितृणामनृणो मर्त्यो जायते पुत्रदर्शनात्।
पौत्रस्यापि च देवानां प्रपौत्रस्य दिवाश्रयः॥
शुक उवाच –
चिरायुर्जायते गृध्रः संततिं पश्यते निजाम्।
क्रमेण संततं किं न स मोक्षं प्रतिपद्यते॥
सूत उवाच –
एवमुक्त्वा परित्यज्य पितरं स वनं गतः।
मातरं च सुदुःखार्तां प्रलपन्तीमनेकधा॥

8पुत्रप्रशंसायामवान्तरतात्पर्यवन्तोऽप्येते श्लोका गार्हस्थ्यप्रशंसायां परमतात्पर्यकत्वादत्र संगृहीताः।

आश्रमसमुच्चयः

[1]ब्राह्मणो ब्रह्मचारी स्याद्गृहस्थस्तदनन्तरम्।
वानप्रस्थो यतिश्चैव ततश्चैव कुटीचरः॥
बहूदकस्ततो हंसः परमश्च ततो भवेत्।
ततश्च मुक्तिमायाति मार्गमेनं समाश्रितः॥

संन्यासप्रशंसा, संन्यासविधिः

[2]ब्रह्मा विष्णुश्च रुद्रश्च ससाध्या मरुतस्तथा।
सकृद्भुक्तेन यतिना पितृदेवाः सवासवाः॥
सर्वे ते तृप्तिमायान्ति दश वर्षाणि पञ्च च।
जन्मकोटिसहस्रेषु पूजितस्तेन शंकरः॥
गृहे यस्य समायाति महाभागवतो यतिः।
यतिभिः पूज्यमानैस्तु सर्वे देवाः सुपूजिताः॥
अपमाने कृते तेषां देवाः सर्वेऽपमानिताः॥
[3]सदोषं निर्गुणं वाऽपि यतिं पुत्रं न कीर्तयेत्।
अज्ञानात्कीर्तयेद्यस्तु स याति नरकं ध्रुवम्।
येनापमानितो भिक्षुस्तेनाहं चापमानितः॥
हरिर्ब्रह्मादयो देवाः पितरो मुनयस्तथा।
आगच्छन्तु(?न्ति) सुराः सर्वे ऋषयो मुनिपुंगवाः॥
तीर्थानि क्रतवः सर्वे भिक्षुके गृहमागते॥
यतिर्यस्य गृहस्थस्य संतुष्टो वसते गृहे।
तुष्टो भवति दैत्यारिर्यावदाभूतसंप्लवम्॥
ये नमन्ति यतिं दूराद्दृष्ट्वा काषायवाससम्।
राजसूयफलावाप्तिस्तेषां भवति पुत्रक॥
यतिरूपेण सर्वत्र विष्णुः पर्यटते महीम्।
भक्तानामनुकम्पार्थं महद्धर्मविवृद्धये॥
यदा कारयति स्नानं यतीनां यो द्विजोत्तमः।
स्नानजं लभते पुण्यं गङ्गायाः शतवार्षिकम्॥
कौपीनाच्छादनं दण्डं बहिर्वासश्च पादुके।
यो ददाति यथाशक्त्या पुण्यं तस्य वदाम्यहम्॥
दत्तं वाजिसहस्रं तु मातङ्गानां शतत्रयम्।
गोयुतस्य सहस्रस्य फलं प्राप्नोति मानवः॥
कौपीनाच्छादनं पात्रं भिक्षुकेभ्यः प्रयच्छति।
वाजपेयसमं पुण्यं विष्णुमुद्दिश्य यत्कृतम्॥

(१) स्कन्द. ६।२७४।८१-८२.
(२) यसं. १३१.
(३) यसं. १३१-१३२.

**अग्निचित्कपिला सत्री राजा भिक्षुर्महोदधिः।**
**दृष्टमात्राः पुनन्त्येते तस्मात्पश्येत नित्यशः॥**
**लक्षलक्षाणि यो दद्याद्ब्राह्मणे वेदपारगे।**
**तथा तत्त्वविदे भिक्षां तयोस्तुल्यं फलं भवेत्॥**
**संन्यासदिवसे यस्य यतिर्भैक्षं समाचरेत्।**
**पुत्रं स लभते श्रेष्ठं सफलं तस्य जीवितम्॥**
**द्वितीयदिवसेऽप्येवं तृतीयेऽप्येवमेव हि।**
**अतस्त्रिदिनमध्ये तु यतिर्भोज्यः प्रयत्नतः॥**
**[1]चतुर्थमाश्रमं गच्छेद्ब्रह्मविद्यापरायणः।**
**एकदण्डी त्रिदण्डी वा सर्वसङ्गविवर्जितः॥**

## सूतसंहिता

आश्रमिणां वैदिककर्माधिकारः, हरवशता-
द्वारा मोक्षप्राप्तिः फलं च, आश्रम-
समुच्चयविकल्पौ, संन्यास-
चातुर्विध्यम्, आश्रम-
व्युत्क्रमनिषेधः

**[2]वर्णिनामाश्रमाः प्रोक्ताः सर्वशास्त्रार्थवेदिभिः।**
**तेषां वर्णाश्रमस्थानां वेदकिंकरता सदा॥**

वेदकिंकरता वेदेन कर्मसु नियोज्यता। तादी.

**[3]ब्रह्मचर्याश्रमस्थानां यतीनां च विशेषतः।**
**वानप्रस्थाश्रमस्थानां गृहस्थानां वशो हरः॥**
**वर्णाश्रमसमाचारात्प्रसन्ने परमेश्वरे।**
**साक्षात्तद्विषयं ज्ञानमचिरादेव जायते॥**
**तस्माज्ज्ञानेन मुक्तिः स्यादज्ञानस्य क्षयान्मुने॥**
**[4]एवमभ्यसतस्तस्य वैराग्यं जायते यदि।**
**प्रव्रजेत्परमे हंसे मोक्षकामनया द्विजः।**
**नैष्ठिको वा गृही वाऽपि भवेत्कामी यथारुचि॥**
**[5]अधीत्य वेदान्विविधान्पूर्वोक्तेनैव वर्त्मना।**
**आचार्यानुज्ञया युक्तः स्नात्वा गार्हस्थ्यमाविशेत्॥**

स्नात्वा समावर्तनं कृत्वा। तादी.

**एवं समाचरन्विप्रो विरक्तश्चेद्गृहाश्रमात्।**
**संन्यसेत्सर्वकर्माणि वेदान्ताभ्यासयत्नवान्॥**

गृहाश्रमात्संन्यसेदिति च 'ब्रह्मचर्यं समाप्य गृही भवेत्। गृहाद्वनी भूत्वा प्रव्रजेत्। यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा' (जाउ. ४) इति। तादी.

**विरक्तोऽपि मुमुक्षुश्चेद्धंसे वा संन्यसेद्गृही।**
**बहूदके वा शक्तश्चेन्न्यसेद्विप्रः कुटीचके॥**
**मुमुक्षुश्चेत्परमहंसो भवेत्।**

अमुमुक्षुरपि शक्तश्चेद्धंसो बहूदको वा भवेत्।
अशक्तश्चेत्कुटीचको वा भवेदित्यर्थः। तादी.

**अविरक्तो गृही चान्ते( ?चातो) वानप्रस्थं समाश्रयेत्।**
**अथवा यावदायुष्यं गार्हस्थ्यं सम्यगाचरेत्॥**

अतो गार्हस्थ्यात् वानप्रस्थाश्रममाश्रयेदित्यर्थः। यावदायुष्यं वा सम्यग्गार्हस्थ्यमाचरेत्। तादी.

**गृहस्थादाश्रमाः सर्वे समुत्पन्नाः सुरक्षिताः।**
**तस्माद्गृहस्थ एव स्यादविरक्तो द्विजः सदा॥**

गार्हस्थस्य प्राशस्त्ये हेतुः गृहस्थादाश्रमा इति। यतः आश्रमान्तराणां सर्वेषां स्वरूपलाभः स्वधर्मपरिपालनं च गृहस्थाश्रमनिबन्धनम्। अतः प्रशस्त इत्यर्थः। तादी.

**[1]यदा वैराग्यमुत्पन्नं तदैव प्रव्रजेद्वनी।**
**बहूदके वा हंसे वा मुमुक्षुः परमहंसके॥**

एषा च प्रव्रज्या सत्येव वैराग्ये कार्या। बहूदके वेतिवचनात्प्राक्तनी कुटीचकविषया। कुटीचकबहूदकादिचातुर्विध्यं च वक्ष्यमाणतत्तद्धर्मानुष्ठानसामर्थ्यानुसारेण व्यवस्थया विकल्प्यते। तादी.

**ईश्वर उवाच –**
**[2]अथातः संप्रवक्ष्यामि संन्यासं मुनिसत्तम।**
**चतुर्विधास्तु विज्ञेया भिक्षवो वृत्तिभेदतः॥**
**कुटीचको मुनिश्रेष्ठस्तथैव च बहूदकः।**
**हंसः परमहंसश्च..........................॥**

वनस्थप्रसङ्गेनोद्दिष्टमेव कुटीचकादिचतुष्टयं तद्धर्माभिधानाय पुनरनुवदति – अथात इति। अतः,

(१) बाल. ३।६० पृ. १०१.
(२) सूसं. १।१२।५६.
(३) सूसं. २।२।१७-१९, २०.
(४) सूसं. २।३।२४-२५.
(५) सूसं. २।४।१-२, २८-२९, ३०-३२.

(१) सूसं. २।५।१६.
(२) सूसं. २।६।१-२, ३१-३६.

उक्तमाश्रमत्रयं धर्मस्कन्धः सांसारिकफलविषय एव, श्रूयते हि – 'त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्सर्व एते पुण्यश्लोका भवन्ति' (छाउ. २।२३।१) इति।अ(?य)-तस्ततो विरक्तस्यानन्तरमपुनरावृत्तिरूपब्रह्मप्राप्तये ज्ञान-स्कन्धः संन्यास उच्यते । श्रूयते हि – 'ब्रह्मसंस्थोऽमृत-त्वमेति' (छाउ. २।२३।१) इति। ब्रह्मणि संस्था सम्यङ्निष्ठा यस्य चतुर्थाश्रमिणः स ब्रह्मसंस्थः, स एव अमृतत्वम् अपवर्गं प्राप्नोति। आश्रमान्तराणामपि ब्रह्मसंस्था(?स्थ)त्वसंभवं प्रापय्य परिहृतं हि तत्त्वविद्भिः – 'लोककाम्याश्रमी ब्रह्मनिष्ठामर्हति वा न वा। यथावकाशं ब्रह्मैव ज्ञातुमर्हत्यवारणात्॥ अनन्यचित्तता ब्रह्मनिष्ठाऽसौ कर्मिणे कथम्। कर्मत्यागी ततो ब्रह्मनिष्ठामर्हति नेतरः॥' इति। विवृतं चैतत्तैरेव "त्रयो धर्मस्कन्धाः' इत्यत्राऽऽश्रमानधिकृत्य 'सर्व एते पुण्यलोका भवन्ति' इति आश्रमानुष्ठायिनां पुण्यलोक-मभिधाय 'ब्रह्मसंस्थोऽमृतत्वमेति' इति मोक्षसाधनत्वेन ब्रह्मनिष्ठा प्रतिपाद्यते। सेयं ब्रह्मनिष्ठा पुण्यलोककामिन आश्रमिणोऽपि संभाव्यते, आश्रमकर्माण्यनुष्ठाय यथावकाशं ब्रह्मनिष्ठायाः कर्तुं सुकरत्वात्। न हि 'लोककामी ब्रह्म न जानीयात्' इति निषेधोऽस्ति। तस्मादस्ति सर्वस्याऽऽश्रमिणो ब्रह्मनिष्ठतेति प्राप्ते ब्रूमः – ब्रह्मनिष्ठा नाम सर्वव्यापारपरित्यागेनानन्यचित्ततया ब्रह्मणि समाप्तिः। न चासौ कर्मशूरे संभवति, कर्मानुष्ठानत्यागयोः परस्परविरोधात्। तस्मात्कर्मत्यागिन एव ब्रह्मनिष्ठा" (वैयासिकन्यायमाला ३।४।१८-२०) इति। वृत्तिभेदत इति। आचारभेदतः। तादी.

**क्रमाद्वाऽक्रमतो विद्वानुत्तमां वृत्तिमाश्रयेत्।**
**उत्तमां वृत्तिमापन्नो न नीचां वृत्तिमाश्रयेत्॥**

क्रमादिति। 'ब्रह्मचर्यं समाप्य गृही भवेत्। गृहाद्वनी भूत्वा प्रव्रजेत्' (जाउ. ४) इति जाबालश्रुतिः। अक्र-मतो वेति। 'यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा' (जाउ. ४) इति तत्रैव। तादी.

**उत्तमां वृत्तिमाश्रित्य नीचां वृत्तिं समाश्रितः।**
**आरूढपतितो ज्ञेयः सर्वधर्मबहिष्कृतः॥**

संन्यासप्रशंसा, परमहंसस्यैव तत्त्वज्ञानम्

**प्रव्रजन्तं द्विजं दृष्ट्वा स्थानाच्चलति भास्करः।**
**एष मे मण्डलं भित्त्वा ब्रह्मलोकं गमिष्यति॥**
**रूपं तु द्विविधं प्रोक्तं चरं वाऽचरमेव च।**
**चरं संन्यासिनां रूपमचरं मृन्मयादिकम्॥**
**यस्याऽऽश्रमे यतिर्नित्यं वर्तते मुनिसत्तम।**
**न तस्य दुर्लभं किंचित्त्रिषु लोकेषु वर्तते॥**
**दुर्वृत्तो वा सुवृत्तो वा मूर्खो वा पण्डितोऽपि वा।**
**वेषमात्रेण संन्यासी पूज्यः सर्वेश्वरो यथा॥**
**[1]क्रिमिकीटपतंगेभ्यः श्रेष्ठाः पश्वादयस्तथा।**
**पश्वादिभ्यो नराः श्रेष्ठा नरेभ्यो ब्राह्मणस्तथा॥**

'तस्मादात्मविदः पूज्याः' (सूसं. २।८।३२) इति यदुक्तं (? यद्वक्ष्यते) तत्र हेतुत्वेनाऽऽत्मविद्यायाः सर्वतः प्राशस्त्यमाह – क्रिमिकीटेत्यादिना। मनुरप्याह – 'भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः। बुद्धिमत्सु नराः श्रेष्ठा नरेषु ब्राह्मणास्तथा॥ ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धयः। कृतबुद्धिषु कर्तारः कर्तृषु ब्रह्मवादिनः॥ ब्रह्मविद्भ्यः परं किंचिन्न भूतं न भविष्यति॥ (मस्मृ. १।९६-९७)। तादी.

**ब्राह्मणेभ्योऽथ विद्वांसो विद्वत्सु कृतबुद्धयः।**
**कृतबुद्धिषु कर्तारस्तेभ्यः संन्यासिनो वराः॥**
**तेषां कुटीचकाः श्रेष्ठा बहूदकसमाश्रिताः।**
**बहूदकाद्वरो हंसो हंसात्परमहंसकः॥**
**[2]ईशानविषयं ज्ञानं वेदान्तश्रवणादिना।**
**जायते परहंसस्य यतेर्मुख्याधिकारिणः॥**
**नाऽऽश्रमान्तरनिष्ठस्य क्रमात्तस्यापि जायते॥**

उक्तस्य परमपुरुषार्थज्ञानस्य करणमधिकारिणं चाऽऽह – ईशानविषयमिति। तादी.

आश्रमिणां क्रमेण ब्रह्मलोकादि-फलानि

**ब्रह्मलोकमवाप्नोति वनस्थो नैष्ठिकोऽपि च।**
**गृहस्थः पितृलोकं च शिवज्ञानं तु भिक्षुकः॥**

---

(१) सूसं. २।८।२९-३१.
(२) सूसं. ४।१।२।१०-१५.

क्रमादित्युक्तं क्रममेवाऽऽह — ब्रह्मलोकमिति। क्रमाननुप्रविष्टस्यापि पितृलोकस्य वनस्थत्वानन्तरभाविगार्हस्थ्यफलत्वादत्रोपन्यासः। शिवज्ञानं तु भिक्षुक इति साक्षात्पारम्पर्याभ्याम्। तादी.

**तत्रापि प्रथमो भिक्षुर्ज्ञानेच्छोदयबाधकात्।**
**महापापादयत्नेन मुच्यते मुनिपुंगवाः॥**

चतुर्विधा हि भिक्षुकाः कुटीचकबहूदकहंसपरमहंसाः। तत्राऽऽद्यस्य पारम्पर्यप्रकारमाह — तत्रापि प्रथमो भिक्षुरिति। जिज्ञासाप्रतिबन्धकपापनिवृत्तिः कुटीचकाश्रमधर्मानुष्ठानफलम्। तादी.

**द्वितीयः शान्तिदान्त्यादिज्ञानाङ्क्षेच्छामवाप्नुयात्।**
**तृतीयोऽखिलवेदान्तश्रवणेच्छामवाप्नुयात्॥**

बहूदकधर्मानुष्ठान(फल?)स्य तु शमदमादिलाभः फलम्। हंसधर्मस्य तु वेदान्तशुश्रूषा। तादी.

**चतुर्थो ज्ञानमाप्नोति वेदान्तश्रवणेन तु।**
**स एव कर्मसंन्यासी परहंससमाश्र(?ह्व)यः।**
**अन्ये काम्यपरित्यागाद्भिक्षुका इति कीर्तिताः॥**

श्रवणपुरःसरतत्त्वज्ञानावाप्तिश्चतुर्थाश्रमफलमित्यर्थः। तादी.

आश्रमक्रमः तत्राधिकारिणश्च

**(१)स पुनर्जातकर्मादिसंस्कारैरपि संस्कृतः।**
**उपनीतो गुरोर्वेदानधीत्य विधिवत्पुनः॥**

वेदानधीत्य विधिवदिति। अनेनैव ब्रह्मचारिणामनुष्ठानमुक्तम्। तादी.

**दारानाहृत्य यज्ञं च दानं च विविधं तथा।**
**तपश्च विविधं घोरं कृत्वा कामनया विना।**

दारानाहृत्येत्यादिना गार्हस्थ्याश्रमधर्मप्रतिपादनम्। तपश्च विविधमिति वानप्रस्थाश्रमधर्माः। कामनया विनेति। फलसंधानविरहेण केवलमीश्वरार्पणबुद्ध्यैवानुष्ठिता वर्णाश्रमधर्मा अध्ययनादयः पापप्रणाशनेन चित्तशुद्धिद्वारा परंपरया मुक्तिसाधनत्वं प्रतिपद्यन्त इत्यर्थः। श्रूयते हि — 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' (बृउ. ४।४।२२) इति। तादी.

(१) सूसं. ४।१।२१।१६-२२.

**प्रनष्टपापः शुद्धान्तःकरणो ज्ञानवाञ्छया।**
**विरक्तः सर्वलोकेभ्यो दोषाणां तु निरूपणात्॥**

एवमाश्रमत्रयानुष्ठितैः कर्मभिश्चित्तशुद्धौ जातायां संसारदोषदर्शनात्ततो वैराग्यं जायत इत्याह — विरक्त इति। तादी.

**चित्तपाकानुगुण्येन प्रव्रज्यां कुरुते पुनः।**
**तत्रामुमुक्षुः संन्यासी प्रेरितः परमेश्वरात्॥**

प्रव्रज्यां कुरुत इति, 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' इति श्रुतेः। तादी.

**कुटीचकाभिधां वृत्तिं वृत्तिं वाऽथ बहूदकाम्।**
**हंसवृत्तिं तु वा नित्यं वाञ्छते मुनिसत्तमाः॥**
**मुमुक्षुर्भिक्षुको नित्यं परहंसाभिधां शुभाम्।**
**वृत्तिमिच्छति देवेशप्रसादेन द्विजोत्तमाः॥**

वैराग्यजननानन्तरं चित्तैकाग्र्यलाभाय संन्यास एव कर्तव्य इत्याह — भिक्षुक इति। साधनचतुष्टयान्तर्वर्ति यन्मुमुक्षुत्वं तदीश्वरप्रसादेन परमहंसस्यैव जायते, नान्येषां कुटीचकादीनामित्यर्थः। तादी.

**कुटीचकादिवृत्तिस्थो मुक्तिमिच्छति चेद्‌द्विजाः।**
**परहंसाभिधां वृत्तिं प्राप्नुयाच्छंकराज्ञया॥**

कुटीचकादिभिरपि यदा मुक्तिरन्विष्यते तदा तैरपि परमहंसाश्रम एव कर्तव्य इत्याह — कुटीचकादीति। तादी.

संन्यासस्य प्रायश्चित्तरूपता, संन्यासावान्तरभेदाः प्राशस्त्यतारतम्यसहिताः

**(१)संन्यासश्चापि पापानां प्रायश्चित्तं प्रकीर्तितम्।**
**पापिष्ठानामयोग्यानां योग्यानां मुक्तिसाधनम्॥**
**चतुर्विधस्तु संन्यासो वृत्तिभेदेन सत्तमाः।**
**एकः कुटीचकः प्रोक्तस्तथाऽन्यश्च बहूदकः॥**
**हंसश्चान्यस्तथैवान्यः परहंससमाह्वयः।**
**कुटीचकादपि श्रेष्ठो भिक्षुकश्च बहूदकः॥**
**हंसो बहूदकाच्छ्रेष्ठः परहंसस्ततः परः।**
**परहंसादपि श्रेष्ठ आश्रमी नास्ति कश्चन॥**
**संन्यासेन समं नास्ति प्रायश्चित्तं द्विजर्षभाः।**
**ततः पापनिवृत्त्यर्थं संन्यसेत्परितापितः॥**

(१) सूसं. ४।१।४२।१०२-१०५, ११७-११८.

रहस्यानां च संन्यासः प्रायश्चित्तं तथैनसाम्।
प्रसिद्धानां च पापानां प्रायश्चित्तमयं तथा॥

## गरुडपुराणम्

आश्रमिणां क्रमेण ब्रह्मलोकादीनि फलानि, आश्रमाणामवान्तरभेदाः सलक्षणाः

[1]ब्रह्मचारिव्रतस्थानां ब्रह्मलोकः प्रजायते।
प्राजापत्यं गृहस्थानां यथाविहितकारिणाम्॥
स्थानं सप्तऋषीणां च तथैव वनवासिनाम्।
यतीनामक्षयं स्थानं यदृच्छागामिनां सदा॥
[2]सर्वेषामाश्रमाणां च द्वैविध्यं तु चतुर्विधम्।
ब्रह्मचार्युपकुर्वाणो नैष्ठिको ब्रह्मतत्परः॥
योऽधीत्य विधिवद्वेदान् गृहस्थाश्रममाव्रजेत्।
उपकुर्वाणको ज्ञेयो नैष्ठिको मरणान्तिकः॥
उदासीनः साधकश्च गृहस्थो द्विविधो भवेत्।
कुटुम्बभरणे युक्तः साधकोऽसौ गृही भवेत्॥
ऋणानि त्रीण्यपाकृत्य त्यक्त्वा भार्याधनादिकम्।
एकाकी यस्तु विचरेदुदासीनः स मौक्षिकः॥
तपस्तप्यति योऽरण्ये यजेद्देवाञ्जुहोति च।
स्वाध्याये चैव निरतो वनस्थस्तापसोत्तमः॥
तपसा कर्शितोऽत्यर्थं यस्तु ध्यानपरो भवेत्।
संन्यासी स हि विज्ञेयो वानप्रस्थाश्रमे स्थितः॥
योगाभ्यासरतो नित्यमारुरुक्षुर्जितेन्द्रियः।
ज्ञानाय वर्तते भिक्षुः प्रोच्यते पारमेष्ठिकः॥
यस्त्वात्मरतिरेव स्यान्नित्यतृप्तो महामुनिः।
सम्यक् च दमसंपन्नः स योगी भिक्षुरुच्यते॥
ज्ञानसंन्यासिनः केचिद्वेदसंन्यासिनोऽपरे।
कर्मसंन्यासिनः केचित्त्रिविधः पारमेष्ठिकः॥
योगी च त्रिविधो ज्ञेयो भौतिकः क्षत्र एव च।
तृतीयोऽन्त्याश्रमी प्रोक्तो योगमूर्तिं समास्थितः॥

नैष्ठिकत्वादीनामूर्ध्वरेतसामाश्रमाणां क्रमेण फलानि

अष्टाशीतिसहस्राणामृषीणामूर्ध्वरेतसाम्।
स्मृतं तेषां तु यत्स्थानं तदेव गुरुवासिनाम्॥

(१) गरुड. १।४।३७-३८.
(२) गरुड. १।४९।६-७, ९-१०, १२-१५, १७-१८, २६-२९.

सप्तर्षीणां तु यत्स्थानं स्थानं तद्वै वनौकसाम्।
यतीनां यतचित्तानां न्यासिनामूर्ध्वरेतसाम्॥
आनन्दं ब्रह्म तत्स्थानं यस्मान्नाऽऽवर्तते मुनिः॥
योगिनाममृतस्थानं व्योमाख्यं परमाक्षरम्।
आनन्दमैश्वरं यस्मान्मुक्तो नाऽऽवर्तते नरः॥

ब्रह्मचर्यावधिः, वानप्रस्थ्ये भार्यासाहित्य-राहित्यविकल्पः

[1]प्रतिवेदं ब्रह्मचर्यं द्वादशाब्दानि पञ्च वा।
ग्रहणान्तिकमित्येके........................॥
[2]पुत्रेषु भार्यां निःक्षिप्य वनं गच्छेत्सहैव वा॥

आश्रमविकल्पः

[3]वनाद्गृहाद्वा कृत्वेष्टिं सर्ववेदसदक्षिणाम्।
प्राजापत्यां तदन्तेऽपि अग्निमारोप्य चाऽऽत्मनि।
सर्वभूतहितः शान्तस्त्रिदण्डी सकमण्डलुः।
सर्वारामं परिव्र(?त्य)ज्य.....................॥
भवेत्परमहंसो वा एकदण्डी शमादिकृत्॥

संन्यासप्रशंसा

[4]तीर्थे गृहे वा संन्यासं नीत्वा चेन्म्रियते यदि।
प्रत्यहं लभते सोऽपि ×पूर्वोक्तं द्विगुणं फलम्॥
[5]य आतुरः सन् संन्यासं गृह्णाति यदि मानवः।
पुनर्न जायते भूमौ संसारे दुःखसागरे॥
[6]संन्यासिनं तीर्थगतं संरक्षन्ति च देवताः।
मम दूता विशेषेण न यमस्तस्य चान्तिके॥

## पद्मपुराणम्

स्वस्वधर्मचारिणामाश्रमिणां ब्रह्मलोकः फलम्

[7]ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा।
स्वधर्मनिरताः सर्वे नाकपृष्ठे वसन्ति ते॥

× समग्रवरदक्षिणक्रतुफलं पूर्वमुक्तम्।
(१) गरुड. १।९४।२१-२२.
(२) गरुड.१।१०२।१.
(३) गरुड. १।१०३।१,२-३, ४.
(४) गरुड. २।३६।७; यप्र. ४७ नीत्वा (चीर्त्वा) यदि (नरः) क्तं द्वि (क्तद्वि).
(५) गरुड. २।३६।९; यप्र. ४७ य आतुरः सन् (आतुरो यस्तु) उत्तरार्धे (पुनर्जातः स संन्यस्तो भवेद्रोगैश्च पातकैः॥).
(६) गरुड. २।३६।१७ (कृत्यासीनं तत्तीर्थगतं रक्षन्ति वनदेवताः। यमदूता विशेषेण न याम्यास्तस्य पार्श्वगाः॥); यप्र. ४७.
(७) पद्म. १।३१।४०-४१.

**यथोक्तचारिणः सर्वे वर्णाश्रमसमन्विताः।**
**नरा जितेन्द्रिया यान्ति ब्रह्मलोकं तु शाश्वतम्॥**

नैष्ठिकत्वम्

[1]**यदि त्वात्यन्तिकं वासं कर्तुमिच्छति वै गुरौ।**
**युक्तः परिचरेदेनमा शरीरविमोक्षणम्॥**

आश्रमकालमर्यादाः, वानप्रस्थ्ये भार्यासाहित्य-राहित्यविकल्पः, वैराग्यं संन्यासहेतुः, संन्यासावान्तरभेदाः सलक्षणाः

[2]**वेदं वेदौ तथा वेदान्वेदाङ्गानि तथा द्विजः।**
**अधीत्य चाधिगम्यार्थं ततः स्नायाद्द्विजोत्तमः॥**
[3]**एवं गृहाश्रमे स्थित्वा द्वितीयं भागमायुषः।**
**वानप्रस्थाश्रमं गच्छेत्सदारः साग्निरेव च॥**
**निक्षिप्य भार्यां पुत्रेषु गच्छेद्वनमथापि वा।**
**दृष्ट्वाऽपत्यस्य वाऽपत्यं जर्जरीकृतविग्रहः॥**
**व्यास उवाच –**
[4]**एवं वनाश्रमे स्थित्वा तृतीयं भागमायुषः।**
**चतुर्थं चाऽऽयुषो भागं संन्यासेन नयेत्क्रमात्॥**
**अग्नीनात्मनि संस्थाप्य द्विजः प्रव्रजितो भवेत्।**
**योगाभ्यासरतः शान्तो ब्रह्मविद्यापरायणः॥**
**यदा मनसि संपन्नं वैतृष्ण्यं सर्ववस्तुषु।**
**तदा संन्यासमिच्छेच्च पतितः स्याद्विपर्यये॥**
**प्राजापत्यां निरुप्येष्टिमाग्नेयीमथवा पुनः।**
**दान्तः शुक्लकषायोऽसौ ब्रह्माश्रममुपाश्रयेत्॥**
**ज्ञानसंन्यासिनः केचिद्वेदसंन्यासिनोऽपरे।**
**कर्मसंन्यासिनस्त्वन्ये त्रिविधाः परिकीर्तिताः॥**
**यः सर्वत्र विनिर्मुक्तो निर्द्वन्द्वश्चैव निर्भयः।**
**प्रोच्यते ज्ञानसंन्यासी आत्मन्येव व्यवस्थितः॥**
**वेदमेवाभ्यसेन्नित्यं निराशी निष्परिग्रहः।**
**प्रोच्यते वेदसंन्यासी मुमुक्षुर्विजितेन्द्रियः॥**
**यस्त्वग्निमात्मसात्कृत्वा ब्रह्मार्पणपरो द्विजः।**
**ज्ञेयः स कर्मसंन्यासी महायज्ञपरायणः॥**
**त्रयाणामपि चैतेषां ज्ञानी त्वभ्यधिको मतः॥**

(१) **पद्म.** १।५३।८७.
(२) **पद्म.** १।५४।१.
(३) **पद्म.** १।५८।१-२.
(४) **पद्म.** १।५९।१-९.

गार्हस्थ्यप्रशंसा, वानप्रस्थ्यं तत्र च भार्यासाहित्यं भार्याराहित्यं वा

[1]**गार्हस्थ्यात्परमो धर्मो द्वितीयो नास्ति भूतले॥**
**गृहस्थस्य गृहः पुण्यः सत्यपुण्यसमन्वितः।**
**सर्वतीर्थमयो वैश्य सर्वदेवसमन्वितः॥**
**गार्हस्थ्यं च समाश्रित्य सर्वे जीवन्ति तत्त्वतः।**
**तादृशं नैव पश्यामि ह्यन्यमाश्रममुत्तमम्॥**
[2]**एवं गार्हस्थ्यमाश्रित्य वानप्रस्थाश्रमं व्रजेत्।**
**सस्त्रीको विगतस्त्रीको विरजेत ततः परम्॥**
.... [3]**गार्हस्थ्यान्नाऽऽश्रमः परः॥**

आश्रमिणां फलानि, आश्रमसमुच्चयः, आश्रमकालमर्यादाः

[4]**अष्टाशीतिसहस्राणां यतीनामूर्ध्वरेतसाम्।**
**स्मृतं येषां( ?तेषां) तु यत्स्थानं तदेव गुरुवासिनाम्॥**
**सप्तर्षीणां च यत्स्थानं स्मृतं तद्वै वनौकसाम्।**
**प्राजापत्यं गृहस्थानां न्यासिनां ब्रह्मसंज्ञितम्॥**
**योगिनाममृतं स्थानं ब्रह्मणः परमं पदम्।**
**एकान्तिनः सदोद्युक्ता व्यापिनो योगिनो हि ये॥**
**तेषां तत्परमं स्थानं यन्न पश्यन्ति सूरयः॥**
[5]**गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः।**
**यथोक्तकारिणः सर्वे गच्छन्ति परमां गतिम्॥**
**एकोऽयमाश्रमो धर्ममनुतिष्ठेद्यथाविधि।**
**अकामद्वेषसंयुक्तः स परत्र महीयते॥**
**चतुष्पदा ह निःश्रेणी ब्रह्मणैषा प्रतिष्ठिता।**
**एतामाश्रित्य निःश्रेणीं ब्रह्मलोके महीयते॥**
**आयुषोऽपि चतुर्भागं ब्रह्मचार्यनसूयकः।**
**गुरौ वा गुरुपुत्रे वा वसेद्धर्मार्थकोविदः॥**
**वेदं वेदौ तथा वेदान्वेदार्थांश्च तथा द्विजः।**
**भिक्षाभुगप्यधःशायी समधीत्य गुरोर्मुखात्॥**
**वेदव्रतोपयोगी च चतुर्थांशेन योगतः।**
**गुरवे दक्षिणां दत्त्वा समावर्तेद्यथाविधि॥**

(१) **पद्म.** १।५९।१६-१८.
(२) **पद्म.** ४।९।६२.
(३) **पद्म.** ४।८८।५०.
(४) **पद्म.** ५।३।१४९-१५२.
(५) **पद्म.** ५।१५।२८३-२८७, २९८-३०१, ३२८-३३०, ३३३, ३५४, ३५८-३५९.

धर्मलब्धैर्युतो दारैरग्नीनाधाय पूजयेत्।
द्वितीयमायुषो भागं गृहमेधी सदा वसेत्॥
स्वर्गलोको गृहस्थानां प्रतिष्ठा नियतात्मनाम्।
ब्रह्मणाऽभिहिता श्रेणी ह्येषा यस्याः प्रमुच्यते॥
द्वितीयं क्रमशः प्राप्य स्वर्गलोके महीयते।
तृतीयमपि पश्यामि वानप्रस्थाश्रमं शृणु॥
गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः।
अपत्यस्यैव चापत्यं तदाऽरण्यं समाश्रयेत्॥
तृतीयमायुषो भागं वानप्रस्थाश्रमे वसन्।
तानेवाग्नीन्परिचरेद्यजमानो दिवौकसः॥
आश्रमादाश्रमं सद्यः पूतो गच्छति कर्मभिः।
अभयं सर्वभूतेभ्यो यो दत्वा प्रव्रजेद्द्विजः॥
लोकास्तेजोमयास्तस्य प्रेत्य चाऽऽनन्त्यमश्नुते॥
प्राप्य संस्कारमेताभ्यामाश्रमाभ्यां ततः परम्।
यत्कार्यं परमं तीर्थं तत्त्वमेकमनाः शृणु॥
काषायं धारयित्वा तु श्रेणिस्थानेषु च त्रिषु।
प्रव्रजेच्च परं स्थानं पारिव्राज्यमनुत्तमम्॥

गार्हस्थ्यप्रशंसा, ब्रह्मचर्यावधिः

[1]गृहेऽपि पञ्चेन्द्रियनिग्रहस्तप-
स्त्वकुत्सिते कर्मणि यः प्रवर्तते।
निवृत्तरागस्य तपोवनं गृहं
गृहाश्रमोऽतो गदितः स्वधर्मः॥
सुदुस्तरः स त्वजितेन्द्रियाणां
संहन्यते श्रेष्ठतमः शुभाश्रमः।
गृहस्थधर्मः प्रवरो मनीषिणां
ब्रह्मादिभिश्चाभिहितो नगात्मजे॥
तप्त्वा तपः सन्विपिने क्षुधार्तो
गृहं समायाति सदाऽन्नदातुः।
भक्त्या स चान्नं प्रददाति तस्मै
तपोविभागं भजते हि तस्य॥
गृहाश्रमं ज्येष्ठमिहाऽऽश्रमाणां
सम्यक्सदा पालयते मनुष्यः।
इहैव भुञ्जन्स मनुष्यभोगान्
स्वर्गं प्रयातीति न संशयोऽत्र॥

(१) पद्म. ६।७५।८-१४.

सदा गृहं पालयतां नराणां
पापं समायाति कथं हि देवि॥
गृहाश्रमः पुण्यतमः सर्वदा तीर्थवद्गृहम्।
अस्मिन्गृहाश्रमे पुण्ये दानं देयं विशेषतः॥
देवानां पूजनं यत्र अतिथीनां तु भोजनम्।
पथिकानां च शरणमतो धन्यतमो मतः॥
तद्गृहं तु समाश्रित्य येऽर्चयन्ति द्विजन्मनः।
आयुर्लक्ष्मीः सुतास्तेषां न हीयन्ते कदाचन॥
[1]पुत्रादिसुखहीनोऽयं संन्यासः शुष्क एव हि।
गृहस्थः सरसो लोके पुत्रपौत्रसमावृतः॥
[2]अधीत्य वेदान्वेदौ वा वेदं वा क्रमतः पितुः।
अप्रस्खलद्ब्रह्मचर्यो गृहाश्रममथाऽऽश्रयेत्॥
गृहाश्रमात्परो नास्ति यदि पत्नी वशं गता।

## ब्रह्मपुराणम्

आश्रमाः पुण्यकर्मद्वाराणि, गार्हस्थ्यप्रशंसा, आश्रमकालमर्यादाः, वानप्रस्थ्ये भार्या-साहित्यराहित्यविकल्पः, संन्यासफलम्

[3]अकर्मणः कर्म पुण्यं कर्म चाप्याश्रमेषु च॥
आश्रमाणि च चत्वारि कर्मद्वाराणि मानद।
चतुर्णामाश्रमाणां च गार्हस्थ्यं पुण्यदं स्मृतम्।
तस्माद्भुक्तिश्च मुक्तिश्च भवतीति मतिर्मम॥
[4]गृहीतग्राह्यवेदश्च ततोऽनुज्ञामवाप्य वै।
गार्हस्थ्यमावसेत्प्राज्ञो निष्पन्नगुरुनिष्कृतिः॥
भिक्षाभुजश्च ये केचित्परिव्राड्ब्रह्मचारिणः।
तेऽप्यत्र प्रतितिष्ठन्ति गार्हस्थ्यं तेन वै परम्॥
वेदाहरणकार्येण तीर्थस्नानाय च द्विजाः।
अटन्ति वसुधां विप्राः पृथिवीदर्शनाय च॥
अनिकेता ह्यनाहारा ये तु सायंगृहास्तु ते।
तेषां गृहस्थः सततं प्रतिष्ठा योनिरुच्यते॥
वयःपरिणतौ विप्राः कृतकृत्यो गृहाश्रमी।
पुत्रेषु भार्यां निक्षिप्य वनं गच्छेत्सहैव वा॥

(१) पद्म. ६।१९२।३९.
(२) पद्म. ६।२२३।३४-३५.
(३) ब्रह्म. ८८।१३, १४-१५.
(४) ब्रह्म. २२२।२८, ३२-३४, ३९, ४५, ४६, ५६.

चतुर्थश्चाऽऽश्रमो भिक्षोः प्रोच्यते यो मनीषिभिः।
पुत्रद्रव्यकलत्रेषु त्यजेत्स्नेहं द्विजोत्तमाः।
चतुर्थमाश्रमस्थानं गच्छेन्निर्धूतमत्सरः॥
मोक्षाश्रमं यश्चरते यथोक्तं
शुचिश्च संकल्पितबुद्धियुक्तः।
अनिन्धनं ज्योतिरिव प्रशान्तं
स ब्रह्मलोकं व्रजति द्विजातिः॥

## ब्रह्मवैवर्तपुराणम्

गार्हस्थ्यप्रशंसा, आश्रमसमुच्चयः, आश्रमकालमर्यादाः

[१]सर्वेषामाश्रमाणां च प्रधानः पुण्यवान्गृही।
स्त्रीपुत्रपौत्रयुक्तं च मन्दिरं तपसः फलम्॥
पितरः पूर्वकाले च तिथिकाले च देवताः।
सर्वे गृहस्थमायान्ति निपानमिव धेनवः॥
नित्यं नैमित्तिकं काम्यं कुर्वन्ति गृहिणः सदा।
इह एतत्सुखं पुण्यं स्वर्गभोगः परत्र च॥
जीवन्मुक्तो गृहस्थश्च स्वधर्मपरिपालकः।
यशस्वी पुण्यवांश्चैव कीर्तिमान्धनवान्सुखी॥
[२]आदौ विप्रो यज्ञसूत्रं परिधाय सुखं सुखी।
समधीत्य ततो वेदान्ददाति गुरुदक्षिणाम्।
ततः प्रकृष्टकुलजां सुविनीतां समुद्वहेत्॥
साधुः सद्वंशजां कन्यां प्रयत्नेन परिग्रहेत्।
तस्यां पुत्रान्समुत्पाद्य वृद्धस्तु तपसे व्रजेत्॥
आदौ भवेद्गृही लोको वानप्रस्थस्ततः परम्।
ततस्तपस्वी मोक्षाय क्रम एष श्रुतौ श्रुतः॥
[३]स्वधर्मिणां च भिक्षूणां पुनर्जन्म न विद्यते॥
[४]यतिर्वा ब्रह्मचारी वा भिक्षुर्वनचरोऽपि वा।
जायायां च सुतोत्पत्तिं कृत्वा पश्चाद्भवेन्मुनिः॥
अकृत्वा तु सुतोत्पत्तिं विरागी यस्त्यजेत्प्रियाम्।
स्रवेत्तपस्तत्पुण्यं च चालिन्यां च यथा जलम्॥

संन्यासप्रशंसा, वैराग्यं संन्यासहेतुः

[५]दण्डग्रहणमात्रेण नरो नारायणो भवेत्॥
पूर्वकर्माणि दग्ध्वा च परकर्मनिकृन्तनम्।
कुरुते चिन्तयेन्मां च ह्यायाति मम मन्दिरम्॥
संन्यासिनः पदस्पर्शात्सद्यः पूता वसुंधरा।
सद्यः पुनन्ति तीर्थानि वैष्णवस्य यथा व्रजः।
संन्यासिनश्च स्पर्शेन निष्पापो जायते नरः।
संन्यासिनं भोजयित्वा चाश्वमेधफलं लभेत्॥
नत्वा च कामतो दृष्ट्वा राजसूयफलं लभेत्।
फलं संन्यासिनां तुल्यं यतीनां ब्रह्मचारिणाम्॥
[१]वैराग्योत्पत्तिमात्रे च संन्यासे परियुज्यते।
रागवान्न तु विप्रोऽपि वेदवेदाङ्गवित्तमः॥

वेदवेदाङ्गवित्तमोऽपि विप्रो रागवांश्चेत्स संन्यासे न परियुज्यत इत्यन्वयः। एवं च विप्रस्य विरक्तस्यैवाधिकारोऽभिहितो भवेत्, न क्षत्रियादेः।

मपा. ३७१

## वराहपुराणम्

गार्हस्थ्यप्रशंसा

[२]पिपीलिकादिभूतानि जङ्गमाश्च विहंगमाः।
उपजीवन्ति सुश्रोणि गृहस्थेषु न संशयः॥
एवं गृहाश्रमो मूलं धर्मस्तत्र प्रतिष्ठितः॥

## वामनपुराणम्

आश्रमकालावधयः, आश्रमविकल्पसमुच्चयौ, वर्णभेदेनाऽऽश्रमव्यवस्था, ब्रह्मणः सकाशादाश्रमसृष्टिः

[३]ब्राह्मणस्यापि विहिता चातुराश्रम्यकल्पना॥
कृतोपनयनः सम्यग्ब्रह्मचारी गुरौ वसेत्॥
एकं द्वौ सकलान्वाऽपि वेदान्प्राप्य गुरोर्मुखात्।
अनुज्ञातो वरं दत्त्वा गुरवे दक्षिणां ततः॥
गृहस्थाश्रमकामस्तु गार्हस्थ्याश्रममावसेत्।
वानप्रस्थाश्रमं वाऽऽपि चतुर्थं स्वेच्छयाऽऽत्मनः॥
तत्रैव वा गुरोर्गेहे द्विजो निष्ठामवाप्नुयात्।
गुरोरभावे तत्पुत्रे तच्छिष्ये तत्सुतां विना॥
शुश्रूषन्निरभीमानो ब्रह्मचर्याश्रमं वसेत्।
एवं जयति मृत्युं स द्विजः सालकटंकट॥

---

(१) ब्रह्मवै. १।२३।८-११.
(२) ब्रह्मवै. १।२४।८-९, १४, २०.
(३) ब्रह्मवै. २।३६।११६.
(४) ब्रह्मवै. २।४६।५८-५९.
(५) ब्रह्मवै. ४।८३।८३-८७.

(१) मपा. ३७१.
(२) वराह. १९०।५२-५३.
(३) वामन. १४।२, ४, ७-११, १११.

**उपावृत्तैस्तु तैस्तस्माद्गृहस्थाश्रमकाम्यया।**
**असमानार्षकुलजा कन्योद्वाह्या निशाचर॥**
**अपत्यसंततिं दृष्ट्वा प्राज्ञो देहस्य चाऽऽनतिम्।**
**वानप्रस्थाश्रमं गच्छेदात्मनः शुद्धिकारणम्॥**
[1]**गार्हस्थ्यं ब्रह्मचर्यं च वानप्रस्थ्यं त्रयोऽऽश्रमाः।**
**क्षत्रियस्यापि गदितो य आचारो द्विजस्य हि॥**
[2]**ब्रह्मचर्यं च गार्हस्थ्यमाश्रमद्वितयं विशः।**
**गार्हस्थमाश्रमं त्वेकं शूद्रस्य क्षणदाचर॥**

ननु शूद्रस्याऽऽश्रम एव नास्ति, 'चत्वार आश्रमास्तात तेषु शूद्रस्तु नार्हति' इति निषेधात्। ततः कथं तस्य गार्हस्थ्याङ्गीकारः? उच्यते – समन्त्रक एव विवाहो निषिध्यते, न त्वमन्त्रकः। अन्यथा विवाहप्रकरणोदाहृतानि शूद्रविषयाणि वचनानि, पञ्चमहायज्ञादिगृहस्थधर्मेषु शूद्राधिकारवचनानि विरुध्येरन्। तस्मादस्ति शूद्रस्य गार्हस्थ्यम्।

पमा. १।५३४-५३५

[3]**चत्वार आश्रमाश्चैते ब्राह्मणस्य प्रकीर्तिताः॥**
[4]**एवं स भगवान् ब्रह्मा पूजनाय शिवस्य तु।**
**कृत्वाऽथ चातुराश्रम्यं स्वमेव भवनं गतः॥**

## कूर्मपुराणम्

आश्रमोत्पत्तिः, गार्हस्थ्यप्रशंसा, गार्हस्थ्यविषयकमैकाश्रम्यम्

[5]**ततः स्थितेषु वर्णेषु स्थापयामास चाऽऽश्रमान्।**
**गृहस्थं च वनस्थं च भिक्षुकं ब्रह्मचारिणम्॥**
[6]**त्रयाणामाश्रमाणां तु गृहस्थो योनिरुच्यते।**
**अन्ये तमुपजीवन्ति तस्माच्छ्रेयान् गृहाश्रमी॥**
**ऐकाश्रम्यं गृहस्थस्य चतुर्णां श्रुतिदर्शनात्॥**
**तस्माद्गार्हस्थ्यमेवैकं विज्ञेयं धर्मसाधनम्।**

(१) **वामन.** १४।११७; **पमा.** १।५३४ गदितो य आचारो (कथिता य आचारा).
(२) **वामन.** १४।११८ ब्रह्मचर्यं च (वैखानसत्वं); **पमा.** १।५३४ माश्रमं (मुचितं).
(३) **पमा.** १।५३४.
(४) **स्मृकौ.** ६५; **शूक.** ३२ ऽथ (तु) स्वमेव (स्वयं च).
(५) **कूर्म.** १।२।४१-४२.
(६) **कूर्म.** १।२।५१-५३.

आश्रमिणां फलानि, योगित्वविषयकपञ्चमाश्रमत्वशङ्कानिरासः, आश्रमाणामवान्तरभेदाः सलक्षणाः

[1]**अष्टाशीतिसहस्राणामृषीणामूर्ध्वरेतसाम्।**
**स्मृतं तेषां तु यत्स्थानं तदेव गुरुवासिनाम्॥**
**सप्तर्षीणां तु यत्स्थानं स्मृतं तद्वै वनौकसाम्।**
**प्राजापत्यं गृहस्थानां स्थानमुक्तं स्वयंभुवा॥**
**यतीनां जितचित्तानां न्यासिनामूर्ध्वरेतसाम्।**
**हैरण्यगर्भं तत्स्थानं यस्मान्नाऽऽवर्तते पुनः॥**
**योगिनाममृतं स्थानं व्योमाख्यं परमक्षरम्।**
**आनन्दमैश्वरं धाम सा काष्ठा सा परा गतिः।**
**ऋषय ऊचुः –**
**भगवन्देवतारिघ्न हिरण्याक्षनिषूदन।**
**चत्वारो ह्याश्रमाः प्रोक्ता योगिनामेक उच्यते॥**
**कूर्म उवाच –**
**सर्वकर्माणि संन्यस्य समाधिमचलं श्रितः।**
**य आस्ते निश्चलो योगी स संन्यासी न पञ्चमः॥**
**सर्वेषामाश्रमाणां तु द्वैविध्यं श्रुतिदर्शितम्।**
**ब्रह्मचार्युपकुर्वाणो नैष्ठिको ब्रह्मतत्परः॥**
**योऽधीत्य विधिवद्वेदान् गृहस्थाश्रममाव्रजेत्।**
**उपकुर्वाणको ज्ञेयो नैष्ठिको मरणान्तिकः॥**
[2]**उदासीनः साधकश्च गृहस्थो द्विविधो भवेत्।**
**कुटुम्बभरणायत्तः साधकोऽसौ गृही भवेत्॥**
[3]**ऋणानि त्रीण्यपाकृत्य त्यक्त्वा भार्याधनादिकम्।**
**एकाकी यस्तु विचरेदुदासीनः स मौक्षिकः॥**
[4]**तपस्तप्यति योऽरण्ये यजेद्देवान् जुहोति च।**
**स्वाध्याये चैव निरतो वनस्थस्तापसो मतः॥**
**तपसा कर्षितोऽत्यर्थं यस्तु ध्यानपरो भवेत्।**
**सांन्यासिकः स विज्ञेयो वानप्रस्थाश्रमे स्थितः॥**
**योगाभ्यासरतो नित्यमारुरुक्षुर्जितेन्द्रियः।**
**ज्ञानाय वर्तते भिक्षुः प्रोच्यते पारमेष्ठिकः॥**
**यस्त्वात्मरतिरेव स्यान्नित्यतृप्तो महामुनिः।**

(१) **कूर्म.** १।२।७०-७८.
(२) **कूर्म.** १।२।७८-७९; **गप.** ४५१ धो भवेत् (धो मतः) णायत्तः (णे सक्तः).
(३) **कूर्म.** १।२।७९-८०; **गप.** ४५१ धनादि (गृहादि).
(४) **कूर्म.** १।२।८०-८८.

सम्यग्दर्शनसंपन्नः स योगी भिक्षुरुच्यते॥
ज्ञानसंन्यासिनः केचिद्वेदसंन्यासिनोऽपरे।
कर्मसंन्यासिनः केचित्त्रिविधाः पारमेष्ठिकाः॥
योगी च त्रिविधो ज्ञेयो भौतिकः सांख्य एव च।
तृतीयो ह्याश्रमी प्रोक्तो योगमुत्तममाश्रितः॥
प्रथमा भावना पूर्वे सांख्ये त्वक्षरभावना।
तृतीये चान्तिमा प्रोक्ता भावना पारमेश्वरी॥
तस्मादेतद्विजानीध्वमाश्रमाणां चतुष्टयम्।
सर्वेषु वेदशास्त्रेषु पञ्चमो नोपपद्यते॥

आश्रमसमुच्चयविकल्पौ, आरूढपतितत्वनिषेधः, वैराग्यपङ्गुत्वादयः संन्यासहेतवः, ऐकाश्रम्यकल्पः

[1]ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा।
क्रमेणैवाऽऽश्रमाः प्रोक्ताः कारणादन्यथा भवेत्॥
उत्पन्नज्ञानविज्ञानी वैराग्यं परमं गतः।
प्रव्रजेद्ब्रह्मचर्याद्वा यदीच्छेत्परमां गतिम्॥
दारानाहृत्य विधिवदन्यथा विविधैर्मखैः।
यजेदुत्पादयेत्पुत्रान् विरक्तो यदि संन्यसेत्॥
अनिष्ट्वा विधिवद्यज्ञैरनुत्पाद्य तथाऽऽत्मजान्।
न गार्हस्थं गृही त्यक्त्वा संन्यसेद्बुद्धिमान् द्विजः॥
अथ वैराग्यवेगेन स्थातुं नोत्सहते गृहे।
तत्रैव संन्यसेद्विद्वाननिष्ट्वाऽपि द्विजोत्तमः॥
तथाऽपि विविधैर्यज्ञैरिष्ट्वा वनमथाऽऽश्रयन्।
तपस्तप्त्वा तपोयोगाद्विरक्तः संन्यसेद्बहिः॥
वानप्रस्थाश्रमं गत्वा न गृहं प्रविशेत्पुनः।
न संन्यासी वनं चाथ ब्रह्मचर्यं च साधकः॥
प्राजापत्यां निरुप्येष्टिमाग्नेयीमथवा द्विजः।
प्रव्रजेत्तु गृही विद्वान् वनाद्वा श्रुतिचोदनात्॥
प्रकर्तुमसमर्थोऽपि जुहोतियजतिक्रियाः।
अन्धः पङ्गुर्दरिद्रो वा विरक्तः संन्यसेद्द्विजः॥
सर्वेषामेव वैराग्यं संन्यासे तु विधीयते।
पतत्येवाविरक्तो यः संन्यासं कर्तुमिच्छति॥
एकस्मिन्नथवा सम्यग्वर्तेताऽऽमरणान्तिकम्।
श्रद्धावानाश्रमे युक्तः सोऽमृतत्वाय कल्पते॥
एतद्वः कथितं सर्वं चातुराश्रम्यमुत्तमम्।
न ह्येतत्समतिक्रम्य सिद्धिं विन्दति मानवः॥

(१) कूर्म. १।३।२-१२, २८.

आश्रमकालमर्यादाः, वानप्रस्थ्यप्रशंसा, वैराग्यं संन्यासहेतुः, संन्यासावान्तरभेदाः सलक्षणाः

[1]वेदं वेदौ तथा वेदान्साङ्गांश्च चतुरो द्विजः।
अधीत्य चाधिगम्यार्थं ततः स्नायाद्द्विजोत्तमाः॥

(१) एतद्वचनमर्थावगमपर्यन्तं वेदाध्ययनं द्विजस्यैव दर्शयति, न शूद्रस्य। अर्थावगमश्च निगमनिरुक्त – व्याकरणस्मृतिशास्त्रपुराणादिभिर्भवति, नान्यथा।
स्मृकौ. ४८

(२) अर्थम् अधीतानां वेदानाम्। तथा च स्मृत्यन्तरम् – 'वेदमधीत्य छन्दोविषयार्थान्बुद्ध्वा स्नायात्' इति। संप्र. ५६५

(३) वेदानिति त्रित्वाभिप्रायम्। उक्तश्चार्थज्ञानं विनाऽध्ययनमात्रेण समावर्तनाधिकाराभावः प्रथमसूत्र एव जैमिन्यादिभिः। अतश्च विद्यास्नातकोभयस्नातकयोरुभयोरपि स्नानात्पूर्वं वेदार्थज्ञानमावश्यकमिति सिद्धम्।
संकौ. १६५

(४) प्रथमं वेदानितिवचनं चतुष्ट्वाभिप्रायम्, द्वितीयं त्रित्वाभिप्रायम्। अर्थमधिगम्य अर्थं ज्ञात्वेत्यर्थः।
संर. ३६९

[2]एवं गृहाश्रमे स्थित्वा द्वितीयं भागमायुषः।
वानप्रस्थाश्रमं गच्छेत्सदारः साग्निरेव वा॥
निक्षिप्य भार्यां पुत्रेषु गच्छेद्वनमथापि वा।
दृष्ट्वाऽपत्यस्य चापत्यं जर्जरीकृतविग्रहः॥
8 [3]यस्तु सम्यगिममाश्रमं शिवं
संश्रयत्यशिवपुञ्जनाशनम्।

8 वानप्रस्थाश्रमविषयमेतत्।

(१) कूर्म. २।१५।१ साङ्गांश्च (विन्द्याद्वा) द्विजः (द्विजाः) चाधि (चाभि); पमा. १।४६१ साङ्गांश्च (वेदान्वा) त्तमाः (त्तमः); स्मृकौ. ४८; शूशि. ४३ स्नायाद्द्विजोत्तमाः (स्नायी द्विजोत्तमः); चमव्या. ६५ याद्द्विजोत्तमाः (याद्यथाविधि); संम. ४३ साङ्गांश्च (वेदान्वा) त्तमाः (त्तम); संप्र. ५६४ पमावत्; संकौ. १६५ पमावत्; बाल. १।१२१ पृ. ३७९ त्तमाः (त्तमः); संर. ३६९ पूर्वार्धे (वेदान्वेदांस्तथा वेदौ वेदं वाऽपि समाहितः।) त्तमाः (त्तमः).

(२) कूर्म. २।२७।१-२.

(३) कूर्म. २।२७।३९ यस्तु (येन) श्रयत्य (श्रयन्त्य) उत्तरार्धे (ते विशन्ति पदमैश्वरं पदं यान्ति यत्र गतमस्य संस्थितेः); पमा. १।५३०.

तापहन्तृपदमैश्वरं परं
याति यत्र जगतोऽस्य संस्थितिः॥

[1]एवं वनाश्रमे स्थित्वा तृतीयं भागमायुषः।
चतुर्थमायुषो भागं संन्यासेन नयेत्क्रमात्॥
[2]अग्नीनात्मनि संस्थाप्य द्विजः प्रव्रजितो भवेत्।
योगाभ्यासरतः शान्तो ब्रह्मविद्यापरायणः॥
[3]यदा मनसि संजातं वैतृष्ण्यं सर्ववस्तुषु।
तदा संन्यासमिच्छन्ति पतितः स्याद्विपर्यये॥
[4]प्राजापत्यां निरुप्येष्टिमाग्नेयीमथवा पुनः।
दान्तः पक्वकषायोऽसौ ब्रह्माश्रममुपाश्रयेत्॥
[5]ज्ञानसंन्यासिनः केचिद्वेदसंन्यासिनः परे।
कर्मसंन्यासिनस्त्वन्ये विविधाः परिकीर्तिताः॥
यः सर्वसङ्गनिर्मुक्तो निर्द्वन्द्वश्चैव निर्भयः।
प्रोच्यते ज्ञानसंन्यासी स्वात्मन्येव व्यवस्थितः॥
वेदमेवाभ्यसेन्नित्यं निर्द्वन्द्वो निष्परिग्रहः।
प्रोच्यते वेदसंन्यासी मुमुक्षुर्विजितेन्द्रियः॥
यस्त्वग्नीनात्मसात्कृत्वा ब्रह्मार्पणपरो द्विजः।
स ज्ञेयः कर्मसंन्यासी महायज्ञपरायणः॥
त्रयाणामपि चैतेषां ज्ञानी त्वभ्यधिको मतः।
न तस्य विद्यते कार्यं न लिङ्गं वा विपश्चितः॥
एकवासा द्विवासा वा शिखी यज्ञोपवीतवान्।
कमण्डलुकरो विद्वांस्त्रिदण्डी याति तत्परम्॥

## भविष्यपुराणम्

ब्रह्मचर्यावधिः, आश्रमचतुष्टयम्, ब्रह्मचर्य-
चातुर्विध्यम्, गार्हस्थ्यप्रशंसा

[6]षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैवेदिकं व्रतम्।
तदर्धिकं पादिकं वा ग्रहणान्तिकमेव च॥
वेदानधीत्य वेदौ वा वेदं वाऽपि नृपोत्तम।
अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेत्॥
[7]ब्रह्मचारी गृहस्थश्च वनस्थो भिक्षुरेव च।
चत्वार आश्रमाः प्रोक्ता एक एव चतुर्विधः॥

(१) कूर्म. २।२८।१.
(२) कूर्म. २।२८।२; पमा. १।५३५.
(३) कूर्म. २।२८।३.
(४) कूर्म. २।२८।४; पमा. १।५३६ दान्तः (अन्तः).
(५) कूर्म. २।२८।५-९, ३१.
(६) भविष्य. १।५।१-२.
(७) भविष्य. १।१८२।२-३, १७-२०.

गायत्रो ब्रह्मचारी तु प्राजापत्यो द्वितीयकः।
देवव्रतस्तृतीयस्तु नैष्ठिकस्तु चतुर्थकः॥
ज्ञात्वा वेदं ब्रह्मचारी ग्रन्थार्थान्यान्यथाविधि।
विद्यान्तेऽभीष्टदानं च अनुज्ञातो गृही भवेत्॥
निष्कासनं गुरुगृहाद्गृहस्थश्च ततो भवेत्।
नैष्ठिकश्च सदा स्थानं कुर्यात्सम्यग्यथाविधि॥
उद्वहेद्वै ततो भार्यां सवर्णां लक्षणान्विताम्।
अविप्लुतब्रह्मचर्यश्चाधिकारी खगोत्तम।
स्वतन्त्रमन्यमि(?न्ये चे)च्छन्ति अधिकारं द्विजोत्तमाः॥
[1]त्रयाणामाश्रमाणां च गृहस्थो योनिरुच्यते।
अन्येऽपि सूपजीवन्ति तस्माच्छ्रेष्ठो गृहाश्रमी॥
एकाश्रमं गृहस्थस्य त्रयाणां सूतिदर्शनम्।
तस्माद्गार्हस्थ्यमेवैकं विज्ञेयं धर्मशासनम्॥

आश्रमिणां फलानि

अष्टाशीतिसहस्त्राणां मुनीनामूर्ध्वरेतसाम्।
स्मृतं स्थानं तु यत्स्थानं तदेव गुरुवासिनाम्॥
सप्तर्षीणां तु यत्स्थानं श्रुतं तद्वै वनौकसाम्।
प्राजापत्यं गृहस्थानां स्थानमुक्तं स्वयंभुवा॥
यतीनां यतचित्तानां तदेव वनवासिनाम्।
हिरण्यगर्भं यत्स्थानं तस्मान्नाऽऽवर्तते पुनः॥
योगिनाममृतं स्थानं व्योमाख्यं परमाकरम्।
आनन्दमैश्वरं नाम सा काष्ठा परमा गतिः॥

गार्हस्थ्यादीनां त्रयाणां क्रमेण शाक्तत्व-
वैष्णवत्वरौद्रत्वानि, ब्रह्मचर्यस्य
तदनुगामित्वम्

[2]शाक्तः सदाश्रमो गेही यज्ञभुक्पितृदेवगः।
वानप्रस्थाश्रमी यो वै वैष्णवः कन्दमूलभुक्॥
यत्याश्रमः सदा रौद्रो निर्गुणः शुद्धविग्रहः।
ब्रह्मचर्याश्रमस्तेषामनुगामी महाश्रमः॥

आश्रमविकल्पः

[3]गृहीतविद्यो गुरवे दत्त्वा च गुरुदक्षिणाम्।
गार्हस्थ्यमिच्छन् भूपाल कुर्याद्दारपरिग्रहम्॥

(१) भविष्य. २।१।१।१५-१६, ३६-४०.
(२) भविष्य. ३।४।२०।७-८.
(३) स्मृच. १।१७५ उत्त.; चका. ७८४ उत्त. वामनपुराणे; पमा. १।४६० उत्त.; चमव्या. ४८ उत्त.; मुक्ता. १७२ विष्णुपुराणे भविष्यत्पुराणेऽपि; संम. ४३ उत्त.; संप्र. ५६३ उत्त.; बाल. १।५० पृ. १६८ उत्त.

[१]ब्रह्मचर्येण वा कालं नयेत्संकल्पपूर्वकम्।
वैखानसो वाऽपि भवेत्परिव्राडथवेच्छया॥

## नारदपुराणम्

संन्यासप्रशंसा, त्रैवर्णिकानां चातुरा-
श्रम्याधिकारः, आश्रम-
कालावधयः

[२]यतीनां निन्दनं चैव स्वर्णस्तेयसमं स्मृतम्॥
[३]ब्राह्मणक्षत्रियविशां त्रयाणां मुनिसत्तम।
चत्वार आश्रमाः प्रोक्ताः पञ्चमो नोपपद्यते॥
ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्च सत्तम।
चतुर्भिराश्रमैरेभिः साध्यते धर्म उत्तमः॥
[४]वेदग्रहणपर्यन्तं शुश्रूषानियतो गुरोः।
अनुज्ञातस्ततस्तेन कुर्यादग्निपरिग्रहम्॥
वेदाश्च धर्मशास्त्राणि वेदाङ्गान्यपि च द्विजः।
अधीत्य गुरवे दत्त्वा दक्षिणां संविशेद्गृहम्॥
[५]दूषितां स्वतनुं दृष्ट्वा पलिताद्यैश्च सत्तम।
पुत्रेषु भार्यां निःक्षिप्य वनं गच्छेत्सहैव वा॥
यदा मनसि वैराग्यं जातं सर्वेषु वस्तुषु।
तदैव संन्यसेद्विप्र पतितस्त्वन्यथा भवेत्॥

चत्वार आश्रमास्तेषामुत्पत्तिश्च, गार्हस्थ्य-
प्रशंसा, संन्यासप्रशंसा

[६]पूर्वमेव भगवता ब्रह्मणा लोकितमनुतिष्ठता धर्मसंरक्षणार्थमाश्रमाश्चत्वारोऽभिनिर्दिष्टाः॥
तत्र गुरुकुलवासमेव प्रथममाश्रममाहरन्ति॥
गार्हस्थ्यं खलु द्वितीयमाश्रमं वदन्ति॥
समावृत्तानां सदाचाराणां सहधर्मचर्यफलार्थिनां गृहाश्रमो विधीयते॥
धर्मार्थकामावाप्तिर्ह्यत्र॥
तद्धि सर्वाश्रमाणां मूलमुदाहरन्ति॥

मोक्षाश्रमं यश्चरते यथोक्तं
शुचिः स्वसंकल्पितयुक्तबुद्धिः।
अनिन्धनं ज्योतिरिव प्रशान्तं
स ब्रह्मलोकं श्रयते द्विजातिः॥

## अग्निपुराणम्

वैराग्यं संन्यासहेतुः, आश्रमकालावधिः,
संन्यासावान्तरभेदाः सर्वे
ते योगयुक्ता मोक्ष-
हेतवश्च

[१]एवमेवाधिकारस्थो गृही कर्माण्यतन्द्रितः।
आत्मानं शोधयंस्तिष्ठेद्यावद्रागक्षयो भवेत्॥
क्षीणरागमथाऽऽत्मानं ज्ञात्वा संशुद्धकिल्बिषः।
आरोप्य पुत्रे शिष्ये वा ह्यधिकारं तु संयमी॥
दग्ध्वा मायामयं पाशं प्रव्रज्य स्वात्मनि स्थितः।
शरीरपातमाकाङ्क्षन्नासीताव्यक्तलिङ्गवान्॥
[२]वेदस्वीकरणं कृत्वा स्नायाद्वै दत्तदक्षिणः।
नैष्ठिको ब्रह्मचारी वाऽऽदेहान्तं निवसेद्गुरौ॥
[३]गृही ह्यपत्यापत्यं च दृष्ट्वाऽरण्यं समाश्रयेत्।
तृतीयमायुषो भागमेकाकी वा सभार्यकः॥
[४]चतुर्थमायुषो भागं प्राप्य सङ्गात्परिव्रजेत्।
यदह्नि विरजेद्धीरस्तदह्नि च परिव्रजेत्॥
चतुर्विधं(?धा) भै(?भि)क्षवस्तु कुटीचकबहूदकौ।
हंसः परमहंसश्च यो यः पश्चात्स उत्तमः।
एकदण्डी त्रिदण्डी वा योगी मुच्येत बन्धनात्॥

## देवीभागवतम्

गार्हस्थ्यप्रशंसा, आश्रमसमुच्चयस्यैव
श्रेयस्त्वोपपादनम्, वानप्रस्थ्ये
भार्याराहित्यम्

व्यास उवाच –
[५]न गृहं बन्धनागारं बन्धने न च कारणम्।
मनसा यो विनिर्मुक्तो गृहस्थोऽपि विमुच्यते॥

(१) स्मृच. ११७५; चका. ७८४ वाऽपि (वाऽथ) वामनपुराणे; पमा. ११४६०; चमव्या. ४८; मुक्ता. १७२ विष्णुपुराणे भविष्यत्पुराणेऽपि; संम. ४३; संप्र. ५६३ वेच्छया (वा भवेत्); बाल. ११५० पृ. १६८.
(२) नारद. ११५।३९.
(३) नारद. ११२४।३२-३४.
(४) नारद. ११२६।१-२.
(५) नारद. ११२७।८५, ९१-९२.
(६) नारद. ११४३।१०५-१०६, १०७, १०८, १०९, ११०, १२७.

(१) अग्नि. २७।७९-८१.
(२) अग्नि. १५३।१६.
(३) अग्नि. १६०।३-४.
(४) अग्नि. १६१।१-२, १८-१९.
(५) देवीभा. १११४।५५-६५.

व्यासः तु 'कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान्विदधत्' (छाउ. ८।१५।१) इत्यादिच्छान्दोग्यश्रुतिमनुसृत्य गृहस्थाश्रमं श्रेष्ठत्वेन कथयति – न गृहं बन्धनागारमिति। नहि जडं गृहं पुरुषं बध्नाति न चान्यद्बन्धने कारणमस्ति किंतु मनस आसक्तिमात्रं कारणम्, तां विहाय संसारं कुर्वाणो मुच्यत एवेत्यर्थः। तिलक.

**न्यायागतधनः कुर्वन् वेदोक्तं विधिवत्क्रमात्।**
**गृहस्थोऽपि विमुच्येत श्राद्धकृत्सत्यवाक्छुचिः॥**
**ब्रह्मचारी यतिश्चैव वानप्रस्थो व्रतस्थितः।**
**गृहस्थं समुपासन्ते मध्याह्नातिक्रमे सदा॥**

ब्रह्मचारीति। गृहस्थाश्रमे वसंस्तेभ्यो भैक्ष्यं दत्त्वा तत्पुण्यभागी भवतीत्यर्थः। तिलक.

**श्रद्धया चान्नदानेन वाचा सुनृतया तथा।**
**उपकुर्वन्ति धर्मस्था गृहाश्रमनिवासिनः॥**

उपकुर्वन्तीति। पुण्या(?अन्ना)दिदानेनेत्यर्थः। तिलक.

**गृहाश्रमात्परो धर्मो न दृष्टो न च वै श्रुतः।**
**वसिष्ठादिभिराचार्यैर्ज्ञानिभिः समुपाश्रितः॥**
**किमसाध्यं महाभाग वेदोक्तानि च कुर्वतः।**
**स्वर्गं मोक्षं च सज्जन्म यद्यद्वाञ्छति तद्भवेत्॥**
**आश्रमादाश्रमं गच्छेदिति धर्मविदो विदुः।**
**तस्मादग्निं समाधाय कुरु कर्माण्यतन्द्रितः॥**
**देवान्पितॄन्मनुष्यांश्च संतर्प्य विधिवत्सुत।**
**पुत्रमुत्पाद्य धर्मज्ञ संयोज्य च गृहाश्रमे॥**
**त्यक्त्वा गृहं वनं गत्वा कर्तासि व्रतमुत्तमम्।**
**वानप्रस्थाश्रमं कृत्वा संन्यासं च ततः परम्॥**
**इन्द्रियाणि महाभाग मादकानि सुनिश्चितम्।**
**अदारस्य दुरन्तानि पञ्चैव मनसा सह॥**
**तस्माद्दारान्प्रकुर्वीत तज्जयाय महामते।**
**वार्धके तप आतिष्ठेदिति शास्त्रोदितं वचः॥**
**'सर्वेषामाश्रमाणां च गृहस्थाश्रम उत्तमः॥**

**जनक उवाच –**

**शृणु विप्रेण कर्तव्यं मोक्षमार्गाश्रितेन यत्।**
**उपनीतो वसेदादौ वेदाभ्यासाय वै गुरौ॥**
**अधीत्य वेदवेदान्तान् दत्त्वा च गुरुदक्षिणाम्।**
**समावृत्तस्तु गार्हस्थ्ये सदारो निवसेन्मुनिः॥**
**न्याय्यवृत्तिस्तु संतोषी निराशो गतकल्मषः।**
**अग्निहोत्रादिकर्माणि कुर्वाणः सत्यवाक्छुचिः॥**

नान्य(?न्याय)वृत्तिः नान्यप्राप्तयजन(?न्यायप्राप्त)याजनादिवृत्तिः। तिलक.

**पुत्रं पौत्रं समासाद्य वानप्रस्थाश्रमे वसेत्।**
**तपसा षड्रिपूञ्जित्वा भार्यां पुत्रे निवेश्य च॥**
**सर्वानग्नीन्यथान्यायमात्मन्यारोप्य धर्मवित्।**
**वसेत्तुर्याश्रमे श्रान्तः शुद्धे वैराग्यसंभवे॥**
**विरक्तस्याधिकारोऽस्ति संन्यासे नान्यथा क्वचित्।**
**वेदवाक्यमिदं तथ्यं नान्यथेति मतिर्मम॥**
**आश्रमादाश्रमं गच्छेदिति शिष्टानुशासनम्॥**

**श्रीशुक उवाच –**

**उत्पन्ने हृदि वैराग्ये ज्ञानविज्ञानसंभवे।**
**अवश्यमेव वस्तव्यमाश्रमेषु वनेषु वा॥**

शुकस्तु स्वाभिप्रेतं मुख्यं पृच्छति – उत्पन्न इति। हृदि बुद्धौ वैराग्ये उत्पन्ने ज्ञानं परोक्षज्ञानं विज्ञानम् अपरोक्षज्ञानं तयोः संभवे प्राप्तौ सत्यां किमवश्यमाश्रमेषु गृहस्थाश्रमादिषु एव वस्तव्यमाहोस्विद्वनेषु वा वस्तव्यमित्यर्थः। अयं भावः – मम श्रीदेवीभागवतश्रवणेन अनुभवस्तु जातस्ततस्तस्यैव परिशीलनार्थं गृहस्थाश्रमे विक्षेपबाहुल्याद्वैराग्यातिशयेन चित्तं वनं गन्तुमुत्सुकं भवति। पितुस्तु मतं गृहस्थाश्रमे एव प्रथमतः परिशीलनं कृत्वा पश्चाद्वानप्रस्थाश्रमं कृत्वा पश्चात्संन्यासं कृत्वा वनं गन्तव्यमिति तन्निर्णयार्थम् अहमत्राऽऽगतोऽस्मि ततस्तन्निर्णयं वदेति। तिलक.

**जनक उवाच –**

**इन्द्रियाणि बलिष्ठानि न नियुक्तानि मानद।**
**अपक्वस्य प्रकुर्वन्ति विकारांस्ताननेकशः॥**

जनकस्तु क्रमेणाऽऽश्रमादाश्रमान्तरं गच्छेन्न सहसेति व्यासपक्षमेवानुभवोपपत्तिभ्यां स्थापयति – इन्द्रियाणीति। बलिष्ठानीति। अपक्वदशायां कोमलवैराग्येण यद्यपीन्द्रियजयो जात इति प्रतिभाति तथापि न तत्र विश्वास आस्थेयः, कालान्तरे तस्यैव पुरुषस्य वासना-

(१) देवीभा. १।१८।६, १५-२०, २२-३०.

वशादन्यथा व्यवहारस्य दृश्यमानत्वादिति भावः। तिलक.

**भोजनेच्छां सुखेच्छां च शय्येच्छामात्मजस्य च।**
**यती भूत्वा कथं कुर्याद्विकारे समुपस्थिते॥**

विकारे समुपस्थित इति। वासनावशादिति भावः। आत्मजस्य च पुत्रस्य चेच्छामिति शेषः। तिलक.

**दुर्जरं वासनाजालं न शान्तिमुपयाति वै।**
**अतस्तच्छमनार्थाय क्रमेण च परित्यजेत्॥**

अतः आश्रमक्रम आस्थेयः पक्ववैराग्यपर्यन्तमित्याह – दुर्जरमिति। तिलक.

**ऊर्ध्वं सुप्तः पतत्येव न शयानः पतत्यधः।**
**परिव्रज्य परिभ्रष्टो न मार्गं लभते पुनः॥**

तदतिक्रमे दोषमाह – ऊर्ध्वं सुप्त इति। ननु कदाचिदिन्द्रियप्राबल्यात्संन्यासस्यैवंरीत्या भ्रंशेऽपि पुनः प्रायश्चित्तादिना शुद्धिर्भविष्यति। यदि तु भ्रंशो न स्यात्तर्हि कृतार्थतैवेति चेत्तत्राऽऽह – परिव्रज्येति। प्रायश्चित्ताद्यभावादिति भावः। तिलक.

**यथा पिपीलिका मूलाच्छाखायामधिरोहति।**
**शनैः शनैः फलं याति सुखेन पदगामिनी॥**

तस्मात्संन्यासे त्वरा न विधेयेत्याह – यथा पिपीलिकेति। तिलक.

**विहंगस्तरसा याति विघ्नशङ्कामुदस्य वै।**
**श्रान्तो भवति विश्रम्य सुखं याति पिपीलिका॥**

विहंग इति। विघ्नशङ्कामुदस्य विहंगो याति, परंतु श्रान्तो भवति त्वरया गमनात्। तिलक.

**मनस्तु प्रबलं काममजेयमकृतात्मभिः।**
**अतः क्रमेण जेतव्यमाश्रमानुक्रमेण च॥**

## शिवपुराणम्

गार्हस्थ्यप्रशंसा, आश्रमसमुच्चयः

[1]**आ सप्ततेस्तु +नियमं पश्चात्प्रव्राजनं चरेत्॥**

[2]**देवैः पितृमनुष्यैश्च प्रेतैर्भूतैः सगुह्यकैः।**
**वयोभिः कृमिकीटैश्च गृहस्थश्चोपजीव्यते॥**

+ गायत्रीजपस्य (पूर्वोक्तं) नियमं समाचरेत् इत्यर्थः।

(१) **शिव.** १।१३।४७.

(२) **शिव.** ५।१०।४१-४२.

[1]**ब्रह्मचर्येण मुनयो देवा यज्ञक्रियाध्वना।**
**पितरः प्रजया तृप्ता इति हि श्रुतिरब्रवीत्॥**
**एवं ऋणत्रयान्मुक्तो वानप्रस्थाश्रमं गतः।**
**शीतोष्णसुखदुःखादिसहिष्णुर्विजितेन्द्रियः॥**
**तपस्वी विजिताहारो यमाद्यं योगमभ्यसेत्।**
**यथा दृढतरा बुद्धिरविचाल्या भवेत्तथा॥**
**एवं क्रमेण शुद्धात्मा सर्वकर्माणि विन्यसेत्।**
**संन्यस्य सर्वकर्माणि ज्ञानपूजापरो भवेत्॥**
**सा हि साक्षाच्छिवैक्येन जीवन्मुक्तिफलप्रदा।**
**सर्वोत्तमा हि विज्ञेया निर्विकारा यतात्मनाम्॥**

## नरसिंहपुराणम्

विरक्ताविरक्तविषयौ आश्रमविकल्पसमुच्चयौ, नैष्ठिकस्याऽऽश्रमान्तरनिषेधः, नैष्ठिकत्वप्रशंसा, आश्रमकालमर्यादाः

[2]**अधीत्य चतुरो वेदान् वेदौ वेदमथापि वा।**
**गुरवे दक्षिणां दत्त्वा तदा स्वस्येच्छया वसेत्॥**

यस्य पुनर्दक्षिणादानसामर्थ्यं नास्ति तस्य तदनुज्ञायां स्नानम्। तथा च गौतमः – "विद्यान्ते गुरुरर्थेन निमन्त्र्यः। कृत्वाऽनुज्ञातस्य वा स्नानम्' (गौध. २।५५-५६) इति। $स्मृच. १।१७८-१७९

[3]**विरक्तः प्रव्रजेद्विद्वान् संरक्तस्तु गृही भवेत्।**
**सरागो नरकं याति प्रव्रजन् हि ध्रुवं द्विजः॥**

[4]**यस्यैतानि सुशुद्धानि जिह्वोपस्थोदरं गिरः।**
**संन्यसेदकृतोद्वाहो ब्राह्मणो ब्रह्मचर्यवान्॥**

$ संप्र. स्मृचवत्।

(१) **शिव.** ६।१२।२६-३०.

(२) **नरसिंह.** ५८।३४; **स्मृच.** १।१७८ चतुर्थचरणे (स यमिच्छेत्तमावसेत्) उत्त.; **संप्र.** ५६६, ५६७ स्मृचवत्; **आन.** ४८७ चतुर्थचरणे (यमिच्छेत्तं तमावसेत्) उत्त., स्मरणम्.

(३) **नरसिंह.** ५८।३५; **मुक्ता.** १७३ द्विद्वान् (द्धीमान्) गृही भवेत् (गृहे वसेत्) ध्रुवं द्विजः (द्विजाधमः) हारीतः; **संप्र.** ५६६ द्वितीयचरणे (सरागस्तु गृहे वसेत्) पू.

(४) **नरसिंह.** ५८।३६; **अप.** ३।५५-५६ पृ. ९५१ शुद्धानि (गुप्तानि) गिरः (शिरः) ब्रह्म (भैक्ष); **मोक.** ३२ शुद्धानि (गुप्तानि); **पमा.** १।५३१ शुद्धानि (गुप्तानि) गिरः (शिरः) संन्यसे (स न्यसे); **मर.** ६१४ शुद्धानि (गुप्तानि) गिरः (शिरः); **मुक्ता.** १२० (यस्यैतानि सुगुप्तानि जिह्वोपस्थोदरं करः। संन्याससमयं कृत्वा ब्राह्मणो ब्रह्मचर्यया॥) हारीतः.

(१) अकृतोद्वाहस्य संन्यासो नृसिंहपुराणे दर्शितः — यस्यैतेति। पमा. १।५३१

(२) सत्यां दृढविरक्तौ ब्रह्मचर्याश्रमादपि यत्याश्रमः स्वीकार्य इत्युक्तं नृसिंहपुराणे — यस्येति। शिरःपदेन नेत्रादीन्द्रियाण्युपलक्ष्यन्ते। मर. ६१४

**[१]तस्मिन्नेव नयेत्कालमाचार्ये यावदायुषम्।**
**तदभावे च तत्पुत्रे तच्छिष्ये वाऽथवा कुले।**
**न विवाहो न संन्यासो नैष्ठिकस्य विधीयते॥**
**[२]एवं यो विधिमास्थाय त्यजेद्देहमतन्द्रितः।**
**नेह भूयः प्रजायेत ब्रह्मचारी दृढव्रतः॥**
**[३]यो ब्रह्मचारी विधिमेतमास्थित-**
**श्चरेत्पृथिव्यां गुरुसेवने रतः।**
**संप्राप्य विद्यामतिदुर्लभां शुभां**
**फलं च तस्याः सकलं हि विन्दति॥**
**[४]गृहस्थः पुत्रपौत्रादीन् दृष्ट्वा पलितमात्मनः।**
**स्वभार्यां तनये स्थाप्य स्वशिष्यैः प्रविशेद्वनम्॥**
**[५]एवं वनाश्रमे तिष्ठंस्तपसा दग्धकिल्बिषः।**
**चतुर्थमाश्रमं गच्छेत् संन्यस्य विधिना द्विजः॥**

अनाश्रमित्वनिषेधः, वैराग्यं संन्यासहेतुः, संन्यासपदार्थः, संन्यासप्रशंसा

**+[६]अनाश्रमित्वं गृहभङ्गकारण-**
**मतो गृहाणाऽऽश्रममुत्तमं मुने।**
**अनाश्रमिभिर्द्विजैर्वेदपारगै-**
**रपि त्वहं नानुगृह्णामि चार्चनाम्॥**

+ अस्य वचनस्य निपव्याख्यानं 'गृहस्थसामान्यधर्माः' इति गृहस्थधर्मावान्तरप्रकरणे 'महर्षिपितृ॰' इति मनुवचने द्रष्टव्यम्।

(१) आदर्शान्तरे ५८।३६ परं पाठः; मुक्ता. १२० हारीतः.

(२) नरसिंह. ५८।३७ द्वितीयचरणे (नयेत्कालमतन्द्रितः) नेह (तेन); मुक्ता. १२० एवं (इमं) यः प्रजा (योऽभिजा) हारीतः.

(३) नरसिंह. ५८।३८ तश्च (तं च) मतिदु (मपि दु) शुभां (तां) च (हि); मुक्ता. १२० मेतमास्थि (ना समाहि) सकलं हि (सुलभं तु) हारीतः.

(४) नरसिंह. ५९।२; मुक्ता. १६९ पौत्रादीन् (पौत्रादि) उत्तरार्धे (भार्यां पुत्रेषु संस्थाप्य सह वा प्रविशेद्वनम्॥) हारीतः.

(५) नरसिंह. ६०।२; मुक्ता. १७१ संन्यस्य वि (संन्यासवि) हारीतः.

(६) निप. ३८५.

**[१]अगारादभिनिष्क्रान्तः पवित्रोपचितो मुनिः।**
**समुपोढेषु कामेषु निरपेक्षः परिव्रजेत्॥**
**रागादिविषयासङ्गपुत्रदारशुभाशुभम्।**
**लोकयात्राभयं चैव त्यक्तं संन्यास उच्यते॥**
**[२]वेश्मदारसुतक्षेत्रं संन्यस्तं येन दुःखदम्।**
**वैराग्यज्ञानपूर्वं वै लोकेऽस्मिन्नास्ति तत्समः॥**
**[३]हृत्पुण्डरीकनिलये ध्यात्वाऽऽत्मानमकल्मषम्।**
**यतिर्धर्मरतः शान्तः सर्वभूतसमो वशी।**
**प्राप्नोति परमं स्थानं यत्प्राप्य न निवर्तते॥**

## सौरपुराणम्

आश्रमाश्चत्वारः, सर्वेष्वाश्रमेषु दण्डधारणम्, आश्रमकालमर्यादाः, संन्यासस्य पापनिवर्तकत्वं मोक्षहेतुत्वं च

**[४]गृहस्थो ब्रह्मचारी च वानप्रस्थो यतिस्तथा।**
**चत्वारश्चाऽऽश्रमास्तेषां पञ्चमो नोपपद्यते॥**
**सर्वेषामाश्रमाणां च विहितं दण्डधारणम्।**
**न दण्डेन विना कश्चिदाश्रमीति निगद्यते॥**
**वेदं वेदौ तथा वेदान्वेदांश्च चतुरो द्विजाः।**
**अधीत्य गुरवे दत्त्वा दक्षिणां च भवेद्गृही॥**
**[५]शरीरमात्मनो दृष्ट्वा पलिताद्यैश्च दूषितम्।**
**पुत्रेषु भार्यां निक्षिप्य वनं गच्छेद्द्विजोत्तमः॥**
**यदा मनसि वैराग्यं जायते सर्ववस्तुषु।**
**तदा च संन्यसेद्विद्वानन्यथा पतितो भवेत्॥**
**द्विजः संन्यसनादेव पापेभ्यः संप्रमुच्यते।**
**ज्ञानी मोक्षमवाप्नोति विराट्पदमखे रतः॥**
**इति सर्वमशेषेण चातुराश्रम्यमीरितम्।**
**योऽनुतिष्ठेत्प्रयत्नेन तस्य शंभुः प्रसीदति॥**
**[६]वेदाभ्यासरतः शान्तो भस्मनिष्ठो जितेन्द्रियः।**
**संन्यासविधिमाश्रित्य सुशीलो मुक्तिमान्भवेत्॥**

(१) अप. ३।५५-५६ पृ. ९५१.

(२) अप. ३।५५-५६ पृ. ९५१; मोक. ३२.

(३) अप. ३।५९ पृ.९६५; मोक. ६१ यतिर्ध (यतिध); पमा. १।५६३; मर. ६३१ मोकवत्.

(४) सौर. १७।६-७, ४०.

(५) सौर. २०।२, १०-११, २१-२२.

(६) सौर. २७।३०.

## पराशरपुराणम्

नित्यकर्मपापक्षयचित्तशुद्धिसंसारदोषदृष्टि-
वैराग्यसंन्यासेषु पूर्वपूर्वमुत्तरोत्तरहेतुः,
तीव्रतीव्रतररूपयोर्वैराग्यविधयो-
श्चतुर्विधसंन्यासेषु
व्यवस्थया
हेतुत्वम्

[1]नित्यानुष्ठानतः क्षीणमहापापमलस्य तु।
चित्तशुद्धिर्भवेच्छुद्ध्या दोषदृष्टिस्तु संसृतेः॥
संसारदोषदृष्ट्यैव विरक्तिर्जायते द्विज॥
विरक्तस्यैव संसारात् संन्यासः स्यान्न संशयः।
विरक्तिर्द्विविधा प्रोक्ता तीव्रा तीव्रतरेति च॥
सत्यामेव तु तीव्रायां न्यसेद्योगी कुटीचके।
शक्तौ बहूदके तीव्रतरायां हंससंज्ञके॥
मुमुक्षुः परमे हंसे साक्षाद्विज्ञानसाधने॥

## मुद्गलपुराणम्

महादेवावयवेभ्य आश्रमोत्पत्तिः, आश्रमक्रम-
समुच्चयप्रशंसा, आश्रमचतुष्टयस्य वर्ण-
भेदेन व्यवस्था, चित्तशुद्ध्यशुद्धिभ्या-
माश्रमविकल्पसमुच्चय-
व्यवस्था

+[2]संन्यासं शिरसस्तद्वद्वानप्रस्थाश्रमं हृदः।
नाभ्याश्च ब्रह्मचर्यं स जङ्घाभ्यां गृहितां तथा॥
[3]प्रथमं ब्रह्मचर्यं च ततो गार्हस्थ्यमञ्जसा॥
ततो वनाश्रमः प्रोक्तस्ततः संन्यास आदरात्।
क्रमेण सेविता एते तदा योगः सुसिध्यति॥
अन्यथा सहसा कृत्वा योगभ्रष्टो नरो भवेत्।
अथवा भ्रष्टभावेन नारकी धर्मनाशतः॥
[4]ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा।
आश्रमैर्हीनरूपश्चाδऽऽश्रमं पञ्चकमुच्यते॥

+ महादेवः ससर्जेति पूर्वोपक्रान्तम्।
δ आश्रमसंबन्धिनः पञ्च प्रकारा इत्यर्थः।
(१) पराशर. ९।७८-८२.
(२) मुद्गल. २।४।२-३.
(३) मुद्गल. २।३५।४-६.
(४) मुद्गल. २।६९।२०.

[1]ब्रह्मचर्यं च गार्हस्थ्यं वानप्रस्थ्यं तथैव च।
प्रोक्ता वेदेषु संन्यास आश्रमा वेदवादिभिः॥
ब्राह्मणानां क्रमेणैते मताश्चत्वार आश्रमाः।
क्षत्रियाणां च वैश्यानां संन्यासो न प्रविद्यते॥
गार्हस्थ्यमेव शूद्राणामाश्रमः परिकीर्तितः।
अन्त्यजानां तदेवापि ज्ञातव्यं विबुधैः सदा॥
ब्रह्मचारी महाभागो वेदाध्ययनतत्परः।
वर्षाणि द्वादशैवायं षोडशाप्यथवा द्विजः॥
अथवेच्छाप्रमाणेन ब्रह्मचर्यं समाचरेत्।
वेदादिकं समभ्यस्य कृत्वा कण्ठगमादरात्।
पश्चाद्गुरुं समभ्यर्च्य दद्यात्तस्मै स दक्षिणाम्॥
मनो विषयसंयुक्तं यदा तत्र गृही भवेत्।
नो चेत् संन्यासकं कुर्यादथवा वनगो भवेत्॥
अथवा ब्रह्मचर्यस्थः सदा तिष्ठेद्द्विजोत्तमः।
यादृशी चित्तशुद्धिर्वै तादृशं सर्वमाचरेत्॥

ब्रह्मचर्याश्रमं साधयित्वा यादृशी चित्तशुद्धिः तादृशाश्रमस्थो भवेत्। योगपरायणं ब्राह्मणजन्म चेति, 'ब्रह्मचर्यं समाप्य गृही भवेद्गृही भूत्वा प्रव्रजेत् (इति श्रुतेः?) अथ पुनरेवं(? रव्रती वा) व्रती वा स्नातको, वा(ऽस्नातको वा) उत्सन्नाग्निर्वा सा(?ग्निर)ग्निको वा प्रव्रजेत्' (जाउ.४) इति श्रुतेः, 'गार्हस्थ्यमिच्छन् पुरुषः कुर्याद्दारपरिग्रहम्। ब्रह्मचर्येण वा कालं नयेत् संकल्पपूर्वकम्॥' इति स्मृतेः। अत्र केचिदाश्रमान्तरक्रमेणैव प्रव्रजेदिति वदन्ति। तन्न मुख्यम्, चित्तशुद्धिपरवचनादिति। तत्र ब्रह्मचारिणश्चतुर्विधा गायत्रब्राह्मप्राजापत्यबृहत इति। तत्राऽऽश्रमोपनिषदि – 'तत्र ब्रह्मचारिणश्चतुर्विधा भवन्ति – गायत्रो ब्राह्मः प्राजापत्यो बार्हनि(? न्नि)ति। य उपनयनादूर्ध्वं त्रिरात्रमक्षारलवणाशी गायत्रीं मन्त्रयेत् स गायत्रः। योऽष्टचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यं चरेद्द्वादश वा यावद्ग्रहणान्तं वा वेदस्य स ब्राह्मः। स्वदारनिरत ऋतुगामी सदा परदारवर्जी प्राजापत्यः। अथवा चतुर्विंशतिवर्षाणि गुरुकुलवासी ब्राह्मोऽष्टचत्वारिंशद्वर्षवासी च प्राजापत्यः। आप्रायणाद्गुरोरपरित्यागी नैष्ठिको बृहन्निति' (आश्रउ.१)।

मुभा.

(१) मुद्गल. ३।१८।२-४, ३५-३९.

वानप्रस्थ्यकालः, वानप्रस्थ्ये भार्यासाहित्य-
राहित्यविकल्पः, संन्यासंकालः,
भार्यया पतिसंन्यासोऽ-
नुमन्तव्यः

**'तृतीयभाग आयुष्ययुक्तः(?) सोऽपि वनी भवेत्।**
**संस्थाप्य दारान्पुत्रादिसमीपे वा सह स्त्रिया॥**
**वनं गच्छेत्स धर्मार्थं तपस्वी कर्मसिद्धये।**
**पुत्रा जाताश्च नोत्पन्ना अपि तद्वनगो भवेत्॥**

अत्र केचिद्वैश्यानां वनस्थाश्रमो नेति वदन्ति तत्प्रामादिकम्, वेदाध्ययनवद्वानप्रस्थाश्रमाधिकार इति। तत्र रामायणे दशरथेन रात्रौ वनस्थः श्रावणो हतस्तस्य माता शूद्री पिता वैश्यश्च तौ वानप्रस्थौ इति कथनात्।

मुभा.

**चतुर्थांशं यदा तस्याऽऽयुष्यं विद्येत भो मुने॥**
**चतुर्थांशायुषि स्थाता संन्यासं स समाचरेत्।**
**तदा स्त्रियाऽपि तस्यैवाऽऽशां त्यक्त्वा ज्ञापिता भवेत्॥**
**आज्ञा तस्मै प्रदातव्या स्त्रिया चैव विशेषतः॥**

संन्यासस्य चातुर्विध्यं
सलक्षणम्

**त्रिदण्डी यस्तु संन्यासी कुटीचक उदाहृतः॥**
**स्वधर्माचरणं नित्यं देहदण्डः स उच्यते।**
**मौनं वाचामयं दण्डो द्वितीयश्च प्रकीर्तितः॥**
**सर्वत्र रसहीनं च मानसं वर्तते यथा।**
**कर्तव्यं तत्तथा तेन मनोदण्डः प्रकीर्तितः॥**
**कुटीं देहमयीं योगी चालयेद्बिम्बभावतः।**
**ब्रह्मणि ब्रह्मभूतश्च स कुटीचक उच्यते॥**
**ततो बहूदको योगी द्विदण्डी स भवेन्मुने॥**
**सोऽहं ब्रह्मणि संस्थश्च भेदहीनो महामुनिः।**
**बहूदकः स निःसङ्गो देहादिभ्यः प्रकीर्तितः॥**
**ततो हंसाश्रमः प्रोक्तो मानसे दण्डधारकः।**
**देहवाणीदण्डहीनः स्वेच्छाचारी मतो मुने॥**
**द्वन्द्वं जलमयं प्रोक्तं देहदेहिस्वरूपकम्।**
**तत्र दुग्धं भवेद्ब्रह्म हंसस्तद्ग्राहको भवेत्॥**
**ततः परमहंसश्च ज्ञानदण्डपरायणः।**
**देहवाणीमनोभूतैर्दण्डैर्हीनः प्रकीर्तितः॥**
**चतुर्विधोऽयं संन्यासस्तत्राऽऽश्रमसमाश्रितः।**
**अहं ब्रह्मेति योगेन ब्रह्मभूतो भवेन्नरः॥**

आश्रमोपनिषदि 'परिव्राजका अपि चतुर्विधा भवन्ति – कुटीचका बहूदका हंसाः परमहंसाश्चेति। तत्र कुटीचकास्त्रिदण्डकमण्डलुशिक्यपक्षजलपवित्रपात्रपादुकासनकौपीनकाषायवेषधारिणः स्वपुत्रगृहेषु भिक्षाचर्यां चरन्त आत्मानं प्रार्थयन्ते' (आश्रउ. ४) इति। अत्र मनुः – 'वाग्दण्डोऽथ मनोदण्डः कर्मदण्डस्तथैव च। यस्यैते नियता बुद्धौ स त्रिदण्डीति चोच्यते।' (मस्मृ. १२।१०) इति। अत्र दक्षः — 'वाग्दण्डे मौनमातिष्ठेत्कर्मदण्डे विनीतताम्। मानसस्य तु दण्डस्य प्राणायामो विधीयते।' इति। 'बहूदका द्विदण्डकमण्डलुशिक्यपक्षजलपवित्रपात्रपादुकासनकौपीनकाषायवेषधारिणः साधुवृत्तेषु ब्राह्मणकुलेषु भैक्षचर्यां चरन्त आत्मानं प्रार्थयन्ते' (आश्रउ. ४) इति। 'हंसा एकदण्डधराः कमण्डलुशिक्यपक्षजलपवित्रपात्रपादुकासनकौपीनकाषायवेषधारिणो ग्रामैकरात्रवासिनो नगरे तीर्थेषु पञ्चरात्रं वसन्त एकरात्रद्विरात्रकृच्छ्रचान्द्रायणादि चरन्त आत्मानं प्रार्थयन्ते' (आश्रउ. ४) इति। 'परमहंसा न दण्डधरा मुण्डाः कन्थाकौपीनवाससो वा नग्ना अव्यक्तलिङ्गा अव्यक्ताचारा अनुन्मत्ता उन्मत्तवदाचरन्तस्त्रिदण्डकमण्डलुशिक्यपक्षजलपवित्रपात्रपादुकासनशिखायज्ञोपवीतानां त्यागिनः शून्यागारदेवगृहवासिनां तेषां न धर्मो नाधर्मो न चानृतमृतं च सर्वसहाः सर्वसमाः समलोष्टाश्मकाञ्चना यथोपपन्नचातुर्वर्ण्यभैक्षचर्यां चरन्त आत्मानं प्रार्थयन्ते' (आश्रउ. ४) इति।

मुभा.

क्षत्रियस्य संन्यासेऽनधिकारः

**'संन्यासं नैव विप्रेश कुर्यात्क्षत्रियजः कदा।**
**+संन्यासधर्महीनश्च सदा तिष्ठेत्स मानद॥**

(१) **मुद्गल.** ३।१९।१४-१६, २२-२४, ३२, ३३-३६, ३९-४०, ४२-४३, ४८.

+ 'वैश्यः' इत्युपक्रम्येदं वचनम्।
(१) **मुद्गल.** ३।२०।१४, १६.

## आदित्यपुराणम्

आश्रमसमुच्चयः

[1]**ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः।**
**अप्रमत्तो भवान्येन मा गाः पुत्र कुवर्त्मना॥**

आश्रमसमुच्चयस्तावदादित्यपुराणे – ब्रह्मचारीति।

संम. ४२

## संग्रहकारः (स्मृतिसंग्रहः)

संन्यासप्रशंसा

[2]**संन्यस्तमिति यो ब्रूयात्प्राणैः कण्ठगतैरपि।**
**न तत्क्रतुसहस्रेण फलं प्राप्नोति मानवः॥**

## स्मृत्यर्थसारः

ब्रह्मचर्यावधिः, आश्रमसमुच्चयः,
ब्रह्मचर्याश्रमे त्रैवर्णिका-
नामधिकारः

[3]**द्वादशाब्दं पञ्चाब्दं वेदग्रहणान्तं वा ब्रह्मचारी व्रतं चरेत्॥**

[4]**एवं वेदव्रतानि चोभयं वा पारं नीत्वाऽविप्लुतब्रह्मचर्यो विप्लवे कृतप्रायश्चित्तो गुरुं संपूज्य तदनुज्ञया समावृत्तो विवहेत्॥**

[5]**इत्यात्मानमात्मनाऽऽश्रमादाश्रममनुनीय ब्रह्मीभूतो भवतीति विज्ञायते॥**

[6]**तत्रोपकुर्वाणो नैष्ठिकश्च त्रैवर्णिकब्रह्मचारी॥**

## कुमारिलकारिकाः

ब्रह्मचर्यकालावधिः

[7]**वेदस्वीकरणं यावत्तावदेवं समाचरेत्।**
**अथवा द्वादशाब्दं स्याद्ब्रह्मचर्यमिति स्थितिः॥**

(१) **स्मृच.** ११।७३ पुराणे; **चका.** ७८३ भवान्येन (द्विजातेन) पुराणम्; **संम.** ४२ उत्तरार्धे (अप्रमत्तेन मनसा मा गाः पुत्रक वर्त्मनि॥).

(२) **यसं.** १८ स्मरणम्; **यप्र.** ४९.

(३) **स्मृसार.** ६.

(४) **स्मृसार.** ११.

(५) **स्मृसार.** ९६.

(६) **स्मृसार.** १२२.

(७) **कुका.** १।१३।५२.

[1]**गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया।**
**वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा॥**

[2]**व्रतपक्षेऽपि शब्दार्थमारण्याध्ययने कृते।**
**विद्यान्ते गुरुमाहाहं कमर्थं करवाणि ते॥**

[3]**यमर्थमाह तं कृत्वा ततोऽनुज्ञापवाप्य च॥**

व्रतमात्रस्नातकेनाप्यारण्यकमधीत्यैव समावर्तितव्यम्। तथा च कारिकाकारः – वेदमिति। शब्दार्थम् अक्षर-ग्रहणार्थम्, न त्वर्थज्ञानापेक्षाऽपि अनुष्ठानानुपयोगात्, विरक्त्युत्तरकालं साधनचतुष्टयसंपन्नं प्रत्युत्तरमीमांसा-प्रवृत्तेः।

×चमव्या. ६५

## त्रिकाण्डमण्डनकारिकाः

मृतपत्नीकस्य संन्यासो गार्हस्थ्यं
वा मतभेदेन

[4]**आहिताग्नेर्मृतस्त्रीकस्याऽऽधानं संन्यसिष्यतः।**
**संन्यासं वारयन्त्यन्ये यावज्जीवाग्निहोत्रिणः॥**

'आश्रमादाश्रमान्तरं गच्छेत्' इति क्रमप्राप्त-स्याऽनुवादमाह – आहिताग्नेरिति। मृतपत्नीकस्याऽऽहि-ताग्नेः संन्यसिष्यतः संन्यासं कर्तुमिच्छतः पुरुष-स्याऽऽधानं नेत्यनुषङ्गः, भरद्वाजेनैकाकिन आधानस्य निराकृतत्वात्। मतान्तरमाह – संन्यासमिति। अन्ये यावज्जीवाग्निहोत्रिणः संन्यासं वारयन्ति निषेधयन्ति, यतो हि यावज्जीवमग्निहोत्रसंबन्धस्य विवक्षितत्वात्, 'आगूः कृत्वा न क्रियते स पाप्मा भवति' इत्यर्थ-(?त्यर्थवाद)श्रवणाच्च।

पदप्र.

× बाल. चमव्यावत्।

(१) **कुका.** १।१७।१; **प्रपा.** २८४ वेदं व्र (वेदव्र) उत्त.; **धप्र.** ४४ सर्वं प्रपावत्; **चमव्या.** ६५ उत्त.; **बाल.** १।५१ पृ. १६९ उत्त.

(२) **कुका.** १।१७।२; **प्रपा.** २८४ पक्षेऽपि (पक्षे तु); **धप्र.** ४४ पक्षेऽपि (पक्षे तु) माहाहं क (मर्थे तु कि); **चमव्या.** ६५ पू.; **बाल.** १।५१ पृ. १६९ पू.

(३) **कुका.** १।१७।३; **प्रपा.** २८४; **धप्र.** ४४ अशुद्धः पाठः.

(४) **त्रिका.** ३।१०१.

## रेणुकारिकाः

ब्रह्मचर्यकालावधिः, कलौ
दीर्घकालब्रह्मचर्य-
निषेधः

[1]चतुर्णामपि वेदानां ब्रह्मचर्यव्रतं चरेत्।
चत्वारिंशत्तथाऽष्टौ च वर्षाण्येतद्व्रतादिषु॥
एक एव व्रतादेशस्तस्मिन् पक्षे पृथङ् न तु।
प्रतिवेदं द्वादश वा तस्मिन् पक्षे पृथक् पृथक्॥
तदर्धं पादिकं वेदग्रहणान्तिकमेव च।
दीर्घकालं ब्रह्मचर्यं न कलौ स्यात्पुराणतः॥
[2]समाप्याङ्गयुग्वेदमेकं व्रतं वा
समाप्योभयं वाऽऽगमब्रह्मचर्यम्।
समग्रौ न चेद्द्वौ पठित्वाऽर्थमुक्त्वा
समूहानुमानोक्तिकान्यङ्गहीनान्॥
द्वितीयाश्रमं स्नानशब्देन विद्या(?द्याद्)
गुरोः प्रीतये दक्षिणां तस्य दत्त्वा।
हिरण्यं धरित्र्यातपत्रं गृहं गां
यवव्रीह्युपानद्द्वयं चापि शाकम्॥
अभावेऽखिलानां तदा गौतमोक्ते -
रनुज्ञात एवाऽऽश्रमं प्रत्युपेयात्॥
[3]उपकुर्वाणकस्यैतदुक्तं व्रतविसर्जनम्।
न नैष्ठिकस्य द्विविधो ब्रह्मचारी स्मृतो बुधैः॥
[4]उपकुर्वाणकस्योक्तविधिना गमयत्यतः।
उच्यते नैष्ठिकस्तेन निष्ठामुत्क्रान्तिमात्मनः॥
पथ्यादीनामसत्त्वात्तदसामर्थ्याच्च शास्त्रतः।
नियतं नैष्ठिकं न स्यात्कर्मस्वनधिकारतः॥

(१) रेका. २७।६-८.
(२) रेका. ४२।२, ४, ५.
(३) रेका. ४६।७०-७१.
(४) रेका. ४७।७३-७५.

## जीवन्मुक्तिविवेकः

विविदिषासंन्यासविद्वत्संन्यासौ क्रमेण विदेहमुक्तिजीव-न्मुक्तिहेतू, वैराग्यं संन्यासहेतुः, मन्द-तीव्र-तीव्रतर-भेदैर्वैराग्यत्रैविध्यम्, मन्दवैराग्यं न संन्यासहेतुः, तीव्रतीव्रतरवैराग्ययोर्व्यवस्थया चतुर्विधसंन्या-सहेतुत्वम्, त्रिविधवैराग्यलक्षणानि, एतेषां संग्रहश्लोकविषयाणां गद्येन सविस्तरं विवरणम्

[1]वक्ष्ये विविदिषान्यासं विद्वन्न्यासं च भेदतः।
हेतू विदेहमुक्तेश्च जीवन्मुक्तेश्च तौ क्रमात्॥
[2]संन्यासहेतुर्वैराग्यं यदहर्विरजेत्तदा।
प्रव्रजेदिति वेदोक्तेस्तद्भेदस्तु पुराणगः॥
विरक्तिर्द्विविधा प्रोक्ता तीव्रा तीव्रतरेति च।
सत्यामेव तु तीव्रायां न्यसेद्योगी कुटीचके॥
शक्तौ बहूदके तीव्रतरायां हंससंज्ञिते।
मुमुक्षुः परमे हंसे साक्षाद्विज्ञानसाधने॥
[3]पुत्रदारगृहादीनां नाशे तात्कालिकी मतिः।
धिक्संसारमितीदृक्स्याद्विरक्तेर्मन्दता हि सा॥
[4]अस्मिञ्जन्मनि मा भूवन्पुत्रदारादयो मम।
इति या सुस्थिरा बुद्धिः सा वैराग्यस्य तीव्रता॥
[5]पुनरावृत्तिसहितो लोको मे माऽस्तु कश्चन।
इति तीव्रतरत्वं स्यान्मन्दे न्यासो न कोऽपि हि॥
[6]यात्राद्यशक्तिशक्तिभ्यां तीव्रे न्यासद्वयं भवेत्।
कुटीचको बहूदश्चेत्युभावेतौ त्रिदण्डिनौ॥
द्वयं तीव्रतरे ब्रह्मलोकमोक्षविभेदतः।
तल्लोके तत्त्वविद्धंसो लोकेऽस्मिन्परहंसकः॥

ब्राह्मलोककामो हंसो भवेत्। स च तल्लोक एव श्रवणादिना तत्त्वविद्भवति। मोक्षकामः परमहंसो भवेत्। स चेह लोक एव श्रवणादिना तत्त्वविद्भवति। यश्चाऽदित

(१) जीवि. १.
(२) जीवि. १; यप्र. ३४.
(३) जीवि. १; यप्र. ३४ हि सा (मता).
(४) जीवि. १; यप्र. ३४-३५.
(५) जीवि. १; यप्र. ३५ लोको मे (लोकोऽयं).
(६) जीवि. १; यप्र. ३५.

एव तत्त्ववित् सोऽपि ज्ञानसंरक्षणार्थं मोक्षार्थमेव वा याज्ञवल्क्यादिवत् परमहंसो भवेदिति चरमश्लोकार्थः।

यप्र. ३५

'एतेषां तु समाचाराः प्रोक्ताः पाराशरस्मृतौ।
व्याख्यानेऽस्माभिरत्रायं परहंसो विविच्यते॥
जिज्ञासुर्ज्ञानवांश्चेति परहंसो द्विधा मतः॥
प्राहुर्ज्ञानाय जिज्ञासोर्न्यासं वाजसनेयिनः॥
प्रव्राजिनो लोकमेतमिच्छन्तः प्रव्रजन्ति हि।
एतस्यार्थं तु गद्येन वक्ष्ये मन्दविबुद्धये॥

लोको हि द्विविधः — आत्मलोकोऽनात्मलोकश्चेति। तत्राऽनात्मलोकस्य त्रैविध्यं बृहदारण्यके तृतीयाध्याये श्रूयते — 'अथ त्रयो वाव लोका मनुष्यलोकः पितृलोको देवलोक इति। सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणा, कर्मणा पितृलोको विद्यया देवलोकः' (बृउ. १।५।१६) इति। आत्मलोकश्च तत्रैव श्रूयते — 'यो ह वा अस्माल्लोकात्स्वं लोकमदृष्ट्वा प्रैति स एनमविदितो न भुनक्ति' (बृउ. १।४।१५) इति, 'आत्मानमेव लोकमुपासीत। स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते' (बृउ. १।४।१५) इति च। यो मांसादिकपिण्डलक्षणात् (अस्माल्लोकात्) स्वं लोकं परमात्माख्यम् 'अहं ब्रह्मास्मि' इत्यविदित्वा (प्रैति) म्रियते स स्वलोकः परमात्मा अविदितः अविद्यया व्यवहितः सन् एनम् अवेत्तारं प्रेतं मृतं न भुनक्ति शोकमोहादिदोषापनयनेन न पालयति। उपासकस्य ह निश्चितं कर्म न क्षीयते एकफलदानेनोपक्षीणं न भवति कामितसर्वफलं मोक्षं च ददातीत्यर्थः। +षष्ठाध्यायेऽपि — 'किमर्थं वयमध्येष्यामहे किमर्थं वयं यक्ष्यामहे' (ऐआ. ३।२।६), 'किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः' (बृउ. ४।४।२२) इति। 'ये प्रजामीशिरे ते श्मशानानि भेजिरे। ये प्रजां नेशिरे तेऽमृतत्वं हि भेजिरे।' एवं च 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' (बृउ. ४।४।२२) इत्यत्राऽऽत्मलोको विवक्षित इति गम्यते, 'स वा एष महानज आत्मा' (बृउ. ४।४।२२) इति प्रक्रान्तस्याऽऽत्मन एतच्छब्देन परामृष्टत्वात्। लोक्यते अनुभूयते इति लोकः। तथा च 'आत्मानुभवमिच्छन्तः प्रव्रजन्ति' इति श्रुतेस्तात्पर्यार्थः संपद्यते। स्मृतिश्च — 'ब्रह्मविज्ञानलाभाय परहंससमाह्वयः। शान्तिदान्त्यादिभिः सर्वैः साधनैः सहितो भवेत्' इति।

इह जन्मनि जन्मान्तरे वा सम्यगनुष्ठितैर्वेदानुवचनादिभिरुत्पन्नया विविदिषया संपादितत्वादयं विविदिषासंन्यास इत्यभिधीयते।

अयं च वेदनहेतुः संन्यासो द्विविधः — जन्मापादककाम्यकर्मादित्यागमात्रात्मकः प्रैषोच्चारणपूर्वकदण्डधारणाद्याश्रमरूपश्चेति। 'पुंजन्म लभते माता पत्नी च प्रैषमात्रतः। ब्रह्मनिष्ठः सुशीलश्च ज्ञानं चैतत्प्रभावतः॥' त्यागश्च तैत्तिरीयादौ श्रूयते — 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' (नाउ. १२।३) इति। अस्मिंश्च त्यागे स्त्रियोऽप्यधिक्रियन्ते — δ"भिक्षुकी इत्यनेन स्त्रीणामपि प्राग्विवाहाद्वा वैधव्यादूर्ध्वं वा संन्यासेऽधिकारोऽस्तीति दर्शितम्। तेन भिक्षाचर्यं मोक्षशास्त्रश्रवणम् एकान्त आत्मध्यानं च ताभिः कर्तव्यं त्रिदण्डादिकं च धार्यम्।" (नीटी. १२।३२०।७) इति मोक्षधर्मे चतुर्धरीटीकायां सुलभाजनकसंवादः। शारीरकभाष्ये वाचक्नवीत्यादि श्रूयते देवताधिकरणन्यायेन विधुरस्याधिकारप्रसङ्गत्वेन तृतीयाध्याये चतुर्थपादे। अत एव मैत्रेयीवाक्यमाम्नायते — 'येनाहं नामृता स्यां किमहं तेन कुर्याम्, यदेव भगवन्वेत्थ तदेव मे ब्रूहि' (बृउ. ४।५।४) इति।

ब्रह्मचारिगृहस्थवानप्रस्थानां केनचिन्निमित्तेन संन्यासाश्रमस्वीकारे प्रतिबद्धे सति स्वाश्रमधर्मेष्वनुष्ठीयमानेष्वपि वेदनार्थो मानसः कर्मादित्यागो न विरुध्यते, श्रुतिस्मृतीतिहासपुराणेषु लोके च तादृशां तत्त्वविदां बहूनामुपलम्भात्। यस्तु दण्डधारणादिरूपो वेदनहेतुः

+ बृहदारण्यकषष्ठाध्याये नैते वचने स्तः।
(१) जीवि. २-७.

δ चतुर्धरीटीकाया एतद्ग्रन्थोत्तरकालत्वात् भिक्षुकीत्यादिजनकसंवादइत्यन्तग्रन्थस्यात्र निवेशः प्रामादिकः। अस्मदीयाष्टहस्तलिखितपुस्तकेषु मध्ये एकस्मिन्नेव पुस्तके बहिरधिकोऽयं ग्रन्थो लिखितोऽस्ति। तथा एतदादर्शपुस्तकतलटिप्पण्याम् — 'क. ख. ग. घ. छ. पुस्तकेषु भिक्षुकीत्यारभ्यात एव चतुर्थपाद इत्यन्तो नहि। अयं चाधिको विसंगतश्च' इति।

परमहंसाश्रमः स पूर्वैराचार्यैर्बहुधा प्रपञ्चित इत्यस्माभिरुपरम्यते। इति जीवन्मुक्तिविवेके विविदिषासंन्यासः।

अथ विद्वत्संन्यासं निरूपयामः। सम्यगनुष्ठितैः श्रवणमनननिदिध्यासनैः परं तत्त्वं विदितवद्भिः संपाद्यमानो विद्वत्संन्यासः। तं च याज्ञवल्क्यः संपादयामास। तथा हि विद्वच्छिरोमणिर्भगवान्याज्ञवल्क्यो विजिगीषुकथायां बहुविधेन तत्त्वनिरूपणेनाऽऽश्वलायनप्रभृतीन्मुनीन्विजित्य वीतरागकथायां संक्षेपविस्तराभ्यामनेकधा जनकं बोधयित्वा मैत्रेयीं बुबोधयिषुस्तस्यास्त्वरया तत्त्वाभिमुख्याय स्वकर्तव्यं संन्यासं प्रतिजज्ञे। ततस्तां बोधयित्वा संन्यासं चकार।

तदुभयं मैत्रेयीब्राह्मणस्याऽऽद्यन्तयोराम्नायते – 'अथ ह याज्ञवल्क्योऽन्यद्वृत्तमुपाकरिष्यन्। मैत्रेयीति होवाच याज्ञवल्क्यः प्रव्रजिष्यन्वा अरेऽहमस्मात्स्थानादस्मि' (बृउ. ४।५।१-२) इति, 'एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यो विजहार' (बृउ. ४।५।१५) इति च॥

कहोलब्राह्मणेऽपि विद्वत्संन्यास आम्नायते – 'एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति' (बृउ. ३।५।१) इति। न चैतद्वाक्यं विविदिषासंन्यासपरमिति शङ्कनीयम्, पूर्वकालवाचिनो विदित्वेति क्त्वाप्रत्ययस्य ब्रह्मविद्वाचिनो ब्राह्मणशब्दस्य च बाधप्रसङ्गात्। न चात्र ब्राह्मणशब्दो जातिवाचकः, वाक्यशेषे पाण्डित्यबाल्यमौनशब्दाभिधेयैः श्रवणमनननिदिध्यासनैः साध्यं ब्रह्मसाक्षात्कारमभिप्रेत्य 'अथ ब्राह्मणः' इत्यभिहितत्वात्। ननु तत्र विविदिषासंन्यासोपेतः पाण्डित्यादौ प्रवर्तमानोऽपि ब्राह्मणशब्देन परामृष्टः – 'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्' (बृउ. ३।५।१) इति चेत्। मैवम्, भाविनीं वृत्तिमाश्रित्य तत्र ब्राह्मणशब्दस्य प्रयुक्तत्वात्। अन्यथा कथम् 'अथ ब्राह्मणः' इति साधनानुष्ठानोत्तरकालवाचिनमथशब्दं प्रयुञ्जीत?

शारीरब्राह्मणेऽपि विद्वत्संन्यासविविदिषासंन्यासौ स्पष्टं निर्दिष्टौ – 'एतमेव विदित्वा मुनिर्भवति, एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' (बृउ. ४।४।२२) इति। मुनित्वं मननशीलत्वम्, तच्चासति कर्तव्यान्तरे संभवतीत्यर्थात्संन्यास एवाभिधीयते। एतच्च वाक्यशेषे स्पष्टीकृतम् – 'एतद्ध स्म वै तत्पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति। ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति' (बृउ. ४।४।२२) इति। अयं लोक इत्यपरोक्षेणानुभूयत इत्यर्थः। नन्वत्र मुनित्वेन फलेन प्रलोभ्य विविदिषासंन्यासं विधाय वाक्यशेषे स एव प्रपञ्चितः। अतो न संन्यासान्तरं कल्पनीयम्। मैवम्, वेदनस्यैव विविदिषासंन्यासफलत्वात्। न च वेदनमुनित्वयोरेकत्वं शङ्कनीयम्, विदित्वा मुनिर्भवतीति पूर्वोत्तरकालीनयोस्तयोः साध्यसाधनभावप्रतीतेः। ननु वेदनस्यैव परिपाकातिशयरूपमवस्थान्तरं मुनित्वम्। अतो वेदनद्वारा पूर्वसंन्यास्यैवैतत्फलमिति चेत्। बाढम्। अत एव साधनरूपात्संन्यासादन्यं फलरूपमेतं संन्यासं ब्रूमः। यथा विविदिषासंन्यासिना तत्त्वज्ञानाय श्रवणादीनि संपादनीयानि, तथा विद्वत्संन्यासिनाऽपि जीवन्मुक्तये मनोनाशवासनाक्षयौ संपादनीयौ। एतच्चोपरिष्टात्प्रपञ्चयिष्यामः॥

सत्यप्यनयोः संन्यासयोरवान्तरभेदे परमहंसत्वाकारेणैकीकृत्य 'चतुर्विधा भिक्षवः' इति स्मृतिषु चतुःसंख्योक्ता॥

पूर्वोक्तयोस्तयोः संन्यासयोः परमहंसत्वं जाबालश्रुताववगम्यते। तत्र हि जनकेन संन्यासे पृष्टे सति याज्ञवल्क्योऽधिकारविशेषविधानेनोक्तकालानुष्ठेयेन च सहितं विविदिषासंन्यासमभिधाय पश्चादत्रिणा यज्ञोपवीतरहितस्याऽऽक्षिप्ते ब्राह्मण्ये सति पश्चादात्मज्ञानमेव यज्ञोपवीतमिति समादधौ। अतो बाह्ययज्ञोपवीताभावात्परमहंसत्वं निश्चीयते। तथाऽन्यस्यां कण्डिकायां 'तत्र परमहंसा नाम' (जाउ. ६) इत्युपक्रम्य संवर्तकादीन्बहुविधान्ब्रह्मविदो जीवन्मुक्तानुदाहृत्य 'अव्यक्तलिङ्गा अव्यक्ताचारा अनुन्मत्ता उन्मत्तवदाचरन्तः' (जाउ. ६) इति विद्वत्संन्यासिनो दर्शिताः। तथा "त्रिकाण्डं कमण्डलुं शिक्यं पात्रं जलपवित्रं शिखां

यज्ञोपवीतं चेत्येतत्सर्वं भूःस्वाहा' इत्यप्सु परित्यज्याऽऽत्मानमन्विच्छेत्" (जाउ. ६) इति त्रिदण्डिनः सत एकदण्डलक्षणं विविदिषासंन्यासं विधाय तत्फलरूपं विद्वत्संन्यासमेवमुदाजहार – 'यथा जातरूपधरो निर्द्वन्द्वो निष्परिग्रहस्तत्त्वब्रह्ममार्गे सम्यक् संपन्नः शुद्धमानसः प्राणसंधारणार्थं यथोक्तकाले विमुक्तो भैक्षमाचरन्नुदरपात्रेण लाभालाभौ समौ कृत्वा शून्यागारदेवगृहतृणकूटवल्मीकवृक्षमूलकुलालशालाग्निहोत्रनदीपुलिनगिरिकुहरकन्दरकोटरनिर्झरस्थण्डिलेष्वनिकेतवास्यप्रयत्नो निर्ममः शुक्लध्यानपरायणोऽध्यात्मनिष्ठः शुभाशुभकर्मनिर्मूलनपरः संन्यासेन देहत्यागं करोति स एव परमहंसो नाम इति' (जाउ. ६) तस्मादनयोरुभयोः परमहंसत्वं सिद्धम्।

समानेऽपि परमहंसत्वे सिद्धे विरुद्धधर्माक्रान्तत्वादवान्तरभेदोऽप्यभ्युपगन्तव्यः। विरुद्धर्मत्वं चाऽऽरुण्युपनिषत्परमहंसोपनिषदोः पर्यालोचनायामवगम्यते। 'केन भगवन्कर्माण्यशेषतो विसृजानि' (आरुउ.१) इति शिखायज्ञोपवीतस्वाध्यायगायत्रीजपाद्यशेषकर्मत्यागरूपे विविदिषासंन्यासे शिष्येणाऽऽरुणिना पृष्टे सति गुरुः प्रजापतिः 'शिखां यज्ञोपवीतम्' (आरुउ.१) इत्यादिना सर्वत्यागमभिधाय 'दण्डमाच्छादनं कौपीनं च परिग्रहेत्' (आरुउ.१) इति दण्डादिस्वीकारं विधाय 'त्रिसंध्यादौ स्नानमाचरेत्। संधिं समाधावात्मन्याचरेत्सर्वेषु वेदेष्वारणमावर्तयेत्। उपनिषदमावर्तयेत्' (आरुउ.२) इति वेदनहेतूनाश्रमधर्माननुष्ठेयतया विधत्ते॥

'अथ योगिनां परमहंसानां कोऽयं मार्गः' (परमउ.१) इति विद्वत्संन्यासे नारदेन पृष्टे सति गुरुर्भगवान्प्रजापतिः 'स्वपुत्रमित्र' (परमउ. १) इत्यादिना पूर्ववत्सर्वत्यागमभिधाय 'कौपीनं दण्डमाच्छादनं च स्वशरीरोपभोगार्थाय लोकस्योपकारार्थाय च परिग्रहेत्' (परमउ. १) इति दण्डादिस्वीकारस्य लौकिकत्वमभिधाय 'तच्च न मुख्योऽस्ति' (परमउ. १) इति शास्त्रीयत्वं प्रतिषिध्य 'कोऽयं मुख्य इति चेदयं मुख्यो न दण्डं न शिखां न यज्ञोपवीतं नाऽऽच्छादनं चरति परमहंसः' (परमउ. १-२) इति दण्डादिलिङ्गराहित्यस्य शास्त्रीयतामुक्त्वा 'न शीतं न चोष्णम्' (परमउ. २) इत्यादिवाक्येन 'आशाम्बरो निर्नमस्कारः' (परमउ. ४) इत्यादिवाक्येन च लोकव्यवहारातीतत्वमभिधायान्ते 'यत्पूर्णानन्दैकबोधस्तद्ब्रह्मास्मीति कृतकृत्यो भवति' (परमउ. ४) इत्यन्तेन ग्रन्थेन ब्रह्मानुभवमात्रपर्यवसानमाचष्टे। अतो विरुद्धधर्मोपेतत्वादस्त्येवानयोर्महान्भेदः।

स्मृतिष्वप्ययं भेद उक्तदिशा द्रष्टव्यः। 'संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया। प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिताः। प्रवृत्तिलक्षणो योगो ज्ञानं संन्यासलक्षणम्। तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिति बुद्धिमान्॥' इत्यादिविविदिषासंन्यासः, 'यदा तु विदितं तत्स्यात्परं ब्रह्म सनातनम्। तदैकदण्डं संगृह्य सोपवीतशिखां त्यजेत्। ज्ञात्वा सम्यक्परं ब्रह्म सर्वं त्यक्त्वा परिव्रजेत्॥' इत्यादिविद्वत्संन्यासः॥

ननु कलाविद्यास्विव कदाचिदौत्सुक्यमात्रेणापि वेदितुमिच्छा संभवति। एवं विद्वत्ताऽप्यापातदर्शिनः पण्डितंमन्यस्यात्रावलोक्यते। न च तौ प्रव्रजितौ दृष्टौ। अतो विविदिषाविद्वत्ते कीदृशे विवक्षिते? इति चेदुच्यते – यथा तीव्रायां बुभुक्षायामुत्पन्नायां भोजनादन्यो न रोचते व्यापारः, भोजने च विलम्बोऽपि सोढुं न शक्यते, तथा जन्महेतुषु कर्मस्वत्यन्तमरुचिः, वेदनसाधनेषु च श्रवणादिषु त्वरा महती संपद्यते तादृशी विविदिषा संन्यासहेतुः। विद्वत्ताया अवधिरुपदेशसाहस्र्यामभिहितः – 'देहात्मज्ञानवज्ज्ञानं देहात्मज्ञानबाधकम्। आत्मन्येव भवेद्यस्य स नेच्छन्नपि मुच्यते॥' इति। श्रुतावपि – 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे॥' (मुउ. २।२।८) इति। परमपि हिरण्यगर्भादिकं पदम् अवरं यस्मादसौ परावरः। हृदये बुद्धौ साक्षिणस्तादात्म्याध्यासोऽनाद्यविद्यानिर्मितत्वेन ग्रन्थिवद्दृढसंश्लेषरूपत्वाद्ग्रन्थिरित्युच्यते। आत्मा साक्षी कर्ता वा, साक्षित्वेऽप्यस्य ब्रह्मत्वमस्ति वा न वा, ब्रह्मत्वेऽपि तत् बुद्ध्या वेदितुं शक्यते न वा, शक्यत्वेऽपि तद्वेदनमात्रेण मुक्तिरस्ति न वेत्यादयः संशयाः। कर्माण्यनारब्धान्यागामिजन्मकारणानि। तदेतद्ग्रन्थ्यादित्रयमविद्यानिर्मितत्वादात्मदर्शनेन निवर्तते। स्मृतावप्ययमर्थ उपलभ्यते – 'यस्य नाहंकृतो भावो बुद्धिर्यस्य न

लिप्यते। हत्वाऽपि स इमाँल्लोकान्न हन्ति न निबध्यते॥' (भगी. १८।१७) इति। यस्य ब्रह्मविदः भावः सत्ता स्वभावः आत्मा न अहंकृतः अहंकारेण तादात्म्याध्यासातिशयादन्तर्भावितः। बुद्धिर्लेपः संशयः। तदभावे त्रैलोक्यवधेनापि न बध्यते, किमुतान्येन कर्मणेत्यर्थः। नन्वेवं सति विविदिषासंन्यासफलेन तत्त्वज्ञानेनैवाऽऽगामिजन्मनां निवारितत्वाद्वर्तमानजन्मशेषस्य भोगमन्तरेण निवारयितुमशक्यत्वात्कृतमनेन विद्वत्संन्यासप्रयासेनेति चेत्, मैवम्, विद्वत्संन्यासस्य जीवन्मुक्तिहेतुत्वात्। तस्माद्वेदनाय यथा विविदिषासंन्यास एवं जीवन्मुक्त्यै विद्वत्संन्यासः संपादनीयः। इति विद्वत्संन्यासः॥

## अनिर्दिष्टकर्तृकवचनानि

ब्रह्मचर्यावधिः

[1]प्रतिवेदं ब्रह्मचर्यं द्वादशाब्दानि ग्रहणान्तं वा॥

[2]प्रतिवेदं ब्रह्मचर्यं द्वादशाथवा।
षट् त्रीणि ग्रहणान्तं वा॥

गार्हस्थ्यप्रशंसा

[3]पृथिव्यादिपञ्चकवदुपकारान् करोति यत्।
देवा मनुष्याः पितरः सर्वे चैनं समाश्रिताः॥
विद्या विद्यार्थिनश्चापि शिष्याः शुश्रूषवस्तथा।
आहुर्हि वेदविज्ञानं पूर्वमन्वादयस्तथा॥
स्नातकस्यैव माहात्म्यं महाभूतमयं यतः॥
यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः।
तथा गृहस्थमाश्रित्य सर्वे जीवन्ति भिक्षुकाः॥

वर्णभेदेनाऽऽश्रमव्यवस्था, विरक्ताविरक्तभेदेनाऽऽश्रमविकल्पसमुच्चयव्यवस्था

×[4]चत्वार आश्रमास्तात तेषु शूद्रस्तु नार्हति।
δ'ब्राह्मणः क्षत्रियो वैश्यस्ततो गच्छेद्वनं कृती।
संन्यसेद्वाऽथ वा शान्तः सर्वभूतदयापरः॥

[2]संन्यसेद्ब्राह्मणः सम्यग्वानप्रस्थो भवेन्नृपः।
वानप्रस्थो भवेद्वैश्य एवं वर्णक्रमः स्मृतः॥

[3]गतिस्तुर्याश्रमे नास्ति बाहुजोरुजयोः क्वचित्।
तुर्याश्रमे गतिः प्रोक्ता मुखजानां स्वयंभुवा॥

[4]वनं पञ्चाशतो व्रजेत्॥

[5]विरक्तः प्रव्रजेद्विद्वान् सरक्तस्तु गृहे वसेत्।
सरक्तः प्रव्रजन्मूढो नरकं प्रतिपद्यते॥

किंच, 'विरक्तः प्रव्रजेत्....॥', तथा 'अनधीत्य द्विजो वेदमनुत्पाद्य तथाऽऽत्मजान्। अनिष्ट्वा विधिवद्यज्ञैर्मोक्षमिच्छन् व्रजत्यधः॥' (मस्मृ. ६।३७) इति सरक्तस्य पुत्रोत्पादनं विना संन्यासेऽप्यनधिकारः, 'यावज्जीवमग्निहोत्रं जुहुयात्' इति विरोधाच्च पाक्षिकाग्निसमारोपवद्वानप्रस्थ(त्व)स्य सरक्तत्वं(?क्तं) प्रत्यनवकाशः। 'पुत्रेषु दारान्निक्षिप्य वनं गच्छेत्सहैव वा। प्राजापत्यां निरुप्येष्टिं सर्ववेदस्य द(?दसद)क्षिणाम्। आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद्गृहात्॥' (मस्मृ. ६।३८-३९) इति स्मृत्या यावज्जीवश्रुतेर्बाधो न युक्तः। तेन ऋणापकरणमन्तरेण पुरुषमेधं विना न वनवासः संन्यासो वा। विरक्तस्य तु 'वनी भूत्वा प्रव्रजेत्...यदहरेव विरजेत्तदहरेव प्रव्रजेत्' (जाउ. ४) इति श्रुत्या यावज्जीवसंकोचेन संन्यास इति। 'तदूर्ध्वं ब्रह्म संपद्यते' इत्यपि विरक्तविषयम्, पञ्चाशद्वर्षादूर्ध्वं वैराग्यस्य प्रायिकत्वात्। तेन पञ्चाशद्वर्षादूर्ध्वं सरक्तस्य वानप्रस्थधर्मत्वेन ऊर्ध्वरेतस्त्वमिति

---

× अस्य वचनस्य पमाव्याख्यानं वामनपुराणे 'गार्हस्थ्य' इति वचने, (वका. पृ. २०८०) कृभव्याख्यानं च बृहद्योगियाज्ञवल्क्यस्य 'चत्वारो ब्राह्मणस्य' (वका. पृ. २०४८) इति वचने द्रष्टव्यम्।

(१) **स्मृतिकौ.** ४७४.

(२) **चमव्या.** ४७ दीपिकायाम्; **संकौ.** १६५ दीपिकायाम्.

(३) **संर.** ३८४-३८५ स्मृत्यन्तरम्.

(४) **पमा.** १।५३४; **कृभ.** २१३५ मास्तात (माः प्रोक्ताः).

δ एतेषां त्रयाणां वचनानां मपाव्याख्यानं मपाशास्त्रार्थे (वका. पृ. १९३३) तथा बालव्याख्यानं याज्ञवल्क्यस्य 'वनाद्गृहाद्वा' (यास्मृ. ३।५६) इति वचने (वका. पृ. २०४६) द्रष्टव्यम्।

(१) **मपा.** ३६५ द्वाऽथ वा शान्तः (द्वासनाशान्तः) धर्मविवृतौ : ३७२ चतुर्थचरणो नास्ति; **बाल.** ३।५६-५७ पृ. ९५ धर्मविवृतौ.

(२) **मपा.** ३६७ धर्मविवृतौ; **बाल.** ३।५६-५७ पृ. ९६ धर्मविवृतौ.

(३) **मपा.** ३६६; **बाल.** ३।५६-५७ पृ. ९६ तुर्याश्रमे गतिः (गतिस्तुर्याश्रमे) उत्त.

(४) **ममु.** ३।५०.

(५) **निप.** ३०१; **गप.** ४५९ जन्मूढो (जेन्मूढो).

न वक्तुं शक्यम्। किंच, कलौ वानप्रस्थाश्रमो निषिद्धः, तस्मात् स्त्रीकामनायां पञ्चाशद्वर्षादूर्ध्वमपि स्त्रीसंगमेऽधिकारः।

गप. ४५९-४६०

**[1]विरक्तो भिक्षुर्भवेदितरो गार्हस्थ्यं प्रविशेत्॥**

**×[2]संवत्सरमनाश्रमी॥**

**[3]अपुत्रः सन् पुनर्दारान्परिणीय ततः पुनः।**
**परिणीय समुत्पाद्य नोचेदा पुत्रदर्शनात्॥**
**विरक्तश्चेद्वनं गच्छेत्संन्यासं वा समाश्रयेत्॥**

प्रथमायां भार्यायामपुत्रः सन् पुनर्दारान्परिणीय, पुत्रानुत्पादयेदिति शेषः। तस्यामपि पुत्रानुत्पत्तौ आ पुत्रदर्शनात्, परिणयेदिति शेषः। स्पष्टमन्यत्।

संप्र. ८७२

ब्रह्मचर्यावधिः

**[4]वेदमधीत्य छन्दोविषयार्थान्बुद्ध्वा स्नायात्॥**

× प्रायश्चित्तीति शेषः।
(१) **मभा.** ५।१ स्मृत्यन्तरम्.
(२) **मेधा.** ६।८७.
(३) **संप्र.** ८७२ स्मृत्यन्तरे; **संग.** ३३१ स्मृतिः.
(४) **संप्र.** ५६५ स्मृत्यन्तरम्.

क्षत्रियस्य यतिधर्मेऽधिकारः

**[1]क्षत्रियस्यापि यतिधर्मो विधीयते॥**

यतिधर्मः यमनियमादिः, न तु यतितैव।

मवि. ११९८

वानप्रस्थ्यावधिः

**+[2]तपसि ऋद्धे परिव्रजेत्॥**

**कायपाके प्रव्रज्या प्रतिपत्तव्या॥**

संन्यासप्रशंसा

**[3]प्रपञ्चमखिलं यस्तु ज्ञानाग्नौ जुहुयाद्यतिः।**
**आत्मन्यग्नीन्समारोप्य सोऽग्निहोत्री न चेतरः॥**

**[4]शतं कुलानां पुरतो बभूव**
**तथा पराणां च शतं समग्रम्।**
**एते भवन्ति सुकृतस्य लोके**
**येषां कुले संन्यसतीह विप्राः॥**

**[5]संन्यासाद्ब्रह्मणः स्थानम्॥**

+ अनयोः मेधाव्याख्यानं मनोः 'वनेषु च' (मस्मृ. ६।३३) इति श्लोके (वका. पृ. २०३०) द्रष्टव्यम्।
(१) **मवि.** ११९८ पुराणे.
(२) **मेधा.** ६।३३.
(३) **यसं.** १५४.
(४) **मुक्ता.** १७६.
(५) **मवि.** ६।३९ पुराणम्; **मच.** ६।९६; **मुक्ता.** १७६; **यप्र.** ३३ स्मृत्यन्तरे.

